V. I Series—22

# ṚGVEDA

*with*

The Padapāṭha and the available portions of the Bhāṣya-s by Skandasvāmin and Udgītha, the Vyākhyā by Veṅkaṭamādhava and Mudgala's Vṛtti based on Sāyaṇa-bhāṣya

*Edited,*

Critically, and annotated with text-comparative data from original manuscripts and other available materials

*By*

**VISHVA BANDHU**

*In collaboration with*

BHĪM DEV, AMAR NĀTH, K. S. RĀMASWĀMI SĀSTRĪ AND PITĀMBAR DATTA

## PART IV

(Mandala-s V and VI)

**HOSHIARPUR**

**Vishveshvaranand Vedic Research Institute**

**1964**

वि. भा. ग्रन्थमाला—२२




# ऋग्वेदः

स च

पदपाठेन च यथोपलम्भं स्कन्दस्वाम्युद्गीथीये भाष्ये, वेङ्कटमाधवीया व्याख्या, सायणभाष्यानुसारिणी मुद्गलीया वृत्तिर् इत्येतैश्च पाठविमर्शोपयिकैः पाठभेदादिटिप्पणैश्च संयोज्य

भीमदेवः, अमरनाथः, के. एस्. रामस्वामिशास्त्री, पीताम्बरदत्त
इत्येषां सायुज्यभाजा

**विश्वबन्धुना**

संपादितः

तत्र चाऽयं
पञ्चम-षष्ठ-मण्डलात्मकः
**४र्थो भागः**

होशिआरपुरम्
विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्
२०२० वि.

प्रथमं संस्करणम्, २०२० वि.

प्रकाशकृत् — विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्,
साधु-आश्रमः (प.गृ.), होशिआरपुरम् (पं., भारतम्)।



FIRST EDITION, 1964

*Publishers:*

**Vishveshvaranand Vedic Research Institute,**
Sadhu Ashram (P.O.), Hoshiarpur (Pb. India)



Prepared and Published under the Patronage of the Government of India in the erstwhile Ministry of Scientific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors.

अथ

# ऋग्वेदे सभाष्ये

पञ्चम-षष्ठ-मण्डलात्मकः

## चतुर्थो भागः

अथ

# ऋग्वेदे सभाष्ये

## पञ्चमं मण्डलम्

### [ १ ]

[1]बुधगविष्ठिरावात्रेयावृषी । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वाइव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥ १ ॥

अबोधि । अग्निः । सम्ऽइधा । जनानाम् । प्रति । धेनुम्ऽइव । आऽयतीम् । उषसम् ।
यह्वाःऽइव । प्र । वयाम् । उत्ऽजिहानाः । प्र । भानवः । सिस्रते । नाकम् । अच्छ ॥ १ ॥

वेङ्कट० बुधगविष्ठिरौ । अनुक्तगोत्र आत्रेयः पञ्चमे मण्डले भवेत् । धेनुमिव आगच्छन्तीम् उषसम् प्रति जनैः निधीयमानया समिधा प्रबुद्धो भवति अग्निः । महान्तः इव[2] वृक्षाः शाखाम् उत् गमयन्तः अग्नेः भानवः अन्तरिक्षे प्रति प्र सिस्रते ॥ १ ॥

अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचि ॥ २ ॥

अबोधि । होता । यजथाय । देवान् । ऊर्ध्वः । अग्निः । सुऽमनाः । प्रातः । अस्थात् ।
सम्ऽइद्धस्य । रुशत् । अदर्शि । पाजः । महान् । देवः । तमसः । निः । अमोचि ॥ २ ॥

वेङ्कट० देवान् यष्टुं प्रबुद्ध आसीत् होता अग्निः । [3]प्रातः ऊर्ध्वः तिष्ठति सुमनाः । समिद्धस्य अग्नेः दीप्तं दृश्यते तेजः । सोऽयम् महान् देवः तमसः निः मुक्तः[3] ॥ २ ॥

यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।
आद् दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥ ३ ॥

यत् । ईम् । गणस्य । रशनाम् । अजीगरिति । शुचिः । अङ्क्ते । शुचिऽभिः । गोभिः । अग्निः ।
आत् । दक्षिणा । युज्यते । वाजऽयन्ती । उत्तानाम् । ऊर्ध्वः । अधयत् । जुहूभिः ॥ ३ ॥

---

१-१. नास्ति मूको. २. इव इ. ३-३. नास्ति वि[1] अ[2].

वेङ्कट० 'यदा प्राणिजातस्य नियमनीं निद्रां निमिरति[1], तदानीम् अग्निः' बुद्धस्तेजोभिः जगत् अह्नि स्तोचमानः। तदनन्तरं दरिद्राणाम् अन्नमिच्छन्ती उदाराणाम् दक्षिणा युज्यते। सोऽयमग्निः ऊर्ध्वः ततानाम् दिवं तेजोभिर्धयति[2] ॥ ३ ॥

अग्निमच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरन्ति ।
यदीं सुवाते उषसा विरूपे श्वेतो वाजी जायते अग्रे अह्नाम् ॥ ४ ॥

अग्निम् । अच्छ । देवऽयताम् । मनांसि । चक्षूंषिऽइव । सूर्ये । सम् । चरन्ति ।
यत् । ईम् । सुवाते इति । उषसा । विरूपे इति विऽरूपे । श्वेतः । वाजी । जायते । अग्रे । अह्नाम् ॥ ४ ॥

वेङ्कट० 'अग्निम् अच्छ' यजमानानाम् मनांसि सह चरन्ति यथोदिते[3] सूर्ये मनुष्याणाम् चक्षूंषि। यदेनं जनयतः अहोरात्रे भिन्नरूपे, तदानीं श्वेतवर्णो बलवान् अह्नाम् अग्रे[4] उषसि प्रादुर्भवति ॥ ४ ॥

जनिष्ट हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु ।
दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् ॥ ५ ॥

जनिष्ट । हि । जेन्यः । अग्रे । अह्नाम् । हितः । हितेषु । अरुषः । वनेषु ।
दमेऽदमे । सप्त । रत्ना । दधानः । अग्निः । होता । नि । ससाद । यजीयान् ॥ ५ ॥

वेङ्कट० अजायत जयशीलोऽग्निः अग्रे अह्नाम् निहितः निहितेषु च काष्ठेषु आरोचमानो गृहेगृहे सप्त रत्नानि प्रयच्छन् 'अग्निः होता नि षीदति यष्टृतरः[5]' ॥ ५ ॥

अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा उ लोके ।
युवा कविः पुरुनिःष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥ ६ ॥

अग्निः । होता । नि । असीदत् । यजीयान् । उपऽस्थे । मातुः । सुरभौ । ऊँ इति । लोके ।
युवा । कविः । पुरुनिःऽस्थः । ऋतऽवा । धर्ता । कृष्टीनाम् । उत । मध्ये । इद्धः ॥ ६ ॥

वेङ्कट० अग्निः आह्वाता[6] निषण्णः यष्टृतरः पृथिव्याः उपस्थे सुरभौ देशे, गुग्गुलुना[7] सुगन्धितेजनेन च सुरभितम्, युवा कविः पुरुषु मनुष्येषु च निहितः सत्यकर्मा धर्ता मनुष्याणाम्। अपि च तेषां मध्ये इद्धः ॥ ६ ॥

'इति तृतीयाष्टके अष्टमाध्याये द्वादशो वर्गः' ॥

प्र णु त्यं विप्रमध्वरेषु साधुमग्निं होतारमीळते नमोभिः ।
आ यस्ततान रोदसी ऋतेन नित्यं मृजन्ति वाजिनं घृतेन ॥ ७ ॥

---

१-१. नास्ति वि[1] अ[1]. † निमरति मूको. २. "यदि दिवम् वि[1] अ मूको. ३-३. नास्ति मूको. ४. पश्चोदिते वि[1] मूको. ५. यष्टीय वि[1] मूको. ६-६. नास्ति वि[1] अ[1]. ७. द्वाता वि[1], होता अ[1]. ८. गुग्गुलुना मूको. ९.९. नास्ति मूको.

प्र । नु । त्यम् । विप्रम् । अध्वरेषु । साधुम् । अग्निम् । होतारम् । ईळते । नमःऽभिः ।
आ । यः । ततान । रोदसी इति । ऋतेन । नित्यम् । मृजन्ति । वाजिनम् । घृतेन ॥ ७ ॥

वेङ्कट० प्र स्तुवन्ति तं मेधाविनं यज्ञेषु साधयितारम् अग्निम् ह्वातारं हविर्भिः सह यः अग्निः द्यावापृथिव्यौ[1] आ तनोति उदकेन तेजसा[2] वा तम् नित्यम् हव्यं परिचरन्ति बलिनम् घृतेन ॥ ७ ॥

मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः ।
सहस्रशृङ्गो वृषभस्तदोजा विश्वाँ अग्ने सहसा प्रास्यन्यान् ॥ ८ ॥

मार्जाल्यः । मृज्यते । स्वे । दमूनाः । कविऽप्रशस्तः । अतिथिः । शिवः । नः ।
सहस्रऽशृङ्गः । वृषभः । तत्ऽओजाः । विश्वान् । अग्ने । सहसा । प्र । असि । अन्यान् ॥ ८ ॥

वेङ्कट० मार्जन्यः[3] मृज्यते परिचर्यते स्वस्थाने[4] । दममनाः कविभिः प्रशस्तः[5] अतिथिः अस्माकम् शिवः भवतु । सहस्रज्वालः वर्षिता ज्वालाधरः त्वम् हे अग्ने! सर्वान् अन्यान् बलेन प्र भवसि अतिगच्छसि ॥ ८ ॥

प्र सद्यो अग्ने अत्येष्यन्यानाविर्यस्मै चारुतमो बभूथ ।
ईळेन्यो वपुष्यो विभावा प्रियो विशामतिथिर्मानुषीणाम् ॥ ९ ॥

प्र । सद्यः । अग्ने । अति । एषि । अन्यान् । आविः । यस्मै । चारुऽतमः । बभूथ ।
ईळेन्यः । वपुष्यः । विभाऽवा । प्रियः । विशाम् । अतिथिः । मानुषीणाम् ॥ ९ ॥

वेङ्कट० शीघ्रमेव अग्ने! त्वम् अन्यान् प्र अति एषि शत्रून्[6] तस्य, यस्मै यजमानाय चारुतमः आविः भवसि । स्तुत्यः[7] वपुषे[8] हितः दीप्तिमान् प्रियः विशाम् मानुषीणाम् अतिथिः ॥ ९ ॥

तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने अन्तित ओत दूरात् ।
आ भन्दिष्ठस्य सुमतिं चिकिद्धि बृहत् ते अग्ने महि शर्म भद्रम् ॥ १० ॥

तुभ्यम् । भरन्ति । क्षितयः । यविष्ठ । बलिम् । अग्ने । अन्तितः । आ । उत । दूरात् ।
आ । भन्दिष्ठस्य । सुऽमतिम् । चिकिद्धि । बृहत् । ते । अग्ने । महि । शर्म । भद्रम् ॥ १० ॥

वेङ्कट० तुभ्यम् हविः भरन्ति क्षितयः हे यविष्ठ अग्ने! अन्तादपि च[9] दूरात् । स्तोतृतमस्य सुमतिम् आभिमुख्येन जानीहि । बृंहितम् महच्च तव सुखं भजनीयम् अग्ने! ॥ १० ॥

---

१. °विव्या वि; °विवी वि' अ'. २. °सा च वि' स्प'. ३. मार्जन्या वि' स्प'; मर्जृ०ज्यः अ'; मर्मेजे माप: वि', मार्जनीयः इ प्रस्ताव:. ४. स्वे स्थाने वि' अ' इ. ५. प्रशस्तम् इ; °स्ता वि' अ'. ६. शत्रुं वि°. ७. स्तुत्ये वि' स्प'. ८. वपुषः वि' अ' स्प'. ९. नास्ति वि' अ'.

आऽद्य रथं भानुमो भानुमन्तमग्ने तिष्ठ यजतेभिः समन्तम् ।
विद्वान् पथीनामुर्व१न्तरिक्षमेह देवान् हविरद्याय वक्षि ॥ ११ ॥

आ । अद्य । रथम् । भानुऽमः । भानुऽमन्तम् । अग्ने । तिष्ठ । यजतेभिः । सम्ऽअन्तम् ।
विद्वान् । पथीनाम् । उरु । अन्तरिक्षम् । आ । इह । देवान् । हविःऽअद्याय । वक्षि ॥ ११ ॥

वेङ्कट० आ तिष्ठ अद्य रथम् हे दीप्तिमन्[1] अग्ने! दीप्तिमन्तम्[2] यष्टव्यैः देवैः समाप्तपर्यन्तम् । विद्वान् देवयानान् मार्गान् 'विस्तीर्णञ्च अन्तरिक्षम्[3]' आ वह अस्मिन् यज्ञे देवान् हविषो भक्षणाय ॥ ११ ॥

अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥ १२ ॥

अवोचाम । कवये । मेध्याय । वचः । वन्दारु । वृषभाय । वृष्णे ।
गविऽस्थिरः । नमसा । स्तोमम् । अग्नौ । दिविऽइव । रुक्मम् । उरुऽव्यञ्चम् । अश्रेत् ॥ १२ ॥

वेङ्कट० अवोचाम कवये यज्ञियाय स्तोत्रं वन्दनशीलम्[4] वर्षणशीलाय पुंसे । अर्थैकवदाह । गविष्ठिरः हविषा सह स्तोमम् अग्नौ श्रयति, यथा पुरुषो[5] दीप्ते[6] विस्तीर्णव्यञ्जनं रुक्मालङ्कारं श्रयति, अपि वा यथा[7] दिवि आदित्यं श्रयन्ति देवाः बहुव्याप्तिम् ॥ १२ ॥

'इति तृतीयाष्टके अष्टमाध्याये त्रयोदशो वर्गः' ॥

[२]

'कुमार आत्रेय ऋषिः, वृशो वा जानः, उभौ वा, द्वितीयान्त्ययोः वृशो जानः ।
अग्निर्देवता । त्रिष्टुप् छन्दः, द्वादशी शक्वरी' ।

कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥ १ ॥

कुमारम् । माता । युवतिः । सम्ऽउब्धम् । गुहा । बिभर्ति । न । ददाति । पित्रे ।
अनीकम् । अस्य । न । मिनत् । जनासः । पुरः । पश्यन्ति । निऽहितम् । अरतौ ॥ १ ॥

वेङ्कट० शौनकः—[8] 'कुमारम्'[9] इति कौमारं सूक्तं वार्षोऽथवा[8] वृशः ।
कौमारे सति वार्षे द्वे 'यमेतं' 'वी (वि[9]इ) त्यृचाविमे ॥ इति ।

अत्र शाट्यायनोक्त इतिहासः —

ऐक्ष्वाकः त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।
संजग्राहाश्वरश्मींश्च[10] वृशो[11] जानः पुरोहितः ॥

---

1. नास्ति वि[1][2] अ[1]. 2. यज् ह. ३-३. 'र्णान्तरि' वि[3] सर्व. ४. वन्दनीयम् वि[3] अ[3]. ५. पुरो वि[3] स सर्व. ६. नास्ति वि[3] सर्व. ७. या ह; ये स अस्तावः; यदा वि[3] अ[1]. ८-८. नास्ति मूको. ९. यमो' ह. १०. स वमस्तारव र[3] सर्व; संजग्राहारव र[3] वि[1][3] अ[1]. ११. वृशो ह.

रथमेव नियच्छन्ति पुरो राज्ञो पुरोहिताः ।
नेदयं करवत् पापमिति रश्मीन् समाहिताः ॥

रथचक्रेण गच्छन्तौ तौ विचिच्छिदतुः शिरः ।
आत्रेयस्य कुमारस्य क्रीडतः कस्यचित् पथि ॥

त्वं हन्तासीत्युवाचैकः त्वं हन्तासीति चापरः ।
राजाऽब्रवीद् वृशं जानम् अभायासमहं रथम् ॥

प्रायोजीस्त्वं[1] त्वभि च तं त्वमेवातोऽवधीर्द्विजम् ।
तौ वै पृच्छावहा इति इक्ष्वाकून् प्रश्नमेयतुः ॥

ते हेक्ष्वाकव ऊचुश्च संगृह्णातीह यो रथम् ।
स रथस्येश्वर इति वृशमेव पराभवन् ॥

सोऽथ वार्शानि सामानि दृष्ट्वा संजीव्य तं शिशुम् ।
क्रोधात् संत्यज्य राजानमन्यदेशं[2] समाश्रितः ॥

हरोऽथाग्नेर्ननाशात्र तस्यापक्रमणादृषेः ।
अग्नौ प्रास्तानि पक्वानि नह्यपच्यन्त कानिचित् ॥

अधिश्रयन्ति यं सार्थं श्रातः सोऽप्यपचीदनः ।
ततः प्रत्यर्थितो राज्ञा सोऽभिगम्य प्रसाद्य च ॥

आनीय तं वृशं जानं पुनरेव पुरो दधे ।
जानो वृशोऽकामयत[3] पश्याम्यग्नेरहं हरः ॥

इति वार्शान्यथो दृष्ट्वा ददर्शाग्नेर्हरश्च तत् ।
प्रविष्टं पञ्चरो भार्यां [4]पिशाचीं तस्य भूपतेः ॥

निषण्णः स तया सार्धमासन्द्यां कशिपावपि ।
तामुपामन्त्रयाञ्चक्रे 'कमेतं त्वम्' इतीत्यृचा ॥

( द्र. बृदे ५,१४-२३ जैमि ३,९४-९६ ) ॥

कथन कुमारम् ब्राह्मणकुमारस्य मम हननात् तदनुरूपं कुमाररूपेण राज्ञो भार्याम् अनुप्रविश्य वर्तमानम् युवतिः सम्पूर्णम्[4] आच्छादितं गुहायाम् बिभर्ति, न ददाति पित्रे राज्ञे । ततश्च अस्य कुमारस्य हिंसकं जनाः न पुरः पश्यन्ति निहितम् अन्तर्हितं देवी । अत्र शाट्यायनकम्—

१. प्रायोजीस्त्वं वि[१]; प्रायोजीस्त्वं जैमि. क सर्व. २. अन्य देशं सर्व. ३. वृशो॰ क. ४. सम्पूर्णं वि[१].

"स आगच्छद् यथा राजा ब्राह्मणोऽनुमन्त्र्यमाण आगच्छेत् एवं स आगत्याकामयत पश्ययमग्नेर्हर[1] इति । स एतत् सामाऽपश्यत् तदभ्यगायत, तदपश्यत् पिशाची वा इयं त्र्यरुणस्य जाया । सैनम्[2] कशिपुना छादयित्वाऽध्यास्त इति । तदभिव्याहरत्[3]—'कुमारं माता युवतिः समुब्धम्', 'कमेतं त्वं युवते कुमारम्' " (तु जैमि ३,९६) इत्यादि ॥ १ ॥

**कमे॒तं त्वं यु॑वते कु॒मा॒रं पेषी॑ बिभर्षि॒ महि॑षी जजान ।**
**पू॒र्वीर्हि गर्भः॑ श॒रदो॑ व॒वर्धाप॑श्यं जा॒तं यदसू॑त मा॒ता ॥ २ ॥**

कम् । ए॒तम् । त्वम् । यु॒व॒ते॒ । कु॒मा॒रम् । पेषी॑ । बि॒भ॒र्षि॒ । महि॑षी । ज॒जा॒न॒ ।
पू॒र्वीः । हि । गर्भः॑ । श॒रदः॑ । व॒वर्ध॑ । अप॑श्यम् । जा॒तम् । यत् । असू॑त । मा॒ता ॥ २ ॥

वेङ्कट० "वृशा पिशाची पृच्छति—कम् एतम् त्वम्" हे युवते । कुमारम् पेषी[4] पिशाचिका बिभर्षि । महिषी[5] क्षिप्रं जनयतु एनमिति । परोक्षमाह—बह्वीः हि शरदः गर्भः अयं प्रवृद्धः आसीत्, पश्याम्येनमथ जातम्, यदेनं जनयतीयम् माता ॥ २ ॥

**हिर॑ण्यदन्तं॒ शुचि॑वर्णमा॒रात् क्षेत्रा॑दपश्य॒मायु॑धा मिमा॑नम् ।**
**द॒दा॒नो अ॑स्मा अ॒मृतं॑ वि॒पृक्व॒त् किं माम॑नि॒न्द्राः कृ॑णवन्ननु॒क्थाः ॥ ३ ॥**

हिर॑ण्यऽदन्तम् । शुचि॑ऽवर्णम् । आ॒रात् । क्षेत्रा॑त् । अ॒प॒श्य॒म् । आयु॑धा । मिमा॑नम् ।
द॒दा॒नः । अ॒स्मै॒ । अ॒मृत॑म् । वि॒पृक्व॑त् । किम् । माम् । अ॒नि॒न्द्राः । कृ॒ण॒व॒न् । अ॒नु॒क्थाः ॥ ३ ॥

वेङ्कट० अथ जातं "कुमारस्य त्र्यरुणस्य[6] राष्ट्रम् उपप्लुतं[7] दृष्ट्वा अग्निं स्तौति—हिरण्मयीयज्वाला[8] दन्तम्[9] शोचमानवर्णम्[10] समीपभूते क्षेत्रे पश्येयम् तेजांसि मिमानम्[11] । प्रयच्छन्नस्मै हविः विपर्चन यद् [12]उपसृताभिघारितम् । किम् माम् इन्द्रवर्जिताः[13] स्तोत्रवर्जिताश्च कुर्वन्तु राष्ट्रं दूषयन्तः ॥ ३ ॥

**क्षेत्रा॑दपश्यं सनु॒तश्चर॑न्तं सु॒मद् यू॒थं न पु॒रु शोभ॑मानम् ।**
**न ता अ॑गृभ्र॒न्नज॑निष्ट॒ हि षः पलि॑क्नी॒रिद् यु॑व॒तयो॑ भवन्ति ॥ ४ ॥**

क्षेत्रा॑त् । अ॒प॒श्य॒म् । स॒नु॒तरि॑ति । चर॑न्तम् । सु॒ऽमत् । यू॒थम् । न । पु॒रु । शोभ॑मानम् ।
न । ताः । अ॒गृ॒भ्र॒न् । अज॑निष्ट । हि । सः । पलि॑क्नीः । इत् । यु॒व॒तयः॑ । भ॒व॒न्ति॒ ॥ ४ ॥

वेङ्कट० समीपे पश्येयम् अन्तर्हितम् चरन्तम् कल्याणम् गवाम् यूथम् इव बहु शोभमानम् । न ताः ज्वालाः गृह्णन्तु राक्षसाः । जातो हि अग्निः, ततश्च पलिताः एव ज्वालाः युवतयः भवन्ति ॥ ४ ॥

---

१ °मेर वि°°° लप २. °नव मूको. ३ तदभि°या° वि° लपे. ४-५ समेरे त्वं युवा पिशाची प्रपच्छति वि° ५ मने पे वि° लप; मपेपि वि°; मनेपि° अ°. ६ नास्ति वि° ७ आन मूको. ८. नास्ति वि° अ° ९ नवनुर्ग वि°. १०. °मीयं °ना° वि° अ° ११. शेमर्स° वि°, १२. नास्ति मूको १३-१३. °मिम प्रवर्ति° वि° अ°.

के मे मर्यकं वि यवन्त गोभिर्न येषां गोपा अरणश्चिदास ।
य ईं जगृभुरव ते सृजन्त्वाजाति पश्व उप नश्चिकित्वान् ॥ ५ ॥

के । मे । मर्यकम् । वि । यवन्त । गोभिः । न । येषाम् । गोपाः । अरणः । चित् । आस ।
ये । ईम् । जगृभुः । अव । ते । सृजन्तु । आ । अजाति । पश्वः । उप । नः । चिकित्वान् ॥५॥

वेङ्कट० के मे राष्ट्रम् गोभिः वि युक्तं कुर्वन्ति दाहाभावाय दुर्बलासु प्रजासु येषाम्[1] गोपायिता न भवति गमनशीलोऽग्निः । ये एतद् राष्ट्रं गृहीतवन्तः, ते तद् अव सृजन्तु । तथाप्यहतान्[2] पशून् [3]उप आ भजतु ज्ञातवान्[3] ॥ ५ ॥

वसां राजानं वसतिं जनानामरातयो नि दधुर्मर्त्येषु ।
ब्रह्माण्यत्रेरव तं सृजन्तु निन्दितारो निन्द्यासो भवन्तु ॥ ६ ॥

वसाम् । राजानम् । वसतिम् । जनानाम् । अरातयः । नि । दधुः । मर्त्येषु ।
ब्रह्माणि । अत्रेः । अव । तम् । सृजन्तु । निन्दितारः । निन्द्यासः । भवन्तु ॥ ६ ॥

वेङ्कट० वसताम् राजानम् आवासस्थानम् जनानाम् शत्रवः नि-हितवन्तः मारकेषु पाशेषु पितरं मदीयम् । तम् पुरोहितस्य [4]अत्रेः पुत्रस्य स्तोत्राणि अव सृजन्तु[4] । निन्दितारः शत्रवः स्वयमेव निन्द्याः भवन्तु ॥ ६ ॥

[5]इति तृतीयाष्टके अष्टमाध्याये चतुर्दशो वर्गः[5] ॥

शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुञ्चो अशमिष्ट हि षः ।
एवास्मदग्ने वि मुमुग्धि पाशान्होतश्चिकित्व इह तू निषद्य ॥ ७ ॥

शुनःऽशेपम् । चित् । निऽदितम् । सहस्रात् । यूपात् । अमुञ्चः । अशमिष्ट । हि । सः ।
एव । अस्मत् । अग्ने । वि । मुमुग्धि । पाशान् । होतरिति । चिकित्वः । इह । तु । निऽसद्य ॥

वेङ्कट० [6]शुनःशेपम् अपि[6] निबद्धं पाशसहस्रात् यूपात् अमुचः । सः खलु शान्तः[7] अपि [8]शशाम[8] । एवम् हे अग्ने !† अस्मत्तोऽपि पाशान् वि मोचय । हे होतः प्राज्ञ ! इह निषद्य ॥ ७ ॥

हृणीयमानो अप हि मदैयेः प्र मे देवानां व्रतपा उवाच ।
इन्द्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥ ८ ॥

---

१. मया वि[1] रुपं. २. नास्ति वि[3] अ[1]. ३-३. उपाभजतां ज्ञातः वि[1] रुपं; वपाद्य तु ज्ञातः अ[1]; उपाजतु जानं ज्ञातुः वि[3]; उपाभ्यतु आतुज्ञातुः क. ४-४. "अत्रे···वस" वि[3] अ[1]. ५-५. नास्ति मूको. ६-६. नास्ति वि[1]. ७. तं वि[3]. ८-८. शशेत ··· शेते वि[3] अ[1]. † नास्ति मूको.

हृणीयमानः । अप । हि । मत् । ऐयेः । प्र । मे । देवानाम् । व्रतऽपाः । उवाच ।
इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहम् । अग्ने । अनुऽशिष्टः । आ । अगाम् ॥

वेङ्कट० ब्रह्महत्यया कुप्यन् मत्तः अप अगमः । तत् मह्यम् देवानाम् व्रतपाः[1] प्र उवाच । स्पष्टमाह— इन्द्रः जानन् त्वा हि अन्वा चचक्ष । तेन इन्द्रेण अनुशिष्टः अहम् हे अग्ने । आ गच्छामि त्वां स्तौमि । यद्वा यत्र [2]त्वम् अभिहितः[2] तदुक्तं ममेन्द्रेणेति ॥ ८ ॥

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ ९ ॥

वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि । कृणुते । महिऽत्वा ।
प्र । अदेवीः । मायाः । सहते । दुःऽएवाः । शिशीते । शृङ्गे इति । रक्षसे । विऽनिक्षे ॥ ९ ॥

वेङ्कट० कुमारेण स्तुतोऽग्निः यथापूर्वं प्रजज्वाल[3] । तत्र वृषो वदति— वि भाति ज्योतिषा महता अग्निः । आविः करोति च महत्त्वेन सर्वाणि प्रकाश्यानि । राक्षसीश्च मायाः अभिभवति दुष्टगमनाः । तीक्ष्णीकरोति च[4] शृङ्गे रक्षसो विनाशाय ॥ ९ ॥

उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ ।
मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥ १० ॥

उत । स्वानासः । दिवि । सन्तु । अग्नेः । तिग्मऽआयुधाः । रक्षसे । हन्तवै । ऊँ इति ।
मदे । चित् । अस्य । प्र । रुजन्ति । भामाः । न । वरन्ते । परिऽबाधः । अदेवीः ॥ १० ॥

वेङ्कट० अपि च[4] स्वननशीलाः दिवि भवन्तु अग्नेः भानवः रक्षसां[2] विनाशाय, यानि भवन्ति[4] तिग्मायुधानि[5] । सोममदे अस्य प्र हिंसन्ति राक्षसान् भानवः । सततम् [illegible] वारयन्ति राक्षस्यः मायाः एनम्[6] ॥ १० ॥

एतं ते स्तोमं तुविजात विप्रो रथं न धीरः स्वपा अतक्षम् ।
यदीदग्ने प्रति त्वं देव हर्याः स्वर्वतीरप एना जयेम ॥ ११ ॥

एतम् । ते । स्तोमम् । तुविऽजात । विप्रः । रथम् । न । धीरः । सुऽअपाः । अतक्षम् ।
यदि । इत् । अग्ने । प्रति । त्वम् । देव । हर्याः । स्वःऽवतीः । अपः । एन । जयेम ॥ ११ ॥

---

१. नास्ति वि॰. २-२. त्वमिति वि॰ अ॰. ३. विजज्वाल अ॰. ४. नास्ति वि॰ अ॰. ५. एतानि वि॰ अ॰. ६. °नीति वि॰. ७. तिग्म इत्यस्य° वि॰.

वेङ्कट० एतम् ते स्तोमम् हे बहुजनन! मेधावी रथम् इव धृष्टः सुकर्मा कृतवानस्मि । यदि स्तोमम् त्वम् [1]हे अग्ने देव! प्रति[1] कामयेथाः, शोभनगुणाः अपः स्तोमेन[2] अनेन जयेम ॥ ११ ॥

तुविग्रीवो वृषभो वावृधानोऽशत्र्वर्यः समजाति वेदः ।
इतीममग्निममृता अवोचन् बर्हिष्मते मनवे शर्म यंसद्धविष्मते मनवे शर्म यंसत् ॥१२॥

तुविऽग्रीवः । वृषभः । ववृधानः । अशत्रु । अर्यः । सम् । अजाति । वेदः ।
इति । इमम् । अग्निम् । अमृताः । अवोचन् । बर्हिष्मते । मनवे । शर्म । यंसत् । हविष्मते ।
मनवे । शर्म । यंसत् ॥ १२ ॥

वेङ्कट० बहुकण्ठः वृषभः वर्धमानः शत्रुरहितं धनम् सम् गमयति स्वामी इति इमम् अग्निम् देवाः ब्रुवन्ति, तथाऽयं[3] च बर्हिष्मते हविष्मते[4] च मनुष्याय सुखं प्रयच्छतु । सूक्तं यदा युद्धार्थं भवति तदाऽस्यान्तं सङ्गतं भवति ॥ १२ ॥

[1]इति तृतीयाष्टके अष्टमाध्याये पञ्चदशो वर्गः[1] ॥

[ ३ ]

[1]वसुश्रुत आत्रेय ऋषिः । अग्निर्देवता, तृतीयस्या मरुद्रुद्रविष्णवः । त्रिष्टुप् छन्दः, आद्या विराट्[1] ।

त्वमग्ने वरुणो जायसे यत् त्वं मित्रो भवसि यत् समिद्धः ।
त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय ॥ १ ॥

त्वम् । अग्ने । वरुणः । जायसे । यत् । त्वम् । मित्रः । भवसि । यत् । सम्ऽइद्धः ।
त्वे इति । विश्वे । सहसः । पुत्र । देवाः । त्वम् । इन्द्रः । दाशुषे । मर्त्याय ॥ १ ॥

वेङ्कट० त्वम् हे अग्ने! यदा वरुणः भवसि, यदा प्रादुर्भवसि । तथा[4] त्वम् मित्रः च भवसि, यदा[5] समिध्यसे । तथा[6] 'हे सहसः पुत्र!' त्वयि विश्वे देवाः सन्ति । 'यदग्निमुद्धरति वसवस्तर्ह्येनम्' (तैब्रा २,१,१०,१) इत्यध्वर्युब्राह्मणम् । त्वम् इन्द्रः च भवसि यजमानाय ॥ १ ॥

त्वमर्यमा भवसि यत् कनीनां नाम स्वधावन् गुह्यं बिभर्षि ।
अञ्जन्ति मित्रं सुधितं न गोभिर्यद् दम्पती समनसा कृणोषि ॥ २ ॥

त्वम् । अर्यमा । भवसि । यत् । कनीनाम् । नाम । स्वधाऽवन् । गुह्यम् । बिभर्षि ।
अञ्जन्ति । मित्रम् । सुऽधितम् । न । गोभिः । यत् । दम्पती इति दम्ऽपती । सऽमनसा । कृणोषि ॥२॥

---

१-१. नास्ति मूको. २. स्तोमेन वि[1-3] अ[1]. ३. यथाऽयं वि[1]. ४. नास्ति वि[1] लर्प. ५. यथा वि[1] लर्प; तदा अ[1]. ६. यथा वि[1] अ[1]. ७. तदा वि[1] लर्प.

वेङ्कट० 'हे स्वधावन्![1] [2]त्वम् अर्यमा[2] भवसि, यदा विवाहे[3] कन्यकानामर्थाय समिध्यसे[4], तदा गुह्यम् नाम च बिभर्षि। 'यविष्ठ इति नास्य तद् गुह्य नाम' इति वाजसनेयकम्। अञ्जन्ति सखायम् इव दृढम् सुष्ठु निहित गोविकारैः पय प्रभृतिभि । यस्मात् त्वं जायापती समानमनस्कौ करोषि ॥ २ ॥

तव श्रिये मरुतो मर्जयन्त रुद्र यत् ते जनिम चारु चित्रम् ।
पदं यद् विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम् ॥ ३ ॥

तव । श्रिये । मरुतः । मर्जयन्त । रुद्र । यत् । ते । जनिम । चारु । चित्रम् ।
पदम् । यत् । विष्णोः । उपऽमम् । निऽधायि । तेन । पासि । गुह्यम् । नाम । गोनाम् ॥ ३ ॥

वेङ्कट० तव श्रयणम् मरुत परिचरन्ति हे रुद्र! यदा तव जननम् चारु चित्रम् भवति। प्रादुर्भूतम् समेधयन्ति मरुत । पदम् यत् विष्णो अन्तिकम् निधायि, तत पृथिव्याऽन्तरिक्षेण वा, 'अन्तरिक्षदेवत्या खलु वै पशव' ( तैब्रा ३,२,०,१ ) इति च ब्राह्मणम्, ओषधयुत्पादनेन गाव यत् तव नाम कृतवन्त पशुपतिरिति "तद् रक्षसि" ॥ ३ ॥

तव श्रिया सुदृशो देव देवाः पुरू दधाना अमृतं सपन्त ।
होतारमग्निं मनुषो नि षेदुर्दशस्यन्त उशिजः शंसमायोः ॥ ४ ॥

तव । श्रिया । सुऽदृशः । देव । देवाः । पुरु । दधानाः । अमृतम् । सपन्त ।
होतारम् । अग्निम् । मनुषः । नि । सेदुः । दशस्यन्तः । उशिजः । शंसम् । आयोः ॥ ४ ॥

वेङ्कट० तव ज्वालया सुदृशो हे देव! देवा पुरु धन प्रयच्छन्त हवि 'सचन्ते। होतारम्[5] अग्निम् मनुष्या परिनिषीदन्ति[6] प्रयच्छ त इति[7] कामयमाना "मनुष्यस्य शंसनीयम्" ॥ ४ ॥

न त्वद्धोता पूर्वो अग्ने यजीयान् न काव्यैः परो अस्ति स्वधावः ।
विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद् देव मर्तान् ॥ ५ ॥

न । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । न । काव्यैः । परः । अस्ति । स्वधाऽवः ।
विशः । च । यस्याः । अतिथिः । भवासि । सः । यज्ञेन । वनवत् । देव । मर्तान् ॥ ५ ॥

वेङ्कट० न[8] 'त्वत्त होता प्रथम अग्ने! विद्यते यष्टृतर, न च स्तोत्रै पर विद्यते हे अन्नवन्!। त्वम् यस्या विश अतिथि भवसि। स †यज्ञेन[9] मनुष्यान् आश्रितान् भजते ॥ ५ ॥

---

1-1 नास्ति मूको. 2-2 नास्ति वि[*] रुप. 3 नास्ति रु. 4. समिध्यते रु. 5-5. दृशसि वि[*] रुप; दृशि वि[*] अ[*] रु. 6-6 नास्ति अ[*]. † पाणार्ं रुप, होतारं वि[*]. ‡ °दन्त रुप; °दन्त वि[*]. 7-7 मनु वि[*] अ[*], मनुष्याः वि[*]. 8 नास्ति वि[*] रुप. 9-9 नास्ति वि[*] अ[*]. † मवसि मनुष्या सम्भजति तेन वि[*] रु रुप. ‡ नास्ति मूको.

वयमग्ने वनुयाम त्वोता वसूयवो हविषा बुध्यमानाः ।
वयं समर्ये विदथेष्वह्नां वयं राया सहसस्पुत्र मर्तान् ॥ ६ ॥

वयम् । अग्ने । वनुयाम । त्वाऽऊताः । वसुऽयवः । हविषा । बुध्यमानाः ।
वयम् । सऽमर्ये । विदथेषु । अह्नाम् । वयम् । राया । सहसः । पुत्र । मर्तान् ॥ ६ ॥

वेङ्कट० वयम् अग्ने! प्रयच्छेम त्वया रक्षिताः धनकामाः हविषा दीप्यमानेन त्वया बुध्यमानाः । वयम् सङ्ग्रामे अह्नाम् सम्बन्धिषु यज्ञेषु च शत्रून् अभिभवेम मनुष्यान् धनेन हे सहसः पुत्र! ॥ ६ ॥

[1]इति तृतीयाष्टके अष्टमाध्याये षोडशो वर्गः[1] ॥

यो न आगो अभ्येनो भरात्यधीदघमघशंसे दधात ।
जही चिकित्वो अभिशस्तिमेतामग्ने यो नो मर्चयति द्वयेन ॥ ७ ॥

यः । नः । आगः । अभि । एनः । भराति । अधि । इत् । अघम् । अघऽशंसे । दधात ।
जहि । चिकित्वः । अभिऽशस्तिम् । एताम् । अग्ने । यः । नः । मर्चयति । द्वयेन ॥ ७ ॥

वेङ्कट० यः अस्माकम् आगः पापं च अभि प्रापयति तस्मिन् अघशंसे अघम् अग्निः अधि धत्ताम्[2] । जहि हे प्राज्ञ![3] अभिशस्तिम् एतेन क्रियमाणाम्[4] अग्ने!, यः अस्मान् मनसा वचसा च बाधते ॥ ७ ॥

त्वामस्या व्युषि देव पूर्वे दूतं कृण्वाना अयजन्त हव्यैः ।
संस्थे यदग्न ईयसे रयीणां देवो मर्तैर्वसुभिरिध्यमानः ॥ ८ ॥

त्वाम् । अस्याः । विऽउषि । देव । पूर्वे । दूतम् । कृण्वानाः । अयजन्त । हव्यैः ।
सम्ऽस्थे । यत् । अग्ने । ईयसे । रयीणाम् । देवः । मर्तैः । वसुऽभिः । इध्यमानः ॥ ८ ॥

वेङ्कट० त्वाम् रात्रेर्विवासे देवम् पूर्वे कवयः दूतम् कुर्वाणाः अयजन्त हविर्भिः । यत् त्वम् अग्ने! रयीणाम् संस्थाने[5] युद्धे गच्छसि देवः वासयितृभिः मनुष्यैः समिध्यमानः ॥ ८ ॥

अव स्पृधि पितरं योधि विद्वान् पुत्रो यस्ते सहसः सून ऊहे ।
कदा चिकित्वो अभि चक्षसे नोऽग्ने कदाँ ऋतचिद्यातयासे ॥ ९ ॥

अव । स्पृधि । पितरम् । योधि । विद्वान् । पुत्रः । यः । ते । सहसः । सूनो इति । ऊहे ।
कदा । चिकित्वः । अभि । चक्षसे । नः । अग्ने । कदा । ऋतऽचित् । यातयासे ॥ ९ ॥

---

१-१. नास्ति मूको. २. धत्तात् वि² ङ मूको. ३. प्रज्ञः वि² अ². ४. नास्ति वि² अ².
५. संस्थाने वि¹ स्पं; नास्ति वि² अ².

वेङ्कट० अव प्रीणय मदीयम् पितरम् । [1]त्वम्[1] पृथक् कुरु च तस्य[2] शत्रु जानन्, य अहम् तव[3] पुन तुभ्य हविर्वहामि हे[4] सहस पुत्र[4] । कदा आग्ने[5] अभि पश्यसि अस्मान् । अग्ने[6] कदा सत्यश त्व युद्धाय निर्गमयसि ॥ ९ ॥

भूरि नाम वन्दमानो दधाति पिता वसो यदि तज्जोषयासे ।
कुविद् देवस्य सहसा चकानः सुम्नमग्निर्वनते वावृधानः ॥ १० ॥

भूरि । नाम । वन्दमान । दधाति । पिता । वसो इति । यदि । तत् । जोषयासे ।
कुवित् । देवस्य । सहसा । चकान । सुम्नम् । अग्नि । वनते । ववृधान ॥ १० ॥

वेङ्कट० भूरि हवि स्तुवन् प्रयच्छति [1]अस्मदीय पिता । हे वासयित[1] यदि त्वम् तत्[7] सेवसे । कुवित् देवस्य सहसा दीप्यमान प्रयच्छसि सुखम् अग्नि च तस्मै प्रयच्छति वर्धमान ॥ १० ॥

त्वमङ्ग जरितारं यविष्ठ विश्वान्यग्ने दुरिताति पर्षि ।
स्तेना अदृश्रन् रिपवो जनासोऽज्ञातकेता वृजिना अभूवन् ॥ ११ ॥

त्वम् । अङ्ग । जरितारम् । यविष्ठ । विश्वानि । अग्ने । दुःऽइता । अति । पर्षि ।
स्तेना । अदृश्रन् । रिपव । जनास । अज्ञातऽकेता । वृजिना । अभूवन् ॥ ११ ॥

वेङ्कट० त्वम् क्षिप्र स्तोतार हे युवतम[1] विश्वानि अग्ने[1] दुरितानि अति पारय । स्तेना दृश्यन्ते रिपव जनाश्च[4] अज्ञातनिवासस्थाना चोदिता[5] भवन्तु इति ॥ ११ ॥

इमे यामासस्त्वद्रिगभूवन् वसवे वा तदिदागो अवाचि ।
नाहायमग्निरभिशस्तये नो न रीषते वावृधानः परा दात् ॥ १२ ॥

इमे । यामास । त्वद्रिक् । अभूवन् । वसवे । वा । तत् । इत् । आग । अवाचि ।
न । अह । अयम् । अग्नि । अभिऽशस्तये । न । न । रिषते । ववृधान । परा । दात् ॥ १२ ॥

वेङ्कट० स्तपितर प्रत्याह—अमी भ्रातर गन्तार त्वदभिमुखा भवन्ति । तत् चैतदुपद्रवम्[6] वासयित भ्रमय मयोक्तम् । समुच्चयार्थीयो वाशब्द । [7]न एव अयम्[7] अग्नि अस्मान् अभिशस्तये प्रयच्छति न हिंसत वर्धमानोऽपि प्रयच्छति ॥ १२ ॥

*इति तृतीयाष्टके अष्टमाध्याये सप्तदशो वर्ग * ॥

---

१-१. नास्ति वि[1] अ[2]. † एम मूको २. तस्य वि[1] एप ३. नास्ति वि[1] अ[2] म. ४. नास्ति वि[1] अ[2] ५. चोदसा मूको ६. [2]द्रवस् वि[1] स्प ७-७. नास्ति मूको

## [ ४ ]

[1]वसुश्रुत आत्रेय ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे अध्वरेषु राजन् ।
त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानाम् ॥ १ ॥

त्वाम् । अग्ने । वसुऽपतिम् । वसूनाम् । अभि । प्र । मन्दे । अध्वरेषु । राजन् ।
त्वया । वाजम् । वाजऽयन्तः । जयेम । अभि । स्याम । पृत्सुतीः । मर्त्यानाम् ॥ १ ॥

वेङ्कट० त्वाम् अग्ने! धनपतिम् आभिमुख्येन प्र स्तौमि यज्ञेषु हे दीप्यमान! । त्वया सहमानाः युद्धं कर्तुकामाः जयेम[2], अभि भवेम पृतनाः मनुष्याणाम् ॥ १ ॥

हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे ।
सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक् सं मिमीहि श्रवांसि ॥ २ ॥

हव्यऽवाट् । अग्निः । अजरः । पिता । नः । विऽभुः । विभाऽवा । सुऽदृशीकः । अस्मे इति ।
सुऽगार्हपत्याः । सम् । इषः । दिदीहि । अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ॥ २ ॥

वेङ्कट० हविषां वोढा अग्निः जरावर्जितः[3] पालयिता अस्माकं विविधम् भवन् दीप्तिमान् सुदर्शनीयोऽस्माकं भवतु । [4]शोभनगृहपतिकानि अन्नानि[4] सम् दिदीहि अस्मभ्यम् । अस्मदभिमुखान्यन्नानि सह[5] कुरु ॥ २ ॥

विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतपृष्ठमग्निम् ।
नि होतारं विश्वविदं दधिध्वे स देवेषु वनते वार्याणि ॥ ३ ॥

विशाम् । कविम् । विश्पतिम् । मानुषीणाम् । शुचिम् । पावकम् । घृतऽपृष्ठम् । अग्निम् ।
नि । होतारम् । विश्वऽविदम् । दधिध्वे । सः । देवेषु । वनते । वार्याणि ॥ ३ ॥

वेङ्कट० मानुषीणाम् विशाम् स्वामिनं क्रान्तप्रज्ञं दीप्तं शोधकम् घृतपृष्ठम् अग्निम् नि दधिध्वे होतारं सर्वज्ञम् । सः देवेषु मनुष्याणां धनानि भजते ॥ ३ ॥

जुषस्वाग्न इळया सजोषा यतमानो रश्मिभिः सूर्यस्य ।
जुषस्व नः समिधं जातवेद आ च देवान् हविरद्याय वक्षि ॥ ४ ॥

---

१-१. नास्ति मूको. २. नास्ति वि°. ३. °र्जितः वि° अपं. ४-४. निकेतनानि एपं. ५. १६ वि°.

जुषस्व । अग्ने । इळया । सऽजोषाः । यतमान । रश्मिऽभिः । सूर्यस्य ।।
जुषस्व । नः । सम्ऽइधम् । जातऽवेदः । आ । च । देवान् । हविःऽअद्याय । वक्षि ॥ ४ ॥

वेङ्कट० जुषस्व अग्ने! 'समिधम् इडया' सङ्गत यतमान च सूर्यरश्मिभि सह। तथा हे जातवेद! अस्माकम् समिधम् सेवस्व, आ वह च देवान् हविषो भक्षणाय ॥ ४ ॥

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥ ५ ॥

जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमम् । नः । यज्ञम् । उप । याहि । विद्वान् ।
विश्वाः । अग्ने । अभिऽयुजः । विऽहत्य । शत्रुऽयताम् । आ । भर । भोजनानि ॥ ५ ॥

वेङ्कट० पर्याप्त दममना[2] अतिथि भवन् गृहे इमम् न यज्ञम् उप गच्छ जानन्। सर्वा अग्ने! अभियोक्त्री[3] सेना विहत्य शत्रूयताम् तेषाम् अन्नानि अस्माकम् आ भर[4] ॥ ५ ॥

[5]इति तृतीयाष्टके अष्टमाध्याये अष्टादशो वर्ग[5] ॥

वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३ स्वायै ।
पिपर्षि यत् सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥ ६ ॥

वधेन । दस्युम् । प्र । हि । चातयस्व । वयः । कृण्वानः । तन्वे । स्वायै ।
पिपर्षि । यत् । सहसः । पुत्र । देवान् । सः । अग्ने । पाहि । नृऽतम । वाजे । अस्मान् ॥ ६ ॥

वेङ्कट० आयुधेन हि[6] दस्युम् प्रकर्षेण "जीवम् स्वस्मै" शरीराय गमन कुर्वाण । पारयसि यत् हे सहस पुत्र! देवान्[7], तदा स त्वम् हे अग्ने नेतृतम! अस्मान् रक्ष युद्धे ॥ ६ ॥

वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे ।
अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि ॥ ७ ॥

वयम् । ते । अग्ने । उक्थैः । विधेम । वयम् । हव्यैः । पावक । भद्रऽशोचे ।
अस्मे इति । रयिम् । विश्वऽवारम् । सम् । इन्व । अस्मे इति । विश्वानि । द्रविणानि । धेहि ॥७॥

वेङ्कट० वयम् युष्माकम् अग्ने! उक्थै परिचरण कुर्मः, वयम् हविर्भि हे पावक भजनीयदीप्ते[8]। अस्मासु धन सर्वैः वरणीय सम् गमय, अस्मासु सर्वाण्येव धनानि स्थापय ॥ ७ ॥

---

१ १. समिधमस्मदीयामित्यत्र वि[२], सन्धिमस्मदीयामित्यत्र अ[१], समिद्ध इ (ळ लुप) इत्या वि[१] ळ लुप  २ दमना वि[१] अ[१], °न वि[१] ए लुप  ३ 'मियोक्त्रो' वि[१] ळ, 'योक्त्र वि[१].  ४. हर वि[१] अ[१] ए.  ५-५. नास्ति मूको  ६ नास्ति मूको  ७-७ पदद्वयस्य वि[१] अ[१]  ८ देवा वि[१] अ[१] ळ.

ν

अस्माकमग्ने अध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यम् ।
वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥ ८ ॥

अस्माकम् । अग्ने । अध्वरम् । जुषस्व । सहसः । सूनो इति । त्रिऽसधस्थ । हव्यम् ।
वयम् । देवेषु । सुऽकृतः । स्याम । शर्मणा । नः । त्रिऽवरूथेन । पाहि ॥ ८ ॥

वेङ्कट० अस्माकम् अग्ने ! यज्ञं सेवस्व हे सहसः पुत्र त्रिस्थान ! हविश्च । वयम् देवेषु शोभनकर्माणः स्याम । सुखेन त्रिगुणेन नः रक्ष ॥ ८ ॥

विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिं पर्षि ।
अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ ९ ॥

विश्वानि । नः । दुःऽगहा । जातऽवेदः । सिन्धुम् । न । नावा । दुःऽइता । अति । पर्षि ।
अग्ने । अत्रिऽवत् । नमसा । गृणानः । अस्माकम् । बोधि । अविता । तनूनाम् ॥ ९ ॥

वेङ्कट० सर्वाणि अस्मान् दुःखेन गाहितव्यानि हे जातवेदः ! सिन्धुम् इव नावा दुरितानि अति पारय । अग्ने ! अत्रिणेव नमसा स्तूयमानः अस्माकम् अङ्गानां रक्षिता भवामीति बुध्यस्व ॥ ९ ॥

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ १० ॥

यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यम् । मर्त्यः । जोहवीमि ।
जातऽवेदः । यशः । अस्मासु । धेहि । प्रऽजाभिः । अग्ने । अमृतऽत्वम् । अश्याम् ॥ १० ॥

वेङ्कट० 'यः त्वा' हृदयेन स्तुतिमता स्तुवन् अमर्त्यम् मर्त्यः भृशम् आह्वयामि, हे जातवेदः !' तेन अस्मासु कीर्तिं धेहि, प्रजाभिः अग्ने ! अमृतत्वम् च प्राप्नुयाम' ॥ १० ॥

यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ।
अश्विनं स पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥ ११ ॥

यस्मै । त्वम् । सुऽकृते । जातऽवेदः । ऊँ इति । लोकम् । अग्ने । कृणवः । स्योनम् ।
अश्विनम् । सः । पुत्रिणम् । वीरऽवन्तम् । गोऽमन्तम् । रयिम् । नशते । स्वस्ति ॥ ११ ॥

१-१. सुरितम् वि° ऋ°. ३-३ °सुखे गृहेन वि°, °सुखेन क लभ°. ९. ननगा मूको.
२-२. मारित वि° लभ°. ४. आनः मूको. ५. °याम् मरव वि° लभ°.

वेङ्कट० अस्मै त्वम् सुकर्मणे[1] हे जातवेद अग्ने! कृणोषि लोकम् आवासस्थानं सुखकरम्, स अश्ववन्तम् पुत्रवन्तम् वीरवन्तम् गोमन्तम्[2] ■ रयिम् अविनाशेन प्राप्नोति ॥ ११ ॥

[3]इति तृतीयाष्टके अष्टमाध्याये एकोनविंशो वर्गः[3] ॥

[ ५ ]

[4]वसुश्रुत आत्रेय ऋषिः । आप्रीसूक्तम् = ( प्रथमाया इध्मः समिद्धोऽग्निर्वा देवता, द्वितीयस्या नराशंसः, तृतीयस्या इळः, चतुर्थ्या बर्हिः, पञ्चम्या देवीर्द्वारः, षष्ठ्या उषासानक्ता, सप्तम्या दैव्यौ होतारौ प्रचेतसौ, अष्टम्यास्तिस्रो देव्यः सरस्वतीळाभारत्यः, नवम्यास्त्वष्टा, दशम्या वनस्पतिः, एकादश्या स्वाहाकृतयः )। गायत्री छन्दः[5] ।

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥ १ ॥
सुऽसमिद्धाय । शोचिषे । घृतम् । तीव्रम् । जुहोतन । अग्नये । जातऽवेदसे ॥ १ ॥

वेङ्कट० सुष्ठु समिध्यमानाय शोचिषे[6] घृतम्[6] तीव्ररसम् जुहोतन अग्नये जातप्रज्ञाय ॥ १ ॥

नराशंसः सुषूदतीमं यज्ञमदाभ्यः । कविर्हि मधुहस्त्यः ॥ २ ॥
नराशंसः । सुसूदति । इमम् । यज्ञम् । अदाभ्यः । कविः । हि । मधुऽहस्त्यः ॥ २ ॥

वेङ्कट० नरैः शंसनीयः[7] सुष्ठु प्रेरयति[7] इमम् यज्ञम् अहिंस्यः[8] । कविः हि अयम् मादयितृहस्ताङ्गुलिकः ॥ २ ॥

ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् । सुखै रथेभिरूतये ॥ ३ ॥
ईळितः । अग्ने । आ । वह । इन्द्रम् । चित्रम् । इह । प्रियम् । सुऽखैः । रथेभिः । ऊतये ॥ ३ ॥

वेङ्कट० स्तुतः हे अग्ने! आ वह इन्द्रम्[9] चित्रम् अस्मिन् यज्ञे सुद्वारैः रथैः रक्षणाय ॥ ३ ॥

ऊर्णम्रदा वि प्रथस्वाभ्य१र्का अनूषत । भवा नः शुभ्र सातये ॥ ४ ॥
ऊर्णऽम्रदः । वि । प्रथस्व । अभि । अर्काः । अनूषत । भव । नः । शुभ्र । सातये ॥ ४ ॥

वेङ्कट० [11]हे ऊर्णवन्मृदु बर्हिः! त्वं[11] विस्तीर्णं भव । त्वा मन्त्राः अभ्यस्तुवन् । भव अस्माकं [10]हे शोभन! दानाय![10] ॥ ४ ॥

देवीर्द्वारो वि श्रयध्वं सुप्रायणा न ऊतये । प्रप्र यज्ञं पृणीतन ॥ ५ ॥
देवीः । द्वारः । वि । श्रयध्वम् । सुप्रऽअयनाः । नः । ऊतये । प्रऽप्र । यज्ञम् । पृणीतन ॥ ५ ॥

---

१. कर्मणे मूको. २. शोभनम् लप. ३-३. नास्ति मूको. ४. नास्ति मूको. ५. एतच्छ वि[1] लप. ६. °नेम मूको. ७. °रयतीति वि[1] लप; °रयतीति वि[2] अ[1] ए. ८. °हिंस्य वि[2]. ९-९. °र्णा (°र्णा लप) शब्द सं बर्हिरिति वि[1] लप, °ड सं बर्हिरिति वि[2] अ[1] ए. १०-१०. शोभनाय वि[1], °न। मानाय क

वेङ्कट० हे देव्यः द्वारः! नि-पतिताः आपतत सुप्रायणाः अस्मदर्थं रक्षणाय । यज्ञम् च प्रगमयत ॥ ५ ॥

इति तृतीयाष्टके अष्टमाध्याये विंशो वर्गः ॥

सुप्रतीके वयोवृधा यह्वी ऋतस्य मातरा । दोषामुषासमीमहे ॥ ६ ॥

सुप्रतीके इति सुऽप्रतीके । वयःऽवृधा । यह्वी इति । ऋतस्य । मातरा । दोषाम् । उषसम् । ईमहे ॥

वेङ्कट० शोभनावयवे अन्नस्य वर्धयित्र्यौ यज्ञस्य निर्मात्र्यौ महत्यौ रात्रिम् उषसम् च अभिलषितं याचामहे ॥ ६ ॥

वातस्य पत्मन्नीळिता दैव्या होतारा मनुषः । इमं नो यज्ञमा गतम् ॥ ७ ॥

वातस्य । पत्मन् । ईळिता । दैव्या । होतारा । मनुषः । इमम् । नः । यज्ञम् । आ । गतम् ॥ ७ ॥

वेङ्कट० वातस्य पतने अन्तरिक्षे सर्वेगामी स्तुतौ 'दैव्यौ' होतारौ मनुष्यस्य स्तुतौ अस्माकीनम् इमम् यज्ञम् आ गच्छतम् ॥ ७ ॥

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधः ॥ ८ ॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥ ८ ॥

वेङ्कट० इळाः तिस्रः देव्यः मयोभुवः अक्षीणाः बर्हिः इदम् अधितिष्ठन्तु ॥ ८ ॥

शिवस्त्वष्टरिहा गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदव ॥ ९ ॥

शिवः । त्वष्टः । इह । आ । गहि । विऽभुः । पोषे । उत । त्मना । यज्ञेऽयज्ञे । नः । उत् । अव ॥

वेङ्कट० कल्याणः हे त्वष्टः! इह आ गच्छ पोषणे ईश्वरस्त्वम् आत्मनैव । यज्ञेयज्ञे च 'अस्मान् रक्ष' ॥ ९ ॥

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥ १० ॥

यत्र । वेत्थ । वनस्पते । देवानाम् । गुह्या । नामानि । तत्र । हव्यानि । गमय ॥ १० ॥

वेङ्कट० 'हे वनस्पते! यत्र वेत्थ' त्वम् देवानाम् गुह्यानि नामानि, तत्र गत्वा तैर्नामभिः हव्यानि तान् गमय ॥ १० ॥

स्वाहाग्नये वरुणाय स्वाहेन्द्राय मरुद्भ्यः । स्वाहा देवेभ्यो हविः ॥ ११ ॥

स्वाहा । अग्नये । वरुणाय । स्वाहा । इन्द्राय । मरुत्ऽभ्यः । स्वाहा । देवेभ्यः । हविः ॥ ११ ॥

वेङ्कट० स्वाहुतमस्तु एतेभ्यः देवेभ्यः हविः । अपि वा स्वाहा कृणोमि ॥ ११ ॥

इति तृतीयाष्टके अष्टमाध्याये एकविंशो वर्गः ॥

---

१-१. नास्ति मूको. २. दे° मूको. ३-३. °स्मानुरक्ष वि°.

[ ६ ]

[1]वसुश्रुत आत्रेय ऋषिः । अग्निर्देवता । पङ्क्तिश्छन्दः[1] ।

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥ १ ॥

अग्निम् । तम् । मन्ये । यः । वसुः । अस्तम् । यम् । यन्ति । धेनवः ।
अस्तम् । अर्वन्तः । आशवः । अस्तम् । नित्यासः । वाजिनः । इषम् । स्तोतृऽभ्यः । आ । भर ॥ १ ॥

वेङ्कट० अग्निम् तम् स्तौमि यः वासयिता, यम्[2] च गृहभूतम् धेनवः समागच्छन्ति, तथा अश्वाश्च शीघ्रगन्तारः अजस्रा बलवन्तः । अग्ने[1] त्वम् अन्नम् स्तोतृभ्यः आ भर ॥ १ ॥

सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।
समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भर ॥ २ ॥

सः । अग्निः । यः । वसुः । गृणे । सम् । यम् । आऽयन्ति । धेनवः ।
सम् । अर्वन्तः । रघुऽद्रुवः । सम् । सुऽजातासः । सूरयः । इषम् । स्तोतृऽभ्यः । आ । भर ॥ २ ॥

वेङ्कट० 'स अग्निः[3] यः वासयिता स्तूयते, यश्च निवसन्, यम् च सम् आगच्छन्ति धेनवः, सम्[4] अश्वाः शीघ्रं गच्छन्ति, सह गच्छन्ति शोभनजननाः प्राज्ञाः ॥ २ ॥

अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥ ३ ॥

अग्निः । हि । वाजिनम् । विशे । ददाति । विश्वऽचर्षणिः ।
अग्निः । राये । सुऽआभुवम् । सः । प्रीतः । याति । वार्यम् । इषम् । स्तोतृऽभ्यः । आ । भर ॥

वेङ्कट० अग्निः हि अश्वं मनुष्याय प्रयच्छति विश्वस्य द्रष्टा । अग्निः धनार्थं शोभनभवनम्[5] वरणीयम् इच्छति स[6] प्रीतः ॥ ३ ॥

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥ ४ ॥

आ । ते । अग्ने । इधीमहि । द्युऽमन्तम् । देव । अजरम् ।
यत् । ह । स्या । ते । पनीयसी । सम्ऽइत् । दीदयति । द्यवि । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ४ ॥

---

१-१. नास्ति मूको. २. यश्च मूको. ३. नास्ति मूको. ४. नम् वि°. ५. 'नन भवन वि°' ६. ए मूको

वेङ्कट० हे अग्ने देव! तव दीप्यमानः दीप्तिमन्तं जरारहितं भानुम्[1]। यत् खलु त्वदीयं तेजः इयम् समित् अह्नि सन्दीपयति स्तुत्यतमाम्[2] ॥ ४ ॥

आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥ ५ ॥

आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । शोचिषः । पते ।
सुऽचन्द्र । दस्म । विश्पते । हव्यऽवाट् । तुभ्यम् । हूयते । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ५ ॥

वेङ्कट० हे शुक्रस्य शोचिषः पते! अग्ने! तुभ्यम् ऋचा हविः आ हूयते। हे सुकान्त![3] दर्शनीय! विशां पते! हविषां वोढः! हविः तुभ्यम् हूयते ॥ ५ ॥

"इति तृतीयाष्टके षष्ठाध्याये द्वाविंशो वर्गः" ॥

प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यन्ति वार्यम् ।
ते हिन्विरे त इन्विरे त इषण्यन्त्यानुषगिषं स्तोतृभ्य आ भर ॥ ६ ॥

प्रो इति । त्ये । अग्नयः । अग्निषु । विश्वम् । पुष्यन्ति । वार्यम् ।
ते । हिन्विरे । ते । इन्विरे । ते । इषण्यन्ति । आनुषक् । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ६ ॥

वेङ्कट० प्र पुष्यन्ति तेऽस्मै मदीयाः अग्नयः अग्नीनां मध्ये वरणीयं धनम्। सर्वे ते धनं प्रेरयन्ति, ते अस्मान् प्रीणयन्ति,[4] अस्माकमन्नम् आनुषक्तम् इच्छन्ति ॥ ६ ॥

तव त्ये अग्ने अर्चयो महि व्राधन्त वाजिनः ।
ये पत्वभिः शफानां व्रजा भुरन्त गोनामिषं स्तोतृभ्य आ भर ॥ ७ ॥

तव । त्ये । अग्ने । अर्चयः । महि । व्राधन्त । वाजिनः ।
ये । पत्वऽभिः । शफानाम् । व्रजा । भुरन्त । गोनाम् । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ७ ॥

वेङ्कट० तव इमे अग्ने! अर्चयः आत्मानं वर्धयन्ति बलवन्तः, ये शफानाम् पतनैः गवाम् व्रजान्[5] आ गच्छन्ति तान्। प्रयच्छन्ति पशून् इत्यर्थः ॥ ७ ॥

नवा नो अग्न आ भर स्तोतृभ्यः सुक्षितीरिषः ।
ते स्याम य आनृचुस्त्वादूतासो दमेदम इषं स्तोतृभ्य आ भर ॥ ८ ॥

---

१. भानुं मूको. २. स्तुत्यतमाम् मूको. ३. सुकान्तं वि° लपं. ४-४. नास्ति मूको.
५. °पति मूको. ६. व्रजाः वि°.

नवाः । नः । अग्ने । आ । भर । स्तोतृऽभ्यः । सुऽक्षितीः । इषः ।
ते । स्याम । ये । आनृचुः । त्वाऽदूतासः । दमेऽदमे । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ८ ॥

वेङ्कट० नवाः अस्मभ्यम् आ भर अग्ने । स्तोतृभ्यः सुगमाः इषः । ते वयं समृद्धा भवाम, ये त्वाम् आनृचुः यज्ञेयज्ञे त्वं दूतः येषाम् ते[1] इति ॥ ८ ॥

उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत् पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥ ९ ॥

उभे इति । सुऽचन्द्र । सर्पिषः । दर्वी इति । श्रीणीषे । आसनि ।
उतो इति । नः । उत् । पुपूर्याः । उक्थेषु । शवसः । पते । इषम् । स्तोतृऽभ्यः । आ । भर ॥

वेङ्कट० जुहूपभृतौ हे सुकान्त ! सर्पिषः पूर्णे स्वम्[2] आस्ये श्रपसि । अपि च अस्मान् उत् पूरय उक्थेषु[3] हे 'शवसः पते !'[3] ॥ ९ ॥

एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।
दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भर ॥ १० ॥

एव । अग्निम् । अजुर्यमुः । गीःऽभिः । यज्ञेभिः । आनुषक् ।
दधत् । अस्मे इति । सुऽवीर्यम् । उत । त्यत् । आशुऽअश्व्यम् । इषम् । स्तोतृऽभ्यः । आ । भर ॥ १० ॥

वेङ्कट० एवम्[4] अग्निम् अस्तुवन्, अपि वा स्तुवन्ति पश्यन्तीत्याख्यातद्वयम्[5] पदम्, स्तुतिभिः हविर्भिश्च आनुपूर्व्येण[6] । स त्वम् दधत् अस्मभ्यं शोभनवीर्यम्,[6] अपि च आशु गन्तारम् अश्वसङ्घम् । अपि वा द्वे एते पदे 'अजुः', 'यमुः' इति । तत्र द्वितीयस्यापि निपातो द्रष्टः, यथा 'हिरण्यकर्णं मणिग्रीवम्' ( ऋ १,१२२,१४ ) इति नास्तः ॥ १० ॥

[7]इति तृतीयाष्टके अष्टमाध्याये द्वाविंशो वर्गः[7] ॥

[ ७ ]

"इष आत्रेय ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः, दशमी पङ्क्तिः" ।

सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जे नप्त्रे सहस्वते ॥ १ ॥

सखायः । सम् । वः । सम्यञ्चम् । इषम् । स्तोमम् । च । अग्नये ।
वर्षिष्ठाय । क्षितीनाम् । ऊर्जे । नप्त्रे । सहस्वते ॥ १ ॥

---

१. नास्ति मूको. २. त्वाम् ऌ. ३-३. °सधुनः वि°; °स्पत ऌ लपं. ४. यं वि° लपं.
५. °स्याख्यात द्वे अयं मूको; °ते द्विजातं ऌ प्रस्तावः ६ °भनं वीर्यं वि°. ७-७. नास्ति मूको.

वेङ्कट० इषः[1]। हे सखायः! सम्[2] प्रयच्छत यूयं समीचीनम् स्तोमम् अन्नं[3] च अग्नये प्रजानाम्[4] अत्यन्तं वर्षिष्ठाय बलस्य पौत्राय बलवते ॥ १ ॥

कुत्रा चिद् यस्य समृतौ रण्वा नरो नृषदने ।
अर्हन्तश्चिद् यमिन्धते संजनयन्ति जन्तवः ॥ २ ॥

कुत्र । चित् । यस्य । सम्ऽऋतौ । रण्वाः । नरः । नृऽसदने ।
अर्हन्तः । चित् । यम् । इन्धते । सम्ऽजनयन्ति । जन्तवः ॥ २ ॥

वेङ्कट० सोऽग्निः[5] '[6]कुत्र चित्[6]' भवति, यस्य सङ्ग्रामे नरः रममाणाः नृणां सदने गृहे वर्तन्ते। यम् च अर्हन्तः[7] यजमानाः समिन्धते। सङ्कृत्य जनयन्ति च जाताः यम् इति[8] ॥ २ ॥

सं यदिषो वनामहे सं हव्या मानुषाणाम् ।
उत द्युम्नस्य शवस ऋतस्य रश्मिमा ददे ॥ ३ ॥

सम् । यत् । इषः । वनामहे । सम् । हव्या । मानुषाणाम् ।
उत । द्युम्नस्य । शवसा । ऋतस्य । रश्मिम् । आ । ददे ॥ ३ ॥

वेङ्कट० सम् भजामहे यदा अन्नानि। तदेवाह[9]—सम् वनामहे[10] हवनीयानि[11] हवींषि यजमानानाम्। तदानीम् अयम् अन्नस्य बलस्य च साधयितारम् यज्ञस्य सम्बन्धिनम् रश्मिम् आ दत्ते इति ॥ ३ ॥

स स्मा कृणोति केतुमा नक्तं चिद् दूर आ सते ।
पावको यद् वनस्पतीन् प्र स्मा मिनात्यजरः ॥ ४ ॥

सः । स्म । कृणोति । केतुम् । आ । नक्तम् । चित् । दूरे । आ । सते ।
पावकः । यत् । वनस्पतीन् । प्र । स्म । मिनाति । अजरः ॥ ४ ॥

वेङ्कट० [12]सः खलु कृणोति[12] प्रज्ञानं रात्रावपि दूरेऽप्यासीनाय[13] पावकः यदा काष्ठानि प्रकर्षेण हिनस्ति समिद्धः ॥ ४ ॥

अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति ।
अभीमह स्वजेन्यं भूमा पृष्ठेव रुरुहुः ॥ ५ ॥

---

१. नास्ति छ. २. नास्ति वि° छपं. ३. अन्न मूको. ४. प्रजा मूको. ५. नास्ति मूको. ६-६. नास्ति छ. ७. अर्हन्तः मूको. ८. यमि° छ छपं. ९. तदे° मूको. १०. °नामिहे मूको. ११. हवनीयानि वि° छपं. १२-१२. नास्ति वि° छप. १३. °नः अपि छ छप; °ना य: वि°.

अर्ध । स्म । यस्य॑ । वेष॑णे । स्वेद॑म् । पथिषु॑ । जुह्व॑ति ।
अभि । ईम् । अह॑ । स्वऽजेन्य॑म् । भूम॑ । पृष्ठाऽइ॑व । रुरुहुः ॥ ५ ॥

वेङ्कट० अत्र[1] जुह्वति मृत्यो[2] मार्गेषु स्थिता वनस्पतय दाहरपस्य व्याप्तौ स्वदङ्गम् । [3]तेन ते[3] दाधा[4] अपि स्वभूतजायमानपदार्थम्[5] भूमिमेतां पुरस्तादभ्यारोहन्त्येव[6], यथा अश्वपृष्ठानि अश्वारोहा ॥ ५ ॥

[7]इति तृतीयाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[7] ॥

यं मर्त्यः॑ पुरु॒स्पृहं॑ वि॒दद्विश्व॑स्य धा॒यसे॑ ।
प्र स्वाद॑नं पितू॒नामस्त॑तातिं चिदा॒यवे॑ ॥ ६ ॥

यम् । मर्त्यः॑ । पुरु॒ऽस्पृह॑म् । वि॒दत् । विश्व॑स्य । धा॒यसे॑ ।
प्र । स्वाद॑नम् । पि॒तूनाम् । अस्त॑ऽतातिम् । चि॒त् । आ॒यवे॑ ॥ ६ ॥

वेङ्कट० यम् मनुष्या[8] बहुभिः स्पृहणीयं प्र विन्दन्ति[9] विश्वस्य धारणार्थम्, अन्नानां स्वादुकर्तारं च मनुष्याय निरुक्तधनम् दत्तधनम् । उत्तरत्र सम्बन्धः ॥ ६ ॥

स हि ष्मा॒ धन्वाक्षि॑तं॒ दाता॒ न दात्या प॒शुः ।
हिरि॑श्मश्रुः॒ शुचि॑दन्नृ॒भुरनि॑भृष्टतविषिः ॥ ७ ॥

स । हि । स्म॒ । धन्व॑ । आऽक्षि॑तम् । दाता॑ । न । दाति॑ । आ । प॒शुः ।
हिरि॑ऽश्मश्रुः । शुचि॑ऽदन् । ऋ॒भुः । अनि॑भृष्टऽतविषिः ॥ ७ ॥

वेङ्कट० स हि खलु निरुदक देशम् वनस्पतिभिः अधिष्ठितं छेत्ता इव आ छिनत्ति, पशु इत्यग्निमाह, हरितवर्णज्वालः शुचिदन् दीप्यमान अनपधृष्यबलः[10] ॥ ७ ॥

शुचि॑: ष्म॒ यस्मा॑ अत्रि॒वत्प्र स्वधि॑तीव॒ रीय॑ते ।
सु॒षूर॑सूत मा॒ता क्रा॒णा यदा॑नशे॒ भग॑म् ॥ ८ ॥

शुचि॑: । स्म॒ । यस्मै॑ । अ॒त्रि॒ऽवत् । प्र । स्वधि॑तिऽइव । रीय॑ते ।
सु॒ऽसूः । अ॒सू॒त॒ । मा॒ता । क्रा॒णा । यत् । आ॒न॒शे । भग॑म् ॥ ८ ॥

वेङ्कट० शुचिः भानुः यस्मै अत्रये अक्षीणमुक्ता भूमिम् परशुरिव छिन्दन् प्र गच्छति । तम् सुषू माता ओषधि असूत कर्म कुर्वाणा । यत् पुनः भजनीयं पुत्रं व्याप्तवती तस्मात् सुषूरिति[11] ॥ ८ ॥

---

१ अप लप २ मृत्या वि[2] ३-३ त तेन वि[3] लप तेन ल ४ दग्धा ल लप ५ [5]माना पार्थं वि[5] ६ [6]ह्वाभ्याहारो॰न्ति ल लप ७-७ नास्ति मूको ८ [8]ष्य लप ९ विदन्ति ल लप १० अनपधृष्य॰ वि[10] ११ सुष्टुतीति वि[11] लप सुषतिरिति ल

आ यस्ते सर्पिरासुतेऽग्ने शमस्ति धायसे ।
ऐषु द्युम्नमुत श्रव आ चित्तं मर्त्येषु धाः ॥ ९ ॥

आ । यः । ते । सर्पिःऽआसुते । अग्ने । शम् । अस्ति । धायसे ।
आ । एषु । द्युम्नम् । उत । श्रवः । आ । चित्तम् । मर्त्येषु । धाः ॥ ९ ॥

वेङ्कट० आ धेहि तम् यः ते हे सर्पिरासुते!, सर्पिर्यस्मिन् आसूयते हूयते, अग्ने! [1]शमयिता रोगाणाम् अस्ति[1] रश्मिः तद्धारणार्थम् । तथा एषु द्योतमानम् अन्नं [2]त्वदीयं चित्तम्[2] च आ धेहि मनुष्येषु ॥९॥

इति चिन्मन्युमध्रिजस्त्वादातमा पशुं ददे ।
आदग्ने अपृणतोऽत्रिः सासह्याद् दस्यूनिषः सासह्यान्नॄन् ॥ १० ॥

इति । चित् । मन्युम् । अध्रिजः । त्वाऽदातम् । आ । पशुम् । ददे ।
आत् । अग्ने । अपृणतः । अत्रिः । ससह्यात् । दस्यून् । इषः । ससह्यात् । नॄन् ॥ १० ॥

वेङ्कट० इति चित् पूज्यम् अत्रिकुलजातः[3] । छान्दसो धकारः[4] । त्वया दत्तम् पशुन् आ ददे । अनन्तरम् अग्ने! अप्रयच्छतो दस्यून् अयमात्रेयः इषः ऋषिः अभिभवतु[5] मनुष्यान् ॥ १० ॥

[6]इति तृतीयाष्टके अष्टमाध्याये पञ्चविंशो वर्गः[6] ॥

[८]

[7]इष आत्रेय ऋषिः । अग्निर्देवता । जगती छन्दः[7] ।

त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये सहस्कृत ।
पुरुश्चन्द्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यम् ॥ १ ॥

त्वाम् । अग्ने । ऋतऽयवः । सम् । ईधिरे । प्रत्नम् । प्रत्नासः । ऊतये । सहःऽकृत ।
पुरुऽचन्द्रम् । यजतम् । विश्वऽधायसम् । दमूनसम् । गृहऽपतिम् । वरेण्यम् ॥ १ ॥

वेङ्कट० त्वाम् अग्ने![8] यज्ञमिच्छमानाः सम् दीपयन्ति प्रत्नम् प्रत्नाः रक्षणार्थम् हे सहसा कृत! बहूनां हर्षकम् यजनीयम् विश्वस्य धर्तारम् दममनसम् गृहपतिम् वरणीयम् ॥ १ ॥

त्वामग्ने अतिथिं पूर्व्यं विशः शोचिष्केशं गृहपतिं नि षेदिरे ।
बृहत्केतुं पुरुरूपं धनस्पृतं सुशर्माणं स्ववसं जरद्विषम् ॥ २ ॥

---

१-१. °ताद्धरणाति वि°; वाधारणार्थं स्व °ति ह रूपं. २-२. त्वदीयमिदं मूको. ३. °तम् मूको. ४ धकारः वि°. ५. भवतु वि°; भिभ° ह. ६-६. नास्ति मूको. ७. नास्ति रूपं.

त्वाम् । अग्ने । अतिथिम् । पूर्व्यम् । विशः । शोचिःऽकेशम् । गृहऽपतिम् । नि । सेदिरे ।
बृहत्ऽकेतुम् । पुरुऽरूपम् । धनऽस्पृतम् । सुऽशर्माणम् । सुऽअवसम् । जरत्ऽविषम् ॥ २ ॥

वेङ्कट० 'त्वाम् अग्ने!' 'अतिथिम् मुख्यं' ज्वालाकेशम् गृहपतिम् मनुष्याः प्रतिनिषीदन्ति महत्प्रज्ञानं बहुरूपम् धनस्य स्पष्टारम् सुसुखम् स्वन्नम् जीर्णदाहकम् ॥ २ ॥

त्वाम॑ग्ने॒ मानु॑षीरीळते॒ विशो॑ होत्रा॒विदं॒ विवि॑चिं रत्न॒धात॑मम् ।
गुहा॒ सन्तं॑ सुभग वि॒श्वद॑र्शतं तुविष्व॒णसं॑ सु॒यजं॑ घृत॒श्रिय॑म् ॥ ३ ॥

त्वाम् । अ॒ग्ने॒ । मानु॑षीः । ई॒ळ॒ते॒ । विशः॑ । हो॒त्रा॒ऽविद॑म् । विवि॑चिम् । र॒त्न॒ऽधात॑मम् ।
गुहा॑ । सन्त॑म् । सु॒ऽभ॒ग॒ । वि॒श्वऽद॑र्शतम् । तु॒वि॒ऽस्व॒नस॑म् । सु॒ऽयज॑म् । घृ॒त॒ऽश्रिय॑म् ॥ ३ ॥

वेङ्कट० त्वाम् अग्ने! मनुष्यसम्बन्धिन्यः विशः स्तुवन्ति स्तोत्रविदम् विवेचकम् रत्नानां धातृतमम् 'अग्निम् अरणिषु' गुहायां वर्तमानम् हे सुभग! विश्वस्य दर्शनीयं महास्वनं सुष्ठु यष्टारम्, यस्त्वं घृतं श्रयसि' ॥ ३ ॥

त्वाम॑ग्ने ध॒र्णसिं॑ वि॒श्वधा॑ व॒यं गी॒र्भिर्गृ॒णन्तो॒ नम॒सोप॑ सेदिम ।
स नो॑ जुषस्व समिधा॒नो अ॑ङ्गिरो दे॒वो मर्त॑स्य य॒शसा॑ सु॒दीति॑भिः ॥ ४ ॥

त्वाम् । अ॒ग्ने॒ । ध॒र्णसि॑म् । वि॒श्वधा॑ । व॒यम् । गीः॒ऽभिः । गृ॒णन्तः॑ । नम॑सा । उप॑ । से॒दि॒म॒ ।
सः । नः॒ । जु॒ष॒स्व॒ । स॒म्ऽइ॒धा॒नः । अ॒ङ्गि॒रः॒ । दे॒वः । मर्त॑स्य । य॒शसा॑ । सु॒दीति॑ऽभिः ॥ ४ ॥

वेङ्कट० त्वाम् अग्ने! धारयितारं सर्वदा वयम् गीर्भिः स्तुवन्तः नमस्कारेण च उप सेदिम । सः त्वम्[5] अस्मान् सेवस्व समिध्यमानः हे अङ्गिरसाम् एक! देवः मनुष्यस्य यशोऽपि शोभनदीप्तिः ॥ ४ ॥

त्वम॑ग्ने पुरु॒रूपो॑ वि॒शेवि॑शे॒ वयो॑ दधासि प्र॒त्नथा॑ पुरुष्टुत ।
पु॒रूण्यन्ना॒ सह॑सा॒ वि रा॑जसि॒ त्विषिः॒ सा ते॑ तित्विषा॒णस्य॒ नाधृषे॑ ॥ ५ ॥

त्वम् । अ॒ग्ने॒ । पु॒रु॒ऽरूपः॑ । वि॒शेऽवि॑शे । वयः॑ । द॒धा॒सि॒ । प्र॒त्नऽथा॑ । पु॒रु॒ऽस्तु॒त॒ ।
पु॒रूणि॑ । अन्ना॑ । सह॑सा । वि । रा॒ज॒सि॒ । त्विषिः॑ । सा । ते॒ । ति॒त्वि॒षा॒णस्य॑ । न । आ॒ऽधृषे॑ ॥ ५ ॥

वेङ्कट० 'त्वम् अग्ने!' बहुरूपः मनुष्याय अन्नं प्रयच्छसि प्रत्न इव पित्रादिभिः पुरुष्टुत!' बहून्यन्नानि बलेन नाशयन् वि राजसि । दीप्तिः सा तव दीप्यमानस्य न धर्षयितुं शक्यते ॥ ५ ॥

---

१-१ नास्ति वि॰. २-२. °मिमुख्य मूको. ३-३. °भिरणे° मूको. ४. °ति मूको. ५. नास्ति मूको. ६-६. °नास्ति वि°. ७. स्तुवः वि°; स्तुत ल क°.

त्वाम॑ग्ने स॒मिधा॑नं यविष्ठ दे॒वा दू॒तं च॑क्रिरे हव्य॒वाह॑नम् ।
उ॒रु॒ज्रय॑सं घृ॒तयो॑नि॒माहु॑तं त्वे॒षं चक्षु॑र्दधिरे चोद॒यन्म॑ति ॥ ६ ॥

त्वाम् । अ॒ग्ने॒ । स॒म्ऽइधा॑नम् । य॒वि॒ष्ठ॒ । दे॒वाः । दू॒तम् । च॒क्रि॒रे॒ । ह॒व्य॒ऽवाह॑नम् ।
उ॒रु॒ऽज्रय॑सम् । घृ॒तऽयो॑निम् । आऽहु॑तम् । त्वे॒षम् । चक्षुः॑ । द॒धि॒रे॒ । चो॒द॒यत्ऽम॑ति ॥ ६ ॥

वेङ्कट० त्वाम् अग्ने! समिध्यमानं हे युवतम! देवाः दूतम् कृतवन्तः हविषां वोढारम्। महावेगं घृतस्थानम् आहुतम् दीप्यमानम् चक्षुः दधिरे चोदयन्मति [1]'स्तोत्रं यस्य यजमानस्य'[1] चोदयति ॥ ६ ॥

त्वाम॑ग्ने प्र॒दिव॒ आहु॑तं घृ॒तैः सु॑म्ना॒यवः॑ सु॒ष॒मिधा॒ समी॑धिरे ।
स वा॑वृधा॒न ओष॑धीभिरुक्षि॒तो॒३॒॑ऽभि ज्रयां॑सि॒ पार्थि॑वा॒ वि ति॑ष्ठसे ॥ ७ ॥

त्वाम् । अ॒ग्ने॒ । प्र॒ऽदिवः॑ । आऽहु॑तम् । घृ॒तैः । सु॒म्न॒ऽयवः॑ । सु॒ऽस॒मिधा॑ । सम् । ई॒धि॒रे॒ ।
सः । व॒वृ॒धा॒नः । ओष॑धीभिः । उ॒क्षि॒तः । अ॒भि । ज्रयां॑सि । पार्थि॑वा । वि । ति॒ष्ठ॒से॒ ॥ ७ ॥

वेङ्कट० त्वाम् अग्ने! पुराणम् घृतैः आहुतम् सुखमिच्छमानाः शोभनया समिधा [2]'सम् ईधिरे'[2]। सः[3] वर्धमानः ओषधीभिः उक्षितः पार्थिवानि यज्ञमानानां प्रज्ञानानि अभि विविधं तिष्ठसि ॥ ७ ॥

[4]इति तृतीयाष्टके अष्टमाध्याये षड्विंशो वर्गः[4] ॥

मन्त्रार्थदीपिका शेषे[5] तृतीयस्याष्टकस्य च ।

कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥

इति वेङ्कटमाधवार्यविरचिते ऋक्संहिताव्याख्याने तृतीयाष्टके अष्टमोऽध्यायः ॥

—॥—

इति ऋग्वेदे सभाष्ये तृतीयाष्टके अष्टमोऽध्यायः ॥

तृतीयाष्टकः समाप्तः ॥



१-१. यस्मै यस्य यजमानस्य मूको; ... प्रस्तावः. २-२. नास्ति मूको. ३. तं मूको.
४. वेवे छ.

## अथ चतुर्थोऽष्टकः।

वेङ्कट०

चतुर्थोऽथाष्टकस्तस्मिन्[1] अध्यायादिषु वक्ष्यते।
शब्देष्वावर्तमानेषु यद्वाच्यमिह वैदिकैः॥ १॥

समानशब्दा आवृत्ता भवन्ति पादपूरणाः[2]।
पर्यायेषु तु निर्ब्रूयात् इच्छयाऽन्यतमं बुधः॥ २॥

अप्रसिद्धः प्रसिद्धश्च संगच्छेते यदि क्वचित्।
तत्राप्रसिद्धं निर्ब्रूयात् प्रसिद्धमिति स्थितिः॥ ३॥

'आपते स्वध्वरश्चोऽध्वरश्चः'[3] इत्यत्र सद्गताः।
अर्वन्तमाशुं निर्ब्रूयात् न त्वहर्षं सार्वलौकिकम्॥ ४॥

अपि 'विश्वेषु ही(हि[4] इ)त्यत्रां सुनरीत्यादिषु[5] त्रिषु।
अपसो नामधेयेषु निर्ब्रूयादिच्छया बुधः॥ ५॥

नापेक्षन्ते[6] निर्वचनं निपातेषु यथा नरः।
तथैव पादभेदेऽपि केचिदेवच्छन्ति निर्वचः॥ ६॥

नामाख्यातोपसर्गार्थं निपातानां तथैव च।
पादच्छेदेषु[7] दृश्यन्ते बहवः पादपूरणाः[8]॥ ७॥

'सहसो जातवेदसं विप्रं न जातवेदसम्'[9]।
अन्यत्रत्रोभयोरर्थौ[10] द्वयोरर्थोऽत्र कीर्त्यते॥ ८॥

जातप्रज्ञं विप्रमिव जातप्रज्ञमितीदृशी।
वचनव्यक्तिराश्रित्य तत्राभ्यावृत्त्यपेक्षिता॥ ९॥

नैवात्र युज्यते यस्मात् कविताऽत्र प्रतीयते।
'यदिन्द्राग्नी अवमस्याम्'[11] इत्यृचोः कविता यथा॥ १०॥

एवमत्रापि कविता विपर्यासात् प्रतीयते।
ननु शब्दातिरेकोऽत्र पुनरुक्त्या प्रतीयते॥ ११॥

---

१. °तुर्थोऽ° वि[1] लपं. २. पद° वि[1] ल. ३. °रञ्च लपं; तु. मा २९,९.. ४. ऋ १,४८,१०. ५. धनरीत्या° ल. ६. °क्षन्ते वि[1] क लपं. ७. ऋ १,१२७-१२९. ८. °पूरणा वि[1] लपं; पूरणाः सह वेङ्कट. ९. ऋ १,१२७,१. १०. नान्यत्रोऽभ° वि[1] लपं. ११. ऋ १,१०८,९.

[1]आ द्वाभ्यां हरिभ्यामिन्द्र याहि(हि[2] इ)त्यादौ यथा तथा ।
सत्यर्थे कविता [3]'तस्मात् नासवीति[2]' विपश्चितः ॥ १२ ॥

एवं च पूरणः पादो [4]'नि स्थिराणि चिदोजसा[4]' ।
अभ्यासाधनु चात्रापि भूयानर्थः प्रतीयते ॥ १३ ॥

नेति सुवन्त्यप्रतीतेः पादोऽयं पूरणस्ततः ।
ऋषिप्रयुक्तो वाकृत्तिर्नान्यत्र[5] च[6] दृश्यते ॥ १४ ॥

[6]अवा कृधा हरिभ्ये(भ्या[7] इ)ति ऋचस्तत्र निदर्शनम् ।
परुच्छेपस्य[8] तमपश्यतमद्राक्षीद्वनानतः ॥ १५ ॥

ततः पितृवदभ्यासस्तत्सुतस्यापि[9] युज्यते ।
परुच्छेपोऽपि मनु च भावर्तयति तद्यथा ॥ १६ ॥

[9]उभे पुनामि रोदसी[10] '[10]पिवार्कमृष्टिमम्भृणम्[10]' ।
तस्माच्छन्दस्त्वभावोऽपमिति पूर्वस्य आगमः ॥ १७ ॥

ऊर्ध्वं जगत्याश्छन्दांसि पूर्यन्ते सदैः पदैः ।
तानि द्रष्टुमशक्यानि पूर्वदैप्यांत् यावन्त्यतः ॥ १८ ॥

तैरेव शब्दैः पूर्यन्ते प्रायेणेति विनिश्चयः ।
वामदेवो मण्डलादावृषिस्तथो[11] ददर्श ताः ॥ १९ ॥

अहि [11]तमादित्रगतीम् अर्थभेदाय प्रयुज्यते ।
न पादपूरणाशङ्का[11] तत्र कोऽयं परिश्रमः ॥ २० ॥

पारुच्छेपीषु[11] सर्वासु शक्यं द्वैरूप्यमञ्जसा ।
जातवेदःशब्द इव न प्रदर्शयितुं बुधैः ॥ २१ ॥

यथाकथंचित् द्वैविध्यं प्रतिपादयितुं बुधाः[13] ।
नेच्छन्ति तेन सर्वेऽमी भवन्ति पादपूरणाः[14] ॥ २२ ॥

१. ऋ २,१८,४. १-२. °स्मादसनी° वेंकम; °स्मात् न सनी° वि[1]. ३. ऋ १,१२७,४. ४. °नेत्यन्यत्र वेंकम. ५. द्र. वेंकम. ६. ऋ ९,१११,३. ७. °च्छेप वि[1]; पारुच्छे° सर्व. ८. °पितृपदत्वात्तत्सुतस्यापि° वि[1]; °तत्सुतस्या° सर्व. ९. ऋ १,१३३,१. १०. ऋ १,१३३,५. ११. ऋ ४,१,१-३ द्र. ११-१२. जगती वर्तमानानामवर्तमानानामर्थभेदाय प्रयुज्यते पादपूरणात् शङ्का वि[1]; जगती वर्तमानानामवर्तमानानामर्थभेदाय प्रयुज्यते पादपूरणात् शङ्का सर्व. १३. °षीषु ल. १४. बुधः स वेंकम. १५. °ण° वि[1] ल°

समेयार्थं ब्रुवाणानां मधनव्यक्तयः पृथक् ।
मन्त्रेषु केषुचित्[1] सन्ति केषुचित्[2] न सन्ति[3] च[4] ॥ २३ ॥

इच्छन्ति काव्यवद् वृद्धा न वेदे बहुभाषणम् ।
तस्माच्छन्दस्य तस्यार्थं समेवाहुर्विपश्चितः ॥ २४ ॥

पारुच्छेपोर्क्चः[5] सर्वा यदा पश्यति पण्डितः ।
न तदा प्रतिपाद्योऽस्य सोऽयमर्थं इति स्थितिः ॥ २५ ॥

वेदमुद्रामजानन्तः कुतर्कंगतमानसाः ।
आपाततो भाषमाणास्ते हास्या वैदिकैरिह ॥ २६ ॥

अभ्यासादाह भूयांसमर्थं यस्कस्कुलोद्भवः[6] ।
अन्यानर्थान्[7] न तु सूते व्याख्यातारो वदन्ति यान्[8] ॥ २७ ॥

दर्शनीयो दर्शनीय इत्यभ्यासात् प्रतीयते ।
भूयानर्थोऽत्यन्तमिति निर्वाहोऽयं च केषुचित् ॥ २८ ॥ इति ।

[ ९ ]

[9]गय आत्रेय ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः, पञ्चमीसप्तम्यौ पङ्क्ती[9] ।

त्वामग्ने हविष्मन्तो देवं मर्तास ईळते ।
मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥ १ ॥

त्वाम् । अग्ने । हविष्मन्तः । देवम् । मर्तासः । ईळते ।
मन्ये । त्वा । जातऽवेदसम् । सः । हव्या । वक्षि । आनुषक् ॥ १ ॥

वेङ्कट० गयः[10] । त्वाम् अग्ने । हविःसम्भरणानन्तरं देवम्[11] मनुष्याः स्तुवन्ति । हविर्वहनाय सामिधेनीभिः[12] अहं[13] त्वामेव स्तौमि जातप्रज्ञम् । सः त्वं हव्यानि वह अनुपक्तम् ॥ १ ॥

मुद्गल० पञ्चमे[14] मण्डले 'त्वामग्ने हविष्मन्तः' इति सप्तर्चं नवमं सूक्तम् । हे अग्ने! त्वाम् देवम् दीप्यमानम् हविष्मन्तः होमसाधनद्रव्यसमेताः मर्तासः मर्त्याः ईळते स्तुवन्ति । अहं च जातवेदसम् जातं वेदो धनं यस्मादसौ जातवेदाः तम् एवंविधम् त्वा त्वाम् मन्ये स्तौमि । सः त्वम् हव्या हव्यवाहनसाधनानि हवींषि आनुषक् निरन्तरतया अनुषक्तं यथा तथा वक्षि वहसि ॥ १ ॥

---

१. येनचित् वि॰ ब्रवं. २. केषुचित् वि॰ लपं. ३. सन्ति वि॰ लपं. ४. नास्ति वि॰ लपं. ५. तनः वि॰ लपं. ६. °स्क वि॰ पैञ्जल; द्र. निरु १०,४२. ७. अन्यार्थं वेङ्कट. ८. यम् वेङ्कट. ९-९. नास्ति मूको. १०. नास्ति वि॰. ११. देव मूको. १२. सामिधनी° वि॰; सामधेनी° ल लपं. १३. नास्ति लपं. १४. °पौञ्चमाय । नमः पञ्च° मूको.

अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः ।
सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥ २ ॥

अग्निः । होता । दास्वतः । क्षयस्य । वृक्तऽबर्हिषः ।
सम् । यज्ञासः । चरन्ति । यम् । सम् । वाजासः । श्रवस्यवः ॥ २ ॥

वेङ्कट० अग्निः होता भवति, दास्वतः[1] यजमानस्य स्तीर्णबर्हिषः, यम् अग्निं यज्ञाः यज्ञाधारा वाजाश्च[2] यजमानानाम् अन्नमिच्छमानानाम् अन्नमिच्छमानाः सङ्गच्छन्ति ॥ २ ॥

मुद्गल० यम् अग्निम् यज्ञासः सर्वे यज्ञाः सम् चरन्ति संहिता गच्छन्ति । श्रवस्यवः यजमानस्य कीर्तिं सम्पादयन्तः वाजासः हवींषि यम् अग्निम् सम् चरन्ति प्राप्नुवन्ति । एवंविशिष्टः अग्निः दास्वतः हविष्प्रक्षेपणादिदानवतः वृक्तबर्हिषः वृक्तानि बर्हींषि दर्भा येनासौ वृक्तबर्हिः तस्य क्षयस्य क्षियन्ति[3] निवसन्ति अस्मिन् स्वर्गसाधनफलानि इति क्षयः तस्य[4] यजमानस्य यागार्थम् होता देवानामाह्वाता भवति ॥ २ ॥

उत स्म यं शिशुं यथा नवं जनिष्टारणी ।
धर्तारं मानुषीणां विशामग्निं स्वध्वरम् ॥ ३ ॥

उत । स्म । यम् । शिशुम् । यथा । नवम् । जनिष्ट । अरणी इति ।
धर्तारम् । मानुषीणाम् । विशाम् । अग्निम् । सुऽअध्वरम् ॥ ३ ॥

वेङ्कट० यथा काचित् नवतरं पुत्रं जनयति, एवम् यम् अरणी अजनयताम्[7]। उपमानेन समन्वयात् जनिष्ट इत्येकवचनमपि भवति । मनुष्यसम्बन्धिनीनां प्रजानाम् धर्तारम् अग्निम् सुयज्ञं पूर्वस्यान्वयः ॥३॥

मुद्गल० उत स्म अपि च मानुषीणाम् मनोर्जातानाम् विशाम् प्रजानाम् धर्तारम् अहोरात्राग्निपाक-द्वारेण शरीरधातूनां पोषकम् स्वध्वरम् शोभनयज्ञम् यम् अग्निम् अरणी द्वे अरणी नवम् नूतनम् शिशुम् यथा अपत्यमिव जनिष्ट अजनिषाताम् ॥ ३ ॥

उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणाम् ।
पुरू यो दग्धासि वनाऽग्ने पशुर्न यवसे ॥ ४ ॥

उत । स्म । दुःऽगृभीयसे । पुत्रः । न । ह्वार्याणाम् ।
पुरु । यः । दग्धा । असि । वना । अग्ने । पशुः । न । यवसे ॥ ४ ॥

वेङ्कट० अपि च दावरूपस्त्वं[8] दुर्ग्रहमात्मानम् इच्छसि, "तथा गच्छतां" अश्वानामिव पुत्रो युवा । पुरूणि यः दग्धा भवसि अरण्यानि हे अग्ने! । यथा[9] पशुः यवसे विसृष्टः सर्वं यवसं विनाशयति ॥४॥

१. दानवत- दानवतः वि॰ २. वाजश्च मूको. ३. क्षयन्ति मूको. ४. यस्य मूको. ७-७. अजनयताम् तस्य मूको. ८. °नीय ल. ९. °निव यथा वि॰ लपं.

मुद्गल० उत स्म अपि च ह्वार्याणाम् [1]कुटिलं गच्छतां[1] सर्पाणाम् पुत्रः न पुत्र इव बालसर्प इव दुर्गृभीयसे दुःखेन गृह्यसे । हे अग्ने यः त्वम् पुरु पुरूणि वना वनानि दग्धा असि दाहको भवसि । कथमिव । यवसे तृणे पशुः न पशुरिव । अत्यन्तक्षुधार्तः पशुस्तृणविषये विसृष्टः सन् यथा सर्वं भक्षयति तद्वदित्यर्थः ॥ ४ ॥

अध॑ स्म॒ यस्या॒र्चयः॑ स॒म्यक् सं॒यन्ति॑ धू॒मिनः॑ ।
यदी॒मह॑ त्रि॒तो दि॒व्युप॒ ध्माते॑व॒ धम॑ति॒ शिशी॑ते ध्मा॒तरी॑ यथा ॥ ५ ॥

अध॑ । स्म॒ । यस्य॑ । अ॒र्चयः॑ । स॒म्यक् । स॒म्ऽयन्ति॑ । धू॒मिनः॑ ।
यत् । ई॒म् । अह॑ । त्रि॒तः । दि॒वि । उप॑ । ध्माता॑ऽइव । धम॑ति । शिशी॑ते । ध्मा॒तरि॑ । य॒था ॥५॥

वेङ्कट० धमनानन्तरमेव यस्य अर्चयः समीचीनं संगच्छन्ते धूमयुक्तस्य । यदीममेवाग्निम् त्रिस्थानः त्रयाणां[1] अग्न्यादीनाम् एको वायुः अन्तरिक्षे, यथा अयस्कारो लोहं भस्त्रयोपधमति[1] एवम् उप धमति तीक्ष्णीकरोति च यथाऽयस्कारे ॥ ५ ॥

मुद्गल० अध स्म अपि च धूमिनः धूमवतः यस्य अग्नेः अर्चयः सम्यक् संयन्ति सर्वतः प्राप्नुवन्ति । त्रितः त्रिषु स्थानेषु व्याप्तः दिवि अन्तरिक्षे यत् यदा ईम् एनमग्निमिमम् उप धमति उपपर्धयति[3] तदा ज्वालाः सर्वतो निर्गच्छन्तीत्यर्थः । कथमिव ध्माता इव कर्मारो यथा भस्त्रादिभिरग्निं संवर्धयति तद्वत् । किञ्च ध्मातरि यथा ध्मातृसमीपे विद्यमानोऽग्निस्तेन ध्मायमानं आत्मानम् शिशीते तीक्ष्णीकरोति तद्वत् स्वयम् एव स्वात्मानं तीक्ष्णीकरोतीत्यर्थः । अह इति पादपूरणः ॥ ५ ॥

तवा॒हम॑ग्न ऊ॒तिभि॑र्मि॒त्रस्य॑ च॒ प्रश॑स्तिभिः ।
द्वे॒षो॒युतो॒ न दु॑रि॒ता तु॒र्याम॒ मर्त्या॑नाम् ॥ ६ ॥

तव॑ । अ॒हम् । अ॒ग्ने॒ । ऊ॒तिऽभिः॑ । मि॒त्रस्य॑ । च॒ । प्रश॑स्तिऽभिः ।
द्वे॒षः॒ऽयुतः॑ । न । दुः॒ऽइ॒ता । तु॒र्याम॑ । मर्त्या॑नाम् ॥ ६ ॥

वेङ्कट० तव अहम् अग्ने! रक्षणैः मित्रस्य च देवस्य स्तुतिभिः द्वेषसः मिश्रयितॄन् शत्रून् इव दुःखानि [4]अतितरेयम्, यान्येतानि मर्त्यानां[4] दृश्यन्ते । यथा परोक्षोपक्रमाः प्रत्यक्षापवर्गा मन्त्रा भवन्त्येवमेकवचनबहुवचनयोरपि द्रष्टव्यमिति ॥ ६ ॥

मुद्गल० हे अग्ने अहम् मित्रस्य सर्वेषां मित्रभूतस्य तव ऊतिभिः रक्षाभिः प्रशस्तिभिः च अस्मत्कृतैः स्तोत्रैः च मर्त्यानाम् शत्रुभूतानां मनुष्याणाम् दुरिता च दुरितानि तत्कर्तृकाणि पापसाधनकर्माणि द्वेषोयुतः न द्वेषयुक्तान् शत्रूनिव अहम् तुर्याम तरेयम् ॥ ६ ॥

---

१-१. कुटिलगन्त्रॄ° मूको. २. त्रयाणां वा ल. ३. °त्पादय° ल. ४. 'भैन्ते मूको.
५-५. 'यमान्येतानि मर्त्यान् वि' एपं; °वेय यान्ये' ल.

तं नो॑ अग्ने अ॒भी नरो॑ र॒यिं स॑हस्व॒ आ भ॑र ।
स क्षे॑पयत् स पो॑षयद् भु॒वद्वाज॑स्य सा॒तय॑ उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥ ७ ॥

तम् । नः॒ । अ॒ग्ने॒ । अ॒भि । नरः॑ । र॒यिम् । स॒ह॒स्वः॒ । आ । भ॒र॒ ।
सः । क्षे॒प॒य॒त् । सः । पो॒ष॒य॒त् । भु॒व॒त् । वाज॑स्य । सा॒तये॑ । उ॒त । ए॒धि॒ । पृ॒त्ऽसु । नः॒ । वृ॒धे ॥ ७ ॥

वेङ्कट० तम् अस्मभ्यम् अग्ने! अभि आ भर नेता[1] त्वं हे बलवन्! रयिम्। सः रयिः शत्रून् क्षपयतु, पोषयतु च अस्मान्, भवतु चान्नस्य भक्षणाय, अपि च सङ्ग्रामेषु भव अस्माकं वर्धनाय ॥ ७ ॥

मुद्गल० हे अग्ने! सहस्वः बलवन्! नरः हविषां 'नेता त्वम्' नः अस्माकम् तम् रयिम् लोके प्रसिद्धं पश्वादिलक्षणं धनम् अभि आ भर आभिमुख्येनाहर। पूर्वोक्तः सः अग्निः क्षेपयत् अस्मदीयान् शत्रून् क्षेपयतु। सः अग्निः पोषयत् अस्मान् पोषयतु। वाजस्य अन्नस्य सातये लाभाय भुवत् भवतु। उत अपि च हे अग्ने! पृत्सु युद्धेषु नः अस्माकम् वृधे समृद्धये एधि भव ॥ ७ ॥

इति चतुर्थाष्टके प्रथमाध्याये प्रथमो वर्गः ॥

[ १० ]

अग्न॒ ओजि॑ष्ठ॒मा भ॑र द्यु॒म्नम॒स्मभ्य॑मध्रिगो ।
प्र नो॑ रा॒या परी॑णसा॒ रत्सि॒ वाजा॑य॒ पन्था॑म् ॥ १ ॥

अग्ने॑ । ओजि॑ष्ठम् । आ । भ॒र॒ । द्यु॒म्नम् । अ॒स्मभ्य॑म् । अ॒ध्रि॒गो॒ इत्य॑ध्रिऽगो ।
प्र । नः॒ । रा॒या । परी॑णसा । रत्सि॑ । वाजा॑य । पन्था॑म् ॥ १ ॥

वेङ्कट० अग्ने! बलवत्तमम् आ भर अन्नम् अस्मभ्यम् हे अप्रतिगमन!, प्र रत्सि अस्माकं धनेन महता सहायाय पन्थानम्[2] ॥ १ ॥

मुद्गल० 'अग्न ओजिष्ठम्' इति सप्तर्चं दशमं सूक्तम्। आत्रेयो गय ऋषिः। चतुर्थीसप्तम्यौ पङ्क्ती, शिष्टा अनुष्टुभः। अग्निर्देवता।

हे अग्ने! ओजिष्ठम् बलवत्तमम् द्युम्नम् धनम् अस्मभ्यम् आ भर आहर। हे अध्रिगो अप्रतिगमन! अध्रयः अनिवारिता गावो रश्मयोऽस्येति सः अध्रिगुः। तस्य सम्बोधनम्। अस्माकम् परीणसा परितो व्यापकेन राया धनेन प्र प्रकर्षेण योजय। वाजाय अन्नलाभाय पन्थाम् पन्थानम् अन्नस्य मत्समीपप्राप्तिसाधनं मार्गम्' रत्सि कुरु ॥ १ ॥

---

१ १. नेतारः मूको. २. मार्गः मूको.

त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना ।
त्वे असुर्य१मारुहत् क्राणा मित्रो न यज्ञियः ॥ २ ॥

त्वम् । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना ।
त्वे इति । असुर्यम् । आ । अरुहत् । क्राणा । मित्रः । न । यज्ञियः ॥ २ ॥

वेङ्कट० त्वम् अस्माकम् हे अग्ने आश्चर्यभूत! प्रज्ञया बलस्य च महत्त्वेन[1] कर्माणि कुर्वाणः यज्ञियो भवसि । सखेव त्वयि असुराणां हन्तृरूपम्[2] [3]आ अरुहद्[3] हि ॥ २ ॥

मुद्गल० हे अग्ने अद्भुत! सर्वेषामाश्चर्यभूत! त्वम् नः अस्माकम् क्रत्वा कर्मणा अस्मत्कृतेन यज्ञादि-व्यापारेण प्रीतः सन् दक्षस्य बलस्य मंहना दानम्, कुर्विति शेषः । यतः कारणात् त्वे त्वयि असुर्यम् असुरत्वं बलम् आ अरुहत् आरूढम् अतः मित्रः न सूर्य इव यज्ञियः यज्ञार्हः त्वम् क्राणा यज्ञघातक-राक्षसापनोदनलक्षणानि कर्माणि कुर्वाणो भव ॥ २ ॥

त्वं नो अग्न एषां गयं पुष्टिं च वर्धय ।
ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः ॥ ३ ॥

त्वम् । नः । अग्ने । एषाम् । गयम् । पुष्टिम् । च । वर्धय ।
ये । स्तोमेभिः । प्र । सूरयः । नरः । मघानि । आनशुः ॥ ३ ॥

वेङ्कट० अस्माकम्[4] एषाम् त्वम् अग्ने! गृहम् पुष्टिम् च वर्धय । केषामित्याह—ये[5] स्तोतारः नरः स्तोत्रैः त्वत्तः धनानि प्रकर्षेण व्याप्नुवन् तेषामेषामिति ॥ ३ ॥

मुद्गल० हे अग्ने! त्वम् एषाम् नः स्वानकामाम् अस्माकम् गयम् गृहम् पुष्टिम् च गवादिविषयाम् वर्धय वृद्धिं प्रापय । ये लोके प्रसिद्धाः सूरयः लब्धवर्णाः नरः स्तोतारः मनुष्याः स्तोमेभिः स्तोत्रैः मघानि मंहनीयानि गवादिधनानि यथा प्र आनशुः प्राप्नुवन् तद्वद् वयमपीत्यर्थः ॥ ३ ॥

ये अग्ने चन्द्र ते गिरः शुम्भन्त्यश्वराधसः ।
शुष्मेभिः शुष्मिणो नरो दिवश्चिद् येषां बृहत् सुकीर्तिर्बोधति त्मना ॥ ४ ॥

ये । अग्ने । चन्द्र । ते । गिरः । शुम्भन्ति । अश्वऽराधसः ।
शुष्मेभिः । शुष्मिणः । नरः । दिवः । चित् । येषाम् । बृहत् । सुऽकीर्तिः । बोधति । त्मना ॥ ४ ॥

वेङ्कट० ये हे अग्ने[6] कान्त![6] तुभ्यं स्तुतिगिरः शोधयन्ति लब्धाश्वधनाः बलेन बलिनः । नरः येषाम् च कीर्तिः स्वयमेव दिवः अपि महद्भूता[7] प्रकाशते, तेषामेषां गयं पुष्टिमिति ॥ ४ ॥

१. मयो° मूको. २. हन्° वि° छपे. ३-३. अरुहद् मूको. ४. °नमपि वि°. ५. नास्ति छपे. ६. काम्यः मूको. ७. महद्भूता वि° छपे.

मुद्गल० हे अग्ने चन्द्र! प्राणिनामाह्लादकर! ये नरः ते गिरः त्वत्सम्बन्धिस्तोत्ररूपा वाचः शुम्भन्ति शोभमानाः कुर्वन्ति, ते अस्तराधसः अक्षयधना भवन्ति। किञ्च शुष्मिणः बलवन्तः सन्तः शुष्मेभिः बलैः शत्रुशोषकाः भवन्ति[1]। येषाम् 'त्वत्सम्बन्धि स्तोत्रं' कुर्वताम् दिवः चित् आकाशादपि बृहत् महती सुकीर्तिः भवति। एवंविधं त्वां नरः त्मना आत्मना स्वयमेव बोधति बोधयति ॥ ४ ॥

तव॒ त्ये अ॑ग्ने अ॒र्चयो॒ भ्राज॑न्तो यन्ति धृष्णु॒या।
परि॑ज्मानो॒ न वि॒द्युतः॑ स्वा॒नो रथो॒ न वा॑ज॒युः ॥ ५ ॥

तव॑। त्ये। अ॒ग्ने॒। अ॒र्चयः॑। भ्राज॑न्तः। य॒न्ति॒। धृ॒ष्णु॒ऽया।
परि॑ऽज्मानः। न। वि॒ऽद्युतः॑। स्वा॒नः। रथः॑। न। वा॒ज॒ऽयुः ॥ ५ ॥

वेङ्कट० तव इमे[2] अग्ने! अर्चयः च दीप्यमानाः यन्ति तमसो धर्षणशीलाः 'परितो गन्तारः'[3] विद्युतः इव स्वनवान् इव च रथः शत्रुभ्योऽन्नमिच्छन् ॥ ५ ॥

मुद्गल० हे अग्ने![4] धृष्णुया धृष्णवोऽत्यन्तप्रगल्भाः भ्राजन्तः दीप्यमानाः त्ये ते प्रसिद्धाः तव[5] अर्चयः त्वदीया रश्मयः यन्ति सर्वतो गच्छन्ति। कथम् इव। परिज्मानः परितो गन्त्र्यः सर्वतो व्याप्ताः विद्युतः न अचिरप्रभा इव। अनेन प्रकाशातिशयः उक्तः। स्वानः शब्दायमानः रथः न रथ इव। अनेनार्चिषां स्वनाधिक्यम् उक्तम्। वाजयुः न अन्नकाम इव अस्माभिः युद्धेषु शत्रुविजयाय यथा प्रवर्तते तद्वदित्यर्थः। अनेनाहुतिविषयोऽभिलाष उक्तः ॥ ५ ॥

नू नो॑ अग्न ऊ॒तये॑ स॒बाध॑सश्च रा॒तये॑।
अ॒स्माका॑सश्च सू॒रयो॒ विश्वा॒ आशा॑स्तरी॒षणि॑ ॥ ६ ॥

नु। नः॒। अ॒ग्ने॒। ऊ॒तये॑। स॒ऽबाध॑सः। च॒। रा॒तये॑।
अ॒स्माका॑सः। च॒। सू॒रयः॑। विश्वाः॑। आशाः॑। त॒री॒षणि॑ ॥ ६ ॥

वेङ्कट० हे अग्ने! क्षिप्रम् अस्माकं रक्षणाय भव, धनाभावात् बाधायुक्तस्य धनदानाय च। अस्मदीयाः [illegible] मेधाविनः पुत्राः सर्वाः दिशः तरितुं शक्ता भवन्तु ॥ ६ ॥

मुद्गल० हे अग्ने! नः अस्माकम् नु क्षिप्रम् ऊतये रक्षायै भव। सबाधसः च दारिद्र्यनिमित्तबाध-सहितस्य रातये धनानां दानाय च भव। किञ्च अस्माकासः आस्माकाः पुत्रमित्रादयः सूरयः स्तोतारः विश्वाः सर्वाः आशाः दिशः तरीषणि तासां तरणे[6] क्षमा भवन्तु ॥ ६ ॥

त्वं नो॑ अग्ने अङ्गिरः स्तु॒तः स्तवा॑न॒ आ भ॑र।
होत॑र्विभ्वा॒सहं॑ र॒यिं स्तो॒तृभ्यः॒ स्तव॑से च न उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥ ७ ॥

1. भवन्ते मूको. 2-2. ॰रिमानि मूको. 3. मे वि॰ ख्यं. 4-4. परिगन्तारः ख्यं; परिगन्तो [illegible] वि॰.
5. नास्ति मूको. 6. [illegible] च मूको. 7. ऐते मूको.

त्वम् । नः । अग्ने । अङ्गिरः । स्तुतः । स्तवानः । आ । भर ।
होतः । विभ्वऽसहम् । रयिम् । स्तोतृऽभ्यः । स्तवसे । च । नः । उत । एधि । पृत्ऽसु । नः । वृधे ॥७॥

वेङ्कट० त्वम् अस्मभ्यम् हे अग्ने अङ्गिरसाम् एक! स्तुतः स्तूयमानश्चाहर रयिम् महतामभिभवितारम्, तथा स्तोतृभ्यः अस्मभ्यं बलार्थं च भव होतः! । उत एधि पृत्सु नः वृधे ॥ ७ ॥

मुद्गल० हे अग्ने अङ्गिरः! पूर्वैः महर्षिभिः स्तुतः स्तवानः इदानीन्तनैः च स्तूयमानस्त्वम् विभ्वासहम् महतामप्यभिभवितारम् । रयिम् धनम् नः अस्माकम् आ भर आहर । हे होतः! देवानाम् आह्वातः! स्तोतृभ्यः नः अस्मभ्यम् स्तवसे स्तोतुं सामर्थ्यं च प्रयच्छ । उत अपि च पृत्सु युद्धेषु नः अस्माकम् वृधे समृद्धये एधि भव ॥ ७ ॥

इति चतुर्थाष्टके प्रथमाध्याये द्वितीयो वर्गः ॥

[ ११ ]

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥ १ ॥

जनस्य । गोपाः । अजनिष्ट । जागृविः । अग्निः । सुऽदक्षः । सुविताय । नव्यसे ।
घृतऽप्रतीकः । बृहता । दिविऽस्पृशा । द्युऽमत् । वि । भाति । भरतेभ्यः । शुचिः ॥ १ ॥

वेङ्कट० सुतम्भरः । जनस्य गोपायिता जातः जागरणशीलः अग्निः शोभनबलः अभ्युदयाय नवतराय घृतज्वालः बृहता दिवं स्पृशता तेजसा सह दीप्तियुक्तम् वि भाति सोऽयं मनुष्येभ्यः शुचिः ॥ १ ॥

मुद्गल० 'जनस्य गोपाः' इति षडृचमेकादशं सूक्तम् । आत्रेयसुतंभर ऋषिः । जगती छन्दः । अग्निर्देवता ।

जनस्य गोपाः गोपायिता रक्षिता जागृविः जागरणशीलः सुदक्षः सुबलः सः अग्निः नव्यसे नवतराय सुविताय लोकानां कल्याणाय अजनिष्ट जातः । घृतप्रतीकः घृतेन प्रज्वलिताङ्गः बृहता महता दिविस्पृशा नभःस्पृशा तेजसा युक्तः शुचिः शुद्धः एवंविधोऽग्निः भरतेभ्यः ऋत्विग्भ्यः तदर्थम् द्युमत् दीप्तिमत् यथा भवति तथा वि भाति प्रकाशते ॥ १ ॥

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।
इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥ २ ॥

यज्ञस्य । केतुम् । प्रथमम् । पुरःऽहितम् । अग्निम् । नरः । त्रिऽसधस्थे । सम् । ईधिरे ।
इन्द्रेण । देवैः । सऽरथम् । सः । बर्हिषि । सीदत् । नि । होता । यजथाय । सुऽक्रतुः ॥ २ ॥

१. द्र. वैप १,१४८१d.

वेङ्कट० यज्ञस्य केतुमिति 'एष ह वै यज्ञस्य केतुः यत्र ह वै क्व च सूयते तदेष ॥ वै पुरस्तात् केतुः उच्छ्रीयते'। 'प्रथमं पुरोहितमिति पुर इव वा एनमेतं दधते यमग्निम् आदधते' इति विज्ञायते। त्रयाणां बर्हिषो धातूनां 'सहस्थाने दीपयन्ति' सोऽयम् इन्द्रेण देवैः च सरथम् आगत्य बर्हिषि निषीदतु यज्ञाय[१] सुकर्मा ॥ २ ॥

मुद्गल० नरः ऋत्विजः यज्ञस्य केतुम् प्रज्ञापकम् पुरोहितम् यजमानैः पुरस्कृतम् इन्द्रेण देवैः च सरथम् तेषां मान्यत्वात्[२] समानरथम् अग्निम् त्रिषधस्थे त्रिस्थाने विहारप्रदेशे प्रथमं समीधिरे समैधन्त। सुक्रतुः शोभनकर्मा होता देवानामाह्वाता सः अग्निः बर्हिषि बर्हिर्युक्ते तस्मिन् स्थाने यजथाय यज्ञाय नि षीदत् प्रतिष्ठितोऽभवदिति यावत् ॥ २ ॥

असँमृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः ।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद् दिवि श्रितः ॥ ३ ॥

असम्ऽमृष्टः । जायसे । मात्रोः । शुचिः । मन्द्रः । कविः । उत् । अतिष्ठः । विवस्वतः ।
घृतेन । त्वा । अवर्धयन् । अग्ने । आऽहुत । धूमः । ते । केतुः । अभवत् । दिवि । श्रितः ॥३॥

वेङ्कट० शत्रुभिः असंमृष्टः त्वम् अरण्योः जायसे। निर्मलः[३] मादयिता[४] क्रान्तः त्वम् उत् स्थितवानसि जननान्तरं यजमानात्। अथ घृतेन त्वाम् अवर्धयन्[५], हे अग्ने आहुत! धूमः च ते प्रज्ञापकः दिवि आगमत् व्याप्तः ॥ ३ ॥

मुद्गल० हे अग्ने! मात्रोः अरण्योः ताभ्याम् असंमृष्टः अबाधित एव जायसे मातृभूतो भवसि। मन्द्रः सर्वैः स्तुत्यः कविः सर्वत्र व्याप्तः शुचिः त्वम् विवस्वतः अग्निहोत्रार्थं गृहे विशेषेण वसतः यजमानात् उत् अतिष्ठः उत्थितोऽभवः। पूर्वं महर्षयः त्वा त्वाम् घृतेन अवर्धयन् वृद्धिमनयन्। हे आहुत! आहुतिभिर्हुत! ते तव दिवि श्रितः अन्तरिक्षे व्याप्तः धूमः केतुः प्रज्ञापकः अभवत् ॥ ३ ॥

अग्निर्नो यज्ञमुप वेतु साधुयाऽग्निं नरो वि भरन्ते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुम् ॥ ४ ॥

अग्निः । नः । यज्ञम् । उप । वेतु । साधुऽया । अग्निम् । नरः । वि । भरन्ते । गृहेऽगृहे ।
अग्निः । दूतः । अभवत् । हव्यऽवाहनः । अग्निम् । वृणानाः । वृणते । कविऽक्रतुम् ॥ ४ ॥

वेङ्कट० अग्निः अस्माकम् यज्ञम् "उप गच्छतु" सुष्ठु। अग्निम् मनुष्याः विविधं धारयन्ति अनुगृहम्[८]। अग्निः[९] दूतः अभवत् हविषां वोढा। अग्निम् एव यज्ञाय वृणानाः वृणते होतारं क्रान्तप्रज्ञम्[१०] ॥ ४ ॥

---

१-१. °स्थानमिवयन्ति वि° लपं. २. यज्ञा मूको. ३. मान्य° मूको. ४. निर्मदः वि° लपं. ५. मादित रु. ६. आन° वि° लपं. ७-७. उपगच्छतु वि°. ८. गृहं मूको. ९. अग्निम् मूको. १०. कान्त° वि° लपं.

मुद्गल० साधुया सर्वपुरुषार्थानां साधकः अग्निः नः यज्ञम् अस्मदीयं यागं प्रति उप वेतु आगच्छतु । नरः मनुष्याः गृहेगृहे अनुगृहम् अग्निम् वि भरन्ते विहरन्ति विहरणं कुर्वन्तीत्यर्थः । हव्यवाहनः हविषां वोढा अग्निः दूतः देवानां दूतः अभवत् । वृणानाः सम्भजमानाः सन्तः कविक्रतुम् क्रान्तयज्ञम् अग्निम् वृणते सम्भजन्ते ॥ ४ ॥

तुभ्येदम॑ग्ने मधु॑मत्तमं॒ वच॒स्तुभ्यं॑ मनी॒षा इ॒यम॑स्तु॒ शं हृ॒दे ।
त्वां गिरः॒ सिन्धु॑मिवा॒वनी॑र्म॒हीरा पृ॑णन्ति॒ शव॑सा व॒र्धय॑न्ति च ॥ ५ ॥

तुभ्य॑[1] । इ॒दम् । अ॒ग्ने॒ । मधु॑मत्ऽतमम् । वचः॑ । तुभ्य॑म् । म॒नी॒षा । इ॒यम् । अ॒स्तु॒ । शम् । हृ॒दे ।
त्वाम् । गिरः॑ । सिन्धु॑म्ऽइव । अ॒वनीः॑ । म॒हीः । आ । पृ॒ण॒न्ति॒ । शव॑सा । व॒र्धय॑न्ति । च॒ ॥५॥

वेङ्कट० तुभ्यम् एव अग्ने! मधुमत्तमम् इदम् वचः । तथा सति तुभ्यम् एव स्तुतिः इयम् अस्तु सुखकर हृदयाय । त्वाम् स्तुतयः समुद्रमिव आपः महत्यः आ पूरयन्ति वेगेन वर्धयन्ति च ॥ ५ ॥

मुद्गल० हे अग्ने! तुभ्य तुभ्यं त्वदर्थम् मधुमत्तमम् अत्यन्तं मधुरम् इदम् वचः क्रियते । हृदे हृदि शं सुखं कुर्वती इयं मनीषा स्तुतिः तुभ्यम् अस्तु । गिरः स्तुतिरूपा वाचः त्वाम् आ पृणन्ति पूरयन्ति शवसा बलेन वर्धयन्ति च । कथमिव । महीः महत्यः अवनीः अवन्यः नद्यः सिन्धुमिव समुद्रमिव ॥ ५ ॥

त्वाम॑ग्ने॒ अङ्गि॑रसो॒ गुहा॑ हि॒तमन्व॑विन्दञ्छिश्रिया॒णं वने॑वने ।
स जा॑यसे म॒थ्यमा॑नः॒ सहो॑ म॒हत् त्वामा॑हुः॒ सह॑सस्पु॒त्रम॑ङ्गिरः ॥ ६ ॥

त्वाम् । अ॒ग्ने॒ । अङ्गि॑रसः । गुहा॑ । हि॒तम् । अनु॑ । अ॒वि॒न्द॒न् । शि॒श्रि॒या॒णम् । वने॑ऽवने ।
सः । जा॒य॒से॒ । म॒थ्यमा॑नः । सहः॑ । म॒हत् । त्वाम् । आ॒हुः॒ । सह॑सः । पु॒त्रम् । अ॒ङ्गि॒रः॒ ॥ ६ ॥

वेङ्कट० त्वाम् अग्ने! अङ्गिरसः गुहायां निहितम्[2] अनु अविन्दन् श्रयमाणं काष्ठेकाष्ठे । सः त्वम् जायसे मथ्यमानः । तम् त्वाम् महत् बलम् आहुः सहसः पुत्रम् हे अङ्गिरसाम् मुख्य! ॥ ६ ॥

मुद्गल० हे अग्ने! अङ्गिरसः ऋषयः गुहा गुहायाम् हितम् निहितं निगूढम्[3] वनेवने वृक्षेवृक्षे शिश्रियाणम् आश्रितम् त्वाम् अनु अविन्दन् अलभन्त । महत् महता सहः सहसा बलेन युक्तः सः त्वम् मथ्यमानः जायसे । हे अङ्गिरः! अङ्गिरसाम् प्रकृतिभूत![4] त्वाम् सहसः पुत्रम् आहुः ॥ ६ ॥

इति चतुर्थाष्टके प्रथमाध्याये तृतीयो वर्गः ॥

[१२]

प्राग्नये॑ बृह॒ते य॒ज्ञिया॑य ऋ॒तस्य॒ वृष्णे॒ असु॑राय॒ मन्म॑ ।
घृ॒तं न य॒ज्ञ आ॒स्ये॒३॒॑ सुपू॑तं॒ गिरं॑ भरे वृष॒भाय॑ प्रती॒चीम् ॥ १ ॥

---

१. मु- वेष १,२६-४ द्र. २. हितं निं हपं. ३. °स्ढम् मूको. ४. भूतम् मूको.

प्र । अग्नये । बृहते । यज्ञियाय । ऋतस्य । वृष्णे । असुराय । मन्म ।
घृतम् । न । यज्ञे । आस्ये । सुऽपूतम् । गिरम् । भरे । वृषभाय । प्रतीचीम् ॥ १ ॥

वेङ्कट० प्र भरामि अग्नये महते यज्ञार्हाय उदकस्य वर्षित्रे बलवते मननीयां घृतम् इव सुपूतम् आस्ये स्तुतिम् कामानां वर्षित्रे अग्निं प्रति गच्छन्तीम्[1] ॥ १ ॥

मुद्गल० 'प्राग्नये बृहते' इति षडृचं द्वादशं सूक्तम्। सुतंभर ऋषिः। त्रिष्टुप् छन्दः। अग्निर्देवता।

बृहते महते यज्ञियाय यज्ञार्हाय ऋतस्य उदकस्य वृष्णे वर्षित्रे, असुराय बलवते वृषभाय कामानां वर्षित्रे अग्नये मन्म ज्ञानसाधनम् प्रतीचीम् अभिमुखीम् गिरम् स्तुतिरूपां वाचम् प्र भरे प्रणयामि। कथमिव। सुपूतम् सम्यक् संस्कृतम् आस्ये प्रहुतम् यज्ञे घृतं न घृतमिव। आस्ये प्रहुते घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिम् इत्यर्थः ॥ १ ॥

ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृन्धि पूर्वीः ।
नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥ २ ॥

ऋतम् । चिकित्वः । ऋतम् । इत् । चिकिद्धि । ऋतस्य । धाराः । अनु । तृन्धि । पूर्वीः ।
न । अहम् । यातुम् । सहसा । न । द्वयेन । ऋतम् । सपामि । अरुषस्य । वृष्णः ॥ २ ॥

वेङ्कट० हे ऋतस्य ज्ञातः! ऋतम् एव जानीहि तथा ऋतस्य धाराः पूर्वीः अनु तृन्धि महीः। न अहम् आरोचमानस्य वृष्णः अग्नेः सत्यभूतं मार्गम् सहसा अतिचारेण स्पृशामि नापि सत्येन चानृतेन च। ऋतम् इति शास्त्रीयम् अकुटिलं कर्मोच्यते ॥ २ ॥

मुद्गल० ऋतम् स्तोत्रं हे चिकित्वः! जानन् अग्ने! त्वम् ऋतम् इत् मया क्रियमाणमिदं स्तोत्रम् चिकिद्धि जानीहि। किञ्च पूर्वीः बह्वीः ऋतस्य उदकस्य[2] धाराः सस्यपोषणार्थमुत्पादयितुम् अनु तृन्धि मेघान् विध्य त्वम्। सहसा बलेन युक्तः अहम् यातुम् कर्मणां नाशकरीं हिंसाम् न सपामि न स्पृशामि न करोमि इति यावत्। द्वयेन च सत्यानृतात्मको यत्किञ्चिद् अवैदिकं कृत्यम् न सपामि किन्तु अरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुः तव ऋतम् स्तोत्रमेव सपामि ॥ २ ॥

कया नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः ।
वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः ॥ ३ ॥

कया । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः । उचथस्य । नव्यः ।
वेद । मे । देवः । ऋतुऽपाः । ऋतूनाम् । न । अहम् । पतिम् । सनितुः । अस्य । रायः ॥३॥

---

१. गच्छति स्तवं.　२. उदकस्य गृहो.

वेङ्कट० कीदृशा वाचा अस्माकम् अग्ने[1] सत्येनैव 'सत्य कर्मेच्छन्'[2] मनसि[3] ज्ञाता उचथस्य[3] स्तुत्य । कीदृश्या वाचा स्तुत उक्त शृणोषि[4] इत्यर्थः । जानाति मा ऋतूनाम् ऋतुपा[5] । पतिम् न अहम् वेद्मि धनस्य अस्य पालयितार प्रदातारमिति ॥ ३ ॥

मुद्गल० हे अग्ने ! ऋतयन् सर्वप्राणिना जीवनहेतुकम् उदक कुर्वन् मया केनापि ऋतेन सत्येन क्रियमाणेन कर्मणा न उचथस्य अस्मदीयस्य स्तोत्रस्य नवेदा भुव[6] भुवनवेत्तासि । नव्य स्तुत्य. ऋतूनाम् ऋतुपा वसन्तादीना प्रसवपालक देव स्तोवमानोऽस्मि मे माम् वेद वेत्तु । सनितु भजमानस्य अस्य मम राय पश्वादिलक्षणस्य धनस्य पतिम् स्वामिन तमग्निमह न जानामि ॥ ३ ॥

के ते॑ अग्ने रि॒पवे॒ बन्ध॑नासः॒ के पा॒यवः॑ सनिषन्त द्यु॒मन्तः॑ ।
के धा॒सिम॑ग्ने॒ अनृ॑तस्य पान्ति॒ क आस॑तो॒ वच॑सः सन्ति॒ गो॒पाः ॥ ४ ॥

के । ते॒ । अ॒ग्ने॒ । रि॒पवे॑ । बन्ध॑नासः । के । पा॒यवः॑ । स॒नि॒ष॒न्त॒ । द्यु॒ऽमन्तः॑ ।
के । धा॒सिम् । अ॒ग्ने॒ । अनृ॑तस्य । पा॒न्ति॒ । के । अस॑तः । वच॑सः । स॒न्ति॒ । गो॒पाः ॥ ४ ॥

वेङ्कट० के तव अग्ने ! शत्रो बन्धका[7] रश्मय, के वा रश्मय प्रयच्छन्ति धनानि दीप्तिमन्त, के वा अनृतकर्मण धारक पुरुष रक्षन्ति, के वा असत्यस्य[8] वचस गोपायितार भवन्ति इति प्रश्न ॥४॥

मुद्गल० हे अग्ने ! ये रिपवे स्वकीयस्य शत्रो बन्धनास बन्धका[9] स्यु । ते त्वत्सम्बन्धिनस्ते पुरुषा के कीदृशा । सामर्थ्यातिशयादेवंविधा इति केनापि ज्ञातु न शक्यत इत्यर्थः । ये पायव जनाना रक्षितार द्युमन्त दीप्तिमन्त सनिषन्त दीनेभ्यो धन प्रयच्छन्ति त्वदीया । के कीदृशा । ये अनृतस्य सत्यस्य धासिम् धारक जनम् पान्ति रक्षन्ति । ते त्वदीया जना के सन्ति । न केऽपीत्यर्थः । ये असत दुष्टस्याभिशापादिलक्षणस्य वचस गोपा गोपायितार. रक्षितारस्ते त्वदीया क सन्ति । न केऽपीत्यर्थः ॥ ४ ॥

सखा॑यस्ते॒ विषु॑णा अग्न ए॒ते शि॒वासः॒ सन्तो॒ अशि॑वा अभूवन् ।
अधू॑र्षत स्व॒यमे॒ते वचो॑भिर्ऋजूय॒ते वृ॑जि॒नानि॑ ब्रु॒वन्तः॑ ॥ ५ ॥

सखा॑यः । ते॒ । विषु॑णाः । अ॒ग्ने॒ । ए॒ते । शि॒वासः॑ । सन्तः॑ । अशि॑वाः । अ॒भू॒व॒न् ।
अधू॑र्षत । स्व॒यम् । ए॒ते । वचः॑ऽभिः । ऋ॒जु॒ऽय॒ते । वृ॒जि॒नानि॑ । ब्रु॒वन्तः॑ ॥ ५ ॥

वेङ्कट० सखाय ते अग्ने ! विष्वग्गमना अभूवन् पराङ्मुखा स्वदोषात्[10] । तथा पुरा भद्रा सन्त पश्चात् अभद्रा अभूवन् । क एषा दोषः इत्याह—अधूर्षत इति । स्वयम् एव अतिवै वचोभि हिंसितवन्त ऋजुकर्माचरते तुभ्यमनृतानि ब्रुवन्त यदा त्वा निन्दन्ति, नाप स्तोतॄन् रक्षसीति, तदा परामवन्तीत्यर्थः ॥ ५ ॥

---

१ १. सत्यकर्म° वि॰ २. °थति ए. ३. उक्तस्य मूको ४ °णोति ल. ५ ऋतुव वि॰, ऋतुप एप ६ नास्ति मूको ७. °भकृत एप ८. मत्य° वि॰ एप ९ °न्धका मूको १०. स्वे दोषा वि॰ एप, स्वदोषा ल

मुद्गल० हे अग्ने! ते सख सखायः स्तोतारः विषुणाः विप्रकीर्णाः सर्वत्र व्याप्ताः एते पूर्वम् अशिवाः परनिन्दादि कुर्वाणाः त्वत्परिचर्यां त्यजन्तोऽभद्राः सन्तः इदानीं त्वत्परिचर्यां कुर्वन्तः शिवासः शिवाः भद्राः अभूवन्। किञ्च ये ऋजूयते सम्यगाचरतेऽपि मह्यम् वचोभिः असाधूक्तिभिः वृजिनानि कुटिलानि ब्रुवन्तः ते एते मम सपत्नाः स्वयम् एव अधूर्षत आहिंसयन्त ॥ ५ ॥

यस्ते॑ अग्ने॒ नम॑सा य॒ज्ञमीट्ट॑ ऋ॒तं स पा॑त्यरु॒षस्य॒ वृष्णः॑ ।
तस्य॒ क्षयः॑ पृ॒थुरा सा॒धुरे॑तु प्र॒सर्स्रा॑णस्य॒ नहु॑षस्य॒ शेषः॑ ॥ ६ ॥

यः । ते॒ । अ॒ग्ने॒ । नम॑सा । य॒ज्ञम् । ईट्टे॑ । ऋ॒तम् । सः । पा॒ति॒ । अ॒रु॒षस्य॑ । वृष्णः॑ ।
तस्य॑ । क्षयः॑ । पृ॒थुः । आ । सा॒धुः । ए॒तु॒ । प्र॒ऽसर्स्रा॑णस्य । नहु॑षस्य । शेषः॑ ॥ ६ ॥

वेङ्कट० यः ते[1] अग्ने![2] नमस्कारेण सह यज्ञम् स्तौति साधु देवानभिः यजतीति, सः आरोचमानस्य वर्षितुः तव आत्मविषयप्रजापश्वादिदानात्मकं[3] शोभनकर्म अविच्छेदेनैव[4] रक्षति[5]। तस्य निवासः विस्तीर्णः धनसमृद्धः आ गच्छतु त्वां प्रति पुनः पुनः सरतः मनुष्यस्य शेषभूतः ॥ ६ ॥

मुद्गल० हे अग्ने! यः मनुष्यः यज्ञम् यजनीयम् ते त्वाम् नमसा स्तोत्रेण ईट्टे स्तौति, सः[6] आदयस्य रोचमानस्य दृप्तः कामानां वर्षितुः अग्नेः ऋतम् स्तोत्रम् पाति रक्षति, तस्य यजमानस्य क्षयः गृहम् पृथुः विस्तीर्णं भवति। पश्वादिलक्षणैर्धनैः सम्पूर्णं भवतीत्यर्थः। प्रसर्स्राणस्य[7] प्रकर्षेण परिचर्यां गच्छतः नहुषस्य मनुष्यस्य साधुः कामानां साधकः शेपः पुनः आ एतु [8]आगच्छतु, भवत्वित्यर्थः[8] ॥६॥

इति चतुर्थाष्टके प्रथमाध्याये चतुर्थो वर्गः ॥

[१३]

अर्च॑न्तस्त्वा हवामहेऽर्च॑न्तः॒ समि॑धीमहि । अग्ने॒ अर्च॑न्त ऊ॒तये॑ ॥ १ ॥

अर्च॑न्तः । त्वा॒ । ह॒वा॒म॒हे॒ । अर्च॑न्तः । सम् । इ॒धी॒म॒हि॒ । अग्ने॑ । अर्च॑न्तः । ऊ॒तये॑ ॥ १ ॥

वेङ्कट० पूजयन्तः त्वाम्[9] हवामहे। अर्चन्तः वयं[10] संदीपयामः अग्ने! परिचरन्तो रक्षणाय ॥ १ ॥

मुद्गल० 'अर्चन्तस्त्वा' इति षड्टचं त्रयोदशं सूक्तम्। सुतम्भर ऋषिः। गायत्री छन्दः। अग्निः देवता।

हे अग्ने! त्वा त्वाम् अर्चन्तः पूजयन्तो वयम् हवामहे आह्वयामः। अर्चन्तः स्तुवन्तो वयम् ऊतये रक्षणाय त्वाम् सम् इधीमहि समिद्भिः संदीपयामः। अर्चन्तः इति तृतीयं पदमादराधिक्यार्थम्[11] ॥ १ ॥

---

१. तेन वि¹. २. नास्ति वि¹ ल्प. ३. "यज" वि¹. ४. "देनैव वि¹. ५. रति" वि¹ ल्प. ६. यः मूको. ७. स यज" मूको. ८-८. "च्छति भवन्निति" मूको. ९. त्वा वि¹ ल्प. १०. देवाः वि¹ ल्प. ११. पादमद" मूको.

अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवः ॥ २ ॥

अग्नेः । स्तोमम् । मनामहे । सिध्रम् । अद्य । दिविऽस्पृशः । देवस्य । द्रविणस्यवः ॥ २ ॥

वेङ्कट० अग्नेः[1] स्तोमम् अद्य[2] उच्चारयामः कामानां साधकम् ज्वालाभिः दिवं स्पृशतः देवस्य द्रविणम् इच्छमानाः ॥ २ ॥

मुद्गल० द्रविणस्यवः द्रविणं धनमिच्छन्तो वयम् दिविस्पृशः आकाशं व्याप्नुवतः देवस्य द्योतमानस्य अग्नेः सिध्रम् पुरुषार्थानां साधकम् स्तोमम् स्तोत्रम् अद्य अस्मिन्नहनि मनामहे ब्रूमः ॥ २ ॥

अग्निर्जुषत नो गिरो होता यो मानुषेष्वा । स यक्षद्दैव्यं जनम् ॥ ३ ॥

अग्निः । जुषत । नः । गिरः । होता । यः । मानुषेषु । आ । सः । यक्षत् । दैव्यम् । जनम् ॥ ३ ॥

वेङ्कट० अग्निः अस्माकं स्तुतीः सेवताम् । होता [3]यः सः[3] मानुषेषु आ वर्तते, सः यजतु दैव्यम् जनम् ॥ ३ ॥

मुद्गल० होता देवानामाह्वाता यः अग्निः मानुषेषु मनुष्येषु आ वसति, सः अग्निः नः अस्माकम् गिरः स्तुतीः जुषत सेवताम्, सोऽग्निः दैव्यम् जनम् देवसम्बन्धिजनम् यक्षत् यजतु ॥ ३ ॥

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वि तन्वते ॥ ४ ॥

त्वम् । अग्ने । सऽप्रथाः । असि । जुष्टः । होता । वरेण्यः । त्वया । यज्ञम् । वि । तन्वते ॥ ४ ॥

वेङ्कट० त्वम् अग्ने ! सर्वतः पृथुतमः असि पर्याप्तः[4] होता वरणीयः । त्वया[5] यज्ञम् कुर्वन्ति ॥ ४ ॥

मुद्गल० हे अग्ने ! जुष्टः सर्वदा प्रीतः वरेण्यः सर्वैर्वरणीयः होता त्वम् सप्रथाः सर्वतः पृथुः असि भवसि । किन्च सर्वे यजमानाः त्वया साधनेन यज्ञम् वि तन्वते ॥ ४ ॥

त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ॥ ५ ॥

त्वाम् । अग्ने । वाजऽसातमम् । विप्राः । वर्धन्ति । सुऽस्तुतम् । सः । नः । रास्व । सुऽवीर्यम् ॥ ५ ॥

वेङ्कट० त्वाम् हे अग्ने ! अतिशयेन अन्नस्य दातारं मेधाविनो वर्धयन्ति सुष्ठु स्तुतम्, सः त्वम् अस्मभ्यं देहि [6]'शोभनं वीर्यम्'[6] ॥ ५ ॥

मुद्गल० हे अग्ने ! विप्राः स्तोतारः वाजसातमम् वाजः अन्नं तद् ददतम् सुष्टुतम् पूर्वैः महर्षिभिः सम्यक् स्तुतम् त्वाम् वर्धन्ति स्तोत्रैर्वर्धयन्ति । सः त्वम् नः अस्मभ्यम् सुवीर्यम् सर्वैः काम्यमानं बलम् रास्व देहि ॥ ५ ॥

अग्ने नेमिरराँ इव देवाँस्त्वं परिभूरसि । आ राधश्चित्रमृञ्जसे ॥ ६ ॥

---

१. अग्ने मूको. २. नास्ति मूको. ३-३. यस्यः मूको. ४. पर्याप्तः मूको. ५. नास्ति वि[1] एपं. ६-६. शोभनवीर्यम् वि[1] एपं.

अग्ने । नेमिः । अरान्ऽइव । देवान् । त्वम् । परिऽभूः । असि । आ । राधः । चित्रम् । ऋञ्जसे ॥६॥

वेङ्कट० त्वम् हे अग्ने ! अरान् इव देवान् नेमिः परितो भवसि, चित्रम् अन्नं च प्रसाधयसि ॥ ६ ॥

मुद्गल० हे अग्ने ! त्वम् देवान् परिभूः असि स्वतेजसा परिभवसि । कथमिव । नेमिः प्रकाशमानः चक्रस्य बाह्यो वलयः अरानिव नाभौ अर्पितान् सूक्ष्मान् काष्ठशकलानिव । किञ्च त्वम् चित्रम् नानाविधम् राधः धनम् आ ऋञ्जसे स्तोतृभ्यः प्रसाधय[1] ॥ ६ ॥

इति चतुर्थाष्टके प्रथमाध्याये पञ्चमो वर्गः ।

## [ १४ ]

अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥ १ ॥

अग्निम् । स्तोमेन । बोधय । सम्ऽइधानः । अमर्त्यम् । हव्या । देवेषु । नः । दधत् ॥ १ ॥

वेङ्कट० अग्निम् हे स्तोतः! स्तोमेन बोधय काष्ठैः समिन्धानः अमर्त्यम् । स हव्यानि देवेषु अस्माकं प्रयच्छतु ॥ १ ॥

मुद्गल० 'अग्निं स्तोमेन' इति षडृचं चतुर्दशं सूक्तम् । सुतम्भर ऋषिः । गायत्री छन्दः । अग्निर्देवता ।

हे स्तोतः! अमर्त्यम् अमरणधर्माणम् अग्निम् स्तोमेन स्तोत्रेण बोधय स्वाभिलषितार्थसिद्ध्यर्थं[2], प्रबोधय । योऽग्निः समिधानः स्तोत्रैः सम्यक् प्रकाशमानः, सः नः हव्या अस्मदीयानि हव्यानि हवींषि देवेषु दधत् निदधातु ॥ १ ॥

तमध्वरेष्वीळते देवं मर्ता अमर्त्यम् । यजिष्ठं मानुषे जने ॥ २ ॥

तम् । अध्वरेषु । ईळते । देवम् । मर्ताः । अमर्त्यम् । यजिष्ठम् । मानुषे । जने ॥ २ ॥

वेङ्कट० तम् यज्ञेषु स्तुवन्ति 'देवम् मर्ताः अमर्त्यम्'[3] यष्टृतमम् मानुषे जने वर्तमानम् ॥ २ ॥

मुद्गल० मर्ताः मनुष्याः देवम् द्योतमानम् अमर्त्यम् अमरणधर्माणम् मानुषे मनुष्याणां सम्बन्धिनि जने लोके यजिष्ठम् यष्टृतमम् तम् अग्निम् अध्वरेषु सप्ततन्तुषु ईळते स्तुवन्ति ॥ २ ॥

तं हि शश्वन्त ईळते स्रुचा देवं घृतश्चुता । अग्निं हव्याय वोळ्हवे ॥ ३ ॥

तम् । हि । शश्वन्तः । ईळते । स्रुचा । देवम् । घृतऽश्चुता । अग्निम् । हव्याय । वोळ्हवे ॥३॥

वेङ्कट० तम् हि बहवः स्तुवन्ति घृतस्रुता स्रुचा सह अग्निम् देवम्[4] हविषो वहनाय ॥ ३ ॥

---

१. °धय मूको. २. °र्थं. पुंद सिद्धये मूको. ३-३. नास्ति मूको. ४. नास्ति मूको.

मुद्गल० शश्वत बहव स्तोतार तम देवम् अग्निम् ईळते स्तुवन्ति । कीदृशास्ते । घृतश्चुता घृत क्षरन्त्या[1] स्रुचा सहिता । किमर्थं स्तुवन्ति । हव्याय हवनार्थं चरुपुरोडाशादिलक्षण हवि वोळ्हवे वोढुम् । हि पूरण ॥ ३ ॥

अग्निर्जातो अरोचत घ्नन् दस्यूञ्ज्योतिषा तमः । अविन्दद् गा अपः स्वः ॥ ४ ॥

अग्नि । जात । अरोचत । घ्नन् । दस्यून् । ज्योतिषा । तम । अविन्दत् । गा । अप । स्वरिति स्व ॥

वेङ्कट० अग्नि जात दीप्यते राक्षसान् तम च तेजसा घ्नन्, अविन्दत् च गम्भीरा अप स्वर्लोकात् ॥ ४ ॥

मुद्गल० जात अरण्योर्मथनेन प्रादुर्भूत अग्नि दस्यून् यज्ञविघ्नकारिण शत्रून् घ्नन् हिंसन् ज्योतिषा स्वेन तेजसा तम घ्नन् अरोचत अदीप्यत[2] किञ्च गा अप उदकानि स्व सूर्यं च अविन्दत् अवेदयत् ॥ ४ ॥

अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत । वेतु मे शृणवद्धवम् ॥ ५ ॥

अग्निम् । ईळेन्यम् । कविम् । घृतऽपृष्ठम् । सपर्यत । वेतु । मे । शृणवत् । हवम् ॥ ५ ॥

वेङ्कट० अग्निम् ईडनीयम् कविम् घृतेन घृतपृष्ठम् परिचरत । स पिबतु मम सोमम् शृणोतु च आह्वानम् ॥ ५ ॥

मुद्गल० हे जना ईळेन्यम् स्तुत्यम् कविम् क्रान्तदर्शिनम् घृतपृष्ठम् दीप्तोपरिभागम् अग्निम् सपर्यत पूजयत । सोऽग्नि मे हवम् मदीयम् आह्वानम् वेतु कामयताम् शृणवत् शृणोतु च ॥ ५ ॥

अग्निं घृतेन वावृधुः स्तोमेभिर्विश्वचर्षणिम् । स्वाधीभिर्वचस्युभिः ॥ ६ ॥

अग्निम् । घृतेन । वृवृधु । स्तोमेभि । विश्वऽचर्षणिम् । सुऽआधीभि । वचस्युऽभि ॥ ६ ॥

वेङ्कट० अग्निम् घृतेन स्तोमैश्च वर्धयामासु सर्वस्य द्रष्टारम् सुकर्मभिश्च स्तुति वचनम् इच्छद्भि ऋत्विग्भि ॥ ६ ॥

मुद्गल० ऋत्विज विश्वचर्षणिम् विश्वस्य द्रष्टारम् स्वाधीभि शोभनाऽऽध्यानै वचस्युभि स्तुतिकामै दैवै समेतम् अग्निम् घृतेन स्तोमेभि स्तोत्रै वावृधु अवर्धयन् ॥ ६ ॥

इति चतुर्थाष्टके प्रथमाध्याये षष्ठो वर्ग ॥

इति पञ्चमे मण्डले प्रथमोऽनुवाक ॥

[ १५ ]

प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।
घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो अग्निः ॥ १ ॥

1 क्षरन्त्या मूको 2 दीप्यत मूको

प्र । वेधसे । कवये । वेद्याय । गिरम् । भरे । यशसे । पूर्व्याय ।

घृतऽप्रसत्तः । असुरः । सुऽशेवः । रायः । धर्ता । धरुणः । वस्वः । अग्निः ॥ १ ॥

वेङ्कट० धरुण आङ्गिरसः । प्र भरामि विधात्रे कवये वेदितव्याय स्तुतिं यशस्विने पुरातनाय । सोऽयं घृतेन निषण्णः प्राज्ञः सुसुखः धनस्य धर्ता गवात्मकस्य तथा अन्यस्यापि धनस्य धर्ता अग्निः ॥ १ ॥

मुद्गल० द्वितीयेऽनुवाके अष्टादश सूक्तानि । तत्र 'प्र वेधसे' इति पञ्चर्चं प्रथमं सूक्तम् । आङ्गिरसो धरुण ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता ।

यः अग्निः घृतप्रसत्तः हवीरूपेण घृतेन च प्रसन्नः असुरः बलवान् सुशेवः रायः धनस्य धर्ता पोषकः धरुणः हविषां धारकः वस्वः वासकोऽग्निर्भवति । वेधसे विधात्रे कवये क्रान्तदर्शे वेद्याय स्तुत्याय यशसे यशस्विने पूर्व्याय मुख्याय तस्मै अग्नये गिरम् स्तुतिम् प्र भरे प्रणयामि ॥ १ ॥

ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन् ।
दिवो धर्मन् धरुणे सेदुषो नॄञ्जातैरजाताँ अभि ये ननक्षुः ॥ २ ॥

ऋतेन । ऋतम् । धरुणम् । धारयन्त । यज्ञस्य । शाके । परमे । विऽओमन् ।

दिवः । धर्मन् । धरुणे । सेदुषः । नॄन् । जातैः । अजातान् । अभि । ये । ननक्षुः ॥ २ ॥

वेङ्कट० ऋतेन कर्मणा सत्यकर्माणं धारकमग्निं धारयन्ति यज्ञस्य सहायभूते परमे स्थाने उत्तरवेद्याम् । द्युलोकस्य धारके यज्ञकर्मणि स्थितान् नेतॄन् देवान् मनुष्येषु अजातान् जातैः पशवादिभिः व्याप्नुवन्ति ॥ २ ॥

मुद्गल० ये यजमानाः दिवः द्युलोकस्य धरुणे धारके धर्मन् यज्ञे सेदुषः आसीनान् नॄन् अजातान् देवान् जातैः मनुष्यैः ऋत्विग्भिः अभि ननक्षुः अभिप्राप्नुवन्ति । ते यजमानाः यज्ञस्य शाके कर्मणि निमित्ते परमे उत्कृष्टे व्योमन् स्थाने धरुणम् धारकम् ऋतम् सत्यरूपम् अग्निम् उत्तरवेद्याम् ऋतेन स्तोत्रेण धारयन्त धारयन्ति ॥ २ ॥

अंहोयुवस्तन्वस्तन्वते वि वयो महद् दुष्टरं पूर्व्याय ।
स संवतो नवजातस्तुतुर्यात् सिंहं न क्रुद्धमभितः परि ष्ठुः ॥ ३ ॥

अंहःऽयुवः । तन्वः । तन्वते । वि । वयः । महत् । दुस्तरम् । पूर्व्याय ।

सः । सम्ऽवतः । नवऽजातः । तुतुर्यात् । सिंहम् । न । क्रुद्धम् । अभितः । परि । स्थुः ॥३॥

वेङ्कट० अग्नेः "पापं मिश्रयितारः" राक्षसाः मुमुक्षया आत्मशरीराणि विस्तारयन्ति । यानि

1. ऋद्धये मूको. २-२. पाठमि° मूको.

मुद्गल० हे देव अग्ने! उरुम् पृथुम् दोघम् कामानां दोग्धारम् रायः धनस्य धरुणम् धारकम् वाजः हविर्लक्षणमन्नम् ते त्वदीयस्य शवसः बलस्य अन्तम् समाप्तिम् नु अद्य पातु रक्षतु। तायुः न तस्करो यथा गुहा गुहायाम् पदम् द्रव्यम् दधानः धारयन् रक्षति तद्वत् महः महते राये धनाय धनलाभार्थम् चितयन् सन्मार्गं प्रकाशयन् अत्रिम् अत्पः सत्रिम् ऋषिम् अप्रीणयः ॥ ७ ॥

इति चतुर्थाष्टके प्रथमाध्याये सप्तमो वर्गः ॥

[ १६ ]

बृहद् वयो हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥ १ ॥

बृहत् । वयः । हि । भानवे । अर्च । देवाय । अग्नये ।
यम् । मित्रम् । न । प्रशस्तिऽभिः । मर्तासः । दधिरे । पुरः ॥ १ ॥

वेङ्कट० पुरः । महत् अन्नं दीप्ताय प्रयच्छ देवाय अग्नये, यम् अग्निं सखायमिव यज्ञे स्तुतिभिः मनुष्या आहवनीये धारयन्ति ॥ १ ॥

मुद्गल० 'बृहद् वयः' इति पञ्चर्चं द्वितीयं सूक्तम्। आत्रेयः पूरुर्ऋषिः। अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः। अग्निर्देवता।

यज्ञे भानवे दीप्तिमते अग्नये बृहत् वयः हवीरूपमन्नं दीयते हि। अतस्त्वमपि देवाय अग्नये वयः अर्च प्रयच्छ। मर्तासः मनुष्याः यम् अग्निम् मित्रम् न सखायमिव प्रशस्तिभिः प्रकृष्टाभिः स्तुतिभिः पुरः दधिरे पुरस्कुर्वन्ति ॥ १ ॥

स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः ।
वि हव्यमग्निरानुषग्भगो न वारमृण्वति ॥ २ ॥

सः । हि । द्युऽभिः । जनानाम् । होता । दक्षस्य । बाह्वोः ।
वि । हव्यम् । अग्निः । आनुषक् । भगः । न । वारम् । ऋण्वति ॥ २ ॥

वेङ्कट० सः हि दीप्तैः तेजोभिः जनानाम् मध्ये बाह्वोः[1] दक्षस्य समर्थस्य कर्मपरस्य यजमानस्य होता भवति। ततश्च हविर्वरणीयं देवेषु वि ऋण्वति प्रक्षिपति, यथा भगः भाग्यं मनुष्येभ्य इति ॥ २ ॥

मुद्गल० यः अग्निः हव्यम् हविः आनुषक् देवेष्वानुषक्तं करोति। बाह्वोः द्वयोः भुजयोः[2] दक्षस्य बलस्य द्युभिः द्युतिभिर्युक्तः सः अग्निः जनानाम् यजमानानाम् होता देवानामाह्वाता भवति। भगः न सूर्य इव वारम् वरणीयं धनम् वि ऋण्वति विशेषेण प्रयच्छति। हिः पूरणः ॥ २ ॥

१. बाहोः द्वि[१] हर्षे. २. नास्ति मूको.

अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः ।
विश्वा यस्मिन् तुविष्वणि समर्ये शुष्ममादधुः ॥ ३ ॥

अस्य । स्तोमे । मघोनः । सख्ये । वृद्धऽशोचिषः ।
विश्वा । यस्मिन् । तुविऽस्वनि । सम् । अर्ये । शुष्मम् । आऽदधुः ॥ ३ ॥

वेङ्कट० अस्य स्तोमे सति धनं प्रयच्छतः[1] सख्ये सति सख्युः शत्रुविजयार्थं[2] प्रवृद्धतेजसः । कस्वेदमाह— विश्वा इति । सर्वाणि भूतानि यजमानाः अपि यस्मिन् अग्नौ महास्वने[3] युद्धे सञ्जाते सति शत्रुविजयार्थं हविर्भिः बलम् आदधुः । उत्तरत्र सम्बन्धः ॥ ३ ॥

मुद्गल० मघोनः मघवतो धनवतः वृद्धशोचिषः वृद्धानि शोचींषि[4] तेजांसि यस्यासौ वृद्धशोचिः । अस्यैवं-विधस्याग्नेः स्तोमे स्तोत्रेऽस्य सख्ये च स्याम । तुविष्वणि बहुशब्दे अर्ये ईश्वरमिति यस्मिन् अग्नौ विश्वा विश्वे सर्वे ऋत्विजः शुष्मम् बलं हविर्भिः स्तोत्रैः च सम् आदधुः सम्यग् आदधति ॥ ३ ॥

अधा ह्यग्न एषां सुवीर्यस्य मंहना । तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥४॥

अध । हि । अग्ने । एषाम् । सुऽवीर्यस्य । मंहना ।
तम् । इत् । यह्वम् । न । रोदसी इति । परि । श्रवः । बभूवतुः ॥ ४ ॥

वेङ्कट० अध हि अग्ने । एषाम् भूतानां मध्ये तम् एव स्तोमकर्तारं त्वया सिद्धसवनम् सुवीर्यस्य तव महत्त्वेन महान्तम् न[5] द्यावापृथिव्यावपि परि [6]भवतः । अपि च[7] स[6] शत्रूणां यशश्च परिभवति[8] ॥ ४ ॥

मुद्गल० हे अग्ने । अध अथ हि एषाम् अस्माकं यजमानानाम् सुवीर्यस्य सर्वैः स्पृहणीयस्य बलस्य मंहना महनार्थं दाता भव । रोदसी द्यावापृथिव्यौ यह्वम् न महान्तं सूर्यमिव श्रवः सर्वैः श्रवणीयम् तम् इत् अग्निमेव परि बभूवतुः परिगृहीतः ॥ ४ ॥

नू न एहि वार्यमग्ने गृणान आ भर ।
ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥ ५ ॥

नु । नः । आ । इहि । वार्यम् । अग्ने । गृणानः । आ । भर ।
ये । वयम् । ये । च । सूरयः । स्वस्ति । धामहे । सचा । उत । एधि । पृत्ऽसु । नः । वृधे ॥

वेङ्कट० क्षिप्रम् अस्मान् आ गच्छ वरणीयं धनम् अग्ने ! स्तूयमानः आ भर । ये वयम् ये च[9] अस्मदीयाः स्तोतारः स्वस्ति[9] सह त्वां धारयामः । त्वं च युद्धेषु अस्माकं वर्धनाय भव ॥ ५ ॥

---

1. °त मूको. 2 सख्युर्विज° वि[1] लपं. 3. महास्वनो महा° ल लपं. 4. तेजांसि मूको. 5. नास्ति वि[1]. 6-6. भवतोर च वि[1]. 7. नास्ति मूको. 8. °भवतः ल भवतायः. 9. नास्ति ल लपं.

मुद्गल० हे अग्ने! गृणानः स्तूयमानः सन् नु क्षिप्रम् एहि यज्ञं प्रत्यागच्छ। आगत्य च नः अस्मभ्यम् वार्यम् वरणीयं धनम् आ भर सम्पादय। ये वयम् यजमानाः ये च सूरयः स्तोतारः सचा हविर्भिः सहिताः उभये वयम् स्वस्ति स्तोत्रम् धामहे कुर्मः। उत अपि च पृत्सु पृतनासु नः अस्माकम् वृधे समृद्धये एधि भव ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये अष्टमो वर्गः ॥

[ १७ ]

आ य॒ज्ञैर्दे॑व॒ मर्त्य॑ इ॒त्था तव्यां॑सम॒तये॑। अ॒ग्निं कृ॒ते स्व॑ध्व॒रे पू॒रुरी॑ळी॒ताव॑से ॥ १ ॥

आ। य॒ज्ञैः। दे॒व॒। मर्त्यः॑। इ॒त्था। तव्यां॑सम्। ऊ॒तये॑।
अ॒ग्निम्। कृ॒ते। सु॒ऽअ॒ध्व॒रे। पू॒रुः। ई॒ळी॒त॒। अव॑से ॥ १ ॥

वेङ्कट० आभिमुख्येन स्तौति हविर्भिः सह हे देव! मनुष्यः इत्थं प्रवृद्धं रक्षणाय अग्निम् शोभनाध्वरके हविषि पूरुः नामाऽयमृषिः अन्नाय [1]रक्षणाय वा[1] ॥ १ ॥

मुद्गल० 'आ यज्ञैः' इति पञ्चर्चं तृतीयं सूक्तम्। आत्रेयः पूरुः ऋषिः। अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः। अग्निर्देवता ॥

हे देव! मर्त्यः मनुष्य ऋत्विक् इत्था इत्थम् तव्यांसम् स्वतेजोभिः प्रवृद्धम् अग्निम् ऊतये तर्पणाय यज्ञैः स्तोत्रैः आ ह्वयति। किञ्च पूरु मनुष्य स्तोता कृते स्वध्वरे शोभने यज्ञे तमग्निम् अवसे रक्षणाय ईळीत स्तौति ॥ १ ॥

अस्य॒ हि स्वय॑शस्तर आ॒सा वि॑धर्म॒न् मन्य॑से।
तं नाकं॑ चि॒त्रशो॑चिषं म॒न्द्रं प॒रो म॑नी॒षया॑ ॥ २ ॥

अ॒स्य। हि। स्वय॑शःऽतरः। आ॒सा। वि॒ऽध॒र्म॒न्। मन्य॑से।
तम्। नाक॑म्। चि॒त्रऽशो॑चिषम्। म॒न्द्रम्। प॒रः। म॒नी॒षया॑ ॥ २ ॥

वेङ्कट० अग्नेः[2] स्वभूतकीर्तिमत्तरः[3] हे विविधकर्मन्! आस्येन स्तोत्रं करोषि। ततश्च तम् अग्निम् अविद्यमानदुःखम् चित्रतेजसम् मोदनम् स्तुत्या त्वम् परः[4] भवसि। परः पारणात् ॥ २ ॥

मुद्गल० हे विधर्मन्! विशिष्टो धर्मो यस्यासौ विधर्मा स्तोता, तस्य सम्बोधनम्। स्वयशस्तरः सुयशास्त्वम् अस्य अमुम् हि अग्निम् आसा आस्येन मन्यसे स्तौषि। सम्येऽतिशयेन सुयशास्त्वम् मनीषया प्रकृष्टबुद्ध्याऽनया तम् प्रसिद्धम् किंविशिष्टमग्निम्। नाकम् सुखम्। अकं दुःखम्, न विद्यतेऽकं यस्य स तम्। चित्रशोचिषम् चित्रतेजसम् मन्द्रम् स्तुत्यम् परः परस्तात् स्थितम् ॥ २ ॥

१-१. रक्षणाय मूको. २. अग्ने मूको. ३. स्वभूतकीर्तिमत्तर. मूको. ४. पत्र दर्श.

अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा ।
दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥ ३ ॥

अस्य । वै । असौ । ॐ इति । अर्चिषा । यः । अयुक्त । तुजा । गिरा ।
दिवः । न । यस्य । रेतसा । बृहत् । शोचन्ति । अर्चयः ॥ ३ ॥

वेङ्कट० अग्नेरेव अर्चिषा असौ लोक अर्चिष्मान् भवति । य[1] मम देवान् हविषो दानेन स्तुत्या च सयुनक्ति । दिव आदित्यस्य इव यस्य शरीरात् निर्गच्छता रेतसा[2] अस्याग्ने दीप्यन्ते अर्चयः ॥ ३ ॥

मुद्गल० य अग्नि तुजा जगद्रक्षणसमर्थेन बलेन गिरा स्तुत्या अयुक्त सम्बद्धो भवति । दिव न आदित्यस्येव यस्य अग्ने रेतसा प्रभया कृत्स्नं जगद् व्याप्तम् । यस्याग्ने बृहत् बृहन्त अर्चय दीप्तय शोचन्ति प्रकाशन्ते । अस्य वै खल्वग्ने अर्चिषा प्रभया असौ आदित्य अर्चिष्मान् भवति । उ पूरण ॥ ३ ॥

अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ ।
अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥ ४ ॥

अस्य । क्रत्वा । विऽचेतसः । दस्मस्य । वसु । रथे । आ ।
अध । विश्वासु । हव्यः । अग्निः । विक्षु । प्र । शस्यते ॥ ४ ॥

वेङ्कट० अस्य प्रज्ञानेन विशिष्टबुद्धे दर्शनीयस्य धनं स्तोतृणाम् रथे आगच्छति । ततोऽयम् विश्वासु प्रजासु हव्यार्हः सन् अग्नि विक्षु स्तूयते ॥ ४ ॥

मुद्गल० विचेतस सुमतय ऋत्विज अस्य दस्मस्य दर्शनीयस्याग्ने क्रत्वा कर्मणा यज्ञादिना वसु वसूनि धनानि रथे आ दधति । हव्य यज्ञार्थमाहातव्य स अग्नि अध तदनन्तरमेव विश्वासु सर्वासु विक्षु प्रजासु प्रशस्यते स्तूयते ॥ ४ ॥

नू न इद्धि वार्यमासा सचन्त सूरयः ।
ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे ॥ ५ ॥

नु । नः । इत् । हि । वार्यम् । आसा । सचन्त । सूरयः ।
ऊर्जः । नपात् । अभिष्टये । पाहि । शग्धि । स्वस्तये । उत । एधि । पृत्ऽसु । नः । वृधे ॥ ५ ॥

वेङ्कट० क्षिप्रमेवास्माकं स्तोतार वरणीयं धनम् आस्येन स्तोत्रेण सेवन्ते[1] । तथा सति हे बलस्य पौत्र । अभिलषितसिद्धयर्थं रक्ष । अस्माकम् शक्तश्च भव अविनाशाय । उत इति गतम् ( ऋ ५,१६,५ ट ) ॥ ५ ॥

मुद्गल० हे अग्ने ! न अस्मभ्यम् वार्यम् वरणीय धनम् नु क्षिप्र यच्छ । इत् हि इत्येतौ पूरणौ । यत सूरय स्तोतारस्त्वत्त सकाशात् आसा आस्येन स्तोत्रेण सचन्त धनं लभन्ते । किञ्च

1 स ऊ स्म 2 नास्ति मूको, सेवन्त ए.

हे ऊर्जो नपात्! बलस्य पुत्र! अभिष्टये अभीप्सिते महामन्त्रं प्रयच्छेति शेषः। पाहि अस्मान् आपद्भ्यो रक्ष। स्वस्तये क्षेमाय अधि त्वां याचे। हे अग्ने! उत अपि च पृत्सु पृतनासु नः वृधे समृद्धये एधि भव ॥ ९ ॥

इति चतुर्थाष्टके प्रथमाध्याये नवमो वर्गः ॥

[ १८ ]

प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः ।
विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥ १ ॥

प्रातः । अग्निः । पुरुऽप्रियः । विशः । स्तवेत । अतिथिः ।
विश्वानि । यः । अमर्त्यः । हव्या । मर्तेषु । रण्यति ॥ १ ॥

वेङ्कट० मृक्तवाहाः[1]। प्रातः एव अग्निः बहूनां प्रियो यजमानस्य अतिथिः भवन् ऋत्विग्भिः स्तूयते। यः सर्वाणि हवींषि अमर्त्यः सन् मर्त्येषु स्थितानि देवेभ्यो रमयति ॥ १ ॥

मुद्गल० 'प्रातरग्निः' इति पञ्चर्चं चतुर्थं सूक्तम्। आत्रेयो द्वित ऋषिः। पञ्चमी पङ्क्तिः, शिष्टा अनुष्टुभः। अग्निर्देवता ॥

पुरुप्रियः बहुप्रियः विशः यजमाने धनस्य निवेशकः अतिथिः यजमानानां गृहान्प्रति तिथिष्वभ्येतीत्यतिथिः। एवंविधः अग्निः प्रातः स्तवेत स्तूयते। अमर्त्यः अमरणधर्मा यः अग्निः मर्तेषु मनुष्येषु यजमानेषु स्थितानि विश्वानि सर्वाणि हव्या हवींषि रण्यति कामयते ॥ १ ॥

द्विताय मृक्तवाहसे स्वस्य दक्षस्य मंहना ।
इन्दुं स धत्त आनुषक् स्तोता चित् ते अमर्त्य ॥ २ ॥

द्विताय । मृक्तऽवाहसे । स्वस्य । दक्षस्य । मंहना ।
इन्दुम् । सः । धत्ते । आनुषक् । स्तोता । चित् । ते । अमर्त्य ॥ २ ॥

वेङ्कट० द्वित इति यस्य नाम तस्मै मह्यं यजमानाय होता स्वस्य दक्षस्य महत्त्वेन[2] सोमं प्रयच्छति स्तोता सन् तुभ्यम् हे अमर्त्य अग्ने! अनुपक्रम्। मदर्थं होता त्वां यजतीत्यर्थः ॥ २ ॥

मुद्गल० हे अग्ने! द्विताय द्वितनाम्ने मृक्तवाहसे मृक्तहविर्वाहाय स्वस्य आत्मीयस्य दक्षस्य बलस्य मंहना मंहनायै दानाय भव। हे अमर्त्य! नित्य अग्ने! यतः कारणात् ते तुभ्यम् सः मृक्तवाहाः आनुषक् सर्वदाऽनुषक्तम् इन्दुम् सोमम् धत्ते धारयति, स्तोता चित् स्तोता च भवति ॥ २ ॥

---

1. मुक्तवहाः वि[?] मूर्प. 2. महत्वे क मूर्प.

तं वो दीर्घायुशोचिषं गिरा हुवे मघोनाम् ।
अरिष्टो येषां रथो व्यश्वदावन्नीयते ॥ ३ ॥

तम् । वः । दीर्घायुऽशोचिषम् । गिरा । हुवे । मघोनाम् ।
अरिष्टः । येषाम् । रथः । वि । अश्वऽदावन् । ईयते ॥ ३ ॥

वेङ्कट० तम् युष्मदर्थं दीर्घगमनयुक्ततेजसं स्तुत्या ह्वयामि हविष्मतामर्थाय। अथ प्रत्यक्षमाह अरिष्टः इति। हे अश्वान् दातः! येषाम् स्तोतॄणाम् रथः अरिष्टः संग्रामे विविधं गच्छति, तेषामर्थाय आह्वयामि ॥ ३ ॥

मुद्गल० हे अग्ने! दीर्घायुशोचिषम् तम्[1] दीर्घगमनदीप्तिम्[2] वः। पूजायां बहुवचनम्। त्वाम् मघोनाम् धनिनां हुवे गिरा स्तोत्रेण हुवे आह्वयामि। हे अश्वदावन्! अश्वानां दातः! येषाम् धनिनाम् रथः अरिष्टः शत्रुभिरहिंसितः वि ईयते विगच्छतु ॥ ३ ॥

चित्रा वा येषु दीधितिरासन्नुक्था पान्ति ये ।
स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥ ४ ॥

चित्रा । वा । येषु । दीधितिः । आसन् । उक्था । पान्ति । ये ।
स्तीर्णम् । बर्हिः । स्वःऽनरे । श्रवांसि । दधिरे । परि ॥ ४ ॥

वेङ्कट० चित्रा वा येषु स्तोतृषु स्तुतिः, आस्ये वा ये शस्त्राणि रक्षन्ति, ते स्तीर्णम् बर्हिः लक्षीकृत्य अन्नानि[3] धारयन्ति सर्वनरे परितः[4] ॥ ४ ॥

मुद्गल० येषु ऋत्विक्षु चित्रा नानाविधा दीधितिः यज्ञविषया क्रिया भवति, ये आसन् आस्ये उक्था उक्थानि स्तोत्राणि पान्ति रक्षन्ति, ते ऋत्विजः स्तीर्णं स्तीर्णस्य बर्हिः बर्हिषः परि उपरि श्रवांसि अन्नानि हवींषि स्वर्णरे यज्ञे दधिरे निदधति। वा पूरणः ॥ ४ ॥

ये मे पञ्चाशतं ददुरश्वानां सधस्तुति ।
द्युमदग्ने महि श्रवो बृहत् कृधि मघोनां नृवदमृत नृणाम् ॥ ५ ॥

ये । मे । पञ्चाशतम् । ददुः । अश्वानाम् । सधऽस्तुति ।
द्युऽमत् । अग्ने । महि । श्रवः । बृहत् । कृधि । मघोनाम् । नृऽवत् । अमृत । नृणाम् ॥ ५ ॥

वेङ्कट० ये अमी मह्यं मया याचिता अश्वानां पञ्चाशतम् ददुः स्तुतिभिः सह, त्वयि मया स्तूयमाने इत्यर्थः। तेषामेषां धनवतां दीप्तिमन्महत् बृंहितम्[5] अन्नम् हे अग्ने अमृत! कुरु। यथा मनुष्या याचिता प्रयच्छन्ति तद्वदिति ॥ ५ ॥

---

१. नास्ति मूको. २. °दीप्तमन्ने मूको. ३. नापश्यानि वि[१]; नावमानि ऋपं. ४. निरितः वि[१]. ५. बृंहितम् वि[१] ऋपं.

मुद्गल० ये मघवानो दातारः मे मह्यम् सधस्तुति स्तुत्या सहितं स्वस्तोत्रसमनन्तरम् अश्वानाम् पञ्चाशतम् ददुः हे अमृत अग्ने! त्वं तेषाम् मघोनाम् नृणाम् द्युमत् दीप्तिमत् महि महत् बृहत् परिवृढम् नृवत् परिचारकमनुष्ययुक्तम् श्रवः अन्नम् कृधि कुरु, देहीत्यर्थः ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये दशमो वर्गः ॥

[ १९ ]

अभ्यवस्थाः प्र जायन्ते प्र वव्रेर्वव्रिश्चिकेत । उपस्थे मातुर्वि चष्टे ॥ १ ॥

अभि । अवऽस्थाः । प्र । जायन्ते । प्र । वव्रेः । वव्रिः । चिकेत । उपऽस्थे । मातुः । वि । चष्टे ॥१॥

वेङ्कट० वव्रिः। वव्रेः अवस्थाः अभि प्र जायन्ते, वव्रेः मम जरा च जायते। 'अकालकं विकृता'[१] व्राधंस्माकम्: शरीरावस्थाः[२]। सोऽयं वव्रिः पृथिव्याः उपस्थे आसीनस्समीपस्थं पश्यति। दूरस्थमसमर्थत्वात्न पश्यति ॥ १ ॥

मुद्गल० 'अभ्यवस्थाः' इति पञ्चर्चं पञ्चमं सूक्तम्। आत्रेयो वव्रिः ऋषिः। आद्या द्वितीया द्वे गायत्र्यौ, तृतीया चतुर्थी द्वे अनुष्टुभौ, पञ्चमी विराट्। अग्निर्देवता।

वव्रेः ऋषेः अभि उत्तरोत्तरम् अवस्थाः अतोभवा दशाः[३] प्र जायन्ते। तादृशीः वव्रिः हविर्भिः संभक्ता सोऽग्निः प्र चिकेत प्रज्ञापीयात्। ज्ञात्वा चापनयत्विति भावः। योऽग्निः मातुः पृथिव्याः उपस्थे समीपे स्थितं पदार्थजातम् वि चष्टे पश्यति ॥ १ ॥

जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति । आ दृळ्हां पुरं विविशुः ॥ २ ॥

जुहुरे । वि । चितयन्तः । अनिऽमिषम् । नृम्णम् । पान्ति । आ । दृळ्हाम् । पुरम् । विविशुः ॥२॥

वेङ्कट० तेऽस्मी वीतये शत्रून्[४] युध्यन्तः "वि जुहुरे"[५] आहूतवन्तो युद्धार्थम्। 'सदा अनिमेषम्'[६] धनं च अरक्षन्[७] दृढाम् पुरम् शत्रुपुरीं च विविशुः ॥ २ ॥

मुद्गल० ये वि चितयन्तः तव प्रभावं जानन्तो जनाः त्वाम् अनिमिषम् सर्वदा जुहुरे यज्ञार्थम् आह्वयन्ति, आहूय च नृम्णम् तव बलं हविर्भिः स्तोत्रैश्च पान्ति रक्षन्ति। ते दृळ्हाम् शत्रुभिः साधयितुमशक्यत्वात् पुरम् पुरीम् आ विविशुः प्रविशन्ति ॥ २ ॥

आ श्वैत्रेयस्य जन्तवो द्युमद्वर्धन्त कृष्टयः ।
निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥ ३ ॥

आ । श्वैत्रेयस्य । जन्तवः । द्युऽमत् । वर्धन्त । कृष्टयः ।
निष्कऽग्रीवः । बृहत्ऽउक्थः । एना । मध्वा । न । वाजऽयुः ॥ ३ ॥

१-१. कालकृता वि॰. २. शरीरस्यावस्था वि॰. ३. दशा. मूको. ४. शत्रुन् वि॰.
५-५. विजुरे वि॰ लरे. ६-६. तदानीमेव: ल; तदानादातीमेव: वि॰ लपं. ७. रक्षन् मूको.

वेङ्कट० [1]दिवश्राया अपत्यस्य[1] मे वंशे[2] जाताः[3] मनुष्याः दीप्तियुक्तम् आ अवर्धन्त[4]। [5]पुत्राश्च मम वृद्धा आसन्नित्यर्थः। पुत्राणां नामानि—निष्कग्रीवः बृहदुक्थः अनेन मधुना सह वाजयुः चेति चत्वारः पुत्राः। नकारः समुच्चयार्थीयः ॥ ३ ॥

मुद्गल० वायन्त इति अन्ततः कृष्टयः मनुष्या ऋत्विजः मध्वा न मधुनेव एना एनया स्तुत्या श्वैत्रेयस्य श्वित्रमन्तरिक्षम् तत्र भवस्य वैद्युतस्याग्नेः द्युमत् दीप्तिमत् बलम् आ वर्धन्त अभिवर्धयन्ति। किंविधाः कृष्टयः। निष्कग्रीवः सुवर्णेनालङ्कृतग्रीवाः बृहदुक्थः बृहत्स्तोत्राः वाजयुः अन्नकामाः ॥ ३ ॥

प्रि॒यं दु॒ग्धं न काम्य॒मजा॑मि जा॒म्योः सचा॑ ।
घ॒र्मो न वाज॑जठ॒रोऽद॑ब्धः॒ शश्व॑तो॒ दभः॑ ॥ ४ ॥

प्रि॒यम् । दु॒ग्धम् । न । काम्य॑म् । अजा॑मि । जा॒म्योः । सचा॑ ।
घ॒र्मः । न । वाज॑ऽजठरः । अद॑ब्धः । शश्व॑तः । दभः॑ ॥ ४ ॥

वेङ्कट० प्रियम् दुग्धम् पय इव कमनीयम्, पुनःपुनः दर्शनेऽपि यत् अह्रासमावहति तत् अजामि, तादृशं मम शरीरं द्यावापृथिव्योः सहायभूतं शत्रुनिरसनात् तथाऽऽसं पुरा। घर्मः इव अन्नसम्बद्धहविष्को दीप्यमानः शत्रुभिरहिंसितः अनेकेषां हिंसको भव ॥ ४ ॥

मुद्गल० जाम्योः द्यावापृथिव्योः सचा सहायभूतोऽग्निः दुग्धम् न पय इव काम्यम् कमनीयम् अजामि दोषरहितम् प्रियम् अस्मदीयं स्तोत्रं शृणोतु। किंविधोऽग्निः। घर्मः न अवार्यं [illegible] वाजजठरः वाजोऽन्नं जठरे यस्य सः। अदब्धः शत्रुभिरहिंसितः शश्वतः नित्यः दभः शत्रूणां हिंसकः ॥ ४ ॥

क्रीळ॑न्नो रश्म॒ आ भु॑वः॒ सं भस्म॑ना वा॒युना॒ वेवि॑दानः ।
ता अ॑स्य सन्धृष॒जो न ति॒ग्माः सुसं॑शिता व॒क्ष्यो॑ वक्षणे॒स्थाः ॥ ५ ॥

क्रीळ॑न् । नः॒ । र॒श्मे॒ । आ । भु॒वः॒ । सम् । भस्म॑ना । वा॒युना॑ । वेवि॑दानः ।
ताः । अ॒स्य॒ । स॒न् । धृ॒ष॒जः । न । ति॒ग्माः । सुऽसं॑शिताः । व॒क्ष्यः॑ । व॒क्ष॒णे॒ऽस्थाः ॥ ५ ॥

वेङ्कट० इदं वृद्धः सम्प्रति मुमूर्षुरग्निं प्रार्थयते। हे रश्मे! श्मशाने अस्माकम् क्रीळन् प्रादुर्भव चिताभस्मना वायुना च सह ज्ञायमानः[1]। ताः च अस्य धर्षणशीलाः सुसंशिताः वहनशीलाः वहनशीलेऽग्नौ स्थिता न तिग्माः भवन्तु। [6]सुखं दहन्तु[6] मामिति ॥ ५ ॥

मुद्गल० हे रश्मे! रश्मिमन् अग्ने! क्रीळन् वनेषु क्रीडन् भस्मना स्वकार्येण भस्मितेन वायुना प्रेरकेण सम् वेविदानः सम्यक् ज्ञायमानः त्वम् नः अस्माकम् आ भुव अभिमुखो भव। वक्षणेस्थाः वह्नौ स्थिताः

1-1. मश्विनायापत्य° मूको. 2. नास्ति वर्षं. 3. ज्ञाताः मूको. 4. °र्धयन्त मूको. 5. विज्ञायमाना वि॰; ज्ञायमानाः क. 6-6. नास्ति वि॰ क्षयं; सुखं दहन्तु क.

दक्ष्यः ज्वालाः सुरोशिताः सुतीक्ष्णाः भृशजः शत्रवो धर्षिकाः ताः ज्वालाः अस्य यजमानस्य मम न तिग्माः अतितीक्ष्णाः सन् सन्तु ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये एकादशो वर्गः ॥

[ २० ]

यमग्ने वाजसातम त्वं चिन्मन्यसे रयिम् ।
तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ १ ॥

यम् । अग्ने । वाजऽसातम । त्वम् । चित् । मन्यसे । रयिम् ।
तम् । नः । गीःऽभिः । श्रवाय्यम् । देवऽत्रा । पनय । युजम् ॥ १ ॥

वेङ्कट० प्रयस्वन्तः । यम् हे अग्ने अन्नानां दातृतम! त्वम् एव बुध्यसे रयिम्, तम् अस्माकं स्तुतिभिः श्रवणीयं देवेषु ब्रूहि योग्यम् अभीष्य. प्रयच्छेति देवान् ब्रूहीति ॥ १ ॥

मुद्गल० 'यमग्ने' इति चतुर्ऋचं षष्ठं सूक्तम् । आत्रेयाः प्रयस्वन्त ऋषयः । अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः । अग्निर्देवता ।

हे अग्ने! हे वाजसातम अत्यन्तम् अन्नद! त्वम् यम् रयिम् धनमस्माभिर्दीयमानं हवीरूपं धनम् मन्यसे बुध्यसे । चित् पूरणः । श्रवाय्यम् श्रवणीयम् प्रशस्यम् गीर्भिः स्तुतिभिः युजम् युक्तम् नः अस्मदीयं हविर्लक्षणं धनम् तम् देवत्रा देवेषु पनय प्रापय ॥ १ ॥

ये अग्ने नेरयन्ति ते वृद्धा उग्रस्य शवसः ।
अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिरे ॥ २ ॥

ये । अग्ने । न । ईरयन्ति । ते । वृद्धाः । उग्रस्य । शवसः ।
अप । द्वेषः । अप । ह्वरः । अन्यऽव्रतस्य । सश्चिरे ॥ २ ॥

वेङ्कट० ये अग्ने! न प्रेरयन्ति[1] काष्ठादिकं तवाद्या अभ्युद्गूर्णस्य तेजसः । न स्वां प्रयच्छन्ति यागार्थमित्यर्थः[1] । अथवा शवः अन्नं तदुद्गूर्णस्य तव न प्रयच्छन्तीति । द्वेषः पापम् । यज्ञभङ्गनिमित्त अपद्वयो ह्वरः । यस्य यजमानस्य प्रमादात् व्रताद् अन्यद् असत्यादिकम् 'इदमहं सोऽन्यव्रतः'[2] । सश्चतिरास्वादनकर्मा । यजमानस्य प्रमादकृतं पापं तस्य आददत इत्यर्थः ॥ २ ॥

मुद्गल० हे अग्ने! ये जनाः वृद्धाः पश्वादिलक्षणधनैः समृद्धाः सन्तः ते तुभ्यम् नेरयन्ति हवींषि न प्रयच्छन्ति, ते उग्रस्य अधिकेन शवसः बलेन अन्नेन वा अपवीताः[3], बलाधहीनाः भवन्तीत्यर्थः । किञ्च अन्यव्रतस्य अवैदिकस्य असुरस्य द्वेषः त्वत्सम्बन्धिनं विरोधं कुर्वन्ति, ह्वरः हिंसां च अप सश्चिरे आत्मानं प्रापयन्ति ॥ २ ॥

---

१-१. ई° ङ. २-२. उपनतोऽन्यमिनिमित्तः वि° एपं; 'सोऽन्यव्रति' ए. ३. °°नीताः मूको.

होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनम् ।
यज्ञेषु पूर्व्यं गिरा प्रयस्वन्तो हवामहे ॥ ३ ॥

होतारम् । त्वा । वृणीमहे । अग्ने । दक्षस्य । साधनम् ।
यज्ञेषु । पूर्व्यम् । गिरा । प्रयस्वन्तः । हवामहे ॥ ३ ॥

वेङ्कट० होतारम्[1] त्वा वृणीमहे अग्ने! बलस्य साधयितारम्। यज्ञेषु पूर्वकालभवं[2] मुख्यम् स्तुत्या प्रयस्वन्तः नाम्ना वयम् हवामहे च ॥ ३ ॥

मुद्गल० हे अग्ने! प्रयस्वन्तः अन्नवन्तः एकनामका वयम् दक्षस्य बलस्य साधनम् साधकम् त्वा त्वाम् होतारम् देवानामाह्वातारम् वृणीमहे। किञ्च यज्ञेषु पूर्व्यम् मुख्यं त्वाम् गिरा स्तुतिरूपया वाचा हवामहे स्तुमः ॥ ३ ॥

इत्था यथा त ऊतये सहसावन् दिवेदिवे ।
राय ऋताय सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥ ४ ॥

इत्था । यथा । ते । ऊतये । सहसाऽवन् । दिवेऽदिवे ।
राये । ऋताय । सुक्रतो इति सुऽक्रतो । गोभिः । स्याम । सधऽमादः । वीरैः । स्याम । सधऽमादः ॥ ४ ॥

वेङ्कट० इत्थमेव यथा[3] तव तर्पणाय हे बलवन्! अन्वहम् स्याम। तथाऽस्मान् सत्यभूताय धनाय च कुरु हे सुप्रज्ञ!। वयं त्वत्प्रसादात् गोभिः वीरैः[4] च सह मोदितारः स्याम ॥ ४ ॥

मुद्गल० हे सहसावन्! बलवन्नग्ने! दिवेदिवे अन्वहं वयम् ते तव ऊतये रक्षणाय यथा स्याम तथा इत्था इत्थं कुरु। हे सुक्रतो! राये धनाय ऋताय यज्ञाय च यथा स्याम तथा कुरु। किञ्च वयम् गोभिः सधमादः सह माद्यन्तः स्याम। वीरैः पुत्रैः च सधमादः स्याम तथा कुरु ॥ ४ ॥

इति चतुर्थाष्टके प्रथमाध्याये द्वादशो वर्गः ॥

[ २१ ]

मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥ १ ॥

मनुष्वत् । त्वा । नि । धीमहि । मनुष्वत् । सम् । इधीमहि ।
अग्ने । मनुष्वत् । अङ्गिरः । देवान् । देवऽयते । यज ॥ १ ॥

वेङ्कट० स मनुर्यथा त्वामादधे, यथा च समीधे[5], वयं च तथा कुर्मः। त्वं[6] च अग्ने! अङ्गिरः! तद्वत् देवान् इच्छते यजमानाय देवान् यज ॥ १ ॥

१. नास्ति लपं. २. "कालं भ" वि[1] लपं. ३. नास्ति मूको ४ नास्ति वि[1]. ५. समिधे ल; समिन्धे ल मदतावः. ६. त्वां ल॰

मुद्गल॰ 'मनुष्वत्त्वा' इति चतुर्ऋचं सप्तमं सूक्तम्। 'आत्रेयः सस' ऋषिः। अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः। अग्निर्देवता।

हे अग्ने! त्वा त्वाम् मनुष्वत् मनुरिव नि धीमहि, मनुष्वत् मनुरिव त्वा सम् इधीमहि समिद्भिः संदीपयामः। हे अङ्गिरः! अङ्गारात्मक अग्ने! देवयते देवकामाय यजमानाय मनुष्वत् मनवे मनोरपत्याय देवान् यज ॥ १ ॥

त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे।
स्रुचस्त्वा यन्त्यानुषक् सुजात सर्पिरासुते ॥ २ ॥

त्वम्। हि। मानुषे। जने। अग्ने। सुऽप्रीतः। इध्यसे।
स्रुचः। त्वा। यन्ति। आनुषक्। सुऽजात। सर्पिःऽआसुते ॥ २ ॥

वेङ्कट॰ निगदसिद्धा। यस्मिन् सर्पिराभूयते हूयते स तथोक्तः ॥ २ ॥

मुद्गल॰ हे अग्ने! त्वम् मानुषे जने मनुष्यलोके सुप्रीतः हि स्तोत्रैः सुष्ठु प्रीतः सन् इध्यसे दीप्यसे। स्रुचः हविर्भिः सम्पूर्णाः आनुषक् अनुषक्तं यथा भवति तथा त्वा त्वाम् यन्ति प्राप्नुवन्ति हे सुजात! हे सर्पिरासुते घृतयुक्तान्न! इति ॥ २ ॥

त्वां विश्वे सजोषसो देवासो दूतमक्रत।
सपर्यन्तस्त्वा कवे यज्ञेषु देवमीळते ॥ ३ ॥

त्वाम्। विश्वे। सऽजोषसः। देवासः। दूतम्। अक्रत। सपर्यन्तः। त्वा। कवे। यज्ञेषु। देवम्। ईळते ॥ ३ ॥

वेङ्कट॰ विश्वे देवाश्च सङ्गता हविर्वहनाय त्वाम् दूतम् अकुर्वन्। मनुष्याश्च हे कवे! 'यज्ञेषु त्वामेव देवम्' पूजयन्तः स्तुवन्ति ॥ ३ ॥

मुद्गल॰ सजोषसः सह प्रीयमाणाः विश्वे सर्वे देवासः देवाः त्वाम् दूतम् अक्रत अकुर्वन्। अतः कारणात् हे कवे क्रान्तदर्शिन्! देवम् द्योतमानम् त्वा त्वाम् सपर्यन्तः परिचरन्तो यजमानाः यज्ञेषु ईळते देवान् आह्वातुं याचन्ते ॥ ३ ॥

देवं वो देवयज्ययाऽग्निमीळीत मर्त्यः।
समिद्धः शुक्र दीदिह्यृतस्य योनिमासदः ससस्य योनिमासदः ॥ ४ ॥

देवम्। वः। देवऽयज्यया। अग्निम्। ईळीत। मर्त्यः।
सम्ऽइद्धः। शुक्र। दीदिहि। ऋतस्य। योनिम्। आ। असदः। ससस्य। योनिम्। आ। असदः ॥ ४ ॥

१-१. आत्रेयस्स मूको. २. अङ्गिरा मूको. ३. उद्धरा गद° वि°; उद्धरा नि° स क्ष°. ४. वः वि°.
५. °यो मन मूको. ६-६. नास्ति म° ... अस्मान्त मूको.

वेङ्कट० हे मनुष्याः! युष्माकम् मर्त्यः होता देवयागार्थम् अग्निम् स्तौति। अथ प्रत्यक्षः। स त्वम् हे अग्ने शुक्रवर्ण! समिद्धः[1] दीप्यस्व, यज्ञस्य स्थानमासीद सत्यवान्सो मम[2] गृहमासीद ॥ ४ ॥

मुद्गल० मर्त्यः मनुष्यः देवम् द्योतमानम् अग्निम् वः त्वाम् देवयज्यया देवयज्यायै देवयागार्थम् ईळीत स्तोतुमर्हति। हे शुक्र! दीप्त अग्ने! समिद्धः हविर्भिः प्रवृद्धः सन् दीदिहि दीप्यस्व ऋतस्य सत्यभूतस्य सत्रस्य यज्ञस्येमम् योनिम् कारणं स्वर्गसाधनं यज्ञस्थानम् आ असदः देवतारूपेण आसीद। आदरार्थं पुनर्वचनम् ॥ ४ ॥

इति चतुर्थाष्टके प्रथमाध्याये त्रयोदशो वर्गः ॥

[२२]

प्र विश्वसामन्नत्रिवदर्चा पावकशोचिषे ।
यो अध्वरेष्वीड्यो होता मन्द्रतमो विशि ॥ १ ॥

प्र। विश्वऽसामन्। अत्रिऽवत्। अर्च। पावकऽशोचिषे।
यः। अध्वरेषु। ईड्यः। होता। मन्द्रऽतमः। विशि ॥ १ ॥

वेङ्कट० विश्वसामा। हे विश्वसामन्! यथैनमत्रिरस्तौद्[3] एवम् अस्मै शोधकतेजसे प्र स्तुहि यः यज्ञेषु स्तोतव्यो होता मादयितृतमश्च मनुष्येषु ॥ १ ॥

मुद्गल० 'प्र विश्वसामन्' इति चतुर्ऋचमष्टमं सूक्तम्। आत्रेयो विश्वसामा ऋषिः। अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः। अग्निर्देवता।

हे विश्वसामन् ऋषे! त्वम् अत्रिवत् अत्रिरिव पावकशोचिषे शोधकदीप्तये तस्मै अग्नये प्र अर्च प्रगाय, यः अग्निः अध्वरेषु ईड्यः सर्वैर्यज्वभिः स्तुत्यः होता देवानाम् आह्वाता। विशि जने मन्द्रतमः स्तुत्यतमः ॥ १ ॥

न्यग्निं जातवेदसं दधाता देवमृत्विजम् ।
प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः ॥ २ ॥

नि। अग्निम्। जातऽवेदसम्। दधात। देवम्। ऋत्विजम्।
प्र। यज्ञः। एतु। आनुषक्। अद्य। देवव्यचःऽतमः ॥ २ ॥

वेङ्कट० नि धत्त अग्निम् आयतने जातप्रज्ञम् देवम् काले यष्टारम्। "प्र एतु अग्निः"[4] यष्टा अनुषक्तम् अद्य अतिशयेन देवानां व्यापकः ॥ २ ॥

१. "व वि[°] क स्त्यं. २. नास्ति क स्त्यं. ३. अथैतम्" वि[°]. ४-४. प्रैवत्वयमग्निः वि[°]; प्रैमत्वमग्निः स्त्यं.

मुद्गल० हे यजमानाः! जातवेदसम् जातप्रज्ञम् देवम् द्योतमानम् ऋत्विजम् ऋतुयष्टारम् अग्निम् नि दधात निधत्त। किञ्च देवव्यचस्तमः देवानामाप्ततमः यज्ञः यज्ञसाधनम् अस्माभिर्दीयमानं हविः आनुषक् अनुषक्तं यथा भवति तथा अद्य अस्मिन्नहनि तमग्निम् प्र एतु गच्छतु ॥ २ ॥

चिकित्विन्मनसं त्वा देवं मर्तास ऊतये।
वरेण्यस्य तेऽवस इयानासो अमन्महि ॥ ३ ॥

चिकित्वित्ऽमनसम्। त्वा। देवम्। मर्तासः। ऊतये।
वरेण्यस्य। ते। अवसः। इयानासः। अमन्महि ॥ ३ ॥

वेङ्कट० यस्य मनः सर्वं विजानाति[1] तम् त्वा देवम् मनुष्याः वयं रक्षायै वरणीयम्[2] तव रक्षणम् भजमानाः स्तुमः ॥ ३ ॥

मुद्गल० हे अग्ने! चिकित्विन्मनसम् चिकित्वित् ज्ञानवत्[3] मनो यस्यासौ चिकित्विन्मनाः[4] तम् देवम् त्वा त्वाम् इयानासः उपगच्छन्तः[5] मर्तासः मनुष्याः वयम् ऊतये रक्षणार्थम् वरेण्यस्य संभजनीयस्य ते तव अवसः अवसे तर्पणाय अमन्महि स्तुमः ॥ ३ ॥

अग्ने चिकिद्ध्यस्य न इदं वचः सहस्य।
तं त्वा सुशिप्र दम्पते स्तोमैर्वर्धन्त्यत्रयो गीर्भिः शुम्भन्त्यत्रयः ॥ ४ ॥

अग्ने। चिकिद्धि। अस्य। नः। इदम्। वचः। सहस्य।
तम्। त्वा। सुऽशिप्र। दम्ऽपते। स्तोमैः। वर्धन्ति। अत्रयः। गीःऽभिः। शुम्भन्ति। अत्रयः ॥ ४ ॥

वेङ्कट० अग्ने! बुध्यस्व नः अस्माकम् अत्रीणाम् अस्य विश्वसाहः[6] इदम् स्तुतिवचः। हे सहसो जात!। तम् त्वाम्[7] हे सुहनो गृहपते! स्तोमैः वर्धयन्ति अत्रयः। गीर्भिः अलङ्कुर्वन्ति अत्रयः ॥ ४ ॥

मुद्गल० हे अग्ने! हे सहस्य! सहसः बलस्य पुत्र! नः अस्मदीयम् अस्य इदम् परिचरणमिदम् वचः स्तोत्रम् चिकिद्धि जानीहि। हे सुशिप्र! शोभने शिप्रे हनू यस्य असौ सुशिप्रः। तस्य[7] सम्बोधनम्। हे दम्पते! गृहपते! तम् त्वा त्वाम् अत्रयः अत्रिपुत्राः स्तोमैः स्तोत्रैः वर्धन्ति वर्धयन्ति। अत्रयः गीर्भिः शुम्भन्ति अलङ्कुर्वन्ति ॥ ४ ॥

इति चतुर्थाष्टके प्रथमाध्याये चतुर्दशो वर्गः ॥

[ २३ ]

अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम्।
विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत् ॥ १ ॥

1. जाना° वि°. 2. भजनीयम् लवं. 3. ज्ञान मूको. 4. °मच्छन्ते मूको. 5. विश्वमाह वि°; विश्वसहसः लवं. 6. त्वा वि°. 7. नास्ति मूको.

अग्ने । सहन्तम् । आ । भर । द्युम्नस्य । प्रऽसहा । रयिम् ।
विश्वाः । यः । चर्षणीः । अभि । आसा । वाजेषु । ससहत् ॥ १ ॥

वेङ्कट० द्युम्नः । अग्ने ! शत्रूनभिभवन्तम् रयिम् आ भर द्युम्नस्य मम शत्रून् प्रसह्य । यः रयिः सर्वान् मनुष्यान् निरसनेन सङ्ग्रामेषु अभि भवति[1] ॥ १ ॥

मुद्गल० 'अग्ने सहन्तम्' इति चतुर्ऋचं नवमं सूक्तम् । द्युम्न ऋषिः । अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः । अग्निर्देवता ।

हे अग्ने ! प्रसहन्तम् प्रकृष्टेन बलेन सहन्तं शत्रून् अभिभवन्तम् रयिम् द्युम्नम् द्युम्नस्य द्युम्नाय मह्यम् [illegible] आ भर आहर । यः द्युम्नः प्रसहा शत्रूणाम् अभिभविता आसा आस्येन स्तोत्रेण युक्तः सन् वाजेषु अभि सङ्ग्रामेषु आभिमुख्येन गतान् विश्वाः सर्वान् चर्षणीः मनुष्यान् शत्रून् ससहत् अभिभवति ॥ १ ॥

तमग्ने पृतनाषहं रयिं सहस्व आ भर ।
त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः ॥ २ ॥

तम् । अग्ने । पृतनाऽसहम् । रयिम् । सहस्वः । आ । भर ।
त्वम् । हि । सत्यः । अद्भुतः । दाता । वाजस्य । गोऽमतः ॥ २ ॥

वेङ्कट० निगदव्याख्याता ॥ २ ॥

मुद्गल० हे अग्ने ! सहस्वः ! बलवन् ! पृतनासहम् सेना अभिभवितारम् रयिम् पुत्रं त्वम् आ भर आहर । त्वम् हि सत्यः सत्यभूतः अद्भुतः महान् गोमतः गोभिर्युक्तस्य वाजस्य अन्नस्य दाता ॥ २ ॥

विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः ।
होतारं सद्मसु प्रियं व्यन्ति वार्या पुरु ॥ ३ ॥

विश्वे । हि । त्वा । सऽजोषसः । जनासः । वृक्तऽबर्हिषः ।
होतारम् । सद्मऽसु । प्रियम् । व्यन्ति । वार्या । पुरु ॥ ३ ॥

वेङ्कट० सर्वे हि सङ्गताः जना यज्ञार्थं स्तीर्णबर्हिषः त्वाम् आत्मगृहे पुरूणि धनानि कामयन्ते याचन्ते ॥ ३ ॥

मुद्गल० हे अग्ने ! सजोषसः सह प्रीयमाणाः वृक्तबर्हिषः स्तृतबर्हिषः विश्वे सर्वे जनासः ऋत्विजः सद्मसु यज्ञगृहेषु होतारम् देवानाम् आह्वातारम् प्रियम् सर्वेषां प्रीतिकरम् त्वा त्वाम् पुरु पुरूणि बहूनि वार्या वरणीयानि धनानि व्यन्ति याचन्ते हि ॥ ३ ॥

---

१. भवन्ति मूको.

स हि ष्मा विश्वचर्षणिरभिमाति सहो दुधे ।
अग्ने एषु क्षयेष्वा रेवन्नः शुक्र दीदिहि द्युमत् पावक दीदिहि ॥ ४ ॥

स । हि । स्म । विश्वऽचर्षणिः । अभिऽमाति । सहः । दुधे ।
अग्ने । एषु । क्षयेषु । आ । रेवत् । नः । शुक्र । दीदिहि । द्युऽमत् । पावक । दीदिहि ॥४॥

वेङ्कट० अग्निः सर्वस्य द्रष्टा शत्रूणाम् अभिभवनशीलं बलं धारयति । प्रत्यक्ष शिष्ट । अग्ने । अस्माकम् एषु गृहेषु धनयुक्तम् दीप्यस्व दीप्तियुक्तं चेति ॥ ४ ॥

मुद्गल० हे अग्ने । लोकेषु प्रसिद्ध विश्वचर्षणि ऋषिः अभिमाति शत्रूणां हिंसकम् सह बलम् दुधे धारयतु । हि स्म पूरणौ । हे शुक्र ! शोचिष्मन् ! त्वम् अस्मदीयेषु एषु क्षयेषु गृहेषु रेवत् धनयुक्तं यथा भवति तथा आ दीदिहि आदीप्यस्व । हे पावक ! पापानां शोधक अग्ने ! त्वम् द्युमत् दीप्तियुक्तम् दीप्यस्व ॥ ४ ॥

इति चतुर्थाष्टके प्रथमाध्याये पञ्चदशो वर्गः ॥

[ २४ ]

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥ १ ॥ २ ॥

अग्ने । त्वम् । नः । अन्तमः । उत । त्राता । शिवः । भव । वरूथ्यः ।
वसुः । अग्निः । वसुऽश्रवाः । अच्छ । नक्षि । द्युमत्ऽतमम् । रयिम् । दाः ॥ १ ॥ २ ॥

वेङ्कट० गौपायना ' बन्धु , सुबन्धु , श्रुतबन्धु , विप्रबन्धुरिति क्रमेण' चतसृणामृषयः । अग्ने ! त्वम् अस्माकम् अन्तिकतमोऽपि च रक्षिता भव कल्याणकारी गृहहितः । वसुः वासयिता अग्निः वसुयशाः स त्वम् अस्मान् अभिव्याप्नुहि, दीप्ततमम् रयिम् च देहि ॥ १ ॥ २ ॥

मुद्गल० 'अग्ने न ' इति चतुर्ऋचं दशमं सूक्तम् । 'गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुश्चैकर्चा द्वैपदम्', ( अनु २,५,२४ ) 'विंशतिका द्विपदा विराजः' ( अनु १,१२,८ ) इत्युक्तत्वात् अग्निर्देवता ।

हे अग्ने ! वरूथ्य वरणीय सम्भजनीय त्वम् नः अस्माकम् अन्तमः अन्तिकतमः भव, उत अपि च त्राता रक्षकः शिवः सुखकरश्च भव । वसुः वासकः अग्निः सर्वेषामग्रणी वसुश्रवाः व्याप्तयशस्त्वम् अच्छ आभिमुख्येन नक्षि अस्मान् व्याप्नुहि, द्युमत्तमम् अतिशयेन दीप्तिमन्तम् रयिम् पश्वादिलक्षणं धनम् दाः अस्मभ्यं देहि ॥ १ ॥ २ ॥

१ °कम् अस्मत्कम् भूत्वा २ °मत वि° स्प ३ नास्ति त्रि°

स नो॑ बोधि श्रुधी हव॑मुरुष्या णो॑ अघाय॒तः सम॑स्मात् ।
तं त्वा॑ शोचिष्ठ दीदिवः सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥ ३ ॥ ४ ॥

सः । नः॒ । बो॒धि॒ । श्रु॒धि । हव॑म् । उ॒रु॒ष्य । नः॒ । अ॒घ॒ऽय॒तः । स॒म॒स्मा॒त् ।
तम् । त्वा॒ । शो॒चि॒ष्ठ॒ । दी॒दि॒ऽवः॒ । सु॒म्नाय॑ । नू॒नम् । ई॒म॒हे॒ । सखि॑ऽभ्यः ॥ ३ ॥ ४ ॥

वेङ्कट० सः त्वम् अस्मान् बुध्यस्व, शृणु चाह्वानम्, रक्ष चास्मान् अघमिच्छतः सर्वस्मादपि । तम् त्वा हे शोचिष्ठ[1] दीप्त! सुम्नाय[2] सुखार्थं याचामहे सम्प्रति ॥ ३ ॥ ४ ॥

मुद्गल० हे अग्ने! सः त्वम् नः अस्मान् बोधि बुध्यस्व, हवम् अस्मदीयमाह्वानम् श्रुधि शृणु, अघायतः अघमिच्छतः समस्मात् सर्वस्माज्जनात् नः अस्मान् उरुष्य रक्ष। हे शोचिष्ठ अतिशयेन दीप्तिमन् दीदिवः! हविस्तेजोभिर्दीप्त अग्ने! तम् त्वाम् सुम्नाय सुखाय तदर्थम् सखिभ्यः समानख्यातिभ्यः पुत्रेभ्यः तदर्थं च नूनम् ईमहे याचामहे ॥ ३ ॥ ४ ॥

इति चतुर्थाष्टके प्रथमाध्याये षोडशो वर्गः ॥

[ १५ ]

अच्छा॑ वो अ॒ग्निमव॑से दे॒वं गा॑सि॒ स नो॒ वसु॑ः ।
रास॑त् पु॒त्र ऋ॑षू॒णामृ॒तावा॑ पर्षति द्वि॒षः ॥ १ ॥

अच्छ॑ । वः॒ । अ॒ग्निम् । अव॑से । दे॒वम् । गा॒सि॒ । सः । नः॒ । वसु॑ः ।
रास॑त् । पु॒त्रः । ऋ॒षू॒णाम् । ऋ॒तऽवा॑ । पर्ष॑ति । द्वि॒षः ॥ १ ॥

वेङ्कट० यष्टारः। युष्माकं रक्षणाय स्तम् अग्निम् देवम् अभिगच्छ। सः अस्माकम् वासयिता। स ऋषीणाम् पुत्रः अस्मभ्यमभिमतं प्रयच्छति सत्यकर्मा शत्रूंश्चास्माकं तरति ॥ १ ॥

मुद्गल० 'अच्छा वो अग्निम्' इति नवर्चमेकादशं सूक्तम्। आत्रेया वसुयुनामान ऋषयः। अनुष्टुप् छन्दः। अग्निर्देवता।

हे यष्टारः! व. यूयम् देवम् अग्निम् अवसे रक्षणाय अच्छ गासि अभि प्रगायत। वसुः अग्निहोत्रार्थं यजमानानां गृहे वासयिता सः अग्निः नः अस्मभ्यम् रासत् कामान् ददातु। ऋषूणाम् ऋषीणाम् पुत्रः, ऋषिभिर्मन्थनेन जनितत्वात् पुत्र इत्युपचर्यते, ऋतावा ऋतावान् सत्यवान् सोऽग्निः द्विषः अस्माकं शत्रून् पर्षति पारयतु ॥ १ ॥

स हि स॒त्यो यं पूर्वे॑ चि॒द् दे॒वास॑श्चि॒द् यमी॑धि॒रे ।
होता॑रं म॒न्द्रजि॑ह्व॒मित् सु॑दी॒तिभि॑र्वि॒भाव॑सुम् ॥ २ ॥

1. शोचिष्ठ वि; शोचिष्टम लर्ष; "चिष्ठम वि" मू. 2. "द्भि: वि" लर्ष.

सः । हि । सत्यः । यम् । पूर्वे । चित् । देवासः । चित् । यम् । ईधिरे ।
होतारम् । मन्द्रऽजिह्वम् । इत् । सुदीतिऽभिः । विभाऽवसुम् ॥ २ ॥

वेङ्कट० सः हि सत्यकर्मा, यम् पूर्वे [illegible] ऋषयः समीधिरे यम् देवाः[1] अपि होतारम् मोदनवाचम् एव शोभनदानैर्हविर्भिः विभावसुम् इति ॥ २ ॥

मुद्गल० पूर्वे चित् पूर्वे महर्षयः होतारम् देवानामाह्वातारम् मन्द्रजिह्वम् हविषां प्रदानेन देवानां मादयित्री जिह्वा यस्य [illegible] तम् सुदीतिभिः शोभनदीप्तिभिर्युक्तम् विभावसुम् प्रभाधनम् यम् अग्निम् ईधिरे समैन्धत, देवासः चित् अपि यम् अग्निम् ईधिरे समैन्धत । सः हि अग्निः सत्यः भवति । इत् पूरणः ॥ २ ॥

स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या ।
अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥ ३ ॥

सः । नः । धीती । वरिष्ठया । श्रेष्ठया । च । सुऽमत्या ।
अग्ने । रायः । दिदीहि । नः । सुवृक्तिऽभिः । वरेण्य ॥ ३ ॥

वेङ्कट० सः त्वम् अस्मभ्यं वरणीयतमेन कर्मणा स्वदीयया श्रेष्ठया सुमत्या च अग्ने ! धनानि प्रयच्छ पुनः नः इति पूरणम्, स्तोत्रैरस्मदीयैः वरणीय ! ॥ ३ ॥

मुद्गल० सुवृक्तिभिः स्तुतिभिः स्तूयमान वरेण्य ! वरणीय ! हे अग्ने ! सः त्वम् वरिष्ठया वरतमेन श्रेष्ठया अतिशयेन प्रशस्येन नः धीती धीत्याऽस्मदीयेन परिचरणात्मकेन कर्मणा सुमत्या च शोभनेन च प्रीतः सन् रायः धनानि नः अस्मभ्यम् दिदीहि देहि ॥ ३ ॥

अग्निर्देवेषु राजत्यग्निर्मर्तेष्वाविशन् ।
अग्निर्नो हव्यवाहनोऽग्निं धीभिः सपर्यत ॥ ४ ॥

अग्निः । देवेषु । राजति । अग्निः । मर्तेषु । आऽविशन् ।
अग्निः । नः । हव्यऽवाहनः । अग्निम् । धीभिः । सपर्यत ॥ ४ ॥

वेङ्कट० उभयेषु देवमनुष्येषु आविशन् अग्निः विराजति । सोऽयम् अग्निः[2] अस्माकं हविषां वोढा । तमिमम् अग्निम् पूजयत कर्मभिः ॥ ४ ॥

मुद्गल० यः अग्निः देवेषु राजति, यः अग्निः मर्तेषु आविशन् राजति, यः अग्निः नः अस्माकम् हव्यवाहनः भवति अस्मदीयेषु यज्ञेषु देवार्थं हव्यानां वोढा भवति । हे यजमानाः ! तम् अग्निम् धीभिः स्तुतिभिः सपर्यत परिचरत ॥ ४ ॥

---

१. या वि° लपं. २. नास्ति वि° लपं.

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।
अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ ५ ॥

अग्निः । तुविश्रवःऽतमम् । तुविऽब्रह्माणम् । उत्ऽतमम् ।
अतूर्तम् । श्रवयत्ऽपतिम् । पुत्रम् । ददाति । दाशुषे ॥ ५ ॥

वेङ्कट० अयम् अग्निः अतिशयेन प्रवृद्धकीर्तिं प्रभूतस्तोत्रम् उत्तमम् शत्रुभिः अहिंसितम् श्रावयितॄणां यशस्विनां पतिम् पुत्रम् प्रयच्छति यजमानाय ॥ ५ ॥

मुद्गल० अग्निः तुविश्रवस्तमम् अतिशयेन बहुयशसम् तुविब्रह्माणम् बहुस्तोत्रम् उत्तमम् उत्कृष्टम् अतूर्तम् शत्रुभिरहिंसितम् श्रावयत्पतिम् श्रावयति विश्रुतान् करोति पतीन् पितॄनिति श्रावयत्पतिः तं तथाविधम्[1] पुत्रम् दाशुषे हवींषि दत्तवते यजमानाय ददाति ददातु ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये सप्तदशो वर्गः ॥

अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः ।
अग्निरत्यं रघुष्यदं जेतारमपराजितम् ॥ ६ ॥

अग्निः । ददाति । सत्ऽपतिम् । ससाह । यः । युधा । नृऽभिः ।
अग्निः । अत्यम् । रघुऽस्यदम् । जेतारम् । अपराऽजितम् ॥ ६ ॥

वेङ्कट० अग्निः ददाति सतां पतिं पुत्रम्, यः शत्रून् युद्धेन नृभिः सहते । तथा[2] अग्निः अश्वं क्षिप्रगामिनम् जेतारम् अपराजितम् च प्रयच्छति ॥ ६ ॥

मुद्गल० यः पुत्रः युधा युद्धेन नृभिः परिजनैः ससाह शत्रूनभिभवति, सत्पतिम् सतां पालयितारं तथाविधं पुत्रम् अग्निः ददाति अस्मभ्यं ददातु । किञ्च अग्निः रघुष्यदम् रघुः लघुः स्पदो जवो यस्य तम् जेतारम् शत्रून् अपराजितम् शत्रुभिः अत्यम् अश्वं ददातु ॥ ६ ॥

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ७ ॥

यत् । वाहिष्ठम् । तत् । अग्नये । बृहत् । अर्च । विभावसो इति विभाऽवसो ।
महिषीऽइव । त्वत् । रयिः । त्वत् । वाजाः । उत् । ईरते ॥ ७ ॥

वेङ्कट० यत् तत् वोढृतमं[3] स्तोतॄणाम् अग्नये निहितं तेजः । अथ प्रत्यक्ष.—हे विभावसो! महत् तत् तेजोऽनेन हविषा पूजय । यथा राजस्त्री स्वगृहाद् अलङ्कृत्वा निर्गच्छति, तद्वत् स्तोतॄणां त्वत्तः रयिः उद्गच्छति, वाजाश्च त्वत्त उद्गच्छन्ति ॥ ७ ॥

---

१. तथा° मूको. २. पुत्रस्तथा वि°. ३. वा दृष्टतमं क खं.

मुद्गल० यादृशम् योद्धृतमम् यत् स्तोत्रम् तत् अग्नये क्रियते। अतः हे विभावसो! प्रभाधन अग्ने! बृहत् महान्तं धनं अन्नं अस्मभ्यं प्रयच्छ। यतः त्वत् त्वत्तः सकाशात् महिषी महती रयिः धनम् उत् ईरते उद्गच्छति वाजाः अन्नानि च त्वत् उद्गच्छन्ति। इव पूरणः ॥ ७ ॥

तव द्युमन्तो अर्चयो ग्रावेवोच्यते बृहत् ।
उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः ॥ ८ ॥

तव । द्युऽमन्तः । अर्चयः । ग्रावाऽइव । उच्यते । बृहत् ।
उतो इति । ते । तन्यतुः । यथा । स्वानः । अर्त । त्मना । दिवः ॥ ८ ॥

वेङ्कट० तव दीप्तिमन्तो रश्मयः, ग्रावा शैल इव उच्यते महत्त्वम्[1]। अपि च तव अरण्ये दीप्तस्य शब्दः[2] सर्वं देशं व्याप्नोतीति स्वयमेव यथा मेघानां गर्जितशब्दः ॥ ८ ॥

मुद्गल० हे अग्ने! तव अर्चयः द्युमन्तः दीप्तिमन्तो भवन्ति। बृहत् महान्[3] स्वम्[4] ग्रावेव अभिषवग्रावेव उच्यते स्तूयसे। उतो अपि च त्मना आत्मना दिवः द्योतमानस्य ते तव स्वानः शब्दः तन्यतुः यथा मेघगर्जितमिव अर्त उद्गच्छति ॥ ८ ॥

एवाँ अग्निं वसूयवः सहसानं ववन्दिम ।
स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः ॥ ९ ॥

एव । अग्निम् । वसुऽयवः । सहसानम् । ववन्दिम ।
सः । नः । विश्वाः । अति । द्विषः । पर्षत् । नावाऽइव । सुऽक्रतुः ॥ ९ ॥

वेङ्कट० एवम् अग्निम् वसूयवः नाम्रा[5] वयं बलाधारणशीलं स्तुतवन्तः। सः अस्मान् विश्वाः[6] द्वेष्ट्रीः सेना अति नयतु[7] नावेव सिन्धुं सुकर्मा ॥ ९ ॥

मुद्गल० वसूयवः वसुकामाः वयम्[8] सहसानम् शत्रुनाशकम् अग्निम् ववन्दिम स्तुमः। सुक्रतुः शोभनकर्मा सः अग्निः अस्मान्[9] विश्वाः सर्वान् द्विषः शत्रून् अति पर्षत् अतिपारयतु। कथमिव। नावा साधनेन सिन्धुम् इव ॥ ९ ॥

इति चतुर्थाष्टके प्रथमाध्याये अष्टादशो वर्गः ॥

[ २६ ]

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥१॥
अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया । आ । देवान् । वक्षि । यक्षि । च ॥१॥

१. महत्त्वम् रू. २. नास्ति वि[1] ३. महद् मूको. ४. स्वम् मूको. ५. नाम्रा वि[1], ना रुपं. ६. विश्वान् मूको. ७. नयतु वि[2] रुपं. ८. नास्ति मूको. ९. अस्मत् मूको.

पेङ्कट० निगदव्याख्याता ॥ १ ॥

मुद्गल० 'अग्ने पावक' इति नवर्चं द्वादशं सूक्तम् । वसूयव ऋषयः । गायत्री छन्दः । अग्निर्देवता ।

हे पावक! शोधक! रोचिषा स्वदीप्त्या मन्द्रया देवानां मादयित्र्या जिह्वया च हे देव! द्योतमान अग्ने! देवान् आ वक्षि यज्ञार्थम् आवह[1], यक्षि च तान् यज ॥ १ ॥

तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् । देवाँ आ वीतये वह ॥ २ ॥

तम् । त्वा । घृतस्नो इति घृतऽस्नो । ईमहे । चित्रभानो इति चित्रऽभानो । स्वःऽदृशम् । देवान् । आ । वीतये । वह ॥ २ ॥

पेङ्कट० तम् त्वाम् हे उदकस्य स्रावयितः! याचामहे चित्रदीप्ते! सर्वस्य द्रष्टारम् । त्वमिह देवान् हविर्भक्षणाय आ[2] वह ॥ २ ॥

मुद्गल० हे घृतस्नो! घृतस्य प्रेरक! हे चित्रभानो! चित्रा नानाविधा भानवो रश्मयो यस्य स चित्रभानुः, तस्य सम्बोधनम् । स्वर्दृशम् सर्वद्रष्टारम् तम् तादृशम् त्वा त्वाम् ईमहे याचामहे । अतः वीतये हविषो भक्षणाय देवान् आ वह ॥ २ ॥

वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ३ ॥

वीतिऽहोत्रम् । त्वा । कवे । द्युऽमन्तम् । सम् । इधीमहि । अग्ने । बृहन्तम् । अध्वरे ॥ ३ ॥

पेङ्कट० प्रियमयज्ञम् त्वा[3] कवे! दीप्तिमन्तं दीपयामः अग्ने! महान्तम् अध्वरे ॥ ३ ॥

मुद्गल० हे कवे! क्रान्तदर्शिन्! अग्ने! वीतिहोत्रम् कान्तयज्ञम् द्युमन्तम् दीप्तिमन्तम् बृहन्तम् महान्तम् त्वा त्वाम् अध्वरे यज्ञे वयम् इधीमहि समिद्भिः संदीपयामः ॥ ३ ॥

अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये । होतारं त्वा वृणीमहे ॥ ४ ॥

अग्ने । विश्वेभिः । आ । गहि । देवेभिः । हव्यऽदातये । होतारम् । त्वा । वृणीमहे ॥ ४ ॥

पेङ्कट० अग्ने! यजमानायार्थे "सर्वैः देवैः" सहागच्छ । त्वाम् होतारम् वृणीमहे ॥ ४ ॥

मुद्गल० हे अग्ने! विश्वेभिः सर्वैः देवेभिः देवैः सह त्वम् हव्यदातये हविषां दात्रे यजमानाय तदर्थम् आ गहि यज्ञं प्रति आगच्छ, यतः होतारम् देवानाम् आह्वातारम् त्वा त्वाम् वृणीमहे प्रार्थयामहे ॥ ४ ॥

यजमानाय सुन्वत आग्ने सुवीर्यं वह । देवैरा सत्सि बर्हिषि ॥ ५ ॥

यजमानाय । सुन्वते । आ । अग्ने । सुऽवीर्यम् । वह । देवैः । आ । सत्सि । बर्हिषि ॥ ५ ॥

१. मन मूको. २. नास्ति वि[1]. ३. त्वाम् ऊ. ४-४. सर्वैः वि[1] सर्व.

वेङ्कट० निगदव्याख्याता ॥ ५ ॥

मुद्गल० हे अग्ने! सुन्वते अभिषवं कुर्वते यजमानाय सुवीर्यम् शोभनं बलम् आ वह प्रापय। किञ्च देवैः सह बर्हिषि यज्ञे आ सत्सि आसीद ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये एकोनविंशो वर्गः ॥

समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि । देवानां दूत उक्थ्यः ॥ ६ ॥

सम्ऽइधानः । सहस्रऽजित् । अग्ने । धर्माणि । पुष्यसि । देवानाम् । दूतः । उक्थ्यः ॥ ६ ॥

वेङ्कट० सन्दीप्यमानः हे बहुसहस्रस्य जेतः![1] अग्ने! त्वम् कर्म प्रवर्तयसि देवानां दूतः प्रशस्यः[2] ॥ ६ ॥

मुद्गल० हे सहस्रजित्! सहस्रस्य जेतः अग्ने! समिधानः हविर्भिः समिध्यमानः उक्थ्यः प्रशस्यः त्वम् देवानाम् दूतः सन् धर्माणि नः कर्माणि यज्ञादिक्रियाः पुष्यसि पोषयसि ॥ ६ ॥

न्य१ग्निं जातवेदसं होत्रवाहं यविष्ठ्यम् । दधाता देवमृत्विजम् ॥ ७ ॥

नि । अग्निम् । जातऽवेदसम् । होत्रऽवाहम् । यविष्ठ्यम् । दधात । देवम् । ऋत्विजम् ॥ ७ ॥

वेङ्कट० नि दधात यत्र अग्निम् जातप्रज्ञम् सप्तानां होत्राणां वोढारम् युवतमम् देवम् क्रतौ च यष्टारम् ॥ ७ ॥

मुद्गल० हे यजमानाः! जातवेदसम् जातानि भूतानि वेत्तीति जातवेदाः तम् होत्रवाहम् होत्रस्य यज्ञस्य वोढारम् यविष्ठ्यम् युवतमम् देवम् द्योतमानम् ऋत्विजम् क्रतौ यष्टारम् अग्निम् नि दधात निधत्त ॥ ७ ॥

प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः । स्तृणीत बर्हिरासदे ॥ ८ ॥

प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः । स्तृणीत । बर्हिः । आऽसदे ॥ ८ ॥

वेङ्कट० यज्ञः प्र गच्छतु, अद्य अनुषक्तम् अतिशयेन देवव्यापी । तदर्थमनुषक्तम् बर्हिः आसदनाय स्तृणीत ॥ ८ ॥

मुद्गल० अद्य अस्मिन्नहनि देवव्यचस्तमः देवैः प्रकाशमानैः स्तोतृभिर्व्याप्ततमः यज्ञः यज्ञसाधनं हविः आनुषक् अनुषक्तं यथा भवति तथा प्र एतु देवान् गच्छतु । हे ऋत्विजः! आसदे अग्नेरासदनार्थम् बर्हिः स्तृणीत ॥ ८ ॥

एदं मरुतो अश्विना मित्रः सीदन्तु वरुणः । देवासः सर्वया विशा ॥ ९ ॥

आ । इदम् । मरुतः । अश्विना । मित्रः । सीदन्तु । वरुणः । देवासः । सर्वया । विशा ॥ ९ ॥

---

१. तेज॰ मूको. २. पस्य मूको.

वेङ्कट० मरुतः अश्विनौ मित्रावरुणौ अन्ये च देवाः सर्वैः अनुचरैः सह इदम् बर्हिः अग्ने! आ सीदन्तु ॥९॥

मुद्गल० मरुतः मरुद्गणाः अश्विना अश्विनौ मित्रः सूर्यः वरुणः च देवासः एते सर्वे देवाः सर्वया विशा समस्तेन स्वीयेन परिजनेन सार्धम् इदम् बर्हिः आ सीदन्तु ॥ ९ ॥

इति चतुर्थाष्टके प्रथमाध्याये विंशो वर्गः ।

[ २७ ]

अनस्वन्ता सत्पतिर्मामहे मे गावा चेतिष्ठो असुरो मघोनः ।
त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत ॥ १ ॥

अनस्वन्ता । सत्ऽपतिः । ममहे । मे । गावा । चेतिष्ठः । असुरः । मघोनः ।
त्रैवृष्णः । अग्ने । दशऽभिः । सहस्रैः । वैश्वानर । त्रिऽअरुणः । चिकेत ॥ १ ॥

वेङ्कट० कात्यायनः—'त्रैवृष्ण्यपौरुकुत्स्यौ द्वौ 'त्र्यरुणत्रसदस्यू राजानौ[1] भारतश्चाश्वमेधः' (ऋअ ५,७) इति । तत्र 'त्र्यरुणत्रसदस्यू अतिथिमत्सकाशात्[1] महद् धनं लब्ध्वा वदतः'—'अनस्वन्ता इति'[2] । अनोवहन-योग्यावनड्वाहौ[4] सतां पतिः त्र्यरुणः मह्यम् अददाद्[3] अतिशयेन देवान् प्रति स्तोत्रवतो ज्ञाता निरसिता शत्रूणाम् धनवान् । किञ्चायम् हे अग्ने वैश्वानर! त्रैवृष्ण्यः त्र्यरुणः दशभिः गवां सहस्रैः मह्यं प्रदित्सितैः समागतः प्रादुरभूत् ॥ १ ॥

मुद्गल० 'अनस्वन्ता' इति षडृचं त्रयोदशं सूक्तम् । त्रिवृष्णस्य पुत्रस्त्र्यरुणः पुरुकुत्सस्त्रसदस्युः भरतस्य पुत्र[5] अश्वमेध एते त्रय ऋषयः । नात्मात्मने दद्यादिति सर्वोऽस्त्वत्रिं केचित् । आद्याः तिस्रस्त्रिष्टुभः, शिष्टा अनुष्टुभः । षष्ठी इन्द्राग्निदेवत्या, शिष्टा आग्नेय्यः ।

अग्निः राजर्षीणां दानमन्वेः पुरतोऽनेन सूक्तेनावर्णयत् । हे वैश्वानर अग्ने! सत्पतिः सतां पालयिता चेतिष्ठः ज्ञातृतमः असुरः बलवान् मघोनः धनवान् । त्रैवृष्णः त्रिवृष्णपुत्रः त्र्यरुणः एतन्नामा राजर्षिः अनस्वन्ता अनसा शकटेन संयुक्तौ गावा गावौ अनड्वाहौ गवां हिरण्यादीनां च दशभिः सहस्रैः सह मे मह्यम् ममहे ददौ । स राजर्षिः चिकेत सर्वैर्जनैरनेन दानेन ज्ञायते ॥ १ ॥

यो मे शता च विंशतिं च गोनां हरी च युक्ता सुधुरा ददाति ।
वैश्वानर सुष्टुतो वावृधानोऽग्ने यच्छ त्र्यरुणाय शर्म ॥ २ ॥

यः । मे । शता । च । विंशतिम् । च । गोनाम् । हरी इति । च । युक्ता । सुऽधुरा । ददाति ।
वैश्वानर । सुऽस्तुतः । ववृधानः । अग्ने । यच्छ । त्रिऽअरुणाय । शर्म ॥ २ ॥

---

1-1. "दस्युरा" वि॰ दर्प. २-२. "स्वरग्नि" वि॰. ३. ददति ऊ; दादति दर्प; पादा॰ वि॰. ४-४. "यन्त्राविति वि॰ दर्प. ५. अनुडुहो ऊ. ६. बदा" वि॰. ७. नास्ति मूको.

वेङ्कट० यः मे पूर्वोक्तेभ्योऽधिकं शतानि विंशतिम् च गवाम् अश्वौ च रथे युक्तौ शोभनधूर्वहन-समर्थौ ददाति, तस्मै त्र्यरुणाय हे अग्ने वैश्वानर! मया सुष्ठु स्तुत वर्धमान सुखं प्रयच्छ ॥ २ ॥

मुद्गल० यः त्र्यरुणः शता च शतानि सुवर्णानाम् गोनाम् गवाम् विंशतिम् च युक्ता रथेन युक्तौ सुधुरा सुष्ठु धुरं वहन्तौ हरी अश्वौ च मे मह्यम् ददाति, हे वैश्वानर अग्ने! सुष्टुत अस्माभिः सुष्ठु सम्यक् स्तुतः वावृधानः हविर्भिर्वर्धमानस्त्वं तस्मै त्र्यरुणाय शर्म सुखम् यच्छ प्रयच्छ ॥ २ ॥

एवा ते अग्ने सुमतिं चकानो नविष्ठाय नवमं त्रसदस्युः ।
यो मे गिरस्तुविजातस्य पूर्वीर्युक्तेनाभि त्र्यरुणो गृणाति ॥ ३ ॥

एव । ते । अग्ने । सुऽमतिम् । चकानः । नविष्ठाय । नवमम् । त्रसदस्युः ।
यः । मे । गिरः । तुविऽजातस्य । पूर्वीः । युक्तेन । अभि । त्रिऽअरुणः । गृणाति ॥ ३ ॥

वेङ्कट० एवम् अग्ने! नविष्ठाय तुभ्यं स्तोतव्याम् सुमतिम् त्रसदस्यु[१] चकान भवति, निवेदयतीत्यर्थः । कां[२] सुमतिमित्याह—यो मे इति । यः मम वाच्या गिर[३] बहुपुत्रस पूर्वमुक्ता श्रुत्वा[४] युक्तेन वचने-नायम् त्र्यरुण अभि गृणाति इदं[५] ददामीति वदतीत्यर्थः[६] ॥ ३ ॥

मुद्गल० यः त्र्यरुणः तुविजातस्य बहुप्रख्यातस्य मे पूर्वीः बह्वीः गिरः स्तुतीः श्रुत्वा प्रीतः सन् युक्तेन मनसा अभि गृणाति इव गृहाण 'इदं गृहाण' इति यथा[७] मां ब्रवीति एव एवं हे अग्ने! नविष्ठाय अस्मभ्यं स्तुत्याय ते तुभ्यम् नवमाम् नवतमाम् सुमतिम् स्तुतिम् चकान कामयमानः त्रसदस्युः अपि इव 'गृहाण इदं' गृहाणेति मा प्रार्थितवान् ॥ ३ ॥

यो म इति प्रवोचत्यश्वमेधाय सूरये । दददृचा सनिं यते ददन्मेधामृतायते ॥ ४ ॥

यः । मे । इति । प्रऽवोचति । अश्वऽमेधाय । सूरये ।
ददत् । ऋचा । सनिम् । यते । ददत् । मेधाम् । ऋतऽयते ॥ ४ ॥

वेङ्कट० सेयमेकाश्वमेधस्य[८] । य याचकः मह्यम् इति प्रवोचति अश्वमेधाय प्राज्ञाय, मह्यं दातव्यम् इति वदतीत्यर्थः । तस्मा अयमश्वमेधः ऋचा सनिम् प्रतियाचते देवबलेन धन याचते धन प्रयच्छति, तथा धनप्रदाने मेधाम् प्रयच्छति यज्ञमिच्छते, इत्यात्मस्वभावानुकथनम्[९] अश्वमेधस्य, य[१०] अश्वमेधस्त्र्यरुणाय महद् धनमदात् ॥ ४ ॥

मुद्गल० यः भिक्षमाणोऽर्थी सूरये प्रेरकाय अश्वमेधाय राजर्षये मे मह्यं देहि इति प्रवोचति प्रब्रवीति । योऽश्वमेधं धनानि भिक्षते इत्यर्थः । तथा अग्ने स्तोत्रेण सह यते आत्मनः समीपं गच्छते तस्मा अर्थिनेऽश्वमेध सनिम् धनम् ददत् ददाति[११] । हे अग्ने! ऋतायते यज्ञमिच्छते तस्मा अश्वमेधाय मेधाम् यज्ञविषया प्रज्ञाम् ददत् देहि ॥ ४ ॥

---

१. °स्युम् मूको. २. कम् मूको. ३. याच्ञा गिर नि° ल, याच्ञा गिर लप. ४. नास्ति मूको ५. नास्ति लप. ६-६. नास्ति मूको. ७. तथा मूको ८. सोयमेकाश्व° मूको, सोऽयमेकोऽश्व° इति ल प्रस्ताव. ९. °भ्य मू° मूको १०. यस्य मूको ११. ददातु मूको.

यस्य मा परुषाः शतमुद्धर्षयन्त्युक्षणः। अश्वमेधस्य दानाः सोमा इव त्र्याशिरः ॥५॥

यस्य। मा। परुषाः। शतम्। उत्ऽहर्षयन्ति। उक्षणः।
अश्वऽमेधस्य। दानाः। सोमाःऽइव। त्रिऽआशिरः ॥ ५ ॥

वेङ्कट० ततस्त्र्यरुणो वदति। यस्य अश्वमेधस्य[1] माम् परुषाः बलोत्सिक्ताः शतसंख्याः उक्षणः अध्ययन्तं हर्षयन्ति। तस्य अश्वमेधस्य दानाः सोमाः इव भवन्ति त्र्याशिरः सक्तवः पयो धाना इति सोममिश्रणानि[2] त्रीणि ॥ ५ ॥

मुद्गल० यस्य येन अश्वमेधस्य अश्वमेधेन दानाः दत्ताः परुषाः कामानां पूरकाः शतम् उक्षणः उक्षाणो बलीवर्दाः मा माम् उद्धर्षयन्ति उत्कर्षेण हर्षयन्ति। हे अग्ने! ते उक्षाणः त्र्याशिरः दधिसक्तुपयोरूपाशिस्त्र आशिरोऽधिश्रयणसाधनभूता येषां ते त्र्याशिरः सोमाः इव तव प्रीणनाय भवन्तु ॥ ५ ॥

इन्द्राग्नी शतदाव्न्यश्वमेधे सुवीर्यम्। क्षत्रं धारयतं बृहद् दिवि सूर्यमिवाजरम् ॥६॥

इन्द्राग्नी इति। शतदाव्नि। अश्वऽमेधे। सुऽवीर्यम्।
क्षत्रम्। धारयतम्। बृहत्। दिवि। सूर्यम्ऽइव। अजरम् ॥ ६ ॥

वेङ्कट० निगदव्याख्याता। क्षत्रम् ( निघ २,१० ) इति धननामेति। अश्वमेधेनान्येभ्यो दीयमानेन धनेन तुष्यति त्र्यरुणः [3]इत्यपरो मन्त्रः इति[3] ॥ ६ ॥

मुद्गल० हे इन्द्राग्नी! शतदाव्नि शतम् अपरिमितम् अर्थिभ्यो धनं ददाति इति शतदावा तस्मिन् अश्वमेधे राजर्षौ सुवीर्यम् शोभनवीर्यसहितम् बृहत् महत् अजरम् जरारहितम् क्षत्रम् धनम् धारयतम् निधारयतम्। कथमिव। दिवि अन्तरिक्षे सूर्यम् इव ॥ ६ ॥

इति चतुर्थाष्टके प्रथमाध्याये एकविंशो वर्गः ॥

[२८]

समिद्धो अग्निर्दिवि शोचिरश्रेत् प्रत्यङ्ङुषसमुर्विया वि भाति।
एति प्राची विश्ववारा नमोभिर्देवाँ ईळाना हविषा घृताची ॥ १ ॥

सम्ऽइद्धः। अग्निः। दिवि। शोचिः। अश्रेत्। प्रत्यङ्। उषसम्। उर्विया। वि। भाति।
एति। प्राची। विश्वऽवारा। नमःऽभिः। देवान्। ईळाना। हविषा। घृताची ॥ १ ॥

वेङ्कट० विश्ववारा। सूर्यं[4] तिरोहितं[5] अग्निः उषसम् अजनयत् तत आत्रेय्युषा विश्ववारोच्यते। अग्निः उषसि

१. नास्ति वि॰. २. °मिश्राणि ख मूको. ३-३. °रमन्त इति वि॰ मूको; °रमन्त्रमिति ख.
४. न सू॰ वि॰ मूको. ५. नास्ति वि॰ मूको.

समिद्धः, तथा दिवि च श्रौपसं तेजः श्रयति । सूर्यश्च महान् उपगम् प्रकाशयति 'अभिमुखः । तथा सर्वैर्वरणीया उषाश्च' अभिमुखम् आगच्छति पुरस्तात् प्रबुद्धानां देवविषयैर्नमस्कारैः सह देवान् स्तुवती हविषा सह घृतं धारयन्ती, प्रयन्ती प्रवर्तयन्ती' यज्ञमित्यर्थः ॥ १ ॥

मुद्गल० 'समिद्धो अग्निः' इति षड्ऋचं चतुर्दशं सूक्तम् । अत्रिगोत्रोत्पन्ना विश्ववारानामिका ऋषिः । आद्यातृतीये त्रिष्टुभौ, द्वितीया जगती, चतुर्थ्यनुष्टुप्, अन्त्ये गायत्र्यौ । अग्निर्देवता ।

समिद्धः सम्यक् दीप्तः अग्निः दिवि अन्तरिक्षे शोचिः तेजः अश्रेत् श्रयति । तथा उषसम् प्रत्यङ् उषसमभिमुखः सन् उर्विया उरु विस्तीर्णम्' वि भाति विशेषेण भ्राजते । नमोभिः स्तोत्रैः देवान् ईळाना स्तुवती हविषा पुरोडाशादिलक्षणेन युक्तया घृताची घृतवत्या स्रुचा सहिता विश्ववारा सर्वमपि पापरूपं शत्रुं वारयित्री एतन्नामिका प्राची प्राङ्मुखी सती एति एवंभूतम् अग्निं प्रति गच्छति ॥ १ ॥

समिध्यमानो अमृतस्य राजसि हविष्कृण्वन्तं सचसे स्वस्तये ।
विश्वं स धत्ते द्रविणं यमिन्वस्यातिथ्यमग्ने नि च धत्त इत्पुरः ॥ २ ॥

सम्ऽइध्यमानः । अमृतस्य । राजसि । हविः । कृण्वन्तम् । सचसे । स्वस्तये ।
विश्वम् । सः । धत्ते । द्रविणम् । यम् । इन्वसि । आतिथ्यम् । अग्ने । नि । च । धत्ते । इत् । पुरः ॥

वेङ्कट० दीप्यमानः त्वम् अमृतस्य ईश्वरो भवसि हविः कृण्वन्तम् सेवसे अविनाशाय । सः विश्वम् धनं धारयति यम् त्वं व्याप्नोषि तथाऽतिथीनां योग्यम् अन्नादिकं च अग्ने! अतिथीनाम् अग्रतो नि धत्ते एव' ॥ २ ॥

मुद्गल० हे अग्ने! समिध्यमानः सम्यग्दीप्यमानस्त्वम् अमृतस्य उदकस्य राजसि ईशिषे । तथा हविः कृण्वन्तम् पुरोडाशादिहविष्कर्तारं यजमानम् स्वस्तये अविनाशाय सचसे सेवसे । किञ्च यम् यजमानम् इन्वसि गच्छसि सः यजमानः विश्वम् समस्तम् द्रविणम् पश्वादिलक्षणं धनम् धत्ते धारयति । अपि च हे अग्ने! आतिथ्यम् अतिथिरूपस्य तव योग्यं हविः पुरः इत् तव पुरस्तादेव नि धत्ते च स्थापयति च ॥ २ ॥

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥ ३ ॥

अग्ने । शर्ध । महते । सौभगाय । तव । द्युम्नानि । उत्ऽतमानि । सन्तु ।
सम् । जाःऽपत्यम् । सुऽयमम् । आ । कृणुष्व । शत्रुऽयताम् । अभि । तिष्ठ । महांसि ॥ ३ ॥

वेङ्कट० अग्ने! अस्माकमभ्युदयाय महते उद्युक्तो भव । तव अन्नानि' उत्तमानि अस्मासु भवन्तु । धनप्रदानेन जायापत्योर्द्वन्द्वम् सुष्ठु संयुक्तं सम् आ कुरु, मां च जायां च सहितौ कुरु । शत्रुत्वमिच्छतां च तेजांसि अभि तिष्ठ ॥ ३ ॥

---

१-१. नास्ति वि॰ लपं॰.　२. नास्ति वि॰.　३. विस्तीर्णः मूको॰.　४. त्वम् वि॰ लपं॰.
५. °नि द्युम्नानि वि॰.

मुद्गल० हे अग्ने! त्वम् महते प्रभूताय सौभगाय अस्माकं शोभनधनत्वाय शर्धं शत्रून् सहस्व। तथा सम्बन्धीनि द्युम्नानि धनानि उत्तमानि उत्कृष्टानि सन्तु भवन्तु। हे अग्ने! त्वम् जास्पत्यम् जाया च पतिः जायापती तयोः कर्म जास्पत्यम् तत् सुयमम् सुष्ठु नियमनोपेतम् सम् आ कृणुष्व सम्यक् कुरुष्व। अपि च शत्रूयताम् शत्रुम्[1] आत्मन इच्छतां सपत्नानाम् महांसि तेजांसि अभि तिष्ठ आक्रमस्व ॥ ३ ॥

समिद्धस्य प्रमहसोऽग्ने वन्दे तव श्रियम्।
वृषभो द्युम्नवाँ असि समध्वरेष्विध्यसे ॥ ४ ॥

समऽइद्धस्य। प्रऽमहसः। अग्ने। वन्दे। तव। श्रियम्।
वृषभः। द्युम्नऽवान्। असि। सम्। अध्वरेषु। इध्यसे ॥ ४ ॥

वेङ्कट० सन्दीप्तस्य प्रकृष्टतेजसः अग्ने! स्तौमि तव कान्तिम्। स त्वं वर्षिता कामानां धनवान् असि यज्ञे च सम् इध्यसे ॥ ४ ॥

मुद्गल० हे अग्ने! समिद्धस्य सम्यग् इद्धस्य प्रमहसः प्रकृष्टतेजसः तव सम्बन्धिनीम् श्रियम् दीप्तिम् वन्दे अहं यजमानः स्तौमि। वृषभः कामानां वर्षिता त्वम् द्युम्नवान् असि धनवान् भवसि, अध्वरेषु यज्ञेषु सम् इध्यसे सम्यग् दीप्यसे ॥ ४ ॥

समिद्धो अग्न आहुत देवान् यक्षि स्वध्वर। त्वं हि हव्यवाळसि ॥ ५ ॥

समऽइद्धः। अग्ने। आऽहुत। देवान्। यक्षि। सुऽअध्वर। त्वम्। हि। हव्यऽवाट्। असि ॥ ५ ॥

वेङ्कट० निगदसिद्धा ॥ ५ ॥

मुद्गल० हे आहुत! यजमानैः समन्तात् हुत! हे स्वध्वर! शोभनयज्ञोपेत! अग्ने! समिद्धः सम्यक् दीप्तः त्वम् देवान् इन्द्रादीन् यक्षि यजस्व। हि यस्मात् कारणात् हे अग्ने! त्वम् हव्यवाट् असि हव्यानां वोढा भवसि। अतः कारणात् देवान् यजस्व इति सम्बन्धः ॥ ५ ॥

आ जुहोता दुवस्यताग्निं प्रयत्यध्वरे। वृणीध्वं हव्यवाहनम् ॥ ६ ॥

आ। जुहोत। दुवस्यत। अग्निम्। प्रऽयति। अध्वरे। वृणीध्वम्। हव्यऽवाहनम् ॥ ६ ॥

वेङ्कट० प्रयति वर्तमाने यज्ञे आ जुहुत, 'यजध्वं नैति यस्मै कामाय समिन्धिद्ध्वम्' इति वाजसनेयकम् (वाज २,३,४,२९), देवान्, अग्निं हव्यवाहनत्वाय वृणीध्वम्, न कव्यवाहनं नाप्यसुराणाम्, अग्निम् सहरक्षसमिति ॥ ६ ॥

मुद्गल० हे ऋत्विजः! यूयम् अध्वरे अस्मदीययागे प्रयति प्रवृत्ते सति हव्यवाहनम् अग्निम् आ जुहोत आ समन्तात् जुहोत, तथा दुवस्यत परिचरत, वृणीध्वम् सम्भजध्वम् च ॥ ६ ॥

इति चतुर्थाष्टके प्रथमाध्याये द्वाविंशो वर्गः ॥

---

१. नास्ति मूको.

[ २९ ]

त्र्य॑र्य॒मा मनु॑षो दे॒वता॑ता॒ त्री रो॑च॒ना दि॒व्या धा॑रयन्त ।
अर्च॑न्ति त्वा म॒रुतः॑ पू॒तद॑क्षा॒स्त्वमे॑षा॒मृषि॑रिन्द्रासि॒ धीरः॑ ॥ १ ॥

त्री । अ॒र्य॒मा । मनु॑षः । दे॒वऽता॑ता । त्री । रो॒च॒ना । दि॒व्या । धा॒र॒य॒न्त॒ ।
अर्च॑न्ति । त्वा॒ । म॒रुतः॑ । पू॒तऽद॑क्षाः । त्वम् । ए॒षा॒म् । ऋषिः॑ । इ॒न्द्र॒ । अ॒सि॒ । धीरः॑ ॥ १ ॥

वेङ्कट० गौरिवीतिः शाक्त्यः । अर्यमशब्दः प्रेरयितृवचनः । मनुष्यं यज्ञे त्रीणि तेजांस्यग्न्यादीनि प्रेरयन्ति । तथा त्रीण्येव तान्यन्तरिक्षस्थानि सर्वदा[1] वर्तन्ते । तथा मरुतः च शुद्धबलाः स्वकार्यं कुर्वाणाः त्वां[2] पूजयन्ति । हे इन्द्र ! त्वम् एषाम् अस्मादीनां न्यूनातिरिक्तावेक्षणं प्रभुः सन् करोषि प्राज्ञः ॥ १ ॥

मुद्गल० 'त्र्यर्यमा' इति पञ्चदशर्चं पञ्चदशं सूक्तम् । शक्तिगोत्रोत्पन्नो गौरिवीतिर्नाम ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता मण्डलादिपरिभाषया निवृत्तत्वात् । 'उशना यत्सहस्यैः' इति पादः औशनसः '[3]ऐन्द्रो वा[3]' ।

मनुषः मनोः सम्बन्धिनि देवताता देवतातौ यज्ञे त्री त्रीणि अर्यमा अर्यमाणि यानि तेजांसि सन्ति, तथा त्री त्रीणि रोचना रोचमानानि वाय्वग्निसूर्यात्मकानि दिव्या दिव्यानि अन्तरिक्षे भवानि, तानि तेजांसि धारयन्त मरुतः धारयन्ति । पूतदक्षाः शुद्धबलाः मरुतः त्वा त्वाम् अर्चन्ति स्तुवन्ति । हे इन्द्र ! धीरः धीमान् त्वम् एषाम् मरुताम् ऋषिः असि द्रष्टा भवसि ॥ १ ॥

अनु॒ यदीं॑ म॒रुतो॑ मन्दसा॒नमार्च॒न्निन्द्रं॑ पपि॒वांसं॑ सु॒तस्य॑ ।
आद॑त्त॒ वज्र॑म॒भि यदहिं॒ ह॒न्नपो॑ य॒ह्वीर॑सृज॒त् सर्त॒वा उ॑ ॥ २ ॥

अनु॑ । यत् । ई॒म् । म॒रुतः॑ । म॒न्द॒सा॒नम् । आर्च॑न् । इन्द्र॑म् । प॒पि॒ऽवांस॑म् । सु॒तस्य॑ ।
आ । अ॒द॒त्त॒ । वज्र॑म् । अ॒भि । यत् । अहि॑म् । हन् । अ॒पः । य॒ह्वीः । अ॒सृ॒ज॒त् । सर्त॒वै । ऊँ इति॑ ॥ २ ॥

वेङ्कट० यदेनम् इन्द्रम् मोदमानं सोमं पपिवांसम् मरुतः सोमपानानन्तरमाहुः 'प्र भर मघवो जहि वीरयस्व' ( ऐब्रा ३,२० ) इति, तदानीम् वज्रम् अभि आ अदत्त । यदाऽयमिन्द्रः अहिम् हतवान् तेन वज्रेण, अथाहिं हत्वा वह्वीः अपः सरणाय असृजत् ॥ २ ॥

मुद्गल० यत् यदा मरुतः मन्दसानम् तृप्यन्तम् सुतस्य अभिषुतं सोमम् पपिवांसम् पीतवन्तम् ईम् एनम् इन्द्रम् अनु आर्चन् अन्वस्तुवन्, तदा इन्द्रः वज्रम् आ अदत्त आददौ । ततः यत् यदा अहिम् वृत्रम् अभि हन् अभिहतवान्, तदा यह्वीः महतीः अपः वृत्रेण निरुद्धानि उदकानि सर्तवै स्वैरत्वेन सर्तुं गन्तुम् असृजत् निरोधात् अमुञ्चत् । उ पूरणः ॥ २ ॥

उ॒त ब्र॑ह्माणो मरुतो मे अ॒स्येन्द्रः॒ सोम॑स्य॒ सुषु॑तस्य पेयाः ।
तद्धि ह॒व्यं मनु॑षे॒ गा अवि॑न्द॒दह॒न्नहिं॑ पपि॒वाँ इन्द्रो॑ अस्य ॥ ३ ॥

१. नास्ति क छपं. २. त्वा वा वि॰. ३-३. ऐन्द्रो देवता मूको.

उत । ब्रह्माणः । मरुतः । मे । अस्य । इन्द्रः । सोमस्य । सुऽसुतस्य । पेयाः ।
तत् । हि । हव्यम् । मनुषे । गाः । अविन्दत् । अहन् । अहिम् । पपिऽवान् । इन्द्रः । अस्य ॥३॥

वेङ्कट० अपि च हे ब्राह्मणाः हे मरुतः! मम इमं सोमं सुष्ठु सुतम् इन्द्रः पिबतु। तत् हि सोमाख्यं हविः मनुष्यार्थम् पणिभिरपहृतान् पशून् अविन्दत्। तथा अहिम् च इमं पीत्वा जघान इन्द्रः ॥ ३ ॥

मुद्गल० उत अपि च हे ब्रह्माणः! ऋत्विजो हे मरुतः! यूयम् इन्द्रः च सुसुतस्य सुष्ठ्वभिषुतस्य मे मदीयस्य अस्य सोमस्य इमं सोमम् पेयाः पिबत। तत् हि तत्खलु हव्यम् युष्माभिः पीतं सोमात्मकं हविः मनुषे मनुष्याय यजमानाय गाः धेनूः अविन्दत् वेदयति। यजमानं गाः लम्भयतीत्यर्थः। किञ्च अस्य इमं सोमम् पपिवान् पीतवान् इन्द्रः अहिम् वृत्रम् अहन् अवधीत् ॥ ३ ॥

आद् रोदसी वितरं वि ष्कभायत् संविव्यानश्चिद् भियसे मृगं कः ।
जिगर्तिमिन्द्रो अपजर्गुराणः प्रति श्वसन्तमव दानवं हन् ॥ ४ ॥

आत् । रोदसी इति । विऽतरम् । वि । स्कभायत् । सम्ऽविव्यानः । चित् । भियसे । मृगम् । करिति कः ।
जिगर्तिम् । इन्द्रः । अपऽजर्गुराणः । प्रति । श्वसन्तम् । अव । दानवम् । हन्निति हन् ॥ ४ ॥

वेङ्कट० सोमपानानन्तरमेव द्यावापृथिवी पुरा अत्यन्तं विश्लिष्टम्[1] वि स्कभायत् स्थापितवान्, अधः पृथिवीम् उपरि द्याम्। तथा बलिनं सिंहादिकम् अरण्येनाच्छादयन् भयाय करोति। भीतो यथा जनपदे न निर्गच्छति। तथा गरणशीलम् अपबाधमानः[2] इन्द्रः[3] श्वसन्तम् वृत्रम् प्रति अव हन् प्रतिमुखं गत्वा भूम्याम् अचूर्णयत् ॥ ४ ॥

मुद्गल० इन्द्रः आत् सोमपानानन्तरम् रोदसी द्यावापृथिव्यौ वितरम् अतिशयेन वि स्कभायत् व्यस्तम्भात् चलनरहिते अकरोत्। संविव्यानः चित् संवृण्वान एव इन्द्रः मृगम् मृगवत्पलायमानं वृत्रम् भियसे भयाय कः अकार्षीत्। इन्द्रः जिगर्तिम् गिरन्तमाच्छादयन्तम् श्वसन्तम् भयार्थं श्वासं कुर्वन्तम् दानवम् दनोः पुत्रम् अपजर्गुराणः आच्छादनात् विमोचयन् प्रति प्रतिगत्य अव हन् अवहतवान् ॥ ४ ॥

अध क्रत्वा मघवन् तुभ्यं देवा अनु विश्वे अददुः सोमपेयम् ।
यत् सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतशे कः ॥ ५ ॥

अध । क्रत्वा । मघऽवन् । तुभ्यम् । देवाः । अनु । विश्वे । अददुः । सोमऽपेयम् ।
यत् । सूर्यस्य । हरितः । पतन्तीः । पुरः । सतीः । उपराः । एतशे । करिति कः ॥ ५ ॥

वेङ्कट० अथ तव महताऽनेन कर्मणा हे मघवन्! तुभ्यम् सर्वे देवाः राज्ञ इव करम्, सोमपानम्

1. विश्लिष्टं वि°. 2. °माने मूको. 3. नास्ति मूको.

अनु अददुः, [1]यदा सूर्यस्य अश्वाः[1] सर्वदा गच्छन्तीः सूर्यस्य पुरोभागे वर्तमाना एतशस्य विजयार्थं तस्मिन्नृपो उस्राः कृतवानसि सूर्मोदादाय तत्र स्थापितवानसि ॥ ५ ॥

मुद्गल० अप अपि च हे मघवन्! धनवन् इन्द्र! क्रत्वा क्रतुना त्वदीयेन कर्मणा विश्वे सर्वे देवाः अग्न्यादयः तुभ्यम् त्वदर्थम् सोमपेयम् सोमपानम् अनु आनुपूर्व्येण अददुः दत्तवन्तः। ततः प्रभृति इन्द्रो देवेभ्यः सर्वेभ्योऽधिकोऽभवदित्यर्थः। हे इन्द्र! यत् यस्त्वम् पतन्तीः आगच्छन्तीः पुरः सतीः पुरस्ताद् भवन्तीः सूर्यस्य सम्बन्धिनीः हरितः वडवाः उस्राः उपरताः मन्दगतीः एतशे एतशाख्याय ऋषये कः अकार्षीः ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये त्रयोविंशो वर्गः ॥

नव यदस्य नवतिं च भोगान्त्साकं वज्रेण मघवा विवृश्चत् ।
अर्चन्तीन्द्रं मरुतः सधस्थे त्रैष्टुभेन वचसा बाधत द्याम् ॥ ६ ॥

नव । यत् । अस्य । नवतिम् । च । भोगान् । साकम् । वज्रेण । मघऽवा । विऽवृश्चत् ।
अर्चन्ति । इन्द्रम् । मरुतः । सधऽस्थे । त्रैस्तुभेन । वचसा । बाधत । द्याम् ॥ ६ ॥

वेङ्कट० नव नवतिम् च अस्य मरुत्वतः शम्बरस्य भोगायतनानि[2] पुराणि युगपदेव वज्रेण यदा मघवा विवृश्चत्, तदानीम् अर्चन्ति इन्द्रम् मरुतः अन्तरिक्षे। तत्र मरुद्भिरुच्यमानेन वीर्यहेतुना त्रैष्टुभेन स्तुतिवचनेन प्रवृद्धवीर्य इन्द्रो[3] दीप्तमहिं बाधितवानिति ॥ ६ ॥

मुद्गल० यत् यदा मघवा धनवानिन्द्रः अस्य शम्बरस्य सम्बन्धीनि नव नवसंख्याकानि नवतिम् च नवतिसंख्याकानि च भोगान् पुराणि साकम् युगपदेव वज्रेण विवृश्चत् अभिनत्, तदा मरुतः सधस्थे सहस्थाने स्थितम् इन्द्रम् त्रैष्टुभेन त्रिष्टुप्छन्दस्केन वचसा वाग्रूपेण स्तोत्रेण अर्चन्ति अस्तुवन्। इन्द्रः एवंस्तुतः सन् द्याम् मरुद्भिः प्रयुज्यमानेन मन्त्रेण दीप्तं शम्बराख्यमसुरम् बाधत अबाधत ॥ ६ ॥

सखा सख्ये अपचत्तूयमग्निरस्य क्रत्वा महिषा त्री शतानि ।
त्री साकमिन्द्रो मनुषः सरांसि सुतं पिबद्वृत्रहत्याय सोमम् ॥ ७ ॥

सखा । सख्ये । अपचत् । तूयम् । अग्निः । अस्य । क्रत्वा । महिषा । त्री । शतानि ।
त्री । साकम् । इन्द्रः । मनुषः । सरांसि । सुतम् । पिबत् । वृत्रऽहत्याय । सोमम् ॥ ७ ॥

वेङ्कट० सखा सख्ये अपचत् यत् क्षिप्रम् अग्निः इन्द्रस्य कर्मणा अहिहननेन हेतुना त्रीणि शतानि महिषान्। तथा मनुषः यजमानस्य त्रीणि सरांसि यथा पूर्णानि भवन्ति तथा[4] सुतम् इन्द्रः साकम् अपिबत् वृत्रहननाय सोमम् इति ॥ ७ ॥

1-1. यदा त्वा सर्वैः स्वरनास्वाः वि[?] लपं; यदा सर्वैः स्वरनास्वाः द्र. 2. भोगाय तानि मूको.
3. नास्ति लपं. 4. यथा वि[?] लपं.

मुद्गल० सखा इन्द्रस्य मित्रभूतः अग्निः महिषा महिषाणां पशूनाम् त्री त्रीणि शतानि सख्ये मित्रभूतस्य इन्द्रस्य क वा कर्मणा[1] निमित्तभूतेन तूयम् क्षिप्रम् अपचत् पपाच। किञ्च इन्द्रः मनुषः मनोः सम्बन्धीनि त्री त्रीणि सरांसि पात्राणि पूतभृदाधवनीयद्रोणकलशसंज्ञानि, तेषु संस्थितम् सुतम् अभिषुतम् सोमम् साकम् युगपदेव वृत्रहत्याय वृत्रहननाय पिबत् अपिबत् ॥ ७ ॥

त्री यच्छता महिषाणामघो मास्त्री सरांसि मघवा सोम्यापाः ।
कारं न विश्वे अह्वन्त देवा भरमिन्द्राय यदहिं जघान ॥ ८ ॥

त्री । यत् । शता । महिषाणाम् । अघः । माः । त्री । सरांसि । मघऽवा । सोम्या । अपाः ।
कारम् । न । विश्वे । अह्वन्त । देवाः । भरम् । इन्द्राय । यत् । अहिम् । जघान ॥ ८ ॥

वेङ्कट० यदा त्रीणि शतानि महिषाणाम् अभक्षयत् इन्द्रो मांसम्, यदा वा त्रीणि सरांसि सोममयानि अपिबत्। अथ शङ्खमिव विश्वे देवाः भरम् अपि अह्वयन्त इन्द्रार्थम्, यदा अहिम् हतवानसाविति। भरश्च शङ्खवत् वाद्यविशेषः[2] ॥ ८ ॥

मुद्गल० हे इन्द्र! त्वम् यत् यदा त्री त्रयाणाम् शता शतसंख्याकानाम् महिषाणाम् पशूनाम् माः मांसानि अघः भक्षितवानसि। यदा च मघवा धनवांस्त्वम् सोम्या सोममयानि त्री त्रीणि सरांसि पात्राणि अपाः पीतवानसि। यत् यदेन्द्रः अहिम् वृत्रम् जघान हतवान्। तदा विश्वे सर्वे देवाः भरम् सोमपानादिना पूर्णम् इन्द्राय इन्द्रं युद्धार्थम् अह्वन्त आह्वयन्त। दृष्टान्तः। कारम् न स्वामिनः कर्मकरमिव तद्वत् ॥ ८ ॥

उशना यत् सहस्यैरयातं गृहमिन्द्र जूजुवानेभिरश्वैः ।
वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णम् ॥ ९ ॥

उशना । यत् । सहस्यैः । अयातम् । गृहम् । इन्द्र । जूजुवानेभिः । अश्वैः ।
वन्वानः । अत्र । सऽरथम् । ययाथ । कुत्सेन । देवैः । अवनोः । ह । शुष्णम् ॥ ९ ॥

वेङ्कट० हे इन्द्र! त्वं च उशना च यदा बलकारणोर्वेगवद्भिः अश्वैः कुत्सस्य गृहम् अगच्छतम्। वनोतिर्वधकर्मा। अत्र कुत्सस्य सख्येन शुष्णम् हन्तुकामः देवैः च एक रथम् आस्थाय[3] ययाथ, हतवानसि च तं धानान्तरम् शुष्णम् ॥ ९ ॥

मुद्गल० यत् यदा हे इन्द्र! त्वम् उशना काव्यश्च सहस्यैः अभिभवनशीलैः जूजुवानेभिः गच्छद्भिः अश्वैः कुत्सस्य गृहम् अयातम् आगच्छताम्, तदा हे इन्द्र! त्वम् अत्र अस्मिन् काले वन्वानः बाधमानः[4] हिंसन् कुत्सेन देवैः च सह सरथम् ययाथ जगन्थ। किञ्च शुष्णम् एतन्नामानमसुरम् अवनोः ह अहिंसीः खलु ॥ ९ ॥

---

१. कर्माणि मूको. २. वाद्यमन्यमन्यविशेषः मूको. ३. आस्य मूको. ४. भाति मूको.

प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यद् वरिवो यातवेऽकः ।
अनासो दस्यूँरमृणो वधेन नि दुर्योण आवृणङ्मृध्रवाचः ॥ १० ॥

प्र । अन्यत् । चक्रम् । अवृहः । सूर्यस्य । कुत्साय । अन्यत् । वरिवः । यातवे । अकः ।
अनासः । दस्यून् । अमृणः । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचः ॥ १० ॥

वेङ्कट० प्र अवृहः द्रष्टव्यार्थम्[1] अन्यत् चक्रम् । अथ अन्यत् सूर्यरथस्य चक्रम् कुत्साय धनस्य आगमनाय कृतवानसि । तथ शुष्णासुरान् अननशीलान् असवः दस्यून् तेन चक्रेण हननसाधनेन हतवानसि । मृणिः हिंसाकर्मा । दुर्योणाख्ये देशे निर्हिंसितवानसि पदस्याघस्तानिति ॥ १० ॥

मुद्गल० हे इन्द्र! पूर्वं द्विचक्रस्य सूर्यस्य अन्यत् एकम् चक्रम् प्र अवृहः पृथक् चकर्थ । अन्यत् एकं चक्रम् कुत्साय कुत्सस्य वरिवः धनम् यातवे प्राप्तुम् अकः अकार्षीः । किञ्च अनासः आस्यरहितान् अशब्दान् मूकान् दस्यून् असुरान् वधेन आयुधेन वज्रेण अमृणः अहिंसीः । दुर्योणे सङ्ग्रामे मृध्रवाचः हिंसितवागिन्द्रियान् असुरान् नि अवृणक् नितरां छिन्नवान् असि ॥१०॥

इति चतुर्थाष्टके प्रथमाध्याये चतुर्विंशो वर्गः ॥

स्तोमासस्त्वा गौरिवीतेरवर्धन्नरन्धयो वैदथिनाय पिप्रुम् ।
आ त्वामृजिश्वा सख्याय चक्रे पचन् पक्तीरपिबः सोममस्य ॥ ११ ॥

स्तोमासः । त्वा । गौरिऽवीतेः । अवर्धन् । अरन्धयः । वैदथिनाय । पिप्रुम् ।
आ । त्वाम् । ऋजिश्वा । सख्याय । चक्रे । पचन् । पक्तीः । अपिबः । सोमम् । अस्य ॥११॥

वेङ्कट० स्तोत्राणि त्वाम् गौरिवीतेः मम स्वभूतानि अवर्धयन्त[2] । वशामनयः त्वं विदथिनः पुत्राय ऋजिश्वने पिप्रुम् नाम शत्रुम् । अथ त्वाम् ऋजिश्वा सख्याय आ चक्रे तुभ्यं पक्तव्यानि हवींषि पचन्, त्वम् च अस्य[3] अपिबः सोमम् ॥ ११ ॥

मुद्गल० हे इन्द्र! गौरिवीतेः एतन्नामकस्य मम सम्बन्धिनः स्तोमासः स्तोत्राणि त्वा त्वाम् अवर्धन् वर्धयन्तु । वैदथिनाय विदथिनः पुत्राय ऋजिश्वनाम्ने पिप्रुम् एतन्नामकमसुरम् अरन्धयः वशमनयः । हे इन्द्र! ऋजिश्वनामा कश्चिदृषिः सख्याय तव सखित्वाय पक्तीः पक्तव्यानि पुरोडाशादीनि पचन् पाकं कुर्वन् त्वाम् आ चक्रे अभिमुखीचकार । किञ्च त्वम् अस्य ऋजिश्वनः सम्बन्धिनम् सोमम् अपिबः अपाः ॥ ११ ॥

नवग्वासः सुतसोमास इन्द्रं दशग्वासो अभ्यर्चन्त्यर्कैः ।
गव्यं चिदूर्वमपिधानवन्तं तं चिन्नरः शशमाना अप व्रन् ॥ १२ ॥

१. °वहः क. २. °वर्ध° मूको. ३. नास्ति वि° ऋष.

नवऽग्वासः । सुतऽसोमासः । इन्द्रम् । दशऽग्वासः । अभि । अर्चन्ति । अर्कैः ।
गव्यम् । चित् । ऊर्वम् । अपिधानऽवन्तम् । तम् । चित् । नरः । शशमानाः । अप । व्रन् ॥ १२ ॥

वेङ्कट० यथासत्रेण यन्तोऽङ्गिरसः केचन नवसु माससु उदतिष्ठन्, दशसु केचित्, तेन नवग्वाः च दशग्वाः च भवन्ति । ते सुतसोमाः इन्द्रम् स्तोत्रैः अभि अर्चन्ति । तथा कृत्वा गोसङ्घं च महान्तम् अपिधानवन्तम् पणिभिराहृतम् तम् अङ्गिरसस्त्वां परिचरन्तः अप व्रन् विवृतद्वारं कृतवन्तः ॥ १२ ॥

मुद्गल० नवग्वासः यागमनुतिष्ठन्तो नवभिर्मासैः समाप्य गताः ते नवग्वाः, दशग्वासः दशभिः मासैः समाप्य गतास्ते दशग्वाः । एते उभयविधाः अङ्गिरसः सुतसोमासः अभिषुतसोमाः सन्तः इन्द्रम् अर्कैः अर्चनीयैः स्तोत्रैः अभि अर्चन्ति अभिष्टुवन्ति । तथा शशमानाः स्तुवन्तः नरः नेतारोऽङ्गिरसः अपिधानवन्तम् बलेनासुरेणाच्छादितवन्तम् तम् चित् बहुषु प्रदेशेषु प्रसिद्धमपि गव्यम् चित् गोसम्बन्धिनमपि ऊर्वम् समूहम् अप व्रन् अपावृण्वन् ॥ १२ ॥

कथो नु ते परि चराणि विद्वान् वीर्या मघवन् या चकर्थ ।
या चो नु नव्या कृणवः शविष्ठ प्रेदु ता ते विदथेषु ब्रवाम ॥ १३ ॥

कथो इति । नु । ते । परि । चराणि । विद्वान् । वीर्या । मघऽवन् । या । चकर्थ ।
या । चो इति । नु । नव्या । कृणवः । शविष्ठ । प्र । इत् । ऊँ इति । ता । ते । विदथेषु । ब्रवाम ॥ १३ ॥

वेङ्कट० कथम्[1] नु खलु तुभ्यम् परि चराणि । जानन् यानि त्वम् हे मघवन्! वीर्याणि पुरा कृतवानसि, यानि च सम्प्रतितनानि[2] कृणोषि शविष्ठ![3], प्र ब्रवाम तुभ्यं यज्ञेषु तानि ॥ १३ ॥

मुद्गल० हे मघवन्! धनवन् इन्द्र! त्वम् या यानि वीर्या वीर्याणि चकर्थ चकृषे, अहं तानि वीर्याणि विद्वान् जानन् ते तुभ्यम् कथो नु कथं नु परि चराणि । हे शविष्ठ! बलवत्तम! इन्द्र! या चो यानि चैव नव्या नव्यानि वीर्याणि नु क्षिप्रम् कृणवः कुर्याः, ते त्वदीयानि ता तानि वीर्याणि विदथेषु यज्ञेषु प्र इत् उ ब्रवाम प्रैव[4] वदाम ॥ १३ ॥

एता विश्वा चकृवाँ इन्द्र भूर्यपरीतो जनुषा वीर्येण ।
या चिन्नु वज्रिन् कृणवो दधृष्वान् न ते वर्ता तविष्या अस्ति तस्याः ॥ १४ ॥

एता । विश्वा । चकृऽवान् । इन्द्र । भूरि । अपरिऽइतः । जनुषा । वीर्येण ।
या । चित् । नु । वज्रिन् । कृणवः । दधृष्वान् । न । ते । वर्ता । तविष्याः । अस्ति । तस्याः ॥ १४ ॥

वेङ्कट० एतानि[5] विश्वानि कृतवान् असि हे इन्द्र! भूरीणि त्वम् अपरिगतः जातेन केनचिद् वीर्येण । यानि च वज्रिन्! इदानीं करोषि शत्रूणां धर्षणानि[6] धर्षणशीलः, तस्य तेषां निदानभूतस्य बलस्य वारयिता न कश्चिद् अस्ति ॥ १४ ॥

---

१. कथो वि° दर्प. २. °तितानि क. ३. नास्ति मूको. ४. प्रेदु मूको. ५. एता वि°.
६. °णो वि° दर्प; °णान् क.

मुद्गल० हे इन्द्र! अरीत शत्रुभिरपरिगतस्त्वम् जनुषा जननसिद्धेनात्मीयेन वीर्येण बलेन भूरि भूरीणि बहूनि एता एतानि प्रत्यक्षेणोपलभ्यमानानि विश्वा विश्वानि च्यौत्नानि भुवनजातानि चकृवान् कृतवान्[1] असि। हे वज्रिन्! वज्रवन्निन्द्र[1] दधृवान् सपत्नान् धर्षयंस्त्वम् नु क्षिप्रम् या चित् यानि विश्वानि कृणव कुर्याः, ते त्वदीयस्य तस्या तविष्या तस्य बलस्य वर्ता निवारयिता न कोऽपि अस्ति ॥ १४ ॥

इन्द्र ब्रह्म क्रियमाणा जुषस्व या ते शविष्ठ नव्या अकर्म ।
वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा अतक्षम् ॥ १५ ॥

इन्द्र । ब्रह्म । क्रियमाणा । जुषस्व । या । ते । शविष्ठ । नव्या । अकर्म ।
वस्त्राऽइव । भद्रा । सुऽकृता । वसुऽयुः । रथम् । न । धीरः । सुऽअपाः । अतक्षम् ॥ १५ ॥

वेङ्कट० इन्द्र! स्तोत्राणि क्रियमाणानि सेवस्व, यानि तव हे बलवत्तम[1] नूतना वयं कृतवन्तः। वस्त्राणीव कल्याणानि धनमिच्छन् रथम् इव च प्राज्ञः शोभनकर्मा कृतवानस्मि स्तोत्राणि ॥ १५ ॥

मुद्गल० हे शविष्ठ! बलवत्तम[1] इन्द्र! ते तुभ्यम् या यानि स्तोत्राणि नव्या नूतना अद्यतना वयम् अकर्म अकुर्म, हे इन्द्र[1] त्वम् क्रियमाणा अस्माभिः क्रियमाणानि ब्रह्म ब्रह्माणि तानि स्तोत्राणि जुषस्व सेवस्व। धीरः धीमान् स्वपाः शोभनकर्मा वसूयुः धनकामोऽहम् वस्त्रेव वस्त्राणीव भद्रा भद्राणि भजनीयानि सुकृता सुष्ठु कृतानि स्तोत्राणि रथम् न रथमिव अतक्षम् अकरवम् ॥ १५ ॥

इति चतुर्थाष्टके प्रथमाध्याये पञ्चविंशो वर्गः ॥

[ ३० ]

क्व१ स्य वीरः को अपश्यदिन्द्रं सुखरथमीयमानं हरिभ्याम् ।
यो राया वज्री सुतसोममिच्छन् तदोको गन्ता पुरुहूत ऊती ॥ १ ॥

क्व । स्यः । वीरः । कः । अपश्यत् । इन्द्रम् । सुखऽरथम् । ईयमानम् । हरिऽभ्याम् ।
यः । राया । वज्री । सुतऽसोमम् । इच्छन् । तत् । ओकः । गन्ता । पुरुऽहूत । ऊती ॥ १ ॥

वेङ्कट० बभ्रुः। सोऽयम् ऋणञ्चयनाम्नो राज्ञश्चत्वारि गवां सहस्राण्यलभत। वसु चित्तान्यपजहार। तत्र सुतार्थं सोमं निर्गच्छन् बभ्रुर्वदति—क्व स वीरः इन्द्रः। कः अपश्यत् इन्द्रम् सुखकररथम् अश्वाभ्याम् मम शत्रून् प्रति गच्छन्तम्। यः धनेन वज्री सुतसोमम् यजमानम् अन्विच्छन् तद्गृहं पुनः पुनर्गच्छति बहुभिराहूतो रक्षणार्थम् ॥ १ ॥

मुद्गल० 'क्व स्य वीर' पञ्चदशर्चं षोडशं सूक्तम्। बभ्रुरृषिः। त्रिष्टुप् छन्दः। इन्द्रो देवता, ऋणञ्चयनामा राजापि कश्चित् स्तूयते सोऽपि देवता।

---

१ नास्ति मूको

वज्री वज्रवान् पुरुहूत बहुभिराहूत य इन्द्र राया देयेन धनेन सह सुतसोमम् इच्छन् अभिषुतसोमं यजमानमन्विच्छन् ऊती ऊत्यै रक्षणायै तत् तस्य यजमानस्य ओकः गृहम् गन्ता प्राप्तो भवति। वीरः विक्रान्त स्म स इन्द्रः क कुत्र विद्यते। सुखरथम् 'शोभनाक्षद्वारो रथो' यस्य सुखरथः तम् हरिभ्याम् स्ववाहनाभ्याम् अश्वाभ्याम् ईयमानम् गच्छन्तम् इन्द्रम् कः अपश्यत् कस्य ददृशे ॥ १ ॥

अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन् ।
अपृच्छमन्याँ उत ते म आहुरिन्द्रं नरो बुबुधाना अशेम ॥ २ ॥

अव । अचचक्षम् । पदम् । अस्य । सस्वः । उग्रम् । निऽधातुः । अनु । आयम् । इच्छन् ।
अपृच्छम् । अन्यान् । उत । ते । मे । आहुः । इन्द्रम् । नरः । बुबुधानाः । अशेम ॥ २ ॥

वेङ्कट० पुनः प्रविशङ्कय अस्य इन्द्रस्य पदम् अन्तर्हितं किमिहास्ति किमिहेति पृथिव्यामवचक्षुषा अपश्यम्। तथा निरीक्षमाणश्चाहं पदमन्विच्छन् उद्गूर्णम्[1] निधातुः तत्र पदमनुगतवानस्मि। तदानीं क स्य वीर इति अपृच्छम्[1] अन्यान्। अपि च ते मम आहुः, वयमपि मनुष्या इन्द्रम्[1] ज्ञातुकामा एव तिष्ठाम इति। सहान्वेषः कार्य इति ॥ २ ॥

मुद्गल० अस्य इन्द्रस्य पदम् स्थानम् अव अचचक्षम् अहमेव अद्राक्षम्। कीदृशम्। सस्वः अन्तर्हितम् उग्रम् उद्गूर्णम्। किञ्च इच्छन् इन्द्रमन्विच्छन्नहम् निधातुः [2]इदं स्थापयितुः[2] अस्य इन्द्रस्य पदम् अनु आयम् अन्वगमम्। अन्यान् उत अन्यान् अपि सार्यो इन्द्रमेव अपृच्छम् पृष्टवान् अस्मि[4]। पृष्टा ते मे मह्यम् इन्द्रम् आहुः। किमाहुरित्युच्यते—नरः यज्ञाना नेतारः बुबुधाना बुभुत्समानाः" वयम् अशेम इन्द्रं प्राप्नवाम इति ॥ २ ॥

प्र नु वयं सुते या ते कृतानीन्द्र ब्रवाम यानि नो जुजोषः ।
वेददविद्वाञ्छृणवच्च विद्वान् वहतेऽयं मघवा सर्वसेनः ॥ ३ ॥

प्र । नु । वयम् । सुते । या । ते । कृतानि । इन्द्र । ब्रवाम । यानि । नः । जुजोषः ।
वेदत् । अविद्वान् । शृणवत् । च । विद्वान् । वहते । अयम् । मघऽवा । सर्वऽसेनः ॥ ३ ॥

वेङ्कट० इन्द्रं दृष्ट्वा स्तौति। प्र ब्रवाम क्षिप्रम् वयम् यज्ञे पुरा यानि तव कृतानि यानि पुरा अस्माभिः कृतानि हे इन्द्र। त्वं सेवितवानसि। परोक्षं तदर्थं। अजानन् तानि जानातु, विद्वान् 'अपि अस्माभिरुच्यमानानि' शृणोतु, प्रविशति अयम् मघवा समस्तसेन[1]। तत्र वयं तानि प्रब्रवाम ॥ ३ ॥

मुद्गल० हे इन्द्र! ते त्वदीयानि या यानि कर्माणि सन्ति अत्र वयम् स्तोतारः सुते सोमे अभिषुते सति तानि कर्माणि प्र ब्रवाम। त्वमपि नः अस्मदीयानि यानि कर्माणि जुजोषः, अनुष्ठितानि

---

१ १ शोभनरथा मूको २ उद्गूर्णं नरं मूको ३ पृच्छम् मूको ४ इन्द्र मूको ५-५ स्वस्थापयितु मूको ६ अस्मि मूको ७ बुद्धयमाना मूको ८-८ नास्ति वि॰ अप ९ समस्तसेन एप, शोभन वि॰

तानि अविद्वान् जनः वेदत् जानातु। विद्वान् जनः शृण्वन् च शृणुयात् च। सर्वसेनः सर्वाभिः सेनाभिर्युक्तः अयम् मघवा धनवान् इन्द्रः जानतश्च शृण्वतश्च तान् जनान् प्रति वहते अभीरुर्भवते ॥३॥

स्थिरं मनश्चकृषे जात इन्द्र वेषीदेको युधये भूयसश्चित् ।
अश्मानं चिच्छवसा दिद्युतो वि विदो गवामूर्वमुस्रियाणाम् ॥ ४ ॥

स्थिरम् । मनः । चकृषे । जातः । इन्द्र । वेषि । इत् । एकः । युधये । भूयसः । चित् ।
अश्मानम् । चित् । शवसा । दिद्युतः । वि । विदः । गवाम् । ऊर्वम् । उस्रियाणाम् ॥ ४ ॥

वेङ्कट० हे इन्द्र! युद्धे प्रादुर्भूतः त्वमात्मीयम् मनः स्थिरम् करोषि। तथा त्वम् एक एव सन् युद्धाय बहूनपि गच्छसि। ततः आयुधबलेन अश्मानम् [1]वि दिद्युतः[1] प्रकाशीकृतवानसि। ततः शत्रून् भित्त्वा गवाम् उत्सरणशीलानां सङ्घातम् अविन्दः ॥ ४ ॥

मुद्गल० हे इन्द्र! जातः उत्पन्नमात्र एव त्वम् स्थिरम् चलनरहितम् मनः चित्तम् चकृषे चकर्थ सर्वान् बलिष्ठान् जयेयमितीच्छन्। तथा हे इन्द्र! एकः इत् असहाय[2] एव त्वम् युधये युद्धाय भूयसः चित् बहुतरान् राक्षसादीनपि वेषि गच्छसि। किञ्च अश्मानम् चित् गवामावरकं पर्वतमपि शवसा बलेन वि दिद्युतः व्यभिनः। किञ्च उस्रियाणाम् क्षीरमुत्सारयन्तीनाम् गवाम् धेनूनाम् ऊर्वम् समूहम् विदः अवेदयः अलभथाः ॥ ४ ॥

परो यत् त्वं परम आजनिष्ठाः परावति श्रुत्यं नाम बिभ्रत् ।
अतश्चिदिन्द्रादभयन्त देवा विश्वा अपो अजयद् दासपत्नीः ॥ ५ ॥

परः । यत् । त्वम् । परमः । आऽजनिष्ठाः । पराऽवति । श्रुत्यम् । नाम । बिभ्रत् ।
अतः । चित् । इन्द्रात् । अभयन्त । देवाः । विश्वाः । अपः । अजयत् । दासऽपत्नीः ॥ ५ ॥

वेङ्कट० परः त्वम् यदा युद्धस्य परमे स्थाने आकाशे प्रादुर्भवसि दूरे श्रुत्यम् इन्द्राख्यम् नाम बिभ्रत्। तत आरभ्य अस्मात् इन्द्रात् अभयन्त देवाः। किञ्च अयं सर्वाण्येवोदकानि अजयत् येषां दासः पतिः ॥ ५ ॥

मुद्गल० यत् यदा हे इन्द्र! परः परस्तात् उपरिष्टात् स्थितः परमः उत्कृष्टतमः त्वम् परावति दूरे श्रुत्यम् श्रवणीयम् नाम नामधेयम्[3] बिभ्रत् धारयन् आजनिष्ठाः आ समन्तादजायथाः। शेषः परोक्षकृतः। अतः चित् अत आरभ्यैव देवाः अग्न्यादयः इन्द्रात् अभयन्त बिभ्युः। विश्वाः अपः सर्वाण्युदकानीन्द्रः अजयत् वशीचक्रे। कीदृशीः[4]। दासपत्नीः दासो वृत्रः पालयिता यासामपां ता इति ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये षड्विंशो वर्गः ॥

---

1-1. विद्युत. मूको. 2 असह मूको. 3. नाधेयम् मूको. 4. कीदृशः मूको.

तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः ।
अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिन्द्रः ॥ ६ ॥

तुभ्य । इत् । एते । मरुतः । सुऽशेवाः । अर्चन्ति । अर्कम् । सुन्वन्ति । अन्धः ।
अहिम् । ओहानम् । अपः । आऽशयानम् । प्र । मायाभिः । मायिनम् । सक्षत् । इन्द्रः ॥६॥

वेङ्कट० तुभ्यम् एव एते मरुतः सुसुखाः स्तोत्रम् उच्चारयन्ति । सुन्वन्ति च सोमं यजमाना[1] । अहिम् ओहानम् युध्यन्तम् अपः आवृत्य शयानम् मायाविनम् मायाभिः इन्द्रः प्र सक्षत् अभिभ्याप्नुयानिति ॥६॥

मुद्गल० एते मरुतः 'महत् रवन्ति वदन्ति'[2] इति मरुतः स्तोतारः, सुशेवाः शोभनसुखाः सन्तः, स्तोत्रेण शोभनं सुखमुत्पादयन्त इत्यर्थः, हे इन्द्र! तुभ्य इत् तुभ्यम् एव अर्कम् अर्चनीयं स्तोत्रम् अर्चन्ति स्तुवन्ति । अन्धः सोमलक्षणमन्नम् सुन्वन्ति अभिषवं कुर्वन्ति । इन्द्रः परमैश्वर्ययुक्तः मायाभिः अहिम् वृत्रम् प्र सक्षत् अभ्यभवत् । कीदृशम् । ओहानम् देवान् बाधमानम् अपः उदकानि आशयानम् आवृत्य शयनं कुर्वन्तम् मायिनम् कपटवन्तम्[3] ॥ ६ ॥

वि षू मृधो जनुषा दानमिन्वन्नहन् गवा मघवन्त्संचकानः ।
अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन् ॥ ७ ॥

वि । सु । मृधः । जनुषा । दानम् । इन्वन् । अहन् । गवा । मघऽवन् । सम्ऽचकानः ।
अत्र । दासस्य । नमुचेः । शिरः । यत् । अवर्तयः । मनवे । गातुम् । इच्छन् ॥ ७ ॥

वेङ्कट० इन्द्र मित्रं युद्धार्थं भजमानम् मृधः परिवव्रुः । तान् हे मघवन्! त्वं सेवमानो विविधं सुष्ठु हतवानसि जनुषा जातेन तेजसा सन्दीप्यमानो दानवं[4] सन्तर्पयिता । यदा त्वमस्मिन् लोके उपक्षपयितुः नमुचेः शिरः छित्वा भ्रामयः मनवे नमुचिना संरुद्धाय यजमानाय गमनमार्गम् इच्छन् तदानीमिति ॥ ७ ॥

मुद्गल० हे मघवन्! धनवन् इन्द्र! सेवकानः आस्माभिः स्तूयमानस्त्वम् दानम् देवानां बाधकं वृत्रमसुरम् गवा वज्रेण[5] इन्वन् प्रेरयन् हिंसन् जनुषा जन्मना मृधः तदनुचरान् शत्रून् सुष्ठु वि अहन् विजघन्थ । हे इन्द्र! त्वम् अत्र अस्मिन् युद्धे मनवे नमुचिनाऽपहृत शोधनाय मह्यम् गातुम् सुखम् इच्छन् नमुचेः एतन्नामकस्य दासस्य उपक्षपयितुरसुरस्य[6] सम्बन्धि शिरः शीर्षम्[7] यत् यदा अवर्तयः अचूर्णयः, तदा शत्रून् विजघन्थ इति पूर्वेण सम्बन्धः ॥ ७ ॥

युजं हि मामकृथा आदिदिन्द्र शिरो दासस्य नमुचेर्मथायन् ।
अश्मानं चित् स्वर्यं१ वर्तमानं प्र चक्रियेव रोदसी मरुद्भ्यः ॥ ८ ॥

१. 'मानरत्वम् वि'. २-२. हसन्ति वदन्ति' मूको ३. 'रतमम् मूको. ४. दानवः मूको.
५. वज्रे मूको ६. 'क्षपित' मूको. ७. नास्ति मूको.

युजम् । हि । माम् । अकृथाः । आत् । इत् । इन्द्र । शिरः । दासस्य । नमुचेः । मथायन् ।
अश्मानम् । चित् । स्वर्यम् । वर्तमानम् । प्र । चक्रियाऽइव । रोदसी इति । मरुत्ऽभ्यः ॥८॥

वेङ्कट० हे इन्द्र ! नमुचेः असुरस्य शिरः मथितुमिच्छन् सहायम् माम् बभ्रुम् अकृथाः, स्वच्छतया स्वरणकुशलम् अभिमते देशे गच्छन्तं वज्रं च सहायम् अकृथाः । तदानीं तव साहाय्यं कर्तुकामेभ्यः मरुद्भ्यः द्यावापृथिवी चक्रे इव प्र आस्ताम् उभयतो भवताम् । अन्तरिक्षं सर्वं मरुद्भिः व्याप्तमासीदित्यर्थः ॥ ८ ॥

मुद्गल० हे इन्द्र ! स्वयम् स्वर्यम् स्वरेण सहितम् वर्तमानम् भ्रमन्तम् अश्मानम् चित् मेघवत् स्थितम् दासस्य उपक्षपयितुः नमुचेः असुरस्य शिरः मथायन् चूर्णयन् आत् इत् अनन्तरमेव माम् युजम् सखायम् अकृथाः हि चकृषे खलु । तदानीम् मरुद्भ्यः स्वसहायेभ्यः रोदसी द्यावापृथिव्यौ चक्रिया इव चक्रे इव प्र आस्ताम् ॥ ८ ॥

स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला अस्य सेनाः ।
अन्तर्ह्यख्यदुभे अस्य धेने अथोप प्रैद्युधये दस्युमिन्द्रः ॥ ९ ॥

स्त्रियः । हि । दासः । आयुधानि । चक्रे । किम् । मा । करन् । अबलाः । अस्य । सेनाः ।
अन्तः । हि । अख्यत् । उभे इति । अस्य । धेने इति । अथ । उप । प्र । ऐत् । युधये । दस्युम् । इन्द्रः ॥ ९ ॥

वेङ्कट० नमुचिः प्रथमम् इन्द्राय स्त्रियः आयुधानि चक्रे युद्धार्थं निरगमयत् । इन्द्रः च किम् मां कुर्वन्तु स्त्रीभूताः अस्य सेनाः इति मन्यमानः तासु स्त्रीषु रूपयुक्ते द्वे स्त्रियावावाय अन्तः चकार । अथ सम्भ्रान्तः सन् इन्द्रः दस्युम् युद्धार्थम् उप प्र अगादिति ॥ ९ ॥

मुद्गल० दासः उपक्षपयिता नमुचिरसुरः स्त्रियः स्त्रीः आयुधानि युद्धसाधनानि चक्रे हि कृतवान् खलु । इन्द्रेण सह योद्धुं प्रहितवान् इत्यर्थः । अस्य नमुचेः अबलाः निर्बलाः सेनाः किम् मा करन्, किमपि न । अस्य असुरस्य धेने प्रीणयित्र्यौ सुरूपे उभे द्वे स्त्रियौ अन्तः अख्यत् हि गृहमध्ये निदधे खलु । अथ अनन्तरम् इन्द्रः दस्युम् नमुचिम् युधये युद्धाय उप प्र ऐत् उपप्रागच्छत् ॥ ९ ॥

समत्र गावोऽभितोऽनवन्तेहेह वत्सैर्वियुता यदासन् ।
सं ता इन्द्रो असृजदस्य शाकैर्यदीं सोमासः सुषुता अमन्दन् ॥ १० ॥

सम् । अत्र । गावः । अभितः । अनवन्त । इहऽइह । वत्सैः । विऽयुताः । यत् । आसन् ।
सम् । ताः । इन्द्रः । असृजत् । अस्य । शाकैः । यत् । ईम् । सोमासः । सुऽसुताः । अमन्दन् ॥

वेङ्कट० अस्मिन् असुरे सम् अगच्छन्त गावः, यदा इह च इह च वत्सैः वियुक्ताः आसन् । सङ्ग्रामपर्वकाले[8]

1 मा मूको २. °क्षपि° मूको. ३ स भ्रान्त वि°. ४ नास्ति मूको. ५. °क्षपितः मूको.
६. प्रहितानि मूको. ७. प्रणयि° मूको. ८. °पर्वका° मूको.

नगरात् बहिः सङ्गत्य अपजहार । अथ ताः गाः इन्द्रः[1] अस्य स्वभूताः तं जित्वा मरुद्भिः सह जित्वा स्वामिना मया सम् असृजत्, यदैनं सोमाः सुताः अमन्दन् बभ्रोर्मम ॥ १० ॥

मुद्गल० यत् यदा गावः वत्सैः वियुताः आसन् वियुक्ता अभवन्, अत्र अस्मिन् काले अभितः सर्वतो नमुचिनाऽपहृता गावः इहेह इह च इह च सर्वतः सम् अनवन्त अत्यन्तमगच्छन् । यत् यदा सुषुताः बभ्रुनाम्ना ऋषिणा सुष्ठ्वभिषुताः सोमासः ईम् एनम् इन्द्रम् अमन्दन् अमादयन्, तदा इन्द्रः शाकैः शक्तैर्मरुद्भिः सह अस्य बभ्रोः सम्बन्धिनीः[1] नमुचिनाऽपहृताः ताः गाः सम् असृजत् वत्सैः सह समयोजयत् ॥ १० ॥

इति चतुर्थाष्टके प्रथमाध्याये सप्तविंशो वर्गः ॥

यदीं सोमा बभ्रुधूता अमन्दन्नरोरवीद् वृषभः सादनेषु ।
पुरंदरः पपिवाँ इन्द्रो अस्य पुनर्गवामददादुस्रियाणाम् ॥ ११ ॥

यत् । ईम् । सोमाः । बभ्रुऽधूताः । अमन्दन् । अरोरवीत् । वृषभः । सदनेषु ।
पुरम्ऽदरः । पपिऽवान् । इन्द्रः । अस्य । पुनः । गवाम् । अददात् । उस्रियाणाम् ॥ ११ ॥

वेङ्कट० यदा एनं बभ्रुनाम्ना मया सुताः[1] सोमाः अमन्दन्, अथ अयम् वृषभः गृहेषु अत्यर्थं शब्दं करोति । पुरन्दरः पपिवान् इन्द्रः इमं सोमम्, पुनश्चासुरैरपहृता गा आहृत्य मायच्छदिति ॥ ११ ॥

मुद्गल० यत् यदा बभ्रुधूताः बभ्रुणाभिषुताः सोमाः ईम् एनमिन्द्रम् अमन्दन् अमादयन्, तदा वृषभः कामानां वर्षिता इन्द्रः सदनेषु गृहेषु अरोरवीत् अत्यर्थं शब्दमकरोत् । पुरन्दरः शत्रुपुरां दारयिता अस्य इमं सोमम् पपिवान् पीतवान् इन्द्रः, पुनः उस्रियाणाम् क्षीरमुत्स्राविणीः[2] गवाम् गाः अददात् बभ्रवे ददौ ॥ ११ ॥

भद्रमिदं रुशमा अग्ने अक्रन् गवां चत्वारि ददतः सहस्रा ।
ऋणंचयस्य प्रयता मघानि प्रत्यग्रभीष्म नृतमस्य नृणाम् ॥ १२ ॥

भद्रम् । इदम् । रुशमाः । अग्ने । अक्रन् । गवाम् । चत्वारि । ददतः । सहस्रा ।
ऋणम्ऽचयस्य । प्रऽयता । मघानि । प्रति । अग्रभीष्म । नृऽतमस्य । नृणाम् ॥ १२ ॥

वेङ्कट० सम्प्रति गवां दातारम् ऋणञ्चयं स्तौति । ऋणञ्चयेन दत्तानि गवाम् चत्वारि सहस्राणि मह्यं गृह्णानीय प्रयच्छन्तः[3], तस्य भटाः[4] दीप्ताः भद्रम् इदम् कर्म कृतवन्तः । वयम् ऋणंचयस्य प्रत्तानि[5] मंहनीयानि गोधनानि प्रतिगृहीतवन्तः नृणाम् नृतमस्य ॥ १२ ॥

मुद्गल० रुशम इति कश्चित् जनपदविशेषः, तत्रत्या जनाः रुशमाः ऋणञ्चयनामा राजा किङ्कराः

---

1. नास्ति मूको. 2. °म्भत्री मूको. 3. सुताः क. 4. °णीताम् मूको. 5. °च्छन्त मूको; प्रायच्छन्त इति वा क प्रस्तावः. 6. भटाः वि°. 7. प्रत्तानि मूको.

हे अग्ने! भद्रम् कल्याणम् इदम् कर्म अक्रन् अकुर्वन्। कीदृशाः। गवाम् धेनूनाम् चत्वारि चतुःसंख्यायुक्तानि सहस्रा सहस्राणि ददतः मह्यं प्रयच्छन्तः। नृणाम् नेतॄणां मध्ये नृतमस्य ऋणञ्चयस्य एतन्नामकेन राज्ञा प्रयता प्रयतानि दत्तानि मघानि गोरूपाणि धनानि वयम् प्रति अग्रभीष्म प्रतिगृहीतवन्तः स्म। पूजार्थे बहुवचनम् ॥ १२ ॥

सुपेशसं माव सृजन्त्यस्तं गवां सहस्रै रुशमासो अग्ने ।
तीव्रा इन्द्रममन्दुः सुतासोऽक्तोर्व्युष्टौ परितक्म्यायाः ॥ १३ ॥

सुऽपेशसम् । मा । अव । सृजन्ति । अस्तम् । गवाम् । सहस्रैः । रुशमासः । अग्ने ।
तीव्राः । इन्द्रम् । अमम्न्दुः । सुतासः । अक्तोः । विऽउष्टौ । परिऽतक्म्यायाः ॥ १३ ॥

वेङ्कट० 'सुरूपं माम्' मदीयं गृहमानीय प्रविश इति अव सृजन्ति गवाम् सहस्रैः सहगामी रुशमाः अग्ने! इति स्वायतनस्थानायाग्नये निवेदयति। तत्कर्मरितिकर्मा। ऋणञ्चयमपहाय बभ्रुर्यस्या रात्र्याम् आगतः सा परितक्म्योच्यते। अस्या रात्रेः व्युष्टौ भगसङ्गात्परेद्युः मया सुताः तीव्ररसाः सोमाः इन्द्रम् अममन्दुः ॥ १३ ॥

मुद्गल० हे अग्ने! रुशमासः रुशमाः ऋणञ्चयस्य किङ्कराः सुपेशसम् सुरूपम् अलङ्काराच्छादनादिभिः संस्कृतम् मा माम् अस्तम् गृहम् गवाम् धेनूनाम् सहस्रैः सह अव सृजन्ति प्रापयन्ति स्म। तमसा भूतानि परितः 'तकति गच्छति' इति परितक्म्या। तस्याः अक्तोः रात्रेः व्युष्टौ उषःकाले इन्द्रम् अममन्दुः अमादयन्। बभ्रुः गवां प्रापणानन्तरम् अविलम्बितमेव सोमैरेजे इत्यर्थः ॥ १३ ॥

औच्छत् सा रात्री परितक्म्या याँ ऋणंचये राजनि रुशमानाम् ।
अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत् सहस्रा ॥ १४ ॥

औच्छत् । सा । रात्री । परिऽतक्म्या । या । ऋणम्ऽचये । राजनि । रुशमानाम् ।
अत्यः । न । वाजी । रघुः । अज्यमानः । बभ्रुः । चत्वारि । असनत् । सहस्रा ॥ १४ ॥

वेङ्कट० 'मदीयात् गृहात्' प्रतिनिवृत्तानां रुशमानाम् कारेषु ॥ १४ ॥

मुद्गल० रुशमानाम् रुशमनाम्नां जनानाम् राजनि प्रभौ ऋणञ्चये एतत्संज्ञके तत्समीपे एव या रात्रिः परितक्म्या परितो गन्त्री भवति सा रात्री औच्छत् व्युष्टाऽभवत्। अत्यः सततगामी वाजी न अश्व इव रघुः शीघ्रगामी अज्यमानः प्रेर्यमाणः बभ्रुः एतन्नामक ऋषिः चत्वारि चतुःसंख्याकानि सहस्रा सहस्राणि गोरूपाणि धनानि असनत् अलभत ॥ १४ ॥

---

१-१. स्वरूपं मा वि° लुप. २. "रुशमा" वि°. ३-३. "कानि गच्छन्ति मूको. ४. मदीयात् गृहात् वि°, ५. "वृत्तानां लुप. ६. रुशमानाम् मूको. ७. कारेषु क.

चतुःसहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने ।
घर्मश्चित् तप्तः प्रवृजे य आसीदयस्मयस्तम्वादाम विप्राः ॥ १५ ॥

चतुःऽसहस्रम् । गव्यस्य । पश्वः । प्रति । अग्रभीष्म । रुशमेषु । अग्ने ।
घर्मः । चित् । तप्तः । प्रऽवृजे । यः । आसीत् । अयस्मयः । तम् । ऊँ इति । आदाम । विप्राः ॥

वेङ्कट० रुशमेषु प्रतिगृहीतवन्तः । प्रवृञ्जनाय[1] तप्तः घर्मः इव यः आसीत् हिरण्येन निर्मितः तम् गवां[2] पयो गृहीतवन्तः वयं 'दीप्तिमन्तो मेधाविन'[3] इति ॥ १५ ॥

मुद्गल० हे अग्ने! वयम् रुशमेषु एतत्संज्ञकेषु जनेषु गव्यस्य गवात्मकस्य पश्वः पशोः पशूनाम् चतुःसहस्रम् चत्वारि सहस्राणि प्रति अग्रभीष्म प्रतिगृहीतवन्तः स्मः । प्रवृजे प्रवृञ्जनार्थम् तप्तः संतप्तः शोभनवर्णः घर्मः चित् महावीर इव अयस्मयः अयोमयो हिरण्मयः यः कलशः आसीत् अभवत् तम् उ दोहनार्थं कलशं च विप्राः मेधाविनो वयं रुशमेषु आदाम आदत्तवन्तः ॥ १५ ॥

इति चतुर्थाष्टके प्रथमाध्याये अष्टाविंशो वर्गः ॥

[ ३१ ]

इन्द्रो रथाय प्रवतं कृणोति यमध्यस्थान्मघवा वाजयन्तम् ।
यूथेव पश्वो व्युनोति गोपा अरिष्टो याति प्रथमः सिषासन् ॥ १ ॥

इन्द्रः । रथाय । प्रऽवतम् । कृणोति । यम् । अधिऽअस्थात् । मघऽवा । वाजऽयन्तम् ।
यूथाऽइव । पश्वः । वि । उनोति । गोपाः । अरिष्टः । याति । प्रथमः । सिसासन् ॥ १ ॥

वेङ्कट० अवस्युः[4] । इन्द्रः आत्मीयाय रथाय गमनयोग्यं[5] प्रवणवन्तं देशं करोति, अग्रतः स्थितात्[6] यद् मघवा यम् अधितिष्ठति संग्राममिच्छन्तम् । गोयूथानिव गोपालो विविधं प्रेरयति । एवं साङ्ग्रामिकान् अश्वपुरुषान्[7] विविधं प्रेरयतेति[8] । एवं स्वयमग्रे[9] अरिष्टः गच्छति सर्वेषामग्रतः शत्रून् सिषासन् ॥ १ ॥

मुद्गल० 'इन्द्रो रथाय' इति त्रयोदशर्चं सप्तदशं सूक्तम् । अवस्युर्नाम आत्रेय ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता, 'उग्रमयातम्' 'स ह यद्वाम्' इति पादयोः कुत्सोशनसौ विकल्पेन देवता[10] । 'इन्द्राकुत्सा वहमाना' इत्यस्या इन्द्र- कुत्सश्च ।

मघवा धनवान् इन्द्रः वाजयन्तम् संग्राममिच्छन्तम् यम् रथम् अध्यस्थात् अधितिष्ठति तस्मै रथाय प्रवतम् प्रवणम्[11] मार्गम् कृणोति करोति । अपि च गोपाः गोपालः पश्वः यूथेव

1. प्रवर्जनायनाय मूको. 2. गवां वि°. 3-3. °मन्तो वयं मेधा° मूको. 4. अपस्युः ह. 5. मार्ग ह. 6. °ताः मूको. 7. °पुरुषा° ह. 8. °येत्° मूको. 9. स्वय° मूको. 10. °ते मूको. 11. प्रणवम् मूको.

पशूनां यूथानि यथा वि उनोति प्रेरयति तथा शत्रुसैन्यानि प्रेरयति। अरिष्टः शत्रुभिः स्वयमहिंसितः प्रथमः देवानां मुख्यः इन्द्रः सिषासन् शत्रुधनानीच्छन् याति गच्छति ॥ १ ॥

आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते अभि नः सचस्व ।
नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ ॥ २ ॥

आ । प्र । द्रव । हरिऽवः । मा । वि । वेनः । पिशङ्गऽराते । अभि । नः । सचस्व ।
नहि । त्वत् । इन्द्र । वस्यः । अन्यत् । अस्ति । अमेनान् । चित् । जनिऽवतः । चकर्थ ॥ २ ॥

वेङ्कट० आभिमुख्येन प्र द्रव हरिवः![1] मा विगतकामो भूः अध्वान आगच्छ। [2]पिशङ्गराते! अस्मान् धनदानादिभिः अभि[2] सेवस्व। नहि त्वत्तः हे इन्द्र! अन्यत् प्रशस्ततरम् अस्ति भूतम्। त्वम् अस्त्रीकानपि धनप्रदानेन जायावतः करोषि ॥ २ ॥

मुद्गल० हे हरिवः! हरियक्तिन्द्र! त्वम् आ अस्मानभिमुखम् प्र द्रव प्रकर्षेण गच्छ। किन्तु मा वि वेनः अस्मासु विगतकामो मा भूः। हे पिशङ्गराते! बहुरूपधन! इन्द्र! नः अस्मान् अभि सचस्व अभिसेवस्व। अपि च हे इन्द्र! वस्यः वसीयः[3] श्रेयस्करम् त्वत् त्वत्तः अन्यत् नहि अस्ति अन्यद्वस्तुजातं नास्ति। अमेनान् चित् मेनाशब्दः स्त्रीवाची। अस्त्रीकानपि जनिवतः जायावतः चकर्थ करोषि ॥ २ ॥

उद्यत् सहः सहस आजनिष्ट देदिष्ट इन्द्र इन्द्रियाणि विश्वा ।
प्राचोदयत् सुदुघा वव्रे अन्तर्वि ज्योतिषा संववृत्वत् तमोऽवः ॥ ३ ॥

उत् । यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्टे । इन्द्रः । इन्द्रियाणि । विश्वा ।
प्र । अचोदयत् । सुऽदुघाः । वव्रे । अन्तरिति । वि । ज्योतिषा । सम्ऽववृत्वत् । तमः । अवरित्यवः ॥३॥

वेङ्कट० उत् आ अजनिष्ट यदा सहसः उपादानात् इन्द्राख्यम् सहः [4]प्रातः। अथ[4] मनुष्याणां पश्चानां जनानां सर्वाणि बलानि इन्द्रः दीपयति, प्र चोदयति[5] गाश्च वव्रे व्रजे अन्तः स्थिताः सञ्चरणार्थम्, तथा ज्योतिषा वेष्टमानम् तमः च सर्वम्[6] वि वृणोति ॥ ३ ॥

मुद्गल० यत् यदा सहः सूर्येसम्बन्धि तेजः सहसः उषःसम्बन्धिनस्तेजसः उत् आ अजनिष्ट अपरितस्त् प्रादुर्बभूव। तदा इन्द्रः विश्वा सर्वाणि इन्द्रियाणि धनानि देदिष्टे यजमानेभ्यो दिशति, वव्रे निवारके पर्वते अन्तः मध्ये बलेन निरुद्धाः सुदुघाः सुष्ठु दोग्ध्रीर्गाः प्र अचोदयत् प्रेरयत्, ज्योतिषा तेजसा संववृत्वत् संवरणशीलम् तमः वि अवः निवारितवान् ॥ ३ ॥

अनवस्ते रथमश्वाय तक्षन् त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।
ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४ ॥

१. हे मा मूको. २-२. °दानादिभि (°भिः ऊ.) मूको. ३. वसीयः मूको. ४-४. प्रादय मूको.
५. प्रगोय° वि° रूपं; प्रमोदयति ऊ. ६. मार्गम् ऊ.

अनवः । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुऽहूत । द्युऽमन्तम् ।
ब्रह्माणः । इन्द्रम् । महयन्तः । अर्कैः । अवर्धयन् । अहये । हन्तवै । ऊँ इति ॥ ४ ॥

वेङ्कट० हे पुरुहूत ! मनुष्या ऋभवः तवाश्वानुगुणम् रथम् कृतवन्तः । त्वष्टा च वज्रम् दीप्तिमन्तं कृतवान् । ब्राह्मणाश्च मन्त्रैः इन्द्रम् पूजयन्तः अहिं हन्तुम् अवर्धयन् ॥ ४ ॥

मुद्गल० हे पुरुहूत ! बहुभिराहूत इन्द्र ! ते त्वदीयम् रथम् अश्वाय अश्वाभ्यां संयोगार्हम् अनवः मनुष्याः ऋभवः तक्षन् अतक्षन् अकुर्वन् । त्वष्टा च त्वदीयम् वज्रम् द्युमन्तम् दीप्तिमन्तम् अकरोत् । उ अपि च महयन्तः इन्द्रम् पूजयन्तः ब्रह्माणः अङ्गिरसः अहये अहिं वृत्रम् हन्तवै हन्तुम् अर्कैः स्तोत्रैः अवर्धयन् वर्धितवन्तः । उः पूरणः ॥ ४ ॥

वृष्णे यत् ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ।
अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ ५ ॥

वृष्णे । यत् । ते । वृषणः । अर्कम् । अर्चान् । इन्द्र । ग्रावाणः । अदितिः । सऽजोषाः ।
अनश्वासः । ये । पवयः । अरथाः । इन्द्रऽइषिताः । अभि । अवर्तन्त । दस्यून् ॥ ५ ॥

वेङ्कट० हे इन्द्र ! वृष्णे यदा तुभ्यं वर्षितारः ग्रावाणः अभिषवणचर्मप्रदा[1] गौश्च सहसा अर्चनीयं सोमम् अर्चन्ति अभिषुण्वन्ति । अथ अश्वरथवर्जिताः[2] इन्द्रप्रेषिताः पवयः आयुधानि दस्यून् अभि अवर्तन्त । शीघ्रमेक एव गत्वाऽऽयुधानि शत्रुषु विसृजतीति ॥ ५ ॥

मुद्गल० हे इन्द्र ! यत् यदा वृषणः सेचनसमर्थाः मरुतः वृष्णे कामानां वर्षित्रे ते तुभ्यम् अर्कम् स्तोत्रम् अर्चान् अस्तुवन्, अकुर्वन्नित्यर्थः । तदा अदितिः अदीनाः ग्रावाणः अभिषवपाषाणाः सजोषाः सङ्गताः, बभूवुरिति शेषः । अनश्वासः अश्ववर्जिताः अरथाः रथहीनाः इन्द्रेषिताः इन्द्रेण प्रेषिताः पवयः पवमाना गच्छन्तः ये मरुतः[3] दस्यून् शत्रून् अभि अवर्तन्त अभिभूतान् कुर्वन्तो वर्तन्ते स्म । तै मरुतोऽर्चानिति सम्बन्धः ॥ ५ ॥

इति चतुर्थाष्टके प्रथमाध्याये एकोनत्रिंशो वर्गः ॥

प्र ते पूर्वाणि करणानि वोचं प्र नूतना मघवन् या चकर्थ ।
शक्तीवो यद् विभरा रोदसी उभे जयन्नपो मनवे दानुचित्राः ॥ ६ ॥

प्र । ते । पूर्वाणि । करणानि । वोचम् । प्र । नूतना । मघऽवन् । या । चकर्थ ।
शक्तिऽवः । यत् । विऽभराः । रोदसी इति । उभे इति । जयन् । अपः । मनवे । दानुऽचित्राः ॥

वेङ्कट० प्र ब्रवीमि तव वृत्रवधादीनि पुरातनानि कर्माणि, तथा प्र ब्रवीमि नूतनानि च मघवन् !,

1. ॰चणप्रदाः क. 2. ॰रथ वर्जिताः वि॰; ॰रथवर्जिताः सर्वे. 3. मताः मूको.

यानि कृतवानसि कर्माणि। हे शक्तिमन्! यस्त्वं द्यावापृथिवी उभे, विविधं बिभर्षि। जयन् उदकानि चित्रदानानि मनवे, तस्माद् प्रब्रवीमि इति ॥ ६ ॥

मुद्गल० हे इन्द्र! ते त्वदीयानि पूर्व्याणि पुरातनानि करणानि कर्माणि प्र वोचम् अहं प्रकर्षेण ब्रवीमि। नूतना[1] नूतनानि नवानि कर्माणि प्र वोचम् प्रब्रवीमि। हे मघवन्! धनवन्निन्द्र! या यानि कर्माणि चकर्थ कृतवानसि, तानि प्र वोचमिति सम्बन्धः। हे शचीवः! शक्तिमन् इन्द्र! यत् यस्त्वम् उभे रोदसी द्यावापृथिव्यौ जयन् वशीकुर्वन् अपः उदकानि मनवे मनुष्याय विभराः विविच्य बिभर्षि। कीदृशीरपः। दानुचित्राः चित्रदानाः ॥ ६ ॥

तदिन्नु ते करणं दस्म विप्राहिं यद् घ्नन्नोजो अत्रामिमीथाः ।
शुष्णस्य चित् परि माया अगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ॥ ७ ॥

तत् । इत् । नु । ते । करणम् । दस्म । विप्र । अहिम् । यत् । घ्नन् । ओजः । अत्र । अमिमीथाः ।
शुष्णस्य । चित् । परि । मायाः । अगृभ्णाः । प्रऽपित्वम् । यन् । अप । दस्यून् । असेधः ॥ ७ ॥

वेङ्कट० तत् एव तव कर्म हे दर्शनीय मेधाविन्! अहिम् घ्नन् यत् त्वं शक्तिमन् बलम्[2] कृतवानसि। शुष्णस्य अपि असुरस्य मायाः परिगृहीतवानसि। बलिनः प्राप्तिं गच्छन् अन्यानप्यसुरान् अप असेधः ॥ ७ ॥

मुद्गल० हे दस्म! दर्शनीय! विप्र! मेधाविन्! इन्द्र! त्वम् अत्र अस्मिँल्लोके अहिम् वृत्रमसुरम् घ्नन् हिंसन् यत् ओजः यद् बलम् अमिमीथाः प्रकाशितवानसि। तत् इत् नु तत्खलु ते त्वदीयम् करणम् कर्म विद्यते। अपि च शुष्णस्य चित् एतन्नामकस्यासुरस्य सम्बन्धिनीः मायाः प्रज्ञा[3] परि अगृभ्णाः परिगृहीतवानसि। हे इन्द्र! त्वम् प्रपित्वम् सङ्ग्रामम् यन् आगच्छन् दस्यून् असुरान् अप असेधः अपबाधथाः[4] ॥ ७ ॥

त्वमपो यदवे तुर्वशायारमयः सुदुघाः पार इन्द्र ।
उग्रमयातमवहो ह कुत्सं सं ह यद् वामुशनारन्त देवाः ॥ ८ ॥

त्वम् । अपः । यदवे । तुर्वशाय । अरमयः । सुऽदुघाः । पारः । इन्द्र ।
उग्रम् । अयातम् । अवहः । ह । कुत्सम् । सम् । ह । यत् । वाम् । उशना । अरन्त । देवाः ॥

वेङ्कट० पारयिता त्वम् इन्द्र! उदकानि सुदोहनानि यदुतुर्वशाभ्याम् अरमयः। किञ्च हे इन्द्र! त्वं च कुत्सश्च उग्रम् शुष्णासुरम् अगच्छतम्। त्व हि शुष्णं प्रति गच्छन् 'कुत्सम् अपि' नीतवानसि। यदा तत्र गतौ वाम्, उशना देवाः च सम् अगच्छन्त[5] ॥ ८ ॥

मुद्गल० हे इन्द्र! त्वम् पारे नदीनां तीरे। प्रवृद्धाः इति शेषः। सुदुघाः ओषधिवनस्पतीन् सुष्ठु

1. नास्ति मूको. 2. बलं बलं वि° कपं. 3. अप वाधथा° मूको. 3-4. शुष्णमपि वि°.
5. आग° ए कपं.

दुहतीः अपः उदकानि यदवे यदुनामकाय राज्ञे तुर्वशाय एतन्नामकाय राज्ञे च अरमयः रमितवानसि । हे इन्द्र! युवाम् त्वं कुत्सश्चेति शेषः । उशनम् उद्गूर्णं शुष्णम् अयातम् आगच्छतम् । तदनन्तरं त्वं शुष्णं हत्वा कुत्सम् अवहः ह स्वगृहं प्रापितवानसि खलु । यत् यदा वाम् युवाम् इन्द्राकुत्सौ उशना भार्गवः देवाः च सम् अरन्त ह सम्भेजिरे खलु ॥ ८ ॥

इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु ।
निः षीमद्भ्यो धमथो निः षधस्थान्मघोनो हृदो वरथस्तमांसि ॥ ९ ॥

इन्द्राकुत्सा । वहमाना । रथेन । आ । वाम् । अत्याः । अपि । कर्णे । वहन्तु ।
निः । सीम् । अप्ऽभ्यः । धमथः । निः । सधऽस्थात् । मघोनः । हृदः । वरथः । तमांसि ॥ ९ ॥

वेङ्कट० हे इन्द्राकुत्सौ! गच्छन्तौ रथेन वाम् अश्वाः कर्णेकुलजाते मयि अपि आ वहन्तु । तौ युवाम् तमांसि अन्तरिक्षात् सर्वतः निः धमथः, तथा पृथिव्याश्च, महतोऽस्माकं हृदयाच्च निवारयथः[1] । कुत्सश्च साहचर्याद् देवता भवति ॥ ९ ॥

मुद्गल० हे इन्द्राकुत्सा । इन्द्राकुत्सौ! रथेन वहमाना वहमानौ वाम् युवाम् अत्याः अश्वाः कर्णे कर्णः स्तोता तत्समीपे आ वहन्तु आ समन्तात् वाहका भवन्तु । युवामपि अद्भ्यः अप्सु प्रविष्टम् सीम् एनं शुष्णासुरम् निः धमथः अबाधेथाम् । सधस्थात् स्वकीयात् स्थानात् निः अबाधेथाम् । मघोनः मघवतो हविष्मतः यजमानस्य हृदः हृदयात् तमांसि अज्ञानरूपाणि पापानि वरथः निवारयथः ॥ ९ ॥

वातस्य युक्तान्त्सुयुजश्चिदश्वान् कविश्चिदेषो अजगन्नवस्युः ।
विश्वे ते अत्र मरुतः सखाय इन्द्र ब्रह्माणि तविषीमवर्धन् ॥ १० ॥

वातस्य । युक्तान् । सुऽयुजः । चित् । अश्वान् । कविः । चित् । एषः । अजगन् । अवस्युः ।
विश्वे । ते । अत्र । मरुतः । सखायः । इन्द्र । ब्रह्माणि । तविषीम् । अवर्धन् ॥ १० ॥

वेङ्कट० गच्छतस्तव योग्यान् सुयुजः अश्वान् अयम् अवस्युः ऋषिः क्रान्तदर्शनो मनसा गच्छति, स्मरति तवागमनमिच्छन्नित्यर्थः । अस्मिन्नवसरे विश्वे मरुतः तव गमनोद्युक्तसहायाः[2] आसन् । तथा 'हे इन्द्र!'[1] ब्राह्मणैः प्रयुक्तानि स्तोत्राणि च तव बलम् अवर्धयन्निति ॥ १० ॥

मुद्गल० कविः चित् प्राज्ञोऽपि अवस्युः एतन्नामकः एषः मन्त्रद्रष्टा वातस्य वायोर्वेगेन युक्तान् संयुक्तान् सुयुजः चित् सुष्ठु योजनीयान् अश्वान् अजगन् प्राप्नोत् । अवस्योः[3] सखायः विश्वे सर्वे मरुतः स्तोतारः हे इन्द्र! अत्र अस्मिँल्लोके ते त्वदीयाम् तविषीम् बलम् ब्रह्माणि मन्त्रैः स्तोत्रैः अवर्धन् अवर्धयन् ॥ १० ॥

इति चतुर्थाष्टके प्रथमाध्याये त्रिंशो वर्गः ॥

सूरश्चिद् रथं परितक्म्यायां पूर्वं करदुपरं जूजुवांसम् ।
भरच्चक्रमेतशः सं रिणाति पुरो दधत् सनिष्यति क्रतुं नः ॥ ११ ॥

सूरः । चित् । रथम् । परिऽतक्म्यायाम् । पूर्वम् । करत् । उपरम् । जूजुऽवांसम् ।
भरत् । चक्रम् । एतशः । सम् । रिणाति । पुरः । दधत् । सनिष्यति । क्रतुम् । नः ॥ ११ ॥

वेङ्कट० सूर्यस्य[1] रथम् रात्र्याम् अन्ततः प्रादुर्भूतं महोचक्रे[2], तत्र उपरम् अवस्थितम् अगमद् वेगेन गच्छन्तम् । तस्य चक्रम् च भरत् अहरत्[3] शत्रूणां जयार्थम् । अस्मिन् काले सूर्येण स्पर्धमानः एतशः ऋषिरिन्द्रेण सम्पृच्छते । एवंविध इन्द्रोऽस्मान् सर्वेषां पुरतः स्थापयन् अस्माकम् आगमिष्यति ॥ ११ ॥

मुद्गल० इन्द्रः परितक्म्यायाम् सङ्ग्रामे एतशाख्येन ऋषिणा सह योद्धुम् सूरश्चित् सूर्यस्यापि सम्बन्धिनम् जूजुवांसम् वेगेन गच्छन्तम् रथम् उपरम् उपरतव्यापारम् पूर्वम् करत् पुराकरोत् । एतशः एतशाय इन्द्रः पूर्वं द्विचक्रस्य रथस्यैकम् चक्रम् भरत् अहरत्[4] । स इन्द्रः तेन चक्रेणासुरान् सम् रिणाति हिनस्ति । अपि च पुरो दधत् अस्मान् पुरस्कुर्वन् नः अस्मदीयम् क्रतुम् यज्ञम् सनिष्यति संभजतु ॥ ११ ॥

आयं जना अभिचक्षे जगामेन्द्रः सखायं सुतसोममिच्छन् ।
वदन् ग्रावाव वेदिं भ्रियाते यस्य जीरमध्वर्यवश्चरन्ति ॥ १२ ॥

आ । अयम् । जनाः । अभिऽचक्षे । जगाम । इन्द्रः । सखायम् । सुतऽसोमम् । इच्छन् ।
वदन् । ग्रावा । अव । वेदिम् । भ्रियाते । यस्य । जीरम् । अध्वर्यवः । चरन्ति ॥ १२ ॥

वेङ्कट० हे जनाः! अयम् इन्द्रः अभिदर्शनार्थम् सुतसोमम् सखायम् अभिवाञ्छन् आ जगाम । आगते चास्मिन् अभिषवग्रावा शब्दं कुर्वन् वेदिम् प्रति वेद्यामित्यर्थः, तत्राहृत्य भ्रियते । दीर्घः छान्दसः । धार्यतेऽभिषवार्थम् । यस्य इन्द्रस्य पानाय क्षिप्रम् अध्वर्यवः चरन्ति [5]यत्र इतस्ततः[5] ॥ १२ ॥

मुद्गल० हे जनाः! अभिचक्षे युष्मानभिद्रष्टुम् अयम् इन्द्रः सखायम् स्तोतारम् सुतसोमम् अभिषुतसोमं यजमानम् इच्छन् अभिलषन् आ जगाम आगच्छति । अध्वर्यवः यस्य ग्राव्णः जीरम् क्षेपण प्रेरणम् चरन्ति, सः ग्रावा सोमाभिषवपाषाण वदन् शब्द कुर्वन् वेदिम् अव भ्रियाते अभिह्रियते ॥ १२ ॥

ये चाकनन्त चाकनन्त नू ते मर्ता अमृत मो ते अंह आरन् ।
वावन्धि यज्यूँरुत तेषु धेह्योजो जनेषु येषु ते स्याम ॥ १३ ॥

---

1. सूरस्य वि' लप. 2-2. चक्रं महो क; चक्रं बही लपं; चक्र महि वि'. 3. अहरद् क लपं; हरत् वि'. 4 आहरत् मूको. 5-5 यत्रमितस्ततः वि'.

ये । चाकनन्त । चाकनन्त । नु । ते । मर्ताः । अमृत । मो इति । ते । अंहः । आ । अरन् ।
ववन्धि । यज्यून् । उत । तेषु । धेहि । ओजः । जनेषु । येषु । ते । स्याम ॥ १३ ॥

वेङ्कट० ये च पुरा त्वाम् इन्द्र! कामितवन्तः, ते लब्धकामाः क्षिप्रं पुनश्च कामितवन्तः। ते अमी मर्त्याः हे अमर्त्य! मा पापं प्राप्नुवन्तु। तदर्थं भजस्व यानस्मान् यष्टॄन्। अपि च तेषु बलम् धेहि जनेषु येषु त्वदीया वयम् स्याम। सहायानां बलम् धेहि इति ॥ १३ ॥

मुद्गल० हे इन्द्र! धनार्थम् ये जनाः चाकनन्त अकामयन्त, पुनश्च ते नु क्षिप्रमेव त्वाम् चाकनन्त, हे अमृत! अमरणशील इन्द्र! मर्ताः मरणधर्माणः ते जनाः अंहः अनर्थम् मो आरन् मा गमन्। उत अपि च यज्यून् यजमानान् ववन्धि सम्भजस्व। येषु जनेषु येषां जनानां मध्ये वयं स्तोतारः ते त्वदीयाः स्याम भवाम, हे इन्द्र! त्वम् तेषु जनेषु ओजः बलम् धेहि ॥ १३ ॥

इति चतुर्थाष्टके प्रथमाध्याये एकत्रिंशो वर्गः ॥

[ ३२ ]

अर्दर्दरुत्समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद् वः सृजो वि धारा अव दानवं हन् ॥ १ ॥

अर्दर्दः । उत्सम् । असृजः । वि । खानि । त्वम् । अर्णवान् । बद्बधानान् । अरम्णाः ।
महान्तम् । इन्द्र । पर्वतम् । वि । यत् । वरिति वः । सृजः । वि । धाराः । अव । दानवम् । हन्निति हन् ॥१॥

वेङ्कट० गातुः। दारितवानसि अपाम् उत्सम्। मेघद्वाराणि चास्य वि असृजः। तथा महतोदकेन [1]बाध्यमानान् सिन्धून् पक्षे नियम्य स्वेस्वे स्थानेऽरमयः इति। एतदेवाह— महान्तम् इति। [1]यदा त्वम् हे इन्द्र। महान्तम् मेघं दारितवानसि, अस्य अपाम् अपिधानानि द्वाराणि अपावृण्वन् उदकधाराश्च वि असृजः, तथा वृत्रं चापि हतवानसि। अत्र यास्कः— '[2]त्वमर्णवानर्णस्वतः एतान् माध्यमिकान् संस्त्यायान् बाध्यमानानरम्णाः। रम्णातिः संयमनकर्मा[2] 'विसर्जनकर्मा वा'। महान्तमिन्द्र! पर्वतं मेघं यद् व्यवृणोः। व्यसृजोऽस्य धाराः। अवाहन्नेनं[1] दानवकर्माणम्' ( या १०,९ ) इति ॥ १ ॥

मुद्गल० 'अर्दर्दरुत्सम्' इति द्वादशर्चमष्टादशं सूक्तम्। गातुर्नामाऽऽत्रेय ऋषिः। त्रिष्टुप् छन्दः। इन्द्रो देवता।

हे इन्द्र! त्वम् उत्सम् उत्स्यन्दमानं मेघम् अर्दर्दः विदारितवानसि। तदनन्तरम् खानि मेघस्योदकनिर्गमनद्वाराणि[4] वि असृजः विशेषेण सृष्टवानसि। किञ्च बद्बधानान् बाध्यमानान् अर्णवान् उदकवतो मेघान् अरम्णाः विसर्जयसि हे इन्द्र!, यत् यः त्वम् महान्तम् प्रभूतम् पर्वतम्

१-१. नास्ति वि°. २-२. नास्ति मूको. ३. अपाह° मूको. ४. 'खानि निर्ग° मूको.

मेघम् वि व निवृतवानसि। धारा अपाम् वि सृज विसृष्टवानसि। अपि च दानवम् दनो पुत्रं वृत्रमसुरम् अव हन् अभिहतवानसि ॥ १ ॥

त्वमुत्साँ ऋतुभिर्बद्बधानाँ अरंह ऊधः पर्वतस्य वज्रिन् ।
अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ इन्द्र तविषीमधत्थाः ॥ २ ॥

त्वम् । उत्सान् । ऋतुऽभिः । बद्बधानान् । अरंहः । ऊधः । पर्वतस्य । वज्रिन् ।
अहिम् । चित् । उग्र । प्रऽयुतम् । शयानम् । जघन्वान् । इन्द्र । तविषीम् । अधत्थाः ॥ २ ॥

वेङ्कट० मेघान् वर्षर्तुभिः बाधमानान् शिलोच्चयस्य ऊधसि प्रेरितवानसि त्वम् वज्रिन्! । अहिम् चित् उद्गूर्ण! प्रसृतम् शयानम् जघन्वान् इन्द्र! बलम् अकृणोः ॥ २ ॥

मुद्गल० हे वज्रिन्! वज्रवन् इन्द्र! त्वम् ऋतुभिः ऋतुषु वृष्टिकालेषु बद्बधानान् प्रतिबध्यमानान् उत्सान् मेघान् प्रतिबन्धकाद् अमोचय इति शेषः । अपि च पर्वतस्य मेघस्य सम्बन्धि ऊधः जलम् अरंहः अगमय । हे उग्र! उद्गूर्णबल इन्द्र! प्रयुतम् उत्सृष्टम् शयानम् जले शयानम् अहिम् चित् वृत्रं च जघन्वान् हतवानसि । हे इन्द्र! त्वम् तविषीम् बलम् अधत्थाः अधारय ॥ २ ॥

त्यस्य चिन्महतो निर्मृगस्य वधर्जघान तविषीभिरिन्द्रः ।
य एक इदप्रतिर्मन्यमान आदस्मादन्यो अजनिष्ट तव्यान् ॥ ३ ॥

त्यस्य । चित् । महतः । निः । मृगस्य । वधः । जघान । तविषीभिः । इन्द्रः ।
यः । एकः । इत् । अप्रतिः । मन्यमानः । आत् । अस्मात् । अन्यः । अजनिष्ट । तव्यान् ॥ ३ ॥

वेङ्कट० त्यस्य चित् महतः वनोद्भूतस्य अभायमात्मीयं वज्रम् बलैः "नि जघान" इन्द्रः । यः एकः एव अहम् अप्रति अहमस्मीति मन्यमानः आसीत् । अस्मात् अहेः सकाशाद् अनन्तरम् अन्यः शुष्णो नाम अजनिष्ट प्रवृद्धतरः ॥ ३ ॥

मुद्गल० इन्द्रः महतः प्रभूतस्य मृगस्य मृगवच्छीघ्रगामिनः त्यस्य चित् तस्य वृत्रस्य सम्बन्धि वधः आयुधम् तविषीभिः स्वकीयैर्बलैः नि जघान निःशेषेणाच्छिनत् । एकः इत् असहायः एव अप्रति प्रतिबन्धरहितं मन्यमानः आत्मानम् यः अस्तीति शेषः । आत् इदानीम् अस्मात् वृत्रात् तव्यान् प्रवृद्धतरः अन्यः असुरः शुष्णः अजनिष्ट प्रादुरभूत् ॥ ३ ॥

त्यं चिदेषां स्वधया मदन्तं मिहो नपातं सुवृधं तमोगाम् ।
वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री नि जघान शुष्णम् ॥ ४ ॥

१ ऊध° मूको २ नास्ति मूको ३ गूर्ण त्रि° एप ४ °द्ध मूको ५ °जयत् मूको
६ बलम् मूको ७-७ निजघान मूको

त्यम् । चित् । एषाम् । स्वधया । मदन्तम् । मिहः । नपातम् । सुऽवृधम् । तमःऽगाम् ।
वृषऽप्रभर्मा । दानवस्य । भामम् । वज्रेण । वज्री । नि । जघान । शुष्णम् ॥ ४ ॥

वेङ्कट० अतः परं शुष्णवध उच्यते। तं च एषाम् मनुष्याणां स्वभूतेनोदकेन[1] मदन्तम् मिहः पौत्रम् सुष्ठु वर्धमानम् तमसो निर्गमयितारम्[2] वर्षणशीलप्रहरणः अहेः क्रोधम्, क्रोधो ह्यहेः शुष्णो भूत्वाऽजायत, एवंविधम् शुष्णम् असुरम् वज्रेण वज्री नि जघान इति ॥ ४ ॥

मुद्गल० एषाम् प्राणिनाम् स्वधया अन्नेन मदन्तम् मोदमानं सर्वप्राणिनामन्नं स्वयमेव भुञ्जानम् मिहः सेचनसमर्थस्य मेघस्य नपातम् पातारं रक्षितारम् सुवृधम् प्रवृद्धम् तमोगाम् तमोऽन्धकारं गच्छन्तम् त्यम् चित् तं च वृत्रं निजघानेति शेषः। वृषप्रभर्मा वर्षणशीलस्य मेघस्य प्रहर्ता वज्री वज्रवान् इन्द्रः वज्रेण स्वकीयेन आयुधेन दानवस्य दनुजस्य भामम् क्रोधादुत्पन्नम् शुष्णम् असुरम् नि जघान हतवान् ॥ ४ ॥

त्यं चिदस्य क्रतुभिर्निषत्तममर्मणो विददिदस्य मर्म ।
यदीं सुक्षत्र प्रभृता मदस्य युयुत्सन्तं तमसि हर्म्ये धाः ॥ ५ ॥

त्यम् । चित् । अस्य । क्रतुऽभिः । निऽसत्तम् । अमर्मणः । विदत् । इत् । अस्य । मर्म ।
यत् । ईम् । सुऽक्षत्र । प्रऽभृता । मदस्य । युयुत्सन्तम् । तमसि । हर्म्ये । धाः ॥ ५ ॥

वेङ्कट० निषत्तशब्द आवासवचनः। शुष्णासुरस्य तम् निषत्तम् तमसि स्थितम् इन्द्रः प्रज्ञाभिः अविन्दत्। तथा गूढमर्मणः अपि शुष्णस्य मर्म अविदत्। अथ प्रत्यक्षः। यदीमं शुष्णम् युयुत्सन्तम् हे सुबल! सोममदस्य प्रादुर्भावे हरणशीले तमसि निहितवान्। अस्योत्तरा भूयसे निर्वचनाय ॥ ५ ॥

मुद्गल० अमर्मणः मर्मरहितमात्मानं मन्यमानस्य[3] अस्य वृत्रस्य निषत्तम् निषण्णम् त्यम् चित् तदेव मर्म प्राणस्थानम् अस्य वृत्रस्य क्रतुभिः प्रज्ञानैः हे इन्द्र! त्वम् विदत् इत् अज्ञासीरेव। यत् यदा हे सुक्षत्र! सुबल इन्द्र! त्वम् मदस्य मादकस्य सोमस्य प्रभृता प्रभृतौ सम्भरणे सति युयुत्सन्तम् योद्धुमिच्छन्तम् ईम् एनं वृत्रम् हर्म्ये हारके तमसि धाः न्यदधाः। वृत्र इन्द्रस्य भयात् तमसि प्राविशदित्यर्थः ॥ ५ ॥

त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम् ।
तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान ॥ ६ ॥

त्यम् । चित् । इत्था । कत्पयम् । शयानम् । असूर्ये । तमसि । वावृधानम् ।
तम् । चित् । मन्दानः । वृषभः । सुतस्य । उच्चैः । इन्द्रः । अपऽगूर्य । जघान ॥ ६ ॥

---

१. "केन मदन्तमोदकेन वि' मूको. २. "तारं वर्षणशीले वि' मूको. ३. मनना" मूको.

वेङ्कट० तम् चित् इत्थम् कल्पयम् 'सुरसपयसं सुरसकस्य पयः'[१] इति यास्कः ( ६,३ ), तम् शयानम् असूर्ये तमसि वर्धमानम् तम् चित् सुतेन सोमेन तृप्यन् [२]वृषभः इन्द्रः[२] त्वम्[३] उच्चैः आयुधम् [४]अपगूर्य हतवानसि[४] ॥ ६ ॥

मुद्गल० सुतस्य अभिषुतेन सोमेन मन्दानः मोदमानः वृषभः कामानां वर्षिता इन्द्रः उच्चैः ऊर्ध्वम् अपगूर्य वज्रमुद्यम्य त्यम् चित् तमेव वृत्रम् जघान अवधीत् । कीदृशम् । इत्था अमुत्रान्तरिक्षलोके कल्पयम् कत् सुरसकं पयो यस्य तम् शयानम् अप्सु शयनं[५] कुर्वन्तम्, असूर्ये सूर्यरहिते तमसि अन्धकारे पद्मानम् वर्धमानम् । तम् चित् पूरणौ ॥ ६ ॥

इति चतुर्थाष्टके प्रथमाध्याये द्वात्रिंशो वर्गः ॥

उद् यदिन्द्रो महते दानवाय वधर्यमिष्ट सहो अप्रतीतम् ।
यदीं वज्रस्य प्रभृतौ ददाभ विश्वस्य जन्तोरधमं चकार ॥ ७ ॥

उत् । यत् । इन्द्रः । महते । दानवाय । वधः । यमिष्ट । सहः । अप्रतिऽइतम् ।
यत् । ईम् । वज्रस्य । प्रऽभृतौ । ददाभ । विश्वस्य । जन्तोः । अधमम् । चकार ॥ ७ ॥

वेङ्कट० इन्द्रः महते असुराय[६] यदा उदयच्छद् आयुधं शत्रूणां सहनशीलम् अप्रतिगतम्, यदा चैनम् वज्रस्य प्रहरणे[७] हिंसितवान्, तदानीम् एनं[८] सर्वस्य प्राणिजातस्य अधः चकार निम्ने प्राक्षिपदिति ॥ ७ ॥

मुद्गल० यत् यदा इन्द्रः महते प्रभूताय दानवाय वृत्रासुराय सहः शत्रूणामभिभवितृ अप्रतीतम् केनाप्यप्रतिगतम् वधः वज्रम् उत् यमिष्ट उदयच्छत्, यत् यदा वज्रस्य प्रभृतौ प्रहरणे सति ईम् एनं वृत्रम् ददाभ अहिंसीत्, तदा विश्वस्य सर्वस्य जन्तोः प्राणिनः अधमम् नीचम् चकार अकरोत् ॥ ७ ॥

त्यं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्याददुग्रः ।
अपादमत्रं महता वधेन नि दुर्योण आवृणङ्मृध्रवाचम् ॥ ८ ॥

त्यम् । चित् । अर्णम् । मधुऽपम् । शयानम् । असिन्वम् । वव्रम् । महि । आदत् । उग्रः ।
अपादम् । अत्रम् । महता । वधेन । नि । दुर्योणे । आवृणक् । मृध्रऽवाचम् ॥ ८ ॥

वेङ्कट० त्यम् चित् उदकं प्रति शयानम् उदकस्य पातारम् अबध्यमं आवरकं महान्तम् अभक्षयत् उग्रः इन्द्रः । अपादम् भक्षणशीलम् महता वज्रेण दुर्योणाख्ये देशे नि अवृणक्[९] इन्द्रः परुषवाचम् ॥ ८ ॥

मुद्गल० उग्रः उद्गूर्णबलः महि महान्तम् त्यम् चित् तमेव वृत्रम् आदत् आदृदौ प्रत्यग्रहीत् । कीदृशम् । अर्णम् अर्णांसि जलमावृत्य शयानम् शयनं कुर्वन्तम् मधुपम् मधुनोऽम्भसः पातारं पालयितारम् असिन्वम् सपत्नानबद्धारम् वव्रम् वृण्वन्तं सर्वमप्याच्छादयन्तम् ।

---

१. "मस्योदकम् मूको. २-२. नास्ति मूको. ३. तम् मूको. ४-४. "गूर्योद्दत" वि°. ५. शयानाम् मूको. ६. सुराय मूको. ७. प्रहरेण मूको. ८. एनं स वि°. ९. अवृणक् वि° लपं.

तदनन्तरमिन्द्रः दुर्योणे सङ्ग्रामे महता प्रभूतेन वधेन वज्रेण अपादम् पादरहितम् अनम् अमात्रं परिमाणरहितम् शुष्णवाचम् हिंसितवागिन्द्रियम्, जृम्भाभिभूतमित्यर्थः, शुष्णम् नि अतृणक् नितरामहिंसीत् ॥ ८ ॥

को अस्य शुष्मं तविषीं वरात एको धना भरते अप्रतीतः ।
इमे चिदस्य ज्रयसो नु देवी इन्द्रस्यौजसो भियसा जिहाते ॥ ९ ॥

कः । अस्य । शुष्मम् । तविषीम् । वराते । एकः । धना । भरते । अप्रतिऽइतः ।
इमे इति । चित् । अस्य । ज्रयसः । नु । देवी इति । इन्द्रस्य । ओजसः । भियसा । जिहाते इति ॥ ९ ॥

वेङ्कट० कः[1] इन्द्रस्य शोषकं तेजो बलं च वारयितुं शक्नोति । सोऽयम् असहाय एव शत्रुधनानि आहरति अप्रतिगतः । द्यावापृथिव्यौ इन्द्रस्य वेगात् क्षिप्रं देव्यौ बलाच्च भयेन कम्पेते इति । वेगबलयोर्भयात् कम्पनमिति ॥ ९ ॥

मुद्गल० अस्य इन्द्रस्य सम्बन्धिनीम् शुष्मम् शोषणीम् तविषीम् बलम् कः वराते निवारयेत् । अप्रतीतः केनाप्यप्रतिगत इन्द्रः एकः असहाय एव धना धनानि शत्रूणां वसूनि भरते बिभर्ति । देवी देव्यौ द्योतमाने इमे चित् इमे द्यावापृथिव्यौ ज्रयसः वेगवतः अस्य इन्द्रस्य सम्बन्धिनः ओजसः बलात् उद्भूतेन भियसा भयेन नु क्षिप्रम् जिहाते गच्छतः ॥ ९ ॥

न्यस्मै देवी स्वधितिर्जिहीत इन्द्राय गातुरुशतीव येमे ।
सं यदोजो युवते विश्वमाभिरनु स्वधाव्ने क्षितयो नमन्त ॥ १० ॥

नि । अस्मै । देवी । स्वऽधितिः । जिहीते । इन्द्राय । गातुः । उशतीऽइव । येमे ।
सम् । यत् । ओजः । युवते । विश्वम् । आभिः । अनु । स्वधाऽव्ने । क्षितयः । नमन्त ॥ १० ॥

वेङ्कट० इन्द्राय देवनशीलम् आयुधम् स्वयमेव हस्तं प्रति नि गच्छति । तथा इन्द्राय पृथिवी स्वयमेव आत्मानं नियच्छति[2], यथा कामयमाना स्त्री पुरुषाय । किंचासौ सर्वमात्मीयं बलम् यदा[3] क्षितिभिः सम् मिश्रयति, ततोऽस्मै बलवते ताः प्रजाः प्रह्वीभवन्ति ॥ १० ॥

मुद्गल० स्वधितिः स्वधितिः स्वेन धृता देवी द्योतमाना द्यौः अस्मै इन्द्राय नि जिहीते नीचत्वेन याति । गातुः भूमिः उशतीव कामयमाना योषिदिव इन्द्राय येमे आत्मानम् नियच्छति । यत् यदेन्द्रः विश्वम् समस्तम् ओजः बलम् आभिः प्रजाभिः सम् युवते संयोजयति । अनु आनुकूल्येन वर्तमानाः क्षितयः मनुष्याः स्वधाव्ने बलवते इन्द्राय नमन्त संनमन्ति ॥ १० ॥

एकं नु त्वा सत्पतिं पाञ्चजन्यं जातं शृणोमि यशसं जनेषु ।
तं मे जगृभ्र आशसो नविष्ठं दोषा वस्तोर्हवमानास इन्द्रम् ॥ ११ ॥

---

१. नास्ति मूको. २. नियच्छति मूको. ३. नास्ति ल स्पे.

एकम् । नु । त्वा । सत्ऽपतिम् । पाञ्चऽजन्यम् । जातम् । शृणोमि । यशसम् । जनेषु ।
तम् । मे । जगृभ्रे । आऽशसः । नविष्ठम् । दोषा । वस्तोः । हवमानासः । इन्द्रम् ॥ ११ ॥

वेङ्कट० एकम् एव त्वा सता पतिं पञ्चजनहितम् जातम् शृणोमि यशस्विनम्[१] जनेषु, एकमेक एव एवंविधो जात इत्यर्थः । तम् त्वाम्[२] मदीयाः अत्यर्थं[३] स्तुत्य स्वीकुर्वन्ति आशंसितारः[४] ऋत्विजः रात्रौ अह्नि च स्तुतिभिराह्वयन्त इन्द्रम् इति ॥ ११ ॥

मुद्गल० हे इन्द्र[१] त्वा त्वाम् एकम् नु मुख्यमेव जनेषु सर्वेषु मनुष्येषु मध्येऽहं मन्त्रद्रष्टा शृणोमि ऋषिमुखेभ्यः । कीदृशम् । सत्पतिम् सतां पालकम् पाञ्चजन्यम् पञ्चजनेभ्यो मनुष्येभ्यो हितम् जातम् उत्पन्नम् यशसम् यशोयुक्तम् । दोषा क्षपायाम् वस्तो वासरे च हवमानासः स्तुवन्त आशसः कामाना शंसमाना मे मदीया प्रजा नविष्ठम् अतिशयेन स्तुत्यम् तम् इन्द्रम् जगृभ्रे गृह्णन्तु स्वीकुर्वन्तु ॥ ११ ॥

एवा हि त्वामृतुथा यातयन्तं मघा विप्रेभ्यो ददतं शृणोमि ।
किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिन्द्र ॥ १२ ॥

एव । हि । त्वाम् । ऋतुऽथा । यातयन्तम् । मघा । विप्रेभ्यः । ददतम् । शृणोमि ।
किम् । ते । ब्रह्माणः । गृहते । सखायः । ये । त्वाऽया । निऽदधुः । कामम् । इन्द्र ॥ १२ ॥

वेङ्कट० एव हि त्वाम् कालेकाले शत्रून् प्रयच्छन्तम्[५] धनानि च स्तोतृभ्यः ददतम् शृणोमि । किम् तुभ्यं ब्राह्मणाः[६] ते सखायः गृह्णन्ति, तुभ्यं भवानामे किमाददत इत्यर्थः, ये त्वया स्वस्वकामनया प्रजापश्वादिकम् कामम् आसजन्ति निदधुः हे इन्द्र । इति ॥ १२ ॥

व्याख्यत्[७] प्रथममध्यायं चतुर्थस्याष्टकस्य सः ।
जज्ञान यो वेङ्कटार्यः[८] कौशिको माधवाह्वयः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके प्रथमोऽध्यायः ॥

मुद्गल० एव एवमुक्तप्रकारेण हि ऋतुथा कालेकाले यातयन्तम् शत्रून् प्रेरयन्तं हे इन्द्र[१] त्वाम् विप्रेभ्यः स्तोतृभ्यः मघा मघानि धनानि ददतम् प्रयच्छन्तम् शृणोमि विजानामि । एतन्मृषैव प्रतिभाति । हे इन्द्र[१] त्वाया त्वयि ये स्तोतारः कामम् स्वकीयाभिलाषम् निदधुः न्यक्षिपन् ब्रह्माणः गृह्णन्ति ते त्वदीयाः सखायः स्तोतारः किम् गृहते त्वत्तः किं गृह्णन्ति । नापि स्वकीयाभिलाषप्राप्तिविलम्बनात् एवम् उक्तवानित्यर्थः ॥ १२ ॥

इति चतुर्थाष्टके प्रथमाध्याये त्रयस्त्रिंशो वर्गः ॥

— ॥ —

इति ऋग्वेदे समाप्ये चतुर्थाष्टके प्रथमोऽध्यायः समाप्तः ॥



१ यशःयन वि[१] स्प २. त्वा वि[१] ३ महर्नेयस मूको ४ °तारम् वि[१] एर्प.
५ ५ शत्रुमस्त वि[१], शत्रून् म[१] स्प ६ °ण वि[१] स्प ७ व्याख्यात् वि[१] ८ वेङ्कट वि[१] स्प

## अथ चतुर्थाष्टके द्वितीयोऽध्यायः ॥

'महि महे तवसेऽ(से' अ)धः' व्याचिख्यासति माधव ।
समासविषये वाच्यम् आदितः सम्प्रदर्शयन् ॥ १ ॥

समासे उपसृष्टानां निवर्तन्ते विभक्तय ।
विस्पष्टमभिधानाय निर्दिश्यन्ते पुनश्च ताः ॥ २ ॥

'द्रविणोदा द्रविणस'[2], 'ता सोमं सोमपातमा'[3] ।
'गवां गोपति'[4] इत्येवं 'प्र तु'[5] ते पादपूरणाः ॥ ३ ॥

उपादानमशक्योऽयं[6] प्रत्ययं प्रकृतिं विना ।
ततोऽन्येन गतार्थोऽपि प्रकृति सम्प्रयुज्यते ॥ ४ ॥

'वसोरिन्द्रं वसुपतिम्'[7], 'पुरूतमं पुरूणाम्'[8] च ।
'तुवीतमं तुवीनाम्'[9] च पादाभ्यास[10] निदर्शनम् ॥ ५ ॥

'वाजेभिर्वाजिनीवती'[11] वाजेभिरिति पूरणम्[12] ।
शुक्लैर्यद्वृभिः सेयं 'शुद्ध वेष्ट धियावसु'[13] ॥ ६ ॥

नन्वत्र विग्रहः सोऽयम् अस्त्यस्या वाजिनीति यः ।
तृतीयान्तस्य सम्बन्ध पुल्लिङ्गस्य च तत्र क ॥ ७ ॥

तस्मादुभेरमद्धोथं हविर्भूते सरस्वती ।
महतामिति मन्त्रार्थो भरतीरत्नवतीति ॥ ८ ॥

किमत्र तव वक्तव्यम् 'प्र सोम मधुवि'[14] इति ।
किं चेह तव वाच्यं स्याद् 'शुक्रेभिर्भृगवाहसम्'[15] ॥ ९ ॥

तत्रैव विग्रहः कार्यो वाजिनीभि समन्विता ।
या सा वाजिनीवतीति तृतीयान्तस्तथान्वितः ॥ १० ॥

क्रतुभिर्युक्त सुक्रतुः[16] बहुव्रीहेश्च विग्रहः ।
नत्वस्य सन्ति क्रतवस्तृतीयाश्च तथान्विता ॥ ११ ॥

---

१. °वसोऽध पंक्तम २. ऋ १,१५,७. ३. ऋ १,२१,१. ४. ऋ १,१०१,४ ५ ५ गतु पंक्तम ६. उपादाम° त्रि° लप ७. ऋ १,९,९. ८ ऋ १,५,२. ९ ऋ १,१९,१. १० °दातत्र पंक्तम ११. ऋ १,३,१० १२. °रण पंक्तम १३. ऋ १,९,२. १४. ऋ ८,१२, १०. १५. °तुरिति त्रि° लप

ऋत्वो यस्य सन्तीति योऽयं लौकिकविग्रहः ।
स विस्पष्टाभिधानाय सत्त्वमात्रं ह्यपेक्षितम्[1] ॥ १२ ॥

सन्नयो वाजशब्देन पुंलिङ्गेनापि सिध्यति ।
वाजेभिरिति पुंल्लिङ्गं तथा सति न दुष्यति ॥ १३ ॥

यज्ञाऽवयवत्वं बहुभिः कृतमश्वैस्तथा[2] सति ।
'सूर्या वृत्ववेभिः'[3] इति समीचीनो भविष्यति ॥ १४ ॥

'गोभिर्वपावान् मधुमान्'[4] तत्र स्पष्टं प्रतीयते ।
कृतं[5] गोभिर्वपावत्त्वं गोभिरेवाश्ववानिति ॥ १५ ॥

'यशोभिर्यज्ञवाहसं सोमेभिः सोमपातमम्'[6] ।
'यज्ञैर्यज्ञस्य बोधा यो'[7] यज्ञवाहा भवेदिति ॥ १६ ॥

'अश्विना 'वज्जरीः'[8] भरणो'[8] सत्यथार्थे विनिर्दिशन्[9] ।
धनःशब्दमुपादाय[10] सत्यस्थेऽपि च वाचकाः ॥ १७ ॥ इति ॥

[३३]

महिं मुहे तवसे दीध्ये नॄनिन्द्रायेत्था तवसे अतव्यान् ।
यो अस्मै सुमतिं वाजसातौ स्तुतो जने समर्यश्चिकेत ॥ १ ॥

महि । महे । तवसे । दीध्ये । नॄन् । इन्द्राय । इत्था । तवसे । अतव्यान् ।
यः । अस्मै । सुऽमतिम् । वाजऽसातौ । स्तुतः । जने । सऽमर्यः । चिकेत ॥ १ ॥

वेङ्कट० संवरणः प्राजापत्यः । मम महते बलाय अरयन्तं दीप्तीकरोमि कर्मणो नेतॄन् ऋत्विजः इन्द्राय इत्थम्[11] युद्धाय कर्म कर्तुम् अहम् अप्रबुद्धः । यः अस्मै स्तोत्रे सङ्ग्रामे स्तुतः [12]'सन् जनानां'[12] मध्ये मरुद्भिः सहागत्य सुमतिम् प्रज्ञापयति ॥ १ ॥

मुद्गल० अत्रेः पञ्चमे मण्डले तृतीयेऽनुवाके द्वादश सूक्तानि । तत्र 'महि महे' इति दशर्चं प्रथमं सूक्तम् । प्रजापतिपुत्रः संवरण ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।

अहं संवरणः अतव्यान् अत्यन्तमिव दुर्बलः सन् महि महत् प्रभूतं स्तोत्रम् महे महते

---

१. अदे° वेङ्कभ. २. बहुम° वेङ्कभ. ३. ऋ १,१३१,२. ४. ऋ २०,३७. ५ नास्ति लपं; कृत वि[1]; कतोर् वेङ्कभ. ६. ऋ ८,९२,२० ७-७. यज्ञमानैर्यो वि° लपं. ८-८. °वज्रीःमस्या वेङ्कभ. ९. विनिर्दिशेत लपं वेङ्कभ. १० धनशब्द° वि° ऊ लपं. ११. इन्द्र सूको° † ऋ १,३,१. १२-१२. सज्जनाना वि°.

तवसे बलवते इन्द्राय इत्था इत्थं वक्ष्यमाणप्रकारेण दीध्ये दीपयामि प्रकाशयामि। किमर्थम्। नॄन् मनुष्याणामस्मदीयानाम् तवसे बलाय। यः इन्द्रः अस्मै जने जनाय संवरणाय वाजसातौ सङ्ग्रामे स्तुतः सन् सुमतिम् समर्थः स्तोतृभिः सहितः चिकेत जानाति ॥ १ ॥

स त्वं न॑ इन्द्र धियसा॒नो अ॒र्कैर्हरी॑णां वृषन् योक्त्र॑मश्रेः ।
या इ॒त्था म॑घवन्न॒नु जोषं॒ वक्षो॑ अ॒भि प्रार्यः सक्षि॒ जना॑न् ॥ २ ॥

सः । त्वम् । नः॒ । इ॒न्द्र॒ । धि॒य॒सा॒नः । अ॒र्कैः । हरी॑णाम् । वृ॒ष॒न् । योक्त्र॑म् । अ॒श्रेः ।
याः । इ॒त्था । म॒घ॒ऽव॒न् । अनु॑ । जोष॑म् । वक्षः॑ । अ॒भि । प्र । अ॒र्यः । स॒क्षि॒ । जना॑न् ॥ २ ॥

वेङ्कट० सः त्वम् अस्माकं स्तोत्रैः इन्द्र! वृषन्! प्रीयमाणः अश्वानाम् योक्त्रम् रथयुगैः समयोजयः। युक्त्वा वा अश्वान् याहि इत्थम् हे मघवन्! सेव्यं मां प्रति। अभि वह चास्मदीयान् जनान् स्वामी सन् सान् प्र सक्षि च। सचिः सेवाकर्मेति ॥ २ ॥

मुद्गल० हे वृषन्! वर्षक! इन्द्र! सः प्रसिद्धः त्वम् नः अस्मान् धियसानः ध्यायन् अर्कैः अर्चनसाधनैः स्तोत्रैः हरीणाम् रथे नियोज्यानाम् अश्वानाम् योक्त्रम् नियोजनरज्जुम् अश्रेः आश्रयसि। याः यान् अर्कान् हे मघवन्! इत्था इत्थम् जोषम् प्रीतिम् अनु वक्षः अवहः[1]। तथा इत्था अर्यः जनान् अस्मदीयान् अभि आभिमुख्येन प्र प्रकृष्टम् सक्षि परामवः ॥ २ ॥

न ते त॑ इन्द्रा॒भ्य१॒॑स्मदृ॒ष्वायु॑क्तासो अब्र॒ह्मता॒ यदस॑न् ।
तिष्ठा॒ रथ॒मधि॒ तं व॑ज्रहस्ता र॒श्मिं दे॑व यमसे॒ स्वश्वः॑ ॥ ३ ॥

न । ते । ते॒ । इ॒न्द्र॒ । अ॒भि । अ॒स्मत् । ऋ॒ष्व॒ । अयु॑क्तासः । अ॒ब्र॒ह्मता॑ । यत् । अस॑न् ।
तिष्ठ॑ । रथ॑म् । अधि॑ । तम् । व॒ज्र॒ऽह॒स्त॒ । आ । र॒श्मिम् । दे॒व॒ । य॒म॒से॒ । सु॒ऽअश्वः॑ ॥ ३ ॥

वेङ्कट० हे दर्शनीय! इन्द्र! सत्र ते अश्वाः न अस्मान् अभि आगच्छन्ति। यस्मादस्माकं स्तोत्रवर्जिततया रथे अयुक्ताः अभवन्। सम्प्रति स्तोत्रे क्रियमाणे वज्रहस्त! तम् रथम् 'अधि तिष्ठ, यम् च' अश्वानाम् रश्मिम् आगमनार्थम् आ यच्छसि[3] देव! शोभनाश्वः स्वामिति ॥ ३ ॥

मुद्गल० [illegible] ऋष्व! महन्! इन्द्र! यत् ये अस्मत् अस्मत्तः त्वदन्येभ्योऽन्ये अयुक्तासः त्वया असंयुक्ताः असन् अभवन्। अब्रह्मता ब्रह्म परिवृढं कर्म तद्रहितत्वात् ते नराः ते त्वदीयाः न भवन्ति। अतः अस्मत्पक्षम् अभि आगन्तुम् तम् प्रसिद्धम् रथम् अधि तिष्ठ। हे वज्रहस्त! इन्द्र! देव! स्वश्वः त्वं यं रथमारोढुम् रश्मिम् प्रग्रहम् आ यमसे नियमयसि, तम् अधितिष्ठ ॥ ३ ॥

पु॒रू यत् त॑ इन्द्र॒ सन्त्यु॒क्था गवे॑ च॒कर्थो॒र्वरा॑सु॒ युध्य॑न् ।
त॒त॒क्षे सूर्या॑य चि॒दोक॑सि॒ स्वे वृषा॑ स॒मत्सु॑ दा॒सस्य॒ नाम॑ चित् ॥ [illegible] ॥

1. मवहः मूको. 2-2. अधितिष्ठाम न वि' ह्यं. 3. यच्छ मूको.

पुरु । यत् । ते । इन्द्र । सन्ति । उक्था । गवे । चक्र्थ । उर्वरासु । युध्यन् ।
ततक्षे । सूर्याय । चित् । ओकसि । स्वे । वृषा । समत्ऽसु । दासस्य । नाम । चित् ॥ ४ ॥

वेङ्कट० पणिभिरपहृतेषु गोषु तज्जयार्थमङ्गिरोभिः प्रयुक्तानि बहूनि स्तोत्राणि हे इन्द्र! यदा तव भवन्ति, यदा च पणिनां तेषुतेषु क्षेत्रेषु प्रविश्य युद्धं कुर्वन् अङ्गिरसः गवे कृतवानसि, तदानीम् सूर्याय [1]स्वे स्थाने[1] स्थिराय असुरैरुत्पादितेन तमसाऽऽवृताय[2] प्रकाशार्थं[3] वक्षणं कृतवानसि। इन्द्रः सेक्ता युद्धेषु दासस्य उपक्षपयितुः अस्य नमयिता च। उत्तरार्धः परोक्षः ॥ ४ ॥

मुद्गल० हे इन्द्र। वृषा कामानां वर्षकः त्वम् सूर्याय चित् सूर्यं च स्वे ओकसि स्वस्थाने चकर्थ कृतवानसि। किञ्च ते तव यत् यदा सम्भूतानि पुरु पुरूणि बहूनि उक्था उक्थानि शस्त्राणि सन्ति, तदा उर्वरासु सस्योपेतासु भूमिषु गवे वृष्ट्युदकाय युध्यन् जलप्रतिबन्धकान् ततक्षे सम्पादयसि। समत्सु सङ्ग्रामेषु दासस्य वृष्टिप्रतिबन्धकर्तुरेतन्नामकस्यासुरस्य नाम चित् नामापि ततक्षे नाशयसीत्यर्थः ॥ ४ ॥

त्वं ते त इन्द्र ये च नरः शर्धो जज्ञाना याताश्च रथाः ।
आस्माञ्जगम्यादहिशुष्म सत्वा भगो न हव्यः प्रभृथेषु चारुः ॥ ५ ॥

वयम् । ते । ते । इन्द्र । ये । च । नरः । शर्धः । जज्ञानाः । याताः । च । रथाः ।
आ । अस्मान् । जगम्यात् । अहिऽशुष्म । सत्वा । भगः । न । हव्यः । प्रऽभृथेषु । चारुः ॥५॥

वेङ्कट० वयम् ते भवामः तव[4], ये चास्मदीया योद्धारः त्वदीयं येषां आमन्तोऽस्मदीयाः रथाः सङ्ग्रामं प्रति गताश्चासन्। तथा सति इन्द्र! अस्मान् आ गच्छतु हे अहेः शोषक! शत्रूणां सादनं[5] बलम् भाग्यम् इव आह्वातव्यम्[6] सङ्ग्रामेषु कल्याणमिति ॥ ५ ॥

मुद्गल० हे इन्द्र! ये च नरः कर्मणां नेतार ऋत्विग्यजमानाः, ते त्वदीयाः ते भागिनः वयम् शर्धः बलम् जज्ञानाः उत्पादयन्तः स्तुतिभिः याताः च ह्योतुं त्वाम् प्राप्ताश्च रथाः रंहणशीलाश्च। किञ्च हे अहिशुष्म! सर्वतो व्यापकः इन्द्र! त्वदनुग्रहात् हव्यः स्तुत्यः चारुः सन्ता सत्या भृत्यादिः प्रभृथेषु सङ्ग्रामेषु अस्मान् आ जगम्यात् आगच्छेत् भगः न भग इव। भगदेवो यथाऽस्मत्सहाय आगच्छति तथास्मत्सहाय आगच्छेत्[7] इति ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये प्रथमो वर्गः ॥

पपृक्षेण्यमिन्द्र त्वे ह्योजो नृम्णानि च नृतमानो अमर्तः ।
स न एनीं वसवानो रयिं दाः प्रार्यः स्तुषे तुविमघस्य दानम् ॥ ६ ॥

---

१-१. स्वस्थाने वि॰ लपं. २. °वृता मूको. ३. प्रकार्थं वि॰, °र्थे ल. ४, तव च वि॰.
५. सदानं मूको. ६. ह्वातव्यं ल लपं. ७. आगच्छ मूको.

पपृक्षेण्यम् । इन्द्र । त्वे इति । हि । ओजः । नृम्णानि । च । नृतमानः । अमर्तः ।
सः । नः । एनीम् । वसवानः (?)[१] । रयिम् । दाः । प्र । अर्यः । स्तुषे । तुविऽमघस्य । दानम् ॥

वेङ्कट० भीरुणां संसेव्यम् इन्द्र! त्वयि हि ओजः बलानि च विद्यन्ते। स त्वं कर्मसु मर्तनशीलः अमरणधर्मा। सः[२] त्वं श्वेतां निर्मलां रयिम् अस्मभ्यं देहि हे वासयितः! स्तोतॄणाम्, प्रकर्षेणाहं स्तौमि स्तोतॄणाम् ईश्वरः[३] बहुधनस्य तव दानम् ॥ ६ ॥

मुद्गल० हे इन्द्र! पपृक्षेण्यम् सम्पर्कार्हम् ओजः बलम् त्वे हि त्वयि खलु, त्वदधीनमित्यर्थः। नृतमानः नृत्यन्[४] नृषु नरपतः अमर्तः अमरणधर्मा सः त्वम् वसवानः (?) आच्छादयन् स्वतेजसा जगत् नृम्णानि द्रविणानि एनीम् श्वेतवर्णाम् रयिम् धनम् दाः देहि। अहं च अर्यः ईश्वरस्य तुविमघस्य बहुधनस्य च दानम् प्र स्तुषे स्तौमि ॥ ६ ॥

एवा न इन्द्रोतिभिरव पाहि गृणतः शूर कारून् ।
उत त्वचं ददतो वाजसातौ पिप्रीहि मध्वः सुषुतस्य चारोः ॥ ७ ॥

एव । नः । इन्द्र । ऊतिऽभिः । अव । पाहि । गृणतः । शूर । कारून् ।
उत । त्वचम् । ददतः । वाजऽसातौ । पिप्रीहि । मध्वः । सुऽसुतस्य । चारोः ॥ ७ ॥

वेङ्कट० एवमस्मान् इन्द्र! रक्षणैः अव। रक्ष स्तुवतः शूर! स्तोतॄन्। अपि च सङ्ग्रामे शत्रुभ्यः आत्मीयां[५] त्वचं ददतः प्रदर्शयतः मम मधुना सुतेन चारुणा सोमेन त्वम् पिप्रीहि। धारण-कर्ता वा ददातिः, त्वचं बिभ्रत इति ॥ ७ ॥

मुद्गल० हे शूर! इन्द्र! एव एवम् नः अस्मान् गृणतः स्तुवतः कारून् कर्तॄन् ऋत्विजः ऊतिभिः रक्षणैः अव, पाहि पालय। उत अपि च वाजसातौ सङ्ग्रामे त्वचम् आच्छादकं रूपम् ददतः प्रयच्छतः सुषुतस्य चारोः अभिषुतस्य मनोहरस्य मध्वः सोमस्य पिप्रीहि प्रीणयास्मान[६]। उक्तलक्षणं सोमं पिबेत्यर्थः ॥ ७ ॥

उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराणाः ।
वहन्तु मा दश श्येतासो अस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे ॥ ८ ॥

उत । त्ये । मा । पौरुऽकुत्स्यस्य । सूरेः । त्रसदस्योः । हिरणिनः । रराणाः ।
वहन्तु । मा । दश । श्येतासः । अस्य । गैरिऽक्षितस्य । क्रतुऽभिः । नु । सश्चे ॥ ८ ॥

वेङ्कट० अपि च अमी मां पुरुकुत्सपुत्रस्य त्रसदस्योः मम साहाय्यार्थम् आगतस्य प्राज्ञस्य युक्ता "अश्वा रममाणा" भवन्ति। तेषाम् वहन्तु माम्[७] दश श्वेतवर्णाः त्रसदस्योः स्वभूताः, किं चाहम् गैरिक्षितस्य सहायस्य कर्मभिः क्षिप्रं सक्तो भवामि ॥ ८ ॥

१. 'वानो'(तु. संहितापाठः) < 'वान! व इति द्र. (द्र. वैप १,२७८०c, [अंशतः] वें च). २. नास्ति वि[१]. ३. स्तोता मानामी' ए; स्तोमानमी' वि[२]. ४. नास्ति मूको. ५. 'यं ल. ६. 'वास्मकम् मूको. ५-७ अश्वा मा रम' मूको.

मुद्गल० उत अपि [redacted] त्ये ते मा महाम् रराणाः दत्ताः पौरुकुत्स्य पुरुकुत्सापत्यस्य सूरेः प्रेरकस्य हिरणिनः हिरण्यवतः अस्य त्रसदस्योः एतन्नामकस्य राजर्षेः गैरिक्षितस्य गिरिक्षितगोत्रोत्पन्नस्य श्येतासः शुभ्रवर्णाः दश अश्वाः मा माम् वहन्तु प्रापयन्तु । अहं च क्रतुभिः यज्ञादिभिः नु क्षिप्रम् सद्यः गच्छेयम् ॥ ८ ॥

उत त्ये मा मारुताश्वस्य शोणाः क्रत्वामघासो विदथस्य रातौ ।
सहस्रा मे च्यवतानो ददान आनूकमर्यो वपुषे नार्चत् ॥ ९ ॥

उत । त्ये । मा । मारुतऽअश्वस्य । शोणाः । क्रत्वाऽमघासः । विदथस्य । रातौ ।
सहस्रा । मे । च्यवतानः । ददानः । आनूकम् । अर्यः । वपुषे । न । आर्चत् ॥ ९ ॥

वेङ्कट० अपि च[1] ते माम् मारुताश्वस्य राज्ञः सम्बन्धिनः शोणाः विदथमिति[2] ॥ ९ ॥

मुद्गल० उत अपि च त्ये ते अश्वाः वक्ष्यमाणाः मारुताश्वस्य, मरुत्सदृशवेगाश्ववान्[3] मरुताश्वः, तदपत्यस्य विदथस्य एतन्नामकस्य राज्ञः शोणाः शोणवर्णाः क्रत्वामघासः क्रतुना कर्मणा शीघ्रगमनादिलक्षणेन महनीया[4] अश्वा[5] रातौ दाने विनियुक्ताः मा मां वहन्त्वीति शेषः। किञ्च सहस्रा सहस्राणि अपरिमितानि धनानि अर्यः पूज्यस्य मे पूज्याय मह्यम् च्यवतानः च्यावयन् ददानः प्रयच्छन् सः आनूकम् आभरणं च वपुषे स्वशरीरालङ्काराय आर्चत् प्रापयत् । न चार्थे ॥ ९ ॥

उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः ।
मह्ना रायः संवरणस्य ऋषेर्व्रजं न गावः प्रयता अपि ग्मन् ॥ १० ॥

उत । त्ये । मा । ध्वन्यस्य । जुष्टाः । लक्ष्मण्यस्य । सुऽरुचः । यतानाः ।
मह्ना । रायः । सम्ऽवरणस्य । ऋषेः । व्रजम् । न । गावः । प्रऽयताः । अपि । ग्मन् ॥ १० ॥

वेङ्कट० अपि च ते मा ध्वन्यस्य लक्ष्मणवतो राज्ञः पर्याप्ताः शोभनदीप्तयो यतमानाः अश्वाः वहन्तु । तेऽमी संवरणस्य ऋषेः मम धनस्य महत्त्वेन हेतुना[6] व्रजम् इव गावः अपि ग्मन् मम सद्गता आसन् । साहाय्यार्थं राजभिः प्रहिता अश्वा इति ॥ १० ॥

मुद्गल० उत अपि च त्ये ते वक्ष्यमाणा रायः ध्वन्यस्य ध्वन्यनामकस्य लक्ष्मण्यस्य लक्ष्मणपुत्रस्य राज्ञः सम्बन्धिनोऽश्वाः जुष्टाः मा मां प्राप्ताः सुरुचः शोभनदीप्तयः यतानाः वहनाय[7] यतमानाः मह्ना महत्त्वेन युक्ताः रायः धनानि प्रयताः दत्ताः संवरणस्य संवरणनामकस्य ऋषेः अपि ग्मन् अपिगताः प्राप्ताः, मद्गृहमिति शेषः । व्रजम् न गावः गोष्ठं गाव इव ॥ १० ॥

इति चतुर्थाष्टके द्वितीयाध्याये द्वितीयो वर्गः ॥

---

1. नास्ति वि[1]. 2. विदथमिति मूको. 3. °श्ववान् मूको. 4. माह° मूको. 5. °श्वाः विदथस्य वेदनसाधनस्य यज्ञस्य मूको. 6. देवताः हे° वि[1]; °ता लुप्तं. 7. °हमानाः मूको.

[ ३४ ]

अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते ।
सुनोतन पचत ब्रह्मवाहसे पुरुष्टुताय प्रतरं दधातन ॥ १ ॥

अजातऽशत्रुम् । अजरा । स्वःऽवती । अनु । स्वधा । अमिता । दस्मम् । ईयते ।
सुनोतन । पचत । ब्रह्मऽवाहसे । पुरुऽस्तुताय । प्रऽतरम् । दधातन ॥ १ ॥

वेङ्कट० अविद्यमानशत्रुं दर्शनीयम् अजरा सुखवती महती स्वधा हविर्लक्षणमन्नम् अनु गच्छति । यथा सति सुनोतन सोमम्, पचत च पक्तव्यानि, स्तोत्रं यस्य वाहकम्[1] तस्मै इन्द्राय पुरुष्टुताय प्रकर्षेण[2] दत्त च तानि ॥ १ ॥

मुद्गल० 'अजातशत्रुम्' इति नवर्चं द्वितीयं सूक्तम् । प्राजापत्यः संवरण ऋषिः । नवमी त्रिष्टुप्, शिष्टा जगत्यः । इन्द्रो देवता ।

अजातशत्रुम् अनुत्पन्नाः शातयितारो[3] यस्य तम् दस्मम् शत्रूणामुपक्षपयितारम् अजरा अक्षीणा स्वर्वती स्वरणवती अमिता अपरिमिता स्वधा अन्नं हविः अनु ईयते अनुप्राप्नोति । तदर्थं हे ऋत्विजः! सुनोतन अभिषुणुत पचत पुरोडाशादिकम् । कस्मै ? ब्रह्मवाहसे ब्रह्मणः स्तोत्रस्य वाहकाय पुरुष्टुताय बहुभिः स्तुतायेन्द्राय । प्रतरम् प्रकृष्टतरम् दधातन धारयत स्वस्वोचितकर्म ॥ १ ॥

आ यः सोमेन जठरमपिप्रतामन्दत मघवा मध्वो अन्धसः ।
यदीं मृगाय हन्तवे महावधः सहस्रभृष्टिमुशना वधं यमत् ॥ २ ॥

आ । यः । सोमेन । जठरम् । अपिप्रत । अमन्दत । मघऽवा । मध्वः । अन्धसः ।
यत् । ईम् । मृगाय । हन्तवे । महाऽवधः । सहस्रऽभृष्टिम् । उशना । वधम् । यमत् ॥ २ ॥

वेङ्कट० आ अपूरयत् यः सोमेन उदरम्, मत्त आसीत् स इन्द्रो मधुररसेन सोमेन । यत् एनं मृगासुरस्य हननाय महाप्रहरणः उशना सहस्रधारम् वधम् आयुधम् इन्द्रः[4] आयच्छत्[5] तदेति ॥ २ ॥

मुद्गल० यः मघवा सोमेन जठरम् स्वकीयम् आ सर्वतः अपिप्रत अपूरयत् । मध्वः मधुररसस्य अन्धसः अन्नस्य सोमस्य पानेन अमन्दत अतृप्यत् । यत् यदा ईम् अयम् मृगाय एतन्नामकाय असुराय हन्तवे हं हन्तुम् महावधः महावज्रः उशना कामयमानः शत्रुम् सहस्रभृष्टिम् सहस्रभृष्टिरपरिमिततेजाः तम् वधम् वज्रम् यमत् उदयच्छत्, तदाऽपिप्रत अमन्दत[6] च ॥ २ ॥

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह ।
अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥ ३ ॥

---

१. वाहकम् वि[1] अपं. २. °र्षेण च ल. ३. °शातो मूको. ४. इन्द्र वि[1] अपं; इन्द्राय ल.
५. अय° वि[1]. ६. अमन्दयत मूको.

यः । अस्मै । घ्रंसे । उत । वा । यः । ऊधनि । सोमम् । सुनोति । भवति । द्युऽमान् । अहं ।
अपऽअप । शक्रः । ततनुष्टिम् । ऊहति । तनूऽशुभ्रम् । मघऽवा । यः । कवऽसखः ॥ ३ ॥

वेङ्कट० यः इन्द्राय अहनि सोमम् सुनोति यो वा रात्रौ, स दीप्तिमानेव भवति । अप ऊहति शक्रः ततनुष्टिम् ततस्य धर्मसन्तानस्य दादकं धर्मसन्तानाद्वेषजम् तनूनां शोभयितारम् अलङ्करिष्णुम् इन्द्रः, यः कुत्सितः सखा न यजते समिति ॥ ३ ॥

मुद्गल० यः यजमानः अस्मै इन्द्राय घ्रंसे अहनि, उत वा अथवा यः यजमानः ऊधनि रात्रौ, अहनि रात्रौ च, सोमम् सुनोति सः भवति द्युमान् दीप्तिमान् । अह इति[1] विनिग्रहार्थीयः । किन्तु शक्रः इन्द्रः ततनुष्टिम् ततं धर्मसन्ततिं नुदति यष्टि कामयते कामानिति ततनुष्टिः तम् तनूशुभ्रम् तनूः शोभनीया अलङ्कारादिभिः[2] यस्य स तादृशं स्वपोषकम् अयज्वानम् अप ऊहति । अप-शोऽपशब्दः पूरणः । मघवा धनवान् यः च कवासखः कुत्सितपुरुषसहायस्तमपोहतीति ॥ ३ ॥

यस्यावधीत् पितरं यस्य मातरं यस्य शक्रो भ्रातरं नात ईषते ।
वेतीद्वस्य प्रयता यतंकरो न किल्बिषादीषते वस्व आकरः ॥ ४ ॥

यस्य । अवधीत् । पितरम् । यस्य । मातरम् । यस्य । शक्रः । भ्रातरम् । न । अतः । ईषते ।
वेति । इत् । ऊँ इति । अस्य । प्रऽयता । यतम्ऽकरः । न । किल्बिषात् । ईषते । वस्वः । आऽकरः ॥ ४ ॥

वेङ्कट० अयमिन्द्रः यस्य पित्रादीन् अवधीत् पापकारिणः, तस्मात् न पलायते, 'वेति इत्' कामयत एव अस्य अपि प्रत्तानि[4] हवींषि यमनकरः शत्रूणाम्, न पुरातनात् पितृवधादिकात् किल्बिषात् पलायते धनस्य आकरः ॥ ४ ॥

मुद्गल० शक्रः शक्तोऽयम्[5] यस्य अयज्वनः पितरम् अवधीत् हतवान्, यस्य च मातरम् अवधीत्, यस्य भ्रातरम्, अतः अस्मात् अयज्वनः सकाशात् न ईषते न बिभेति । किन्तु अस्य प्रयता दत्तानि हवींषि वेति इत् उ कामयत एव । अयज्वानं शिक्षयित्वा नियोजयतीत्यर्थः । यतंकरः यमनकर्ता वस्वः वसुनः धनस्य आकरः आभिमुख्यकर्ता यः किल्बिषात् पित्रादिवधयुक्तात्[6] न ईषते न चलति ॥ ४ ॥

न पञ्चभिर्दशभिर्वष्ट्यारभं नासुन्वता सचते पुष्यता चन ।
जिनाति वेदमुया हन्ति वा धुनिरा देवयुं भजति गोमति व्रजे ॥ ५ ॥

न । पञ्चऽभिः । दशऽभिः । वष्टि । आऽरभम् । न । असुन्वता । सचते । पुष्यता । चन ।
जिनाति । वा । इत् । अमुया । हन्ति । वा । धुनिः । आ । देवऽयुम् । भजति । गोऽमति । व्रजे ॥५॥

वेङ्कट० अयमिन्द्रः पञ्चभिः दशभिः पञ्चदशभिर्वा कर्मभिः पुरुषमारब्धुम् न इच्छति, किन्तु सुन्वन्त-

1. नास्ति मूको. 2. °द्भिरा मूको. 3-3. छलोति चेव नि° एवं 4. प्रत्तानि ल. 5. °त्रोयं मूको. 6. °शादिवद मूको.

मेवारभते इत्याह, पुष्टेनापि न असुन्वता सङ्गतो भवति इति । हिनस्ति वा अमुम् असुन्वन्तम्, हन्ति वा, कम्पयिता शत्रूणां देवकामं पुनः गोमति व्रजे प्रवेशयति ॥ ५ ॥

मुद्गल० अयमिन्द्रः पञ्चभिर्दशभिर्वा सहायैः आरभम् आरम्भं शत्रुहननाय आलम्बनम् न वष्टि, साहाय्यं नापेक्षते[1] इत्यर्थः । असुन्वता अभिषवम् अकुर्वता सह पुष्यता चन बन्ध्वादीन् अपोषयतापि न सचते न सङ्गच्छते । असुन्वन्तम् अभिषवम् अकुर्वाणम् अयष्टारम् अपुष्यन्तं च न प्राप्नोतीत्यर्थः । न केवलम् अप्राप्तिमात्रम् किन्तु जिनाति वा जिनाति च बाधते । इत् पूरणः । हन्ति वा अमुम् अमुम् अयष्टारम् धुनिः कम्पकः शत्रूणाम् देवयुम् देवमिन्द्रं कामयमानं यजमानम् गोमति व्रजे आ भजति योजयतीत्यर्थः ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये तृतीयो वर्गः ॥

वित्वक्षणः समृतौ चक्रमासजोऽसुन्वतो विषुणः सुन्वतो वृधः ।
इन्द्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः ॥ ६ ॥

विऽत्वक्षणः । समऽऋतौ । चक्रमऽआसजः । असुन्वतः । विषुणः । सुन्वतः । वृधः ।
इन्द्रः । विश्वस्य । दमिता । विऽभीषणः । यथाऽवशम् । नयति । दासम् । आर्यः ॥ ६ ॥

वेङ्कट० विविधम् असाधूनां तनूकरणकारी सङ्ग्रामे आयुधस्य आसक्ता सोऽयम् असुन्वतः पराङ्मुखः सुन्वतः वर्धयिता इन्द्रः विश्वस्य शत्रोः दमयिता भयङ्करः असुरम्[2] आत्मोपात्तवशं करोति स्वामी ॥ ६ ॥

मुद्गल० समृती सङ्ग्रामे विलक्षणः विशेषेण तनूकर्ता शत्रूणां तदर्थम् चक्रमासजः[3] रथचक्रस्य सञ्जयिता असुन्वतः अयजमानस्य विषुणः पराङ्मुखः सुन्वतः यजमानस्य वृधः वर्धयिता इन्द्रः विश्वस्य दमिता शिक्षयिता विभीषणः भयजनकः आर्यः स्वामी यथावशम् यथेच्छम् दासम् दासकर्माणं जनम् नयति स्ववशम् ॥ ६ ॥

समीं पणेरजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु ।
दुर्गे चन ध्रियते विश्व आ पुरु जनो यो अस्य तविषीमचुक्रुधत् ॥ ७ ॥

सम् । ईम् । पणेः । अजति । भोजनम् । मुषे । वि । दाशुषे । भजति । सुऽनरम् । वसु ।
दुःऽगे । चन । ध्रियते । विश्वः । आ । पुरु । जनः । यः । अस्य । तविषीम् । अचुक्रुधत् ॥ ७ ॥

वेङ्कट० पणेः सकाशात् धनम् इन्द्रः सम् अजति बलादाहर्तुम् । आहृत्य च दाशुषे वि भजति शोभननृयुक्तं धनम् । किञ्च यः जनः अस्य बलं क्रोधयति, सः विश्वः अपि शत्रुजनः इन्द्रेण पुरूणि[4] दुर्गे[5] आ, ध्रियते, कष्टे स्थाने तं प्रवेशयति इति ॥ ७ ॥

---

१. अपेक्षते मूको. २. आत्मीयं करोति. ३. °सजः रथचक्रमासजः मूको. ४. पुरूणि मूको.
५. दुर्गेण मूको.

मुद्गल० ईम् अयमिन्द्रः पणेः लुब्धकस्याऽदातुः भोजनम् धनम् मुषे चोरयितुम् सम् अजति सम्यग् गच्छति। तस्मा आदाय दाशुषे हविर्दात्रे यजमानाय नि भजति सूनरम् शोभनमनुष्यम् वसु धनम्। अयष्टुर्धनमाकृष्य यष्ट्रे यच्छतीत्यर्थः। न केवलं पणिधनप्रदानमात्रम्,[१] किन्तु पुरु पुरूणि दुर्गे यत्र दुःखेन गन्तव्ये आपद्यपि विश्वः सर्वोऽपि दानुजनः आ ध्रियते आस्थाप्यते। यः जनः अस्य इन्द्रस्य तविषीम् बलम् अचुक्रुधत् निद्विकरणादिना, तस्य पणेरजतीति पूर्वशेषः ॥ ७ ॥

सं यज्जनौ सुधनौ विश्वशर्धसाववेदिन्द्रो मघवा गोषु शुभ्रिषु ।
युजं ह्यन्यमकृत प्रवेपन्युदीं गव्यं सृजते सत्वभिर्धुनिः ॥ ८ ॥

सम् । यत् । जनौ । सुऽधनौ । विश्वऽशर्धसौ । अवेत् । इन्द्रः । मघऽवा । गोषु । शुभ्रिषु ।
युजम् । हि । अन्यम् । अकृत । प्रऽवेपनी । उत् । ईम् । गव्यम् । सृजते । सत्वऽभिः । धुनिः ॥

वेङ्कट० यदा द्वौ मनुष्यौ शोभनधनौ परिपूर्णबलौ शोभावत्सु गोषु निमित्तेषु सङ्ग्रामे[२] संयुक्तौ जानाति 'मघवा इन्द्रः'[३], तदानीं तयोः अन्यम् यजमानम् आत्मना युक्तं कृणोति प्रवेपनात् इन्द्रः। कृत्वा च तस्य गोसङ्घं शत्रुतः उत् आजति बहेरत्क्षेपणशीलः ॥ ८ ॥

मुद्गल० 'सम् अवेत् संजानाति यत् यदा जनौ परस्परप्रतिद्वन्द्विनौ[४] सुधनौ शोभनधनौ विश्वशर्धसौ व्याप्तबलौ मघवा धनवान् इन्द्रः गोषु शुभ्रिषु शोभनासु गोषु निमित्तभूतासु, तदा[५] अन्यम् यष्टारम् युजम् सहायम् अकृत कृतवान्। प्रवेपनी शत्रूणां प्रवेपयिता इन्द्रः ईम् पुनः गव्यम् गोसमूहम् उत् सृजते सत्वभिः मरुद्भिः सह धुनिः सेनानां कम्पयिता। इन्द्रो यजमानम् अयजमानं वा यो[६] जानाति गोनिमित्तं ज्ञात्वा यज्वने गोसमूहं प्रयच्छतीत्यर्थः ॥ ८ ॥

सहस्रसामाग्निवेशिं गृणीषे शत्रिमग्न उपमां केतुमर्यः ।
तस्मा आपः संयतः पीपयन्त तस्मिन् क्षत्रममवत् त्वेषमस्तु ॥ ९ ॥

सहस्रऽसाम् । आग्निऽवेशिम् । गृणीषे । शत्रिम् । अग्ने । उपऽमाम् । केतुम् । अर्यः ।
तस्मै । आपः । सम्ऽयतः । पीपयन्त । तस्मिन् । क्षत्रम् । अमऽवत् । त्वेषम् । अस्तु ॥९॥

वेङ्कट० हे अग्ने! त्वम् इन्द्र सहस्रस्य दातारं यजमानानां सम्भक्तारं वदसि शत्रूणां शातयितारम् उपमानभूतम् वीराणां केतुभूतम् अर्यः। तस्मा इन्द्राय आपः सङ्गता स्वांशमाप्याययन्ति। तस्मिन् इन्द्रे बलं सहाययुक्तं दीप्तं च अस्तु इति ॥ ९ ॥

मुद्गल० अर्यः अहम् सहस्रसाम् अपरिमितधनप्रदम् आग्निवेशिम् अग्निवेशिसुतम् शत्रिम् एतन्नामकं राजर्षिम् गृणीषे स्तौमि हे अग्ने! वज्रादिगुणविशिष्ट इन्द्र![७]। कीदृशम् तम्। उपमाम् उपमान-

१. °मात्रे मूको. २. °म तर्प ३-३. नास्ति मूको. ४. 'प्रसिद्ध°' मूको. ५. नास्ति मूको.
६. °न्द्र स्वामी अयम् मूको.

भूतम् केतुम् प्रख्यातमित्यर्थः। तस्मै आपः संयतः सम्यग्गच्छन्त्यः पीपयन्त पुष्यन्तु। तस्मिन् राजनि क्षत्रम् बलम् अमवत् गृहयुक्तम् त्वेषम् दीप्तम् अस्तु ॥ ९ ॥

इति चतुर्थाष्टके द्वितीयाध्याये चतुर्थो वर्गः ॥

[ ३५ ]

यस्ते साधिष्ठोऽवस इन्द्र क्रतुष्टमा भर।
अस्मभ्यं चर्षणीसहं सस्निं वाजेषु दुष्टरम् ॥ १ ॥

यः । ते । साधिष्ठः । अवसे । इन्द्र । क्रतुः । तम् । आ । भर ।
अस्मभ्यम् । चर्षणिऽसहम् । सस्निम् । वाजेषु । दुस्तरम् ॥ १ ॥

वेङ्कट० प्रभूवसुराङ्गिरसः। यः तव साधयितृतमो रक्षणाय इन्द्र! क्रतुः भवति, तम् आ हर अस्मभ्यम् मनुष्याणाम् अभिभवितारम् सम्भजनशीलम् सङ्ग्रामेषु दुस्तरम्। क्रतुः कर्म ॥ १ ॥

मुद्गल० 'यस्ते साधिष्ठः' इत्यष्टर्चं तृतीयं सूक्तम्। आङ्गिरसगोत्रः 'प्रभूवसुर्नामा ऋषिः। अन्त्या' पङ्क्तिः शिष्टा अनुष्टुभः। इन्द्रो देवता।

हे इन्द्र! यः ते तव साधिष्ठः अतिशयेन साधकः क्रतुः बललक्षणं कर्म अस्ति, तम् क्रतुं नः अवसे अस्मद्रक्षणाय अस्मभ्यम् आ भर आहर। कीदृशं तम्। चर्षणीसहम् सर्वेषां मनुष्याणाम् अभिभवितारम् सस्निम् संस्नातं शुद्धम् वाजेषु सङ्ग्रामेषु दुष्टरम् अन्यैस्तरितुमशक्यम् ॥ १ ॥

यदिन्द्र ते चतस्रो यच्छूर सन्ति तिस्रः।
यद् वा पञ्च क्षितीनामवस्तत् सु न आ भर ॥ २ ॥

यत् । इन्द्र । ते । चतस्रः । यत् । शूर । सन्ति । तिस्रः ।
यत् । वा । पञ्च । क्षितीनाम् । अवः । तत् । सु । नः । आ । भर ॥ २ ॥

वेङ्कट० इन्द्र! यत् तव चतस्रः रक्षाः[1] सन्ति यदि वा शूर! तिस्रः यद् वा पञ्च स्तोतॄणाम् अर्थाय, तद् सर्वमस्मभ्यं सुष्ठु[2] आ हर। बह्व्यः तव रक्षाः[3] सन्ति, सर्वास्ता अस्मासु कुर्विति ॥ २ ॥

मुद्गल० हे इन्द्र! ते तव यत् याः ऊतयः[4] चतस्रः चतुर्षु वर्णेषु सेविताः सन्ति, यत् याश्च हे शूर! तिस्रः त्रिषु लोकेषु वर्तमानाः, यद् वा याः पञ्च। यत् याः च पञ्च क्षितीनाम् पञ्चजनसम्बन्धिन्य ऊतयः सन्ति, तत् सर्वम् अवः रक्षणम् सु सुष्ठु नः अस्मभ्यम् आ भर आहर ॥ २ ॥

---

१. ऊतयः वि॰ अपं. २. नास्ति अपं. ३. रक्षणि वि॰ अपं. ४. ॰तयः रक्षाः मूको.

आ तेऽवो वरेण्यं वृषन्तमस्य हूमहे ।
वृषजूतिर्हि जज्ञिष आभूभिरिन्द्र तुर्वणिः ॥ ३ ॥

आ । ते । अवः । वरेण्यम् । वृषन्ऽतमस्य । हूमहे ।
वृषऽजूतिः । हि । जज्ञिषे । आऽभूभिः । इन्द्र । तुर्वणिः ॥ ३ ॥

वेङ्कट० आ ह्वयामहे तव रमणीयं रक्षणं कामानाम् अतिशयेन वर्षितुः । त्वं हि[1] वर्षितृवेग आभवनशीलैर्मरुद्भिः सह इन्द्र! प्रादुर्भवसि क्षिप्रकारी ॥ ३ ॥

मुद्गल० हे इन्द्र! वृषन्तमस्य फलानां वर्षकतमस्य ते तव अवः रक्षणम् वरेण्यम् वरणीयम् आ हूमहे आह्वयामः । हे इन्द्र! वृषजूतिः वर्षणगमनः तुर्वणिः हिंसकः त्वम्[2] आभूभिः सर्वतो भवद्भिर्व्याप्तैर्मरुद्भिः सह भवः हि जज्ञिषे उत्पादयसि खलु । तेऽवः[3] आह्वयामि ॥ ३ ॥

वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः ।
स्वक्षत्रं ते धृषन्मनः सत्राहमिन्द्र पौंस्यम् ॥ ४ ॥

वृषा । हि । असि । राधसे । जज्ञिषे । वृष्णि । ते । शवः ।
स्वऽक्षत्रम् । ते । धृषत् । मनः । सत्राऽहम् । इन्द्र । पौंस्यम् ॥ ४ ॥

वेङ्कट० 'वर्षिता हि असि[4]। धनाय च प्रादुर्भवसि । वर्षणशीलं तव[5] बलम् । तथा स्वभूतबलं धृष्टम् तव मनः । बलं च "सत्यमेवाऽऽहन्तृ" हे इन्द्र! ॥ ४ ॥

मुद्गल० हे इन्द्र! राधसे यजमानानां समृद्धये वृषा हि असि फलस्य वर्षकोऽसि खलु । तथा जज्ञिषे धनार्थमुत्पद्यसे । ते शवः बलम् वृष्णि वर्षितृ । ते मनः स्वक्षत्रम् स्वायत्तबलम् धृषत् धर्षकम् विरोधिनाम् । हे इन्द्र! ते पौंस्यम् पुंस्त्वम् सत्राहम् सैन्यहन्तृ ॥ ४ ॥

त्वं तमिन्द्र मर्त्यममित्रयन्तमद्रिवः । सर्वरथा शतक्रतो नि याहि शवसस्पते ॥ ५ ॥

त्वम् । तम् । इन्द्र । मर्त्यम् । अमित्रऽयन्तम् । अद्रिऽवः ।
सर्वऽरथा । शतक्रतो इति शतऽक्रतो । नि । याहि । शवसः । पते ॥ ५ ॥

वेङ्कट० त्वम् तम् इन्द्र! मनुष्यं शत्रूयन्तं हे वज्रिन्! सर्वरथैः स्वदीयैः अभिगच्छ हे शतकर्मन्! बलस्य पते! ॥ ५ ॥

मुद्गल० हे इन्द्र! त्वम् तम् अमित्रयन्तम् शत्रुत्वमाचरन्तम् मर्त्यम् हे अद्रिवः! वज्रवन्निन्द्र! सर्वरथा सर्वत्र व्याप्तेन रथेन हे शतक्रतो! शवसः पते! बलस्य पालक! नि याहि नितरां गच्छ अभिभवितुम् ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये पञ्चमो वर्गः ॥

---

१. नास्ति वि'. २. ते तव मूको. ३-३. नास्ति वि' लपं. ४. त वि'. ५-५. 'मेवाहन्तृ: वि'; 'मेवाहन्तृ: लपं.

त्वामिद् वृ॑त्रहन्तम् जना॑सो वृक्तब॑र्हिषः । उ॒ग्रं पू॒र्वीषु॑ पू॒र्व्यं हव॑न्ते॒ वाज॑सातये ॥६॥

त्वाम् । इत् । वृ॒त्र॒हन्ऽत॒म॒ । जना॑सः । वृ॒क्तऽब॑र्हिषः । उ॒ग्रम् । पू॒र्वीषु॑ । पू॒र्व्य॑म् । हव॑न्ते । वाज॑ऽसातये ॥६॥

वेङ्कट० त्वाम् एव हे अतिशयेन वृत्रस्य हन्तः! जनाः[1] छिन्नबर्हिषः उद्गूर्णं पूर्वीणामपि[2] पूर्व्यम् प्रजानां युद्धार्थं ह्वयन्ते इति ॥ ६ ॥

मुद्गल० हे वृत्रहन्तम! अतिशयेन वृत्राणां हन्तरिन्द्र! त्वाम् इत् त्वामेव जनासः जनाः वृक्तबर्हिषः आच्छादितदर्भाः उग्रम् उद्गूर्णबलम् पूर्वीषु बह्वीषु प्रजासु मध्ये पूर्व्यम् पुरातनं सन्तम् वाजसातये सङ्ग्रामाय हवन्ते आह्वयन्ते ॥ ६ ॥

अ॒स्माक॑मिन्द्र दु॒ष्टरं॑ पुरो॒यावा॑नमा॒जिषु॑ । स॒यावा॑नं॒ धने॑धने वा॒ज॒यन्त॑मवा॒ रथ॑म् ॥७॥

अ॒स्माक॑म् । इ॒न्द्र॒ । दु॒स्तर॑म् । पु॒रः॒ऽयावा॑नम् । आ॒जिषु॑ । स॒ऽयावा॑नम् ।
धने॑ऽधने । वा॒ज॒ऽयन्त॑म् । अ॒व॒ । रथ॑म् ॥ ७ ॥

वेङ्कट० अस्माकम् इन्द्र! शत्रुभिः दुस्तरम्[3] सङ्ग्रामेषु पुरोगन्तारम् सह गच्छन्तम् धनेधने[4] अन्नमिच्छन्तम् रथम् रक्ष ॥ ७ ॥

मुद्गल० हे इन्द्र! अस्माकम् रथम् रंहणस्वभावम् अव रक्ष । कीदृशं रथम् । दुष्टरम् दुःखेन तरणीयम् आजिषु सङ्ग्रामेषु पुरोयावानम् पुरतो मिश्रयितारम् सयावानम् अनुचरैः सह गन्तारम् धनेधने सर्वेषु धनेषु वाजयन्तम् धनम् इच्छन्तम् ॥ ७ ॥

अ॒स्माक॑मिन्द्रे॒हि॑ नो॒ रथ॑मवा॒ पुरं॑ध्या ।
व॒यं श॑विष्ठ॒ वार्यं॑ दि॒वि श्रवो॑ दधीमहि दि॒वि स्तोमं॑ मनामहे ॥ ८ ॥

अ॒स्माक॑म् । इ॒न्द्र॒ । आ । इ॒हि॒ । नः॒ । रथ॑म् । अ॒व॒ । पुर॑म्ऽध्या ।
व॒यम् । श॒वि॒ष्ठ॒ । वार्य॑म् । दि॒वि । श्रवः॑ । द॒धी॒म॒हि॒ । दि॒वि । स्तोम॑म् । म॒ना॒म॒हे॒ ॥ ८ ॥

वेङ्कट० अस्मदर्थम् इन्द्र! आ गच्छ । अस्मदीयम् रथम् रक्ष प्रज्ञया । वयम् हे बलवत्तम! दीप्ते त्वयि वरणीयं हविः निदधीमहि[5] । तथा दीप्ते स्तोमम् चोच्चारयामः ॥ ८ ॥

मुद्गल० हे इन्द्र! अस्माकम् अस्मदीय एव सन् आ इहि आगच्छ । आगत्य च पुरंध्या शोभनबुद्ध्या नः अस्माकम् रथम् अव रक्ष । वयम् च हे शविष्ठ! अतिशयेन बलवन्! त्वदनुग्रहात् वार्यम् वरणीयम् श्रवः अन्नम् दिवि द्योतमाने त्वयि दधीमहि स्थापयामः । तथा दिवि त्वयि स्तोमम् स्तोत्रम् मनामहे करवामहे ॥ ८ ॥

इति चतुर्थाष्टके द्वितीयाध्याये षष्ठो वर्गः ॥

---

१. नास्ति लपे. २ पूर्वीणा वि॰. ३. नास्ति वि॰ लपे. ४. धनं धने [illegible] लपे. ५. निधी॰ मूको.

[ ३६ ]

स आ गमदिन्द्रो यो वसूनां चिकेतद् दातुं दामनो रयीणाम् ।
धन्वचरो न वंसगस्तृषाणश्चकमानः पिबतु दुग्धमंशुम् ॥ १ ॥

सः । आ । गमत् । इन्द्रः । यः । वसूनाम् । चिकेतत् । दातुम् । दामनः । रयीणाम् ।
धन्वऽचरः । न । वंसगः । तृषाणः । चकमानः । पिबतु । दुग्धम् । अंशुम् ॥ १ ॥

वेङ्कट० सः आ गच्छतु इन्द्रः, यः वासयितॄणि धनानि यजमानस्य दातुम् बुध्यते । दास्यामीति मन्यते हृदयेऽ। । निरुदके देशे वर्तमानः इव वंसगः[१,२] तृष्णायुक्तः कामयमानः पिबतु दुग्धम् सोमम् ॥ १ ॥

मुद्गल० 'स आ गमत्' इति षडृचं चतुर्थं सूक्तम् । आङ्गिरसः प्रभूवसुर्ऋषिः । तृतीया जगती, शिष्टाः त्रिष्टुभः । इन्द्रो देवता ॥

सः इन्द्रः अस्मद्यज्ञं प्रति आ गमत् आगच्छतु, यः देवः वसूनाम् धनानाम् वसूनि धनानि चिकेतत् जानाति दातुम् । कीदृशः । दामनः दाता रयीणाम् धनानाम् । गमने दृष्टान्तः । धन्वचरः न धनुषा सह सञ्चरन् धानुष्क इव वंसगः वननीयगमनः(?)[३] तृषाणः चकमानः कामयमानः च सन् दुग्धम् अभिषुतम् अंशुम् सोमम् पिबतु ॥ १ ॥

आ ते हनू हरिवः शूर शिप्रे रुहत् सोमो न पर्वतस्य पृष्ठे ।
अनु त्वा राजन्नर्वतो न हिन्वन् गीर्भिर्मदेम पुरुहूत विश्वे ॥ २ ॥

आ । ते । हनू इति । हरिऽवः । शूर । शिप्रे इति । रुहत् । सोमः । न । पर्वतस्य । पृष्ठे ।
अनु । त्वा । राजन् । अर्वतः । न । हिन्वन् । गीःऽभिः । मदेम । पुरुऽहूत । विश्वे ॥ २ ॥

वेङ्कट० तव [illegible]स्य भक्षितस्य हननसाधने शिप्रे हे हरिवः! शूर![१] सोमः आ रोहतु, न पर्वतस्य पृष्ठे वृथा तिष्ठतु । स्तुतिभिस्त्वाम् अनु मदेम हे राजन्! पुरुहूत![१] विश्वे वयम्, यथा[४] "अश्वान् युद्धे प्रेरयन् अनुमदति"[५] ॥ २ ॥

मुद्गल० हे हरिवः! हरिभ्यां तद्वन्! शूर! इन्द्र! ते तव हनू शिप्रे संहते आ रुहत् आरोहतु प्राप्नोतु सोमः, पर्वतस्य पृष्ठे न रुहत् न रोहति, तत्र न तिष्ठतीत्यर्थः । हे राजन्! राजमान इन्द्र! त्वा त्वाम् अनु त्वया सह विश्वे सर्वे वयम् अर्वतः न अश्वानिव तृणादिभिः गीर्भिः स्तुतिभिः हिन्वन् हिन्वन्तः प्रीणयन्तः सन्तः मदेम हृष्येम हे पुरुहूत! बहुभिराहूत इन्द्र! ॥ २ ॥

चक्रं न वृत्तं पुरुहूत वेपते मनो भिया मे अमतेरिदद्रिवः ।
रथादधि त्वा जरिता सदावृध कुविन्नु स्तोषन्मघवन् पुरूवसुः ॥ ३ ॥

---

१. नास्ति मूको.  २. तु. ऋ १,५५,१ भाष्यम्.  ३. वसः मूको.  ४. नास्ति वि॰.
५-५. नास्ति वि॰ रुपे.

चक्रम् । न । वृत्तम् । पुरुऽहूत । वेपते । मनः । भिया । मे । अमतेः । इत् । अद्रिऽवः ।
रथात् । अधि । त्वा । जरिता । सदाऽवृध । कुवित् । नु । स्तोषत् । मघऽवन् । पुरुऽवसुः ॥३॥

वेङ्कट० [1]चक्रम् इव वर्तमानम् हे पुरुहूत! वज्रवन्![1]† अमतेः एव भयेन मम मनः कम्पते। स्तुतिभिरमतिरिन्द्रं दृष्ट्वा किमहं न स्तौमीति भयम्। तथा सति रथात् यावदेव त्वं मावतरसि तावदेवायम्, जरिता हे सदा‡ वर्धमान! मघवन्!, कुवित् पुरुवसुः इति द्वे ‡संज्ञे अस्य‡, क्षिप्रम् त्वां स्तौतु[2] ॥ ३ ॥

मुद्गल० हे पुरुहूत! बहुभिराहूत! हे अद्रिवः! वज्रवन् इन्द्र! मे मनः अमतेः इत् दारिद्र्यात् भिया भीत्या वेपते, वृत्तम् चक्रम् न भूमौ वर्तमानं चक्रमिव। यस्मादेवं तस्मात् रथात् अधि उपरि स्थितम् त्वा त्वाम् हे सदावृध! सर्वदा वर्धमान! मघवन्! धनवन्! इन्द्र! जरिता स्तोता पुरुवसुः अयमृषिः कुवित् बहु नु क्षिप्रम् स्तोषत् स्तोष्यति[3] स्तुयात् ॥ ३ ॥

एष ग्रावेव जरिता त इन्द्रेयर्ति वाचं बृहदाशुषाणः ।
प्र सव्येन मघवन् यंसि रायः प्र दक्षिणिद्धरिवो मा वि वेनः ॥ ४ ॥

एषः । ग्रावाऽइव । जरिता । ते । इन्द्र । इयर्ति । वाचम् । बृहत् । आशुषाणः ।
प्र । सव्येन । मघऽवन् । यंसि । रायः । प्र । दक्षिणित् । हरिऽवः । मा । वि । वेनः ॥ ४ ॥

वेङ्कट० एषः जरिता अभिषवग्रावेव तुभ्यम् इन्द्र! वाचम् प्रेरयति अत्यर्थम् व्याप्नुवानः। तस्मै सव्येन हस्तेन मघवन्![4] प्र यच्छ धनानि, दक्षिणेन च प्र यच्छ[5]। हरिवः! मा विगतकामो भूः स्तोतरि ॥ ४ ॥

मुद्गल० एषः जरिता जरिता स्तोता ग्रावेव अभिषवाश्मेव, स यथा रसं जनयति तद्वत्, हे हरिवः! हरिवन्! इन्द्र! ते तुभ्यम् वाचम् स्तुतिम् इयर्ति, प्रेरयतीत्यर्थः। बृहत् महत् प्रभूतं फलम् आशुषाणः आशु संभक्ता सन् हे मघवन्! इन्द्र! सव्येन हस्तेन रायः धनानि प्र यंसि प्रयच्छसि। दक्षिणित् दक्षिणेनापि प्र यंसि इति शेषः। मा वि वेनः विगतकामं मा कार्षीः ॥ ४ ॥

वृषा त्वा वृषणं वर्धतु द्यौर्वृषा वृषभ्यां वहसे हरिभ्याम् ।
स नो वृषा वृषरथः सुशिप्र वृषक्रतो वृषा वज्रिन् भरे धाः ॥ ५ ॥

वृषा । त्वा । वृषणम् । वर्धतु । द्यौः । वृषा । वृषऽभ्याम् । वहसे । हरिऽभ्याम् ।
सः । नः । वृषा । वृषऽरथः । सुऽशिप्र । वृषक्रतो इति वृषऽक्रतो । वृषा । वज्रिन् । भरे । धाः ॥५॥

वेङ्कट० वर्षिता द्यौः वर्षणशीलं त्वां[6] वर्धयतु, तथा[6] वृषा सन् वर्षितृभ्याम् अश्वाभ्यां गच्छसि। सः त्वम्[1] अस्मान् वर्षितरथः हे सुहनो! वृषकर्मन्! वज्रिन्! सङ्ग्रामे धारय[7] ॥ ५ ॥

---

१-१. नास्ति वि[1] लपं. † नास्ति छ. ‡-‡ 'ज्ञेऽस्य मूको. २. स्तोषयति मूको. ३. नास्ति मूको. ४. दक्षिण मूको. ५. त्वा लपं. ६. यथा वि[1] लपं. ७. धाः वि[1].

मुद्गल० हे इन्द्र! वृषा वर्षित्री द्यौः द्योतयित्री स्तुतिः वृषणम् कामानां वर्षकम् त्वा त्वाम् वर्धतु वर्धयतु । वृषा कामानां वर्षकः त्वम् वृषभ्याम् सेक्तृभ्याम् हरिभ्याम् अश्वाभ्याम् वहसे यज्ञं प्रत्युह्यसे । हे सुशिप्र! शोभनहनो! वृषक्रतो! वर्षणकर्मन्वन्! वज्रिन्! वज्रवन्निन्द्र! सः त्वम् वृषा वृषरथः च सन् नः अस्मान् भरे सङ्ग्रामे धाः धारय ॥ ५ ॥

यो रोहितौ वाजिनौ वाजिनीवान् त्रिभिः शतैः सचमानावदिष्ट ।
यूने समस्मै क्षितयो नमन्तां श्रुतरथाय मरुतो दुवोया ॥ ६ ॥

यः । रोहितौ । वाजिनौ । वाजिनीऽवान् । त्रिऽभिः । शतैः । सचमानौ । अदिष्ट ।
यूने । सम् । अस्मै । क्षितयः । नमन्ताम् । श्रुतऽरथाय । मरुतः । दुवःऽया ॥ ६ ॥

वेङ्कट० यः रोहितौ वाजिनौ[1] अन्नवान् त्रिभिः अश्वशतैः संयुज्यमानौ युद्धे अतिदिशति, अस्मै इन्द्राय यूने क्षितयः मरुतः सम् नमन्ताम् । हे मरुतः! विश्रुतरथाय इन्द्राय युष्मासु परिचरणेच्छा भवत्विति ॥ ६ ॥

मुद्गल० इयं श्रुतरथस्य राज्ञः दानस्तुतिः । यः राजा वाजिनीवान् अन्नवान् श्रुतरथः रोहितौ रोहितवर्णौ वाजिनौ अश्वौ त्रिभिः शतैः गवामुक्तसंख्याभिः सचमानौ संगच्छमानौ अदिष्ट अदात् । यूने सर्वत्र मिश्रयित्रे अस्मै श्रुतरथाय क्षितयः सर्वाः प्रजाः दुवोया परिचर्यया सम् नमन्ताम् प्रणताः भवन्तु । सेवन्तामित्यर्थः । हे मरुतः! इति इन्द्रसहायभूतानां मरुतां सम्बोधनम् ॥ ६ ॥

इति चतुर्थाष्टके द्वितीयाध्याये सप्तमो वर्गः ॥

[ ३७ ]

सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वञ्चाः ।
तस्मा अमृध्रा उषसो व्युच्छान् य इन्द्राय सुनवामेत्याह ॥ १ ॥

सम् । भानुना । यतते । सूर्यस्य । आऽजुह्वानः । घृतऽपृष्ठः । सुऽअञ्चाः ।
तस्मै । अमृध्राः । उषसः । वि । उच्छान् । यः । इन्द्राय । सुनवाम । इति । आह ॥ १ ॥

वेङ्कट० अत्रिर्भौमः । सूर्यस्य तेजसा सङ्गच्छते आहूयमानोऽग्निः घृतपृष्ठः[1] स्वञ्चनः । 'वैश्वानरो यतते सूर्येण' ( ऋ १,९८,१ ) इत्युक्तम् । एतस्मिन् काले उषसि यः इन्द्राय सोमम्[2] सुनवाम[3] इति[4] वदति, तस्मै अमृध्राः उषसः व्युच्छन्तु । या न हिंसन्ति ता अमृध्रा इति ॥ १ ॥

मुद्गल० 'सं भानुना' इति पञ्चर्चं पञ्चमं सूक्तम् । अत्रिर्ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।

---

१. नास्ति मूको. २. सोम मूको. ३. सुनवामि ख; सुनवानि ल अस्थाव- ४. नास्ति वि[1].

सूर्यस्य भानुना तेजसा सह आजुह्वानः सर्वत्र हूयमानः घृतपृष्ठः प्रदीप्तज्वालः स्वञ्चाः स्वज्वलनाभिः[1] राम् यतते सम्यक् प्रयत्नं करोति । उदयकाले ह्यग्नयः प्रज्वाल्यन्ते । तस्मात् कारणात् यः यजमानः इन्द्राय सुनवाम इति आह ब्रूते अध्वर्युं प्रति तस्मै यजमानाय अमृध्राः अहिंसिताः उषसः व्युच्छान् व्युच्छन्तु । उदयकालेऽग्निः प्रज्वालितः तस्मात्[2] सोमयागं कुर्म इति यो ब्रूते तस्य सुदिनानि भवन्तीत्यर्थः ॥ १ ॥

समिद्धाग्निर्वनवत् स्तीर्णबर्हिर्युक्तग्रावा सुतसोमो जराते ।
ग्रावाणो यस्येषिरं वदन्त्ययदध्वर्युर्हविषाव सिन्धुम् ॥ २ ॥

समिद्धऽअग्निः । वनवत् । स्तीर्णऽबर्हिः । युक्तऽग्रावा । सुतऽसोमः । जराते ।
ग्रावाणः । यस्य । इषिरम् । वदन्ति । अयत् । अध्वर्युः । हविषा । अव । सिन्धुम् ॥ २ ॥

वेङ्कट० यज्ञार्थम् समिद्धाग्निः स्तीर्णबर्हिः सन् इन्द्रं भजते । तथाऽभिषवाय युक्तग्रावा सुतसोमः च एवं स्तौति । यस्य इन्द्रस्य ग्रावाणः अभिलषितं सोमम्[3] वदन्ति, अस्मै स्यन्दनशीलं सोमं पुरोडाशादिना सह अव गमयति अध्वर्युः ॥ २ ॥

मुद्गल० समिद्धाग्निः प्रदीप्ताग्निः स्तीर्णबर्हिः प्रस्तृतदर्भोऽयं यजमानः वनवत् संभजते । युक्तग्रावा युक्ताभिषवपाषाणः सुतसोमः अभिषुतसोमः जराते स्तौति । यस्य अध्वर्योः ग्रावाणः अभिषवसाधनाः इषिरम् एषणीयं शब्दम् वदन्ति, सः अध्वर्युः हविषा सह अव अयत सिन्धुम्[5] अवनेजनीः अवगच्छति ॥ २ ॥

वधूरियं पतिमिच्छन्त्येति य ईं वहाते महिषीमिषिराम् ।
आस्य श्रवस्याद् रथ आ च घोषात् पुरू सहस्रा परि वर्तयाते ॥ ३ ॥

वधूः । इयम् । पतिम् । इच्छन्ती । एति । यः । ईम् । वहाते । महिषीम् । इषिराम् ।
आ । अस्य । श्रवस्यात् । रथः । आ । च । घोषात् । पुरु । सहस्रा । परि । वर्तयाते ॥ ३ ॥

वेङ्कट० वधूः इयम् पतिम् इच्छन्ती गच्छति, यः एनाम् इन्द्र उपयम् वहाते महिषीम् इषाम् । अस्मिन्नवसरे[4] इन्द्रस्य रथोऽस्माकमन्नमिच्छतु, आ घोषयतु च पुरूणि धनानि । सहस्राणि स्तोतृभ्यः परि वर्तयति, स्वस्मान्निर्गमयति ॥ ३ ॥

मुद्गल० इयम् वधूः इन्द्रस्य पत्नी पतिमिच्छन्ती स्वामिनं यज्ञगमनाय प्रवृत्तमिच्छन्ती एति अनुगच्छति । यः इन्द्रः ईम् एनाम् महिषीम् वहाते वहति इषिराम् गमनवतीम् अस्य इन्द्रस्य रथः आ अर्वाक् अस्मदभिमुखम् श्रवस्यात् अन्नमिच्छति, आ च घोषात् आघुष्यति शब्दयति पुरु अत्यधिकम् । सहस्रा सहस्राणि धनानि परि परितः वर्तयाते प्रापयति ॥ ३ ॥

---

१. "न्वल" मूको. २. वर्गे मूको. ३. नास्ति रूपं. ४. नास्ति मूको. ५. °वस मूको.

न स राजा व्यथते यस्मिन्निन्द्रस्तीव्रं सोमं पिबति गोसखायम् ।
आ सत्वनैरजति हन्ति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यन् ॥ ४ ॥

न । सः । राजा । व्यथते । यस्मिन् । इन्द्रः । तीव्रम् । सोमम् । पिबति । गोऽसखायम् ।
आ । सत्वनैः । अजति । हन्ति । वृत्रम् । क्षेति । क्षितीः । सुऽभगः । नाम । पुष्यन् ॥ ४ ॥

वेङ्कट० 'न सः राजा' व्यथति[1], यस्मिन् राजनि इन्द्रः तीव्ररसम् सोमम् पिबति पयोमिश्रणम् । सोऽयमिन्द्रः भृत्यैः सह आ गच्छति, हन्ति च उपद्रवम्, अधिवसति च[2] भूमीः सुभगः उदकम् (द्र. निघ १,१२) पुष्यन् ॥ ४ ॥

मुद्गल० सः राजा न व्यथते व्यथितो न भवति, यस्मिन् राजनि यदीये मखे इन्द्रः तीव्रम् मदकमकम् सोमम् पिबति गोसखायम् क्षीरादिमिश्रणवन्तम् । स राजा सत्वनैः सत्वभिरनुचरैः आ सर्वतः अजति गच्छति, हन्ति वृत्रम् पापम्, क्षेति गच्छति क्षितीः प्रजाः सुभगः शोभनसुखः नाम नामकं धनम् इन्द्रस्य[3] पुष्यन् पोषयन् ॥ ४ ॥

पुष्यात् क्षेमे अभि योगे भवात्युभे वृतौ संयती सं जयाति ।
प्रियः सूर्ये प्रियो अग्ना भवाति य इन्द्राय सुतसोमो ददाशत् ॥ ५ ॥

पुष्यात् । क्षेमे । अभि । योगे । भवाति । उभे इति । वृतौ । संयती इति सम्ऽयती । सम् । जयाति ।
प्रियः । सूर्ये । प्रियः । अग्ना । भवाति । यः । इन्द्राय । सुतऽसोमः । ददाशत् ॥ ५ ॥

वेङ्कट० क्षेमे लब्धपरिपालनापेक्षायां स पोषं पुष्यति । अभि भवति च शत्रून् अलब्धप्रेप्सायाम् । द्वौ ■ मार्गौ सङ्गच्छमानौ[4] सम् जयति[5] । तथा[6] सूर्ये अग्नौ च प्रियः भवति, सुतसोमः सन् यः इन्द्राय प्रयच्छति । 'द्वे सृती अशृणवम्' (ऋ १०,८८,१५) इति मन्त्रः ॥ ५ ॥

मुद्गल० पुष्यात् पोषयेत् बन्ध्वादीन् । क्षेमे प्राप्तस्य रक्षणे योगे अलब्धस्य प्राप्तौ ■ अभि भवाति भवति । प्रभुः भवतीत्यर्थः । तथा उभे वृती वर्तमाने संयती नियते अहोरात्रे सम् जयाति सम्यक् जयति । ते सुखकरे स्यातामित्यर्थः । किञ्च सः प्रियः भवाति भवति । सूर्ये तथा अग्ना अग्नौ प्रियः भवति, यः इन्द्राय सुतसोमः ददाशत् सोमं ददाति[7] ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये अष्टमो वर्गः ॥

[३८]

उरोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अधा नो विश्वचर्षणे द्युम्ना सुक्षत्र मंहय ॥ १ ॥

1-1. नास्ति मूको. 2. °ति च वि°. 3. नास्ति छपं. 4. नास्ति मूको. 5. °ग ने मूको.
6. यजति मूको. 7. यथा वि° छपं.

उरोः । ते । इन्द्र । राधसः । विऽभ्वी । रातिः । शतक्रतो इति शतऽक्रतो ।
अध । नः । विश्वऽचर्षणे । द्युम्ना । सुऽक्षत्र । मंहय ॥ १ ॥

वेङ्कट० इन्द्र! तव महतो धनस्य महत्[1] भवति दानं हे शतप्रज्ञ!। तथा सति अस्मभ्यं हे सर्वमनुष्य! सुबल! धनानि प्रयच्छ ॥ १ ॥

मुद्गल० उरोष्ट इति षडृचं पञ्चमं सूक्तम्। भर्गिर्ऋषिः। अनुष्टुप् छन्दः। इन्द्रो देवता।

हे इन्द्र! शतक्रतो! बहुकर्मन्! ते तव उरोः प्रभूतस्य राधसः धनस्य रातिः दानम् विभ्वी महती। अध अतः कारणात् नः अस्मभ्यं हे विश्वचर्षणे! सर्वस्य द्रष्टः! सुक्षत्र! शोभनधन इन्द्र! द्युम्ना द्युम्नानि धनानि मंहय प्रयच्छ ॥ १ ॥

यदीमिन्द्र श्रवाय्यमिषं शविष्ठ दधिषे ।
पप्रथे दीर्घश्रुत्तमं हिरण्यवर्ण दुष्टरम् ॥ २ ॥

यत् । ईम् । इन्द्र । श्रवाय्यम् । इषम् । शविष्ठ । दधिषे ।
पप्रथे । दीर्घश्रुत्ऽतमम् । हिरण्यऽवर्ण । दुस्तरम् ॥ २ ॥

वेङ्कट० यदि एतत् इन्द्र! श्रवणीयम् इष्यमाणं[2] धनम्, हे बलवत्तम! धारय दीर्घकालं श्रोतव्यं शत्रुदुस्तरं हे हिरण्मयीवर्ण! ॥ २ ॥

मुद्गल० हे इन्द्र! शविष्ठ! अतिशयेन बलवन्! यत् इषम् अन्नम् श्रवाय्यम् श्रवणीयम् ईम् सर्वतः दधिषे धारयसि, हे हिरण्यवर्ण! इन्द्र! तत् अन्नम् 'पप्रथे प्रथते'[3]। कथम्। दीर्घश्रुत्तमम् अतिदूरश्रवणीयतमम् दुष्टरम् अनभिभाव्यमुत्कृष्टलक्षणं प्रथते ॥ २ ॥

शुष्मासो ये ते अद्रिवो मेहना केतसापः ।
उभा देवावभिष्टये दिवश्च ग्मश्च राजथः ॥ ३ ॥

शुष्मासः । ये । ते । अद्रिऽवः । मेहना । केतऽसापः ।
उभा । देवौ । अभिष्टये । दिवः । च । ग्मः । च । राजथः ॥ ३ ॥

वेङ्कट० रश्मयः ये तव हे वज्रिन्! मंहनीयाः[4] विज्ञापयितारः तैः त्वम्, तादृशैः सहितः, उभौ देवौ[5] द्यावापृथिव्योः[6] अभीष्टसिद्ध्यर्थम् राजथः ॥ ३ ॥

मुद्गल० हे अद्रिवः! वज्रवन् इन्द्र! ते त्वदीयाः ये शुष्मासः बलभूता मरुतः सन्ति। कीदृशास्ते। मेहना मंहनीयाः केतसापः प्रज्ञापकं कर्म स्पृशन्तः। उभा उभौ देवौ त्वं च मरुत्सङ्घश्च इत्युभौ युवाम् दिवः द्युलोकात् ग्मः च भूमेः सकाशात् अभिष्टये अभितो गमनाय राजथः ईशाथे इत्यर्थः ॥ ३ ॥

---

१. महत् वि॰ लपं. २. 'माणम् धनम् वि॰ लपं. ३-३. पप्रथते मूको. ४. मंहनीय मूको.
५. नास्ति मूको. ६. 'पृथिवीः वि॰ लपं.

उतो नो॑ अ॒स्य कस्य॑ चि॒द् दक्ष॑स्य॒ तव॑ वृत्रहन् ।
अ॒स्मभ्यं॑ नृ॒म्णमा भ॑रास्मभ्यं॑ नृमणस्यसे ॥ ४ ॥

उतो इति॑ । नः॒ । अ॒स्य । कस्य॑ । चि॒त् । दक्ष॑स्य । तव॑ । वृ॒त्र॒ऽह॒न् ।
अ॒स्मभ्य॑म् । नृ॒म्णम् । आ । भ॒र । अ॒स्मभ्य॑म् । नृ॒ऽम॒न॒स्य॒से ॥ ४ ॥

वेङ्कट० अपि च अस्मभ्यं [1]हे वृत्रहन्! तव अस्य कस्य चित्[1] बलस्य प्रयच्छ, बलं प्रयच्छेत्यर्थः । किञ्च अस्मभ्यम् धनम् आ हर इति । अस्मभ्यम् धनप्रदानम्[2] इच्छसि ॥ ४ ॥

मुद्गल० उतो अपि च हे वृत्रहन्! इन्द्र! नः अस्मभ्यम् कस्य चित् अनिर्देश्यस्य[3] दक्षस्य प्रवृद्धस्य अस्य तव स्वभूतेभ्यः अस्मभ्यम् नृम्णम् धनम् आ भर आहर। हे इन्द्र! यतस्त्वम् अस्मभ्यम् नृमणस्यसे सेचनमिच्छसि ॥ ४ ॥

नू त॑ आ॒भिर॒भिष्टि॑भि॒स्तव॒ शर्म॑ञ्छतक्रतो ।
इन्द्र॒ स्याम॑ सु॒गोपाः॒ शूर॒ स्याम॑ सु॒गोपाः॑ ॥ ५ ॥

नु । ते॒ । आ॒भिः । अ॒भिष्टि॑ऽभिः । तव॑ । शर्म॑न् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।
इन्द्र॑ । स्याम॑ । सु॒ऽगोपाः॑ । शूर॑ । स्याम॑ । सु॒ऽगोपाः॑ ॥ ५ ॥

वेङ्कट० क्षिप्रम् तव अभीष्टाभिः आभिः स्तुतिभिः त्वदीयसुखे स्याम [1]शतक्रतो! इन्द्र![1] । शोभनगोपना: हे शूर! स्याम सुगोपाः ॥ ५ ॥

मुद्गल० हे शतक्रतो! इन्द्र! ते तव आभिः अभिष्टिभिः अभिगमनैः नु क्षिप्रं सङ्गता भवेमेति शेषः । हे इन्द्र! तव शर्मन् शर्मणि सुखे सति सुगोपाः स्याम भवेम। हे शूर! तव शर्मणि सुगोपाः शोभनरक्षणाः स्याम भवेम । पुनरुक्तिरादरार्था ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये नवमो वर्गः ॥

[ ३९ ]

यदि॑न्द्र चित्र मे॒हनास्ति॒ त्वादा॑तमद्रिवः ।
राध॒स्तन्नो॑ विदद्वस उभया॒हस्त्या भ॑र ॥ १ ॥

यत् । इ॒न्द्र॒ । चि॒त्र॒ । मे॒हना॑ । अस्ति॑ । त्वाऽदा॑तम् । अ॒द्रि॒ऽवः॒ ।
राधः॑ । तत् । नः॒ । वि॒द॒द्व॒सो॒ इति॑ विदत्ऽवसो । उ॒भ॒या॒ह॒स्ति । आ । भ॒र॒ ॥ १ ॥

वेङ्कट० यास्कः— 'यदि॑न्द्र! चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्ति इति वा त्रीणि मध्यमानि

1-1. नास्ति मूको. 2. स्वं धन° वि° छपं. 3. °दिश्यस्य मूको.

पशानि। त्वया नस्तद् दातव्यम् अद्रिवन्! । अद्रिरादृणात्येनेन, अपि वा अत्तेः स्यात्। 'ते[1] सोमादः' (ऋ १०,९४,९) इति ॥ विज्ञायते। राध इति धननाम राध्नुवन्ति अनेन। "[2]तन्नस्त्वं वित्तधन! उभाभ्यां[2] हस्ताभ्यामाहर[3]" (या ४,४) इति ॥ १ ॥

मुद्गल० 'यदिन्द्र चित्र' इति पञ्चर्चं सप्तमं सूक्तम्। अत्रिर्ऋषिः। अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः। इन्द्रो देवता।

हे चित्र! चायनीय! अद्रिवः! वज्रवन्! इन्द्र! यत् मेहना मंहनीयम् त्वादातम् त्वया दातव्यम् राधः धनम् अस्ति, तत् धनं हे विद्वसो! लब्धधन इन्द्र! नः अस्मभ्यम् उभयाहस्ति उभाभ्यां हस्ताभ्याम् आ भर आहर ॥ १ ॥

यन्मन्य॑से॒ वरे॑ण्य॒मिन्द्र॑ द्यु॒क्षं तदा भ॑र।
वि॒द्याम॒ तस्य॑ ते व॒यमकू॑पारस्य दा॒वने॑ ॥ २ ॥

यत्। मन्य॑से। वरे॑ण्यम्। इन्द्र॑। द्यु॒क्षम्। तत्। आ। भ॒र।
वि॒द्याम॑। तस्य॑। ते॒। व॒यम्। अकू॑पारस्य। दा॒वने॑ ॥ २ ॥

वेङ्कट० यत् मन्यसे वरणीयं धनम् हे इन्द्र! दीप्तम्, तत् अस्मभ्यम् आ भर। तस्य तव दातुः प्रसादेन वयम् अकूपारम् लभेमहि। अत्र शाट्यायनकम्—"ऋषयो ह वै सत्राद्दुत्थायायन्त[4] आश्युञ्जाना[4]"। ते होचुः— एत, किञ्चिदेव वक्ष पश्यामेति। ते होचुः—अकूपारो वा अयं कश्यपः[5] समुद्रेऽन्तर्महद्[6] यक्षम्। एत, तं पश्यामेति। तं हान्वभ्युपेयुः। तेभ्यो ह नाविरास। ते होचुः—एत, इन्द्रमेव स्तवाम। स वावास्येशे[7]। स एव न इमं दर्शयिष्यति इति। तेऽत्रिमब्रुवन् अत्रे! त्वं स्तुताविति। स एतमत्रिस्तृचमपश्यत्। तेनैनमुपायन्। 'यदिन्द्र चित्र मेहना' (ऋ ५,३९,१) इति। त हेक्षाञ्चक्रे— महद् वत म ऋषयो याचन्ति, 'उभयाहस्त्या भर' (ऋ ५,३९,१) इति वा आहुरिति, 'यत्ते दित्सु प्रराध्यम्' (ऋ ५,३९,३) इति। स हेक्षाञ्चक्रे—इदं वत माऋषयो याचन्त इति। न 'हाजशी'—अकूपारं दिदृक्षन्त इति, 'यन्मन्यसे वरेण्यम्' (ऋ ५,३९,२) इति। त "[9]हाजशी[9]"— अकूपारं वै दिदृक्षन्त इति। तं ॥ पयोदस्यन्नुवाच[10]—इदमेव[11] मानृषयो सहदिव 'उभयाहस्त्या भर' इत्यवोचन्निति। तमपश्यन्। एताः कामसनय ऋचः[12]" (द्र. जैब्रा ३,२०३) इति। तत्र यास्कः— 'अकूपरणस्य दानस्य' (या ४,१८) इति। यद्वा—अकूपारस्य तव दानाय सम्भवेमेति ॥ २ ॥

मुद्गल० हे इन्द्र! यत् द्युक्षम् धनम् वरेण्यम् वरणीयम् मन्यसे तत् द्युक्षम् अस्मभ्यम् आ भर। ते तव सम्बन्धिनः वयम् तस्य तादृशस्योक्तलक्षणस्य अकूपारस्य अकुत्सितः पारो यस्य तस्य धनस्य दावने दाने विद्याम स्याम ॥ २ ॥

यत् ते॑ दि॒त्सु प्र॒राध्यं॒ मनो॒ अस्ति॑ श्रु॒तं बृ॒हत्।
तेन॑ दृ॒ळ्हा चि॑दद्रिव॒ आ वाजं॑ दर्षि सा॒तये॑ ॥ ३ ॥

---

१. ते हि वि[1] लपं. २-२. विद्वसो भवस्युभाभ्यां वि[1] लपं. ३. °माभर वि[1] लपं. ४. तत्रादु- पस्थार्थायन्ते वि[1] लपं. ५. प्रश्न° मूको. ६. कश्यपः क. ७. °द्रे यन्म° क; °द्रे यक्ष इद् वि[1] लपं. ८. वा अस्येशे मूको. ९-९. वै ब° मूको. १०-१०. ह व° मूको. ११. यदोद° क. १२. इममेव मूको.

यत् । ते । दि॒त्सु । प्र॒ऽराध्य॑म् । मनः॑ । अस्ति॑ । श्रु॒तम् । बृ॒हत् ।
तेन॑ । दृ॒ळ्हा । चि॒त् । अ॒द्रि॒ऽवः॒ । आ । वाज॑म् । द॒र्षि॒ । सा॒तये॑ ॥ ३ ॥

वेङ्कट० यत् ते दानेच्छु[1] प्रकर्षेण[2] पूजनीयम् मनः विद्यते विश्रुतं महत्। तेन मनसा हे अद्रिवः! दृढान्यपि शत्रुपुरादीन्यस्मभ्यं दानाय 'अन्नम् आ दरय'। आदृणातिः द्विकर्मकश्च भवति ॥ ३ ॥

मुद्गल० हे इन्द्र! ते तव यत् दित्सु दानेच्छु प्राराध्यम् प्रकर्षेण साध्यम् श्रुतम् विश्रुतम् बृहत् महत् मनः अस्ति, तेन मनसा हे अद्रिवः! वज्रवन्निन्द्र! दृळहा चित् दृढमपि वाजम् अन्नम् आ दर्षि आदरयसि सातये सम्भजनाय ॥ ३ ॥

मंहि॑ष्ठं वो म॒घोनां॒ राजा॑नं चर्ष॒णीना॑म् ।
इन्द्र॒मुप॒ प्रश॑स्तये पू॒र्वीभि॑र्जुजुषे॒ गिरः॑ ॥ ४ ॥

मंहि॑ष्ठम् । वः॒ । म॒घोना॑म् । राजा॑नम् । च॒र्ष॒णीना॑म् ।
इन्द्र॑म् । उप॑ । प्र॒ऽश॑स्तये । पू॒र्वीभिः॑ । जु॒जु॒षे॒ । गिरः॑ ॥ ४ ॥

वेङ्कट० दातृतमं युष्माकं हविष्मताम् राजानम् मनुष्याणाम् इन्द्रम् स्तोतुं बह्वीभिः स्तुतिभिः उप सेवते स्तोताऽयं होता ॥ ४ ॥

मुद्गल० मघोनाम् हविर्लक्षणधनवताम् वः युष्माकम् मंहिष्ठम् अतिशयेन पूज्यम् चर्षणीनाम् मनुष्याणाम् राजानम् इन्द्रम् उप उपेत्य प्रशस्तये प्रशंसितुम् पूर्वीभिः पुरातनीभिर्नित्याभिः वाग्भिः स्तोतारः जुजुषे सेवन्ते ॥ ४ ॥

अ॒स्मा इ॒त् काव्यं॒ वच॑ उ॒क्थमिन्द्रा॑य॒ शंस्य॑म् ।
तस्मा॑ उ॒ ब्रह्म॑वाहसे॒ गिरो॑ वर्धन्त्यत्र॑यो॒ गिरः॑ शुम्भन्त्यत्र॑यः ॥ ५ ॥

अ॒स्मै । इत् । काव्य॑म् । वचः॑ । उ॒क्थम् । इन्द्रा॑य । शंस्य॑म् ।
तस्मै॑ । ऊँ॒ इति॑ । ब्रह्म॑ऽवाहसे । गिरः॑ । व॒र्ध॒न्ति॒ । अत्र॑यः । गिरः॑ । शु॒म्भ॒न्ति॒ । अत्र॑यः ॥ ५ ॥

वेङ्कट० अस्मै एव कविकृतम् वचः शंसनीयम् उक्थम् च, ततश्च तस्मै एव इन्द्राय स्तोत्रैः उह्यमानाय स्तुतीः वर्धयन्ति अत्रयः। स्तुतीरलङ्कुर्वन्ति अत्रयः इति ॥ ५ ॥

मुद्गल० अस्मै इत् अस्मै एव इन्द्राय काव्यम् कवेः स्तोतुः सम्बन्धि वचः वाग्रूपम् उक्थम् शस्त्रम् शंस्यम् शंसनीयम्। यस्मादेवम् तस्मात् तस्मै उ तस्मै इन्द्रायैव ब्रह्मवाहसे परिवृढस्य स्तोत्रस्य वाहकाय गिरः स्तुतीः अत्रयः अत्रिगोत्राः वर्धन्ति वर्धयन्ति। अत्रयः गिरः शुम्भन्ति दीपयन्ति ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये दशमो वर्गः ।

---

१. दाने च वि॰ एपं. २. नास्ति वि॰. ३-३. दृमादर वि॰.

[४०]

आ या॒ह्यद्रि॑भिः सु॒तं सोमं॑ सोमपते पिब । वृष॒न्निन्द्र॒ वृष॑भिर्वृत्रहन्तम ॥ १ ॥

आ । या॒हि॒ । अद्रि॑ऽभिः । सु॒तम् । सोम॑म् । सो॒म॒ऽप॒ते॒ । पि॒ब॒ । वृष॑न् । इ॒न्द्र॒ । वृष॑ऽभिः । वृ॒त्र॒ह॒न्ऽत॒म॒ ॥

वेङ्कट० हे वृषन्! इन्द्र! आगच्छ। आगत्य च ग्रावभिः सुतम् सोमम् सोमस्य पते! पिब मरुद्भिः सह अतिशयेन वृत्रस्य हन्तः! ॥ १ ॥

मुद्गल० 'आ याह्यद्रिभिः' इति नवर्चमष्टमं सूक्तम्। अत्रिर्ऋषिः। आद्यास्तिस्र उष्णिहः, पञ्चमीनवम्यौ अनुष्टुभौ। शिष्टाः चतस्रः त्रिष्टुभः। पश्चाद्या अत्रिदेवताकाः, पञ्चमी सूर्यदेवत्या, शिष्टा ऐन्द्र्यः ॥

हे इन्द्र! 'आ याहि अस्मद्यज्ञमागच्छ। आगत्य च हे सोमपते सोमस्वामिन् इन्द्र! अद्रिभिः ग्रावभिः सुतम् अभिषुतम् सोमम् पिब। हे वृषन्! फलस्य वर्षयितः! वृत्रहन्तम! अतिशयेन शत्रूणां हन्तृतम! वृषभिः वर्षकैर्मरुद्भिः सह आयाहि पिब च ॥ १ ॥

वृषा॒ ग्रावा॒ वृषा॒ मदो॒ वृषा॒ सोमो॑ अ॒यं सु॒तः । वृष॒न्निन्द्र॒ वृष॑भिर्वृत्रहन्तम ॥ २ ॥

वृषा॑ । ग्रावा॑ । वृषा॑ । मदः॑ । वृषा॑ । सोमः॑ । अ॒यम् । सु॒तः । वृष॑न् । इ॒न्द्र॒ । वृष॑ऽभिः । वृ॒त्र॒ह॒न्ऽत॒म॒ ॥ २ ॥

वेङ्कट० निगदव्याख्याता ॥ २ ॥

मुद्गल० ग्रावा अभिषवसाधन पाषाणः वृषा वर्षकः फलस्य मदः सोमपानेन जनितः वृषा वर्षकः अयं सुतः अभिषुतः सोमः वृषा हे वृत्रहन्तम![1] वृषन्! इन्द्र! सोमम् वृषभिः सह पिब ॥ २ ॥

वृषा॑ त्वा॒ वृष॑णं हुवे॒ वज्रि॑ञ्चि॒त्राभि॑रू॒तिभिः॑ । वृष॑न्निन्द्र॒ वृष॑भिर्वृत्रहन्तम ॥ ३ ॥

वृषा॑ । त्वा॒ । वृष॑णम् । हु॒वे॒ । वज्रि॑न् । चि॒त्राभिः॑ । ऊ॒तिऽभिः॑ । वृष॑न् । इ॒न्द्र॒ । वृष॑ऽभिः । वृ॒त्र॒ह॒न्ऽत॒म॒ ॥ ३ ॥

वेङ्कट० द्वयोरेकं क्रियापदम् हुवे इति। हेतौ तृतीया ऊतिभिः इति ॥ ३ ॥

मुद्गल० हे वज्रिन्! वज्रवन्[2] इन्द्र! वृषा सोमरसस्य सेक्ताऽहम् वृषणम् त्वा त्वाम् हुवे आह्वयामि। किमर्थम्। चित्राभिः चायनीयाभिः ऊतिभिः रक्षाभिः निमित्तभूताभिः। 'शिष्टं गतम्'[2] ॥ ३ ॥

ऋ॒जी॒षी व॒ज्री वृ॑ष॒भस्तु॑रा॒षाट्छु॒ष्मी राजा॑ वृत्र॒हा सो॑म॒पावा॑ ।
यु॒क्त्वा हरि॑भ्या॒मुप॑ यासद॒र्वाङ् माध्यं॑दिने॒ सव॑ने मत्स॒दिन्द्रः॑ ॥ ४ ॥

ऋ॒जी॒षी । व॒ज्री । वृ॒ष॒भः । तु॒रा॒षाट् । शु॒ष्मी । राजा॑ । वृ॒त्र॒ऽहा । सो॒म॒ऽपावा॑ ।
यु॒क्त्वा । हरि॑ऽभ्याम् । उप॑ । या॒स॒त् । अ॒र्वाङ् । माध्यं॑दिने । सव॑ने । म॒त्स॒त् । इन्द्रः॑ ॥ ४ ॥

---

१. द्रष्टव्यं मूको. २-२. नास्ति मूको.

वेङ्कट० क्षिप्रकारिणो योऽभिभवतीति सः तुराषाट् । अवशिष्टं स्पष्टमिति ॥ ४ ॥

मुद्गल० ऋजीषी सवनद्वयेऽभिषुतस्य गतसारस्य सोमस्य तृतीयसवने आप्यायाऽभिषुतो योऽस्ति स ऋजीषः सोमः, सोऽस्य[1] अस्तीत्यृजीषी । वज्री वज्रवान्[2] वृषभः वर्षिता तुराषाट् तुराणां त्वरमाणानां शत्रूणां सोढा शुष्मी बलवान् राजा ईश्वरः । वृत्रहा वृत्रस्य हन्ता सोमपावा सोमरसस्य पाता । एवंमहानुभाव[3] इन्द्रः हरिभ्याम् युक्त्वा रथं योजयित्वा उप यासत् उपगच्छतु । अर्वाङ् अस्मदभिमुखम् आगच्छतु । आगत्य च माध्यन्दिने सवने मत्सत् मादयतु सोमेन इन्द्रः ॥ ४ ॥

यत् त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः ।
अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयुः ॥ ५ ॥

यत् । त्वा । सूर्य । स्वःऽभानुः । तमसा । अविध्यत् । आसुरः ।
अक्षेत्रऽवित् । यथा । मुग्धः । भुवनानि । अदीधयुः ॥ ५ ॥

वेङ्कट० यत् त्वा सूर्य इति चात्रीणां मन्त्रैः कर्म कीर्त्यते । यदा त्वां हे सूर्य! असुरपुत्रः स्वर्भानुः सैंहिकेयोऽन्धकारेण अविध्यत्, तदानीम् यथा अक्षेत्रज्ञः मुग्धः ध्यायति, एवं सूर्ये नष्टे भूतानि ध्यानपराण्यभवन् ॥ ५ ॥

मुद्गल० इत्यादिचतुर्भिर्मन्त्रैरत्रीणां कर्म कीर्त्यते । हे सूर्य प्रेरक देव! त्वा त्वाम् यत् यदा आसुरः असुरस्य प्राणापहर्तुः पुत्रः स्वर्भानुः स्वर्भानुसंज्ञकः तमसा मायानिर्मितेन अविध्यत् आवृणोत्, तदा भुवनानि सर्वाणि अदीधयुः दृश्यन्ते । यथा तत्रस्थः सर्वो जनः अक्षेत्रवित् स्वस्थानमजानन् मुग्धः मूढो भवति तथा ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये एकादशो वर्गः ॥

स्वर्भानोरध यदिन्द्र माया अवो दिवो वर्तमाना अवाहन् ।
गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः ॥ ६ ॥

स्वःऽभानोः । अध । यत् । इन्द्र । मायाः । अवः । दिवः । वर्तमानाः । अवऽअहन् ।
गूळ्हम् । सूर्यम् । तमसा । अपऽव्रतेन । तुरीयेण । ब्रह्मणा । अविन्दत् । अत्रिः ॥ ६ ॥

वेङ्कट० इन्द्र![4] सूर्ये तमसाऽभिभूते तदनन्तरमेव स्वर्भानोः विप्रस्ता मायाः तमोरूपेण परिणताः सूर्यस्य अवस्तात् तमाच्छाद्य वर्तमानाः यदा त्वम् अपनीतवानसि, ततः शिष्टेन तमसा अपगतकर्मणा अस्यन्तर्गतेन निगूढम् सूर्यम् अत्रिः चतुर्थेन ब्रह्मणा अलभत । लौकिकैस्त्रिभिरुपायैः[5] निष्कृष्य[6] इन्द्रस्तमोऽपानयत् । अवशिष्टम् अत्रिर्मन्त्रेणेति । 'स्वर्भानुः[7]' आसुरः[8] सूर्यं तमसाऽविध्यत् ।

१. सोमस्य मूको. २. वज्रवान् मूको. ३. °भावा मूको. ४. इन्द्रः मूको. ५. त्रिरुप° मूको. ६. °त्वा वि° एपं. ७. स्वर्भानुः मूको. ८. वै मूको.

तस्मै देवाः प्रायश्चित्तिमैच्छन्। तस्य यत् प्रथमं तमोऽपाघ्नन्त्सा कृष्णाऽविरभवत्। यद्[1] द्वितीयं सा फल्गुनी। यत् तृतीयं सा बलक्षी। यदध्यस्थात्[2] 'अपाकृन्तन्त्साऽविवशा समभवद्' (तै २,१,२,२) इति ब्राह्मणम् ॥ ६ ॥

मुद्गल० अथ अथ अगन्मौढ्यानन्तरम् स्वर्भानोः असुरस्य यत् याः मायाः सन्ति। कीदृश्यः ताः। दिवः द्योतमानाद् आदित्यात् अवः अवस्तात् वर्तमानाः। तदुपरितिरोभानासामर्थ्यादिति भावः। हे इन्द्र! ताः सर्वाः अवाहन् अवहंसि। अथ परोक्षवादः। तमसा अन्धकारेण अपव्रतेन अपगतकर्मणा गूळ्हम् सूर्यम्। अन्धकारस्यावरणरूपत्वाद् अपव्रतत्वम्। तथाविधम् तुरीयेण ब्रह्मणा 'ग्राव्णो ब्रह्मा' (ऋ ५,४०,८) इत्यनेन अत्रि॰ अविन्दत् लब्धवान् आवरणापगमोपायं निरावरणं[3] सूर्यमिति। पूर्वमन्त्रापेक्षया अस्य तुरीयत्वम् ॥ ६ ॥

मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसा नि गारीत्।
त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥ ७ ॥

मा। माम्। इमम्। तव। सन्तम्। अत्रे। इरस्या। द्रुग्धः। भियसा। नि। गारीत्।
त्वम्। मित्रः। असि। सत्यऽराधाः। तौ। मा। इह। अवतम्। वरुणः। च। राजा ॥ ७ ॥

वेङ्कट० अत्रिं सूर्यो यथोक्तवान् तदत्रिर्वदति—हे अत्रे! तव आश्रयभूतं तम्, इमम् माम् मनुष्यैः भयेन द्रुग्धः तिरस्कृतोऽसुरः अन्नेच्छया मा नि गिरतु। त्वम् मम मित्रः भवसि। सत्यधनस्त्वं च। मध्यनामा स्वामी वरुणः च राजा माम् इह रक्षतम् ॥ ७ ॥

मुद्गल० इदं सूर्यवाक्यम्। हे अत्रे! माम् इमम् ईदृगवस्थम्[4] तव[5] सन्तम् तव[6] स्वभूतम् माम्[7] इरस्या अन्नेच्छया द्रुग्धः द्रोग्धासुरः भियसा भयजनकेन तमसा मा नि गारीत् मा गिरतु। किञ्च हे मित्र! त्वम् मित्रः असि प्रमीतेः सकाशात् त्राता भवसि। सत्यराधाः सत्यधनश्च तौ राजा वरुणः च त्वं च युवाम् मा माम् अवतम् रक्षतम् ॥ ७ ॥

ग्राव्णो ब्रह्मा युयुजानः सपर्यन् कीरिणा देवान् नमसोपशिक्षन्।
अत्रिः सूर्यस्य दिवि चक्षुराधात् स्वर्भानोरप माया अघुक्षत् ॥ ८ ॥

ग्राव्णः। ब्रह्मा। युयुजानः। सपर्यन्। कीरिणा। देवान्। नमसा। उपऽशिक्षन्।
अत्रिः। सूर्यस्य। दिवि। चक्षुः। आ। अधात्। स्वःऽभानोः। अप। मायाः। अघुक्षत् ॥ ८ ॥

वेङ्कट० 'तुरीयेण[8] ब्रह्मणा' (ऋ ५,४०,६) इत्युक्तोऽर्थः स्पष्टमुच्यते। सोमाभिषवार्थम् ग्राव्णः युञ्जानः अत्रिः देवान् पूजयन् येषां विक्षिप्तेनाक्षेन देवान् उपसाधयन् अत्रिः सूर्यस्य दिवि तेजः कृतवान्। तथा स्वर्भानोः मायाः च तमोरूपाः अप अगूहत्[9] ॥ ८ ॥

/

१. नास्ति ळपे. २. 'दध्यस्तात्' ळ. ३-३. 'निर्विशादयम' मूको. ४. निरावरणम् मूको. ५. नास्ति मूको. ६. तुर्येण मूको. ७. चयुक्तो मूको. ८. गूहन् मूको.

मुद्गल० ब्रह्मा ब्राह्मणः अत्रिः माम् इन्द्रावतमित्युपशिक्षन् ग्रावाणः अभिषवसाधनान् युयुजानः युञ्जन् इन्द्रार्थं सोममभिषुण्वन्नित्यर्थः। तथा कीरिणा स्तोत्रेण देवान् सपर्यन् पूजयन् नमसा उक्थैः साधनैः सूर्यस्य सर्वप्रेरकस्य चक्षुः सर्वस्य व्यापकं मण्डलम् दिवि अन्तरिक्षे आ अधात्। निस्तमस्कं कृतवानित्यर्थः। तदेव स्पष्टयति। स्वर्भानोः एतन्नामकस्यासुरस्य मायाः तुरीयेण ब्रह्मणा अत्रिसहाय इन्द्रः अप अघुक्षत् अपजुगोप न्यवारयदित्यर्थः ॥ ८ ॥

यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः। अत्रयस्तमन्वविन्दन् नह्य१न्ये अशक्नुवन् ॥९॥

यम्। वै। सूर्यम्। स्वःऽभानुः। तमसा। अविध्यत्। आसुरः।
अत्रयः। तम्। अनु। अविन्दन्। नहि। अन्ये। अशक्नुवन् ॥ ९ ॥

वेङ्कट० स्वर्भानुना तमसा विद्धम् सूर्यम्[1] तमसोऽपनयमाय अत्रयः तम् अनु अविन्दन्, न अन्ये तु शक्ता आसन्। 'स्वर्भानुरासुर आदित्यं तमसाऽविध्यत्। तद् देवास्त्वर्पयस्याभिपज्यन्। तेऽत्रिमब्रुवन्[2] ऋषे! त्वमिदमपजहीति[3]। तथेति। तदत्रिरपाहन्'' ( जैमि १,८० )। वैश्वदेवान्येकावश पराण्यतः ॥९॥

मुद्गल० अत्रिकृतं सामर्थ्यमनुवदति। यम् सूर्यम् आसुरः स्वर्भानुः तमसा अविध्यत् आवृणोत् वै खलु, अत्रयः तम् सूर्यम् अनु अविन्दन्। इन्द्रार्थं सोमयागार्थं ग्रावस्तुतिनमस्कारैरनुक्रमेणोपदीपयन् तमसोऽपकृष्य[4] लब्धवन्त इत्यर्थः। अन्ये नहि अशक्नुवन् न लब्धवन्तः खलु ॥ ९ ॥

इति चतुर्थाष्टके द्वितीयाध्याये द्वादशो वर्गः ॥

[ ४१ ]

को नु वां मित्रावरुणावृतायन् दिवो वा महः पार्थिवस्य वा दे।
ऋतस्य वा सदसि त्रासीथां नो यज्ञायते वा पशुषो न वाजान् ॥ १ ॥

कः। नु। वाम्। मित्रावरुणौ। ऋतऽयन्। दिवः। वा। महः। पार्थिवस्य। वा। दे।
ऋतस्य। वा। सदसि। त्रासीथाम्। नः। यज्ञऽयते। वा। पशुऽसः। न। वाजान् ॥ १ ॥

वेङ्कट० कः नु मनुष्यो हे मित्रावरुणौ! वाम् यज्ञं कर्तुमिच्छन् महतो द्युलोकस्य वृष्ट्यादिकाय दानाय भवति, पार्थिवस्य वा लोकस्यौषध्यादिदानाय[5] भवति। तौ युवां सत्यस्य स्थानेऽन्तरिक्षे वर्तमानात् स्तेन[6] भीतौ वा अस्मान् रक्षतम्। यज्ञमिच्छते वा मह्यम् अन्नानि प्रयच्छतम् यथा[7] माल्यः। पशुषु सीदतीति पशुषः। आर्षो दः ॥ १ ॥

मुद्गल० 'को नु वाम्' इति विंशत्यृचं नवमं सूक्तम्। भौमः अत्रिः ऋषिः। षोडशीसप्तदश्यौ अति-जगत्यौ, विंश्येकपदा विराट्, शिष्टाः त्रिष्टुभः। विश्वे देवा देवताः।

---

1. नास्ति लपं. 2. देवाभिष° लपं; देवास्तमभिव्यज्यन्नेतिम° वि°. 3. °मवजही° वि°. 4. °रपानुपा क लपं; °रपानुना वि°. 5. निरस्य मूको. 6. °स्तेना° मूको. 7. तौ वि° लपं. 8. नास्ति मूको.

हे मित्रावरुणौ! देवौ! वाम् युवाम् कः नु कः खलु यजमानः ऋतायन् यज्ञमिच्छन् वावृधा-दिति शेषः। दिवः सदसि द्युलोकसम्बन्धिनि स्थाने च महः महतः पार्थिवस्य सदसि ऋतस्य उदकस्योत्पादकस्यान्तरिक्षस्य सदसि च त्रिषु स्थानेषु नः अस्मान् त्रासीथाम् रक्षतम्। वा शब्दश्चार्थे। किञ्च यज्ञायते यज्ञमिच्छते देवा हविर्दात्रे च महाम् पशुपः न वाजान् पशुषु सीदतो वाजानन्नानि क्षीरदध्यादीनीव तानि यथा प्रयच्छतं तद्वद् भवतमिति ॥ १ ॥

ते नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतो॑ जुषन्त ।
नमो॑भिर्वा॒ ये दध॑ते सुवृ॒क्तिं स्तोमं॑ रु॒द्राय॑ मी॒ळ्हुषे॑ स॒जोषाः॑ ॥ २ ॥

ते । नः॒ । मि॒त्रः । वरु॑णः । अ॒र्य॒मा । आ॒युः । इन्द्रः॑ । ऋ॒भु॒क्षाः । म॒रुतः॑ । जु॒ष॒न्त॒ ।
नमः॑ऽभिः । वा॒ । ये । दध॑ते । सु॒ऽवृ॒क्तिम् । स्तोम॑म् । रु॒द्राय॑ । मी॒ळ्हुषे॑ । स॒ऽजोषाः॑ ॥ २ ॥

वेङ्कट० मित्रादयो वायुः इन्द्रः महानस्मान् सेवन्ताम्। ये च नमस्कारैः सह सङ्गताः सेव्ये रुद्राय सुप्रवृत्तम् स्तोत्रम् धारयन्ति। रुद्रस्य मरुतो नत्वा त[1] एवंविधा इति द्रष्टव्यमिति ॥ २ ॥

मुद्गल० ते मित्रादयो देवाः नः अस्माकम् सुवृक्तिम् स्तोमम् शोभनपापवर्जनवत् स्तोत्रम् नमोभिः वा हविर्भिश्च जुषन्त सेवन्ताम्। ये दधते धारयन्त्युक्तलक्षणं स्तोत्रम्। देवाः द्विविधाः स्तोत्रभाजो हविर्भाजश्च। अत्र स्तोत्रभाजः उच्यन्ते। आयुः सततगामी वायुरुच्यते। अथ मरुत एव विशेष्यन्ते। रुद्राय मीळ्हुषे सेक्त्रे[2] रुद्रेण सह सजोषाः सजोषसः सह प्रीयमाणाः ॥ २ ॥

आ वां॒ येष्ठा॑श्विना हु॒वध्यै॒ वात॑स्य प॒त्मन् रथ्य॑स्य पु॒ष्टौ ।
उ॒त वा॑ दि॒वो असु॑राय॒ मन्म॒ प्रान्धां॑सीव॒ यज्य॑वे भरध्वम् ॥ ३ ॥

आ । वा॒म् । येष्ठा॑ । अ॒श्वि॒ना॒ । हु॒वध्यै॑ । वात॑स्य । प॒त्मन् । रथ्य॑स्य । पु॒ष्टौ ।
उ॒त । वा॒ । दि॒वः । असु॑राय । मन्म॑ । प्र । अन्धां॑सिऽइव । यज्य॑वे । भ॒र॒ध्व॒म् ॥ ३ ॥

वेङ्कट० हे अश्विनौ! यातृतमौ वाम् अहम् आह्वातुम् आगतोऽस्मि युवयोः शिघ्रगतिमतोः वेगा वातस्य पतने रथे नियुज्यमानस्य अश्वस्य सुहितस्य पुष्टौ। युवयोः आगमनप्रारम्भे अहम् आह्वातुं प्रवृत्त इत्यर्थः। अथ मित्रादीन् सर्वानेव। अपि च हे[3] मित्रादयः! दिवः आगत्य प्राज्ञाय स्तोत्रे मह्यं मंहनीयानि धनानि प्र भरध्वम्, यथा यजमानाय अन्नानि प्रयच्छथेति ॥ ३ ॥

मुद्गल० अनयाश्विनौ स्तूयेते। हे अश्विना! अश्विनौ! येष्ठा कामानां यन्तृतमौ वाम् युवाम् वातस्य पत्मन् वायुसमानगतेरश्वस्य गमने प्राप्तौ रथ्यस्य रथस्य पुष्टौ च निमित्तं सति आ हुवध्यै हुवे आह्वयामि। उत वा किञ्चेत्यर्थः। दिवः द्योतमानाय असुराय प्राणापहर्त्रे रुद्राय यज्यवे यागसाधकाय मन्म मननीयं स्तोत्रम् प्र भरध्वम् सम्पादयत। हे ऋत्विजः! अन्धांसीव अन्नानि, हवींषि स्तोत्रं चेत्यर्थः ॥ ३ ॥

---

१. न मूको. २. सेक्तेन मूको. ३. वे मूको.

प्र सुक्षणो दिव्यः कण्वहोता त्रितो दिवः सजोषा वातो अग्निः ।
पूषा भगः प्रभृथे विश्वभोजा आजिं न जग्मुराश्वश्वतमाः ॥ ४ ॥

प्र । सुक्षणः । दिव्यः । कण्वऽहोता । त्रितः । दिवः । सऽजोषाः । वातः । अग्निः ।
पूषा । भगः । प्रऽभृथे । विश्वऽभोजाः । आजिम् । न । जग्मुः । आश्वश्वऽतमाः ॥ ४ ॥

वेङ्कट० सचनशीलः सविता दिवि भवः कण्व इति मेधाविनाम (निघ ३,१५), प्राज्ञा यस्य सवितुः ह्वातारो भवन्ति। "त्रितस्त्रिस्थानः इन्द्रः" इति यास्कः (९,२५)। सविता इन्द्रः ताभ्यां सहितः वातः अग्निः पूषा भगः इत्येते विश्वस्य रक्षका देवा यज्ञगृहे दिवः प्र गच्छन्तु, अतिशयेन वेगवदश्वा यथा युद्धं गच्छन्ति तद्वदिति ॥ ४ ॥

मुद्गल० अत्र लिङ्गोक्तदेवताः। प्र जग्मुरिति सम्बन्धः। सक्षणः यज्ञं सेवमानः शत्रूणां सोढा वा दिव्यः दिवि भवः कण्वहोता कण्वा मेधाविनो होतारः आह्वातारो यस्य सः। त्रितः त्रिषु क्षित्यादिषु स्थानेषु तायमानः दिवः सूर्येण सह सजोषाः समानप्रीतिः वातः बलस्वरूपकः वायुः अग्निः पूषा भगः च प्रभृथे प्रभरणवत्यस्मिन्यज्ञे उक्ताः सर्वे देवाः विश्वभोजाः विश्वरक्षकाः आश्वश्वतमाः अतिशयेनाश्ववत्तमा अश्वाः आजिम् न सङ्ग्राममिव प्र जग्मुः प्रगच्छन्ति ॥ ४ ॥

प्र वो रयिं युक्ताश्वं भरध्वं राय एषेऽवसे दधीत धीः ।
सुशेव एवैरौशिजस्य होता ये व एवा मरुतस्तुराणाम् ॥ ५ ॥

प्र । वः । रयिम् । युक्तऽअश्वम् । भरध्वम् । रायः । एषे । अवसे । दधीत । धीः ।
सुऽशेवः । एवैः । औशिजस्य । होता । ये । वः । एवाः । मरुतः । तुराणाम् ॥ ५ ॥

वेङ्कट० हे मरुतः! यूयम् अस्मभ्यं युक्ताश्वम् रयिम् प्र भरध्वम्, तथा अस्माकं धनस्यान्वेषणाय रक्षणाय धारयत कर्माणि। हे मरुतः! क्षिप्रगन्तॄणां युष्माकम् ये एवाः गतयः तैः एवैः औशिजस्य कक्षीवतो होता अग्निः सुसुखो भवतु ॥ ५ ॥

मुद्गल० हे मरुतः! वः यूयम् रयिम् धनम् युक्ताश्वम् अश्वसहितम् प्र भरध्वम् सम्पादयत। रायः धनानि गवाश्वादिलक्षणानि एषे प्राप्तुम् अवसे प्राप्तानां धनानां रक्षणाय धीः स्तोता दधीत धारयति स्तुतिम्। स च औशिजस्य कक्षीवतः होता अग्निः एवैः गन्तव्यैः कामैः सुशेवः सुसुखो भवतु। हे मरुतः! तुराणाम् त्वरमाणानाम् वः युष्माकम् ये एवाः कामाः सन्ति तैरिति ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये त्रयोदशो वर्गः ॥

प्र वो वायुं रथयुजं कृणुध्वं प्र देवं विप्रं पनितारमर्कैः ।
इषुध्यव ऋतसापः पुरंधीर्वस्वीर्नो अत्र पत्नीरा धिये धुः ॥ ६ ॥

---

१. नास्ति वि° सं°.

प्र । वः । वायुम् । रथऽयुजम् । कृणुध्वम् । प्र । देवम् । विप्रम् । पनितारम् । अर्कैः ।
इषुध्यवः । ऋतऽसापः । पुरम्ऽधीः । वस्वीः । नः । अत्र । पत्नीः । आ । धिये । धुरिति धुः ॥

वेङ्कट० यूयम् वायुम् रथयोजनम् प्र कृणुध्वम् अभिमुखं कुरुत, तथा अर्कैः देवानां स्तोतारं मेधाविनम् अग्निं च देवम् प्र कृणुध्वम्। इषुध्यतिः ऋध्नाकर्मा। 'विश्वो राय इषुध्यति' (ऋ ५,५०,१) इति मन्त्रः। ऋध्नन्त्यो यज्ञं स्पृशन्त्यो बहुप्रज्ञा वसुमत्योऽस्मान् अत्र देवपत्न्यः कर्मणे आ अदधुः ॥ ६ ॥

मुद्गल० हे मदीयाः ऋत्विजः! वः यूयम् वायुम् देवम् रथयुजम् यज्ञगमनाय रथसन्नद्धम् प्र कृणुध्वम् कुरुध्वम्, देवम् द्योतमानम् विप्रम् विशेषेण कामानां पूरकम् पनितारम् स्तुत्यम् अर्कैः अर्चनसाधनमन्त्रैः प्र कृणुध्वम् स्तुत। किञ्च इषुध्यवः गमन्यः ऋतसापः यज्ञस्पृशः पुरंधीः पुरंध्यः स्त्रीरूपाः वस्वीः प्रशस्याः पत्नीः देवपत्न्यः अत्र अस्मिन् यज्ञे नः अस्मदीयाय धिये कर्मणे तत्सिद्ध्यर्थे आ धुः आगतवत्यः ॥ ६ ॥

उप व एषे वन्द्येभिः शूषैः प्र यह्वी दिवश्चितयद्भिरर्कैः ।
उषासानक्ता विदुषीव विश्वमा हा वहतो मर्त्याय यज्ञम् ॥ ७ ॥

उप । वः । एषे । वन्द्येभिः । शूषैः । प्र । यह्वी इति । दिवः । चितयत्ऽभिः । अर्कैः ।
उषसानक्ता । विदुषी इवेति विदुषीऽइव । विश्वम् । आ । ह । वहतः । मर्त्याय । यज्ञम् ॥ ७ ॥

वेङ्कट० उप प्र गच्छतो युष्मान् स्तुत्यैः सुखैः कल्याणैः गन्तुम् दिवः सकाशात् महत्यौ द्यावापृथिव्यौ स्तोत्रैर्मया प्रयुज्यमानैः आत्मगुणान् चेतयद्भिः, मया स्तूयमाने युष्मान् सुखैर्गन्तुं गमनोद्योगं कुरुतां स्वर्गाल्लोकादित्यर्थः। उषासानक्ता मनुष्याय विश्वम् यज्ञम् आ वहतः जानत्याविव द्वे स्त्रियौ, यज्ञं नयत इत्यर्थः ॥ ७ ॥

मुद्गल० हे उषासानक्ता!(?) अहोरात्राभिमानिदेवते! यह्वी महत्यौ वन्द्येभिः वन्दनार्हैः चितयद्भिः अर्कैः अर्चनीयैः शूषैः सुखकरैः हविभिः देवैः सह दिवः अन्तरिक्षात् अविशेषेण सर्वप्रदेशात् वः युष्मभ्यम् उप प्र एषे हविः उपप्रापयामि। हे उक्तदेवते!(?) विश्वम् सर्वं कर्तव्यजातम् विदुषी इव जानत्याविव मर्त्याय यजमानाय यज्ञम् आ वहतः अभिमुखं प्रापयतः। ह इति पूरणः ॥ ७ ॥

अभि वो अर्चे पोष्यावतो नॄन् वास्तोष्पतिं त्वष्टारं रराणः ।
धन्या सजोषा धिषणा नमोभिर्वनस्पतीँरोषधी राय एषे ॥ ८ ॥

अभि । वः । अर्चे । पोष्याऽवतः । नॄन् । वास्तोः । पतिम् । त्वष्टारम् । रराणः ।
धन्या । सऽजोषाः । धिषणा । नमःऽभिः । वनस्पतीन् । ओषधीः । रायः । एषे ॥ ८ ॥

---

१. °गा वि° लपं. २. स्तुति मूको. ३. नास्ति वि° लपं. ४. °माने वि°. ५ स्वरतश्चिन्त्यम् (पु. सं.).

वेङ्कट० अभि स्तौमि युष्मान् पोष्यधनयुक्तान् नेतॄन् देवान् वास्तोः पतिम् [1]त्वष्टारम् रराणः[1]। धननिमित्तया[2] स्तुत्या हविर्भिश्च सङ्गतोऽहम् ओषधीः वनस्पतीन् च धनानि गन्तुं स्तौमि ॥ ८ ॥

मुद्गल० अहम् पोष्यावतः बहुपोष्यधनयुक्तान् नॄन् कर्मनेतॄन् वः युष्मान् अभि अर्चे अभिपूजयामि, स्तौमीत्यर्थः। के पुनस्ते यूयम्। उच्यते। वास्तो- पतिम् त्वष्टारम् रराणः स्तोत्रादिभिः क्रीडन्। धन्या धनकरी सजोषाः इतरदेवैः सह गच्छन्ती धिषणा वाणी[3]। [4]एतत् द्वितीयार्थे प्रथमाः[4]। वनस्पतीन् ओषधीः च नमोभिः सह अर्चे इति सम्बन्धः। किमर्थम्। रायः एषे धनं प्राप्तुम् ॥ ८ ॥

तुजे नस्तने पर्वताः सन्तु स्वैतवो ये वसवो न वीराः।
पनित आप्त्यो यजतः सदा नो वर्धान्नः शंसं नर्यो अभिष्टौ ॥ ९ ॥

तुजे। नः। तने। पर्वताः। सन्तु। स्वऽएतवः। ये। वसवः। न। वीराः।
पनितः। आप्त्यः। यजतः। सदा। नः। वर्धात्। नः। शंसम्। नर्यः। अभिष्टौ ॥ ९ ॥

वेङ्कट० पुत्रे तत्पुत्रे चास्माकं मेघा वर्षार्थं भवन्तु, ये मेघाः वासयितारः [5]वीराः इव[5] स्वायत्तगमनो भवन्ति। तथाऽस्माभि.[6] स्तुतः अजस्रो आप्तो यष्टव्यः अपां नपात् अस्माकम् सदा भवतु। वर्धयतु चास्माकं कामं नरहितः अपां नपात् अभीप्सायाम् ॥ ९ ॥

मुद्गल० पर्वताः पूरणयन्तः मेघाः नः अस्माकम्[7] तुजे पुत्रे नः अस्माकम्[8] तने पुत्रस्य च पुत्रे स्वैतवः शोभनगमनाः सन्तु भवन्तु। कीदृशास्ते। ये वसवः आप्तो वासयितारः वीराः न वीरा इव। किञ्च। पनितः स्तुतः आप्त्यः आप्तव्यः यजतः यजनीयः आदित्यः सदा सर्वदा नः शंसम् अस्माकं स्तुतिम् नर्यः नरेभ्यो हितो देव अभिष्टौ अभितः एषणे सति वर्धात् वर्धयेत् ॥ ९ ॥

वृष्णो अस्तोषि भूम्यस्य गर्भं त्रितो नपातमपां सुवृक्ति।
गृणीते अग्निरेतरी न शूषैः शोचिष्केशो नि रिणाति वना ॥ १० ॥

वृष्णः। अस्तोषि। भूम्यस्य। गर्भम्। त्रितः। नपातम्। अपाम्। सुऽवृक्ति।
गृणीते। अग्निः। एतरि। न। शूषैः। शोचिःऽकेशः। नि। रिणाति। वना ॥ १० ॥

वेङ्कट० भूमिहितस्य पर्जन्यस्य पुत्रम् अपाम् नपातम् त्रिस्थानोऽहम् अग्निः सुवृक्तिभिः स्तुतवानस्मि। सोऽयम् अपां नपात् अग्निः स्तोत्रैः एतरि पुरुषे सुखैः[9] न[10] गृणीते प्रत्यहो न वदति, किन्तु शोचिष्केशः उदकानि[11] निर्गमयति ॥ १० ॥

मुद्गल० भूम्यस्य भूमिरन्तरिक्षं तदर्हस्य वृष्णः वर्षकस्य गर्भम् गर्भस्थानीयम् अपाम् नपातम् रक्षक वैद्युतम् अग्निम् सुवृक्ति शोभनपापादिवर्जनवता स्तोत्रेण अस्तोषि स्तुतवान् अहम्। सः त्रितः तीर्णतमः त्रिषु स्थानेष्वन्येषु त्रिस्थापकेषु तायमानः[12] अग्निः एतरि गन्तरि मयि शूषैः सुखकरैः

1-1. त्वरमाणः वि[1] ल्प. 2. [2]निमित्तया क ल्प. 3. वाणीम् मूको. 4-4. नास्ति मूको.
5-5. वीरा[5]: वि[1]; वीरावण ल्प. 6. स्या[5] वि[1] ल्प. 7. अस्मान् मूको. 8. अस्मद् मूको.
9. सुखैर्ल्व वि[1] ल्प. 10. नास्ति मूको. 11. उदका मूको. 12. यमः मूको.

रश्मिभिः न गृणीते ■ ग्रसनं कुरुते, न क्षुभ्यतीत्यर्थः। किन्तु शोचिष्केशः प्रदीप्तरश्मिः सन् वना वनानि नि रिणाति हिनस्ति, दहतीत्यर्थः॥ १०॥

इति चतुर्थाष्टके द्वितीयाध्याये चतुर्दशो वर्गः॥

कथा महे रुद्रियाय ब्रवाम कद्राये चिकितुषे भगाय।
आप ओषधीरुत नोऽवन्तु द्यौर्वना गिरयो वृक्षकेशाः॥ ११॥

कथा। महे। रुद्रियाय। ब्रवाम। कत्। राये। चिकितुषे। भगाय।
आपः। ओषधीः। उत। नः। अवन्तु। द्यौः। वना। गिरयः। वृक्षऽकेशाः॥ ११॥

वेङ्कट० कथं महते रुद्रपुत्राय मरुद्गणाय ब्रूमः। कथं वा[1] स्तोत्रं स्तोतॄणां स्तोत्रं धनाय जानते भगाय ब्रूमः। अपि च अस्मान् आपः ओषधयश्च रक्षन्तु, तथा द्यौः वनानि शिलोच्चयाश्च वृक्षकेशाः॥ ११॥

मुद्गल० वयम् ऋषयः कथा केन प्रकारेण महे महते रुद्रियाय रुद्रपुत्राय मरुद्गणाय ब्रवाम स्तुतीः। कत् किन्च स्तोत्रम् राये धनलाभाय चिकितुषे सर्वं जानते भगाय देवाय ब्रवाम। उत अपि च आपः अब्देवताः ओषधीः ओषधयः द्यौः द्युदेवता वना वनानि गिरयः वृक्षकेशाः वृक्षा एव केशस्थानीया येषां ते, उक्ता देवताः नः अस्मान् अवन्तु रक्षन्तु॥ ११॥

शृणोतु न ऊर्जां पतिर्गिरः स नभस्तरीयाँ इषिरः परिज्मा।
शृण्वन्त्वापः पुरो न शुभ्राः परि स्रुचो बबृहाणस्याद्रेः॥ १२॥

शृणोतु। नः। ऊर्जाम्। पतिः। गिरः। सः। नभः। तरीयान्। इषिरः। परिऽज्मा।
शृण्वन्तु। आपः। पुरः। न। शुभ्राः। परि। स्रुचः। बबृहाणस्य। अद्रेः॥ १२॥

वेङ्कट० शृणोतु अस्माकं स्तुतीः अन्नानाम् पतिः वायुः। सः वायुः नभसः अतिशयेन तरिता गमनशीलः परितो गन्ता। तथा आपः शृण्वन्तु सौधमध्यः[2] पुरः इव [3]शोभनाः। अस्ति[3] शारीरवचनो वा पुरुशब्दः[4]। ता इमाः स्रवन्त्य आपः परितो भवन्ति वर्धमानस्य मेघस्य॥ १२॥

मुद्गल० नः अस्माकम् गिरः स्तुतीः शृणोतु। कः। ऊर्जाम् अन्नानाम् पतिः वायुः। सः नभः नभसि चारी तरीयान् तरितृतमः इषिरः गमनशीलः परिज्मा परितो गन्ता। किञ्च आपः शृण्वन्तु गिरः। कीदृश्यस्ताः। पुरः नः पुराणीव शुभ्राः दीप्ताः, बबृहाणस्य वर्धमानस्य अद्रेः मेघस्य परि परितः स्रुचः सरणशीलाः॥ १२॥

विदा चिन्नु महान्तो ये व एवा ब्रवाम दस्मा वार्यं दधानाः।
वयश्चन सुभ्व आव यन्ति क्षुभा मर्तमनुयतं वधस्नैः॥ १३॥

१. वः वि°. २. सौधमर्यैः मूको; सौधम्याः ल प्रस्तावः. ३-३. शोभनोऽस्ति मूको. ४. पुर° मूको.

विदे । चित् । नु । महान्तः । ये । वः । एवाः । ब्रवाम । दस्माः । वार्यम् । दधानाः ।
वयः । चन । सुऽभ्वः । आ । अव । यन्ति । क्षुभा । मर्तम् । अनुऽयतम् । वधऽस्नैः ॥ १३ ॥

वेङ्कट० जानीत क्षिप्रं हे महान्तः!, ये युष्मान् प्रति गन्तारो वयं च स्तोत्रं प्रब्रवाम[1] हे[2] दर्शनीयाः! वरणीयं हविः दधानाः। परोक्ष उत्तरः। पक्षिण इव वृक्षात् द्युलोकात् महान्तो देवाः अधस्तात् आ गच्छन्ति क्षोभकेण शत्रुणा प्रहारैः अनुबद्धं यजमानं मरुतः ॥ १३ ॥

मुद्गल० हे महान्तः! मरुतः! क्षिप्रं यूयम् विद जानीथ स्तोत्रम्। हे दस्माः[1] दर्शनीयाः! वः युष्मान् ये एवाः गन्तारो युष्मान् भजमानाः वार्यम् वरणीयं हविः दधानाः ददानाः वयम् ब्रवाम स्तुविम्। चित् पूरणः। वयः चन आगन्तारश्चैते मरुतः सुभ्वः प्रवृद्धाः आ अस्मद्-भिमुखम् अव यन्ति गच्छन्ति। किं कुर्वन्तः। क्षुभा क्षोभकेण सहितम् मर्तम् मरणधर्माणं वैरिणम् अनुयतम् अभिगतम् वधस्नैः आयुधैः परिहरन्तोऽवयन्ति ॥ १३ ॥

आ दैव्यानि पार्थिवानि जन्मापश्चाच्छा सुमखाय वोचम् ।
वर्धन्तां द्यावो गिरश्चन्द्राग्रा उदा वर्धन्तामभिषाता अर्णाः ॥ १४ ॥

आ । दैव्यानि । पार्थिवानि । जन्म । अपः । च । अच्छ । सुऽमखाय । वोचम् ।
वर्धन्ताम् । द्यावः । गिरः । चन्द्रऽअग्राः । उदा । वर्धन्ताम् । अभिऽसाताः । अर्णाः ॥ १४ ॥

वेङ्कट० सुयज्ञाय मरुद्गणाय अहम् दैव्यानि पार्थिवानि च जातानि धनानि वृष्टिलक्षणाः अपः च अभि-ब्रवीमि[3] दातव्यम्। ततो मम द्योतमाना हिरण्याग्राः वाचः वर्धन्ताम्। हिरण्यं दातव्यं[4] बहु दातव्यम् इत्याद्याः वाचः सफला भवन्तु। अपि च उदकेन वर्धन्ताम् मरुद्भ्यः आपः ॥ १४ ॥

मुद्गल० दैव्यानि देवसम्बन्धीनि पार्थिवानि पृथिवीसम्बन्धीनि च जन्म जन्मानि अपः च अच्छ अभिप्राप्तुम् सुमखाय शोभनयज्ञाय मरुद्गणाय वोचम् ब्रवीमि। गिरः स्तुतयः वर्धन्ताम्, द्यावः द्योतमानाः स्वप्रतिपाद्यार्थप्रकाशिन्यः चन्द्राग्राः आह्लादनं हिरण्यं[4] वाऽग्रे यासां ताः तादृश्यः सत्यो वर्धन्ताम्। अर्णाः नद्यश्च अभिषाताः मरुद्भिः सम्भक्ताः उदा उदकेन वर्धन्ताम् समृद्धा भवन्तु ॥१४॥

पदेपदे मे जरिमा नि धायि वरूत्री वा शक्रा या पायुभिश्च ।
सिषक्तु माता मही रसा नः स्मत् सूरिभिर्ऋजुहस्त ऋजुवनिः ॥ १५ ॥

पदेऽपदे । मे । जरिमा । नि । धायि । वरूत्री । वा । शक्रा । या । पायुऽभिः । च ।
सिसक्तु । माता । मही । रसा । नः । स्मत् । सूरिऽभिः । ऋजुऽहस्ता । ऋजुऽवनिः ॥१५॥

वेङ्कट० पदनिधाने पदनिधाने मे जीर्णा नि धीयते। शत्रूणां वारयित्री या शक्तिः सा च जीर्णा भवति तेजोभिः च सह। तथा[5] सति आस्मीये रसे अस्मान् माता पृथिवी सेवताम् शोभनैः देवैः सह प्रसारितहस्ता प्रसारितदाना ॥ १५ ॥

---

१ प्रब्रवामहे छ लप, प्रभूमहे छ प्रस्ताव २ नास्ति र रुप ३ अभिप्र° लप ४ तादृश्य° वि' लप ५ नास्ति मूको ६ नास्ति वि'

मुद्गल० जरिमा स्तुतिः मे मदीया पदेपदे तत्रतत्र भूमौ नि धायि निधीयते स्थाप्यते क्रिय
इत्यर्थः। या च ग्मा शक्ता सती पायुभिः रक्षणैः वरूत्री अस्मदुपद्रववारयित्री भवति। च
चार्थे। माता सर्वस्य निर्मात्री मही महती पूज्या रसा सारभूता भूमिः च सिषक्तु सेवता
नः अस्माकं स्तुतिम्। तैः सूरिभिः मेधाविभिः स्तोतृभिर्निर्मितैः परिचर्याप्रीतेत्यर्थः। ऋज
हस्ता अस्मदनुकूलहस्ता ऋजुवनिः कल्याणदाता भवतु ॥ १५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये पञ्चदशो वर्गः ॥

कथा दाशेम नमसा सुदानूनेवया मरुतो अच्छोक्तौ प्रश्रवसो मरुतो अच्छोक्तौ ।
मा नोऽहिर्बुध्न्यो रिषे धादस्माकं भूदुपमातिवनिः ॥ १६ ॥

कथा । दाशेम । नमसा । सुऽदानून् । एवऽया । मरुतः । अच्छऽउक्तौ । प्रऽश्रवसः । मरुतः । अच्छऽउक्तौ ।
मा । नः । अहिः । बुध्न्यः । रिषे । धात् । अस्माकम् । भूत् । उपमातिऽवनिः ॥ १६ ॥

वेङ्कट० कथं निधीमहि नमस्कारेण शोभनदानान् एवंगच्छतः मरुतः प्रशस्तकीर्तीन् अच्छोक्तौ सत्याम्
कथम् इमेऽस्मत्स्तोत्रम् उपगच्छन्ति इत्यर्थः। दाशिर्दानकर्मा निधाने पर्यवस्यति। मा अस्मा
अहिर्बुध्न्यः हिंसायै निदधातु। किन्तु अस्माकम् भवतु उपस्तुतेः[1] सम्भक्ता ॥ १६ ॥

मुद्गल० वयम् कथा केन प्रकारेण दाशेम परिचरेम नमसा स्तोत्रेण सुदानून् शोभनदानान् मरुतः
एवया एवंक्रियमाणप्रकारेण अच्छोक्तौ आभिमुख्येन वचने निमित्ते सति तान् मरुतः कथं परि
चरेम। तेषां दुराराध्यत्वादिति भावः। प्रश्रवसः प्रकृष्टान्नस्य मम अच्छोक्तौ स्तोत्रनिमित्ते
मरुतः कथा दाशेम। पुनरुक्तिरादरार्था। अहिर्बुध्न्यः नः अस्मान् रिषे हिंसकाय मा धात् मा
स्थापयतु। स देवः अस्माकम् भूत् भवतु उपमातिवनिः शत्रूणां हन्ता ॥ १६ ॥

इति चिन्नु प्रजायै पशुमत्यै देवासो वनते मर्त्यो व आ देवासो वनते मर्त्यो वः ।
अत्रा शिवां तन्वो धासिमस्या जरां चिन्मे निर्ऋतिर्जग्रसीत ॥ १७ ॥

इति । चित् । नु । प्रऽजायै । पशुऽमत्यै । देवासः । वनते । मर्त्यः । वः । आ । देवासः । वनते । मर्त्यः । वः ।
अत्र । शिवाम् । तन्वः । धासिम् । अस्याः । जराम् । चित् । मे । निःऽऋतिः । जग्रसीत ॥ १७ ॥

वेङ्कट० हे देवाः[1]! इत्थं युष्मान् आभिमुख्येन भजते मर्त्यः[2] पशुयुक्तायै प्रजायै रक्षार्थम्।
अस्मिन् भजने अत्रेः अस्य शरीरस्य जराम् "देवी निर्ऋतिः"[3] आस्येन ग्रसताम्, "या अस्याः
अजरं[4] शिवम् अन्नं भवति ॥ १७ ॥

मुद्गल० हे देवासः! देवाः! वः युष्मान् इति चित् इत्थमेव नु क्षिप्रम् प्रजायै पशुमत्यै पशुसहि-
तायापत्याय वनते भजते मर्त्यः यजमानः। आ देवासः इति पुनरुक्तिरादरार्था। अत्र अस्मिन् यज्ञे

१. वस्तुनेः मूको; स्वस्तुतेः स्वस्त्यावः २. नास्ति वि॰ रुपं. ३. नास्ति मूको. ४-४. राजनि
वि॰; राजानि रुपं. ५-५. अस्य जरम् वि॰; यास्या जरम् ल.

शिवां धायिम् अन्नम् मे मम अस्याः तन्वः देवैरनुगृहीतस्य पुत्रस्य[1] करोतु निर्ऋतिः देवता, जराम् चित् जरसीत असतु ॥ १७ ॥

तां वो देवाः सुमतिमूर्जयन्तीमिषमश्याम वसवः शसा गोः ।
सा नः सुदानुर्मृळयन्ती देवी प्रति द्रवन्ती सुविताय गम्याः ॥ १८ ॥

ताम् । वः । देवाः । सुऽमतिम् । ऊर्जयन्तीम् । इषम् । अश्याम । वसवः । शसा । गोः ।
सा । नः । सुऽदानुः । मृळयन्ती । देवी । प्रति । द्रवन्ती । सुविताय । गम्याः ॥ १८ ॥

वेङ्कट० हे देवाः! वसवः! युष्माकम् ताम् सुमतिम् स्तोतॄणाम् अन्नं कुर्वाणां स्तोतृभिरिष्यमाणां प्राप्नुयाम[2] स्तुतिशासा शंसने । सा सुमतिरस्मान् शोभनदाना सुखयन्ती स्तोतॄन् प्रति गच्छन्ती अस्मत्सुखार्थम्[3] अभिगच्छतु ॥ १८ ॥

मुद्गल० हे देवाः! हे वसवः! वासयितारः! वः युष्माकं स्वभूताम् ताम् प्रसिद्धाम् सुमतिम् शोभनमननसाधनभूताम् । ऊर्जयन्तीम् बलकरीम् इषम् अन्नं क्षीरदध्यादिलक्षणम् शसा स्तुत्या गोः गोः सकाशात् अश्याम प्राप्नुयाम । सा देवी नः अस्मान् सुविताय सुखाय प्रति गम्याः गम्यात् । देवता विशेष्यते । सुदानुः शोभनदाना मृळयन्ती सुखयन्ती । द्रवन्ती अस्मदभिमुखं गच्छन्ती ॥ १८ ॥

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ॥ १९ ॥

अभि । नः । इळा । यूथस्य । माता । स्मत् । नदीभिः । उर्वशी । वा । गृणातु ।
उर्वशी । वा । बृहत्ऽदिवा । गृणाना । अभिऽऊर्ण्वाना । प्रऽभृथस्य । आयोः ॥ १९ ॥

वेङ्कट० प्रजापश्वादीनां सङ्घस्य माता भूमिः नदीभिः सहास्मान् स्तुवतः प्रशस्तम् अभि गृणातु, एवम् उर्वशी चाप्सराः । किञ्च उर्वशी बृहद्दिवा चाप्सराः स्तोत्रं भरमाणस्य मम मनुष्यस्य अभिगृणातु स्वतेजसा जगदभिच्छादयन्ती स्तूयमाना भवेति ॥ १९ ॥

मुद्गल० अभि गृणातु नः अस्मान् इळा भूमिः यूथस्य गोसङ्घस्य माता निर्मात्री । अथवा उर्वशी माध्यमिका वाक् नदीभिः गङ्गादिभिः सह स्मत् प्राशस्त्यं गृणातु । वा अथवा उर्वशी बृहद्दिवा प्रभूतदीप्तिः गृणाना शब्दयन्ती अस्मदीयं कर्म प्रशंसन्ती अभ्यूर्ण्वाना आच्छादयन्ती । कम् । आयोः आयुं मनुष्यं यजमानम् । केन । प्रभृथस्य तेजसा ॥ १९ ॥

सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥ २० ॥

सिसक्तु । नः । ऊर्जव्यस्य । पुष्टेः ॥ २० ॥

---

१. मृगुं मूको. २. नास्ति स दर्पः; 'याम: वि'- ३-३. 'र्थं प्रतिगच्छन्ती मूको.

वेङ्कट० इत्थं देवान् स्तुत्वा स्वाभिलषितम् ऊर्जव्यस्य राज्ञो निवेदयति—सेवताम् अस्मान् ऊर्जव्यस्य पुष्टेः सकाशात् पुष्टिरिति। यास्कः—'पुनर्दिवा महर्दिवा[1] गृणाना अभ्यूर्ण्वाना प्रथयस्य[2] प्रभूतस्य आयोरयनस्य[1] ज्योतिषो योद्धस्य वा सेवतां नोऽधस्य पुष्टेः[2] ( या ११,४९ ) इति ॥ २० ॥

मुद्गल० ऊर्जव्यस्य एतन्नामकस्य राज्ञः पुष्टेः पोषकस्य सम्बन्धिनः नः अस्मान् सिषक्तु सेवताम् ॥ २० ॥

इति चतुर्थाष्टके द्वितीयाध्याये षोडशो वर्गः ॥

[ ४२ ]

प्र शंतमा वरुणं दीधिती गीर्मित्रं भगमदितिं नूनमश्याः ।
पृषद्योनिः पञ्चहोता शृणोत्वतूर्तपन्था असुरो मयोभुः ॥ १ ॥

प्र । शम्ऽतमा । वरुणम् । दीधिती । गीः । मित्रम् । भगम् । अदितिम् । नूनम् । अश्याः ।
पृषत्ऽयोनिः । पञ्चऽहोता । शृणोतु । अतूर्तऽपन्थाः । असुरः । मयःऽभुः ॥ १ ॥

वेङ्कट० प्र आप्नोतु सुखतमा दीप्ता स्तुतिरिदानीम् वरुणादीन् चतुरः[1]। किञ्च अस्मदीयां गिरं पृषद्वर्णाश्वस्थानो वायुश्च शृणोतु अन्यैः अतीर्णमार्गः बलवान् सुखस्य भावयिता। 'वायुः पञ्चहोता "स प्राणः"[2]' ( तैआ ३,७,२ ) इति ब्राह्मणम् ॥ १ ॥

मुद्गल० 'प्र शंतमा' इति अष्टादशर्चं दशमं सूक्तम्। भौमोऽत्रिः ऋषिः। त्रिष्टुप् छन्दः। विश्वे देवा देवता, 'तमु ष्टुहि' इत्येकादशी रुद्रदेवत्या। सप्तदश्येकपदा।

शंतमा अत्यन्तं सुखकरी गीः स्तुतिरस्मा वाक् वरुणम् मित्रम् भगम् अदितिम् च दीधिती दीधित्या कर्मणा हविःप्रक्षेपणात्मकेन[1] सह नूनम् अविलम्बम् प्र अश्याः प्राप्नोतु। किञ्च पृषद्योनिः पृषद्वर्णोऽन्तरिक्षस्थः पञ्चहोता पञ्चविधस्य प्राणापानादिहोमस्य साधको वायुः। स च अतूर्तपन्थाः अहिंसितगतिः असुरः प्राणस्य दाता मयोभुः सुखास्पदभूतः। एवम्भूतलक्षणो वायुः शृणोतु स्तोत्रमिति ॥ १ ॥

प्रति मे स्तोममदितिर्जगृभ्यात् सूनुं न माता हृद्यं सुशेवम् ।
ब्रह्म प्रियं देवहितं यदस्त्यहं मित्रे वरुणे यन्मयोभु ॥ २ ॥

प्रति । मे । स्तोमम् । अदितिः । जगृभ्यात् । सूनुम् । न । माता । हृद्यम् । सुऽशेवम् ।
ब्रह्म । प्रियम् । देवऽहितम् । यत् । अस्ति । अहम् । मित्रे । वरुणे । यत् । मयःऽभु ॥ २ ॥

वेङ्कट० मदीयम् स्तोमम् अदितिः प्रति गृह्णातु पुत्रम् इव माता हृद्यम् सुसुखम्। अहम् अदितेः

१. नास्ति मूको. २. °वस्य ल. ३. °वतो° मूको. ४. च अतः मूको. ५-५. स्प्राणः वि[1] ल; स्प्राणः छपं. ६. °कत्वेन मूको.

प्रसादेन [1]देवैर्निहितम् प्रियम् यत् अन्नम्[1] अस्ति तत् प्राप्नवानि[2]। तथा मित्रे च वरुणे च यत् अस्य सुखस्योत्पादकं तदपीति ॥ २ ॥

मुद्गल० मे मदीयम् स्तोमम् स्तोत्रम् अदितिः देवता प्रति जगृभ्यात् प्रतिगृह्णातु। सूनुम् न माता स्वतनुजं जननीव। सा यथा प्रतिगृह्याश्लिष्य परितुष्यति[3] तद्वदित्यर्थः। कीदृशं तम्। हृद्यम् हृदयङ्गमम् सुशेवम् शोभनसुखकरम्। किञ्च ब्रह्म मन्त्रजातम् प्रियम् प्रियकरम् देवहितम् देवैः प्राप्यम् यत् अस्ति यत् ब्रह्म मयोभु सुखसाधनं तत् अहम् मित्रे वरुणे च प्रापयामि इति शेषः ॥ २ ॥

उदी॑रय क॒वित॑मं क॒वीना॑मु॒नत्तै॑नम॒भि मध्वा॑ घृ॒तेन॑ ।
स नो॒ वसू॑नि॒ प्रय॑ता हि॒तानि॑ च॒न्द्राणि॑ दे॒वः स॑वि॒ता सु॑वाति ॥ ३ ॥

उत् । ई॒र॒य॒ । क॒विऽत॑मम् । क॒वी॒नाम् । उ॒नत्त॑ । ए॒न॒म् । अ॒भि । मध्वा॑ । घृ॒तेन॑ ।
सः । नः॒ । वसू॑नि । प्रऽय॑ता । हि॒तानि॑ । च॒न्द्राणि॑ । दे॒वः । स॒वि॒ता । सु॒वा॒ति॒ ॥ ३ ॥

वेङ्कट० हे स्तोतारः! उत्थापयत अस्यन्तम् कवितमम्, अभि उनत्त एनम् सोदकेनाज्येन। सः अस्मभ्यं धनानि शुद्धानि हितानि आह्लादनानि [4]देवः सविता[4] प्रेरयति ॥ ३ ॥

मुद्गल० हे ऋत्विजः! कवीनाम् कवितमम् क्रान्तदर्शिनम् अमुं पुरोवर्तिनम् अग्निम् उत् ईरय ऊर्ध्वं प्रापयत हर्षयतेत्यर्थः। एनम् देवम् मध्वा मधुरेण सोमरसेन घृतेन च अभि उनत्त अभिषिञ्चत, तर्पयतेत्यर्थः। सः सविता देवः नः अस्मभ्यम् वसूनि निवासयोग्यानि गवादिधनानि प्रयता प्रयतानि हितानि चन्द्राणि आह्लादकानि सुवर्णानि सुवाति प्रयच्छतित्यर्थः ॥ ३ ॥

समि॑न्द्र णो॒ मन॑सा नेषि॒ गोभिः॒ सं सू॒रिभि॑र्हरिवः॒ सं स्व॒स्ति ।
सं ब्रह्म॑णा दे॒वहि॑तं॒ यदस्ति॒ सं दे॒वानां॑ सुम॒त्या य॒ज्ञिया॑नाम् ॥ ४ ॥

सम् । इ॒न्द्र॒ । नः॒ । मन॑सा । ने॒षि॒ । गोभिः॑ । सम् । सू॒रिऽभिः॑ । ह॒रि॒ऽवः॒ । सम् । स्व॒स्ति ।
सम् । ब्रह्म॑णा । दे॒वऽहि॑तम् । यत् । अस्ति॑ । सम् । दे॒वाना॑म् । सु॒ऽम॒त्या । य॒ज्ञिया॑नाम् ॥ ४ ॥

वेङ्कट० हे इन्द्र! त्वम् अस्मान् मनसा गोभिः सम् नय। तथा हरिवः! प्राज्ञैश्च सम् नय अविनाशेन च। तथा अन्नेन च सम् नय यत् च मारुक्[5] च अस्ति देवैर्निहितम्। तथा यज्ञार्हाणाम् देवानाम् सुमत्या च सम् नय ॥ ४ ॥

मुद्गल० हे इन्द्र! नः अस्मान् मनसा गोभिः सह सम् नेषि नयसि। अस्मान् गाः प्रापयसीत्यर्थः। एवं सर्वत्र। हे हरिवः! हरिभ्यां तद्वन् इन्द्र! सूरिभिः मेधाविभिः पुत्रैः सम् नेषि। तथा स्वस्ति स्वस्तिभिः क्षेमैः सम् नेषि। ब्रह्मणा प्रभूतेनान्नेन सम् नेषि यत् अन्नम् देवहितम् अस्ति तेन। किञ्च यज्ञियानाम् यज्ञार्हाणाम् देवानाम् सुमत्या अनुग्रहबुद्ध्या सम् नेषि ॥ ४ ॥

१-१. °र्व यथाग्रपद्मेवाल विं; °तयर्व्यापर्यंनाले स्र्पं. २. प्राप्तानीति वि°. ३. °पुष्मा मूको.
४-४. देवता मूको. ५. नास्ति वि°.

दे॒वो भगः॑ सवि॒ता रा॒यो अंश॒ इन्द्रो॑ वृ॒त्रस्य॑ सं॒जितो॒ धना॑नाम् ।
ऋ॒भु॒क्षा वाज॑ उ॒त वा॒ पुरं॑धि॒रव॑न्तु नो अ॒मृता॑सस्तु॒रासः॑ ॥ ५ ॥

दे॒वः । भगः॑ । स॒वि॒ता । रा॒यः । अंशः॑ । इन्द्रः॑ । वृ॒त्रस्य॑ । स॒म्ऽजितः॑ । धना॑नाम् ।
ऋ॒भु॒क्षाः । वाजः॑ । उ॒त । वा॒ । पुर॑म्ऽधिः । अव॑न्तु । नः॒ । अ॒मृता॑सः । तु॒रासः॑ ॥ ५ ॥

वेङ्कट० भगः देवः, तथा धनस्य प्रेरयिता अंशः तथा वृत्रस्य धनानाम् च सह जेता इन्द्रः च, ऋभुः वाजः विभ्वा च बहुप्रज्ञः, एते देवाः रक्षन्त्वस्मान् त्वरमाणाः ॥ ५ ॥

मुद्गल० अत्र लिङ्गोक्तदेवताः । भगः देवः सविता च रायः धनस्य स्वामी अंशः त्वष्टा वृत्रस्य हन्ता इन्द्रः च एते देवाः धनानाम् संजिताः सम्यक् जेतारः, ऋभुक्षाः ऋभुः वाजः च, उत वा अपि च पुरंधिः बहुधीः विभ्वा[1], एते च अमृतासः अमरणधर्माणः भगादिदेवाः तुरासः असुरवधम् प्रति त्वरमाणाः सन्तः नः अस्मान् अवन्तु रक्षन्तु ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये सप्तदशो वर्गः ॥

म॒रुत्व॑तो॒ अप्र॑तीतस्य जि॒ष्णोरजू॑र्यतः॒ प्र ब्र॑वामा कृ॒तानि॑ ।
न ते॒ पूर्वे॑ मघव॒न् नाप॑रासो॒ न वी॒र्यं१॒॑ नूत॑नः॒ कश्च॒नाप॑ ॥ ६ ॥

म॒रुत्व॑तः । अप्र॑तिऽइतस्य । जि॒ष्णोः । अजू॑र्यतः । प्र । ब्र॒वा॒म॒ । कृ॒तानि॑ ।
न । ते॒ । पूर्वे॑ । म॒घ॒ऽव॒न् । न । अप॑रासः । न । वी॒र्य॑म् । नूत॑नः । कः । च॒न । आ॒प॒ ॥ ६ ॥

वेङ्कट० मरुद्भिर्युक्तस्य शत्रुभिः अप्रतिगतस्य जयशीलस्य अजरादितस्य तव प्र ब्रूमः कर्माणि । हे मघवन् ! तव वीर्यम् न पूर्वे प्राप्नुवन्, न अप्यपरे प्राप्स्यन्ति, न अपि सम्प्रतितनः[2] कश्चिद् आप्नोति ॥ ६ ॥

मुद्गल० वयं यजमानाः मरुत्वतः मरुद्भिर्युक्तः इन्द्रस्य कृतानि कर्माणि प्र ब्रवाम प्रख्यापयाम । कीदृशस्य तस्य । अप्रतीतस्य अप्रतिगतस्य युद्धे अपकामभावस्य । न केवलं तावन्मात्रम् । जिष्णोः जयनशीलस्य अजूर्यतः अजीर्यमाणस्य । सर्वदा यून इत्यर्थः । अथ प्रत्यक्षेणोच्यते । हे मघवन् इन्द्र ! ते तव वीर्यम् पराक्रमम् पूर्वे पुरातनाः पुरुषाः न आपुः, न अपरासः अपरे अपि नापुः । किं बहुना । नूतनः कः चन आश्चर्यभूतः यः कोऽपि वीर्यम् न आप न प्राप्नोति ॥ ६ ॥

उप॑ स्तुहि प्रथ॒मं र॑त्न॒धेयं॒ बृह॒स्पतिं॑ सनि॒तारं॒ धना॑नाम् ।
यः शंस॑ते स्तुव॒ते शंभ॑विष्ठः पु॒रूव॑सुरा॒गम॒ज्जोहु॑वानम् ॥ ७ ॥

उप॑ । स्तु॒हि॒ । प्र॒थ॒मम् । र॒त्न॒ऽधेय॑म् । बृह॒स्पति॑म् । स॒नि॒तार॑म् । धना॑नाम् ।
यः । शंस॑ते । स्तु॒व॒ते । शम्ऽभ॑विष्ठः । पु॒रु॒ऽवसुः॑ । आ॒ऽगम॑त् । जोहु॑वानम् ॥ ७ ॥

---

१. विभ्वाः मूको. २. सम्प्रतिनः ल.

वेङ्कट० उप स्तुहि मुख्यं रत्नानां धातारम् बृहस्पतिम् प्रदातारम् धनानाम्, यः शस्त्रैः शंसते स्तोत्रैः स्तुवते च अतिशयेन शं भावयन् बहुधनः आगच्छति अत्यन्तमाह्वयन्तमिति ॥ ७ ॥

मुद्गल० हे अन्तरात्मन्! त्वम् प्रथमम् मुख्यम् रत्नधेयम् रमणीयधनदातारम् धनानाम् हविर्लक्षणानाम् सनितारम् सम्भक्तारम् बृहस्पतिम् बृहतो मन्त्रस्य स्वामिनं देवम् उप स्तुहि, यः देवः शंसते शस्त्रैः स्तुवते स्तोमभिर्यजमानाय शंभविष्ठः सुखस्य भावयितृतमो भवति, यश्च जोहुवानम् आह्वयन्तं यजमानम् पुरुवसुः प्रभूतधनः सन् आगमत् आगच्छति तम् उपस्तुहि ॥ ७ ॥

तवोतिभिः सचमाना अरिष्टा बृहस्पते मघवानः सुवीराः ।
ये अश्वदा उत वा सन्ति गोदा ये वस्त्रदाः सुभगास्तेषु रायः ॥ ८ ॥

तव । ऊतिऽभिः । सचमानाः । अरिष्टाः । बृहस्पते । मघऽवानः । सुऽवीराः ।
ये । अश्वऽदाः । उत । वा । सन्ति । गोऽदाः । ये । वस्त्रऽदाः । सुऽभगाः । तेषु । रायः ॥ ८ ॥

वेङ्कट० तव रक्षणैः सङ्गच्छमानाः अरिष्टाः भवन्ति हे बृहस्पते! धनवन्तः सुपुत्राश्च। ये जनाः[1] याचितृभ्यो विप्रेभ्यः अश्वानां[2] दातारः, अपि वा विप्रेभ्यः गवां दातारः, ये च वस्त्रदाः, तेषु त्वया प्रीयमाणेषु[3] कल्याणा भवन्ति रायः ॥ ८ ॥

मुद्गल० हे बृहस्पते! तव ऊतिभिः रक्षाभिः सचमानाः सङ्गच्छमानाः अरिष्टाः अहिंसिताः मघवानः धनवन्तः सुवीराः शोभनपुत्राश्च भवन्ति। ये त्वदनुगृहीताः अश्वदाः बहूनामश्वानां दातारः सन्ति, उत वा अथवा गोदाः सन्ति, ये च वस्त्रदाः सुभगाः शोभनधनाः सन्ति, तेषु सर्वेषु रायः धनानि सम्भवन्तित्विति शेषः ॥ ८ ॥

विसर्माणं कृणुहि वित्तमेषां ये भुञ्जते अपृणन्तो न उक्थैः ।
अपव्रतान् प्रसवे वावृधानान् ब्रह्मद्विषः सूर्याद् यावयस्व ॥ ९ ॥

विऽसर्माणम् । कृणुहि । वित्तम् । एषाम् । ये । भुञ्जते । अपृणन्तः । नः । उक्थैः ।
अपऽव्रतान् । प्रऽसवे । ववृधानान् । ब्रह्मऽद्विषः । सूर्यात् । यवयस्व ॥ ९ ॥

वेङ्कट० विसरणशीलं विनश्यमानं कुरु एषाम् धनम्, ये स्वयमेव भुञ्जते अस्मभ्यम् अप्रयच्छन्तः एतैः प्रयुज्यमानैः उक्थैः। अपगतकर्मणः सर्वदा स्वनियोग एव वर्धमानान् ब्रह्मद्विषः[4] सूर्यात् पृथक् कुरु, मारय ॥ ९ ॥

मुद्गल० एषाम् वक्ष्यमाणानाम् वित्तम् धनम् विसर्माणम् विसरणशीलम् कृणुहि कुरु ब्रह्मणस्पते!, ये भुञ्जते अपृणन्तः अप्रयच्छन्तः। केभ्यः। उक्थैः स्तुतिविशेषप्रतिपादकैः सर्वोत्तैरिरेभ्यः नः अस्मभ्यम्। तान् अपव्रतान् अपगतकर्मणः प्रसवे उत्पत्तिमति मनुष्यलोके वावृधानान् वर्धमानान् ब्रह्मद्विषः ब्राह्मणद्वेष्टॄन् सूर्यात् यवयस्व पृथक् कुरु। अन्धकारे स्थापयेत्यर्थः ॥ ९ ॥

---

१. पच्यमानाः वि॰. २. अश्वान् वि॰. ३. °माणेषु छन्द॰. ४. नास्ति वि॰; °द्विषोऽस्मान् छ.

य ओहते रक्षसो देववीतावचक्रेभिस्तं मरुतो नि यात ।
यो वः शमीं शशमानस्य निन्दात् तुच्छ्यान् कामान् करते सिष्विदानः ॥१०॥

यः । ओहते । रक्षसः । देवऽवीतौ । अचक्रेभिः । तम् । मरुतः । नि । यात ।
यः । वः । शमीम् । शशमानस्य । निन्दात् । तुच्छ्यान् । कामान् । करते । सिस्विदानः ॥१०॥

वेङ्कट० यः देवैः भक्षितव्ये अन्ने राक्षसान् प्रापयति, तम् हे मरुतः! चक्ररहितैः भवतां रथैः नि यात। शमीति कर्मसु पठितः ( तु. निघ २,१६ )। यो युष्मान् भजमानस्य कर्म निन्दति, स कार्योद्योगात्[1] आत्मीयानां कर्मणां कामान् अल्पफलान् करोति कार्येषु स्विन्नगात्रः प्रवर्तमानः इति ॥ १० ॥

मुद्गल० यः यजमानः रक्षसः राक्षसान् ओहते प्रापयति . देववीतौ देवानां वीतिः प्राप्तिर्यत्र सः तयोक्तः तस्मिन् यज्ञे । अन्यथानुष्ठानादिना आसुरं करोतीत्यर्थः । तम् यजमानम् अचक्रेभिः अचक्रैः रथैः[1] हे मरुतः! नि यात नितरां प्रापयतान्धकारम्[2] । यः च वः युष्माकम् शमीम् कर्म-स्तुतिलक्षणम् शशमानस्य मम सम्बन्धि[3] निन्दात् निन्देत् वैदिकं ज्योतिष्टोमादिरूपं कर्म निन्दति, स्वयं च तुच्छ्यान् नश्वरान् कामान् कृष्यादिजनितभोगान् करते कुरुते सिस्विदानः स्विन्नशरीरमात्मानं क्लेशयन् ॥ १० ॥

इति चतुर्थाष्टके द्वितीयाध्याये अष्टादशो वर्गः ॥

तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।
यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य ॥ ११ ॥

तम् । ऊँ इति । स्तुहि । यः । सुऽइषुः । सुऽधन्वा । यः । विश्वस्य । क्षयति । भेषजस्य ।
यक्ष्व । महे । सौमनसाय । रुद्रम् । नमःऽभिः । देवम् । असुरम् । दुवस्य ॥ ११ ॥

वेङ्कट० तम् एव स्तुहि, यः शोभनेषुः शोभनधनुष्कश्च भवति, यः वा सर्वस्य भेषजस्य ईश्वरः भवति । यज च महे सौमनस्याय[4] रुद्रम् । नमस्कारैः देवम् क्षेप्तारं परिचर च[5] ॥ ११ ॥

मुद्गल० हे आत्मन्! तम् उ तमेव रुद्रम् स्तुहि स्तुतिं कुरु, यः स्विषुः शोभनबाणः यः सुधन्वा सुधनुष्कः च यश्च विश्वस्य भेषजस्य सर्वस्य औषधस्य क्षयति ईश्वरो भवति । किञ्च तमेव रुद्रम् दुःखाद् शस्त्राभनात् मोचयितारम् देवम् यक्ष्व यज च महे महते सौमनसाय सुमनस्त्वाय । किञ्च नमोभिः नमस्कारैः देवम् द्योतमानम् असुरम् प्रकृष्टासुम्, बलवन्तमित्यर्थः, दुवस्य परिचर ॥ ११ ॥

दमूनसो अपसो ये सुहस्ता वृष्णः पत्नीर्नद्यो विभ्वतष्टाः ।
सरस्वती बृहद्दिवोत राका दशस्यन्तीर्वरिवस्यन्तु शुभ्राः ॥ १२ ॥

---

१. कार्या° ल; कार्मो° यद्वा कर्म्या° स प्रस्तावः २. रपः मूको. ३. पाल° मूको.
४. सम्बन्धिनम् मूको. ५. °नसाय वि°. ६. नास्ति ल.

दमूनसः । अपसः । ये । सुऽहस्ताः । वृष्णः । पत्नीः । नद्यः । विभ्वऽतष्टाः ।
सरस्वती । बृहत्ऽदिवा । उत । राका । दशस्यन्तीः । वरिवस्यन्तु । शुभ्राः ॥ १२ ॥

वेङ्कट० दमूनसः व्यापनशीलाः ये कल्याणहस्ताः, याश्च पर्जन्यस्य पत्न्यः नद्यः महतामपि तनूकर्त्र्यः, तथा सरस्वती बृहद्दिवा च अप्सराः, तथा राका, ताः सर्वाः प्रयच्छन्त्यः धनम् अस्माकम् अपि धनं दातुम् इच्छन्तु शोभमानाः ॥ १२ ॥

मुद्गल० अत्र लिङ्गोक्तदेवताः । दमूनसः दान्तमनसः अपसः रथगवादिशोभनकर्मवन्तः, अत एव सुहस्ताः कुशलहस्ताः ये सन्ति, ते ऋभवः, वृष्णः वर्षकस्य इन्द्रस्य पत्नीः पत्न्यः पालयित्र्यः नद्यः गङ्गाद्याः विभ्वतष्टाः ऋभूणां मध्यमेन कृताः, सरस्वती नदी बृहद्दिवा प्रभूतदीप्तिः, उत अपि च राका देवी च, दशस्यन्तीः दशस्यन्त्यः कामान् प्रयच्छन्त्यः शुभ्राः दीप्ताः ताः च वरिवस्यन्तु अस्मभ्यं धनमिच्छन्तु ॥ १२ ॥

प्र सू महे सुशरणाय मेधां गिरं भरे नव्यसीं जायमानाम् ।
य आहना दुहितुर्वक्षणासु रूपा मिनानो अकृणोदिदं नः ॥ १३ ॥

प्र । सु । महे । सुऽशरणाय । मेधाम् । गिरम् । भरे । नव्यसीम् । जायमानाम् ।
यः । आहनाः । दुहितुः । वक्षणासु । रूपा । मिनानः । अकृणोत् । इदम् । नः ॥ १३ ॥

वेङ्कट० प्रकर्षेण सुष्ठु भरामि महते सुनिकरणाय[1] बुद्धिम्, तथा स्तुतिं च बुद्धेः जायमानाम् । यः आहननशील इन्द्रः [2]दुहितुः भूमेर्नदीषु[2] रूपाणि ओषधिवनस्पत्यादीनाम् मिनानः उत्पादयन् अस्मदर्थम् इदम् कृतवान् । 'इदम्' ( निघ १,१२ ) इत्युदकनामेति ॥ १३ ॥

मुद्गल० सु सुष्ठु प्र भरे प्रकर्षेण सम्पादयामि, महे महते सुशरणाय रक्षकाय इन्द्राय । किम् । मेधाम् मत्या धीयमानाम् गिरम् स्तुतिम् । कीदृशीम् । नव्यसीम् नवतराम् जायमानाम् इदानीमुत्पद्यमानाम् । यः इन्द्रः आहनाः सक्ता दुहितुः दुहितृस्थानीयायाः पृथिव्याः हिताय वक्षणासु नदीषु रूपा रूपाणि मिनानः कुर्वाणः इदम् उदकम् नः अस्मभ्यम् अकृणोत् करोतु ॥ १३ ॥

प्र सुष्टुतिः स्तनयन्तं रुवन्तमिळस्पतिं जरितर्नूनमश्याः ।
यो अब्दिमाँ उदनिमाँ इयर्ति प्र विद्युता रोदसी उक्षमाणः ॥ १४ ॥

प्र । सुऽस्तुतिः । स्तनयन्तम् । रुवन्तम् । इळः । पतिम् । जरितः । नूनम् । अश्याः ।
यः । अब्दिऽमान् । उदनिऽमान् । इयर्ति । प्र । विऽद्युता । रोदसी इति । उक्षमाणः ॥ १४ ॥

वेङ्कट० सुष्टुतिः हे जरितः । स्तननशब्दम् अवस्फूर्जनशब्दं[3] च कुर्वन्तं पृथिव्याः पतिम् [4]नूनम् अश्याः[4] । यः मेघवान्[5] क्रन्दनवान् प्र गच्छति विद्युता सह द्यावापृथिवी सिञ्चन्निति ॥ १४ ॥

---

१. सुशनि॰ कर्प. २-२. दुहितुः॰ मूको. ३. अवस्फूर्जनशब्दं वि॰ दर्प. ४-४. नास्ति मूको.
५. मेघोपपान् वि॰ दर्प.

मुद्गल० अत्र पर्जन्यः स्तूयते। सुष्टुतिः शोभनस्तुतिः स्तनयन्तम् गर्जन्तम् रुवन्तम् वर्षणजनितं शब्दं कुर्वाणम् इळः अन्नस्य पतिम् स्वामिनं हे जरितः! स्तोतः! त्वदीया स्तुतिः नूनम् प्र अश्याः प्रकर्षेण व्याप्नोतु। यः च पर्जन्यः अब्दिमान् मेघवान् उदनिमान् उदकवान् विद्युता तडिता रोदसी द्यावापृथिव्यौ उक्षमाणः सिञ्चन् प्र इयर्ति गच्छति ॥ १४ ॥

एष स्तोमो मारुतं शर्धो अच्छा रुद्रस्य सूनूँर्युवन्यूँरुदश्याः।
कामो राये हवते मा स्वस्त्युप स्तुहि पृषदश्वाँ अयासः ॥ १५ ॥

एषः। स्तोमः। मारुतम्। शर्धः। अच्छ। रुद्रस्य। सूनून्। युवन्यून्। उत्। अश्याः।
कामः। राये। हवते। मा। स्वस्ति। उप। स्तुहि। पृषत्ऽअश्वान्। अयासः ॥ १५ ॥

वेङ्कट० अयम् स्तोमः मरुतां वेगम् अभिगच्छतु[1] इति। एतदेवाह— रुद्रस्य पुत्रान् मिश्रणमिच्छतः उत् व्याप्नोति। किं मदीयः कामः मां "धनाय आह्वयति" सुष्ठु। तथा सति त्वम् उप स्तुहि पृषदश्वान् गच्छतो मरुतः ॥ १५ ॥

मुद्गल० एषः मया सम्पादितः स्तोमः स्तोत्रम् मारुतम् शर्धः मरुतां बलम् अच्छ अभिमुखम् अश्याः प्राप्नोतु। रुद्रस्य सूनून् मरुतः युवन्यून् यूनः उत् उत्तमत्वाधिकम् अश्याः[2] व्याप्नुहि[2]। हे मनः! कामः सङ्कल्पः राये धनार्थम् मा माम् स्वस्ति अविनश्वरम् हवते आह्वयति, प्रेरयतीत्यर्थः। यस्मादेवं तस्मात् पृषदश्वान् पृषद्वर्णाश्वोपेतान् अयासः यज्ञगन्तॄन् उप उपेत्य स्तुहि ॥ १५ ॥

प्रैष स्तोमः पृथिवीमन्तरिक्षं वनस्पतीँरोषधी राये अश्याः।
देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥ १६ ॥

प्र। एषः। स्तोमः। पृथिवीम्। अन्तरिक्षम्। वनस्पतीन्। ओषधीः। राये। अश्याः।
देवःऽदेवः। सुऽहवः। भूतु। मह्यम्। मा। नः। माता। पृथिवी। दुःऽमतौ। धात् ॥ १६ ॥

वेङ्कट० पृथिव्यादीन् अयम् स्तोमः धनार्थं प्राप्नोतु। तथा सर्वैः देवैः मह्यम् स्वाह्वानो भवतु। मा अस्मान् अस्मदीया माता[3] भूमिः दुष्टे मनने दधातु ॥ १६ ॥

मुद्गल० एषः स्तोमः स्तुतिः पृथिव्यादिदेवताः प्र अश्याः प्राप्नोतु। किमर्थम्। राये धनार्थम्। देवोदेवः सर्वोऽपि देवः मह्यम् मदर्थम् सुहवः भूतु स्वाह्वानो भवतु। नः अस्मान् दुर्मतौ माता सर्वस्य निर्माती पृथिवी मा धात् मा स्थापयतु ॥ १६ ॥

उरौ देवा अनिबाधे स्याम ॥ १७ ॥

---

1. अ॰ गच्छतु वि॰. २-२. मनो धारति वि॰ ल॰. ३. नास्ति वि॰ ल॰.

उरौ । देवाः । अनिऽबाधे । स्याम ॥ १७ ॥

वेङ्कट० इयम् एकपदा । हे देवाः! वयं बाधारहिते विस्तीर्णे स्थाने स्याम इति ॥ १७ ॥

मुद्गल० हे देवाः! युष्मत्सम्बन्धिनि उरौ महति अनिबाधे नितरां बाधरहिते सुखे स्याम भवेम वयम् अत्रयः ॥ १७ ॥

सम॒श्विनो॒रव॑सा॒ नूत॑नेन मयो॒भुवा॑ सु॒प्रणी॑ती गमेम ।
आ नो॑ र॒यिं व॑हत॒मोत वी॒राना विश्वा॑न्यमृता॒ सौभ॑गानि ॥ १८ ॥

सम् । अ॒श्विनोः॑ । अव॑सा । नूत॑नेन । म॒यः॒ऽभुवा॑ । सु॒ऽप्रनी॑ती । ग॒मे॒म॒ ।
आ । नः॒ । र॒यिम् । व॒ह॒त॒म् । आ । उ॒त । वी॒रान् । आ । विश्वा॑नि । अ॒मृ॒ता॒ । सौभ॑गानि ॥ १८ ॥

वेङ्कट० सम् गमेम हि अश्विनोः रक्षणेन नवतरेण सुखस्य भावयित्रा शोभनप्रणयनेन । आ वहतम् अस्मभ्यं धनम् । अपि च आ वहतम् वीरान्, आ वहतं च विश्वानि अमरणानि(?) सुभगत्वानि च ॥ १८ ॥

मुद्गल० वयम् अश्विनोः नूतनेन पूर्वैः अन्यैरननुभूतेन मयोभुवा सुखस्य भावयित्रा सुप्रणीती शोभनप्रणयनवता अवसा रक्षणेन सम् गमेम सङ्गच्छेमहि । हे अमृता! अमरणौ अश्विनौ! नः अस्मभ्यम् रयिम् धनम् [illegible] वहतम् प्रापयतम् । उत वीरान् सुवीर्यवतः पुत्रानपि आ वहतम् । विश्वानि सौभगानि अपि आ वहतम् ॥ १८ ॥

इति चतुर्थाष्टके द्वितीयाध्याये एकोनविंशो वर्गः ॥

[ ४३ ]

आ धे॒नवः॒ पय॑सा॒ तूर्ण्य॑र्था॒ अम॑र्धन्ती॒रुप॑ नो यन्तु॒ मध्वा॑ ।
म॒हो रा॒ये बृ॑ह॒तीः स॒प्त विप्रो॑ मयो॒भुवो॑ जरि॒ता जो॑हवीति ॥ १ ॥

आ । धे॒नवः॑ । पय॑सा । तूर्णि॑ऽअर्थाः । अम॑र्धन्तीः । उप॑ । नः॒ । य॒न्तु॒ । मध्वा॑ ।
म॒हः । रा॒ये । बृ॒ह॒तीः । स॒प्त । विप्रः॑ । म॒यः॒ऽभुवः॑ । ज॒रि॒ता । जो॒ह॒वी॒ति॒ ॥ १ ॥

वेङ्कट० धेनवः तूर्णगमनाः अहिंसन्त्यः अस्मान् मधुरसेन पयसा सह उप आ यन्तु । महते धनाय महतीः सप्त नदीः सुखस्य भावयित्रीः मेधावी स्तोता अत्यन्तमाह्वयति ॥ १ ॥

मुद्गल० 'आ धेनवः' इति सप्तदशर्चमेकादशं सूक्तम् । अत्रिः ऋषिः । त्रिष्टुप् छन्दः, अन्त्या एकपदा । विश्वे देवाः देवता ।

धेनवः प्रीणयित्र्यो आपः मध्वा मधुरेण पयसा रसेन सहिताः तूर्ण्यर्थाः त्वरमाणगमनाः अमर्धन्तीः अहिंसन्त्यः सत्यः नः अस्मान् उप आ यन्तु उपागच्छन्तु । महः महते राये धनाय

बृहतीः महतीः शम सर्पण्स्वभावाः गङ्गाद्याः नद्यः मयोभुवः सुखस्य भावयित्र्यः सन्तु। विप्रः विशेषेण प्रीणयिता जरिता स्तोता जोहवीति आह्वयति ॥ १ ॥

आ सुष्टुती नमसा वर्तयध्यै द्यावा वाजाय पृथिवी अमृध्रे ।
पिता माता मधुवचाः सुहस्ता भरेभरे नो यशसावविष्टाम् ॥ २ ॥

आ । सुऽस्तुती । नमसा । वर्तयध्यै । द्यावा । वाजाय । पृथिवी इति । अमृध्रे इति ।
पिता । माता । मधुऽवचाः । सुऽहस्ता । भरेऽभरे । नः । यशसा । अविष्टाम् ॥ २ ॥

वेङ्कट० आह्वयामः सुस्तोत्रेण[1] नमस्कारेण वयं सुखेन आ वर्तयितुम् अहिंसित्र्यौ द्यावापृथिव्यौ अन्नार्थम्। तौ च मातापितरौ मधुवचसौ शोभनहस्तौ अस्मान् सङ्ग्रामेसङ्ग्रामे यशस्विनौ अवताम् ॥ २ ॥

मुद्गल० अहम् सुष्टुती सुष्टुत्या शोभनस्तोत्रेण नमसा हविषा च अमृध्रे हिंसारहिते द्यावा पृथिवी द्यावापृथिव्यौ आ वर्तयध्यै आवर्तयितुम् इच्छामि वाजाय अन्नार्थम्। पिता पालयित्री द्यौः माता निर्मात्री पृथिवी मधुवचाः प्रियवचना सुहस्ता शोभनहस्ता। एते उभयविशेषणे। यशसौ यशोयुक्तौ द्यावापृथिव्यौ भरेभरे सर्वेषु सङ्ग्रामेषु नः अस्मान् अविष्टाम् रक्षताम् ॥ २ ॥

अध्वर्यवश्चकृवांसो मधूनि प्र वायवे भरत चारु शुक्रम् ।
होतेव नः प्रथमः पाह्यस्य देव मध्वो ररिमा ते मदाय ॥ ३ ॥

अध्वर्यवः । चकृऽवांसः । मधूनि । प्र । वायवे । भरत । चारु । शुक्रम् ।
होताऽइव । नः । प्रथमः । पाहि । अस्य । देव । मध्वः । ररिम । ते । मदाय ॥ ३ ॥

वेङ्कट० हे अध्वर्यवः! यूयम् अभिषुतवन्तः सोमान्। अथ[2] वायवे यज्ञमुखे प्र भरत[3] कल्याणम् शुक्रम् अभिषुतम्। त्वं च वायो! होतेव वषट्कर्ता प्रथममेव अस्य[4] पिब। हे देव! एतद् मधु वयं तुभ्यम् मदाय दत्तवन्तः ॥ ३ ॥

मुद्गल० हे अध्वर्यवः! मधूनि मधुराणि सोमाज्यादीनि चकृवांसः सम्पादकाः यूयम् वायवे प्रथमम् प्र भरत प्रकर्षेण सम्पादयत चारु चरणीयम् शुक्रम् दीप्तं सोमम्। हे वायो! त्वं च होतेव होता यथा प्रथमं पिबति तद्वत् नः अस्मदर्थम् अस्य अमुं सोमम् प्रथमः इतरदेवेभ्यः[5] [illegible] पाहि पिब। हे देव! वायो! मध्वः मधुरं सोमरसम् ते मदाय ररिम दद्मः ॥ ३ ॥

दश क्षिपो युञ्जते बाहू अद्रिं सोमस्य या शमितारा सुहस्ता ।
मध्वो रसं सुगभस्तिर्गिरिष्ठां चनिश्चदद् दुदुहे शुक्रमंशुः ॥ ४ ॥

दश । क्षिपः । युञ्जते । बाहू इति । अद्रिम् । सोमस्य । या । शमितारा । सुऽहस्ता ।
मध्वः । रसम् । सुऽगभस्तिः । गिरिऽस्थाम् । चनिश्चदत् । दुदुहे । शुक्रम् । अंशुः ॥ ४ ॥

---

1. सुस्तोत्रे मूको. 2. अथा हु दर्प. 3. भर मूको. 4. नास्ति वि[1]. 5. १२ दे[1] मूको.

वेङ्कट० दश अङ्गुलयः बाह्वोर्ग्रावाणम् अभिषवाय युञ्जते, पशोः शमितार इव सोमस्य यौ बाहू शमितारौ शोभनपाणी । ततः [1]शोभनबाहुपरिगृहीतः अंशुः[1] गिरिस्थितम् मध्वः रसम्[2] मूजवति स्थितम् उत्तमं रसम् दुदुहे[3] दुग्धे । यदेवाह—चनिश्चदत् इति । चदतिर्गतिकर्मा[4] । अत्यन्तं निर्गच्छत् शुक्रम् दुदुहे इति ॥ ४ ॥

मुद्गल० अत्र सोमो देवता । अद्रिम् अभिषवग्रावाणम् दश क्षिपः दशसंख्याकाः अङ्गुलयः युञ्जते गृह्णन्ति । बाहू अपि अध्वर्युसम्बन्धिनौ अद्रिं युञ्जाते । या यौ सुहस्ता शोभनहस्तौ सोमस्य शमितारा शमितारौ अभिषोतारौ तौ मध्वः मधुरसस्य सोमस्य रसम् गिरिष्ठाम् गिरिस्थायिनम् सुगभस्तिः शोभनाङ्गुलिः अध्वर्युः चनिश्चदत् आह्लादयन् दुदुहे दोग्धि । स च अंशुः अध्वर्युः शुक्रम् निर्मलम् दुदुहे दोग्धि ॥ ४ ॥

असावि ते जुजुषाणाय सोमः क्रत्वे दक्षाय बृहते मदाय ।
हरी रथे सुधुरा योगे अर्वागिन्द्र प्रिया कृणुहि हूयमानः ॥ ५ ॥

असावि । ते । जुजुषाणाय । सोमः । क्रत्वे । दक्षाय । बृहते । मदाय ।
हरी इति । रथे । सुऽधुरा । योगे । अर्वाक् । इन्द्र । प्रिया । कृणुहि । हूयमानः ॥ ५ ॥

वेङ्कट० अभिषुतः[5] तुभ्यं सेवमानाय सोमः प्रज्ञार्थं बलार्थं च, तथा महते च मदाय । ततः त्वम् अश्वौ शोभनधुरौ रथे योगनिमित्तम्[6] अभिमुखं कुरु हे इन्द्र ! प्रियौ अस्माभिः हूयमानः ॥५॥

मुद्गल० हे इन्द्र ! ते तुभ्यम् जुजुषाणाय सेवमानाय सोमः असावि अभिषुतः । किमर्थम् । क्रत्वे वृत्रवधादिकर्मणे दक्षाय बलाय बृहते मदाय च । यस्मादेवं तस्मात् हे इन्द्र ! त्वम् हूयमानः सन् सुधुरा शोभमानायाम् धुरि नियुक्तौ प्रिया प्रियौ हरी अश्वौ योगे योगार्हे रथे योजयित्वा तम् रथम् अर्वाक् अस्मदभिमुखम् कृणुहि कुरु ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये विंशो वर्गः ॥

आ नो महीमरमतिं सजोषा ग्नां देवीं नमसा रातहव्याम् ।
मधोर्मदाय बृहतीमृतज्ञामाग्ने वह पथिभिर्देवयानैः ॥ ६ ॥

आ । नः । महीम् । अरमतिम् । सऽजोषाः । ग्नाम् । देवीम् । नमसा । रातऽहव्याम् ।
मधोः । मदाय । बृहतीम् । ऋतऽज्ञाम् । आ । अग्ने । वह । पथिऽभिः । देवऽयानैः ॥ ६ ॥

वेङ्कट० आ वह अस्माकं महतीम् अनुपरमां सर्वदा गच्छन्तीं तया सहितः ग्नाम् देवीम् नमस्कारेण सह दत्तहविष्कां सोमस्य मदाय सोमं पातुम् महतीम् सत्यज्ञाम् देवयानैः मार्गैः ॥ ६ ॥

मुद्गल० अत्र अग्निर्देवता । हे अग्ने ! सजोषाः अस्माभिः प्रीयमाणस्त्वम् ग्नाम् देवीम् ग्नानामिकां देवताम् नः अस्मदर्थम् देवयानैः देवैर्गन्तव्यैः पथिभिः मार्गैः आ अभिमुखम् आ वह ।

---

१-१. °बाहुपरिगृहीतानु त्रि[१] एषं. °अंशु क. २. °सम् दुदुहे मूको. ३. नास्ति मूको. ४. चदतिर्गति[°] त्रि[१]. ५. °षुतः क. ६. निमित्त त्रि[१] एषं.

कीदृशीम्। महीम् महतीम् अरमतिम् आ समन्ताद्रममाणाम् नमसा स्तोत्रेण सह रातहव्याम् रातं दत्तं दानाय सङ्कल्पितं हव्यं यस्यास्ताम्, दत्तहविष्कामित्यर्थः।[१] किमर्थम्। मधोः मधुरस्य सोमस्य मदाय। पुनः कीदृशीम्। बृहतीम् प्रवृद्धाम् ऋतज्ञाम् यज्ञम् अभिजानतीम्॥ ६॥

अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः।
पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादि॥ ७॥

अञ्जन्ति। यम्। प्रथयन्तः। न। विप्राः। वपाऽवन्तम्। न। अग्निना। तपन्तः।
पितुः। न। पुत्रः। उपसि। प्रेष्ठः। आ। घर्मः। अग्निम्। ऋतयन्। असादि॥ ७॥

वेङ्कट० आज्येन अञ्जयन्ति यम् घर्मं ब्राह्मणाः प्रथनीयं[१] स्तुवादिकमिव[२] प्रथयन्तः। वपाशकलं सारयन्तः। यथा वपावन्तम् [३]भाण्डम् अग्निना[३] तपन्तः। सवितुरिव पुत्रः उपस्थे प्रियतमः अग्निम् प्रति घर्मः यज्ञमिच्छन् अध्वर्युभिः आ असादि॥ ७॥

मुद्गल० यम् घर्मं महावीरम् प्रथयन्तः न, नेति सम्प्रत्यर्थीयः। इदानीं प्रथयन्तः। विप्राः मेधाविनः ऋत्विजोऽध्वर्य्वादयः वपावन्तम् प्रवृद्धं पशुं यथा अग्नौ तपन्ति तद्वद् अग्निना तपन्तः अञ्जन्ति। पितुः न पुत्रः उपसि प्रेष्ठः पितुरुपस्थे प्रियतमः पुत्रः इव घर्मः महावीरः सः ऋतयन् यज्ञमिच्छन् अग्निम् अग्नौ आ असादि आसादितः॥ ७॥

अच्छा मही बृहती शंतमा गीर्दूतो न गन्त्वश्विना हुवध्यै।
मयोभुवा सरथा यातमर्वाग्गन्तं निधिं धुरमाणिर्न नाभिम्॥ ८॥

अच्छ। मही। बृहती। शम्ऽतमा। गीः। दूतः। न। गन्तु। अश्विना। हुवध्यै।
मयःऽभुवा। सऽरथा। आ। यातम्। अर्वाक्। गन्तम्। निऽधिम्। धुरम्। आणिः। न। नाभिम्॥ ८॥

वेङ्कट० महती बृंहिता सुखतमा स्तुतिः दूतः इव राजप्रेषितः अश्विनौ अभिगच्छतु आह्वातुम्। ततः युवां सुखस्य भावयितारौ सरथौ इतोमुखम् आ यातम्, अभिगच्छतं[४] निहितं हविः, यथा शकटस्य रथनह्नसाधनीम्[५] धुरम् आणिः उभयोरभिःसरणार्थम् अभिगच्छतीति[६]॥ ८॥

मुद्गल० अच्छ अभिमुखम् अश्विना अश्विनौ हुवध्यै आह्वातुम् गीः अस्मदीया स्तुतिः दूतः न दूत इव गन्तु गच्छतु। गीर्विशेष्यते। मही पूज्या बृहती महती शंतमा सुखतमा। हे अश्विनौ! मयोभुवा सुखस्य भावयितारौ सरथा एकरथौ सन्तौ निधिम् आहितम् सोमम् अर्वाक् अभिमुखम् गच्छतम्, धुरम् भारवाहिकाम् नाभिम् आणिः न कील इव। यथा निष्कीला नाभिः रथं न निर्वहति, तद्वत् युवाभ्यां वियुक्तः सोमो यागं न निर्वहति इति ज्ञापयितुम् एवं दृष्टान्तितम्। तस्मात् युवाम् आ यातम् आगच्छतम्॥ ८॥

---

१. प्रथनीया वि[१]; प्रथनीयाम् लप. २. स्तुवाकमिव वि[१]; स्तुवाकमिव लप. ३-३. भाण्डमिव वि[१] लप.
४. °च्छन्त मूको. ५. रथानहनसाधनी वि[१]; रथानहनसाधनी लप. ६. गच्छ° मूको.

प्र तव्यसो नमउक्तिं तुरस्याहं पूष्ण उत वायोरदिक्षि ।
या राधसा चोदितारा मतीनां या वाजस्य द्रविणोदा उत त्मन् ॥ ९ ॥

प्र । तव्यसः । नमःऽउक्तिम् । तुरस्य । अहम् । पूष्णः । उत । वायोः । अदिक्षि ।
या । राधसा । चोदितारा । मतीनाम् । या । वाजस्य । द्रविणःऽदा । उत । त्मन् ॥ ९ ॥

वेङ्कट० अतिशयेन वृद्धस्य क्षिप्रस्य वायोः पूष्णः च अहम् नमस्कारवचनं प्रकर्षेण अतिसृजामि। यौ धनेन चोदयितारौ स्तुतीनां यौ च अन्नस्य दातारौ यौ च आत्मनैव द्रविणसो धनस्य दातारौ इति ॥ ९ ॥

मुद्गल० अहम् ऋषिः तव्यसः प्रवृद्धबलस्य तुरस्य त्वरमाणस्य पूष्णः पोषकस्य देवस्य उक्तलक्षणाय देवाय, उत अपि च वायोः उक्तलक्षणाय नमउक्तिम् स्तोत्रम् प्र अदिक्षि प्रदिशामि। या यौ पूषवायू राधसा हविर्लक्षणेन निमित्तेन मतीनाम् चोदितारा प्रेरयितारौ, या यौ च वाजस्य अन्नस्य चोदयितारौ, तौ देवौ उत अपि च[४] त्मन् आत्मनानन्यप्रेरणयैव[४] द्रविणोदौ भवतमिति शेषः ॥ ९ ॥

आ नामभिर्मरुतो वक्षि विश्वाना रूपेभिर्जातवेदो हुवानः ।
यज्ञं गिरो जरितुः सुष्टुतिं च विश्वे गन्त मरुतो विश्व ऊती ॥ १० ॥

आ । नामऽभिः । मरुतः । वक्षि । विश्वान् । आ । रूपेभिः । जातऽवेदः । हुवानः ।
यज्ञम् । गिरः । जरितुः । सुऽस्तुतिम् । च । विश्वे । गन्त । मरुतः । विश्वे । ऊती ॥ १० ॥

वेङ्कट० 'हे जातवेदः!'[१] आत्मीयैः नामधेयैः विद्योतमानान् मरुतः सर्वान् 'त्वम् आ वह'[२] तथाऽलङ्कृतैः येषां रूपैश्च सहास्माभिः हूयमानः। अथ मरुतः आह। यज्ञम् उक्थगिरः[५] सुष्टुतिम् च[३] जरितुः सर्वे एव गच्छत यूयं हे मरुतः! रक्षणार्थम्। विश्वे इति पूरणम्[६] ॥ १० ॥

मुद्गल० हे जातवेदः! जातप्रज्ञ अग्ने! हुवानः अस्माभिराहूयमानः सन् विश्वान् मरुतः सर्वानपि स्तोत्रभाजो देवान् नामभिः इन्द्रवरुणेत्यादिलक्षणैः आ वक्षि आवहसि। रूपेभिः सहस्राक्ष-वज्रहस्तत्वादिलक्षणैः रूपैः आ वक्षि आवहसि यज्ञम्। किञ्च हे मरुतः! विश्वे सर्वे यूयम् यज्ञम् अस्मदीयम् जरितुः स्तोतुः सम्बन्धिनीः गिरः स्तुतिरूपाणि सुष्टुतिम् शस्त्ररूपां शोभनकर्त्रीं स्तुतिं च अभिलक्ष्य गन्त आगच्छत। विश्वे च यूयम् ऊती ऊत्या रक्षया सह गन्त ॥ १० ॥

इति चतुर्थाष्टके द्वितीयाध्याये एकविंशो वर्गः ॥

आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ ११ ॥

---

१. नास्ति मूको. २. °नायेत मूको. ३-३. नास्ति मूको. ४-४. त्वा आत्मनैव वि° लपं.
५. उक्थागिरः वि° लपं. ६. पूरकम् वि°; पादपूरणम् लप.

आ । नः । दिवः । बृहतः । पर्वतात् । आ । सरस्वती । यजता । गन्तु । यज्ञम् ।
हवम् । देवी । जुजुषाणा । घृताची । शग्माम् । नः । वाचम् । उशती । शृणोतु ॥ ११ ॥

वेङ्कट० आ गच्छतु[1] अस्माकम्[2] यज्ञम् महतो दीप्तात्[3] स्वावासात्[4] पर्वतात् सरस्वती यष्टव्या। आह्वानम् देवी सेवमाना उदकम् अञ्चन्ती सुखाम् अस्मदीयाम् वाचम् कामयमाना शृणोतु इति ॥११॥

मुद्गल० नः अस्माकम् यज्ञम् यजता यष्टव्या देवी सरस्वती दिवः द्युलोकात् आ गन्तु आगच्छतु। तथा बृहतः महतः पर्वतात् पूरणवतः अन्तरिक्षात् सरस्वती आ गन्तु। अनेन माध्यमिका वागुच्यते। तदर्थम् हवम् अस्मदीयम् आह्वानम् देवी सरस्वती जुजुषाणा स्तुतिं सेवमाना घृताची घृतमुदकमञ्चन्ती नः अस्मदीयाम् शग्माम् सुखकरीम् वाचम् स्तुतिम् उशती कामयमाना सती शृणोतु ॥ ११ ॥

आ वेधसं नीलपृष्ठं बृहन्तं बृहस्पतिं सदने सादयध्वम् ।
सादद्योनिं दम आ दीदिवांसं हिरण्यवर्णमरुषं सपेम ॥ १२ ॥

आ । वेधसम् । नीलऽपृष्ठम् । बृहन्तम् । बृहस्पतिम् । सदने । सादयध्वम् ।
सादत्ऽयोनिम् । दमे । आ । दीदिऽवांसम् । हिरण्यऽवर्णम् । अरुषम् । सपेम ॥ १२ ॥

वेङ्कट० आ सादयध्वम् विधातारम् नीलपृष्ठम् महान्तम् बृहस्पतिम् यज्ञे। अध्वर्युभिः सादयतां[5] यज्ञगृहे देदीप्यमानं[6] हिरण्यसदृशम् आरोचमानं स्पृशामः ॥ १२ ॥

मुद्गल० एषा बार्हस्पत्या। हे ऋत्विजः! यूयम् बृहस्पतिम् देवम् सदने अस्मद्यागगृहे आ सादयध्वम् स्थापयध्वम्। कीदृशं देवम्। वेधसम् विविधकर्तारम् नीलपृष्ठम् स्निग्धाङ्गम् बृहन्तम् महान्तम्। तं वयम् ऋत्विग्यजमानाः सपेम परिचरेम। स एव विशेष्यते। सादद्योनिम् योनौ वेद्यां सीदन्तम् दमे यागगृहे आ सर्वतः दीदिवांसम् दीप्यमानम् हिरण्यवर्णम् हिरमणीयवर्णम् अरुषम् आरोचमानम् ॥ १२ ॥

आ धर्णसिर्बृहद्दिवो रराणो विश्वेभिर्गन्त्वोमभिर्हुवानः ।
ग्ना वसान ओषधीरमृध्रस्त्रिधातुशृङ्गो वृषभो वयोधाः ॥ १३ ॥

आ । धर्णसिः । बृहत्ऽदिवः । रराणः । विश्वेभिः । गन्तु । ओमऽभिः । हुवानः ।
ग्नाः । वसानः । ओषधीः । अमृध्रः । त्रिधातुऽशृङ्गः । वृषभः । वयःऽधाः ॥ १३ ॥

वेङ्कट० आ गच्छतु धारयिता बृहद्दीप्तिः रममाणः विश्वैः पितृभिः सह देवैः आहूयमानः पत्नीभूता ओषधीः राजयन्[7] अहिंसकोऽग्निः त्रिगुणदीप्तिः ‘अत्यन्तसुखरसः वर्षिता’[8] अन्नस्य धाता ॥ १३ ॥

---

1. °च्छ तु वि° छर्प. 2. नास्ति मूको. 3. °प्तात् वि° छर्प. 4. °सात् छर्प. 5. सादयतां वि° छर्प. 6. दीप्य° वि°. 7. आच्छादयन् वि°; भजयन् छर्प. 8-8. अत्यन्तवर्षिता वि° छर्प.

मुद्गल० इदमाद्यृक्त्रयमाग्नेयम्। अग्निः आ यन्तु आगच्छतु अस्मद्यज्ञम् धर्णसिः सर्वस्य धारकः बृहद्दिवः प्रभूतदीप्तिः रराणः रममाणः कामान् प्रयच्छन् वा विश्वेभिः सर्वैः ओमभिः रक्षणैः सह हुवानः आहूयमानः ग्नाः गन्त्रीः ज्वालाः ताभिर्युक्तः ओषधी वसानः निवासभूतः अमृध्रः अहिंसितः त्रिषधस्थः त्रिप्रकारश्चवनुतरोहितशुक्लकृष्णवर्णज्वालः वृषभः वर्षिता वयोधाः अन्नस्य दाता ॥१३॥

मातुष्पदे परमे शुक्र आयोर्विपन्यवो रास्पिरासो अग्मन् ।
सुशेव्यं नमसा रातहव्याः शिशुं मृजन्त्यायवो न वासे ॥ १४ ॥

मातुः । पदे । परमे । शुक्रे । आयोः । विपन्यवः । रास्पिरासः । अग्मन् ।
सुऽशेव्यम् । नमसा । रातऽहव्याः । शिशुम् । मृजन्ति । आयवः । न । वासे ॥ १४ ॥

वेङ्कट० पृथिव्याः उत्तमे स्थाने शोचमाने यजमानस्य स्वभूते मेधाविनः स्तोतारः रास्पिराः। 'रास्पी रासतेर्दानकर्मणः' इति यास्कः ( नि. या ६,२१ ), हविषो दातार उपगच्छन्ति। शोभनसुख-साधनम् अग्निं नमस्कारेण दत्तहविष्काः कर्मान् शिशुम् हस्तेन मृजन्ति मनुष्याः इव पुत्रं वेश्मनि ॥ १४ ॥

मुद्गल० आयोः मनुष्यस्य यजमानस्य विपन्यवः स्तोतारो होत्रादयः रास्पिरासः रा धनं हविर्लक्षणम् तत् स्पृशन्ति रास्पा ऋत्विजः तद्वान् रास्पी वदन्तः रास्पिरासः। उक्तविधा ऋत्विजः मातुः निर्मातुः पृथिव्याः शुक्रे दीप्ते परमे पदे उत्तरवेद्यां स्थितम् अग्मन् अगमन् भजन्ते। रातहव्याः दत्तहविष्काः आयवः मनुष्याः यजमानाः नमसा नमस्कारेण अग्मन्। दृष्टान्तः — सुशेव्यम् सुखाय हितम् शिशुम् न शिशुं यथा वासे वासाय मृजन्ति तद्वत् ॥ १४ ॥

बृहद् वयो बृहते तुभ्यमग्ने धियाजुरो मिथुनासः सचन्त ।
देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥ १५ ॥

बृहत् । वयः । बृहते । तुभ्यम् । अग्ने । धियाऽजुरः । मिथुनासः । सचन्त ।
देवःऽदेवः । सुऽहवः । भूतु । मह्यम् । मा । नः । माता । पृथिवी । दुःऽमतौ । धात् ॥ १५ ॥

वेङ्कट० महत् अन्नं महते तुभ्यम् हे अग्ने! बुद्ध्या त्वां स्तुवन्तः मिथुनाः सेवन्ते दानाय पत्नीयजमानाः। शिष्टं स्पष्टम् ॥ १५ ॥

मुद्गल० बृहत् प्रभूतम् वयः अन्नं हे अग्ने! बृहते महते तुभ्यम् धियाजुरः कर्मणा जीर्णाः मिथुनासः पत्नीभिः सहिताः सचन्त सेवन्ते। देवोदेवः सर्वोऽपि देवः महाम् मदर्थम् सुहवः भूतु सुखानः भवतु। नः अस्मान् दुर्मतौ माता मा धात् मा पृथिवी स्थापयतु ॥ १५ ॥

उरौ देवा अनिबाधे स्याम ॥ १६ ॥

उरौ । देवाः । अनिऽबाधे । स्याम ॥ १६ ॥

वेङ्कट० ऋ ५,४२,१७ ॥ १६ ॥

मुद्गल० हे देवाः ! युष्मत्सम्बन्धिनि उरौ महति अनिबाधे निबाधारहिते सुखे स्याम भवेम वयम् अत्र ॥ १६ ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ १७ ॥

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।
आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥१७॥

वेङ्कट० ऋ ५,४२,१८ इ ॥ १७ ॥

मुद्गल० वयम् अश्विनोः नूतनेन पूर्वमन्यैरननुभूतेन मयोभुवा सुखस्य भावयित्रा सुप्रणीती शोभनप्रणयनवता अवसा रक्षणेन सम् गमेम सङ्गच्छेमहि । हे अमृता ! अमरणावश्विनौ ! नः अस्मभ्यम् रयिम् धनम् आ वहतम् प्रापयतम् । उत वीरान् सुवीर्यवतः पुत्रान् अपि आ वहतम् । विश्वानि सौभगानि अपि आ वहतम् ॥ १७ ॥

इति चतुर्थाष्टके द्वितीयाध्याये द्वाविंशो वर्गः ॥

[ ४४ ]

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥ १ ॥

तम् । प्रत्नऽथा । पूर्वऽथा । विश्वऽथा । इमऽथा । ज्येष्ठऽतातिम् । बर्हिऽसदम् । स्वःऽविदम् ।
प्रतीचीनम् । वृजनम् । दोहसे । गिरा । आशुम् । जयन्तम् । अनु । यासु । वर्धसे ॥ १ ॥

वेङ्कट० सूक्तादिदृष्टैः[1] अवत्सारप्रभृतिभिः सह अवत्सारः काश्यपः इदं सूक्तम् अपश्यत् । तम् इन्द्र यथा अस्य पुरातनाः दुदुहुः[2], यथा वा इदानीन्तनाः अतोऽर्वाचीनाः, यथा वा सम्प्रतितना अदृश्यमानाः सर्वे[3], यथा वा दृश्यमानाः इमे, तद्वत् त्वमपि हे स्तोतः ! प्रशस्तं मम बर्हिषि सीदन्तं सर्वेषां त्वदभिमुखं शत्रूणां जेतारं स्तुत्या वृष्टिलक्षणान्युदकानि दोहसे, यासु स्तुतिषु त्वम् आशुकारिणं शत्रून्[4] जयन्तम् अनु वर्धयसि । इदमिहापि स्मर्तव्यम्—यथा द्वयोर्मन्त्रयोः एकस्यैव अर्थस्य विरम्याभिधानात् एकवचनबहुवचनाभ्यां निर्देशः, एवम् एकस्मिन्नपि मन्त्रे विरम्याभिधानात् भिन्नपादस्थयोः एकवचनबहुवचनयोः अन्वयो भवति इति ॥ १ ॥

मुद्गल० 'तं प्रत्नथा' इति पञ्चदशर्चं द्वादशं सूक्तम् । काश्यपोऽवत्सारो नाम ऋषिः । यासु ऋक्षु सदापृणबाहुवृक्तादयः श्रुताः तासु तेऽपि समुच्चीयन्ते । चतुर्दशीपञ्चदश्यौ त्रिष्टुभौ, [illegible] जगत्यः । विश्वे देवा देवता ।

१ सूक्तादिदृष्टैः मूको २ दुदुहुः मूको ३ नास्ति मूको ४. शत्रून् मूको

इयमुत्तरा च द्वे ऐन्द्र्याविल्याहुः। तम् इन्द्रम् प्रत्नथा पुरातना यजमाना इव पूर्वथा अस्मदीयाः पूर्वं यथा विश्वथा विश्वे सर्वे प्राणिनो यथा इमथा इमे इदानीं वर्तमाना यजमाना ते यथेन्द्रस्य स्तुत्या फलमलभन्त तद्वद्वयमपि। हे अन्तरात्मन्![1] त्वमपि ज्येष्ठतातिम् ज्येष्ठम् बर्हिषदम् बर्हिषि सीदन्तम् स्वर्विदम् सर्वज्ञम् प्रतीचीनम् प्रत्यगवदभिमुखमञ्चन्तम् वृजनम् बलवन्तम् आशुम् शीघ्रगामिनम् जयन्तम् सर्वमभिभवन्तमिन्द्रम् गिरा स्तुत्या साधनेन दोहसे दुग्ध्व सर्वदा सर्वान् कामान्, इत्यन्तरात्मनः प्रैषः, यासु स्तुतिषु वर्धसे प्रवृद्धो भवसि ॥ १ ॥

श्रिये सुदृशीरुपरस्य याः स्वर्विरोचमानः ककुभामचोदते ।
सुगोपा असि न दभाय सुक्रतो परो मायाभिर्ऋत आस नाम ते ॥ २ ॥

श्रिये । सुऽदृशीः । उपरस्य । याः । स्वः । विऽरोचमानः । ककुभाम् । अचोदते ।
सुऽगोपाः । असि । न । दभाय । सुक्रतो इति सुऽक्रतो । परः । मायाभिः । ऋते । आस । नाम । ते ॥२॥

वेङ्कट० भूम्याश्रयणार्थं सुदर्शनाः मेघस्य सम्भूताः याः त्वं हे इन्द्र! स्वर्गे विरोचमानः अपः प्रेरयसि ककुभाम् सम्पन्निधने अचोदते। अचोदच्छन्दः ओषधिवनस्पतिवचनोऽभिलषितस्य चोदयिता यस्या रहित[2] इति। ताः लोकाः स्वो दुहन्तीति शेषः[3]। एवं च त्वं जगतः सुष्ठु गोपायिता[4] भवसि हे सुकर्मन् इन्द्र! न च हिंसार्थं भवसि, तरसि च शत्रून् प्रज्ञाभिः। तथा इन्द्रः शक्रः इत्यादिकं तव नाम उदकनिमित्तम् अभूत् कीर्त्यमानम् इति ॥ २ ॥

मुद्गल० हे इन्द्र! स्वः स्वर्गे विरोचमानः त्वम् अचोदते अप्रेरयितुः उपरस्य मेघस्य सम्बन्धिन्यः सुदृशीः सुरोचमानाः याः आपः सन्ति तासामपाम् ककुभाम् सर्वासां दिशां मध्ये श्रिये प्राणिनां श्रयणाय, प्रेरको भवसि इति शेषः। हे सुक्रतो! शोभनवृष्टिप्रदानकर्मन् इन्द्र! त्वम् सुगोपाः सुष्ठु गोपा असि। अतः दभाय दम्भनाय वधाय प्राणिनाम् न असि न प्रभवसि। त्वं च मायाभिः आसुरीभिः परः मायाभ्यः परस्ताद्वर्तमानः, यस्मात् ते त्वदीयम् नाम नामकं रूपम् ऋते सत्यलोके आस आस्ते ॥ २ ॥

अत्यं हविः सचते सच्च धातु चारिष्टगातुः स होता सहोभरिः ।
प्रसर्स्राणो अनु बर्हिर्वृषा शिशुर्मध्ये युवाजरो विस्रुहा हितः ॥ ३ ॥

अत्यम् । हविः । सचते । सत् । च । धातु । च । अरिष्टऽगातुः । सः । होता । सहःऽभरिः ।
प्रऽसर्स्राणः । अनु । बर्हिः । वृषा । शिशुः । मध्ये । युवा । अजरः । विऽस्रुहा । हितः ॥ ३ ॥

वेङ्कट० पार्थिवाल्लोकाद्देवान् प्रति गमनहितम्[5] हविः सेवते जङ्गमं पश्वादिकं स्थावरम् ओषध्यादिकं च अहिंसितमार्गः सः होता [6]राक्षसानां हननार्थम्[6] बलस्य भर्ता तथा बर्हिः[7] एकीकृत्य प्रगर्सोणः कामानां वर्षिता शिशुः सोऽयं अन्तरिक्षस्थानाम् अपाम् मध्ये निहितः अजरः युवा इति ॥ ३ ॥

1. °रात्मा मूको. 2. रहितं मूको. 3. नास्ति ह. 4. गोपयिता ह रपं. 5. गमने निहितं मूको. 6-6. राक्षसानार्थम् ह. 7. बर्हिः ह.

मुद्गल० इयमाग्नेयी। अयमग्निः अत्यम् सततगमनार्हम् हविः आज्यादिकम् सचते सेवते। कीदृशं हविः। सत् सत्फलत्वादविरपि सत्। धातु च धारकम् सर्वस्य। हूयमानस्य हविष आदित्यद्वारा वृष्टिसाधनत्वात् तया च वृष्ट्या प्रजोत्पत्तेर्धारकत्वम्। अरिष्टगातुः अहिंसितगमनः। सति तस्य गमने यज्ञनिष्पत्त्या फलसिद्धेररिष्टगमनत्वम्। तदेवाह यः स खलु होता होमनिष्पादकः सहोगरिः बलस्य भर्ता बर्हिः अनु प्रसर्स्राणः प्रकर्षेण सरन् वृषा वर्षकः फलस्य शिशुः स इव रक्षणीयः युवा सर्वत्र मिश्रयिता अजरः जरारहितः विक्षु विरुहणासामोषधीनाम् मध्ये हितः निहितः स्थापित एवम्भूतः सचते ॥ ३ ॥

प्र वं एते सुयुजो यामन्निष्टये नीचीरमुष्मै यम्यं ऋतावृधः ।
सुयन्तुंभिः सर्वशासैरभीशुंभिः क्रिविर्नामानि प्रवणे मुषायति ॥ ४ ॥

प्र । वः । एते । सुऽयुजः । यामन् । इष्टये । नीचीः । अमुष्मै । यम्यः । ऋतऽवृधः ।
सुयन्तुऽभिः । सर्वऽशासैः । अभीशुऽभिः । क्रिविः । नामानि । प्रवणे । मुषायति ॥ ४ ॥

वेङ्कट० समीपस्थात् ऋषीन् अवरसारो वदति— हे ऋषयः! अग्नेः एते रश्मयो दिवं प्रति गमने युष्माकम् अभ्युदयार्थं भवन्ति सुयोजनाः। यस्मात् अस्मै अग्नये अन्तरिक्षे वर्तमानाय नीचीनाग्राः उदकस्य यम्यः[1] ऋतावृधः ज्वाला विधम्ते[2] इति। एतदेव विस्पष्टमाह— शोभनयमनैः[3] सर्वस्य जगतः शासितृभिः रश्मिभिः कूपसदृशोऽयं[4] पार्थिवोऽग्निः अन्तरिक्षस्थानानि उदकानि पृथिव्याम् आहरति ॥ ४ ॥

मुद्गल० एषा सौरी। एते रश्मयः सुयुजः सुष्ठु परस्परं संयुक्ताः यामन् गमने इष्टये एषणाय नीचीः नीचम्, गच्छन्तीति शेषः। अमुष्मै यजमानाय यम्यः यम्या गमनार्हाः आदित्यसम्बन्धिनः ऋतावृधः यज्ञस्य वर्धयितारश्च। अयमादित्यः सुयन्तुभिः सुयमनैः सर्वशासैः सर्वस्य शासकैः अभीशुभिः रश्मिभिः क्रिविः कर्ता नामानि उदकानि प्रवणे निम्ने भूप्रदेशे प्र मुषायति मुष्णाति आदत्ते इत्यर्थः। वः पूरणः ॥ ४ ॥

संजर्भुराणस्तरुंभिः सुतेगृभं वयाकिनं चित्तगर्भासु सुस्वरुः ।
धारवाकेष्वृजुगाथ शोभसे वर्धस्व पत्नीरभि जीवो अध्वरे ॥ ५ ॥

सम्ऽजर्भुराणः । तरुंऽभिः । सुतेऽगृभम् । वयाकिनम् । चित्तऽगर्भासु । सुऽस्वरुः ।
धारऽवाकेषु । ऋजुऽगाथ । शोभसे । वर्धस्व । पत्नीः । अभि । जीवः । अध्वरे ॥ ५ ॥

वेङ्कट० ज्वलनसाधनैः[5] तरुभिः आत्माश्रयैः सम्भरन् स्रुवे गृहीतम्। वयाकशब्दः मिश्रणवचनः। शाखाप्रशाखारणेन आज्येन मिश्रितः[6] पालोवतो भवति। 'विनिषितगर्भा पष्ठौही दक्षिणा' ( तैब्रा १,७,१,१; आपश्रौ १८,१०,१५ ) इत्यत्र प्रज्ञातगर्भेत्यर्थः[7] सूत्रकारैरुक्तः। इह तु युवतिष्वित्यर्थः।

1. यम्यौ ल. 2. विधत्ते ल. 3. शोभनयमनैः वि[1]. 4. कूपस[॰] वि[1]. 5. ज्वलनसाधनैः एवं. 6. मिश्रः वि[1] एवं. 7. प्रज्ञातगर्भे[॰] वि[1].

शोभनस्वरणस्त्वम् स्तुतिवाक्यानां धारकेषु अस्मासु हे शोभनस्तुते अग्ने! शोभसे । स[1] त्वम् पत्नीः लक्ष्यीकृत्य वयनार्थं जीवमानोऽनुपशान्तः वर्धस्व इति ॥ ५ ॥

मुद्गल० अग्ने! तरुभिः तरुविकारैर्ग्रावभिः सुतेगृभम् अभिषुतेन रसेन गृहीतम् वयाकिनम् कुत्सितावयव-शाखावन्तं सोमम् चित्तगर्भासु चित्तधारिणीषु स्तुतिभिः सह सजूर्भुरागः गृभ्णन् गृह्णन्[2] सुस्वरुः शोभनगमनः त्वम् धारवाकेषु ऋत्विग्यजमानेषु मध्ये हे ऋजुगाथ! सम्यक् स्तुत! शोभसे । किञ्च अध्वरे जीवः सर्वस्य जीवयिता पत्नीः पालयित्रीः ओषधीः अभि अभिमुखम् वर्धस्व अभिवर्धय ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः ॥

यादृगेव ददृशे तादृगुच्यते सं छायया दधिरे सिध्रयाप्स्वा ।
महीमस्मभ्यमुरुषामुरु ज्रयो बृहत् सुवीरमनपच्युतं सहः ॥ ६ ॥

यादृक् । एव । ददृशे । तादृक् । उच्यते । सम् । छायया । दधिरे । सिध्रया । अप्ऽसु । आ ।
महीम् । अस्मभ्यम् । उरुऽसाम् । उरु । ज्रयः । बृहत् । सुऽवीरम् । अनपऽच्युतम् । सहः ॥६॥

वेङ्कट० सूर्यो देवता यादृक् एव ददृशे तादृक् एवास्माभिः उच्यते, यथादृष्टमेव ब्रूम इत्यर्थः । तमाह— आदित्यस्य रश्मयः अस्मभ्यम् महतीम् उरूणामर्थानां सातिं महच्च वेगं शरीरं महत् शोभनपुत्रयुक्तम् अप्रच्युतम्[3] सहः इत्येतत् त्रयम् अप्सु सह धारयन्ति आत्मीयया कामानां धारयित्र्या[4] छायया इति ॥ ६ ॥

मुद्गल० एषा वैश्वदेवी । यादृक् एव ददृशे यादृग्रूपमेव दृश्यते तादृक् उच्यते तादृग् रूपमेवोच्यते । यथादृष्टमेव स्तूयते न तु मत्सरप्रयत्नेन । यस्मात् छायया दीप्त्या सिध्रया साधिकया सह अप्सु व्याप्तिकासु द्युतिषु आ सम् दधिरे सम्यक् धारयन्ति स्वीयं रूपम् । हे देवाः महीम् महतीं पूज्याम् उरुषाम् बहुदात्रीं रयिम् उरु प्रभूतम् ज्रयः वेगम् बृहत् महत् सुवीरम् शोभनवीर्यमपत्यम् अनपच्युतम् अनुपक्षीणम् सहः बलं चाभिभावुकम् अस्मभ्यम् प्रयच्छन्त्वित्यर्थः ॥ ६ ॥

वेत्यग्रुर्जनिवान् वा अति स्पृधः समर्यता मनसा सूर्यः कविः ।
घ्रंसं रक्षन्तं परि विश्वतो गयमस्माकं शर्म वनवत् स्वावसुः ॥ ७ ॥

वेति । अग्रुः । जनिऽवान् । वै । अति । स्पृधः । सऽमर्यता । मनसा । सूर्यः । कविः ।
घ्रंसम् । रक्षन्तम् । परि । विश्वतः । गयम् । अस्माकम् । शर्म । वनवत् । स्वऽवसुः ॥ ७ ॥

वेङ्कट० अति गच्छति गमनशीलः उदितः सूर्यः[5] शत्रुभिः सङ्ग्रामसिच्छता मनसा प्राज्ञः । तमिमम् अहः सर्वमेव मनुष्याणां गृहं सर्वतः रक्षन्तम् आस्माकम् सुखम् परि वनवत् स्वभूतहविर्धनोऽस्मदीयः होता[5] यथा यजमानमभिगच्छति तथा । याचनं परिवननम् ॥ ७ ॥

1. नास्ति रुपं. 2. नास्ति मूको. 3. अनपच्युतम् वि[1] रुपं. 4. धारयित्र्या वि[1]. 5. होता ततः मूको.

मुद्गल० इयं सौरी । सूर्यः देवः अग्रुः अग्रगामी अनिवान् वै जन्मवान् कविः क्रान्तदर्शी समर्यता समरमिच्छता मनसा स्पृधः सङ्ग्रामान् अति वेति अतिगच्छति मन्देहानसुरान् योद्धुम् । घ्रंसम् दीप्तम् गयम् गृहम् विश्वतः सर्वतः रक्षन्तम् परिचरेमेति शेषः । ॥ देवः अस्माकम् शर्म सुखम् परि सम्यक् वनवत् ददात् स्वावसुः स्वायत्तधनः सन् ॥ ७ ॥

ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।
यादृश्मिन् धायि तमपस्यया विदद् य उ स्वयं वहते सो अरं करत् ॥ ८ ॥

ज्यायांसम् । अस्य । यतुनस्य । केतुना । ऋषिऽस्वरम् । चरति । यासु । नाम । ते ।
यादृश्मिन्[1] । धायि । तम् । अपस्यया । विदत् । यः । ऊँ इति । स्वयम् । वहते । सः । अरम् । करत् ॥८॥

वेङ्कट० अस्य यजमानस्य प्रज्ञानेनातिशयेन प्रशस्यं त्वाम् ऋषिभिः कीर्त्यमानम् नाम चरति । त्वाम् उपतिष्ठतीत्यर्थः । यासु अप्सु तव नाम कीर्तितं भवति । एषयत्सुदकामीत्यर्थः । परोक्ष उत्तरार्धः[2] । यादृशे कामे मम[1] सूर्यो निहितो भवति, तम् कामं तदीयकर्मेच्छया स लभते । यः एवास्मै स्वयम् हविः वहते । सः स्वयमेव पर्याप्तं धनम् आत्मनः करोति ॥ ८ ॥

मुद्गल० इयमाशीपी "सौरी वा" । हे देव! ज्यायांसम् अतिशयेन प्रवृद्धम् अस्य यतुनस्य गन्तुः सूर्यस्य अंशुं गन्तारं सूर्यम् केतुना प्रज्ञापकेन कर्मणा उदयादिलक्षणेन विशिष्टम् ऋषिस्वरम् ऋषिभिः स्तुत्यम् त्वाम् चरति भजते यजमानः । केन साधनेन । यासु स्तुतिषु ते त्वदीयम् नाम नमनं रूपं वर्तते ताभिरित्यर्थः । यादृश्मिन् यादृशे कामे धायि धत्ते, तम् तादृशम् कामम् अपस्यया कर्मणा हविः स्तुत्यादिलक्षणेन विदत् विन्दते । यः उ एव स्वयम् आत्मेरितः सन् त्वमस्मीयमेव वहते धारयति फलम्, सः अरम् अलमत्यर्थम् करत् करोति ॥ ८ ॥

समुद्रमासामव तस्थे अग्रिमा न रिष्यति सवनं यस्मिन्नायता ।
अत्रा न हार्दि क्रवणस्य रेजते यत्रा मतिर्विद्यते पूतबन्धनी ॥ ९ ॥

समुद्रम् । आसाम् । अव । तस्थे । अग्रिमा । न । रिष्यति । सवनम् । यस्मिन् । आऽयता ।
अत्र । न । हार्दि । क्रवणस्य । रेजते । यत्र । मतिः । विद्यते । पूतऽबन्धनी ॥ ९ ॥

वेङ्कट० [4]यासु नाम ते[4] उच्चारयन्ति, आसाम् अपाम् अग्रिमा[5] अन्तरिक्षं प्रति अव तस्थे अधो गच्छति । किञ्च ता इमा आपः यस्मिन् सवने विततः भवन्ति तत् सवनम् न रिष्यति इति । किं च अत्रैव हृदयाभिलषितं वर्धनशीलस्य (?) स्तोतुः न चलते, अपामेव स्तोत्रेऽभिलषितं सिध्यतीत्यर्थः । यास्वप्सु विद्यते स्तुतिः पवनस्य बन्धनी शोधयन्तीति हर्षा स्तुतिः ॥ ९ ॥

मुद्गल० इयमपि सौरी । आसाम् स्तुतीनाम् समुद्रम् समुद्रवत् पर्यवसानभूतं सूर्यम् अग्रिमा[1] अत्यन्तं श्रेष्ठा अस्मदीया स्तुतिः अव तस्थे अवगच्छति । सवनम् सूयते सोमोऽत्रेति सवनं यज्ञगृहम् ।

---

१. यैप १,२५७२ f द्र. २. °भो यद् वि°. ३. अनु वि° दर्श. ४-४. एतेषां मूको. ५-५. गुनागनः वि° दर्श. ६. नास्ति वि°.

न रिष्यति न हिंस्यते। किन्तु प्रवर्धते इत्यर्थः। यस्मिन् आयता विस्तीर्णानि स्तोत्राणि वत् सवनम् इति। अत्र अस्मिन् यजमानगृहे कवणस्य स्तुतिकर्तुः हार्दि हृदयगतं काम्यं फलम् न रेजते न विचलति न मृषा भवति। यत्र यस्मिन् स्तोतृगृहे मतिः स्तुतिः पूतबन्धनी पूते सूर्यम् अनुबध्नती विद्यते, अत्र न रेजत इति ॥ ९ ॥

स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः ।
अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यम् ॥ १० ॥

सः । हि । क्षत्रस्य । मनसस्य । चित्तिऽभिः । एवऽवदस्य । यजतस्य । सध्रेः ।
अवत्ऽसारस्य । स्पृणवाम । रण्वऽभिः । शविष्ठम् । वाजम् । विदुषा । चित् । अर्ध्यम् ॥ १० ॥

वेङ्कट० 'चित्तिः स्रुक् चित्तमाज्यम्' ( मै १,९,१ ), 'चित्तं च चित्तिश्च' ( मै २,४,१४ ) इत्यादिषु चित्ति-शब्दः[1] चिन्तितवचनो दृष्टः। सः हि सूर्यः पञ्चानाम् अभिलषितैः सह आगच्छतीति शेषः। सम्प्रति मम अवत्सारस्य अपि। रमणीयैः स्तोत्रैः स्पृणवामः सूर्यादस्माद् बलवत्तमम् अन्नम्, यदर्थं जानता सर्वेण पूजनीयमिति ॥ १० ॥

मुद्गल० इयमपि सौरी। सः हि खलु सविता देवः सर्वैः स्तुत्यः, सर्वकामपूरक इत्यर्थः। हिर्द्योतकः। अथाद्य अद्यः। क्षत्रस्य मनसस्य एवावदस्य यजतस्य सध्रेः अवत्सारस्य च[2] एषामृषीणाम् अस्माकम् रण्वभिः रमणीयाभिः चित्तिभिः मनोरथैः स्पृणवाम पूरयाम। किम्। शविष्ठम् वाजम् अतिशयेन बलवदन्नम्। विदुषा चित् विपश्चिता अर्ध्यम् समर्धनीयं स्पृणवाम क्षत्रादयो वयमिति सम्बन्धः ॥ १० ॥

इति चतुर्थाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः ॥

श्येन आसामदितिः कक्ष्यो३ मदो विश्ववारस्य यजतस्य मायिनः ।
समन्यमन्यमर्थयन्त्येतवे विदुर्विषाणं परिपानमन्ति ते ॥ ११ ॥

श्येनः । आसाम् । अदितिः । कक्ष्यः । मदः । विश्वऽवारस्य । यजतस्य । मायिनः ।
सम् । अन्यम्ऽअन्यम् । अर्थयन्ति । एतवे । विदुः । विऽसानम् । परिऽपानम् । अन्ति । ते ॥ ११ ॥

वेङ्कट० द्यावापृथिव्योः कक्षं सेवमानो मेघः अदीनः अद्भिः आसाम् दिशां मध्यिता भवति। कासामित्याह—विश्ववारस्य यजतस्य च कर्मवतः। इमे अश्रमसूतय 'इवः पूर्वमस्तानात्'[3] स्वतो व्यतिरिक्तम् अन्यमन्यम् आत्मनोऽभ्युदयार्थं गन्तुम् सम् अर्थयन्ति, ते सम्प्रति विशेषेण प्रयच्छन्तं परितो रक्षितारम् अन्तिके त्वाम् विदुः इति ॥ ११ ॥

मुद्गल० मददेवत्या इयम्। विश्ववारादीनां प्रयाणामृषीणां स्वभूतः आसाम् अपां सोमरसलक्षणानाम् मदः श्येनः शंसनीयगमनः शीघ्रं पातृसकाशं गन्ता अदितिः अदीनोऽविसम्बद्धः कक्ष्यः पूरकश्च

---

1. चित्त° मूको. 2. नास्ति मूको. 3-3. नास्ति एपं.

भवतीति शेषः। ते विश्ववारादयः सत्रे प्रवृत्ताः एतवे सोमं प्राप्तुं तत्पानाय अन्यमन्यम् परस्परम् सम् अर्धयन्ति याचन्ते अनुज्ञाम्। ते विपाणम् विशेषेण मदस्य दातारम् परिपानम् अन्ति अन्तिके विदुः जानन्ति ॥ ११ ॥

सदापृणो यजतो वि द्विषो वधीद् बाहुवृक्तः श्रुतवित् तर्यो वः सचा।
उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः ॥ १२ ॥

सदाऽपृणः। यजतः। वि। द्विषः। वधीत्। बाहुऽवृक्तः। श्रुतऽवित्। तर्यः। वः। सचा।
उभा। सः। वरा। प्रति। एति। भाति। च। यत्। ईम्। गणम्। भजते। सुप्रयावऽभिः ॥

वेङ्कट० सदापृणः अयं शत्रून् अवधीत्, ततो यजतः च, तथा बाहुवृक्तः, तथा श्रुतवित्[1], एवम् वः[2] सदापृणादीनां सहायभूतः तर्यः[3] च। उभौ सः वारकौ शत्रू[4] प्रति गच्छति भाति च। अन्तिकस्थो दूरस्थश्चोभौ शत्रू भवतः। यदेनम् इन्द्रादीनाम् गणम् भजते सुप्रगमनैः ॥ १२ ॥

मुद्गल० सदापृणः सर्वदा दानशीलः एतन्नामा यजतः यष्टा च बाहुवृक्तः बाहुभ्यां वृक्तदर्भश्च श्रुतवित् श्रुतस्य वेत्ता तर्यः च। एतेषां पञ्चानां परस्परमपेक्षया प्रत्येकमेकवचनम्[5]। [illegible] स ऋषिः द्विषः शत्रून् वि वधीत् हिंस्यात् वः युष्माकम् सचा सहितः। युष्माभिः देवैः सहित इत्यर्थः। स ऋषिः वरा श्रेष्ठौ उभा उभौ इहलोकपरलोकविषयौ कामौ प्रति एति अभिगच्छति भाति च। यत् यस्मात् ईम् एनम् गणम् देवसङ्घम् सुप्रयावभिः सुष्ठु प्रकर्षेण मिश्रयद्भिः स्तोत्रैः भजते, तस्मादेवं भातीति ॥ १२ ॥

सुतंभरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदञ्चनः।
भरद् धेनू रसवच्छिश्रिये पयोऽनुब्रुवाणो अध्येति न स्वपन् ॥ १३ ॥

सुतम्ऽभरः। यजमानस्य। सत्ऽपतिः। विश्वासाम्। ऊधः। सः। धियाम्। उत्ऽअञ्चनः।
भरत्। धेनुः। रसऽवत्। शिश्रिये। पयः। अनुऽब्रुवाणः। अधि। एति। न। स्वपन् ॥ १३ ॥

वेङ्कट० अयम् सुतंभरः यजमानस्य मम अवत्सारस्य सतां पतिः सर्वासाम् एव विद्यानाम् ऊधः अभवत्। सतश्च सः कर्मणां मम उदञ्चनः उत्थापक आसीत्, तथा मया दत्तां धेनुं च भरत्, तस्याः रसवत् पयः च शिश्रिये। सोऽयं मन्त्राणाम् अर्थम् अनुब्रुवाणः मन्त्रान् विस्पष्टमधीते, न स्वपन् अविस्पष्टमिति ॥ १३ ॥

मुद्गल० यः विश्वासाम् सर्वासाम् धियाम् स्तुतीनाम् ऊधः स्थानं देवसङ्घम् उदञ्चनः सेवमानः सः यजमानस्य अवत्सारस्य मम सुतंभरः यागनिर्वाहक एतन्नामा ऋषिः सत्पतिः सतां विद्यमानानां फलानां पालयिता दाता भवतीत्यर्थः। धेनुः गौः रसवत् सारवत् पयः भरत्

1. °द वः मूको. 2. नास्ति मूको. 3. तर्यः मूको. 4. शत्रून् लः; शत्रून् वि° लो. 5. °त्येकवचनम् मूको.

अहरत्। तत्र एषः शिश्रिये श्रयति सामर्थ्यात्। तत् सर्वम् अनुवुवानः अनुक्रमेण कीर्तयन् न स्वपन् स्वापमकुर्वन् अनवरतम्[1] अध्येति स्मरत्यवत्सारः। सुतम्भरः तादृश[2] इति ॥ १३ ॥

यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १४ ॥

यः। जागार। तम्। ऋचः। कामयन्ते। यः। जागार। तम्। ऊँ इति। सामानि। यन्ति।
यः। जागार। तम्। अयम्। सोमः। आह। तव। अहम्। अस्मि। सख्ये। निऽओकाः ॥१४॥

वेङ्कट० प्रसङ्गात् जागरणगुणमाह— यः इति। सख्येऽभिमुखस्थाने[3] सख्ये न्योकाः इति ॥ १४ ॥

मुद्गल० यः देवः जागार सर्वदा विनिद्रो गृहे वर्तते, तम् ऋचः सर्वशास्त्रात्मिकाः कामयन्ते। यः च जागार तम् उ तमेव सामानि स्तोत्ररूपाणि यन्ति प्राप्नुवन्ति। यः जागार तम् अयम् सोमः आह वक्ति मां स्वीकुर्विति। हे अग्ने! त्वादृशस्य तव सख्ये हितकरणे न्योकाः नियतस्थानः अहम् अस्मि भवामि ॥ १४ ॥

अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति।
अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १५ ॥

अग्निः। जागार। तम्। ऋचः। कामयन्ते। अग्निः। जागार। तम्। ऊँ इति। सामानि। यन्ति।
अग्निः। जागार। तम्। अयम्। सोमः। आह। तव। अहम्। अस्मि। सख्ये। निऽओकाः ॥१५॥

वेङ्कट० उक्तमर्थमुदाहरणेन स्तौति— अग्निः इति ॥ १५ ॥

मुद्गल० पूर्ववत् निगदितव्याख्या। यः इत्यस्य स्थाने अग्निरिति विशेषः ॥ १५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः ॥

इति पञ्चमे मण्डले तृतीयोऽनुवाकः ॥

[४५]

विदा दिवो विष्यन्नद्रिमुक्थैरायत्या उषसो अर्चिनो गुः।
अपावृत व्रजिनीरुत् स्वर्गाद् वि दुरो मानुषीर्देव आवः ॥ १ ॥

विदाः। दिवः। विऽस्यन्। अद्रिम्। उक्थैः। आऽयत्याः। उषसः। अर्चिनः। गुः।
अप। अवृत। व्रजिनीः। उत्। स्वः। गात्। वि। दुरः। मानुषीः। देवः। आवरित्यावः ॥१॥

---

१. तदम् मूको. २. तादृश मूको. ३. °स्थानः ह.

वेङ्कट० सदापृणः । 'अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा 'यद्देवानां वित्तं' वेद्यमासीत् तेन सह रात्रिं प्राविशन्' ( तै १, ५, ९, २-३ ) इति ब्राह्मणम् । तत्र इदं सूक्तं प्रवर्तते । हे स्तोतः![2] स्तोत्रैः शिलोच्चयं विसृजन् स्वर्गाल्लोकात् देवैः सह शिलोच्चयं क्षमस्व, गच्छ प्रकाशीकरणार्थम्[3] । आगच्छन्त्याः उषसः दीप्तयश्चाऽऽगताः । तथा सूर्यश्चोदगात् । उद्गतश्च अपावृतवान् व्रजवतीः[4] शिलोच्चयपरिवृता गाः । स्वर् इत्यादित्यनाम । तथा तमसा तिरोहिताः मानुषीः च दुरः देवः विवृतवानिति ॥ १ ॥

मुद्गल० चतुर्थे अनुवाके द्वादश सूक्तानि । 'विदा दिवः' इत्येकादशर्चं प्रथमं सूक्तम् । सदापृणो नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । विश्वे देवा देवता ।

अत्राङ्गिरसां पणिभिः अपहृत्य[5] गिरेरधः स्थापितानां गवामिन्द्रेण विमोकः प्रतिपाद्यते । विदाः अवेदयत्[1] इन्द्रः । किम् । गाः इति सम्बन्धः । किं कुर्वन् । उक्थैः अङ्गिरसां स्तुतिभिर्निमित्त-भूताभिः अद्रिम् पर्वतम् विध्यन् प्रक्षिपन् रक्षकाणामुपरि गिरिभेदनाय । आयत्याः आगामिन्याः[6] उषसः सम्बन्धिनः अर्चिनः रश्मयः गुः अगच्छन् सर्वत्र प्रसृता अभवन् । अप व्रवृत अपावृणोत् व्रजिनीः तमःपुञ्जवतीर्निशाः । स्वः स्वरणशील आदित्यः उत् गात् उदगात् । तथा दुरः मानुषीः मनुष्यसम्बन्धिनीः दुरः द्वाराणि देवः सूर्यः वि आवः व्यवृणोत् । अन्धकारापनयनेन[7] मनुष्यादिव्यवहारान्प्राकरोदित्यर्थः ॥ १ ॥

वि सूर्यो॑ अ॒मतिं॒ न श्रियं॑ सा॒दोर्वाद्गवां॑ मा॒ता जा॑न॒ती गा॑त् ।
धन्व॑र्णसो न॒द्यः॑ खा॒दोअ॑र्णाः स्थू॒णेव॒ सुमि॑ता दृंहत॒ द्यौः ॥ २ ॥

वि । सूर्यः॑ । अ॒मति॑म् । न । श्रिय॑म् । सा॒त् । आ । ऊ॒र्वात् । गवा॑म् । मा॒ता । जा॒न॒ती । गा॒त् । धन्व॑ऽअर्णसः । न॒द्यः॑ । खा॒दःऽअ॑र्णाः । स्थूणा॑ऽइव । सुऽमि॑ता । दृं॒ह॒त॒ । द्यौः ॥ २ ॥

वेङ्कट० यथाऽलङ्कृतः कश्चित् आत्मीयं रूपं प्रकाशयति एवम् सूर्यः आत्मीयां तेजोभिः कृताम् श्रियम् प्रकाशीकरणार्थम् वि असृजत् । अथ गवाम् ऊर्वात् उरोर्महतः सद्मात् माता सरमा पणिभिः अपहृता गा इव जानती आ जगाम । अथ शिलोच्चयं प्रति गच्छतां देवानां गमनविघ्नकारिणीः शब्दकुदकाः शब्दकारिणीः खादोअर्णाः ( निघ १,१३ ) इति नदीनाम[8] । ताः द्यौः अदृंहत्[9], यथा स्थिरोदका निश्चलगमनयोग्याः[10] भवन्ति तथा[12] चके । आत्मनि वहन्ती[11] यथा सुमिता स्थूणा वंशम् आत्मन्याहितं[14] निश्चलं धारयत्येवमिति ॥ २ ॥

मुद्गल० सूर्यः देवः श्रियम् दीप्तिम् वि सात् विभजते प्रकाशयतीत्यर्थः । अमतिं न रूपमिव द्रव्यम् । यथा द्रव्याणि घटपटादीनि नीलपीतादिरूपं लभन्ते तद्वत् । तथा गवाम् रश्मीनाम् माता उषाः जानती सूर्यं उदेष्यति मया च व्युच्छनं[15] कर्तव्यमिति जानती ऊर्वात् महतोऽन्तरिक्षात् आ गात् आगच्छति । तथा नद्यः च धन्वर्णसः धन्वनि[16] गच्छन्ति अर्णांसि[17]

1-1. °नामविशसवेद° ल. 2. नास्ति वि[1] लपं. 3. प्रकाशीकरणार्थम् वि[1]. 4. प्रजावतीः वि[1]; प्रजातीः लपं. 5. अपहृत्य मूको. 6. आगच्छन्त्याः मूको. 7. °मनेन मूको. 8. °नयेन मूको. 9. तु. ऐव १,१२,२ j. 10. अदृंहत ल. 11. निश्चलगमन° मूको. 12. यथा मूको. 13. आत्मनो- वहन्ति मूको. 14. °न्याहितं मूको. 15. व्युच्छनं मूको. 16. धन्व मूको. 17. अर्णाः मूको.

यासु गावः तथोक्ताः यादोअर्णाः भक्षितकुल्योदकाः । कुल्यरूपा इत्यर्थः । नद्यश्चैवंरूपा भवन्ति । किञ्च द्यौः च द्युमिता सुष्ठु गृहे स्थापिता स्थूणा इव गृहाधारस्तम्भ इव दृंहत दृढाऽभवत् । एतत्सर्वं सूर्यस्याऽऽगमनेऽयेति[1] भावः ॥ २ ॥

अस्मा उक्थाय पर्वतस्य गर्भो महीनां जनुषे पूर्व्याय ।
वि पर्वतो जिहीत साधत द्यौराविवासन्तो दसयन्त भूम ॥ ३ ॥

अस्मै । उक्थाय । पर्वतस्य । गर्भः । महीनाम् । जनुषे । पूर्व्याय ।
वि । पर्वतः । जिहीत । साधत । द्यौः । आऽविवासन्तः । दसयन्त । भूम ॥ ३ ॥

वेङ्कट० अस्मै उक्थ्याय प्रशस्यायेन्द्राय पर्वतस्य गर्भः प्रकाशः, आसीत् इति शेषः । गवां[1] पूर्व्याय जन्मने । स्वामिन इत्यर्थः । तदा पर्वते प्रविशति इन्द्रस्य पर्वतः वि जिहीत, द्वारप्रदेशमप-हायोभयतो गत इत्यर्थः । प्रकाशीकरणार्थम् द्यौः चाभिलषितं साधितवती । तत्र पूर्वं परिचरन्तो बहुप्रभूतानाम् उपक्षपितवन्तः ॥ ३ ॥

मुद्गल० अस्मै महान्[1] उक्थाय स्तोत्रे पर्वतस्य मेघस्य गर्भः गर्भस्थानीयमुदकम् जिहीत गच्छति । कीदृशायास्मै । महीनाम् महतीनां स्तुतीनाम् जनुषे उत्पादयित्रे पूर्व्याय प्रत्नाय । तदेव पुनरुच्यते— पर्वतः मेघः वि जिहीत । द्यौः च साधत साधयति वृष्टिम् । आविवासन्तः सर्वतः परिचरन्तोऽङ्गिरसः भूम आत्यधिकम् दसयन्त उपक्षयन्त्यात्मानं कर्मभिः ॥ ३ ॥

सूक्तेभिर्वो वचोभिर्देवजुष्टैरिन्द्रा न्व१ग्नी अवसे हुवध्यै ।
उक्थेभिर्हि ष्मा कवयः सुयज्ञा आविवासन्तो मरुतो यजन्ति ॥ ४ ॥

सुऽउक्तेभिः । वः । वचःऽभिः । देवऽजुष्टैः । इन्द्रा । नु । अग्नी इति । अवसे । हुवध्यै ।
उक्थेभिः । हि । स्म । कवयः । सुऽयज्ञाः । आऽविवासन्तः । मरुतः । यजन्ति ॥ ४ ॥

वेङ्कट० सदापृणः स्वपूर्व्यान् भवासारस्य गृहपतेः पशून् प्रति गन्तुमिदमाह— "सूक्तेभिः इति" । गवाम् अपहर्तृभिः पणिभिः अभिभूयमानो युष्माकं रक्षणार्थं सुवचनैः वचोभिः देवैः सेवितैः इन्द्रा अग्नी क्षिप्रम् आह्वातुम् एते प्रवृत्ता इति शेषः । तथा उक्थेभिः क्रान्तप्रज्ञा एते शोभनयागाः परिचरन्तो मरुतः च यजन्ति । पणिभिरपहृतेषु पशुषु भवत्सारः 'स हि क्षत्रस्य' (ऋ ५, ४४,१०) इत्यस्यामृचि निर्दिष्टैर्ऋषिभिः सह गृहपतिस्तत: 'सदापृणो यजतः' (ऋ ५,४४,१२) इत्यस्यामृचि निर्दिष्टान् ऋषीन् प्रतीदं वदतीति । अस्यामप्यस्य उदात्तत्वाद् उत्तरत्र सम्बन्धः ॥ ४ ॥

मुद्गल० हे इन्द्रा अग्नी ! इन्द्राग्नी ! (?) देवजुष्टैः देवैः सेवनीयैः सूक्तेभिः सूक्तैः सुवचनैः शोभनगुण-प्रकाशनप्रवणैः वचोभिः अवसे अस्मद्रक्षणाय हुवध्यै आह्वयामि । नु क्षिप्रम् वः युवाम् उक्थेभिः स्तोत्रैः कवयः अनूचानाः पूर्वं ऋषयः सुयज्ञाः शोभनयागाः आविवासन्तः स्तुत्यादिना इन्तः मरुतः मरुत्सदृशाः कर्मसु शीघ्राः यजन्ति पूजयन्ति । हि स्म पूरणौ ॥ ४ ॥

1. 'ज्ञापयति मूको. 2. पूर्ववत् वि' तपे. 3. नास्ति मूको. 4-5. नास्ति मूको.

एतो न्व१द्य सुध्यो३ भवाम प्र दुच्छुना मिनवामा वरीयः ।
आरे द्वेषांसि सनुतर्दधामायाम प्राञ्चो यजमानमच्छ ॥ ५ ॥

एतो इति । नु । अद्य । सुऽध्यः । भवाम । प्र । दुच्छुनाः । मिनवाम । वरीयः ।
आरे । द्वेषांसि । सनुतः । दधाम । अयाम । प्राञ्चः । यजमानम् । अच्छ ॥ ५ ॥

वेङ्कट० आगच्छत क्षिप्रम् अद्य वयं सुकर्माणः भवाम । कृत्वा च कर्माणि प्र हिंसामो वयं राक्षसान् वरीयः वरीयसः इति । एतदेवाह—आरे इति । दूरे द्वेष्टॄणि रक्षांसि अन्तर्हितानि[1] दधाम । तदर्थम् प्राञ्चः यजमानम् अवसारं प्रति गच्छाम ॥ ५ ॥

मुद्गल० अयमङ्गिरसां संवादः । अद्य अस्मिन् यागदिने नु क्षिप्रम् एतो एत गच्छत । सुध्यः शोभनकर्माणः भवाम । दुच्छुनाः द्विषः प्र मिनवाम प्रकर्षेण हिंसाम[2] वरीयः अत्यन्तमित्यर्थः । तदेवोच्यते—सनुतः सम्भक्तृन्[3] द्वेषांसि यजमानस्य द्वेष्टॄन् आरे दूरे दधाम स्थापयाम । तदर्थम् यजमानम् प्राञ्चः सदागमनम् अवसारम्[4] अच्छ अभिमुखम् अयाम गच्छाम ॥ ५ ॥

इति चतुर्थाष्टके द्वितीयाध्याये षड्विंशो वर्गः ॥

एता धियं कृणवामा सखायोऽप या माताँ ऋणुत व्रजं गोः ।
यया मनुर्विशिशिप्रं जिगाय यया वणिग्वङ्कुरापा पुरीषम् ॥ ६ ॥

आ । [illegible] । धियम् । कृणवाम । सखायः । अप । या । माता । ऋणुत । व्रजम् । गोः ।
यया । मनुः । विशिऽशिप्रम् । जिगाय । यया । वणिक् । वङ्कुः । आप । पुरीषम् ॥ ६ ॥

वेङ्कट० कर्म कर्तुमागच्छत । कृणवाम[5] यत् कर्म हे सखायः !, मातृस्थानीयं यत् कर्म पणिभिरपहृतानां गवाम् व्रजम्[6] अप ऋणोति विवृतद्वारं करोतीत्यर्थः, विशु भक्षणार्थी हनू प्रवेशयतीति विशिशिप्रः नाम कश्चित् असुरः तम् मनुः प्रेरितः[7] येन कर्मणा जिगाय, येन वा असुरः अयमर्[8] वङ्कुः नाम उदकं प्राप्तवान् ॥ ६ ॥

मुद्गल० इदमप्यङ्गिरसां वाक्यम् । आ इत आगच्छत । आगत्य च धियम् स्तुतिम् कृणवाम करवाम । हे सखायः ! परस्परं सखिभूता आङ्गिरसः ! इति अङ्गिरसां वचनम् । या धीः माता गवां निर्मात्री गोः गवाम् व्रजम् पणिभिरपहृतम् अप ऋणुत अपावृणोत् । यया च मनुः विशिशिप्रम् विगतहनुम् शत्रुम् जिगाय जितवान् । यया च वणिक् वाणिज्यात्मकेन कर्मणा बहुकाङ्क्षावान् वङ्कुः जलेच्छया धनगामी पुरीषम् उदकम् आप ॥ ६ ॥

1-1. अन्तर्हितेषि वि°. २. हिंसा मूको. ३. संभक्षणे मूको. ४. अपसा° मूको.
५. कृणवामः ए. ६. व्रजम् ए. ७. पुरिता क; परिता वि° सर्प. ८. मारिता सर्प.

अनूनोदत्र हस्तयतो अद्रिरार्चन् येन दश मासो नवग्वाः ।
ऋतं यती सरमा गा अविन्दद् विश्वानि सत्याङ्गिराश्चकार ॥ ७ ॥

अनूनोत् । अत्र । हस्तऽयतः । अद्रिः । आर्चन् । येन । दश । मासः । नवऽग्वाः ।
ऋतम् । यती । सरमा । गाः । अविन्दत् । विश्वानि । सत्या । अङ्गिराः । चकार ॥ ७ ॥

वेङ्कट० इन्द्रस्य हस्तेन यतः वज्रः गवाम् आरणम् अस्मिन् कर्मणि अनूनोत्, नुदतिः प्रेरणकर्मा, विवृतद्वारमकरोत्। येन कर्मणा आङ्गिरसो गवामयनेन सन्तः दश मासान् अर्चितवन्तः। अथ भिन्नद्वारे शिलोच्चये सत्यभूतं गोधनं प्रति गच्छन्ती सरमा नाम देवशुनी पणिभिरपहृताः गाः अविन्दत्। अथ पणिभिरुत्पादिता माया विनाशयन् सर्वाण्येव सत्यानि अङ्गिराः चकार। यद् यथा दृश्यते तत् तथाविधमेव यथा भवति तथा कृतवानिति ॥ ७ ॥

मुद्गल० अत्र अस्मिन् यज्ञे अद्रिः अभिषवग्रावा हस्तयतः हस्तेन संहतः सन् अनूनोत् अशब्दयत्। येन ग्राव्णा तदभिषवेण[1] दश मासः दशमासपर्यन्तम् नवग्वाः नवगोयुक्ता अङ्गिरसः आर्चन् अपूजयन् इन्द्रम्। ऋतम् यती सत्ये प्राप्नुवती अङ्गिरसां गवार्थमिन्द्रेण प्रहिता सरमा देवशुनी गाः अविन्दत् पणिभिरपहृताः। विश्वानि सर्वाणि स्तुत्यादिलक्षणानि सत्या सत्यानि चकार अङ्गिराः ॥ ७ ॥

विश्वे अस्या व्युषि माहिनायाः सं यद् गोभिरङ्गिरसो नवन्त ।
उत्स आसां परमे सधस्थ ऋतस्य पथा सरमा विदद् गाः ॥ ८ ॥

विश्वे । अस्याः । विऽउषि । माहिनायाः । सम् । यत् । गोभिः । अङ्गिरसः । नवन्त ।
उत्सः । आसाम् । परमे । सधऽस्थे । ऋतस्य । पथा । सरमा । विदत् । गाः ॥ ८ ॥

वेङ्कट० यदा अस्याः उषसो महत्याः व्युच्छने आत्मीयाभिः गोभिः अङ्गिरसः[2] सङ्गता आसन् तदानीम् आसाम् गवाम् उत्सः परमे दूरे स्थानेऽभूत्। ततः सरमा गोधनसाधकेन मार्गेण गत्वा अविदत् गाः नष्टा इति ॥ ८ ॥

मुद्गल० विश्वे सर्वे अङ्गिरसः माहिनायाः मंहनीयायाः अस्याः उषसः व्युषि व्युच्छने सति यत् यदा गोभिः सम् नवन्त संजग्मिरे तदा आसाम् गवाम् उत्सः क्षीराद्युत्स्रावः परमे उत्कृष्टे सधस्थे सहस्थाने यज्ञे तदुपयुक्तोऽभवदित्यर्थः। ऋतस्य सत्यस्य पथा मार्गेण सरमा देवशुनी गाः विदत् अलभत ॥ ८ ॥

आ सूर्यो यातु सप्ताश्वः क्षेत्रं यदस्योर्विया दीर्घयाथे ।
रघुः श्येनः पतयदन्धो अच्छा युवा कविर्दीदयद् गोषु गच्छन् ॥ ९ ॥

1. °षेण मूको. 2. नास्ति मूको.

आ । सूर्यः । यातु । सप्तऽअश्वः । क्षेत्रम् । यत् । अस्य । उर्विया । दीर्घऽयाथे ।
रघुः । श्येनः । पतयत् । अन्धः । अच्छ । युवा । कविः । दीदयत् । गोषु । गच्छन् ॥ ९ ॥

वेङ्कट० यज्ञगृहं प्रति सूर्यः आ गच्छतु सप्ताश्वः यत् अस्य सूर्यस्य[1] क्षेत्रम् विस्तीर्णे[2] दीर्घे मार्गे भवति। आगत्य च अयं[3] लघुः श्येनः भूत्वा सोमलक्षणम् अन्नं प्रति पततु। पीत्वा च युवा कविः दीप्तो भवतु गोषु गच्छन् इति ॥ ९ ॥

मुद्गल० सूर्यः देवः सप्ताश्वः सप्तसंख्याकाश्वोपेतः आ यातु अस्मदभिमुखमागच्छतु, यत् यस्मात् अस्य सूर्यस्य दीर्घयाथे दीर्घगमने क्षेत्रम् गन्तव्यप्रदेशः उर्विया उरु अतिप्रभूतायामः। स एव देवः रघुः लघुगमनः सन् श्येनः शंसनीयगमनः अन्धः दीयमानं हविः अच्छ अभिलक्ष्य पतयत् आगच्छति। युवा सर्वत्र मिश्रयिता कविः क्रान्तदर्शी सन् गोषु रश्मिषु गच्छन् मध्ये वर्तमानः दीदयत् दीप्यते ॥ ९ ॥

आ सूर्यो अरुहच्छुक्रमर्णोऽयुक्त यद्धरितो वीतपृष्ठाः ।
उद्ना न नावमनयन्त धीरा आशृण्वतीरापो अर्वागतिष्ठन् ॥ १० ॥

आ । सूर्यः । अरुहत् । शुक्रम् । अर्णः । अयुक्त । यत् । हरितः । वीतऽपृष्ठाः ।
उद्ना । न । नावम् । अनयन्त । धीराः । आऽशृण्वतीः । आपः । अर्वाक् । अतिष्ठन् ॥ १० ॥

वेङ्कट० आ अरुहत् गमनार्थं दीप्ताः देवताः शुक्रम् उदकम् सूर्यः यदा स्वरथे योजितवान् अश्वाः कान्तपृष्ठाः। "ततः एनम्"[4] उदकेन इव नावम् दीप्तं पारं प्रति अनयन्त धीराः। तदानीं देवानां वचनम् आभिमुख्येन शृण्वत्यः आपः अर्वाक् अतिष्ठन् अपहन्त्यः ॥ १० ॥

मुद्गल० सूर्यः देवः शुक्रम् दीप्तम् अर्णः उदकं प्रति आ अरुहत् सर्वतः प्रादुर्भवति, यत् यस्मात् हरितः अश्वान् वीतपृष्ठाः कान्तपृष्ठान्[5] अयुक्त रथे अयोजयत्। तं सूर्यम् धीराः धीमन्तो यजमानादयः उद्ना उदकेन नावम् न नावमिव अनयन्त। तदा आशृण्वतीः सर्वतः[6] शृण्वानाः कुर्वाणाः आपः अर्वाक् अधस्तात् अतिष्ठन् अभवन् ॥ १० ॥

धियं वो अप्सु दधिषे स्वर्षां ययातरन्दश मासो नवग्वाः ।
अया धिया स्याम देवगोपा अया धिया तुतुर्यामात्यंहः ॥ ११ ॥

धियम् । वः । अप्ऽसु । दधिषे । स्वःऽसाम् । यया । अतरन् । दश । मासः । नवऽग्वाः ।
अया । धिया । स्याम । देवऽगोपाः । अया । धिया । तुतुर्याम । अति । अंहः ॥ ११ ॥

वेङ्कट० युष्माकम् अन्तरिक्षे उदकस्य सम्भजनीयम् धियम् कर्म त्वं धारयसि, येन कर्मणा अङ्गिरसः दश मासान् अतरन्[1]। अनेन कर्मणा त्वया क्रियमाणेन वयं देवैर्गुप्ताः स्याम, तथा अनेनैव कर्मणा पापं च अतितरेम ॥ ११ ॥

१. नास्ति मूको. २. सर्वविस्तीर्णो मार्गो वि॰; सर्वविस्तीर्णे क कर्प. ३. नास्ति ळ. ४-४. तत दिनम् ळ; तत एनम् वि॰; तत दिनात् कर्प. ५. कान्तिपृष्ठान् मूको. ६. सर्वं मूको.

मुद्गल० हे देवाः! वः युष्माकम् धियम् स्तुतिम् अप्सु अब्निमित्ताम्[1] स्वर्षाम् सर्वस्य दात्रीम् दधिषे धारयामि। यया धिया कर्मणा दश मासः नवग्वाः अङ्गिरसः अतरन् सत्रमनुतिष्ठन्तः। अया अनया धिया देवगोपाः देवगुप्ताः स्याम भवेम। अया धिया अंहः पापम् अति तुतुर्याम अतितरेम ॥ ११ ॥

इति चतुर्थाष्टके द्वितीयाध्याये सप्तविंशो वर्गः ॥

[ ४६ ]

हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम् ।
नास्या वश्मि विमुचं नावृतं पुनर्विद्वान् पथः पुरएत ऋजु नेषति ॥ १ ॥

हयः । न । विद्वान् । अयुजि । स्वयम् । धुरि । ताम् । वहामि । प्रऽतरणीम् । अवस्युवम् ।
न । अस्याः । वश्मि । विऽमुचम् । न । आऽवृतम् । पुनः । विद्वान् । पथः । पुरःऽएता ।
ऋजु । नेषति ॥ १ ॥

वेङ्कट० प्रतिक्षत्रः । अश्वः इव विद्वान् अहम् स्वयम् यज्ञधुरि युक्तोऽभवम्, ताम् यज्ञधुरम् वहामि प्रतरणीम् रक्षिकाम्[2] । न अस्याः विमोचनमिच्छामि, न च पुनः आवर्तनम्। प्रतिगमनमार्गान्[3] विद्वान् अकुटिलं नयति पुरोगन्ता ॥ १ ॥

मुद्गल० 'हयो न विद्वान्' इत्यष्टर्चं द्वितीयं सूक्तम्। प्रतिक्षत्र ऋषिः। अष्टमी द्वितीया च त्रिष्टुभौ, शिष्टा जगत्यः। आदितः षट् वैश्वदेव्यः, सप्तम्यष्टम्योर्देवपत्न्यो देवता।

हयः न अश्व इव विद्वान् जानन् प्रतिक्षत्रः स्वयम् अनन्यप्रेरितः सन् धुरि यज्ञात्मिकायाम् अयुजि युक्तोऽभवत्[4]। ताम् धुरम्[5] प्रतरणीम् प्रकर्षेण तारयित्रीम् अवस्युवम् रक्षणम् इच्छन्तीम् वहामि अहमध्वर्युः। अस्याः धुरः विमुचम् विमोचनं परित्यागम् न वश्मि न कामये। न आवृतम् पुनः पुनरावरणं धारणमपि न च वश्मि। विद्वान् मार्गाभिज्ञोऽन्तर्यामी देवः पुरएता पुरोगन्ता सन् पथः यज्ञमार्गान् ऋजु अकुटिलम् नेषति प्रापयति ॥ १ ॥

अग्न इन्द्र वरुण मित्र देवाः शर्धः प्र यन्त मारुतोत विष्णो ।
उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषन्त ॥ २ ॥

अग्ने । इन्द्र । वरुण । मित्र । देवाः । शर्धः । प्र । यन्त । मारुत । उत । विष्णो इति ।
उभा । नासत्या । रुद्रः । अध । ग्नाः । पूषा । भगः । सरस्वती । जुषन्त ॥ २ ॥

वेङ्कट० हे अग्नीन्द्रादयः! मदीयं यज्ञम् प्र गच्छत[6] । मरुतां गणो मारुतः। उभावश्विनौ रुद्रः च देवपत्न्यश्च पूषा च भगः च सरस्वती च सेवन्ताम् इति ॥ २ ॥

---

१. अपां निमित्ताम् मूको. २. रक्षकाम् वि॰ अपं. ३. °मार्गां स एपं. ४. अयुक्तः मूको.
५. धुराम् मूको. ६. °च्छता मूको.

मुद्गल० हे अग्ने! इन्द्र! वरुण! मित्र! देवाः! यूयम् शर्धः बलम् अस्माकम् प्र यन्त प्रापयत। उत अपि च हे मारुत! मारुतानि मरुतां बलानि! हे विष्णो! यूयं शर्धः प्र यन्त। किञ्च उभा उभौ नासत्या सत्यभूतौ[1] रुद्रः च अध अथ ग्नाः एतेषां देवानां स्त्रियश्च पूषा भगः सरस्वती जुषन्त सेवन्ताम् अस्मदीयं यज्ञम् ॥ २ ॥

इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः ।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥ ३ ॥

इन्द्राग्नी इति । मित्रावरुणा । अदितिम् । स्व१रिति स्वः । पृथिवीम् । द्याम् । मरुतः । पर्वतान् । अपः ।
हुवे । विष्णुम् । पूषणम् । ब्रह्मणः । पतिम् । भगम् । नु । शंसम् । सवितारम् । ऊतये ॥ ३ ॥

वेङ्कट० एतानाह्वयामि सवितारम् च शंसनीयम् ॥ ३ ॥

मुद्गल० इन्द्रादिसवित्रन्तान् चतुर्दश देवान् ऊतये अस्मद्रक्षणाय हुवे आह्वयामि। स्वः आदित्यः। नु क्षिप्रम्। शंसम् सवितृविशेषणम् ॥ ३ ॥

उत नो विष्णुरुत वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत् ।
उत ऋभव उत राये नो अश्विनोत त्वष्टोत विभ्वानु मंसते ॥ ४ ॥

उत । नः । विष्णुः । उत । वातः । अस्रिधः । द्रविणःऽदाः । उत । सोमः । मयः । करत् ।
उत । ऋभवः । उत । राये । नः । अश्विना । उत । त्वष्टा । उत । विऽभ्वा । अनु । मंसते ॥ ४ ॥

वेङ्कट० अपि च अस्मभ्यम् विष्णुः 'सुखं करोतु'[2], वातः च अक्षीणः, तथा द्रविणोदाः सोमः च, तथा ऋभवः च। अपि च धनाय अस्माकम् अश्विनौ भवताम्। अपि च त्वष्टा विभ्वा च ऋभुश्रेष्ठः सर्वमिदम् अनु[3] मन्यताम् ॥ ४ ॥

मुद्गल० उत अपि च नः अस्माकम् विष्णुः देवः मयः करत् सुखं करोतु। उत अपि च वातः वायुः अस्रिधः अहिंसकः सन् मयः करत्। उत किञ्च द्रविणोदाः धनस्य दाता सोमः। उत अपि च ऋभवः नः अस्मभ्यम् राये धनाय अनु मंसते अनुमन्यन्ताम्। उत अश्विना अश्विनौ च, उत त्वष्टा देवः, उत विभ्वा ऋभूणामन्यतमो देवः, एते सर्वेऽप्यनुमंसते ॥ ४ ॥

उत त्यन्नो मारुतं शर्ध आ गमद् दिविक्षयं यजतं बर्हिरासदे ।
बृहस्पतिः शर्म पूषोत नो यमद् वरूथ्यं१ वरुणो मित्रो अर्यमा ॥ ५ ॥

उत । त्यत् । नः । मारुतम् । शर्धः । आ । गमत् । दिविऽक्षयम् । यजतम् । बर्हिः । आऽसदे ।
बृहस्पतिः । शर्म । पूषा । उत । नः । यमत् । वरूथ्यम् । वरुणः । मित्रः । अर्यमा ॥ ५ ॥

---

1. सत्यभूतौ मूको. 2-2. मुखम्" वि°. 3. नास्ति मूको.

वेङ्कट० अपि च [illegible] मारुतो वेगः अस्मानागच्छतु दिवि वर्तमानः[1] यष्टव्यः[2] अस्माकम् बर्हिः[3] आसदे[4] ॥५॥

मुद्गल० उत अपि [illegible] त्यत् तत् मारुतम् शर्धः मरुतां बलं सद्यः नः अस्मान् आ गमत् आगच्छतु। कीदृशं शर्धः। दिविक्षयम् द्युलोके वर्तमानम् यजतम् पूज्यम्। किमर्थम् आगमनम्। बर्हिः बर्हिषि आसदे उपवेष्टुम्। उपविश्य हविः स्वीकारार्थेत्यर्थः। किञ्च बृहस्पतिः देवः शर्म सुखम् यमत् यच्छतु। उत नः अस्मभ्यम् पूषा अपि यमत्। कीदृशं शर्म। वरूथ्यम् गृहार्हम्[4]। किञ्च वरुणादयस्त्रयोऽपि प्रत्येकं शर्म यच्छन्तु ॥ ५ ॥

उत त्ये नः पर्वतासः सुशस्तयः सुदीतयो नद्य१स्त्रामणे भुवन् ।
भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः श्रोतु मे हवम् ॥ ६ ॥

उत । त्ये । नः । पर्वतासः । सुऽशस्तयः । सुऽदीतयः । नद्यः । त्रामणे । भुवन् ।
भगः । विऽभक्ता । शवसा । अवसा । आ । गमत् । उरुऽव्यचाः । अदितिः । श्रोतु । मे । हवम् ॥६॥

वेङ्कट० अस्मान् आगच्छतु बलेन च, बहुव्याप्तिः अदितिः च मम आह्वानं शृणोतु ॥ ६ ॥

मुद्गल० उत अपि च त्ये ते पर्वतासः पर्वतवन्तः[5] मरुतः सुशस्तयः शोभनस्तुतयः, किञ्च सुदीतयः सुदानाः नद्यः च त्रामणे पालने नः अस्माकम् भुवन् भवन्तु। भगः देवः विभक्ता धनानां विभागकर्ता दाता सन् शवसा बलेन अवसा रक्षणेन च सह आ गमत् आगच्छतु। उरुव्यचाः प्रभूतव्याप्तिः अदितिः देवमाता मे हवम् स्तुतिम् श्रोतु शृणोतु ॥ ६ ॥

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥ ७ ॥

देवानाम् । पत्नीः । उशतीः । अवन्तु । नः । प्र । अवन्तु । नः । तुजये । वाजऽसातये ।
याः । पार्थिवासः । याः । अपाम् । अपि । व्रते । ताः । नः । देवीः । सुऽहवाः । शर्म । यच्छत ॥७॥

वेङ्कट० देवानाम् पत्न्यः उशत्यः अवन्तु नः, प्र अवन्तु नः अपत्यायान्नलाभाय अन्नाय च। याः पार्थिवासः, याः अपाम् अपि कर्मणि व्रते उद्युक्ताः, ताः नः हे देव्यः! स्वाह्वानाः![6] सुखं प्रयच्छत ॥ ७ ॥

मुद्गल० देवानाम् इन्द्रादीनाम् पत्नीः पत्न्यः उशतीः उशत्योऽस्मदीयं यज्ञं कामयमानाः नः अस्मान् अवन्तु रक्षन्तु। तथा नः अस्माकम् तुजये बलवते पुत्राय वाजसातये अन्नलाभाय अपि प्र अवन्तु प्रकर्षेण रक्षन्तु। याः पार्थिवासः पृथिवीसम्बन्धिन्यः याः च अपाम् उदकानाम् व्रते कर्मण्यन्तरिक्षे वर्तन्ते, ताः हे देवीः! देव्यः! सुहवाः! शोभनाह्वानाः! यूयम् नः अस्मभ्यम् शर्म यच्छत ॥ ७ ॥

१. वर्तमाने रू. २. °व्यम् मूको. ३. पद् वि° लप्तं. ४. नास्ति मूको. ५. °वन्तः मूको.
६. स्वाह्वाना मम रू; स्वह्वाना वि° लप्तं.

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥ ८ ॥

उत । ग्नाः । व्यन्तु । देवऽपत्नीः । इन्द्राणी । अग्नायी । अश्विनी । राट् ।
आ । रोदसी इति । वरुणानी । शृणोतु । व्यन्तु । देवीः । यः । ऋतुः । जनीनाम् ॥ ८ ॥

वेङ्कट० अपि च ग्नाः व्यन्तु देवपत्न्यः इन्द्राणी [1]'इन्द्रस्य पत्नी'[1] अग्नायी अग्नेः पत्नी अश्विनी अश्विनोः पत्नी राट् राजतेः दीप्तिः रोदसी द्यावापृथिवी 'रुद्रस्य पत्नी' इति यास्कः ( ११,४९ ) वरुणानी च वरुणस्य पत्नी शृणोतु । व्यन्तु देव्यः कामयन्ताम् यः ऋतुकालः जायानां सोमपानस्य ॥ ८ ॥

इति षड्विंशमध्यायं व्याख्यातार्येषु कश्चन ।

दक्षिणापथमाश्रित्य वर्तमानेषु माधवः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके द्वितीयोऽध्यायः ॥

मुद्गल० उत अपि च ग्नाः स्त्रियः देवपत्नीः देवपत्न्यः व्यन्तु हविर्भक्षयन्तु । इन्द्राणी इन्द्रस्य पत्नी अग्नायी अग्नेः पत्नी अश्विनी अश्विनोः पत्नी राट् राजमाना । किञ्च रोदसी रुद्रस्य पत्नी वरुणानी वरुणस्य पत्नी आ सर्वतः प्रत्येकम् शृणोतु । किञ्च देवीः पत्नीसंयाजदेव्यः व्यन्तु खादेरन्[2] हविः, यः जनीनाम् देवजायानाम् ऋतुः कालस्तदभिमानी देवोऽपि शृणोतु वेतु च ॥ ८ ॥

इति चतुर्थाष्टके द्वितीयाध्याये अष्टाविंशो वर्गः ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके द्वितीयोऽध्यायः ॥



१-१. रुद्रपत्नी ऋ. २. खादेयं मूको.

'अर्पाय शाक्मोऽ(क:'[१] 'अ)भ्यग्नि हि'[२], 'मो षु णः परापरा'[३] ।
वीप्साविशेष एतेषु द्विरुक्तेरवगम्यते ॥ ११ ॥
अघोऽघो निर्ऋतिर्मोऽस्मान् सर्वथा दुर्हणा[४] वधीत् ।
एवम् 'अभ्यग्नि हीं(हि[२] इ)त्यत्र पुनःपुनरभिक्रमः ॥ १२ ॥
योऽलंकरिष्णुः पुरुषः सतत्तुष्टिः स उच्यते ।
मघवा यज्ञमावं सं पुनःपुनरपोहति ॥ १३ ॥
'इन्द्रावरुण नू नु वांम्'[५] इति नुः[६] पूरणो यथा ।
तद्वत् सर्वानिमानाहुरपरे पादपूरणात् ॥ १४ ॥
उदाहरणमाहुर्यथा प्राचीनामेव पाणिनिः[७] ।
अनुशास्ति द्विर्वचनमिति केचिद्विपश्चितः ॥ १५ ॥ इति ॥

[ ४७ ]

प्रयुञ्जती दिव एति ब्रुवाणा मही माता दुहितुर्बोधयन्ती ।
आविवासन्ती युवतिर्मनीषा पितृभ्य आ सदने जोहुवाना ॥ १ ॥

प्रऽयुञ्जती । दिवः । एति । ब्रुवाणा । मही । माता । दुहितुः । बोधयन्ती ।
आऽविवासन्ती । युवतिः । मनीषा । पितृऽभ्यः । आ । सदने । जोहुवाना ॥ १ ॥

वेङ्कट० प्रतिरथः । कार्येषु मनुष्यान्[८] प्रयुञ्जाना दिवः आगच्छति प्रबुद्धानां शब्दैः शब्दं कुर्वाणा महती माता दुहितृस्थानीयां सुप्रजनां पृथिवीम् बोधयन्ती[९] परिचरन्ती 'मनुष्यान् युवतिः'[१०] उषाः प्रज्ञया पालयितृभ्यो देवेभ्यः तदर्थम् अस्यायतने अग्निहोत्रेण आ हूयमाना ॥ १ ॥

मुद्गल० 'प्रयुञ्जती' इति सप्तर्चं तृतीयं सूक्तम् । प्रतिरथ ऋषिः । त्रिष्टुप् छन्दः । विश्वे देवा देवता ।

एषोपस्था । प्रयुञ्जती प्राणिनः प्रस्तुतेषु कर्मसु दिवः द्युलोकात् एति आगच्छति ब्रुवाणा स्तूयमाना मही महती माता प्रकाशस्य निर्मात्री दुहितुः भूम्याः बोधयन्ती बोधं कुर्वाणा । किञ्च आविवासन्ती परिचरन्ती युवतिः मिश्रयन्ती मनीषा स्तुतिमती पितृभ्यः पितृभिः पालकैः देवैः सह सदने यागगृहे आ सर्वतः जोहुवाना हूयमाना ॥ १ ॥

अजिरासस्तदप ईयमाना आतस्थिवांसो अमृतस्य नाभिम् ।
अनन्तास उरवो विश्वतः सीं परि द्यावापृथिवी यन्ति पन्थाः ॥ २ ॥

---

१. ऋ ५,१४,३. २. ऋ ९,११०,५. ३. ऋ १,३८,६. ४. दुर्हणा मूको. ५. ऋ १, १७,८. ६. नास्ति वि[०] छर्व. ७. पा ८,१,६. ८. मानुष्यान् मूको. ९. बोधयति मूको. १०-१०. ण मर्नान्द् वि[०]; [०]ष्यान् युवति छर्व.

अजिरासः । तत्ऽअपः । ईयमानाः । आतस्थिऽवांसः । अमृतस्य । नाभिम् ।
अनन्तासः । उरवः । विश्वतः । सीम् । परि । द्यावापृथिवी इति । यन्ति । पन्थाः ॥ २ ॥

वेङ्कट० गमनस्वभावाः गमनकर्माणो मनुष्यान् अभिगच्छन्तः अमृतस्य नाभिम् आदित्यम् आतस्थिवांसः[1] बहवो विस्तीर्णाः सर्वत एव द्यावापृथिवी परि यन्ति पतनशीला रश्मयः ॥ २ ॥

मुद्गल० अजिरासः गमनशीलाः तदपः तदेव प्रकाशनरूपं कर्म येषां ते ईयमानाः गच्छन्तः अमृतस्य सूर्यस्य नाभिम् मण्डलम् आतस्थिवांसः आतिष्ठन्तः अनन्तासः अपरिमिताः उरवः व्याप्ताः पन्थाः पतनशीला रश्मयः द्यावापृथिवी विश्वतः सर्वतः परि परितः यन्ति गच्छन्ति । सीम् पूरणः ॥ २ ॥

उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं पितुरा विवेश ।
मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यन्तौ ॥ ३ ॥

उक्षा । समुद्रः । अरुषः । सुऽपर्णः । पूर्वस्य । योनिम् । पितुः । आ । विवेश ।
मध्ये । दिवः । निऽहितः । पृश्निः । अश्मा । वि । चक्रमे । रजसः । पाति । अन्तौ ॥ ३ ॥

वेङ्कट० 'विक्रममाणो[2] वा एष एषां लोकानाम् अन्तान् याति' ( माश ९, १, ३, १८ ) इति वाजसनेयकम् । सेक्ता समुद्रवन्ति अस्माद् आपः आरोचमानः सुपर्णः सवने आदित्येभ्यः प्रत्नस्य पितुः स्तोत्रोत्पत्तिस्थानम् उदयाय आ विशति । मध्ये दिवः निहितः पृश्निवर्णः मणिरिवेत्यौपमिकम् । सोऽयमनुदितो लोकाद् वि चक्रमे, लोकस्य पूर्वापरौ[3] पर्यन्तौ च रक्षति प्रकाशनः ॥ ३ ॥

मुद्गल० सौर्योऽयं तृचः । उक्षा उदकस्य सेक्ता समुद्रः समुन्दनः अरुषः आरोचमानः सुपर्णः सुगमनः पूर्वस्य पूर्वदिगवयवस्य[4] पितुः पालकस्यान्तरिक्षस्य[5] योनिम् उत्पादकमवयवम् आ विवेश आविष्टवान्[6] । पश्चात् दिवः मध्ये निहितः पृश्निः आदित्यः अश्मा सर्वत्र व्याप्तः रजसः अन्तौ अन्तरिक्षस्य अन्तौ पूर्वापरभागौ वि चक्रमे विक्रमते, पाति च जगत् ॥ ३ ॥

चत्वार ईं बिभ्रति क्षेमयन्तो दश गर्भं चरसे धापयन्ते ।
त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान् ॥ ४ ॥

चत्वारः । ईम् । बिभ्रति । क्षेमऽयन्तः । दश । गर्भम् । चरसे । धापयन्ते ।
त्रिऽधातवः । परमाः । अस्य । गावः । दिवः । चरन्ति । परि । सद्यः । अन्तान् ॥ ४ ॥

वेङ्कट० देवाः आदित्यम् बिभ्रति क्षेममस्य कुर्वन्तः । दिशश्च पुत्रभूतं चरणाय स्वरसं धापयन्ति । निधीयमानपर्यायवद्भिः परमाः अस्य रश्मयः दिवः अन्तान् सद्यः परि चरन्ति ॥ ४ ॥

---

१. नाभि मूको. २. विकिरणाः मूको. ३. पूतारौ रू. ४. पूर्वे दिगवयवस्य मूको. ५. °श्यो: मूको. ६. °विक्रान् मूको.

मुद्गल० चत्वारः ऋत्विजः ईम् एनम् आदित्यम् क्षेमयन्तः क्षेममात्मन इच्छन्तः बिभ्रति धारयन्ति हविर्भिः स्तुतिभिश्च । किञ्च दश दिशः अर्भम् गर्भमिव मध्ये उत्पन्नम् एनम् चरसे चरणाय उदयास्तमयव्यवहाराय धापयन्ते स्वरसं पाययन्ति । त्रिधातवः शीतोष्णवर्षभेदेन त्रिविधाः अस्य आदित्यस्य परमाः उत्कृष्टाः गावः रश्मयः दिवः अन्तरिक्षस्य अन्तान् परि परितः सद्यः उदयानन्तरमेव चरन्ति गच्छन्ति ॥ ४ ॥

इदं वपुर्निवचनं जनासश्चरन्ति यन्नद्यस्तस्थुरापः ।
द्वे यदीं बिभृतो मातुरन्ये इहेह जाते यम्या सबन्धू ॥ ५ ॥

इदम् । वपुः । निऽवचनम् । जनासः । चरन्ति । यत् । नद्यः । तस्थुः । आपः ।
द्वे इति । यत् । ईम् । बिभृतः । मातुः । अन्ये इति । इहऽइह । जाते इति । यम्या । सबन्धू इति सऽबन्धू ॥ ५ ॥

वेङ्कट० इदम् अस्य रूपम् आभिमुख्येन[1] वक्तव्यम् हे जनाः! । यद् इदम् अस्मिन् आपः तिष्ठन्ति, निश्चरन्ति च तस्मात् नद्यः । यत् चैनम् मातुः अन्ये बिभृतः[3] अहोरात्रे अत्र चात्र च सर्वम् मातुर्भूते मिथुनभूते समानबन्धने ॥ ५ ॥

मुद्गल० जनासः! हे जनाः! ऋत्विजः! इदम् पुरतो दृश्यमानम् वपुः शरीरं मण्डलम् निवचनम् स्तुत्यम् भवतीति शेषः । यत् मण्डलम् उपजीव्य नद्यः चरन्ति प्रवहन्ति । आपः च यत् मण्डलम् अधि तस्थुः । ईम् एतदुदकलक्षणम् यत् मण्डलम् द्वे अहोरात्रे मातुः मातृस्थानीयात् अन्तरिक्षात् अन्ये देहे इह च इह च सूर्ये जाते निष्पन्ने यम्या यम्ये नियमनीये सबन्धू समानबन्धने बिभृतः धारयतः ॥ ५ ॥

वि तन्वते धियो अस्मा अपांसि वस्त्रा पुत्राय मातरो वयन्ति ।
उपप्रक्षे वृषणो मोदमाना दिवस्पथा वध्वो यन्त्यच्छ ॥ ६ ॥

वि । तन्वते । धियः । अस्मै । अपांसि । वस्त्रा । पुत्राय । मातरः । वयन्ति ।
उपऽप्रक्षे । वृषणः । मोदमानाः । दिवः । पथा । वध्वः । यन्ति । अच्छ ॥ ६ ॥

वेङ्कट० वि तन्वते ध्यातारः अस्मै कर्माणि । तेजांसि पुत्राय दिशः वयन्ति । उपपर्चनाय मनुष्यान् अभिगच्छन्ति मोदमानाः "आदित्यात् अस्मात् मार्गेण"[4] नद्यः इत्यभिप्रायम् ॥ ६ ॥

मुद्गल० अस्मै सूर्याय धियः स्तुतीः अपांसि कर्माणि च वि तन्वते विस्तारयन्ति यजमानाः । पुत्राय पुत्रस्थानीयाय मातरः निर्माण्य उषसः वस्त्रा वस्त्राणि तेजांसि वयन्ति निष्पादयन्ति ।

---

1. रमन्ति मूको. 2. "स्येन च वि". 3. बिभ्रतः मूको. 4-4. आदित्यः परस्परमा° वि°; आदित्या भस्वद्" द्र°.

वृषणः सेक्तुः सूर्यस्य उपश्लेषे उपसर्पणे सम्पर्के सति मोदमानाः हृष्यन्तः मध्वः मधूदधानीया रश्मयः दिवः यथा सूर्यसम्बन्धिना[1] मार्गेण अच्छ अस्मदभिमुखम् यन्ति गच्छन्ति प्रसरन्ति ॥ ६ ॥

तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ७ ॥

तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शम् । योः । अस्मभ्यम् । इदम् । अस्तु । शस्तम् ।
अशीमहि । गाधम् । उत । प्रतिऽस्थाम् । नमः । दिवे । बृहते । सदनाय ॥ ७ ॥

वेङ्कट० तत् अस्तु हे मित्रावरुणौ!, तत् अग्ने!। किमित्याह—अस्माभिः शस्तम्[2] इदं सूक्तम्। अस्मभ्यम् शम् च योः च अस्तु तदुभयं करोतु। वयम् अशीमहि [3]'उदकमध्यस्थलम् अपि'[3] च प्रतिष्ठाम्। नमः आदित्याय महते सर्वेषां वासयित्रे ॥ ७ ॥

मुद्गल० अत्र लिङ्गोक्ता देवताः। हे मित्रावरुणा! मित्रावरुणौ! तत् इदम् सूक्तम् शस्तम् स्तुतम् अस्तु भवतु। हे अग्ने! तत् एतत् सूक्तं शस्तम् अस्तु। अस्मभ्यम् शम् सुखाय योः दुःखानाम-मिश्रणाय च इदम् शस्तम् अस्तु। वयं च अशीमहि प्राप्नुयाम गाधम् स्थितिम्। उत अपि प्रतिष्ठाम् स्थितेरप्यधिकस्थितिम् अशीमहि। नमः नमस्कारः दिवे द्योतमानाय सूर्याय बृहते महते सादनाय आश्रयाय विश्वस्य ॥ ७ ॥

इति चतुर्थाष्टके तृतीयाध्याये प्रथमो वर्गः ॥

[ ४८ ]

कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम् ।
आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी ॥ १ ॥

कत् । ऊँ इति । प्रियाय । धाम्ने । मनामहे । स्वऽक्षत्राय । स्वऽयशसे । महे । वयम् ।
आऽमेन्यस्य । रजसः । यत् । अभ्रे । आ । अपः । वृणाना । विऽतनोति । मायिनी ॥ १ ॥

वेङ्कट० प्रतिभानुः। कदा वयम् खलु प्रियाय तेजसे स्तुतिं कुर्मः स्वबलाय [4]'स्वकीयायै महत्यै'[4]। सर्वतो मातव्यस्य[5] अन्तरिक्षस्य यत् तेजः ऐन्द्रं विद्युद्रूपेण परिणतम्, 'विद्युदेवेन्द्रः' ( तु. माश ११, ६,३,९ ) इति वाजसनेयकम्, उदकानि प्रार्थयन्ती कुर्वती माध्यमिका वाक् अभ्रे विस्तारयति ॥ १ ॥

मुद्गल० 'कदु प्रियाय' इति पञ्चर्चं चतुर्थं सूक्तम्। प्रतिभानुर्नाम आत्रेय ऋषिः। जगती छन्दः। विश्वे देवा देवता।

---

१. सम्° मूको. २. शस्तम् मूको. ३-३. उदकमध्ये स्थ° वि². ४-४. स्वमहदिम कीर्तिः वे लपं; स्वमहदिम कीर्त्य. वे वि². ५. मातव्यस्य वि² लपं.

मुद्गल० अत्र वैद्युताग्निसंस्तवः। कत् कदा। उ पूरणः। प्रियाय सर्वेषां प्रियभूताय धाम्ने तेजसे वैद्युताय स्वक्षत्राय स्वभूतबलाय स्वयशसे स्वभूतान्नाय, सर्वसम्पन्नं ह्यस्य स्वम्[1], महे महते वयम् कदा मनामहे स्तवाम। यत् या आग्नेयी ऋक्तिः आमेन्यस्य समन्तान्मातव्यस्य रजसः अन्तरिक्षस्य सम्बन्धिनि अभ्रे मेघे वा मेघस्योपरि अपः उदकानि वृष्टिलक्षणानि वितनोति विस्तारयति वृणाना आच्छादयन्ती मायिनी प्रज्ञावती। यत् यस्य सम्बन्धिनी 'माध्यमिका वागिति वा योज्यम्' ॥ १ ॥

ता अंत्नत व॒युनं॑ वी॒रव॑क्षणं समा॒न्या वृ॒तया॒ विश्व॒मा रजः॑ ।
अपो॑ अपा॒चीरप॑रा॒ अपे॑जते॒ प्र पूर्वा॑भिस्तिरते देव॒युर्जनः॑ ॥ २ ॥

ताः । अत्न॒त॒ । व॒युन॑म् । वी॒रऽव॑क्षणम् । स॒मा॒न्या । वृ॒तया॑ । विश्व॑म् । आ । रजः॑ ।
अपो॒ इति॑ । अपा॒चीः । अप॑राः । अप॑ । ई॒ज॒ते॒ । प्र । पूर्वा॑भिः । ति॒र॒ते॒ । दे॒व॒ऽयुः । जनः॑ ॥२॥

वेङ्कट० उषसः आ तन्वन्ति ज्ञानसाधनं तेजः, येन कर्मसु युक्तो वीरो जन उह्यते। समान्या छादयित्र्या दीप्त्या सर्वं लोकम् आतन्वन्ति। तत्र देवकामः जनः पूर्वाः उषसः 'अप गमयति[2] पराङ्मुखीः', वर्धते च आगताभिः कर्मयोग्याभिः। उषस्यागतायां कर्मपरो लोकः[2] आसीद् इति ॥ २ ॥

मुद्गल० इयमनुपदथा। ताः उषसः अत्नत विस्तारयन्ति[3]। किम्। वयुनम् ज्ञानम्। कीदृशम्। वीरवक्षणम् वीरैर्मर्दिवितिभिर्वहनीयम्। किञ्च समान्या एकरूपया वृतया आवरकया दीप्त्या विश्वम् सर्वमपि रजः जगत् आवृतम्। एवं सति देवयुः देवकामः जनः अपाचीः अपाञ्चनाः प्रतिनिवृत्तमुखीः अपराः अन्या आगामिनीः उषसः अप ईजते अपगमयति। अपरः अप-शब्दः पूरणः। पूर्वाभिः ताभिः प्र तिरते प्रवर्धयति स्वमभीष्टं वर्धते वा स्वयम् ॥ २ ॥

आ ग्राव॑भिरह॒न्ये॑भिर॒क्तुभि॒र्वरि॑ष्ठं॒ वज्र॒मा जि॑घर्ति मा॒यिनि॑ ।
श॒तं वा॒ यस्य॑ प्र॒चर॒न्त्स्वे दमे॑ संव॒र्तय॑न्तो॒ वि च॑ वर्तय॒न्नहा॑ ॥ ३ ॥

आ । ग्राव॑ऽभिः । अ॒ह॒न्ये॑भिः । अ॒क्तुऽभिः॑ । वरि॑ष्ठम् । वज्र॑म् । आ । जि॒घ॒र्ति॒ । मा॒यिनि॑ ।
श॒तम् । वा॒ । यस्य॑ । प्र॒ऽचर॑न् । स्वे । दमे॑ । स॒म्ऽव॒र्तय॑न्तः । वि । च॒ । व॒र्तय॑न् । अहा॑ ॥ ३ ॥

वेङ्कट० अभिषवग्रावभिः अह्नि भवैः सोमाद्यैः आ[4] प्रीयमाणः इन्द्रः वरिष्ठम् वज्रम् अभिमुखं पातयति मायायुक्ते शत्रौ। शतम् अपि यजमानाः यस्य स्वेस्वे दमे प्रचरन्ति सत्रेषु अहानि संगमयन्तः, एकाहानामनुष्ठानाद् वि च वर्तयन् ॥ ३ ॥

मुद्गल० अत्र पूर्वार्धे इन्द्र उच्यते, उत्तरार्धे इन्द्रात्मा सूर्यः। आ हूयत इति शेषः। कैः। अहन्येभिः अहनि सम्पादितैः अक्तुभिः रात्रिभिः। तत्र निष्पन्नैरित्यर्थः। ग्रावभिः ग्रावसाध्यैः अभिषवैर्निमित्तभूतैः[5]। आगत्य सोमी सन् मायिनि वृत्रे निमित्ते सति वरिष्ठम् वस्तारम् वज्रम् आ

१. नास्ति मूको. २-२. नास्ति मूको. ३-३. अवगमयन्ति वि[4] लपं; अप गमयन्ति ग्र. ४. नास्ति ए एपं. ५. विन्वन्ति मूको. ६. "यवनि" मूको.

सर्वतः जिघर्ति दीपयति च । वा धार्ये । यस्य इन्द्रात्मकादित्यस्य शतम् शतसंख्याकाः रश्मयः स्वे दमे स्वकीये गृहे आकाशे प्रचरन् प्रचरन्ति । किं कुर्वन्तः । संवर्तयन्तः प्राणिनो नाशयन्तः । वि च वर्तयन् अहा अहानि निवर्तयन्ति गतानि एव पुनः प्रापयन्ति च ॥ ३ ॥

तामस्य रीतिं परशोरिव प्रत्यनीकमख्यं भुजे अस्य वर्पसः ।
सचा यदि पितुमन्तमिव क्षयं रत्नं दधाति भरहूतये विशे ॥ ४ ॥

ताम् । अस्य । रीतिम् । परशोःऽइव । प्रति । अनीकम् । अख्यम् । भुजे । अस्य । वर्पसः ।
सचा । यदि । पितुमन्तम्ऽइव । क्षयम् । रत्नम् । दधाति । भरऽहूतये । विशे ॥ ४ ॥

वेङ्कट० ताम्[1] अस्य युद्धे गमनमार्गमरण्ये परशोः इव मार्गम् प्रति पश्यामि, तथा अनीकम् च अस्य मरुल्लक्षणं रक्षणायागतं प्रति पश्यामि शत्रूनाच्छादयतः । सह यदि अन्नवन्तम् इव गृहं रत्नम् प्रयच्छति या '[2]विश् इन्द्र'[2] संग्रामार्थमाह्वयति तस्यै विशे । यदि साहाय्यं कर्तुम् आगच्छति, शत्रून् विनाशयतीति ॥ ४ ॥

मुद्गल० इयमतसेयी । ताम् प्रसिद्धाम् अस्य अग्नेः रीतिम् स्वभावम् परशोः इव प्रति परशोः प्रतिबिम्बमिव पश्यामि । परशुः यथा स्वस्वामिनोऽभिमतं साधयति तद्वत् । अस्य वर्पसः रूपवतोऽस्यादित्यस्य अनीकम् रश्मिसमूहम् भुजे भोगाय अहम् कथयाम्यहम् । यदि यस्मात् स च देवः सचा अस्मत्सहायः सन् पितुमन्तम् अन्नवन्तम् क्षयम् इव निवासमिव भरहूतये संग्रामे आह्वानयुक्ताय विशे यजमानाय रत्नम् रमणीयं धनम् दधाति धारयति ॥ ४ ॥

स जिह्वया चतुरनीक ऋञ्जते चारु वसानो वरुणो यतन्नरिम् ।
न तस्य विद्म पुरुषत्वता वयं यतो भगः सविता दाति वार्यम् ॥ ५ ॥

सः । जिह्वया । चतुःऽअनीकः । ऋञ्जते । चारु । वसानः । वरुणः । यतन् । अरिम् ।
न । तस्य । विद्म । पुरुषत्वता । वयम् । यतः । भगः । सविता । दाति । वार्यम् ॥ ५ ॥

वेङ्कट० सः वरुणः काकुदेन अङ्के सक्तः चतुरनीकः यस्य[3] रश्मयोऽनीकानि चतसृष्वपि दिक्षु स्थितानि जगत् प्रसाधयति चारु उदकमाच्छादयन् हिंसन् शत्रुम्[4] । न वसुपायम् वयम् पौरुषेण जानीमः, येनोपायेन '[5]रत्नं प्रददौ'[5] भगः, सविता च रत्नं प्रददौ, भगः सविता च रत्नं प्रयच्छतः ॥ ५ ॥

मुद्गल० सः अग्निः चतुरनीकः चतुर्दिक्षु प्रसृतज्वालः सन् जिह्वया ऋञ्जते घृतादिकं गच्छति । किं कुर्वन् । चारु रमणीयं तेजः वसानः आच्छादयन् वरुणः तमोवारकः सन् अरिम् अमित्रम्

---

१. उत् ल. २-२. विभिन्द्रं मूको. ३. तस्य मूको. ४. शत्रून् ल का. ५-५. रत्नप्रदौ मूको.

यतन् उद्धरन् तस्य तमित्यर्थः । तम् न विद्म वयं जानीमः वयं पुरुपत्मता पुरुषत्वेन युक्तम्, यतः अयम् भगः महान् भजनीयः सविता प्रेरकः दाति यच्छति वार्यम् वरणीयं धनम् ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये द्वितीयो वर्गः ॥

[ ४९ ]

देवं वो अद्य सवितारमेषे भगं च रत्नं विभजन्तमायोः ।
आ वां नरा पुरुभुजा ववृत्यां दिवेदिवे चिदश्विना सखीयन् ॥ १ ॥

देवम् । वः । अद्य । सवितारम् । आ । ईषे । भगम् । च । रत्नम् । विऽभजन्तम् । आयोः ।
आ । वाम् । नरा । पुरुऽभुजा । ववृत्याम् । दिवेऽदिवे । चित् । अश्विना । सखिऽयन् ॥ १ ॥

वेङ्कट० प्रतिप्रभः । देवम् युष्माकम् अद्य सवितारम् आ गमयामि, तथा भगम् च देवं मनुष्यस्य रत्नम् विभजन्तम् ॥ १ ॥

मुद्गल० 'देवं वः' इति षडृचं पञ्चमं सूक्तम् । आत्रेयः प्रतिप्रभ ऋषिः । त्रिष्टुप् छन्दः ।
विश्वे देवा देवता ।

देवम् द्योतमानम् सवितारम् सर्वस्याभ्यनुज्ञातारम् वः स्वाम् [1]इत्यर्थः । यद् वा होतारिदं वाक्यम् । वः [2]यजमानेभ्यो युष्मदर्थाय अद्य इदानीम् आ ईषे उपगच्छामि, भगम् च भजनीयं देवम् आयोः मनुष्यस्य यजमानस्य रत्नम् रमणीयं हविः विभजन्तम् । हे नरा! नेतारौ! पुरुभुजा! पुरुभुजौ! अश्विना! अश्विनौ! वाम् युवाम् दिवेदिवे प्रतिदिवसम् आ ववृत्याम् आवर्तयाम्यस्मदभिमुखम् सखीयन् युवयोः सखित्वमिच्छन् । चित् पूरणः ॥ १ ॥

प्रति प्रयाणमसुरस्य विद्वान्त्सूक्तैर्देवं सवितारं दुवस्य ।
उप ब्रुवीत नमसा विजानञ्ज्येष्ठं च रत्नं विभजन्तमायोः ॥ २ ॥

प्रति । प्रऽयानम् । असुरस्य । विद्वान् । सुऽउक्तैः । देवम् । सवितारम् । दुवस्य ।
उप । ब्रुवीत । नमसा । विऽजानन् । ज्येष्ठम् । च । रत्नम् । विऽभजन्तम् । आयोः ॥ २ ॥

वेङ्कट० ... ... ... ... ... ॥ २ ॥

मुद्गल० असुरस्य शत्रूणां निरसितुः प्रति प्रयाणम् प्रत्यागतिम् विद्वान् जानन् सूक्तैः सवितारम् देवम् दुवस्य परिचर हे अन्तरात्मन्! । किञ्च आयोः मनुष्यस्य ज्येष्ठम् रत्नम् धनम् च विभजन्तम् गमयन्तमित्यर्थः नमसा नमस्कारेण विजानन् विशेषेण भावयन्नित्यर्थः उप ब्रुवीत [3]स्तौतु भवान् ॥ २ ॥

1. नास्ति मूको. 2-2. नास्ति मूको. 3. स्तोतुं मूको.

अदत्रया दयते वार्याणि पूषा भगो अदितिर्वस्त उस्रः ।
इन्द्रो विष्णुर्वरुणो मित्रो अग्निरहानि भद्रा जनयन्त दस्माः ॥ ३ ॥

अदत्रऽया । दयते । वार्याणि । पूषा । भगः । अदितिः । वस्ते । उस्रः ।
इन्द्रः । विष्णुः । वरुणः । मित्रः । अग्निः । अहानि । भद्रा । जनयन्त । दस्माः ॥ ३ ॥

वेङ्कट० अदत्रया प्रयच्छति धनानि पूषा भगः अदितिः च । वस्ते तेजांसि उत्सरणशीलः । शिष्टं स्पष्टम् ॥ ३ ॥

मुद्गल० अयमग्निः अदत्रया अदनीयानि वार्याणि वरणीयानि काष्ठानि दयते दहति । कीदृशोऽग्निः । पूषा पोषकः[1] भगः भजनीयः अदितिः अखण्डनीयः । उस्रः सूर्यः वस्ते आच्छादयति । सामर्थ्याद् तेजांसि । इन्द्रादयः पञ्चापि देवाः दस्माः दर्शनीयाः अहानि सर्वाण्यागन्तूनि भद्रा शोभनानि जनयन्त जनयन्ति । दिवसानां यागदानादिविशिष्टत्वमेव भद्रत्वम् ॥ ३ ॥

तन्नो अनर्वा सविता वरूथं तत् सिन्धव इषयन्तो अनु ग्मन् ।
उप यद् वोचे अध्वरस्य होता रायः स्याम पतयो वाजरत्नाः ॥ ४ ॥

तत् । नः । अनर्वा । सविता । वरूथम् । तत् । सिन्धवः । इषयन्तः । अनु । ग्मन् ।
उप । यत् । वोचे । अध्वरस्य । होता । रायः । स्याम । पतयः । वाजऽरत्नाः ॥ ४ ॥

वेङ्कट० तत्[2] अस्मभ्यम् अशत्रुः सविता वरणीयम् अनु गच्छतु, नद्यश्च गच्छन्तु[3] । यत् अध्वरस्य[4] होता अस्मदर्थम् उप ब्रवीति । किं तत् । धनस्य पतयो वयम् स्याम रमणीयान्नाः ॥ ४ ॥

मुद्गल० तत् प्रसिद्धम् वरूथम् वरणीयम् अस्मदभिमतम् धनम् नः अस्मभ्यम् अनर्वा अतिरस्कृतः[5] सविता प्रयच्छत्विति शेषः । तत् धनम् सिन्धवः स्यन्दनशीलाः इषयन्तः गच्छन्तो[6] नद्यः अनु[7] अनुसृत्य ग्मन् गच्छन्तु[8] । धन दातुं गच्छन्त्वित्यर्थः । यत् यस्मात् अध्वरस्य यागस्य होता होमनिष्पादकोऽहम् उप वोचे उपेत्य ब्रवीमि, तस्मात् तत् प्रयच्छन्त्विति शेषः । वयं च रायः धनस्य बहुविधस्य पतयः स्वामिनः स्याम भवेम वाजरत्नाः अन्नरत्नाः ॥ ४ ॥

प्र ये वसुभ्य ईवदा नमो दुर्ये मित्रे वरुणे सूक्तवाचः ।
अवैत्वभ्वं कृणुता वरीयो दिवस्पृथिव्योरवसा मदेम ॥ ५ ॥

प्र । ये । वसुऽभ्यः । ईवत् । आ । नमः । दुः । ये । मित्रे । वरुणे । सूक्तऽवाचः ।
अव । एतु । अभ्वम् । कृणुत । वरीयः । दिवःपृथिव्योः । अवसा । मदेम ॥ ५ ॥

---

१. पोषः मूको. २. तत् ह लपं. ३. °न्तः मूको. ४. यागस्य मूको. ५. अतिरतः मूको.
६. गच्छन्ते मूको. ७. नास्ति मूको. ८. गच्छन्तम् मूको.

वेङ्कट० प्र यच्छन्ति ये वसुभ्यः गमनवत् अश्वं पशुम्, ये च मित्रावरुणयोः सूक्तं वदन्ति, ते वयं द्यावापृथिव्योः रक्षणेन[1] मादेम । तेषाम् अस्माकम् अपगच्छतु महत् अन्धकारम् । कुरुत च विस्तृतं तेजः हे देवाः! ॥ ५ ॥

मुद्गल० ये यजमानाः वसुभ्यः देवेभ्यः ईवत गमनवत् नमः अश्वं पश्वात्मकम् दुः अदुः, ये च मित्रे देवे वरुणे च सूक्तवाचः सूक्तवचसो भवन्ति, तान् अस्मान्[2] अभ्वम् महद् धनम् अव एतु अवगच्छतु । हे देवाः! कृणुत कुरुत एतेभ्यः वरीयः उरुतरं सुखम् । दिवस्पृथिव्योः अवसा रक्षणेन प्र आ मदेम हृष्येम ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये तृतीयो वर्गः ॥

[ ५० ]

विश्वो॑ दे॒वस्य॑ ने॒तुर्मर्तो॑ वुरीत स॒ख्यम् ।
विश्वो॑ रा॒य इ॑षुध्यति द्यु॒म्नं वृ॑णीत पु॒ष्यसे॑ ॥ १ ॥

विश्वः॑ । दे॒वस्य॑ । ने॒तुः । मर्तः॑ । वु॒रीत॒ । स॒ख्यम् ।
विश्वः॑ । रा॒ये । इ॒षु॒ध्य॒ति॒ । द्यु॒म्नम् । वृ॒णी॒त॒ । पु॒ष्यसे॑ ॥ १ ॥

वेङ्कट० स्वस्त्यात्रेयः[3] । विश्वः मनुष्यः देवस्य नेतुः सख्यम् वृणीते । विश्वः येन धनार्थमिच्छति । विश्वश्च सम्पत् वृणीते अस्मात् । त्वं च तत्[4] सर्वं विश्वस्मै पुष्यसि हे सवितः! इति ॥ १ ॥

मुद्गल० 'विश्वो देवस्य' इति पञ्चर्चं षष्ठं सूक्तम् । स्वस्त्यात्रेयमुनिः ऋषिः । पञ्चमी पङ्क्तिः, आद्याश्चतस्रोऽनुष्टुभः । विश्वे देवा देवता ॥

देवस्य द्योतमानस्य नेतुः प्रापकस्य सवितुः सख्यम् वुरीत मर्तः विश्वः वृणीत मर्तः मरणधर्मात्मकः सर्वो जनः । राये धनस्य इषुध्यति ईर्सीत[5] तस्यानुग्रहात् विश्वः, सर्वो जनः द्युम्नम् धनम् वृणीत पुष्यसे पुष्ट्यै ॥ १ ॥

ते ते॑ देव नेत॒र्ये चे॒माँ अ॑नु॒शसे॑ । ते रा॒या ते ह्या॒३॒॑पृचे॒ सचे॑महि सच॒थ्यैः॑ ॥२॥

ते । ते॒ । दे॒व॒ । ने॒त॒रिति॑ । ये । च॒ । इ॒मान् । अ॒नु॒ऽशसे॑ ।
ते । रा॒या । ते । हि । आ॒ऽपृचे॑ । सचे॑महि । स॒च॒थ्यैः॑ ॥ २ ॥

वेङ्कट० एव ते वयम् त्वभूताः देव! नेतः! ये च इमान्[6] धनकामा अनुशसितुम् आशंसितुम् उपतिष्ठन्ति, ते उभये वयं धनेन संपृक्ता भवामः । ते हि आपर्चनाय योग्याः, तथा[7] सति सेवनीयैः धनैः संसृष्टा भवाम इति ॥ २ ॥

१. रक्षणे मूको. २. °स्मान् ते मूको. ३. स्वस्त्यात्रेयम् वि° अर्प. ४ नास्ति क. ५. ईर्से मूको. ६. नास्ति क ख्र. ७. तथा तथा वि° अर्प.

मुद्गल० हे नेतः! देव! ते तव स्वभूताः ते वयं यजमानाः ये च इमान् इमे होत्रादयः अनुशंसे शंसितुं प्रभवन्ति तेऽपि त्वदीयाः[1] सन्तु। ते उभये वयम् राया धनेन सचेमहि इति सम्बन्धः। ते हि ते खलु आवृचे आपर्चनीयाः सचध्यैः सर्वैः कामैः सचेमहि सङ्गच्छेमहि ॥ २ ॥

अतो न आ नॄनतिथीनतः पत्नीर्दशस्यत। आरे विश्वं पथेष्ठां द्विषो युयोतु यूयुविः ॥३॥

अतः। नः। आ। नॄन्। अतिथीन्। अतः। पत्नीः। दशस्यत।
आरे। विश्वम्। पथेऽस्थाम्। द्विषः। युयोतु। युयुविः ॥ ३ ॥

वेङ्कट० अस्माद् धनात् अस्माकं दासान् अतिथीन् पत्नीः च आभिमुख्येन प्रयच्छत हे देवाः!। धने सम्भवति सर्वे एव ते भवन्ति। दूरे विश्वम् मार्गवर्तिनं स्तेनम् शत्रूंश्च पृथक्करोतु पृथक्करणशीलः सविता पूषा वा ॥ ३ ॥

मुद्गल० अतः अस्मिन् यज्ञे पत्नीः देवानां पत्नीरपि दशस्यत हविषा परिचरत। नः अस्माकमृत्विजो नॄन् अतिथीन् अतः वहून् पूज्यान् देवान् आ दशस्यत सर्वतः परिचरत। आरे दूरे विश्वम् सर्वं पथेष्ठाम् मार्गे वर्तमानं वैरिणम् द्विषः अस्मानपि द्वेष्टॄन् युयोतु पृथक्करोतु सविता युयुविः सर्वस्यामिश्रयिता[2] पृथक्कर्ता ॥ ३ ॥

यत्र वह्निरभिहितो दुद्रवद् द्रोण्यः पशुः। नृमणा वीरपस्त्योऽर्णा धीरेव सनिता ॥४॥

यत्र। वह्निः। अभिऽहितः। दुद्रवत्। द्रोण्यः। पशुः।
नृऽमनाः। वीरऽपस्त्यः। अर्णा। धीराऽइव। सनिता ॥ ४ ॥

वेङ्कट० यत्र अग्निः अध्वर्युभिः अभिहितः द्रवति उत्तरवेदिं प्रति[3] द्रोण्यः पशुः इत्यौपमिकम्, द्रोणदुग्धा धेनुरिव अग्निः। तत्र नृषु सुष्ठु[4] मनोऽस्य सवितुः [5]वीरवृक्तो गृहोऽस्य[5] उदकानि दाता भवति, यथा धीरा स्त्री[6] स्तन्यं कुमाराय प्रयच्छति ॥ ४ ॥

मुद्गल० यत्र यस्मिन् यज्ञे वह्निः यज्ञस्य वोढा अभिहितः यूपं प्रापितः द्रोण्यः यूपार्हः पशुः दुद्रवत् यूपं प्रति गच्छति तत्र नृमणाः यजमानमनाः सविता वीरपस्त्यः वीराः ऋत्विग्यजमानाः तद्वत्पस्त्यं गृहं यस्य तादृशः सनिता सम्भक्ता भवति। अर्णा अरणकुशला धीरेव योषिदिव इष्टान्यभिलक्ष्य सनिता भवति ॥ ४ ॥

एष ते देव नेता रथस्पतिः शं रयिः।
शं राये शं स्वस्तय इषःस्तुतो मनामहे देवस्तुतो मनामहे ॥ ५ ॥

---

1. मदीया मूको. 2. "स्वयि" मूको. 3. नास्ति ल लपं. 4. नास्ति ल. 5-5. वीरवृक्तगृहोऽस्य वि[1] लपं. 6. नास्ति वि[1] लपं.

एषः । ते । देव । नेतरिति । रथऽपतिः । शम् । रयिः ।
शम् । राये । शम् । स्वस्तये । इषःऽस्तुतः । मनामहे । देवऽस्तुतः । मनामहे ॥ ५ ॥

वेङ्कट० एषः ते देव! नेतः! सवितः! स्वामी रथानाम् रयिः सुखकृत् भवति । शम् सुखस्य कर्तारं धनार्थं भजामहे शम्[1] अविनाशाय [2]इषः स्तुवन्तः[2] [3]देवान् स्तुवन्तः[3] ॥ ५ ॥

मुद्गल० हे नेतः! देव! सवितः! ते तव एषः रथःपतिः सर्वस्य पालकः रयिः दातव्यधनवान् शम्, करोत्विति शेषः । राये धनाय शम् सुखाय स्वस्तये अविनाशाय इषःस्तुतः एषणीयस्य सवितुः स्तोतारः वयम् मनामहे स्तुमः । देवस्तुतः देवानां स्तोतारः मनामहे स्तुमः ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये चतुर्थो वर्गः ॥

[ ५१ ]

अग्ने सुतस्य पीतये विश्वैरूमेभिरा गहि । देवेभिर्हव्यदातये ॥ १ ॥

अग्ने । सुतस्य । पीतये । विश्वैः । ऊमेभिः । आ । गहि । देवेभिः । हव्यऽदातये ॥ १ ॥

वेङ्कट० अग्ने![4] सोमस्य पानाय विश्वैः पितृभिः[5] देवैः आ गच्छ हव्यदातये[6] । 'यजमानो वै हव्यदातिः' ( माश २, ४, १, २४ ) इति ब्राह्मणम् ॥ १ ॥

मुद्गल० 'अग्ने सुतस्य' इति पञ्चदशर्चं सप्तमं सूक्तम् । स्वस्त्यात्रेयः ऋषिः । आदितश्चतस्रो गायत्र्यः, पञ्चम्याद्याः षड् उष्णिहः, एकादश्याद्याः तिस्रो जगत्यः त्रिष्टुभो वा, चतुर्दशीपञ्चदश्यौ अनुष्टुभौ । विश्वे देवा देवता ।

हे अग्ने! त्वम् सुतस्य पीतये सोमपानाय विश्वैः ऊमेभिः ऊमैः सर्वैरपि रक्षकैः देवेभिः देवैः इन्द्रादिभिः सह हव्यदातये अस्माकं हविर्दानाय आ गहि आगच्छ ॥ १ ॥

ऋतधीतय आ गत सत्यधर्माणो अध्वरम् । अग्नेः पिबत जिह्वया ॥ २ ॥

ऋतऽधीतयः । आ । गत । सत्यऽधर्माणः । अध्वरम् । अग्नेः । पिबत । जिह्वया ॥ २ ॥

वेङ्कट० हे सत्यबुद्धयः! सत्यकर्माणः! आ गच्छत यज्ञम् । अग्नेः[7] जिह्वया पिबत सोमम् ॥ २ ॥

मुद्गल० हे ऋतधीतयः! सत्यस्तुतयो[8] देवाः! अध्वरम् अस्मदीयं यज्ञम् आ गत आगच्छत । आगत्य च हे सत्यधर्माणः! सत्यस्य धारयितारः! यूयम् अग्नेः जिह्वया पिबत आज्यसोमादिकम् ॥ २ ॥

विप्रेभिर्विप्र सन्त्य प्रातर्यावभिरा गहि । देवेभिः सोमपीतये ॥ ३ ॥

विप्रेभिः । विप्र । सन्त्य । प्रातर्यावऽभिः । आ । गहि । देवेभिः । सोमऽपीतये ॥ ३ ॥

---

१. तं मूको. २-२. स्तुवन्तः मूको. ३-३. देवान् वि॰ छपं. ४. नास्ति वि॰ छपं. ५. त्रिभिः रु; त्रिभि. वि॰ छपं. ६. नास्ति मूको. ७. अग्ने रु. ८. स्तुताः मूको.

वेङ्कट० मेधाविभिः [1]विप्र! सम्भजनशील![1] प्रातर्यावभिः देवैः सोमपानाय आ गच्छ ॥ ३ ॥

मुद्गल० हे विप्र! मेधाविन्! हे सन्त्य! सम्भजनीय अग्ने! विप्रेभिः उत्कृष्टैः प्रातर्यावभिः प्रातःकाले आगन्तृभिः देवेभिः देवैः सार्धम् आ गहि आगच्छ। किमर्थम्। सोमपीतये सोमपानाय ॥ ३ ॥

अयं सोमश्चमू सुतोऽमत्रे परि षिच्यते । प्रिय इन्द्राय वायवे ॥ ४ ॥

अयम् । सोमः । चमू इति । सुतः । अमत्रे । परि । सिच्यते । प्रियः । इन्द्राय । वायवे ॥ ४ ॥

वेङ्कट० अयम् सोमः अधिषवणफलकयोः सुतः पात्रे परि सिच्यते प्रियः इन्द्रवायुभ्याम् ॥ ४ ॥

मुद्गल० अयम् पुरतो वर्तमानः सोमः चमू चम्वोः अधिषवणफलकयोः सुतः अभिषुतः सन् अमत्रे पात्रे परि सिच्यते पूर्यते। स च इन्द्राय वायवे च प्रियः, पातुं हे इन्द्रवायू! आगच्छतमिति शेषः ॥ ४ ॥

वायवा याहि वीतये जुषाणो हव्यदातये । पिबा सुतस्यान्धसो अभि प्रयः ॥ ५ ॥

वायो इति । आ । याहि । वीतये । जुषाणः । हव्यऽदातये । पिब । सुतस्य । अन्धसः । अभि । प्रयः ।

वेङ्कट० वायो! आ गच्छ पानाय प्रीयमाणो यजमानाय। पिब सुतं सोमम् अन्नं प्रत्युत्[2] ॥ ५ ॥

मुद्गल० हे वायो! प्रयः अन्नं सोमाख्यम् अभि[3] अभिलक्ष्य आ याहि वीतये भक्षणाय जुषाणः प्रीयमाणः हव्यदातये हविर्दात्रे यजमानाय तदर्थम्। आगत्य सुतस्य अन्धसः अभिषुतमन्नं सोमलक्षणम् पिब ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये पञ्चमो वर्गः ॥

इन्द्रश्च वायवेषां सुतानां पीतिमर्हथः । ताञ्जुषेथामरेपसावभि प्रयः ॥ ६ ॥

इन्द्रः । च । वायो इति । एषाम् । सुतानाम् । पीतिम् । अर्हथः ।
तान् । जुषेथाम् । अरेपसौ । अभि । प्रयः ॥ ६ ॥

वेङ्कट० अपापौ अरेपसौ इति ॥ ६ ॥

मुद्गल० हे वायो! त्वं च इन्द्रः च एषाम् पुरतो गृहीतानाम् सुतानाम् अभिषुतानाम् सोमानाम् पीतिम् पानम् अर्हथः। यस्मादेवं तस्मात् तान् सोमरसान् जुषेथाम् सेवेथाम्। अरेपसौ अहिंसकौ तदर्थम् प्रयः सोमाख्यमन्नम् अभिलक्ष्य, आगच्छतमिति शेषः ॥ ६ ॥

सुता इन्द्राय वायवे सोमासो दध्याशिरः । निम्नं न यन्ति सिन्धवोऽभि प्रयः ॥ ७ ॥

सुताः । इन्द्राय । वायवे । सोमासः । दधिऽआशिरः ।
निम्नम् । न । यन्ति । सिन्धवः । अभि । प्रयः ॥ ७ ॥

---

१-१. सम्भजनशील मूको. २. प्रत्युत्तन्तुं वि०; प्रत्यन्तुं कपं. ३. नास्ति मूको.

वेङ्कट० यथा निम्नम् प्रति नद्यः गच्छन्ति तथा इन्द्रवायू प्रति सोमाः ॥ ७ ॥

मुद्गल० इन्द्राय वायवे च सोमासः सोमाः दध्याशिरः दध्याश्रयणाः सुताः अभिषुताः । ते च निम्नम् गर्तम् सिन्धवः न नद्य इव हे इन्द्रवायू! युवाम् अभि यन्ति प्रयः अन्नरूपाः ॥ ७ ॥

सजूर्विश्वेभिर्देवेभिर्अश्विभ्यामुषसा सजूः । आ याह्यग्ने अत्रिवत् सुते रण ॥ ८ ॥

सऽजूः । विश्वेभिः । देवेभिः । अश्विऽभ्याम् । उषसा । सऽजूः ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ८ ॥

वेङ्कट० सहितः विश्वैर्देवैः अश्विभ्याम् उषसा च आ गच्छ अत्रेरिव यज्ञम्, सुते च रमस्व ॥ ८ ॥

मुद्गल० हे अग्ने! विश्वेभिः सर्वैः देवेभिः[1] देवैः सजूः सहितः सन् अश्विभ्याम् उषसा च सजूः समानप्रीतिः सन्[2] आ याहि आगहि। अत्रिवत् अत्रेरिव[3], अत्रेर्यज्ञे यथा तथेत्यर्थः, सुते अभिषुते सोमे रण रमस्व ॥ ८ ॥

सजूर्मित्रावरुणाभ्यां सजूः सोमेन विष्णुना । आ याह्यग्ने अत्रिवत् सुते रण ॥ ९ ॥

सऽजूः । मित्रावरुणाभ्याम् । सऽजूः । सोमेन । विष्णुना ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ९ ॥

वेङ्कट० निगदसिद्धा ॥ ९ ॥

मुद्गल० 'सजूर्मित्रावरुणाभ्याम्' इति स्पष्टम् ॥ ९ ॥

सजूरादित्यैर्वसुभिः सजूरिन्द्रेण वायुना । आ याह्यग्ने अत्रिवत् सुते रण ॥ १० ॥

सऽजूः । आदित्यैः । वसुऽभिः । सऽजूः । इन्द्रेण । वायुना ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ १० ॥

वेङ्कट० निगदसिद्धा ॥ १० ॥

मुद्गल० 'सजूरादित्यैः' इति स्पष्टम् ॥ १० ॥

इति चतुर्थाष्टके तृतीयाध्याये षष्ठो वर्गः ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ ११ ॥

स्वस्ति । नः । मिमीताम् । अश्विना । भगः । स्वस्ति । देवी । अदितिः । अनर्वणः ।
स्वस्ति । पूषा । असुरः । दधातु । नः । स्वस्ति । द्यावापृथिवी इति । सुऽचेतुना ॥ ११ ॥

1. नास्ति मूको. 2. सन् देवेभिः मूको. 3. नास्ति मूको.

वेङ्कट० स्वस्ति अस्माकम् कुर्वन्तु अश्विनौ भगः च। स्वस्ति देवी अदितिः करोतु अनर्वणः मम[1]। स्वस्ति पूषा असुरः दधातु। स्वस्ति [2]द्यावापृथिवी धत्ताम्[2] सुप्रज्ञानेन ॥ ११ ॥

मुद्गल० नः अस्मभ्यम् अश्विना अश्विनौ स्वस्ति अविनाशं क्षेमम् मिमीताम् धत्ताम्[1]। भगः स्वस्ति मिमीताम्। तथा देवी अदितिः च स्वस्ति मिमीताम्। अनर्वणः अप्रत्यृतः[4] पूषा असुरः शत्रूणां निरसिता नः स्वस्ति दधातु। नः अस्मभ्यम् द्यावापृथिवी द्यावापृथिव्यावपि सुचेतुना शोभनेन प्रज्ञानेन विशिष्टे स्वस्ति मिमीताम् ॥ ११ ॥

स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ १२ ॥

स्वस्तये । वायुम् । उप । ब्रवामहै । सोमम् । स्वस्ति । भुवनस्य । यः । पतिः ।
बृहस्पतिम् । सर्वऽगणम् । स्वस्तये । स्वस्तये । आदित्यासः । भवन्तु । नः ॥ १२ ॥

वेङ्कट० निगदसिद्धा ॥ १२ ॥

मुद्गल० स्वस्तये क्षेमाय वायुम् उप ब्रवामहै स्तुम इत्यर्थः। सोमम् च उप ब्रवामहै। यः च सोमः भुवनस्य पतिः पालकः सन् स्वस्ति करोतु। तथा सर्वगणम् देवगणोपेतम् बृहस्पतिम् बृहत्। कर्मणः पालयितारम् स्वस्तये स्तुमः। आदित्यासः अदितेः पुत्राः सर्वे देवाः नः अस्माकम् स्वस्तये भवन्तु ॥ १२ ॥

विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ १३ ॥

विश्वे । देवाः । नः । अद्य । स्वस्तये । वैश्वानरः । वसुः । अग्निः । स्वस्तये ।
देवाः । अवन्तु । ऋभवः । स्वस्तये । स्वस्ति । नः । रुद्रः । पातु । अंहसः ॥ १३ ॥

वेङ्कट० स्वस्तीति पादुर्ध्वंमन्तम् । निगदसिद्धा ॥ १३ ॥

मुद्गल० विश्वे सर्वेऽपि देवाः नः अस्मान् अद्य अस्मिन् यागदिवे स्वस्तये क्षेमाय अवन्तु। वैश्वानरः विश्व एनं नरा नयन्तीति वैश्वानरः वसुः सर्वस्य वासयिता अग्निः देवः स्वस्तये अवतु। देवाः ऋभवः अपि स्वस्तये अवन्तु। रुद्रः देवोऽपि अंहसः पापात् स्वस्ति पातु नः अस्मान् ॥ १३ ॥

स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।
स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ १४ ॥

स्वस्ति । मित्रावरुणा । स्वस्ति । पथ्ये । रेवति ।
स्वस्ति । नः । इन्द्रः । च । अग्निः । च । स्वस्ति । नः । अदिते । कृधि ॥ १४ ॥

---

१. ˈमास्ख विं; ˈम स छपे. २-२. नास्ति मूको. ३. दधातु मूको. ४. अप्रत्यृतः मूको.

वेङ्कट० निगदसिद्धा ॥ १४ ॥

मुद्गल० हे मित्रावरुणा। मित्रावरुणौ! स्वस्ति कुरुतम्[1]। हे पथ्ये![2] पथ्या अन्तरिक्षमार्गः तत्र हिता मार्गाभिमानिनी देवी पथ्या अभिमुखी तादृशी। रेवति! धनवति देवि! स्वस्ति कृधि कुरु। इन्द्रः च अग्निः च प्रत्येकम् नः अस्मभ्यम् स्वस्ति कृधि। हे अदिते! देवि! नः स्वस्ति कृधि ॥ १४ ॥

स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव ।
पुनर्ददताघ्नता जानता सं गमेमहि ॥ १५ ॥

स्वस्ति । पन्थाम् । अनु । चरेम । सूर्याचन्द्रमसौऽइव ।
पुनः । ददता । अघ्नता । जानता । सम् । गमेमहि ॥ १५ ॥

वेङ्कट० स्वस्ति अविनाशेन पन्थानम् अनुगच्छाम, यथा इमौ सूर्याचन्द्रमसौ[3] स्वस्ति गच्छतः। अत्र च पुनःपुनः प्रयच्छता उदारेण अहिंसित्रा महीयोऽयमिति जानता सम् गमेमहि ॥ १५ ॥

मुद्गल० पन्थाम् पन्थानम् स्वस्ति क्षेमेण अनु चरेम सूर्याचन्द्रमसाविव तौ यथा निरालम्बे मार्गे राक्षसादिभिरनुपद्रुतौ सञ्चरतस्तद्वत्। किञ्च वयं प्रवसन्तः[4] पुनः ददता अभिमतम् अघ्नता अहिंसता जानता अविस्मरता बन्धुजनेन सम् गमेमहि ॥ १५ ॥

इति चतुर्थाष्टके तृतीयाध्याये सप्तमो वर्गः ॥

[५२]

प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः ।
ये अद्रोघमनुष्वधं श्रवो मदन्ति यज्ञियाः ॥ १ ॥

प्र । श्यावऽअश्व । धृष्णुऽया । अर्च । मरुत्ऽभिः । ऋक्वऽभिः ।
ये । अद्रोघम् । अनुऽस्वधम् । श्रवः । मदन्ति । यज्ञियाः ॥ १ ॥

वेङ्कट० श्यावाश्वः। प्र स्तुहि हे श्यावाश्व! धर्षणशीलेभ्यो मरुद्भ्यः स्तोत्रकरणशीलेभ्यः, ये[5] मरुतः अद्रोग्धारं हविर्दोऽन्नदारम् अन्नेन मादयन्ति यज्ञियाः ॥ १ ॥

मुद्गल० 'प्र श्यावाश्व' इति सप्तदशर्चम् अष्टमं सूक्तम्। आत्रेयः श्यावाश्व ऋषिः। षष्ठी सप्तदशी च पङ्क्ती, शिष्टा अनुष्टुभः। मरुतो देवता।

हे श्यावाश्व! एतन्नामक ऋषे! धृष्णुया धृष्णुस्त्वम् ऋक्वभिः स्तुतिमद्भिः मरुद्भिः मरुतः प्र अर्च स्तुहि। ये मरुतः यज्ञियाः यज्ञार्हाः अनुष्वधम् प्रतिदिनं हविर्लक्षणान्नप्रदानम् अनु अद्रोघम् अहिंसकम् श्रवः अन्नं लब्ध्वा मदन्ति ॥ १ ॥

1. °तम् मूको. 2. °थ्ये देवि मूको. 3. -नास्ति मूको. 4. प्रवसन्तः मूको. 5. हे ल.

ते हि स्थिरस्य शवसः सखायः सन्ति धृष्णुया ।
ते यामन्ना धृषद्विनस्त्मना पान्ति शश्वतः ॥ २ ॥

ते । हि । स्थिरस्य । शवसः । सखायः । सन्ति । धृष्णुऽया ।
ते । यामन् । आ । धृषत्ऽविनः । त्मना । पान्ति । शश्वतः ॥ २ ॥

वेङ्कट० ते हि स्थिरस्य बलस्य सखायः भवन्ति धर्षणशीलाः । ते आगमने धर्षणशीलबलयुक्ताः आत्मनैव रक्षन्ति बहून्[1] ॥ २ ॥

मुद्गल० ते हि खलु स्थिरस्य अविचलितस्य शवसः बलस्य सखायः सन्ति भवन्ति महान्तम् । धृष्णुया धृष्णवः ते च यामन् आ, आ चार्थे, गमनेऽपि धृषद्विनः धर्षणवन्तः त्मना आत्मना अनुग्रहेणैव अस्मदुपकारम् अनपेक्ष्यैव शश्वतः बहूनस्मान् पुत्रभृत्यादीन् पान्ति रक्षन्ति ॥ २ ॥

ते स्पन्द्रासो नोक्षणोऽति ष्कन्दन्ति शर्वरीः ।
मरुतामधा महो दिवि क्षमा च मन्महे ॥ ३ ॥

ते । स्पन्द्रासः । न । उक्षणः । अति । स्कन्दन्ति । शर्वरीः ।
मरुताम् । अध । महः । दिवि । क्षमा । च । मन्महे ॥ ३ ॥

वेङ्कट० ते स्पन्दनशीलाः इव वृषभाः अस्वपन्तो रात्रीः अति गच्छन्ति । संप्रति तेषाम् मरुताम् दिवि भूम्याम् च वर्तमानम् महः स्तुमः ॥ ३ ॥

मुद्गल० ते मरुतः स्पन्द्रासः स्पन्दनशीलाः उक्षणः उदकस्य सेक्तारश्च, न चार्थे, शर्वरीः रात्रीः, कालावयवानित्यर्थः, अति स्कन्दन्ति अतिक्रम्य गच्छन्ति । नित्या इत्यर्थः । यस्मादेव एवंविधास्तस्मात् मरुताम् अध अधुना महः तेजः दिवि द्युलोके क्षमा क्षमायां भूमौ च वर्तमानम् मन्महे स्तुमः ॥ ३ ॥

मरुत्सु वो दधीमहि स्तोमं यज्ञं च धृष्णुया ।
विश्वे ये मानुषा युगा पान्ति मर्त्यं रिषः ॥ ४ ॥

मरुत्ऽसु । वः । दधीमहि । स्तोमम् । यज्ञम् । च । धृष्णुऽया ।
विश्वे । ये । मानुषा । युगा । पान्ति । मर्त्यम् । रिषः ॥ ४ ॥

वेङ्कट० युष्माकम् स्तोमम् दधीमहि यज्ञम् च धर्षकेषु मरुत्सु[2] । व्याप्ताश्च ये मानुषाणि युगानि अहोरात्राणि रक्षन्ति मनुष्यं हिंसकात् ॥ ४ ॥

मुद्गल० हे अध्वर्युहोत्रादयः । वः यूयम् मरुत्सु धृष्णुया धर्षकेषु दधीमहि धत्त । किम् । स्तोमम्

---

१. बहु वि[1]; बहून् लर्भ २. नास्ति मूको.

स्तोमम् यज्ञम् न। इज्यते अनेन इति यज्ञः हविः। तदुभयं किमर्थं दीयत इति। ये मरुतः विश्वे सर्वेऽपि मानुषा मानुषाणि युगा युगानि, सर्वेषु कालेष्वित्यर्थः, मर्त्यम् मरणधर्माणं यजमानम् रिषः हिंसकात् सकाशात् पान्ति रक्षन्ति ॥ ४ ॥

अर्हन्तो ये सुदानवो नरो असामिशवसः ।
प्र यज्ञं यज्ञियेभ्यो दिवो अर्चा मरुद्भ्यः ॥ ५ ॥

अर्हन्तः । ये । सुऽदानवः । नरः । असामिऽशवसः ।
प्र । यज्ञम् । यज्ञियेभ्यः । दिवः । अर्च । मरुत्ऽभ्यः ॥ ५ ॥

वेङ्कट० पूजार्हाः ये सुदानाः नेतारः परिपूर्णबलाः, तेभ्यः यज्ञियेभ्यः दिवः आगतेभ्यः हविः प्र यच्छ ॥ ५ ॥

मुद्गल० हे होतः! ये अर्हन्तः पूज्याः सुदानवः शोभनदानाः नरः नेतारः कर्मणाम् असामिशवसः अनल्पबलाः सन्ति तेभ्यः यज्ञियेभ्यः यज्ञार्हेभ्यः दिवः द्योतमानेभ्यः मरुद्भ्यः यज्ञम् यजसाधनं हविः प्र अर्च पूजय प्रयच्छेत्यर्थः ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये अष्टमो वर्गः ॥

आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत ।
अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ॥ ६ ॥

आ । रुक्मैः । आ । युधा । नरः । ऋष्वाः । ऋष्टीः । असृक्षत ।
अनु । एनान् । अह । विऽद्युतः । मरुतः । जज्झतीःऽइव । भानुः । अर्त । त्मना । दिवः ॥६॥

वेङ्कट० वक्षोऽलङ्कारैः शोभनसाधनेन आयुधेन सह दर्शनीयाः मरुतः अंसेषु शक्तीः आ सृजन्ति। ततो विद्योतमानान् मरुतः एनान् एव [1]स्वयम् भानुः[1] दिवः अनु गच्छति, यथा जज्झाशब्दं कुर्वाणा धनुः स्वयमेव अनुगच्छति। दृश्यते भानुः अर्चिरिति ॥ ६ ॥

मुद्गल० नरः नेतारः ऋष्वाः महान्तः मरुतः रुक्मैः रोचमानैराभरणविशेषैः आ रोचन्त इति शेषः। तथा युधा प्रहरणसाधनेनायुधेन आ रोचन्ते। एते मरुतः ऋष्टीः आयुधविशेषान् असृक्षत प्रक्षिपन्ति मेघभेदार्थम्। एनान् विद्युतः अपि जज्झतीरिव[2] शब्दकारिण्य आप इव अनु अह अनुगच्छन्त्येव। दिवः द्योतमानस्य मरुद्गणस्य भानुः दीप्तिः त्मना स्वयम् एव अर्त निरगात् ॥ ६ ॥

ये वावृधन्त पार्थिवा य उरावन्तरिक्ष आ ।
वृजने वा नदीनां सधस्थे वा महो दिवः ॥ ७ ॥

ये । वृवृधन्त । पार्थिवाः । ये । उरौ । अन्तरिक्षे । आ ।
वृजने । वा । नदीनाम् । सधऽस्थे । वा । महः । दिवः ॥ ७ ॥

वेङ्कट० ये वर्धन्ते पृथिव्यां वर्धमानाः, ये च विस्तीर्णे अन्तरिक्षे, नदीनां वा वेगे, महतो वा दिवः स्थाने । उत्तरत्र सम्बन्धः ॥ ७ ॥

मुद्गल० ये मरुतः पार्थिवाः पृथिवीसम्बद्धाः सन्तः ववृधन्त वर्धन्ते[1], ये च उरौ महति अन्तरिक्षे च ववृधन्त । आ चार्थे । नदीनाम् वृजने बले वा ववृधन्त । महः महतः दिवः द्युलोकस्य सधस्थे सहस्थाने च ववृधन्त । उभयत्र वा-शब्दः चार्थे । एवं सर्वत्र वर्धमाना मरुतो पूष्टयर्थम् स्तुतीः शास्त्रस्य इति पूर्वत्र सम्बन्धः ॥ ७ ॥

शर्धो मारुतमुच्छंस सत्यशवसमृभ्वसम् ।
उत स्म ते शुभे नरः प्र स्यन्द्रा युजत त्मना ॥ ८ ॥

शर्धः । मारुतम् । उत् । शंस । सत्यऽशवसम् । ऋभ्वसम् ।
उत । स्म । ते । शुभे । नरः । प्र । स्यन्द्राः । युजत । त्मना ॥ ८ ॥

वेङ्कट० मारुतम्[2] वेगं सत्यबलं[3] महत् अन्तर्मुखः सन् स्तुहि । अपि च ते मरुतः नेतारः स्यन्दनशीलाः स्वयमेव शोभार्थं प्रायुञ्जत[4], अभिगच्छन्तीत्यर्थः ॥ ८ ॥

मुद्गल० हे स्तोतः! मारुतम् शर्धः बलम् उत् उत्कृष्टम् शंस स्तुहि । कीदृशं शर्धः । सत्यशवसम् सत्यवेगम् ऋभ्वसम् अतिप्रवृद्धम् । उत स्म अपि च नरः पुरुषैर्नेतारः ते मरुतः शुभे उदकार्थम् प्र युजत प्रायुञ्जत समयोजयन् त्मना आत्मना अनन्यप्रयुक्तयैव स्यन्द्राः चलनस्वभावाः, पृषतीरित्यर्थः ॥ ८ ॥

उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः ।
उत पव्या रथानामद्रिं भिन्दन्त्योजसा ॥ ९ ॥

उत । स्म । ते । परुष्ण्याम् । ऊर्णाः । वसत । शुन्ध्यवः ।
उत । पव्या । रथानाम् । अद्रिम् । भिन्दन्ति । ओजसा ॥ ९ ॥

वेङ्कट० अपि च स्म ते परुष्ण्याम् नद्यां प्रच्छन्नाः "अवसन् मरुतो" भूत्वा । अपि च रथानाम् चक्रधारया गमने अद्रिम् अपि भिन्दन्ति बलेन । मेघो वाऽद्रिः ॥ ९ ॥

मुद्गल० उत स्म अपि च ते मरुतः परुष्ण्याम् पुत्रनामिकायां नद्याम्[5] वर्तन्ते । ये ऊर्णाः दीप्ताः[7] शुन्ध्यवः शोधिकाः वसत आच्छादयन्ति ते । उत अपि च पव्या नेम्या रथानाम् स्वकीयानां रथचक्रेण ओजसा बलेन च अद्रिम् भिन्दन्ति मेघं विदारयन्ति ॥ ९ ॥

---

१. वर्धे मूको. २. नास्ति वि'. ३. सत्यं महाबलम् वि' हर्ष. ४. प्रयुञ्जत ऊ. ५-५. ऋदरमपनगर्यो मूको. ६. नास्ति मूको. ७. दीप्ताः मूको.

आपथयो विपथयोऽन्तस्पथा अनुपथाः ।
एतेभिर्मह्यं नामभिर्यज्ञं विष्टार ओहते ॥ १० ॥

आऽपथयः । विऽपथयः । अन्तःऽपथाः । अनुऽपथाः ।
एतेभिः । मह्यम् । नामऽभिः । यज्ञम् । विऽस्तारः । ओहते ॥ १० ॥

वेङ्कट० अभिमुखगमनात् आपथयः, विपथयः [1]अन्तःपथाः[1] अनुपथाः च एवंनामानः, महाम् एतैश्चतुर्भिः नामभिः युक्तः मरुतां विस्तारो यज्ञम् वहति ॥ १० ॥

मुद्गल० आपथयः अस्मदभिमुखो मार्गो येषां ते तादृशाः । विपथयः विविधमार्गाः अन्तस्पथाः दरीसुषिरादिमार्गाः अनुपथाः अनुकूलमार्गाश्च ये मरुतः सन्ति ते, एतेभिः एतैश्चतुर्विधैः नामभिः नामकैः स्वरूपैः महाम् मह्यम् यज्ञम् विस्तारः विस्तृताः सन्तः ओहते वहन्ति ॥ १० ॥

इति चतुर्थाष्टके तृतीयाध्याये नवमो वर्गः ॥

अधा नरो न्योहतेऽधा नियुत ओहते ।
अधा पारावता इति चित्रा रूपाणि दर्श्या ॥ ११ ॥

अध । नरः । नि । ओहते । अध । निऽयुतः । ओहते ।
अध । पारावताः । इति । चित्रा । रूपाणि । दर्श्या ॥ ११ ॥

वेङ्कट० मरुतः कदाचित्[2] नरः वहन्ति, कदाचित् नियुतः, कदाचित् पारावताः । इत्थं चित्राण्येषां दर्शनीयानि रूपाणि । पुमांसश्च नरः ॥ ११ ॥

मुद्गल० अध अथ नरः अभिमतवृष्ट्यादिनेतारः नि ओहते नितरां वहन्ति जगत् । अध नियुतः स्वयमेव निश्चयितारः सन्तः ओहते । अध अथ पारावताः [3]'परावत् दूरदेशः'[3] तत्सम्बन्धिनगपर्वतान्तरिक्षादिदूरदेशे प्रहारात्मेयादिभारकाः[4] सन्त ओहत इत्यर्थः । इति उक्तप्रकारेण तेषाम् रूपाणि चित्रा नानाविधानि दर्श्या स्वरूपाणि दर्शनीयानि, भवन्तीति शेषः ॥ ११ ॥

छन्दःस्तुभः कुभन्यव उत्समा कीरिणो नृतुः ।
ते मे के चिन्न तायव ऊमा आसन् दृशि त्विषे ॥ १२ ॥

छन्दःऽस्तुभः । कुभन्यवः । उत्सम् । आ । कीरिणः । नृतुः ।
ते । मे । के । चित् । न । तायवः । ऊमाः । आसन् । दृशि । त्विषे ॥ १२ ॥

वेङ्कट० छन्दःस्तुभः[5] उदकमिच्छन्तो गोतमस्य कूपम् आ निन्युः कारणशीलाः, ते मे केचन तस्कराः इव रक्षकाः चक्षुषि[6] वीक्षये अभवन् ॥ १२ ॥

---

१-१. नास्ति मूको. २. क्वचित् लपं. ३-३. परावत्" मूको. ४. "तारादिम" मूको.
५. "स्तुवः मूको. ६. चक्षुषः वि" लपं.

मुद्गल० छन्दःस्तुभः छन्दोभिः[1] स्तोतारः कुमन्यवः उदकेच्छवः कीरिणः स्तोतारः[2] उत्सम् कूपमपेक्ष्य तृषिताय गोतमाय यान्[3] मरुतः आ नृतुः सर्वतोऽकुर्वन्, ते मरुतः केचित् मे महाम् तायवः न तस्करा इव स्थिताः कमाः रक्षकाः दृशे दर्शने आसन् विषयभूता अभवन्, केचित्[4] त्विषे शरीरदीप्त्यै आसन् ॥ १२ ॥

य ऋष्वा ऋष्टिविद्युतः कवयः सन्ति वेधसः ।
तमृषे मारुतं गणं नमस्या रमया गिरा ॥ १३ ॥

ये । ऋष्वाः । ऋष्टिऽविद्युतः । कवयः । सन्ति । वेधसः ।
तम् । ऋषे । मारुतम् । गणम् । नमस्य । रमय । गिरा ॥ १३ ॥

वेङ्कट० हिरण्मयैरलङ्कृताः ये महान्तः ऋष्ट्या विद्योतमानाः कवयः भवन्ति वेधसः[5] । तम् इति स्पष्टम् ॥ १३ ॥

मुद्गल० ये मरुतः ऋष्वाः दर्शनीयाः ऋष्टिविद्युतः आयुधैर्विद्योतमानाः कवयः मेधाविनः वेधसः सर्वविधातारः सन्ति । तम्[6] मारुतम् गणम् रमया रमणीयया(?) गिरा स्तुत्या हे ऋषे! श्यावाश्व! नमस्य परिचर स्तुहि ॥ १३ ॥

अच्छ ऋषे मारुतं गणं दाना मित्रं न योषणा ।
दिवो वा धृष्णव ओजसा स्तुता धीभिरिषण्यत ॥ १४ ॥

अच्छ । ऋषे । मारुतम् । गणम् । दाना । मित्रम् । न । योषणा ।
दिवः । वा । धृष्णवः । ओजसा । स्तुताः । धीभिः । इषण्यत ॥ १४ ॥

वेङ्कट० अभिगच्छ ऋषे! मारुतम् गणम् धनदानाय मित्रम् इव शत्रूणां पृथक्करणार्थम् । दिवः च हे धृष्णवः! मरुतः! बलेन स्तुताः कर्मभिः गच्छत ॥ १४ ॥

मुद्गल० हे ऋषे! मारुतम् गणम् मरुत्सङ्घम् मित्रम् न आदित्यमिव दाना हविर्दानेन योषणा स्तुत्या अच्छ अभिगच्छ[7] । ऋषेरुत्तरार्धः प्रत्यक्षवादः । ओजसा बलेन हे धृष्णवः! धर्षकाः मरुतः! दिवः वा[8] द्युलोकाद्वा । वाशब्दश्रुतेः इतरलोकद्वयाद् वा । धीभिः अस्मदीयाभिः स्तुतिभिः स्तुताः इषण्यत आगच्छत यज्ञम् ॥ १४ ॥

नू मन्वान एषां देवाँ अच्छा न वक्षणा ।
दाना सचेत सूरिभिर्यामश्रुतेभिरञ्जिभिः ॥ १५ ॥

नु । मन्वानः । एषाम् । देवान् । अच्छ । न । वक्षणा ।
दाना । सचेत । सूरिऽभिः । यामऽश्रुतेभिः । अञ्जिऽभिः ॥ १५ ॥

१. छन्दसः अभि मूको. २. स्तुतौ विक्षिपः मूको. ३. ये मूको. ४. नास्ति मूको. ५. विधाः वि° लुप्तं. ६. तम् तेषाम् मूको. ७. वेप १,२६४२ h द्र. ८. भावकृति मूको.

वेङ्कट० क्षिप्रं मरुतां स्तोत्रं कुर्वन् अन्यान् देवान् प्रति न गच्छति यक्षणाय। यक्षणं धनम्। किन्तु दानाय संगच्छते प्राज्ञैः विप्रुतगमनैः उदकेन अञ्जिभिः ॥ १५ ॥

मुद्गल० नु क्षिप्रम् एताम् मरुताम्। एतान् मरुतः इत्यर्थः। अन्यानः स्तुन्वन् देवान् मरुद्व्यतिरिक्तान् यक्षणा यहनेन निमित्तेन अच्छ अभिप्राप्तुम् न मनुते। स स्तोता सूरिभिः मेधाविभिः यामश्रुतेभिः शीघ्रगमनेन विश्रुतैः अञ्जिभिः फलस्य व्यञ्जकैर्मरुद्भिः उपलक्षणेभ्यः[1] मरुद्भ्यः दाना अभिमतदानानि रराण संगच्छते ॥ १५ ॥

प्र ये मे बन्ध्वेषे गां वोचन्त सूरयः पृश्निं वोचन्त मातरम्।
अधा पितरमिष्मिणं रुद्रं वोचन्त शिक्वसः ॥ १६ ॥

प्र। ये। मे। बन्धुऽएषे। गाम्। वोचन्त। सूरयः। पृश्निम्। वोचन्त। मातरम्।
अध। पितरम्। इष्मिणम्। रुद्रम्। वोचन्त। शिक्वसः ॥ १६ ॥

वेङ्कट० प्र अवोचन् ये मम बन्धूनाम् अन्वेषणे पृश्निर्गौरस्माकं मातेति ताम्, अध[1] पितरम् एषणशीलम् रुद्रम् वोचन्त सूरयः शक्तशीलाः[2] ॥ १६ ॥

मुद्गल० ये मे मह्यम् बन्ध्वेषे स्वेषां बन्धूनामन्वेषणे सति सूरयः प्रेरकाः गाम् माध्यमिकीं वाचम् प्र वोचन्त। ते पृश्निम् पृश्निवर्णाम् मातरम् वोचन्त अब्रुवन्। अध अथ पितरम् इषवतम् इष्मिणम् गमनवन्तम् रुद्रम् वोचन्त शिक्वसः शक्तास्ते मरुतः ॥ १६ ॥

सप्त मे सप्त शाकिन एकमेका शता ददुः।
यमुनायामधि श्रुतमुद्राधो गव्यं मृजे नि राधो अश्व्यं मृजे ॥ १७ ॥

सप्त। मे। सप्त। शाकिनः। एकम्ऽएका। शता। ददुः।
यमुनायाम्। अधि। श्रुतम्। उत्। राधः। गव्यम्। मृजे। नि। राधः। अश्व्यम्। मृजे ॥१७॥

वेङ्कट० एकोनपञ्चाशत् मरुतः मह्यम् एकैकं धनशतानि प्रयच्छन्तु। यमुनायाः समीपे वर्तमानाः श्रुतम् गव्यम् धनं मरुद्भिः दत्तम् उत् मृजे नितरां च मृजे अश्व्यम्। पाणिना पृष्ठ उन्मार्जनम्। 'कक्षीवन्त य उदमृक्षन्त पज्राः' ( ऋ १,१२६,४ ) इत्युक्तम् ॥ १७ ॥

मुद्गल० सप्त सप्तसंख्याकाः सङ्घाः एकोनपञ्चाशन्मरुद्गणाः शाकिनः शक्ताः सर्वम् अपि कर्तुम्। ते च एकमेका एकैको गणः मे मह्यम् शता शतसंख्याकानि गवाश्वधनानि[4] ददुः दत्तवन्तः। तैर्दत्तम् यमुनायाम् अधि, अयं सप्तम्यर्थानुवादी। तत्र श्रुतम् प्रसिद्धम् गव्यम् गोसमूहात्मकम् राधः धनम् उत् मृजे उन्मार्जयामि। तथा[3] अश्व्यम् अश्वसमूहात्मकम् राधः धनम् नि मृजे निमार्ज्मि[5] ॥ १७ ॥

इति चतुर्थाष्टके तृतीयाध्याये दशमो वर्गः ॥

---

१. मिषेन मूको. २. शक्नुशीलाः मूको. ३. नास्ति मूको. ४. गवां पृ° मूको.
५. निमार्जिम मूको.

[ ५३ ]

को वेद जानमेषां को वा पुरा सुम्नेष्वास मरुताम् । यद् युयुज्रे किलास्यः ॥ १ ॥

कः । वेद । जानम् । एषाम् । कः । वा । पुरा । सुम्नेषु । आस । मरुताम् ।
यत् । युयुज्रे । किलास्यः ॥ १ ॥

वेङ्कट० कः वेद जननम्[1] एषाम्, कः वा पुरा मरुताम् सुखेषु अभूत्, यदा युज्यन्ते श्वेता वडवाः ॥ १ ॥

मुद्गल० 'को वेद जानम्' इति षोडशर्चं नवमं सूक्तम्। श्यावाश्व ऋषिः। आद्यापञ्चमीदशम्येकादशीपञ्चदश्यः ककुभः, षष्ठीसप्तमीनवमीत्रयोदशीचतुर्दशीषोडश्यः सतोबृहत्यः, अष्टमी द्वादशी च गायत्र्यौ, द्वितीया बृहती, तृतीया अनुष्टुप्, चतुर्थी पुरउष्णिक्। मरुतो देवता।

एषाम् मरुताम् जानम् उत्पत्तिम् को वेद जानाति कः पुमान्। कः वा पुरा पूर्वमेषाम् मरुताम् सुम्नेषु सुखेषु आस भवति। यत् यदा एते किलास्यः, किलासीः पृषतीरश्वाः, ताः युयुज्रे रथे योजितवन्तः ॥ १ ॥

ऐतान् रथेषु तस्थुषः कः शुश्राव कथा ययुः ।
कस्मै सस्रुः सुदासे अन्वापय इळाभिर्वृष्टयः सह ॥ २ ॥

आ । एतान् । रथेषु । तस्थुषः । कः । शुश्राव । कथा । ययुः ।
कस्मै । सस्रुः । सुऽदासे । अनु । आपयः । इळाभिः । वृष्टयः । सह ॥ २ ॥

वेङ्कट० आ शुश्राव एतान् रथेषु स्थितवतः[2] कः, 'कथं च'[3] यान्ति, कस्मै शोभनदानाय बन्धवः अनु सस्रुः, कस्मै च मरुतः वृष्टयः भवन्ति अन्नैः सह ॥ २ ॥

मुद्गल० एतान् मरुतः रथेषु तस्थुषः स्थितवतः कः आ शुश्राव श्रवणेन्द्रियपथं। कथा कथम् ययुः गच्छन्ति, तदपि को जानाति। कस्मै सुदासे सुदानाय[4] आपयः बन्धुभूता मरुतः वृष्टयः वर्षकाः इळाभिः बहुविधैरन्नैः सह सहिताः अनु सस्रुः अनुक्रमेण अवतरेयुः[5] ॥ २ ॥

ते म आहुर्य आययुरुप द्युभिर्विभिर्मदे ।
नरो मर्या अरेपस इमान् पश्यन्निति ष्टुहि ॥ ३ ॥

ते । मे । आहुः । ये । आऽययुः । उप । द्युऽभिः । विऽभिः । मदे ।
नरः । मर्याः । अरेपसः । इमान् । पश्यन् । इति । स्तुहि ॥ ३ ॥

वेङ्कट० ते मम आहुः, ये उप गताः दीप्तैरश्वैः सोमार्थम्। नेतारो मारकाः अपापाः इमान् अस्मान् पश्यन्ति, इत्थं त्वम् स्तुहि इति ॥ ३ ॥

१. जानम् वि॰ रुपं; जन रु. २. स्थल. रु. ३-३. कथंच वि॰. ४. दाना॰ मूको. ५. वित॰ मूको.

मुद्गल० ते मरुतः इत्थं स्तुवते[1] मे मह्यम्[2] आहुः ये उप आययुः ये मरुतः मां प्राप्ताः। कैः साधनैः। शुभिः शोभमानैः यिभिः गन्तृभिरश्वैः। किमर्थम्। मदे मदाय सोमपानजनिताय। किमाहुरिति तदनूच्यते। नरः नेतारः मर्याः मनुष्येभ्यो[3] हिताः अरेपसः अपापान्ते हे ऋषे! इमान् अस्मान् पश्यन् तथा स्थितान् चक्षुषाऽवलोकयन् स्तुहि इति आहुः ॥ ३ ॥

ये अञ्जिषु ये वाशीषु स्वभानवः स्रक्षु रुक्मेषु खादिषु । श्राया रथेषु धन्वसु ॥ ४ ॥

ये । अञ्जिषु । ये । वाशीषु । स्वऽभानवः । स्रक्षु । रुक्मेषु । खादिषु । श्रायाः । रथेषु । धन्वऽसु ।

वेङ्कट० ये आभरणेषु ये च वास्यायुधेषु स्वदीप्तयः माल्यासु रुक्मेषु पादाभरणेषु, आयुधविशेषो वा खादिः, श्रयमाणा भवन्ति "तैः सह सन्ति," रथेषु धनुःषु च । उत्तरत्र सम्बन्धः ॥ ४ ॥

मुद्गल० हे मरुतः! युष्माकम् ये प्रसिद्धाः स्वभानवः स्वदीप्तयः अञ्जिषु आभरणेषु श्रायाः आश्रयभूताः सन्ति, ये च वाशीषु आयुधेषु, ये च स्रक्षु माल्येषु रुक्मेषु उरोभूषणेषु, ये च खादिषु हस्तपादस्थितकटकेषु रथेषु धन्वसु निरुदकप्रदेशेषु श्रायाः सन्ति, तान् सर्वान् स्तुम इति शेषः ॥ ४ ॥

युष्माकं स्मा रथाँ अनु मुदे दधे मरुतो जीरदानवः । वृष्टी द्यावो यतीरिव ॥ ५ ॥

युष्माकम् । स्म । रथान् । अनु । मुदे । दधे । मरुतः । जीरऽदानवः । वृष्टी । द्यावः । यतीःऽइव ॥

वेङ्कट० युष्माकम् स्म रथान् मुदे अनु धारयामि[4] हे मरुतः! "क्षिप्रदानाः!, यथा[4] वर्षणाय रश्मयः वः धारयन्ति ॥ ५ ॥

मुद्गल० हे जीरदानवः! क्षिप्रदानाः! हे मरुतः! युष्माकम् रथान्[5] अनु उद्दिश्य मुदे मोदाय[6] दधे धारयामि, करोमीत्यर्थः। सामर्थ्यात् स्तुतीरिति लभ्यते। स्म पूरणः। वृष्टी वृष्ट्या[7] यतीः सर्वत्र गच्छन्तीः द्यावः दीप्तीरिव दृश्यमानान् युष्मद्रथानिति सम्बन्धः ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये एकादशो वर्गः ॥

आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
वि पर्जन्यं सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः ॥ ६ ॥

आ । यम् । नरः । सुऽदानवः । ददाशुषे । दिवः । कोशम् । अचुच्यवुः ।
वि । पर्जन्यम् । सृजन्ति । रोदसी इति । अनु । धन्वना । यन्ति । वृष्टयः ॥ ६ ॥

वेङ्कट० आ च्यावयन्ति यम् मेघं सुदाना नेतारो यजमानाय द्युलोकात्। ते पर्जन्यम् वि सृजन्ति

---

१. नास्ति मूको. २ °ह्यम् उपन्तम् मूको. ३. °नुषेभ्यो मूको. ४-४. अंतेरराहनि मूको. ५. निधारयामि वि॰ अ॰. ६-६. °दानाय मम मूको. ७. युष्मान् मूको. ८. मदाय मूको. ९. वृष्टयः मूको.

द्यावापृथिव्योरर्थाय, अन्तरिक्षेण यन्ति वृष्टयः । यं मेघं च्यावयन्ति, तस्मात् पर्जन्यं च सृजन्तीति[1] ॥ ६ ॥

मुद्गल० नरः नेतारः सुदानवः शोभनदाना मरुतः यम् कोशम् मेघम् दाशुषे हविर्दत्तवते यजमानाय दिवः अन्तरिक्षात् आ अचुच्यवुः आच्यावयन्ति[2], पर्जन्यम् मेघम् रोदसी अनु द्यावापृथिव्यावनुसृत्य वि सृजन्ति विमोचयन्ति। पश्चात् धन्वना सर्वत्र गच्छतोदकेन सह वृष्टयः वृष्टिप्रदा मरुतः यन्ति सर्वत्र व्याप्नुवन्ति ॥ ६ ॥

ततृदानाः सिन्धवः क्षोदसा रजः प्र सस्रुर्धेनवो यथा ।
स्यन्ना अश्वा इवाध्वनो विमोचने वि यद् वर्तन्त एन्यः ॥ ७ ॥

ततृदानाः । सिन्धवः । क्षोदसा । रजः । प्र । सस्रुः । धेनवः । यथा ।
स्यन्नाः । अश्वाःऽइव । अध्वनः । विऽमोचने । वि । यत् । वर्तन्ते । एन्यः ॥ ७ ॥

वेङ्कट० हसन्त्यः सिन्धवः उदकेन कूलयोः मध्यं रेणुशः प्र सरन्ति, धेनवः इव गच्छन्त्यः । अश्वाः इव आवनः गमनाय विमोचने भवन्ति, वि गच्छन्ति यदा नद्यः एभिः वृष्टे[3] सतीति ॥ ७ ॥

मुद्गल० सिन्धवः स्यन्दमानाः अपः[4] ततृदानाः निर्भिन्दन्तः मेघान् मरुतः क्षोदसा उदकेन सह रजः अन्तरिक्षम् प्र सस्रुः प्रसरन्ति । धेनवः यथा पयः सिञ्चन्त्यो नवप्रसूता गाव इव । किञ्च दृष्टान्तान्तरम्—स्यन्नाः आशुगतयः अश्वाः इव यथा अध्वनः विमोचने मनुष्याणाम् मार्गविमोकाय सञ्चरन्ति तथैवमर्थः । यत् यदा एन्यः नद्यः [illegible] वर्तन्ते विविधं सञ्चरन्ति तदैवं कुर्वन्तीति पूर्वेणाऽन्वयः ॥ ७ ॥

आ यात मरुतो दिव आन्तरिक्षादमादुत । माव स्थात परावतः ॥ ८ ॥

आ । यात । मरुतः । दिवः । आ । अन्तरिक्षात् । अमात् । उत ।
मा । अव । स्थात । पराऽवतः ॥ ८ ॥

वेङ्कट० आ गच्छत हे मरुतः ! दिवः अन्तरिक्षात् च । अमशब्दो गृहवचन इति, इह [illegible] पृथिवीमाह । मा अव तिष्ठत अधिगन्तव्यदूरदेशात् ॥ ८ ॥

मुद्गल० हे मरुतः ! परावतः अत्यन्तदूरदेशात् दिवः द्युलोकात् आ यात । तथा अन्तरिक्षात् आ यात । उत अपि [illegible] अमात् अस्माल्लोकात् आयात । मा अव स्थात अवस्थितिं मा कुरुत ॥ ८ ॥

मा वो रसानितभा कुभा क्रुमुर्मा वः सिन्धुर्नि रीरमत् ।
मा वः परि ष्ठात् सरयुः पुरीषिण्यस्मे इत् सुम्नमस्तु वः ॥ ९ ॥

मा । वः । रसा । अनितभा । कुभा । क्रुमुः । मा । वः । सिन्धुः । नि । रीरमत् ।
मा । वः । परि । स्थात् । सरयुः । पुरीषिणी । अस्मे इति । इत् । सुम्नम् । अस्तु । वः ॥९॥

1. मत॰ वि॰. 2. अस्थापयन्ति मूको. 3. वृष्टे. मूको. 4. आप. मूको.

वेङ्कट० एता सप्त नद्य मा युष्मान् आत्मनि रमयन्तु, [1]मा व[1] परि स्थात् सरयु निरोधनाय भवतु[2]। अस्मादेव युष्माकं सुखम् अस्तु ॥ ९ ॥

मुद्गल० हे मरुत ! व युष्मान् रसा रसनवती[1] शब्दवती अनितभा इता[3] प्राप्ता मा यस्या सा इताभा, न आदरयनितभा, क्रुमा कुत्सितशरीरदच मा नि रीरमन् मा निरुध्य रमतु। व क्रुमु सर्वप्रक्रमणः सिन्धु समुद्रश्च मा [illegible] रीरमत्। तथा व पुरीषिणी पुरीषमुदकं तद्वती सरयु अपि मा परि स्थात् परितस्तिष्ठतु मा निरुणद्धु। अस्मे इत् अस्मास्वेव अस्तु सुम्नम् स्वदागमनजनित सुखम् व युष्मदागमनभूतम् ॥ ९ ॥

तं वः शर्धं रथानां त्वेषं गणं मारुतं नव्यसीनाम् । अनु प्र यन्ति वृष्टयः ॥१० ॥

तम् । वः । शर्धम् । रथानाम् । त्वेषम् । गणम् । मारुतम् । नव्यसीनाम् । अनु । प्र । यन्ति । वृष्टयः ॥

वेङ्कट० तम् युष्माकम् रथानाम् शर्धम् तथा भवताम् दीप्तम् गणम् च नवतराणाम् अपाम् वृष्टय अनु गच्छन्ति ॥ १० ॥

मुद्गल० हे मरुत ! रथानाम् रंहणशीलानाम् नव्यसीनाम् स्तुत्यानाम् व युष्माकम् शर्धम् परेषाम-भिभावुकम् त्वेषम् दीप्तम् तम् मारुतम् गणम् स्तौमि। वृष्टय युष्मान् अनु प्र यन्ति प्रकर्षेण गच्छन्ति ॥ १० ॥

इति चतुर्थाष्टके तृतीयाध्याये द्वादशो वर्ग ॥

शर्धंशर्धं व एषां व्रातंव्रातं गणंगणं सुशस्तिभिः । अनु क्रामेम धीतिभिः ॥ ११ ॥

शर्धम्ऽशर्धम् । वः । एषाम् । व्रातम्ऽव्रातम् । गणम्ऽगणम् । सुशस्तिऽभिः । अनु । क्रामेम । धीतिऽभिः ॥

वेङ्कट० मरुत शर्धंशर्धम् आगच्छन्ति, तथा व्रातंव्रातम् गणंगणम् च एषाम् युष्माकम्। तत् सर्वम् अनु गच्छाम सुस्तोत्रै कर्मभि ॥ ११ ॥

मुद्गल० हे मरुत ! एषाम् व युष्माकम् शर्धंशर्धम् तत्तद्बलम् व्रातंव्रातम् गणंगणम् तत् समूहम् सुशस्तिभि शोभनस्तुतिभि धीतिभि कर्मभिर्हविष्प्रदानादिलक्षणै अनु क्रामेम अनुगच्छेम ॥ ११ ॥

कस्मा अद्य सुजाताय रातहव्याय प्र ययुः । एना यामेन मरुतः ॥ १२ ॥

कस्मै । अद्य । सुऽजाताय । रातऽहव्याय । प्र । ययुः । एना । यामेन । मरुतः ॥ १२ ॥

वेङ्कट० निगदव्याख्याता ॥ १२ ॥

मुद्गल० अद्य अस्मिन् दिने कस्मै सुजाताय रातहव्याय दत्तहविष्काय प्र ययु प्रकर्षेण गच्छेयु, एना अनेन यामन रथेन मरुत ॥ १२ ॥

---

1-1. नास्ति मूको २. भवति मूको ३ रसवती मूको ४. नास्ति मूको

येनं तोकाय तनयाय धान्यं१ बीजं वहध्वे अक्षितम् ।
अस्मभ्यं तद् धत्तन यद् व ईमहे राधो विश्वायु सौभगम् ॥ १३ ॥

येनं । तोकायं । तनयाय । धान्यम् । बीजम् । वहध्वे । अक्षितम् ।
अस्मभ्यम् । तत् । धत्तन । यत् । वः । ईमहे । राधः । विश्वऽआयु । सौभगम् ॥ १३ ॥

वेङ्कट० येन धनेन पुत्राय तत्पुत्राय धान्यम् तत्कारणम् बीजम् च अक्षितम् वहध्वे । अस्मभ्यम् तद् धत्त धनम्, यत् वः याचामहे सर्वेषां सुभगत्वावहम् ॥ १३ ॥

मुद्गल० हे मरुतः! येन सद्येन मनसा तोकाय पुत्राय तनयाय तत्पुत्राय धान्यम् बीजम् अक्षितम् अक्षीणम् वहध्वे धारयध्वे, तेन चित्तेन अस्मभ्यम् तत् धान्यं बीजम् धत्तन । यत् च वः युष्मान् ईमहे याचामहे राधः धनम् विश्वायु सर्वायुरुपेतम् सौभगम् सौभाग्यं च तद् धत्तन इति समन्वयः ॥ १३ ॥

अतीयाम निदस्तिरः स्वस्तिभिर्हित्वावद्यमरातीः ।
वृष्ट्वी शं योराप उस्रि भेषजं स्याम मरुतः सह ॥ १४ ॥

अति । इयाम । निदः । तिरः । स्वस्तिऽभिः । हित्वा । अवद्यम् । अरातीः ।
वृष्ट्वी । शम् । योः । आपः । उस्रि । भेषजम् । स्याम । मरुतः । सह ॥ १४ ॥

वेङ्कट० अति गच्छाम निन्दित्रीः अरातीः अवद्यम् हित्वा स्वस्तिभिः तिरस्कुर्वन्तः । प्याप्य शम् योः उदकानि गोयुक्तम् च सर्वदा तैः सह स्याम अभियुक्ताः हे मरुतः! ॥ १४ ॥

मुद्गल० हे मरुतः! वयम् स्वस्तिभिः क्षेमैः अवद्यम् पापम् हित्वा परित्यज्य निदः निन्दकान् अरातीः शत्रून् तिरः[1] आसान् अति इयाम अतिक्रम्य गच्छेम, तिरस्कुर्म इत्यर्थः । वृष्ट्वी वृष्टिषु युष्मदीयेरिताषु वृष्टिषु सतीषु शम् सुखम् योः पापानां यावने पृथक्करणे च आपः उदकानि उस्रि गोयुक्तम् भेषजम् अन्नं सर्वेण सह स्याम लभेमहि हे मरुतः! वयम् ॥ १४ ॥

सुदेवः समहासति सुवीरो नरो मरुतः स मर्त्यः । यं त्रायध्वे स्याम ते ॥ १५ ॥

सुऽदेवः । समह । असति । सुऽवीरः । नरः । मरुतः । सः । मर्त्यः । यम् । त्रायध्वे । स्याम । ते ॥ १५ ॥

वेङ्कट० हे पूजासहित[2] मरुद्गण! सः मर्त्यः शोभनदेवो भवति । यद्रक्षथ इह[3] । हे नरः! मरुतः! स सुपुत्रश्च भवति । यम् त्रायध्वे वयं[4] च तादृशाः स्याम त्रातव्याः ॥ १५ ॥

मुद्गल० हे समह! [5]प्रशस्तवचन समहशब्दः । हे पूजित![5] मरुतां गण! सः मर्त्यः सुदेवः कल्याणमरुत्संज्ञकदेवोपेतः असति भवति, हे नरः! नेतारः! मरुतः! स मर्त्यः सुवीरः शोभनपुत्रोपेतश्च असति भवति, यम् मर्त्यम् त्रायध्वे पालयध्वे । ये एवं भवन्ति ते वयम् स्याम युष्मदीया ॥ १५ ॥

---

१. नास्ति मूको. २. पूजासहित मूको. ३. यद्रक्षथ मूको. ४. त्वं मूको. ५-५. 'धनपूजित मूको.

स्तुहि भोजान्त्स्तुवतो अस्य यामनि रणन् गावो न यवसे ।
यतः पूर्वाँ इव सखीँरनु ह्वय गिरा गृणीहि कामिनः ॥ १६ ॥

स्तुहि । भोजान् । स्तुवतः । अस्य । यामनि । रणन् । गावः । न । यवसे ।
यतः । पूर्वान्ऽइव । सखीन् । अनु । ह्वय । गिरा । गृणीहि । कामिनः ॥ १६ ॥

वेङ्कट० स्तुहि भोजयितॄन् स्तोतुर्मरुतः अस्य मरुद्गणस्य आगमने । मरुतो रमन्ताम् गावः इव यवसे स्वयं । गच्छतः प्रवान् [illegible] सखीन् अनुक्रमेण आह्वय । वाचा स्तुहि च कामिनः ॥ १६ ॥

मुद्गल० हे ऋषे! स्तुवतः स्तुतिं कुर्वतः अस्य यजमानस्य यामनि यज्ञे भोजान् दातॄन् मरुतः स्तुहि। गावः न यवसे तृणादिभक्षणाय गच्छन्त्यो गावो यथा रमन्ते तद्वन्मरुतोऽपि रणन् रमन्ताम्[1] । यतः गच्छतः मरुतः पूर्वान् पुरातनान् सखीन् इव अनु ह्वय आह्वय । कामिनः स्तुतीच्छायतो मरुतः गिरा स्तुत्या गृणीहि स्तुहि ॥ १६ ॥

इति चतुर्थाष्टके तृतीयाध्याये त्रयोदशो वर्गः ॥

[ ५४ ]

प्र शर्धाय मारुताय स्वभानव इमां वाचमनजा पर्वतच्युते ।
घर्मस्तुभे दिव आ पृष्ठयज्वने द्युम्नश्रवसे महि नृम्णमर्चत ॥ १ ॥

प्र । शर्धाय । मारुताय । स्वऽभानवे । इमाम् । वाचम् । अनज । पर्वतऽच्युते ।
घर्मऽस्तुभे । दिवः । आ । पृष्ठऽयज्वने । द्युम्नऽश्रवसे । महि । नृम्णम् । अर्चत ॥ १ ॥

वेङ्कट० प्र गमय मारुताय वेगाय स्वदीप्तये स्तुतिम् इमाम् मेघानां च्यावयित्रे यज्ञे स्तोतव्याय, दिव. आगत्य पृष्ठयज्ञमानाय, पृष्ठ स्पृशतेः, द्योतमानायाय[2] महद् धनं प्रयच्छत ॥ १ ॥

मुद्गल० 'प्र शर्धाय' इति पञ्चदशर्चं दशमं सूक्तम् । श्यावाश्व ऋषिः । चतुर्दशी त्रिष्टुप्, शिष्टा जगत्यः । मरुतो देवता ।

मारुताय मरुत्सम्बन्धिने शर्धाय बलाय इमाम् क्रियमाणाम् वाचम् स्तुतिम् प्र अनज प्रापय । स्वभानवे स्वायत्ततेजसे पर्वतच्युते पर्वतस्य च्यावयित्रे घर्मस्तुभे घर्मस्य स्तोभयित्रे दिवः द्युलोकात् आ आगच्छते पृष्ठयज्वने यद्पृष्ठैः रथन्तरबृहदादिभिरीजानाय द्युम्नश्रवसे द्योतमानान्नाय महि महत् प्रभूतम् नृम्णम् धनं हविर्लक्षणम् अर्चत ददतेत्यर्थः ॥ १ ॥

प्र वो मरुतस्तविषा उदन्यवो वयोवृधो अश्वयुजः परिज्रयः ।
सं विद्युता दधति वाशति त्रितः स्वरन्त्यापोऽवना परिज्रयः ॥ २ ॥

---

१. रमन्ते मूको. २. °मन अर्थ व वि°; °नायाय ङ.

प्र । वः । मरुतः । तविषाः । उदन्यवः । वयःऽवृधः । अश्वऽयुजः । परिऽज्रयः ।
सम् । विऽद्युता । दधति । वाशति । त्रितः । स्वरन्ति । आपः । अवना । परिऽज्रयः ॥ २ ॥

वेङ्कट० प्र स्वरन्ति प्रगमयन्ति युष्माकं हे मरुतः! महान्तः उदकमिच्छन्तः अन्नवृधः अश्वैर्युक्ताः परितो गन्तारो रथाः, सम् दधति च उदकानि विद्युता सम्भृताश्च पृथिव्यां विसृजन्ति इति मध्येऽपां सम्भारणानन्तरं प्राग्विसर्गात् त्रिस्थान इन्द्रो गर्जितशब्दम् करोति, परितो 'गन्त्र्यः आपः इयं अवनौ' ॥ २ ॥

मुद्गल० हे मरुतः! वः युष्माकं गणाः प्र प्रादुर्भवन्ति। कीदृशाः। तविषाः दीप्ताः उदन्यवः उदकेच्छवो जगद्रक्षणार्थम् वयोवृधः अन्नस्य वर्धयितारः अश्वयुजः गमनाय रथे अश्वानां योक्तारः परिज्रयः परितो गन्तारः। विद्युता तडिता सम् दधति सङ्गच्छन्ते। तदानीम् त्रितः त्रिषु स्थानेषु तायमानो मरुद्गणः वाशति शब्दयति। अस्मिन् पर्वे यदा आपः परिज्रयः परितो गन्त्र्यः अवना अवनौ भूमौ स्वरन्ति अधः पतन्ति ॥ २ ॥

विद्युन्महसो नरो अश्मदिद्यवो वातत्विषो मरुतः पर्वतच्युतः ।
अब्दया चिन्मुहुरा ह्रादुनीवृतः स्तनयदमा रभसा उदोजसः ॥ ३ ॥

विद्युत्ऽमहसः । नरः । अश्मऽदिद्यवः । वातऽत्विषः । मरुतः । पर्वतऽच्युतः ।
अब्दऽया । चित् । मुहुः । आ । ह्रादुनिऽवृतः । स्तनयत्ऽअमाः । रभसाः । उत्ऽओजसः ॥ ३ ॥

वेङ्कट० विद्योतमानतेजसः नेतारः[1] व्याप्तायुधाः निश्चरत्तेजसः मरुतः पर्वतच्युतः अपां दातारः च मुहुः आ गच्छन्ति ह्रादुनेर्वर्तयितारः शब्दायमानगृहा वेगवन्तः उद्भूतबलाः। शरीरं गृहमिति ॥ ३ ॥

मुद्गल० विद्युन्महसः विद्योतमानतेजसः नरः वृष्ट्यादिनेतारः अश्मदिद्यवः व्याप्तायुधाः वातत्विषः प्राप्तदीप्तयः पर्वतच्युतः पर्वतानां मेघानां च्यावयितारः अब्दया मुहुः उदकानां दातारः। चित् पूरणः। ह्रादुनीवृतः ह्रादुन्या अशनेः प्रवर्तकाः स्तनयदमाः शब्दोपेतगणाः रभसाः वृष्ट्यर्थम् उद्युञ्जानाः[4] उदोजसः उद्गतबलाः मरुतः [5]आ गच्छन्ति[5]। वृष्ट्यर्थं प्रादुर्भवन्तीत्यर्थः ॥ ३ ॥

व्य१क्तून्रुद्रा व्यहानि शिक्वसो व्य१न्तरिक्षं वि रजांसि धूतयः ।
वि यदज्राँ अजथ नाव ईं यथा वि दुर्गाणि मरुतो नाह रिष्यथ ॥ ४ ॥

वि । अक्तून् । रुद्राः । वि । अहानि । शिक्वसः । वि । अन्तरिक्षम् । वि । रजांसि । धूतयः ।
वि । यत् । अज्रान् । अजथ । नावः । ईम् । यथा । वि । दुःऽगानि । मरुतः । न । अह । रिष्यथ ॥

वेङ्कट० वि अजथ रात्रीः हे रुद्राः!, तथा अहानि च हे शक्ताः!, तथा[6] अन्तरिक्षम्, तथा सर्वाणेव

---

१-१. गर्जतीरप इव विं कं; °इति स. २. नास्ति मूको. ३. दोतारः मूको. ४. उपजनाः मूको.
५-५. नास्ति मूको. ६. तथाहानि वि°.

लोकान् हे कम्पयितारः! । यदा यूयम् अज्रान् वृक्षान् वि अजथ, यथा इमानि उदकानि नावः, यदा च दुर्गाणि वि अजथ, तदानीम् न एव क्रमेण जीर्णा भवथ ॥ ४ ॥

मुद्गल० हे रुद्राः! रुद्रपुत्राः मरुतः! अक्तून् रात्रीः वि अजथ, अहानि अपि वि अजथ। हे शिक्वसः! शक्ताः! सर्वमपि कर्तुम् यत् अन्तरिक्षम् वि अजथ, तथा रजांसि लोकान् वि अजथ अज्रान् मार्गान् वि अजथ, दुर्गाणि वि अजथ, हे धूतयः! कम्पयितारः मरुतः! यूयम् ईम् अस्मान् अह न रिष्यथ न हिंसथ। दृष्टान्तः। नावः यथा आश्रितान्[2] रक्षन्ति तद्वत् ॥ ४ ॥

तद् वीर्यं वो मरुतो महित्वनं दीर्घं ततान सूर्यो न योजनम् ।
एता न यामे अगृभीतशोचिषोऽनश्वदां यन्न्ययातना गिरिम् ॥ ५ ॥

तत् । वीर्यम् । वः । मरुतः । महिऽत्वनम् । दीर्घम् । ततान । सूर्यः । न । योजनम् ।
एताः । न । यामे । अगृभीतऽशोचिषः । अनश्वऽदाम् । यत् । नि । अयातन । गिरिम् ॥५॥

वेङ्कट० तत् वीर्यम् युष्माकं हे मरुतः! महत्त्वं विस्तृतं तनोति सूर्यः इव तेजः। अश्वाः इव गमने अन्यैरगृहीतबलाः अनश्वस्य अदातारम् गिरिम्[1] यत् नि अयातन पक्षिभिरपकृतान्, अस्मात् आहर्तुम् ॥ ५ ॥

मुद्गल० हे मरुतः! वः युष्माकम् तत् वीर्यम् प्रसिद्धं सामर्थ्यम् महित्वनम् महत्त्वम् दीर्घम् अत्यन्तमायतम् ततान तनोति। लोके सूर्यः न योजनम् सूर्यस्तेज इव। एताः न एतवर्णाः देवानाम् अश्वा इव ते यथा यामे गमने योजने दीर्घं गच्छन्ति तद्वदित्यपरो दृष्टान्तः। ते च अगृभीतशोचिषः अगृहीततेजस्काः यत् यदा अनश्वदाम् व्यापकोदकानां दातारम् गिरिम् मेघम् नि अयातन निहतवन्तः ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये चतुर्दशो वर्गः ॥

अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः ।
अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम् ॥ ६ ॥

अभ्राजि । शर्धः । मरुतः । यत् । अर्णसम् । मोषथ । वृक्षम् । कपनाऽइव । वेधसः ।
अध । स्म । नः । अरमतिम् । सऽजोषसः । चक्षुःऽइव । यन्तम् । अनु । नेषथ । सुऽगम् ॥६॥

वेङ्कट० दीप्यते बलं हे मरुतः! यदा उदकं मेघस्थं शनैःशनैः मेघम् मोषथ, यथा वृक्षम् अन्तर्गतः[4] कृमिर्मुष्णाति हे विधातारः!। ततोऽस्मान् सङ्गता यूयं पर्याप्तमतिम् उदारं भवत, यथा चक्षुः यन्तम् शोभनमार्गम् अनु नयति ॥ ६ ॥

१. महस्थि वि॰ लप. २. आश्रितान् मूको. ३. ˚शिरम् मूको. ४. अन्तर्गतं वि॰.

मुद्गल० हे वेधसः सृष्टेः[1] विधातारः! मरुतः! यत् अर्णसम् मेघम् मोषथ ताडयथ। तत् शर्धः अभ्राजि अशोभत, कपनेव घुणादयः यथा वृक्षं मुष्णन्ति तद्वत्। अध अपि च। स्म पूरणः। नः अस्मान्, मामित्यर्थः। हे सजोषसः! समानप्रीतयः! यूयम् अरमतिम् आरमणं धनादिकं प्रति यन्तम् अनु नेषथ अनुक्रमेण नयथ सुगम् सुगमनं मार्गम्। दृष्टान्तः। चक्षुरिव तद् यथा मार्गप्रदर्शनेन नायकं भवति तद्वत् ॥ ६ ॥

न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति ।
नास्य राय उप दस्यन्ति नोतय ऋषिं वा यं राजानं वा सुषूदथ ॥ ७ ॥

न । सः । जीयते । मरुतः । न । हन्यते । न । स्रेधति । न । व्यथते । न । रिष्यति ।
न । अस्य । रायः । उप । दस्यन्ति । न । ऊतयः । ऋषिम् । वा । यम् । राजानम् । वा । सुसूदथ ॥ ७ ॥

वेङ्कट० न[1] सः शत्रुभिः जीयते हे मरुतः!, न च हन्यते, न क्षीणो भवति, न चलति, न च हिंसितो भवति, न अस्य धनानि उपदस्तानि भवन्ति, न च रक्षणम्, ऋषिम् वा यम् राजानम् वा सुष्ठु प्रेरयथ ॥ ७ ॥

मुद्गल० हे मरुतः! यूयम् यम्[1] ऋषिम् मन्त्रद्रष्टारं ब्राह्मणम् राजानम् वा सुषूदथ प्रेरयथ सत्कर्मसु, सः ऋषिः राजा वा न जीयते अन्यैर्न पराभाव्यते, न हन्यते न हिंस्यते अस्यर्थं प्राणैर्न वियुज्यते, न स्रेधति न क्षीयते, न व्यथते न पीड्यते, न रिष्यति न हिंस्यते[2]। अस्य रायः धनानि न उप दस्यन्ति न उपक्षीयन्ते, तथा न ऊतयः रक्षाः अपि न उपदस्यन्ति ॥ ७ ॥

नियुत्वन्तो ग्रामजितो यथा नरोऽर्यमणो न मरुतः कबन्धिनः ।
पिन्वन्त्युत्सं यदिनासो अस्वरन् व्युन्दन्ति पृथिवीं मध्वो अन्धसा ॥ ८ ॥

नियुत्वन्तः । ग्रामऽजितः । यथा । नरः । अर्यमणः । न । मरुतः । कबन्धिनः ।
पिन्वन्ति । उत्सम् । यत् । इनासः । अस्वरन् । वि । उन्दन्ति । पृथिवीम् । मध्वः । अन्धसा ॥ ८ ॥

वेङ्कट० अश्ववन्तः सद्ग्रामजितो मनुष्याः इव[1] अश्वान् अधिष्ठाय गच्छन्ति उदाराः इव मरुतः उदकवन्तः। पिन्वन्ति मेघम् यत्[2] ईश्वराः निर्गच्छन्ति, वि उन्दन्ति पृथिवीम् उदकस्य अन्नेन हेतुना ॥ ८ ॥

मुद्गल० नियुत्वन्तः नियुत्संज्ञकैरश्वैस्तद्वन्तः ग्रामजितः सङ्घात्मकस्य पदार्थस्य विश्लेषयितारः नरः नेतारः मरुतः अर्यमणः ■ अर्यमप्रभृतय आदित्या इव, दीप्ता इति शेषः। तादृशाः मरुतः कबन्धिनः उदकवन्तो भवन्ति। यत् यदा इनासः ईश्वराः उत्सम् कूपादिनिम्नप्रदेशम् पिन्वन्ति प्याययन्त्युदकेन, यदा अस्वरन् शब्दयन्ति, वि उन्दन्ति यदा पृथिवीम् मध्वः मधुरस्योदकस्य अन्धसा सारेण क्लेदं भवन्ति ॥ ८ ॥

---

१ विविधं मूको. २. नास्ति वि[?] लपं. ३. नास्ति मूको. ४. हिंस्यति मूको. ५. तद मूको.
६. यदि ल.

प्रवत्वतीयं पृथिवी मरुद्भ्यः प्रवत्वती द्यौर्भवति प्रयद्भ्यः ।
प्रवत्वतीः पथ्या अन्तरिक्ष्याः प्रवत्वन्तः पर्वता जीरदानवः ॥ ९ ॥

प्रवत्ऽवती । इयम् । पृथिवी । मरुत्ऽभ्यः । प्रवत्ऽवती । द्यौः । भवति । प्रयत्ऽभ्यः ।
प्रवत्ऽवतीः । पथ्याः । अन्तरिक्ष्याः । प्रवत्ऽवन्तः । पर्वताः । जीरऽदानवः ॥ ९ ॥

वेङ्कट० विस्तीर्णा इयम् पृथिवी भवति मरुद्भ्यः काम सञ्चरणाय द्यौः च गच्छद्भ्यः । प्रवत्वन्तः अन्तरिक्षस्थाः मार्गाः पर्वताः च क्षिप्रोदकदानाः ॥ ९ ॥

मुद्गल० इयम् पृथिवी मरुद्भ्यः मरुदर्थाय प्रवत्वती प्रवन्तः प्रकर्षवन्तो विस्तीर्णाः प्रदेशाः यस्याः सा प्रवत्वती, तादृशी भवति । कृत्स्नाऽपि भूमिः मरुत्परा भवतीत्यर्थः । ता सर्वामपि व्याप्नुवन्तीति यावत् । तथा द्यौः अपि प्रयद्भ्यः प्रकर्षेण गच्छद्भ्यस्तेभ्यः प्रवत्वती भवति साऽपि मरुतां सञ्चाराय । तथा अन्तरिक्ष्याः अन्तरिक्षे[1] भवाः पथ्याः सुगतयोऽपि[2] प्रवत्वती प्रवत्वत्यो[3] मरुद्भ्यो भवन्ति । पर्वताः अद्रयः प्रवत्वन्तः भवन्ति जीरदानवः क्षिप्रदानाः मरुतः ॥ ९ ॥

यन्मरुतः सभरसः स्वर्णरः सूर्य उदिते मदथा दिवो नरः ।
न वोऽश्वाः श्रथयन्ताह सिस्रतः सद्यो अस्याध्वनः पारमश्नुथ ॥ १० ॥

यत् । मरुतः । सऽभरसः । स्वःऽनरः । सूर्ये । उत्ऽइते । मदथ । दिवः । नरः ।
न । वः । अश्वाः । श्रथयन्त । अह । सिस्रतः । सद्यः । अस्य । अध्वनः । पारम् । अश्नुथ ॥ १० ॥

वेङ्कट० यत् मरुतः ! सभराः ! सर्वेनराः ! सूर्ये उदिते मधौ आगत्य मदथ हे दिवः नेतारः ! । ततो युष्माकम् अश्वाः मार्गे न एव श्रथयन्त सरन्तः । तदानीम् एव अस्य अध्वनः पारम् प्राप्नुथ तैरिति ॥ १० ॥

मुद्गल० हे मरुतः ! सभरसः ! सहबलाः ! स्वर्णरः ! सर्वस्य नेतारः ! यूयम् यत् यदा सूर्ये उदिते उद्गते मध्याह्ने मदथ सोमेन हे दिवः द्युलोकस्य नरः नेतारः ! । यदा सोमं पातुमिच्छथ[4] इत्यर्थः । तदा वः अश्वाः सिस्रतः सरन्तः[5] न अह श्रथयन्त नैव श्लथयन्ति । सद्यः तदानीम् अस्य अध्वनः देवयजनमार्गस्य पारम् अश्नुथ व्याप्नुथ ॥ १० ॥

इति चतुर्थाष्टके तृतीयाध्याये पञ्चदशो वर्गः ॥

अंसेषु व ऋष्टयः पत्सु खादयो वक्षःसु रुक्मा मरुतो रथे शुभः ।
अग्निभ्राजसो विद्युतो गभस्त्योः शिप्राः शीर्षसु वितता हिरण्ययीः ॥ ११ ॥

अंसेषु । वः । ऋष्टयः । पत्ऽसु । खादयः । वक्षःऽसु । रुक्माः । मरुतः । रथे । शुभः ।
अग्निऽभ्राजसः । विऽद्युतः । गभस्त्योः । शिप्राः । शीर्षऽसु । विऽतताः । हिरण्ययीः ॥ ११ ॥

१ °रिक्ष मूको. २ मतयो° ३ प्रवत्वत्यो मूको. ४ °च्छत मूको. ५ °यन्त मूको.

वेङ्कट० अंसेषु युष्माकं शक्तयो भवन्ति, पत्सु च खादयः तथा वक्षःसु रुक्माः हे मरुतः! भवताम् रथे याऽलंकाराः, अग्निदीप्तयः विद्युतः[1] बाह्वोः, शिप्राः च हिरण्मय्यः शिरसः आणाय वितताः ॥ ११ ॥

मुद्गल० हे मरुतः! युष्माकम् अंसेषु ऋष्टयः आयुधानि, भासन्त[2] इति शेषः। पत्सु खादयः कटकाः, वक्षःसु रुक्माः हाराः[3], रथे शुभः मधुरा आपः, अग्निभ्राजसः अग्निदीप्ताः विद्युतः गभस्त्योः हस्तयोः, भासन्ते इत्यर्थः। शीर्षसु शिरःसु हिरण्ययीः हिरण्मय्यः शिप्राः उष्णीषमय्यः वितताः विस्तृताः ॥ ११ ॥

तं नाकमर्यो अगृभीतशोचिषं रुशत् पिप्पलं मरुतो वि धूनुथ ।
समच्यन्त वृजनातित्विषन्त यत् स्वरन्ति घोषं विततमृतायवः ॥ १२ ॥

तम् । नाकम् । अर्यः । अगृभीतऽशोचिषम् । रुशत् । पिप्पलम् । मरुतः । वि । धूनुथ ।
सम् । अच्यन्त । वृजना । अतित्विषन्त । यत् । स्वरन्ति । घोषम् । विऽततम् । ऋतऽयवः ॥१२॥

वेङ्कट० तम् आदित्यं गन्तारः शत्रुभिरगृहीतफलं हे मरुतः! शुक्लम् उदकं कम्पयथ। अथ परोक्षः— सङ्गतानि भवन्ति बलानि दीप्यन्ते च, यदा स्वरन्ति शब्दम् विततम् उदकमिच्छन्तः ॥ १२ ॥

मुद्गल० हे मरुतः! अर्यः गन्तारो यूयम् तम् प्रसिद्धम् नाकम् आदित्यम् अगृभीतशोचिषम्[4] असुरैरनपहृततेजस्कं तम् रुशत् शुभ्रवर्णम् पिप्पलम् उदकम् वि धूनुथ विविधं चालयथ, यत् यदा वृजना बलानि सम् अच्यन्त सङ्गता बलिनो भवथ, हविर्भिरस्मदीयैरिति भावः। पश्चात् अतित्विषन्त दीप्ता भवथ, तदा घोषम् गर्जनाख्यं शब्दम् विततम् विस्तृतम् स्वरन्ति कुरुथेत्यर्थः[5] ऋतायवः उदकमिच्छन्तो यूयम् ॥ १२ ॥

युष्मादत्तस्य मरुतो विचेतसो रायः स्याम रथ्यो वयस्वतः ।
न यो युच्छति तिष्यो यथा दिवोऽस्मे रारन्त मरुतः सहस्रिणम् ॥ १३ ॥

युष्माऽदत्तस्य । मरुतः । विऽचेतसः । रायः । स्याम । रथ्यः । वयस्वतः ।
न । यः । युच्छति । तिष्यः । यथा । दिवः । अस्मे इति । रारन्त । मरुतः । सहस्रिणम् ॥१३॥

वेङ्कट० युष्माभिः दत्तस्य हे मरुतः! सुमतयः! धनस्य अन्नवतः रथिनः स्याम, लभेम धनेन पूर्णं रथम्। न यः रयिर्गच्छति यथा तिष्यः प्रज्वलितः दिवः न पतति, तं रयिमस्मासु रमयत सहस्रपशुम् हे मरुतः! ॥ १३ ॥

मुद्गल० हे विचेतसः! विविधप्रज्ञाः मरुतः! युष्मादत्तस्य युष्माभिर्दत्तस्य वयस्वतः अन्नवतः रायः धनस्य स्याम भवेम स्वामिनः। के रथ्यः रथस्वामिनो वयम्। यः युष्माभिर्दत्तो राः युच्छति

१. विद्युतो बाह्वो वि°; बलो रूपं. २. भासन्ति मूको. ३. आहाराः मूको. ४. अनुगृहीत° मूको. ५. कुरुते° मूको.

न ध्वंसते, यथा दिवः सकाशात् तिष्यः आदित्यः न शुष्यति, तथा अस्मे अस्मासु दक्षिणम् अपरिमितम् रत्नं रमयत हे मरुतः! ॥ १३ ॥

यूयं रयिं मरुतः स्पार्हवीरं यूयमृषिमवथ सामविप्रम् ।
यूयमर्वन्तं भरताय वाजं यूयं धत्थ राजानं श्रुष्टिमन्तम् ॥ १४ ॥

यूयम् । रयिम् । मरुतः । स्पार्हऽवीरम् । यूयम् । ऋषिम् । अवथ । सामऽविप्रम् ।
यूयम् । अर्वन्तम् । भरताय । वाजम् । यूयम् । धत्थ । राजानम् । श्रुष्टिऽमन्तम् ॥ १४ ॥

वेङ्कट० यूयम् धनम् मरुतः! स्पृहणीयवीरम् धत्थ । यूयम् ऋषिम् रक्षथ सामविप्रम् नाम । यूयम् अश्वम् भरताय राज्ञे बलवन्तम्, तथा श्रुष्टिमन्तम् च राजानम् रक्षन्तः ॥ १४ ॥

मुद्गल० हे मरुतः! यूयम् रयिम् धनम् स्पार्हवीरम् स्पृहणीयैर्वीरैः पुत्रभृत्यादिभिरुपेतम् धत्थ दत्थ । हे मरुतः! यूयम् सामविप्रम् साम्नो विविधं मेरयितारं साध्वम् ऋषिम् अवथ । यूयम् अर्वन्तम् आशुम् वाजम् अन्नं च भरताय देवान् बिभ्रते यजमानाय धत्थ । हे मरुतः! यूयम् राजानम् दीप्तम् श्रुष्टिमन्तम् सुखवन्तं पुत्रमित्यर्थः धत्थ ॥ १४ ॥

तद् वो यामि द्रविणं सद्यऊतयो येना स्व१र्ण ततनाम नॄँरभि ।
इदं सु मे मरुतो हर्यता वचो यस्य तरेम तरसा शतं हिमाः ॥ १५ ॥

तत् । वः । यामि । द्रविणम् । सद्यःऽऊतयः । येन । स्वः । न । ततनाम । नॄन् । अभि ।
इदम् । सु । मे । मरुतः । हर्यत । वचः । यस्य । तरेम । तरसा । शतम् । हिमाः ॥ १५ ॥

वेङ्कट० तत् युष्मान् याचामि धनम् हे क्षिप्रगन्तारः!, येन आदित्यः इव मनुष्येषु विस्तृता भवाम । इदम् सुष्ठु कामयत मरुतः! मदीयम् वचनम्, यस्य धनस्य बलेन शतसंवत्सरान् तीर्णाः भवाम ॥ १५ ॥

मुद्गल० हे सद्यऊतयः! तदानीमेव रक्षकाः! वः युष्मान् तत् द्रविणम् धनम् यामि याचामहे, येन धनेन नॄन् अस्मत्पुत्रभृत्यादीन् अभि ततनाम विस्तारयाम स्वः न आदित्य इव रश्मीन् । हे मरुतः! मे मम स्वभूतम् इदम् इदानीम् क्रियमाणम् वचः स्तोत्रम् सु सुष्ठु हर्यत कामयध्वम्, यस्य स्तोत्रवचसः तरसा बलेन शतम् शतसंख्याकान् हिमाः हेमन्तान् तरेम शतसंवत्सरं जीवेम इत्यर्थः ॥ १५ ॥

इति चतुर्थाष्टके तृतीयाध्याये षोडशो वर्गः ॥

[ ५५ ]

प्रयज्यवो मरुतो भ्राजदृष्टयो बृहद् वयो दधिरे रुक्मवक्षसः ।
ईयन्ते अश्वैः सुयमेभिराशुभिः शुभं यातामनु रथा अवृत्सत ॥ १ ॥

प्रऽयज्यवः । मरुतः । भ्राजत्ऽऋष्टयः । बृहत् । वयः । दधिरे । रुक्मऽवक्षसः ।
ईयन्ते । अश्वैः । सुऽयमेभिः । आशुऽभिः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ १ ॥

वेङ्कट० प्रकर्षेण यष्टव्याः मरुतः दीप्यमानशक्तयः बृहत् अन्नं प्रयच्छन्ति। रुक्मालंकृतवक्षसः गच्छन्ति अश्वैः सुयमैः क्षिप्रैः। कल्याणं गच्छतो मरुतः अनु वर्तन्ते रथाः ॥ १ ॥

मुद्गल० 'प्रयज्यवः' इति दशर्चमेकादशं सूक्तम्। श्यावाश्व ऋषिः। दशमी त्रिष्टुप्, शिष्टा जगत्यः। मरुतो देवता।

प्रयज्यवः प्रकर्षेण यष्टारः भ्राजदृष्टयः दीप्तायुधाः मरुतः बृहत् प्रभूतम् वयः अन्नम् दधिरे धारयन्ति। रुक्मवक्षसः हारायत्तवक्षस्काः मरुतः सुयमेभिः सुखेन नियमयितुं शक्यैः आशुभिः शीघ्रगैः अश्वैः ईयन्ते गम्यन्ते। शुभम् शोभनं यथा भवति तथा यद्वा उदकम्[1] अभिलक्ष्य याताम् गच्छताम् मरुताम् रथाः अनु अवृत्सत अनुवर्तन्ते ॥ १ ॥

स्वयं दधिध्वे तविषीं यथा विद बृहन्महान्त उर्विया वि राजथ ।
उतान्तरिक्षं ममिरे व्योजसा शुभं यातामनु रथा अवृत्सत ॥ २ ॥

स्वयम् । दधिध्वे । तविषीम् । यथा । विद । बृहत् । महान्तः । उर्विया । वि । राजथ ।
उत । अन्तरिक्षम् । ममिरे । वि । ओजसा । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ २ ॥

वेङ्कट० स्वयम् एव परानपेक्षं यूयं सहीभूताः[2] बलं धारयथ। यथा प्रत्यक्षमहं वेद्मि तथा बृहन्तः (?) महान्तः। विस्तीर्णतया वि राजथ। अपि च अन्तरिक्षम् बलेनैव परिच्छिन्दन्ति[3] ॥ २ ॥

मुद्गल० हे मरुतः! यूयम् स्वयम् असहायेनैव दधिध्वे धारयध्वे कुरुध्वे इत्यर्थः। किम्। तविषीम् बलं सामर्थ्यम् यथा विद जानीथ, अप्रतिबद्धसामर्थ्या इत्यर्थः। हे महान्तः! यूयम् उर्विया उरवः सन्तः वि राजथ। उत अपि च बृहत् महत् अन्तरिक्षम् ओजसा बलेन वि ममिरे व्याप्ताः। शुभम् इत्यादि गतम् ॥ २ ॥

साकं जाताः सुभ्वः साकमुक्षिताः श्रिये चिदा प्रतरं वावृधुर्नरः ।
विरोकिणः सूर्यस्येव रश्मयः शुभं यातामनु रथा अवृत्सत ॥ ३ ॥

साकम् । जाताः । सुऽभ्वः । साकम् । उक्षिताः । श्रिये । चित् । आ । प्रऽतरम् । ववृधुः । नरः ।
विऽरोकिणः । सूर्यस्यऽइव । रश्मयः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ३ ॥

वेङ्कट० आदित्याः[4] एकस्मिन् काले जाताः शोभनभवनाः साकम् च निषिक्ताः[5] श्रियै[6] च शीघ्रं वृद्धाः आसन् नेतारः विरोचमानाः सूर्यस्येव रश्मयः आभरणैः ॥ ३ ॥

---

१. एकम् मूको.   २. सहीभूता वि° सर्प.   ३. परिच्छन्दन्ति वि°.   ४. मादित्या मूको.
५. निषक्ताः स सर्प.   ६. श्रियर्थम् वि° सर्प.

मुद्गल० साकम् सहैव जाताः उत्पन्नाः सुभ्वः सुष्ठु भवन्तः। महान्तः इत्यर्थः। साकम् सहैव उक्षिताः सेक्तारो वर्षकाः श्रिये चित् शोभाया एव प्रतरम् प्रकृष्टतरम् । सर्वतः ववृधुः अवर्धयन्। नरः कर्मणां नेतारः विरोकिणः विरोचमानाः सूर्यस्येव रश्मयः सूर्यरश्मयः[1] । शुभम् इत्यादि गतम् ॥ ३ ॥

आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणम् ।
उतो अस्माँ अमृतत्वे दधातन शुभं यातामनु रथा अवृत्सत ॥ ४ ॥

आऽभूषेण्यम् । वः । मरुतः । महिऽत्वनम् । दिदृक्षेण्यम् । सूर्यस्यऽइव । चक्षणम् ।
उतो इति । अस्मान् । अमृतऽत्वे । दधातन । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥४॥

वेङ्कट० स्तुतिभिरामूषणीयम् वः मरुतः! महत्त्वं दर्शनीयं च सूर्यस्य इव तेजः, अपि च अस्मान् अमृतत्वे स्थापयत ॥ ४ ॥

मुद्गल० हे मरुतः! वः युष्माकम् महित्वनम् महत्त्वम्[2] आभूषेण्यम् स्तुत्यम्। किञ्च सूर्यस्य इव चक्षणम् रूपमिव दिदृक्षेण्यम् दर्शनीयम्। उतो अपि च अस्मान् अमृतत्वे मोक्षे, स्वर्गे इत्यर्थः, तत्र दधातन धारयत। शिष्टं गतम् ॥ ४ ॥

उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत ॥५ ॥

उत् । ईरयथ । मरुतः । समुद्रतः । यूयम् । वृष्टिम् । वर्षयथ । पुरीषिणः ।
न । वः । दस्राः । उप । दस्यन्ति । धेनवः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥५॥

वेङ्कट० उत् गमयथ[3] हे मरुतः! समुद्रतः यूयम् वृष्टिम्। वर्षयथ मेघान् हे उदकवन्तः!। न युष्माकं हे दर्शनीयाः! मेघरूपाः धेनवः क्षुभ्यन्ति ॥ ५ ॥

मुद्गल० हे मरुतः! यूयम् समुद्रतः अन्तरिक्षात् उदीरयथ वृष्टिम्। हे पुरीषिणः! पुरीषमुदकं वहन्तः! यूयम् वृष्टिम् वर्षयथ। हे दस्राः! दर्शनीयाः! वः युष्माकम् धेनवः मेघाः न उप दस्यन्ति न क्षुभ्यन्ति ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये सप्तदशो वर्गः ॥

यदश्वान् धूर्षु पृषतीरयुग्ध्वं हिरण्ययान् प्रत्यत्काँ अमुग्ध्वम् ।
विश्वा इत् स्पृधो मरुतो व्यस्यथ शुभं यातामनु रथा अवृत्सत ॥ ६ ॥

यत् । अश्वान् । धूःऽसु । पृषतीः । अयुग्ध्वम् । हिरण्ययान् । प्रति । अत्कान् । अमुग्ध्वम् ।
विश्वाः । इत् । स्पृधः । मरुतः । वि । अस्यथ । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥६॥

१. नास्ति मूको. २. महित्वं मूको. ३. उद्गमनयथ वि[1] लपं.

वेङ्कट० यदा अश्वान् रथधुर्षु पृषतीः च अयुग्ध्वम्, यदा च हिरण्मयान् अत्कान् कवचान् अङ्गेषु प्रति अमुग्ध्वम्, तदनन्तरं सर्वाणि शत्रून् मरुतः! निरक्षिपत ॥ ६ ॥

मुद्गल० हे मरुतः! यूयम् यत् यदा अश्वान् धूर्षु रथसम्बन्धिनीषु अयुग्ध्वम् योजितवन्तः। कीदृशानश्वान्? पृषतीः पृषद्वर्णा वडवाः। हिरण्ययान् हिरण्यवर्णान् अत्कान् कवचान् प्रति अमुग्ध्वम् प्रत्यमुञ्चत। एवं कृत्वा विश्वाः इत् स्पृधः सर्वानपि सङ्ग्रामान् हे मरुतः! वि अस्यथ विक्षिपथ। शुभम् इत्यादि गतम् ॥ ६ ॥

न पर्वता न नद्यो वरन्त वो यत्राचिध्वं मरुतो गच्छथेदु तत् ।
उत द्यावापृथिवी याथना परि शुभं यातामनु रथा अवृत्सत ॥ ७ ॥

न । पर्वताः । न । नद्यः । वरन्त । वः । यत्र । अचिध्वम् । मरुतः । गच्छथ । इत् । ऊँ इति । तत् ।
उत । द्यावापृथिवी इति । याथन । परि । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ७ ॥

वेङ्कट० न वारयन्ति पर्वताः नद्यः च युष्मान्। यत्र यातुं संकल्पयथ, तत्र गच्छथैव हे मरुतः!। अपि च द्यावापृथिवी च परितो गच्छथ ॥ ७ ॥

मुद्गल० हे मरुतः! वः युष्मान् पर्वताः शिलोच्चयाः न वरन्त न वारयन्तु। तथा नद्यः च न वारयन्तु। किन्तु यत्र यस्मिन् यज्ञादिस्थाने अचिध्वम् आशीय, तत् स्थानम् गच्छथ इत् उ गच्छथैव। उत अपि च द्यावापृथिवी च परि परितः याथन याथ गच्छथ[1] इति ॥ ७ ॥

यत्पूर्व्यं मरुतो यच्च नूतनं यदुद्यते वसवो यच्च शस्यते ।
विश्वस्य तस्य भवथा नवेदसः शुभं यातामनु रथा अवृत्सत ॥ ८ ॥

यत् । पूर्व्यम् । मरुतः । यत् । च । नूतनम् । यत् । उद्यते । वसवः । यत् । च । शस्यते ।
विश्वस्य । तस्य । भवथ । नवेदसः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ८ ॥

वेङ्कट० यत् प्रत्नं भवतां कर्म, यत् च नूतनम् हे वासयितारः! मरुतः! यत् ऋत्विग्भिः अभिधीयते, यत् च वाग्भिः शस्यते, सर्वस्य भवथ ज्ञातारः ॥ ८ ॥

मुद्गल० हे मरुतः! यूयम् यत् पूर्व्यम् पूर्वमनुष्ठितम् यत् कर्मास्ति तदित्यर्थः, यत् च नूतनम् कर्मास्ति, यत् च उद्यते ऊर्ध्वं प्राप्यते स्तूयत इत्यर्थः। हे वसवः! वासकाः! यत् च शस्यते शंसनं क्रियते, तस्य विश्वस्य सर्वस्य नवेदसः ज्ञातारः भवथ ॥ ८ ॥

मृळत नो मरुतो मा वधिष्टनास्मभ्यं शर्म बहुलं वि यन्तन ।
अधि स्तोत्रस्य सख्यस्य गातन शुभं यातामनु रथा अवृत्सत ॥ ९ ॥

---

1. यथा मूको. 2. गच्छथेत्यर्थः मूको.

मृळत । नः । मरुतः । मा । वधिष्टन । अस्मभ्यम् । शर्म । बहुलम् । वि । यन्तन ।
अधि । स्तोत्रस्य । सख्यस्य । गातन । शुभम् । यातम् । अनु । रथाः । अवृत्सत ॥ ९ ॥

वेङ्कट० सुखयत अस्मान् मरुतः!, मा च हत, अस्मभ्यम् सुखम् [1]बहुलम् विविधं[1] यच्छत, अधि गच्छत च स्तोत्रं सख्यं च ॥ ९ ॥

मुद्गल० हे मरुतः! नः अस्मान् मृळत सुखयत, मा वधिष्टन अस्मत्प्रहरणादिजनितेन[2] कोपेन मा वधिष्वम्। किन्तु अस्मभ्यम् शर्म सुखम् बहुलम् अत्यधिकम् वि यन्तन कुरुत। किञ्च स्तोत्रस्य स्तोत्रम् सख्यस्य सख्यम् अधि गातन अधिगच्छत। स्तुतिमनुसृत्य अस्मासु सख्यं कुरुतेत्यर्थः ॥ ९ ॥

यूयमस्मान् नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः ।
जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणाम् ॥ १० ॥

यूयम् । अस्मान् । नयत । वस्यः । अच्छ । निः । अंहतिऽभ्यः । मरुतः । गृणानाः ।
जुषध्वम् । नः । हव्यऽदातिम् । यजत्राः । वयम् । स्याम । पतयः । रयीणाम् ॥ १० ॥

वेङ्कट० यूयम् अस्मान् अभिनयत अभ्युदयं प्रति, पापेभ्यः [3]निः नयत[3] मरुतः! स्तूयमानाः! सेवध्वं च नः हविषां दानं हे यष्टव्याः!। वयम् इति गतम् ॥ १० ॥

मुद्गल० हे मरुतः! वस्यः वासयितारः यूयम् अस्मान् निः अंहतिभ्यः [4]निष्कृष्य पापकर्मभ्यः[4] अच्छ युष्मदभिमुखम् नयत गृणानाः स्तूयमानाः। जुषध्वम् सेवध्वम् नः अस्माकम् हव्यदातिम् हविः दत्तं यूयम् हे यजत्राः यष्टव्याः!। वयम् च रयीणाम् बहुविधानां धनानाम् पतयः स्याम भवेम ॥ १० ॥

इति चतुर्थाष्टके तृतीयाध्याये अष्टादशो वर्गः ॥

[ ५६ ]

अग्ने शर्धन्तमा गणं पिष्टं रुक्मेभिरञ्जिभिः ।
विशो अद्य मरुतामव ह्वये दिवश्चिद् रोचनादधि ॥ १ ॥

अग्ने । शर्धन्तम् । आ । गणम् । पिष्टम् । रुक्मेभिः । अञ्जिऽभिः ।
विशः । अद्य । मरुताम् । अव । ह्वये । दिवः । चित् । रोचनात् । अधि ॥ १ ॥

वेङ्कट० अग्ने! वेगमनुतिष्ठन्तम् आभिमुख्येन[5] अव ह्वयामि गणम् पिष्टम् आश्लिष्टं[6] रुक्ममयैः आभरणैः अञ्जिलक्षणैः दिवः रोचमानात्[7] मरुताम् [8]मनुष्यान् अहमिति[†] ॥ १ ॥

---

१. विविधं बहुलं वि° रूपं. २. न स्पष्टं मूको. ३-३. निर्गमय वि° रूपं ४-४. निष्पाप° मूको. ५. °न दिवः मूको. ६. आलि° ल रूपं. ७. °माना ल रूप. ८. नास्ति मूको. ९-९. °ष्याः वय° ल. † °ष्याः वयमिति वि° रूपं.

मुद्गल० 'अग्ने शर्धन्तम्' इति नवर्चं द्वादशं सूक्तम्। श्यावाश्व ऋषिः। तृतीयासप्तम्यौ सतोबृहत्यौ, शिष्टा बृहत्यः। मरुतो देवता।

हे अग्ने! शर्धन्तम् शत्रून् अभिभवन्तम् गणम् मरुतां गणम् आ हुवेति शेषः। कीदृशम्? रुक्मेभिः रुक्मैः रोचमानैः अञ्जिभिः आभरणैश्च पिष्टम् अवयवितं युक्तमित्यर्थः। अद्य अस्मिन् यागदिने मरुताम् विशः प्रजाः गणानित्यर्थः। तान् रोचनात् रोचमानात् दिवः द्युलोकात्। अधिः पञ्चम्यर्थानुवादी। चित् पूरणः। अव अवस्तात् अस्मदभिमुखम् ह्वये आह्वयामि ॥ १ ॥

यथा॑ चि॒न्मन्य॑से हृ॒दा तदिन्मे॑ जग्मुरा॒शसः॑ ।
ये ते॒ नेदि॑ष्ठं॒ हव॑नान्या॒गम॒न्तान्व॑र्ध भी॒मसं॑दृशः ॥ २ ॥

यथा॑ । चि॒त् । मन्य॑से । हृ॒दा । तत् । इत् । मे॒ । ज॒ग्मुः॒ । आ॒ऽशसः॑ ।
ये । ते॒ । नेदि॑ष्ठम् । हव॑नानि । आ॒ऽगम॑न् । तान् । व॒र्ध॒ । भी॒मऽसं॑दृशः ॥ २ ॥

वेङ्कट० अग्ने! त्वम् यथा पूजयसि मरुतः हृदयेन तथा सदैव मे गच्छन्तु मरुतः आशंसनीयाः[1]। ये तव समीपं हवींषि च आगच्छन्ति, तान् वर्धय भीमरूपान् ॥ २ ॥

मुद्गल० हे अग्ने! त्वम् हृदा हृदयेन मरुतः यथा चित् मन्यसे येन प्रकारेण अतिपूजितान्[2] जानासि, तेष्वादरं करोषीत्यर्थः। तत् इत् तथैव मे मदर्थम् जग्मुः गच्छन्तु आशसः आशंसितार इच्छन्तः। अनन्तरम् ये मरुतः नेदिष्ठम् सन्निधावेव ते तव हवनानि आह्वानानि श्रुत्वा आगमन् आगच्छन्ति, तान् भीमसंदृशः कालविलम्बासहनेन भयङ्करदर्शनान् वर्ध वर्धय हविष्प्रापणेन[3] ॥ २ ॥

मी॒ळ्हुष्म॑तीव पृथि॒वी परा॑हता॒ मद॑न्त्येत्य॒स्मदा ।
ऋक्षो॒ न वो॑ मरुतः॒ शिमी॑वाँ॒ अमो॑ दु॒ध्रो गौरि॑व भीम॒युः ॥ ३ ॥

मी॒ळ्हुष्म॑तीऽइव । पृ॒थि॒वी । परा॑ऽहता । मद॑न्ती । ए॒ति॒ । अ॒स्मत् । आ ।
ऋक्षः॑ । न । वः॒ । म॒रु॒तः॒ । शिमी॑ऽवान् । अमः॑ । दु॒ध्रः । गौःऽइ॑व । भी॒म॒ऽयुः ॥ ३ ॥

वेङ्कट० भर्तृमतीव स्त्री भवद्भिः पराहता पृथिवी मादयन्ती आ, गच्छति अस्मान् सस्यपूर्णा। हे मरुतः! भवतां बलम् ऋक्षः इव भयङ्करम् उत्क्षेपणकर्मवत् दुर्धरं च। गौरिव भीमयुः भययुक्तो भयङ्कर ऋषभ इव ॥ ३ ॥

मुद्गल० मीळ्हुष्मती प्रबलस्वामिका पराहता अन्यैरभिभूता पृथिवी इव [4]अत्र पृथिवीशब्दः[4] [5]तदधिष्ठितां प्रजां[5] लक्षयति। सा यथा स्वस्वामिनमुपहुताऽभिगच्छति तद्वदिति। मरुतां साकल्येन सर्वथा प्राप्तेर्दृष्टान्तः। एवम् मदन्ती मरुत्सेना अस्मत्, अस्मानित्यर्थः, आ एति आगच्छति। हे मरुतः!

1. आशस° मूको　2. °जितं मूको.　3. °न वः मूको.　4-4. शब्दः मूको.　5-5. हविः प्रजान्वा मूको.

यः युष्माकम् अयः बलं गणः त्वक्षः न अभिनरिव विमीवान् कर्मवान्, दुध्रः दुर्धरः भीरिव भीमयुः भीमैर्वीरभैर्युक्तः गौरिव, सः यथा[1] कर्मवान् ॥ ३ ॥

नि ये रिणन्त्योजसा वृथा गावो न दुर्धुरः ।
अश्मानं चित् स्वर्यं१ पर्वतं गिरिं प्र च्यावयन्ति यामभिः ॥ ४ ॥

नि । ये । रिणन्ति । ओजसा । वृथा । गावः । न । दुःऽधुरः ।
अश्मानम् । चित् । स्वर्यम् । पर्वतम् । गिरिम् । प्र । च्यवयन्ति । यामऽभिः ॥ ४ ॥

वेङ्कट० नि गच्छन्ति ये बलेन अनायासेन बलीवर्दाः इव दुर्धुरः । ये युक्ता धुरं उत्क्षिपन्ति ते दुर्धुर उच्यन्ते । ते व्याप्तं स्वरणकुशलं मेघं शिलोच्चयं च प्र च्यावयन्ति गमनैः ॥ ४ ॥

मुद्गल० ये मरुतः ओजसा स्वीयेन बलेन रिणन्ति हिंसन्ति शत्रून् वृथा अनायासेन स्वसञ्चारमात्रेण गावः न अश्वा इव दुर्धुरः दुःखेन हिंस्या अश्वा इव, ते मरुतः स्वर्यम् शब्दयन्तम् अश्मानम् व्यापकम् चित् पर्वतम् पर्ववन्तम् गिरिम् मेघम् यामभिः गमनैः प्र च्यावयन्ति उदकनिर्गमनार्थम् ॥ ४ ॥

उत्तिष्ठ नूनमेषां स्तोमैः समुक्षितानाम् ।
मरुतां पुरुतममपूर्व्यं गवां सर्गमिव ह्वये ॥ ५ ॥

उत् । तिष्ठ । नूनम् । एषाम् । स्तोमैः । सम्ऽउक्षितानाम् ।
मरुताम् । पुरुऽतमम् । अपूर्व्यम् । गवाम् । सर्गम्ऽइव । ह्वये ॥ ५ ॥

वेङ्कट० उत् तिष्ठ क्षिप्रम् । 'आसीनाम् समीपस्थानाह'[2] । स्तोमैः संसिक्तानाम् एषाम् मरुताम् बहुतमं नूतनं गणं गवाम् इव संघम् आह्वयामि ॥ ५ ॥

मुद्गल० हे मरुतः! यूयम् उत् तिष्ठ उत्तिष्ठत । नूनम् निश्चयम् एषाम् स्तोमैः स्तोत्रैः समुक्षितानाम् वर्धमानानाम् महताम् पुरुतमम् प्रभूततमम् अपूर्व्यम् न विद्यते पूर्व्यो येभ्यस्तमपूर्व्यम् गवाम् सर्गम् सङ्घम् इव ह्वये आह्वये ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये एकोनविंशो वर्गः ॥

युङ्ग्ध्वं ह्यरुषी रथे युङ्ग्ध्वं रथेषु रोहितः ।
युङ्ग्ध्वं हरी अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥ ६ ॥

युङ्ग्ध्वम् । हि । अरुषीः । रथे । युङ्ग्ध्वम् । रथेषु । रोहितः ।
युङ्ग्ध्वम् । हरी इति । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे ॥ ६ ॥

1. नास्ति मूको. 2-2. आसीनेति समीपस्थानाह मूको.

वेङ्कट० युङ्ग्ध्वम् आरोचमाना वडवाः रथे रोहितवर्णाश्च। युङ्ग्ध्वम् च अश्वौ गमनशीलौ धुरि वहनाय वोढृतमौ ॥ ६ ॥

मुद्गल० हे मरुतः! रथे अरुषीः वडवाः युङ्ग्ध्वम् रथेषु। रोहितः रोहितवर्णान् अश्वान् युङ्ग्ध्वम्[1]। हरी अश्वौ अजिरा अजिरावाशुगमनौ धुरि वोळ्हवे वहनाय युङ्ग्ध्वम्[2]। आदरार्थं पुनर्वचनम्। वहिष्ठा वोढृतमौ अश्वौ धुरि वोळ्हवे[3] ॥ ६ ॥

उत स्य वाज्यरुषस्तुविष्वणिरिह स्म धायि दर्शतः ।
मा वो यामेषु मरुतश्चिरं करत्प्र तं रथेषु चोदत ॥ ७ ॥

उत । स्यः । वाजी । अरुषः । तुविऽस्वनिः । इह । स्म । धायि । दर्शतः ।
मा । वः । यामेषु । मरुतः । चिरम् । करत् । प्र । तम् । रथेषु । चोदत ॥ ७ ॥

वेङ्कट० अपि च सोऽश्वः आरोचमानो बहुशब्दः इह धुरि निधीयतां दर्शनीयः। मा युष्माकं यामेषु हे मरुतः! स वाजी कालदैर्घ्यं करोतु। तदर्थं तम् रथेषु प्र चोदत युङ्ग्ध्वमिति ॥ ७ ॥

मुद्गल० उत अपि च स्यः वाजी वेजनवान् अरुषः आरोचमानः तुविष्वणिः प्रभूतध्वनिरश्वः [illegible] इदानीम् दर्शतः दर्शनीयः सन्[4] धायि रथे नियोजितः। स्म पूरणः। हे मरुतः! वः यामेषु गमनेषु सोऽश्वः मा चिरम् करत् मा करोतु विलम्बम्। तम् रथेषु युष्माभिर्वि शेषः, प्र चोदत प्रेरयत यथा[5] विलम्बं न कुर्यात्तथा प्रेरयत ॥ ७ ॥

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।
आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥ ८ ॥

रथम् । नु । मारुतम् । वयम् । श्रवस्युम् । आ । हुवामहे ।
आ । यस्मिन् । तस्थौ । सुऽरणानि । बिभ्रती । सचा । मरुत्ऽसु । रोदसी ॥ ८ ॥

वेङ्कट० रथम् क्षिप्रम् मारुतम् वयम् स्तोतॄणाम् अन्नेच्छम् आ ह्वयामः, आ तिष्ठति यस्मिन् सुरमणीयानि धनानि उदकानि वा धारयन्ती सह मरुत्सु रुद्रस्य पत्नी मरुतां माता। "निरुक्तम् (११,५०) द्रष्टव्यम्[5] ॥ ८ ॥

मुद्गल० वयम् आत्रेयाः रथम् रंहणस्वभावम् मारुतम् मरुतां सम्बन्धिनं रथम् श्रवस्युम् अन्नेच्छुम् नु अद्य आ हुवामहे आह्वयामः। यस्मिन् रथे सुरणानि उदकानि बिभ्रती धारयन्ती रोदसी रुद्रस्य पत्नी मरुतां माता मरुत्सु सचा सहिता आ तस्थौ आस्थितवती, तं रथमाहुवेम ॥ ८ ॥

तं वः शर्धं रथेशुभं त्वेषं पनस्युमा हुवे ।
यस्मिन्त्सुजाता सुभगा महीयते सचा मरुत्सु मीळ्हुषी ॥ ९ ॥

१. युङ्ध्वम् मूको. २. गे युङ्ध्वम् हि मूको. ३. स्म मूको. ४. यथा मूको. ५-५. इदं वाक्यमुत्तरमन्त्रभाष्यान्ते मूको.

तम् । व । शर्धम् । रथेऽशुभम् । त्वेषम् । पनस्युम् । आ । हुवे ।
यस्मिन् । सुऽजाता । सुऽभगा । महीयते । सचा । मरुत्ऽसु । मीळ्हुषी ॥ ९ ॥

वेङ्कट० तम् व वेगम् रथे शोभमान दीप्त स्तुतिकामम् आ ह्वयामि, यस्मिन् शोभनजनना सुधना स्तूयते सह मरुत्सु स्थिता मीळ्हुष पत्नी ॥ ९ ॥

मुद्गल० हे मरुत ! व शर्धम् युष्मदीय बलं गणम् रथेशुभम् रथे शोभनम् त्वेषम् दीप्तम् पनस्युम् स्तुत्यम् आ हुवे आह्वये । यस्मिन् शर्धे सुजाता सुष्ठु प्रवृद्धा सुभगा शोभनभाग्याऽतिमहती मीळ्हुषी रुद्रपत्नी मरुत्सु सचा सह महीयते पूज्यते, तम् शर्धमाह्वये ॥ ९ ॥

इति चतुर्थाष्टके तृतीयाध्याये विंशो वर्ग ॥

इति पञ्चमे मण्डले चतुर्थोऽनुवाक ॥

[ ५७ ]

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।
इयं वो अस्मत् प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥ १ ॥

आ । रुद्रास । इन्द्रऽवन्त । सऽजोषस । हिरण्यऽरथा । सुविताय । गन्तन ।
इयम् । व । अस्मत् । प्रति । हर्यते । मति । तृष्णऽजे । न । दिव । उत्सा । उदन्यवे ॥१॥

स्कन्द० हे रुद्रास ! रुद्रपुत्रा ! मरुत ! इन्द्रवन्त इन्द्रसयुता इन्द्रेण सहेत्यर्थ । सजोषस सम्प्रीयमाणा इन्द्रेण सहैव परस्परतो वा । हे हिरण्यरथा ! हिरण्मया रथा येषा ते [1]हिरण्यरथा । सुविताय इण्[1] गतौ । अधिकरणे क्त प्रत्यय [2] । शोभन गम्यते यस्मिन् तत् सुवित यज्ञकर्म । छान्दसत्वादुपसर्गस्यापि सोरुत्वादेश । तस्मै सुविताय यज्ञकर्मणे यज्ञसमाप्त्यर्थमित्यर्थ । आ गन्तन आगच्छत । किम् [3]कारणम् । उच्यते । इयम्[3] व युष्माकम् अस्मत् व्यत्ययेनेय पञ्चमी । अस्माक स्वभूता प्रति हर्यते । प्रतिशब्दोऽत्र धात्वर्थानुवादी । हर्यतीति कान्तिकर्मा । कामयते मति मन्यतेरर्चतिकर्मणो मति । स्तुति । किमिव । [4]उच्यते । तृष्णजे न तृष्णा' पिपासा सा जायते यस्मिन्[5], स स वा यो जनयति स तृष्णज कालो ग्रीष्मान्त । तस्मिन् यथा दिव द्युलोकस्य सम्बन्धिन उत्सा । द्वितीयार्थे प्रथमैषा । उत्सान् मेघान् उदन्यवे [6]इयमपि प्रथमार्थे चतुर्थी' । उदकेषु उदककामो लोक कामयते । तद्वत् । अथवा उत्सा उदन्यवे इति स्वार्थ एव प्रथमा चतुर्थ्यौ । व्यवहितस्य [7]आ गन्तनेत्यस्यायमुपमा न' प्रतिहर्येत इत्यस्य । यथा ग्रीष्मान्त दिव सम्बन्धिन[8] उत्सा मेघा उदन्यव उदककामस्य लोकस्यार्थाय गच्छन्ति तद्वदागच्छत ॥ १ ॥

वेङ्कट० आ गच्छत रुद्रपुत्रा ! इन्द्रेण सहिता सङ्गता हिरण्मयरथा ! सुप्रसूताय कर्मणे ।

---

१-१ हिरण्य इव मूको. २ त्वमप्र° मूको. ३-३ का इव मूको. ४-४ उच्यते मूको. ५ पिपासा यस्मिन् कु. ६-६ प्रथ मूको. ७-७ आगन्तेनेत्ययमुपन कु. ८ सं मूको.

युष्मान् अस्मदीया इयम् स्तुतिः प्रति कामयते । यथा तृष्णजे तृष्णा जाता यस्य तस्मै उदकमिच्छते दिवः मेघा आगच्छन्ति तद्वत् आगच्छतेति ॥ १ ॥

मुद्गल० पञ्चमेऽनुवाके षोडश सूक्तानि । तत्र 'आ रुद्रासः' इत्यष्टर्चं प्रथमं सूक्तम् । श्यावाश्व ऋषिः । सप्तम्यष्टम्यौ त्रिष्टुभौ, शिष्टा जगत्यः । मरुतो देवता ।

हे रुद्रासः ! रुद्रपुत्राः ! इन्द्रवन्तः इन्द्रयुक्ताः सजोषसः समानप्रीतयः हिरण्यरथाः ! सन्तः सुविताय सुगमनाय सुष्ठु सेवितव्याय यज्ञाय तदर्थम् आ गन्तन आगच्छत । किमर्थम् ? इयम् अस्मत् अस्मदीया मतिः स्तुतिः वः युष्मान् प्रति हर्यते कामयते । तस्मादागच्छत । उदन्यवे उदकेच्छवे' तृष्णजे गोतमाय दिवः द्युलोकस्थकाशात् उत्साः उदकनिष्यन्दाः यथा युष्माभिः प्रेरितास्तद्वदस्मदर्थमभ्यागत्याभिमतं ददतेत्यर्थः । न पूरणः ॥ १ ॥

वाशीमन्त ऋष्टिमन्तो मनीषिणः सुधन्वान इषुमन्तो निषङ्गिणः ।
स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम् ॥ २ ॥

वाशीऽमन्तः । ऋष्टिऽमन्तः । मनीषिणः । सुऽधन्वानः । इषुऽमन्तः । निषङ्गिणः ।
सुऽअश्वाः । स्थ । सुऽरथाः । पृश्निऽमातरः । सुऽआयुधाः । मरुतः । याथन । शुभम् ॥ २ ॥

स्कन्द० वाशीमन्तः' वाशी प्रसिद्धः शस्त्रविशेषो लोके तद्वन्तः । ऋष्टिमन्तः ऋष्टयः शक्तयः तद्वन्तश्च । मनीषिणः मेधाविनश्च । सुधन्वानः शोभनं धनुर्येषां 'ते सुधन्वानः' ते च । इषुमन्तः इषवः शराः तद्वन्तश्च । निषङ्गिणः निषङ्गः खड्गः खड्गप्रदेशे निषक्तत्वात् तद्वन्तश्च । स्वश्वाः शोभनाश्वाश्च' स्थ सुरथाः च हे पृश्निमातरः ! पृश्निर्गौः 'सा माता येषां ते' पृश्निमातरः । स्वायुधाः च ईदृशाः स्थ । हे मरुतः ! याथन गच्छत यूयम् शुभम् उदकं प्रति मेघदमम् ॥ २ ॥

वेङ्कट० वाश्यायुधयुक्ताः शक्तिमन्तः प्रज्ञाः शोभनधनुष्काः इषुमन्तः इषुधिमन्तः स्वश्वाः स्थ सुरथाः हे गोमातरः ! । ईदृशाः स्वायुधाः यूयं गच्छथ कल्याणम् ॥ २ ॥

मुद्गल० हे मरुतः ! यूयम् वाशीमन्तः वाशीति तक्षणसाधनमायुधम् तद्वन्तः स्थ भवथ । ऋष्टिमन्तः क्षुरिकावन्तः स्थ । एवं सर्वत्र योज्यम् । मनीषिणः मनसः ईश्वराः सुधन्वानः शोभनधनुष्काः इषुमन्तः बाणवन्तः निषङ्गिणः निषङ्गवन्तः स्वश्वाः शोभनाश्वाः भवथ । सुरथाः शोभनरथाः हे पृश्निमातरः ! पृश्नेः पुत्राः स्वायुधाः खड्गादिसुष्ठ्वायुधोपेताः । एवं महात्मानः सन्तः शुभम् शोभनं यथा भवति तथा' याथन गच्छथ ॥ २ ॥

धूनुथ द्यां पर्वतान् दाशुषे वसु नि वो वना जिहते यामनो भिया ।
कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वम् ।

१. 'कोशस्थे मूको. २. नास्ति मूको. ३-३. त्रुटितम् मूको. ४. वाश्यायुध मूको.
५. 'था शुभं मूको.

धूनुथ । द्याम् । पर्वतान् । दाशुषे । वसु । नि । वः । वना॑ । जिहते । याम॑नः । भिया ।
कोपयथ । पृथिवीम् । पृश्निऽमातरः । शुभे । यत् । उग्राः । पृषतीः । अयुग्ध्वम् ॥ ३ ॥

स्कन्द० धूनुथ[1] चिकीर्षितमजानतीं कम्पयथ द्याम् दिवम् पर्वतान् च । दाशुषे हवींषि[2] दत्तवते यजमानाय । 'यजमानायेति सम्प्रदानचतुर्थीश्रुतेः[3] दत्तेति वाक्यशेषः । वसु धनं वृष्ट्युदकलक्षणम् । वः युष्माकं च स्वभूतानि वना वनानि उदकानि वृष्टिलक्षणानि नि जिहते नीचैर्गच्छन्ति । यामनः यानं याम गमनम् तस्मात् भिया भयेन [4]युष्मद्गमनभयेन । गमनाय प्रवृत्ते॰ ष्वेव[4] युष्मासु मेघेन मुक्तान्युदकानि पतन्तीत्यर्थः । कोपयथ आकुलीकुरुथ[5] समस्ताम् पृथिवीम् हे पृश्निमातरः! । कदा । उच्यते— शुभे उदकाय वृष्टिलक्षणाय । मेघहननार्थं गन्तुमित्यर्थः । यत् यदा हे उग्राः! क्षमलहाः! पृषतीः '[6]अश्वाः अयुग्ध्वम्[6] युङ्ध्वे[7] स्वेषु रथेषु ॥ ३ ॥

वेङ्कट० कम्पयथ दिवं मेघांश्च यजमानाय धनम् । तथा युष्माकं गमनात् भयेन वृक्षाः नि जिहते नीचीनं[8] गच्छन्ति । कोपयथ पृथिवीम् वृक्षयुक्तां गोमातरः! उदकाय यदा उग्राः! पृषतीः अयुग्ध्वम् ॥ ३ ॥

मुद्गल० हे मरुतः! द्याम् दिवि पर्वतान् मेघान् दाशुषे हविः दत्तवते यजमानाय वसु धनानि च धूनुथ प्रापयथ । वः युष्माकम् यामनः गमनस्य भिया भीत्या वना वनानि वृक्षादिसमूहाः नि जिहते नितरां कम्पन्ते । हे उग्राः! उद्गूर्णबलाः! हे पृश्निमातरः! पृश्नेः पुत्राः! यूयम् यत् यदा शुभे उदकार्थम् पृषतीः युष्मदीयाः अश्वाः अयुग्ध्वम् योजयथ तदा कोपयथ पृथिवीम् ॥ ३ ॥

वात॑त्विषो मरुतो॑ वर्षनिर्णिजो यमा इ॑व सुसदृशः सुपेश॑सः ।
पिशङ्गाश्वा अरुणाश्वा अरेपसः प्रत्व॑क्षसो महिना द्यौरि॑वोरवः ॥ ४ ॥

वात॑ऽत्विषः । मरुतः । वर्षऽनिर्णिजः । यमाःऽइव । सुऽसदृशः । सुऽपेश॑सः ।
पिशङ्गऽअश्वाः । अरुणऽअश्वाः । अरेपसः । प्रऽत्वक्षसः । महिना । द्यौःऽइव । उरवः ॥ ४ ॥

स्कन्द० वा गतिगन्धनयोः । वाता गता प्राप्ता त्विट् दीप्तिर्यैस्ते वातत्विषः । [illegible] ते । उच्यते । मरुतः वर्षनिर्णिजः 'निर्णिक्' ( निघं ३,७ ) इति रूपनाम । वृष्टिरूपाश्च । वृष्टिकर्मप्राचुर्याद्धि मरुतस्तद्रूपा [illegible] लक्ष्यन्ते । अथवा '[9]वर्षनिर्णिजः । निर्णिक् इति णिजिर् शौचपोषणयोरित्यस्य[9] रूपम् । सर्वप्राणिनां[10] वृष्ट्या निश्चयेन पोषयितारः वर्षनिर्णिजः । यमाः इव यमलाः इव सुसदृशः सुष्ठु सदृशाः । सुपेशसः सुरूपाश्च । पिशङ्गाश्वाः पिशङ्ग आवर्णो वर्ण-, आरक्तवर्णाश्वाः अरुणाश्वाः[11] रक्ताश्वाश्च । अरेपसः अपापाश्च । प्रत्वक्षसः प्रकर्षेण च तनूकर्तारः शत्रूणाम् । महिना महत्त्वा स्वसामर्थ्येन द्यौरिव द्युलोक इव उरवः विस्तीर्णाः ॥ ४ ॥

---

१. धूनुथ मूको. २. हविषि भ; हविषि वि[2,3] हविर् क्रु. ३-३. ···प्रदान॰ मूको. ४-४. ॰प्रमन··· ष्वेव मूको. ५. ॰कुरुत मूको. ६-६. कुठितम् मूको. ७. युङ्क्ते भ; अदृक्षे वि[3]. ८. निलीनं वि[1]; निपीनं क्रुपं. ९-९. वर्षनि···चपोष॰ वि[2,3] भ; निर्णिगिति णिजिर् शौचपो॰ क्रु. १०. सर्वप्राणि॰ मूको. ११. नास्ति मूको.

ऋष्टयः । वः । मरुतः । अंसयोः । अधि । सहः । ओजः । बाह्वोः । वः । बलम् । हितम् ।
नृम्णा । शीर्षऽसु । आयुधा । रथेषु । वः । विश्वा । वः । श्रीः । अधि । तनूषु । पिपिशे ॥६॥

स्कन्द० ऋष्टयः शक्तयः तोमरा वा वः युष्माकम् हे मरुतः! अंसयोः अधि उपरि, सहः[1] मत्वर्थेऽयं सहःशब्दः[2], सहस्वत् बलवत्[3] ओजः बलं सेनालक्षणम् बाह्वोः अपि च वः युष्माकम् बलम् हितम् निहितमेव[4], स्वयमपि बलवन्त एवेत्यर्थः। नृम्णा नृम्णमिति बलनाम अन्तर्णीतमत्वर्थं चात्र [5]द्रष्टव्यम्। बलवन्ति[5] शीर्षसु शिरस्सु आयुधा आयुधानि च खड्गादीनि रथेषु वः युष्माकं स्वभूतेषु विश्वा सर्वप्रकारा च वः युष्माकम् श्रीः शोभालक्षणा अधि तनूषु उपरि शरीराणाम्, शरीरेष्वित्यर्थः। पिपिशे रूप्यते दृश्यत इत्यर्थः ॥ ६ ॥

वेङ्कट० हे मरुतः! युष्माकम् अंसयोः अधि हिताः ऋष्टयः। तथा बाह्वोः सहः ओजः बलम् इति त्रीणि निहितानि। तेषामल्पो भेदः। शीर्षसु नृम्णानि निहितानि, 'नृम्णम्' ( निघ २,१० ) इति धननाम, हिरण्मयशिप्रा हिता इत्यर्थः। रथेषु चायुधानि। सर्वा युष्माकम् अङ्गेषु[6] श्रीः आश्रिता आभरणैरलङ्कृतानामिति ॥ ६ ॥

मुद्गल० हे मरुतः! वः युष्माकम् अंसयोः अधि ऋष्टयः आयुधविशेषाः हिताः[7] आश्रिताः। अधिः सप्तम्यर्थानुवादी। तथा वः बाह्वोः अधि सहः शत्रूणामभिभावुकम् ओजः बलम् हितम् निहितम्[8]। वः शीर्षसु शिरःसु नृम्णा नृम्णानि हिरण्मयानि[9] उष्णीषादीनि निहितानि। रथेषु आयुधा आयुधानि निहितानि। तथा वः तनूषु अवयवेषु विश्वा श्रीः सर्वा कान्तिः अधि[1] पिपिशे आश्रिता ॥ ६ ॥

गोमदश्वावद् रथवत् सुवीरं चन्द्रवद्राधो मरुतो ददा नः ।
प्रशस्तिं नः कृणुत रुद्रियासो भक्षीय वोऽवसो दैव्यस्य ॥ ७ ॥

गोऽमत् । अश्वऽवत् । रथऽवत् । सुऽवीरम् । चन्द्रऽवत् । राधः । मरुतः । दद । नः ।
प्रऽशस्तिम् । नः । कृणुत । रुद्रियासः । भक्षीय । वः । अवसः । दैव्यस्य ॥ ७ ॥

स्कन्द० [10]गोमत् गावो[10] यस्मिन् सन्ति तत् गोमत्, गोभिः सहितमित्यर्थः, अश्ववत् अश्वैः सहितम् रथवत् रथैः सहितम् सुवीरम् शोभनाः वीराः पुत्राः यस्मिन् तत् सुवीरम्, शोभनैश्च पुत्रैः[11] सहितमित्यर्थः, चन्द्रवत् चन्द्रमिति हिरण्यनाम हिरण्येन च सहितम् [12]राधः अन्नम् हे मरुतः! दद लोडर्थेऽत्र लिट्। दत्त नः अस्मभ्यम्। किञ्च प्रशस्तिम् प्रशंसाम्[12] नः अस्माकम् कृणुत कुरुत। हे रुद्रियासः! अपत्येऽयं घः प्रत्ययो द्रष्टव्यः। रुद्रपुत्राः! अथवा रुद्र इति स्तोतृनाम स्वार्थयेनात्र स्तुत्ये प्रयुज्यते, स्वार्थिकश्च[11] घः प्रत्ययः। भक्षीय[1] भजेय अहम् वः युष्माकं स्वभूतम् अवसः द्वितीयार्थे षष्ठ्येषा। [13]अवः पालनम्[13] दैव्यस्य दैव्यं देवयोग्यम् ॥ ७ ॥

---

१. नास्ति मूको. २. सहशब्दा मूको. ३. बलवत् मूको. ४. निहितं हि एव वि॰ अ. ५-५. द॰॰॰ मूको. ६. ॰ङ्गेषु कार्म गोपु वि॰ छपं. ७. सहिताः मूको. ८. ॰तानि मूको. ९. ॰रण्यमानि मूको १०-१०. गुदितम् मूको. ११. पुत्रैश्च मूको. १२. सार्थकं मूको. १३-१३. नव पाल मूको.

वेङ्कट० गवादियुक्तं धनम् अस्मभ्यम् मरुतः ! दत्त । चन्द्रं हिरण्यम् । प्रशस्तिम् अस्माकं कुरुत रुद्रपुत्राः ! जनेषु । भजेय अहं युष्माकं रक्षणम् दैवादैव्यम् ॥ ७ ॥

मुद्गल० हे मरुतः ! गोमत् गोयुक्तम् अश्वावत् अश्वयुक्तम् रथवत् रथोपेतम् सुवीरम् सुष्ठुपुत्रोपेतम् चन्द्रवत् हिरण्योपेतम् राधः धनम् नः अस्मभ्यम् दद ददत । हे रुद्रियासः ! रुद्रपुत्रा मरुतः ! नः अस्मदीयाम् प्रशस्तिम् समृद्धिम् कृणुत कुरुत । वः युष्माकं स्वभूतम् अवसः अव रक्षणम् दैव्यस्य दैव्य दैवादैव्यम् भक्षीय भजेय[1] ॥ ७ ॥

हुये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः ।
सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥ ८ ॥

हुये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः । ऋतऽज्ञाः ।
सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः । बृहत् । उक्षमाणाः ॥ ८ ॥

स्कन्द० हुये इति निपातो हेशब्दपर्यायः । 'अस्माद्व्यतिरिक्तआख्यातादिकार्यप्रयत्नत्वात् 'संबोधने च' (पा २,३,४७) इति[2] प्रथमा । आमन्त्रितत्वाच्च 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा ८,१,७२) इत्यविद्यमानवद्भावः[3] । अतो नर इत्यादीनामामन्त्रितानामनिघातः । हे नरः मनुष्याकाराः मरुतः ! मृळत सुखयत नः अस्मान् । तुविमघासः ! प्रभूतधनाः ! । अमृताः ! अमरणधर्माणः ! । ऋतज्ञाः ! ऋतं सत्यम् उदकं यज्ञो[4] वा तस्य ज्ञातारः ! । सत्यश्रुतः ! सत्यस्य स्तोत्रस्य श्रोतारः ![5] । कवयः ! मेधाविनः ! । युवानः ! तरुणाः ! । बृहद्गिरयः ! महान्तो गिरयो मेघाः 'हन्तव्यत्वेन' येषां ते बृहद्गिरयः[6] । महतां मेघानां हन्तारः ! इत्यर्थः । किं कुर्वन्तो मृळयत[7] । उच्यते । बृहत् सुविस्तीर्णम्[8] । उक्षमाणाः सिञ्चन्तः अस्मान् । वृष्ट्या वर्षन्त इत्यर्थः ॥ ८ ॥

वेङ्कट० हुये इति निपातोऽयम् आमन्त्रितवत् परं संबोधयति अविद्यमानवच्च भवति । हुये नेतारः ! मरुतः ! सुखयत अस्मान् बहुधनाः ! अमरणाः ! सत्यप्रज्ञाः ! सत्यस्य श्रोतारः ! कवयः ! युवानः ! महामेघाः ! भरयन्तः सिञ्चन्तः ॥ ८ ॥

मुद्गल० हुये हे नरः ! नेतारः ! मरुतः ! नः अस्मान् मृळत सुखयत हे तुवीमघासः ! प्रभूतधनाः ! अमृताः ! अमरणस्वभावाः ! ऋतज्ञाः ! यज्ञस्य ज्ञातारः ! । सत्यश्रुतः ! सत्येन सत्यफलत्वेन प्रसिद्धाः ! कवयः ! मेधाविनः ! युवानः ! नित्यतरुणाः ! बृहद्गिरयः ! प्रभूतस्तुतयः ! यूयम् बृहत् अत्यधिकम् उक्षमाणाः हविर्भिः सेविताः सन्तोऽस्मान् मृळत ॥ ८ ॥

इति चतुर्थाष्टके तृतीयाध्याये द्वाविंशो वर्गः ॥

[ ५८ ]

तमु नूनं तविषीमन्तमेषां स्तुषे गणं मारुतं नव्यसीनाम् ।
य आश्वश्वा अमवद्वहन्त उतेशिरे अमृतस्य स्वराजः ॥ १ ॥

---

१ भजम मूको २ २ °प्रथमा °पत्ते चेति मूको ३ °वद मूको ४ यज्ञ मूको
५ स्तोतार मूको ६ ६ °हन्तव्य° गिरय मूको ७ °यत मूको ८ नास्ति वि° टप.

तम् । ऊँ इति॑ । नू॒नम् । तवि॑षीऽमन्तम् । ए॒षाम् । स्तु॒षे । ग॒णम् । मारु॑तम् । नव्य॑सीनाम् ।
ये । आ॒शुऽअ॑श्वाः । अम॑ऽवत् । वह॑न्ते । उ॒त । ई॒शि॒रे । अ॒मृत॑स्य । स्व॒ऽराजः॑ ॥ १ ॥

स्कन्द० तम् इति षष्ठ्यर्थे द्वितीया । एषाम् इत्यनेन [1]सम्बन्धयितव्या । तेषाम्[2] एषां मरुताम् । उ नूनम् इति पदपूरणौ । तविषीमन्तम् 'तविषी' ( निघ २,९ ) इति बलनाम । बलवन्तम् । स्तुषे व्यत्ययेनायं मध्यम । स्तौमि । मारुतम् गणम् मारुत मरुतां समूहो मारुत तम् । मरुत्समूहरूपमित्यर्थ । मरुता गण 'एकैको गणत्वेनापि' सम्भवति, अत स मरुत्समूहरूपत्वेन विशेष्यते । नव्यसीनाम् तृतीयार्थे षष्ठ्येषा । नव्यसीभिरतिशयेन नवाभि स्तुतिभि । किम्[3] कल्पयन्ति मरुत । उच्यते । ये आशुअश्वा क्षिप्राश्वा अमवत् अमशब्द आत्मवाचक । अहार्थेऽत्र वतिप्रत्यय । आत्मार्ह । यथैषा योग्यं तथेत्यर्थ । वहन्ते प्रापयन्ति धनम् । स्तोतृभ्यो ददतीत्यर्थ । उत ईशिरे अमृतस्य उदकस्य वृष्टिलक्षणस्य स्वराज आत्मनैव स्वसामर्थ्येन दीप्ता ॥ १ ॥

वेङ्कट० तम् एव सम्प्रति बलवन्तम् एषाम् मरुताम् गणम् स्तौमि नवतराभि स्तुतिभि । ये क्षिप्राश्वा बलयुक्त धनम् वहन्ते, अपि च ईश्वरा भवन्ति अमृतत्वस्य स्वराज ॥ १ ॥

मुद्गल० 'तमु नूनम्' इत्यष्टर्चं द्वितीय सूक्तम् । श्यावाश्व ऋषि । त्रिष्टुप् छन्द । मरुतो देवता ।

तम् उ तमेव पूर्व स्तुतमेव मारुतम् मरुता सम्बन्धिनम् तम् गणम् तविषीमन्तम् दीप्तिमन्तम् नूनम् अद्य स्तुषे । कीदृशा मरुता गणम्[4] । नव्यसीनाम् नवतराणाम् एषाम् मरुताम् गणम् । ये मरुत आशुअश्वा शीघ्रगाम्यश्वोपेता अमवत् बलवत् बलवन्तो यथा भवन्ति तथा वहन्ते गच्छन्ति, उत अपि च ईशिरे ईश्वरा भवन्ति अमृतस्य उदकस्य स्वराज स्वायत्तदीप्तय, तेषां गणं स्तुषे ॥ १ ॥

त्वे॒षं ग॒णं त॒वसं॒ खादि॑हस्तं॒ धुनि॑व्रतं मा॒यिनं॒ दाति॑वारम् ।
म॒यो॒भुवो॒ ये अमि॑ता महि॒त्वा वन्द॑स्व विप्र तुवि॒राध॑सो॒ नॄन् ॥ २ ॥

त्वे॒षम् । ग॒णम् । त॒वस॑म् । खादि॑ऽहस्तम् । धुनि॑ऽव्रतम् । मा॒यिन॑म् । दाति॑ऽवारम् ।
म॒यः॒ऽभुवः॑ । ये । अमि॑ताः । म॒हि॒ऽत्वा । वन्द॑स्व । वि॒प्र॒ । तु॒वि॒ऽराध॑सः । नॄन् ॥ २ ॥

स्कन्द० त्वेषम् दीप्तम् गणम् मारुतम् तवसम् बलवन्तम् खादिहस्तम् खादि ख(क)टकाकार आयुधविशेष, स हस्ते यस्य स खादिहस्त, तम् । धुनिव्रतम् धुनि कम्पन मेघाना शत्रूणां वा तत्कर्माणम् । मायिनम् प्रज्ञावन्तम् । दातिवारम् दातिर्दानम् । वृङ् सम्भक्तौ । दानस्य सम्भक्तारम् । दातारमित्यर्थ । [5]न केवलं दातारम्[6] । किं तर्हि । मयोभुव सुखस्य भावयितार । ये मरुत अमिता अपरिमिता महित्वा महत्त्वेन । अपरिमितमाहात्म्या इत्यर्थ । वन्दस्व स्तुतेस्तच्छब्दोऽध्याहार्य । तांश्च प्रत्येकमपि वन्दस्व स्तुहि । हे विप्र ! आत्मन एवेदमन्तरात्मन सम्बोधनम् मेधावित्व । मेधाविन् अन्तरात्मन् ! । तुविराधस बहुधनान् नॄन् मनुष्याकारान् ॥ २ ॥

---

१ १ पुरितम् मूको २ २ गणसेना° मूको ३ कि वे मूको. ४ नास्ति मूको.

वेङ्कट० दीप्तम् गणम् बलिनं खादायुधहस्तं धूननकर्माणम्[1], धुनोति हि वृक्षादीन्, कर्मवन्तं दत्तधनम् विप्र! वन्दस्व। प्रकारान्तरेणाह—सुखस्य भावयितारः ये महत्त्वेन अमिताः अपरिच्छिन्नाः, तान् वन्दस्व बहुधनान् नेतॄन् ॥ २ ॥

मुद्गल० त्वेषम् दीप्तम् गणम् मारुतम् तवसम् बलवन्तम्[2] खादिहस्तम् कटकहस्तम् धुनिव्रतम् कम्पयितृकर्माणम् मायिनम् प्रज्ञावन्तम् दातिवारम् दत्तधनम् हे विप्र! वन्दस्व स्तुहीति सम्बन्धः। ये मरुतः मयोभुवः सुखस्य भावयितारः महिना महत्त्वेन अमिताः अपरिच्छिन्नाः तुविराधसः प्रभूतधनाः, तान् नॄन् नेतॄन् वन्दस्व ॥ २ ॥

आ वो यन्तूदवाहासो अद्य वृष्टिं ये विश्वे मरुतो जुनन्ति ।
अयं यो अग्निर्मरुतः समिद्ध एतं जुषध्वं कवयो युवानः ॥ ३ ॥

आ । वः । यन्तु । उदऽवाहासः । अद्य । वृष्टिम् । ये । विश्वे । मरुतः । जुनन्ति ।
अयम् । यः । अग्निः । मरुतः । सम्ऽइद्धः । एतम् । जुषध्वम् । कवयः । युवानः ॥ ३ ॥

स्कन्द० वः युष्मान् ऋत्विजो मरुद्गणीयादीन् वा प्रति आ यन्तु उदवाहासः उदकस्य वोढारः प्रापयितारः, अद्य वृष्टिम् ये विश्वे सर्वे मरुतः जुनन्ति गमयन्ति। ये सर्वे वर्षन्तीत्यर्थः। प्रत्यक्षकृतोऽपरोऽर्धर्चः। अयम् यः अस्मदीय आहवनीयाख्यः अग्निः हे मरुतः! समिद्धः सन्दीप्तः, एतम् जुषध्वम् सेवध्वम्। समीपे भवत[3] इत्यर्थः। हे कवयः![3] मेधाविनः! युवानः! तरुणाः! ॥ ३ ॥

वेङ्कट० आ गच्छन्तु युष्माकम् उदकस्य वोढारः, तदर्थम् वृष्टिम् ये व्याप्ताः मरुतः प्रेरयन्ति। अयम् यः अग्निः हे मरुतः! अन्तरिक्षे वैद्युतः समिद्धः। एतम् इति स्पष्टम् ॥ ३ ॥

मुद्गल० ये विश्वे व्याप्ताः मरुतः वृष्टिम् जुनन्ति प्रेरयन्ति, ते उदवाहासः उदकस्य वोढारो मरुतः अद्य इदानीम् वः युष्मान् आ यन्तु आगच्छन्तु हे ऋत्विग्यजमानाः!। अथ प्रत्यक्षः। हे मरुतः! अयम् प्रसिद्धः यः अग्निः समिद्धः सम्यक् दीपितः एतम् अग्निम् जुषध्वम् हे कवयः! मेधाविनः! हे युवानः! नित्यतरुणाः! ॥ ३ ॥

यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथा यजत्राः ।
युष्मदेति मुष्टिहा बाहुजूतो युष्मत् सदश्वो मरुतः सुवीरः ॥ ४ ॥

यूयम् । राजानम् । इर्यम् । जनाय । विभ्वऽतष्टम् । जनयथ । यजत्राः ।
युष्मत् । एति । मुष्टिऽहा । बाहुऽजूतः । युष्मत् । सत्ऽअश्वः । मरुतः । सुऽवीरः ॥ ४ ॥

स्कन्द० यूयम् राजानम् इर्यम् नाम जनाय जनो मनुष्यलोकः तस्यार्थाय विभ्वतष्टम् विभ्वतीति विश्वं बहु, तक्षतिः करोतिकर्मा, कर्तरि चात्र क्तप्रत्ययः। बहूनां कर्मणां कर्तारम्। जनयथ

1. धमनक[?] मूको. 2. °बलम् मूको. 3-3. गुढितम् मूको.

उत्पादयथ[1]। सर्वजनस्योपकारकाणां[2] बहूनां कर्मणां करणसमर्थमेनं कृतवन्त इत्यर्थः। हे यजत्राः! यष्टव्याः!। किञ्च युष्मत् युष्मत्तः एति गच्छति शत्रून् प्रति मुष्टिहा मुष्टिभिरेव हन्ता शत्रूणाम्। न च 'केवलं मुष्टिभिरेव हन्ता'[3]। किं तर्हि। बाहुजूतः जवतिरन्तर्णीतण्यर्थः, कर्तरि च क्तः प्रत्ययः, बाहुभ्यां जवयिता। 'परवीराणां मुष्टिभिः कीलाभिश्च'[4] हन्तेत्यर्थः। युष्मत् एव सदश्वः सच्छब्दः प्रशंसावचनः। प्रशस्ताश्वोऽश्ववारः। हे मरुतः! सुवीरः[5] शोभनवीर्ययुक्तः। मुष्टिभिश्च कीलाभिश्च शत्रूणां हन्तारोऽश्ववाराश्च[6] युष्माभिः शत्रून् हन्तुं प्रेषिताः[7], युष्मत्तो गच्छन्तीत्यर्थः॥ ४॥

वेङ्कट० यूयम् राजानम् स्वामिनम् जनाय जनयथ महतां कर्मणां कर्तारम् हे यष्टव्याः!। युष्मत्तो गच्छति मुष्टिभिः शत्रूणां हन्ताऽऽक्रष्टव्यभुजबाहुः, युष्मत्त एव शोभनाश्वः हे मरुतः! सुवीरः। 'मरुत्प्रेरिताः कर्माणि' कुर्वन्तीति॥ ४॥

मुद्गल० हे मरुतः! यूयम् जनाय राजानम् स्वामिनम् इर्यम् शत्रूणां प्रेरकं क्षपयितारम् विभ्वतष्टम् विभ्वा ऋभूणां[8] मध्यमः, तेन निर्मितम्। बलवन्तरूपवन्तमित्यर्थः। तादृशं पुत्रम् जनयथ उत्पादयथ हे यजत्राः! यष्टव्याः! मरुतः!। युष्मत् युष्मत्तः[10] एति गच्छति पुत्रः। कीदृशः। मुष्टिहा स्वभुजबलेनैव हन्ता शत्रूणाम् बाहुजूतः बाहू प्रेरकौ शत्रूणां यस्य तादृशः पुत्र एति। तथा युष्मत् युष्मत्तः सदश्वः विद्यमानाश्वः, महाश्व इत्यर्थः, सुवीरः शोभनवीर्यः पुत्र एति। जायत इत्यर्थः॥ ४॥

अरा इवेदचरमा अहेव प्रप्र जायन्ते अकवा महोभिः।
पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या मरुतः सं मिमिक्षुः॥ ५॥

अराःऽइव। इत्। अचरमाः। अहाऽइव। प्रऽप्र। जायन्ते। अकवाः। महःऽभिः।
पृश्नेः। पुत्राः। उपऽमासः। रभिष्ठाः। स्वया। मत्या। मरुतः। सम्। मिमिक्षुः॥ ५॥

स्कन्द० अराः इव यथा अराश्चक्रस्य रथस्य वा तद्वत् अचरमाः चरमः पश्चिमः स येषां न विद्यते ते अचरमाः, पश्चिमाभावादेव[9] अग्रिमस्याप्यभावः, अनग्रिमपश्चिमा इत्यर्थः। अहा इव अहानीव संवत्सरस्य समजातत्वाद्धि तुल्यकाला मरुतः, नैषामग्रिमः पश्चिमो वा कश्चित्। प्रप्र जायन्ते। एकः प्रशब्दः पदपूरणः। 'प्रसमुपोदः पादपूरणे' (पा ८,१,६) इति। अपरः प्रकर्षार्थः। प्रकृष्टा जायन्ते। प्रतिदिवसं वर्धमानप्रकर्षा[11] भवन्तीत्यर्थः। अकवाः अकुत्सिताः महोभिः स्वैर्माहात्म्यैः[12] पृश्नेः दिवः पुत्राः उपमासः उपमाभूताः सर्वस्य। अथवा उपमः इत्यन्तिकनाम (तु० निघ २,१६)। उपमाः दिवः पुत्राः, सन्निकृष्टा इत्यर्थः। रभिष्ठाः [13]अति-शयेन वेगवन्तः स्वया मत्या[13] प्रज्ञया मरुतः सम् मिमिक्षुः व्यक्षतेः गच्छतिकर्मणो[14] एतद्रूपम्।

1. मुटितम् मूको. 2. °स्यापकारकाणा मूको. ३-३ त्रुटितम् मूको. ४-४. मवीराणां कीलाभिश्च मूको. ५. सु···मूको. ६. °वाराश्च मूको. ७. प्रेषिता मूको. ८-८. मातः प्रे° दि° रूपं. ९. ऋभूणां मूको. १०. °त: मरुत: मूको. ११. प्रतिकर्षा° मूको. १२. नास्ति मूको. १३-१३. अ ... मूको. १४. °गति° मूको.

( द्र. निघ २,१४ )। सङ्गच्छन्ते। यादृशेषां योग्या प्रज्ञा परानुग्रहात्मिका तादृगुपपद्यत इत्यर्थः। अथवा मन्यतेरर्चतिकर्मणो मतिः स्तुतिः, तया सङ्गच्छन्ते। स्तोतृभिः स्तूयन्त इत्यर्थः ॥ ५ ॥

वेङ्कट० यथा रथचक्रस्याः अराः सदृशाः भवन्ति, यथा चाहानि, एवम् अचरमाः प्रादुर्भवन्ति अकुत्सिताः तेजोभिः, पृश्नेः पुत्राः परस्परं सदृशाः वेगवन्तः स्वेन मानेन सम्मिता भवन्ति ॥५॥

मुद्गल० अराः इव इत् रथनाभ्य इव अचरमाः अनिकृष्टाः, सर्वसमा इत्यर्थः। अहा इव अहानीव दिवसा यथा सर्वेऽपि षष्टिघटिकात्मकत्वादहस्सङ्ख्योपेतसप्तवर्णरूपेण समा इत्यर्थः। महोभिः तेजोभिः यत्र जायन्ते प्रकर्षेण प्रादुर्भवन्ति। ते अचराः अनल्पाः पृश्नेः पुत्राः उपमासः प्रत्येकं समानाः रभिष्ठाः प्रकृष्टवेगाः। एवं महानुभावाः मरुतः स्वया मत्या स्वकीययैवानुग्रहबुद्ध्या सम् मिमिक्षुः वृष्ट्या सम्यक् सिञ्चन्ति ॥ ५ ॥

यत् प्रायासिष्ट पृषतीभिरश्वैर्वीळुपविभिर्मरुतो रथेभिः ।
क्षोदन्त आपो रिणते वनान्यवोस्रियो वृषभः क्रन्दतु द्यौः ॥ ६ ॥

यत् । प्र । अयासिष्ट । पृषतीभिः । अश्वैः । वीळुपविऽभिः । मरुतः । रथेभिः ।
क्षोदन्ते । आपः । रिणते । वनानि । अव । उस्रियः । वृषभः । क्रन्दतु । द्यौः ॥ ६ ॥

स्कन्द० यत् प्र अयासिष्ट प्रगच्छथ[1] मेघं प्रति पृषतीभिः पृषद्वर्णाभिः वडवाभिः अश्वैः वीळुपविभिः वीळु संस्तम्भे दृढम्। पवी रथनेमिः। दृढरथचक्रधारैश्च हे मरुतः। "रथेभिः रथैः। यदिति[2] वचनात् तदेतदध्याहार्यम्। तदा क्षोदन्ते युष्मद्वाहनैः पृषत्यादिभिरपृष्यमाणाः[3] इत्यर्थः। आपः मेघस्था आपः। रिणते गच्छन्ति मेघात् भूमिं प्रति वनानि उदकानि वृष्टिलक्षणानि। "अव इत्युपसर्गः[4] क्रन्दतु इत्यस्याख्यातेन सम्बन्धयितव्यः। उस्रियः उस्रा गौः तस्याः पुत्रः उस्रियः। वृषभः वृषभ इति प्रजननसमर्थः तरुणो बलीवर्द उच्यते। स च अव क्रन्दतु। मेघस्यान्यस्य 'वाक्यस्य असम्भवात्[5] कोऽत्र लक्ष्यः। अवक्रन्दति शब्दं करोति। उपमावचको[6] मुदाभ्यां गर्जतीत्यर्थः[7]। न च केवलो वृषभः। किं तर्हि। द्यौः द्यौश्च गर्जतीत्यर्थः ॥ ६ ॥

वेङ्कट० यत् प्र अयासिष्ट यदा प्रगच्छथ पृषतीभिः अश्वैः च तथा दृढचक्रपविभिः हे मरुतः! रथैश्च, तदानीम् आपः गच्छन्ति वृक्षाश्च उद्गच्छन्ति। अर्थैकवाद। उस्राया गोः पुत्रः वृषभः 'मरुतां गणः' अव क्रन्दतु द्योतमानः ॥ ६ ॥

मुद्गल० हे मरुतः! यत यदा प्र अयासिष्ट प्रगच्छथ[10]। पृषतीभिः पृषत्संज्ञकैः अश्वैः रथेभिः रथैरश्वयुक्तैः वीळुपविभिः दृढरथनेमिभिः तदा आपः क्षोदन्ते क्षरन्ति, वनानि वृक्षसमूहाः

१. नास्ति वि[1]. २-२ त… मूको. ३. प्रयाथ वि[2] अः प्रजापश कु. ३-४. त्रुटितम् मूको. ५. पृषत्यादिभिः मूको. ६-६. वाक्यस्य…सम[7] मूको. ७. ध्यानवालो वि[2]. ८. गच्छतीत्यर्थः मूको. ९-९. मरुत् वीगणः वि[2] लप; मरुत् कि गणः ल. १०. मन्त म[2] मूको.

रिणते हिंस्यन्ते भज्यन्ते । उस्रियः उस्राः सूर्यरश्मयः तत्सम्बन्धी पर्जन्यः वृषभः अपां वर्षिता द्यौः द्योतमानः अव क्रन्दतु अवाङ्मुखं शब्दयतु वृष्ट्यर्थम् ॥ ६ ॥

प्रथिष्ट यामन् पृथिवी चिदेषां भर्तेव गर्भं स्वमिच्छवो धुः ।
वातान् ह्यश्वान् धुर्यायुयुज्रे वर्षं स्वेदं चक्रिरे रुद्रियासः ॥ ७ ॥

प्रथिष्ट । यामन् । पृथिवी । चित् । एषाम् । भर्ताऽइव । गर्भम् । स्वम् । इत् । शवः । धुः ।
वातान् । हि । अश्वान् । धुरि । आऽयुयुज्रे । वर्षम् । स्वेदम् । चक्रिरे । रुद्रियासः ॥ ७ ॥

स्कन्द० 'प्रथिष्ट प्रथते । यामन् सप्तम्या[1] अत्र लुक् । यामं याम मेयं[1] प्रति गमनं तस्मिन् सति । अथवा यान्ति देवा यस्मिन् स यामो[2] यज्ञः । सप्तमी च 'यस्य च भावेन' (पा २,३,३७) इत्येवं विज्ञायते । तत्प्रकृतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारात् "यज्ञे प्रारब्धे मरुत्सु । का प्रथते[3] । उच्यते । समस्ता पृथिवी । चित् शब्दस्तु पादपूरणः । कस्य यामन् । उच्यते । एषाम् मरुताम् । कथं [4]प्रथते पृथिवी । अत्र[4] उच्यते—भर्तेव गर्भम् इति । तत्रैतौ तत्सम्बन्धयोः । यथा भर्ता जायायां गर्भहेतुभूतं रेतो दधाति एवं मरुतः[5] "पृथिवीगर्भहेतुभूतम् स्वम् इत् स्वभूतम् शवः" उदकनामैतत् (द्र० निघ १,१२)। उदकं वृष्टिलक्षणम् धुः दधति । तेनोदकेन सस्यानि जायन्ते तैः समस्ता पृथिवी प्रथते । कदा दधति[6] । यदा वातान् वातसदृशान् अत्यन्तशीघ्रान् गन्तॄन्[7] वा । हिशब्दः पादपूरणः । अश्वान् धुरि रथस्य रथस्य आयुयुज्रे [10]आयोजितवन्तः । किञ्च[10] वर्षम् वृष्ट्युदकम् स्वेदम् स्विदिः प्रक्षरणार्थः । प्रक्षरितम् चक्रिरे कुर्वन्ति, वृष्टिं पातयन्तीत्यर्थः । रुद्रियासः रुद्रपुत्राः स्तुत्या वा मरुतः ॥ ७ ॥

वेङ्कट० प्रथिता भवति पृथिवी एषाम् गमने ओषधीभिः, भर्ता इव गर्भम् जायायाम् स्वम् उदकं पृथिव्यां निदधति[11] । गच्छतः अश्वान् रथधुरि[12] युञ्जन्ति । ततो वर्षाख्यम् स्वेदम् चक्रिरे मरुतः ॥ ७ ॥

मुद्गल० एषाम् मरुताम् यामन् यामनि गमने पृथिवी, चित् पूरणः, प्रथिष्ट प्रख्याताभवत्, सर्वतो व्याप्ताऽभवदित्यर्थः । भर्ता लौकिकः पतिः गर्भम् इव स्वभार्यायाः तथा भूम्याः स्वम् इत् स्वभूतं गर्भं गर्भस्थानीयम् शवः उदकम् धुः स्थापितवन्तः । हि यस्मात् वातान् गन्तॄन् अश्वान् धुरि रथसम्बन्धिन्याम् आयुयुज्रे आयोजितवन्तः तस्मात् वर्षम् स्वेदम् स्वेदस्थानीयं वृष्टिसलिलम् चक्रिरे कुर्वन्ति रुद्रियासः रुद्रपुत्राः ॥ ७ ॥

हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः ।
सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥ ८ ॥

---

१-१. प्रथितम् मूको. २. मे अर्थ मूको. ३. यामो कु. ४-४. ---ते मूको. ५-५. मय---वि[1], मय---वि[2]. ६. भर्ता मूको. ७-७. 'वी--- मूको. ८. दधाति मु. ९. गन्तून् मूको. १०-१०. ---च मूको. ११. निदधाति वे. १२. ---र्षी मूको.

ये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः । ऋतऽज्ञाः ।
सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः । बृहत् । उक्षमाणाः ॥ ८ ॥

स्कन्द० ये नरो मरुतः इति व्याख्यातायां (ऋ ५,५७,८) ॥ ८ ॥

वेङ्कट० व्याख्याता (ऋ ५,५७,८) ॥ ८ ॥

मुद्गल० ये हे नरः! नेतारः! मरुतः! नः अस्मान् मृळत सुखयत। हे तुविमघासः! प्रभूतधनाः! अमृताः! अमरणधर्माणः! ऋतज्ञाः! यज्ञस्य ज्ञातारः! सत्यश्रुतः! सत्येन सत्यफलत्वेन प्रसिद्धाः! कवयः! मेधाविनः! युवानः! नित्यतरुणाः! बृहद्गिरयः! प्रभूतस्तुतयः! यूयम् बृहत् अत्यधिकम् उक्षमाणाः हविर्भिः सेविताः सन्तः अस्मान् मृळत ॥ ८ ॥

इति चतुर्थाष्टके तृतीयाध्याये त्रयोविंशो वर्गः ॥

[ ५९ ]

प्र वः स्पळक्रन्त्सुविताय दावनेऽर्चा दिवे प्र पृथिव्या ऋतं भरे ।
उक्षन्ते अश्वान् तरुषन्त आ रजोऽनु स्वं भानुं श्रथयन्ते अर्णवैः ॥ १ ॥

प्र । वः । स्पट् । अक्रन् । सुविताय । दावने । अर्च । दिवे । प्र । पृथिव्यै । ऋतम् । भरे ।
उक्षन्ते । अश्वान् । तरुषन्ते । आ । रजः । अनु । स्वम् । भानुम् । श्रथयन्ते । अर्णवैः ॥ १ ॥

स्कन्द० वः इति व्यत्ययेन बहुवचनम्। आत्मन एवायमन्तरात्मनोऽभिधायकम्। 'त्वाम् स्पट्'[1] स्पश बन्धने। सम्पदादित्वाद्भावे क्विप् प्रत्ययः, द्वितीयार्थे च प्रथमा। प्र प्रकर्षेण बन्धं करोति तदप। तत्तेनावश्यं कर्तव्यम्। महतां च यागपरिसमाप्तिहेतुर्विधानम्[2], तच्चावश्यमन्तरात्मना कर्तव्यम्। अतोऽवश्यकर्तव्यसामान्यान्मरुतः तं 'बन्धम् अक्रन् कुर्वन्ति। सुविताय[3] इण् गतौ, शोभनं गम्यते यस्मिन् तत् सुवितं यज्ञकर्म। उपसर्गस्यापि छान्दसत्वादुदात्तत्वम्। तस्यार्थाय यज्ञसमाप्त्यर्थम् दावने दानस्यार्थाय हविषाम्। एवम् ज्ञात्वा अर्च स्तुहि मरुतः। अहमपि तेषाम् 'अर्थाय दिवे पृथिव्यै[4] च ऋतम् सत्यं स्तोत्रम् प्र भरे प्रहरामि प्रापयामि। दिवं पृथिवीं च स्तौमीत्यर्थः। किञ्च उक्षन्ते वृष्ट्या सिञ्चन्ति मरुतः अश्वान् स्वरथेषु नियुक्तान्। अस्मत्पुरुरक्षणार्थं वाऽश्वग्रहणम्। अश्वप्रभृतीन् सर्वप्राणिनः। तरुषन्ते तॄ प्लवनसंतरणयोः' इत्यन्तर्णीतण्यर्थस्य रूपम्। आच्छादयन्ति। रजः लोकः पार्थिवः अनु स्वम् भानुम् अन्विति पश्चादर्थे[5] भानुर्दीप्तिः स्वस्या दीप्त्या विद्युल्लक्षणायाः पश्चात्, विद्युतोऽनन्तरमित्यर्थः। आ श्रथयन्ते श्रथयन्ति। अर्णवैः[6] द्वितीयार्थे तृतीयैषा। अर्णवानुदकवतो मेघान् ॥ १ ॥

वेङ्कट० स्तोतः! युष्माकं कल्याणाय दानाय यजने मरुतः प्रकुर्वन्तु। दीप्ताय मरुद्गणाय स्तुहि।

१-१. त्रुटितम् मूको. २. समाप्तिर्हेतुर्वि मूको. ३-३. बन्ध ··· सुविताय मूको. ४. ··· त्वमो ५. पश्चादर्थे कु. ६. नास्ति मूको.

अहम् पृथिव्यै[1] अत्र सत्कृत्य प्र भरामि। तदनन्तरं तत्र गमनाय अश्वान् स्नापयन्ति। तरन्ति च लोकान्। अनु प्रथयन्ते स्वम् भानुम्[2] मेघै सह सम्पर्चयन्ति[3] ॥ १ ॥

मुद्गल० 'प्र व स्पळक्रन्' इत्यष्टर्चं तृतीयं सूक्तम्। श्यावाश्व ऋषिः। अष्टमी त्रिष्टुप्, शिष्टा जगत्य। मरुतो देवता।

हे मरुतः! वः युष्मभ्यम् सुविताय सुष्ठु प्रापणीयाय दावने हविष्प्रदानाय स्पट् स्पष्टा होता प्र प्रकर्षेण अक्रन् क्रन्दति। हे होतः! दिवे द्योतमानाय देवाय प्र अर्च प्रकर्षेण स्तुहि। तथा पृथिव्यै पृथिव्याश्च ऋतम् स्तोत्रम् भरे सम्पादयामि। किञ्च ते मरुतः अश्वान् व्यापकानुदकसङ्घान् उक्षन्ते सिञ्चन्ति। रजः आ अन्तरिक्षमासर्वत तरुषन्ते तरन्ति। स्वम् भानुम् स्वकीयं तेजः अर्णवैः मेघैः सह अनु प्रथयन्ते अनुपालयन्ति, अनुकूलं मापयन्तीत्यर्थः ॥ १ ॥

अमा॑देषां भि॒यसा॒ भूमि॑रेजति॒ नौर्न पू॒र्णा क्ष॑रति॒ व्यथि॑र्य॒ती ।
दू॒रे॒दृशो॒ ये चि॒तय॑न्त॒ एम॑भिर॒न्तर्म॒हे वि॒दथे॑ येति॒रे नरः॑ ॥ २ ॥

अमा॑त् । ए॒षा॒म् । भि॒यसा॑ । भूमिः॑ । ए॒ज॒ति॒ । नौः । न । पू॒र्णा । क्ष॒र॒ति॒ । व्यथिः॑ । य॒ती ।
दू॒रे॒ऽदृशः॑ । ये । चि॒तय॑न्ते । एम॑ऽभिः । अ॒न्तः । म॒हे । वि॒दथे॑ । ये॒ति॒रे । नरः॑ ॥ २ ॥

स्कन्द० अमात् अमशब्द आत्मपर्याय, आत्मन एव। स्वरूपादेवेत्यर्थः एषाम् मरुताम् भियसा भयेन समस्ता भूमिः एजति। लुप्तोपममेतत्। कम्पत इव। नौः न पूर्णा[4]। यथा नौरुदकस्य पूर्णा[4] सती। एवं क्षरति क्षमति। किम्। सामर्थ्यात् आत्मपयआदि हविः। भूमिष्ठेषु च यज्ञेषु क्षरत्सु भूमिः क्षरतीत्युच्यते। यथाऽन्यत्रप्यादेहविषो दानं तदत्र क्षरणम्। कीदृशी सती क्षरति। उच्यते। व्यथिः 'यती परिचर्यायै मरुतः' प्रति गच्छन्ती, मरुत्परिचर्यापरा[7] सतीत्यर्थः। ये किं कुर्वन्ति मरुतः। दूरेदृशः दूरेस्थितो यो यथा प्रदृश्यो भिन्नाञ्जनया[8] एवं तथा ये पश्यन्ति ते दूरेदृशः। ये मरुतः चितयन्त[9] ज्ञापयन्ते एमभिः गमनैः, [10]"परिचर्यायै भूमिमायतन्ती"[10] दृष्ट्वा तस्याः कर्तारः ये अनुमोदयन्त इत्यर्थः। ये च अन्तः महे महति विदथे यज्ञे। मध्ये महतो यज्ञस्येत्यर्थः। येतिरे 'स भानुना यतते' ( ऋ ५,३७,१ ) इत्यादेर्दर्शनाय-तिरेत्यर्थः[11]। गच्छन्ति नरः मनुष्याकाराः ॥ २ ॥

वेङ्कट० अमात् एषाम् भयेन भूमिः ओषधिवनस्पतियुक्ता कम्पते नौः इव उदकपूर्णा जीर्णा मध्ये गच्छन्ती। क्षरति अवशीर्णा भवति। दूरे पश्यन्तः ये गमनैः ज्ञायन्ते[12] ते[13] नेतारः यज्ञे महते अन्नाय गच्छन्ति ॥ २ ॥

मुद्गल० एषाम् मरुताम् भियसा भूमिः एजति कम्पते। नौः न पूर्णा नौः यथोदकमध्ये क्षरति चलति तद्वत् व्यथिः यती[14] व्यथमाना भवति पृथिवी। दूरेदृशः दूरे दृश्यमाना अपि ये

1 भागपृथिव्यै वि[1], भायुपृथिव्यै सर्वं 2 नास्ति मूको 3 सम्पर्चयन्ति ए, संपर्चयन्ति वि[1] छप
4-4 स्व ॰पूर्णो मूको 5-5 ॰दकपूर्णा कु 6-6. ॰॰पर्वतमा स॰ मूको. 7. मरुत्परिचर्यापरा मूको.
8. निम्नाञ्जना वा मूको 9. चितयन्ते वि[1] कु 10-10. ॰॰॰यतन्ती मूको. 11. ॰नाय तिरे[1] कु
12. ज्ञायन्ते ए. 13. तेन मूको. 14. यन्ति मूको.

मरुतः एमभिः गमनैः चितयन्ते ज्ञायन्ते, ते[1] महान्तो मरुतः विदथे यज्ञे महे महते हविषे हविर्भक्षणाय अमात् स्वस्थानात् अन्तः द्यावापृथिव्योर्मध्ये येतिरे यतन्ते[2] नरः नेतारो मरुतः ॥ २ ॥

गवांमिव श्रियसे शृङ्गमुत्तमं सूर्यो न चक्षू रजसो विसर्जने ।
अत्या इव सुभ्व१श्चारवः स्थन मर्या इव श्रियसे चेतथा नरः ॥ ३ ॥

गवांम्ऽइव । श्रियसे । शृङ्गम् । उत्ऽतमम् । सूर्यः । न । चक्षुः । रजसः । विऽसर्जने ।
अत्याःऽइव । सुऽभ्वः । चारवः । स्थन । मर्याःऽइव । श्रियसे । चेतथ । नरः ॥ ३ ॥

स्कन्द० 'गवामिव इत्यादिवाक्यत्रयम् चारवः[3] स्थन इत्येतस्योपमा । यथा गवाम् श्रियसे श्रीरत्र शोभाल- क्षणाऽभिप्रेता, तादर्थ्ये चतुर्थी । शोभार्थम् शृङ्गम् उत्तमम्[4] सर्वस्मात्कायादुत्तमं चारु । सूर्यो न यथा सूर्यः चक्षुस्स्थानीयः[5] प्रकाशकः सर्वस्य रजसः विसर्जने आदित्यस्य[6] ज्योती रज उच्यते तदस्मिन् विसृज्यते विक्षिप्यते स रजसो विसर्जनः द्युलोकः, तत्र चारु अत्या इव यथा चाश्वाः सुभ्वः अपठितमपि महत्त्वमैतत्[7] । महान्तश्चारवः । एव यूयम् चारवः स्थन शोभनाः स्थ मर्याः इव यथा मनुष्या राजानो अन्ये केचित् श्रियसे श्रियोऽर्थमात्मनः[8] स्वस्य परिजनस्य वा साध्वसाधु च चेष्टितं चेतन्ति एवम् चेतथ जानीथ सर्वम् हे नरः । मनुष्याकाराः । ॥ ३ ॥

वेङ्कट० गवाम् इव शृङ्गम् उत्तमम् शिरसि स्थितं[9] श्रयणाय भवति मरुतां शृङ्गम् । सूर्यः इव भवत्येषां तेजः उदकस्य विसर्जने । अश्वा इव शोभनभवना यूयम् आगच्छन्तः कल्याणा भवथ । मनुष्या इव श्रयणाय बुद्धिं कुरुथ हे नेतारः । सहिताः ॥ ३ ॥

मुद्गल० हे मरुतो यूयम् गवाम् शृङ्गम् इव उत्तमम् कनकमयमुष्णीषपट्टादिकम् श्रियसे, श्रियै धारयथेति शेषः । सूर्यः न सूर्य इव स यथा रजसः तेजसः विसर्जने[10] चक्षुः दर्शनसाधनं मण्डलम् धत्ते तद्वत् रजसो वृष्टेर्विसर्जने विसर्जनाय चक्षुः सर्वप्रकाशकं तेजो धारयथ । अत्याः इव अश्वा इव सुभ्वः शोभनाः चारवः दर्शनीयाः स्थन भवथ । मर्याः इव यजमाना इव ते यथा श्रियसे जानन्ति यज्ञादिकं तथा चेतथ जानीथ हे नरः । मरुतः । ॥ ३ ॥

को वो महान्ति महतामुदश्नवत् कस्काव्या मरुतः को ह पौंस्या ।
यूयं ह भूमिं किरणं न रेजथ प्र यद् भरध्वे सुवितायं दावने ॥ ४ ॥

कः । वः । महान्ति । महताम् । उत् । अश्नवत् । कः । काव्या । मरुतः । कः । ह । पौंस्या ।
यूयम् । [redacted] । भूमिम् । किरणम् । न । रेजथ । प्र । यत् । भरध्वे । सुवितायं । दावने ॥ ४ ॥

---

१. तेन मूको. २. यन्ति मूको. ३-३. गवाम---रव मूको. ४. भाति मूको. ५. चक्षुः स्था° मूको. ६. सुदितस् मूको. ७. महत्त्वामैतद् वि°; महत्त्वमैतत् वि°; महत्त्वमेतद् अ. ८. श्रीर° मूको. ९. स्थिति वि° रूपं. १०. °मे तत् मूको.

स्कन्द० कः वः युष्माकम् महान्ति सेनालक्षणानि बलानि स्वयम् महताम् सताम् उत् अश्नवत् अश्नुते व्याप्नोति। न कश्चिदपीत्यर्थः। कः[1] वा काव्या काव्यो मेधाविनः तत्करणानि। हे मरुतः। कः ह शब्दो वाशब्दस्यार्थे। को वा पौंस्या बलानि सामर्थ्यलक्षणानि। कस्मात्। उच्यते—यूयम् ह हशब्दोऽत्र हिशब्देन समानार्थः यस्मादर्थे। यूयं यस्मात् समस्ताम् भूमिम् [2]किरणम् न[2]। किरण इति रश्मिनाम रश्मिमिवादित्य उदकेऽन्यत्र वा[3] रेजथ कम्पयथ। कदा[4]। उच्यते—यत् यदा प्र भरध्वे प्रहरथ प्रापयथात्मानम् गच्छथेत्यर्थः। किमर्थम्। उच्यते—सुविताय यज्ञसमाप्त्यर्थम् दावने [5]दानार्थम् च[5] हविषाम्॥ ४॥

वेङ्कट० हे मरुतः! कः वः महताम् महान्ति धनानि उद् व्याप्नोति, कः च कविकर्माणि, कः वा वीर्याणि। यूयम् खलु सूर्यः किरणम् इव पृथिवीम् ओषधिवनस्पतियुक्तां कम्पयथ प्रगच्छथ यदा कल्याणाय दानाय॥ ४॥

मुद्गल० हे मरुतः! वः युष्माकम् महताम् पूज्यानाम् कः यजमानः महान्ति श्रेयांसि उद् अश्नवत् उत्कृष्टं प्राप्नुयात्। कः च तद्धर्म् काव्या काव्यानि कवीनां युष्माकं सम्बन्धीनि स्तोत्राणि[6] उदश्नवत्। कः ह कस्य पौंस्या पौंस्यानि पराक्रमान् उदश्नवत्। यूयम् खलु भूमिम् किरणम् न किरणमिव रेजथ किरणो यथा वृष्ट्यर्थं चालयथ तद्वद्भूमिं रेजथ यत् यस्मात् सुविताय सुष्ठु प्रासव्याय, प्रसवस्येत्यर्थः। तादृशस्य धनस्य दावने वृष्ट्युदकदानाय प्र भरध्वे प्रकर्षेण सम्पादयथ वृष्टिम्। यस्माद् यूयमेवं कुरुथ तस्मात्[7] क एव करोतीत्यर्थः॥ ४॥

अश्वा॑ इ॒वेद॑रु॒षासः॒ सब॑न्धवः॒ शूरा॑ इव प्र॒युधः॒ प्रोत यु॑युधुः।
मर्या॑ इव सु॒वृधो॑ वावृधु॒र्नरः॒ सूर्य॑स्य॒ चक्षुः॒ प्र मि॑नन्ति वृ॒ष्टिभिः॑॥ ५॥

अश्वाः॒ऽइव। इत्। अ॒रु॒षासः॑। सऽब॑न्धवः। शूराः॑ऽइव। प्र॒ऽयुधः॑। प्र। उ॒त। यु॒यु॒धुः॒।
मर्याः॑ऽइव। सु॒ऽवृधः॑। व॒वृ॒धुः॒। नरः॑। सूर्य॑स्य। चक्षुः॑। प्र। मि॒न॒न्ति॒। वृ॒ष्टिऽभिः॑॥ ५॥

स्कन्द० 'अश्वाः इव, इत् इति[8] पदपूरणः। अरुषासः गन्तारो मरुतः सबन्धवः समानो बन्धुः माता पृश्निः पिता च रुद्रो येषां ते सबन्धवः शूराः इव। शूराः[1] राजानोऽन्ये केचित् प्रयुधः प्रकर्षेण योद्धारः। न च इदानीमेव केवलम्, उत प्र युयुधुः उतशब्दोऽप्यर्थे प्रकर्षेण युयुधिरे अपि। अतीतेऽपि काले युद्धानि कृतवन्त एवेत्यर्थः। मर्याः इव मनुष्या इव च सुखिनो राजपुत्रा वा अन्ये वा केचित् सुवृधः शरीरपुष्टिलक्षणया[9] वृद्ध्या सुष्ठु वर्धितारः। न चेदानीमेव केवलम्। किं तर्हि। वावृधुः अतीतेऽपि काले ववृधिर एव। नरः मनुष्याकाराः सूर्यस्य चक्षुः दर्शनम् प्र मिनन्ति प्रहिंसन्ति। केन। उच्यते—वृष्टिभिः॥ ५॥

वेङ्कट० अश्वा इव आरोचमानाः समानबन्धवः एकस्मात् उत्पन्नाः शूराः इव च प्रकर्षेण योद्धारः प्र युयुधुः मरुतः, यथा अश्वा वीराश्चाजिं युद्धार्थं प्रगच्छन्ति इत्यर्थः। तथा राजानः सुष्ठु वर्धमाना वर्धन्ते नेतारः, तदानीम् सूर्यस्य तेजः प्रहिंसन्ति वृष्टिभिः॥ ५॥

१. वै मूको. २-२. नास्ति मूको. ३. नास्ति मूको. ४. यदा मूको. ५-५. दानो वि[?] अ. ६. °णि कः मूको. ७. कस्मात् मूको. ८-८. इत इति मूको. ९. शरीरवृद्धि° वि[?] अ; शरीर पुष्टि° मु.

मुद्गल० मरुतः एते[1] अश्वाः इव शीघ्रगन्तारः अश्वासः आरोचमानाः शूराः इव भटा इव प्रयुधः प्रयोद्धारो वैरिभिः[2] सह साहसाः। उत अपि च प्र युयुधुः प्रकर्षेण युध्यन्ते। सबन्धवः बन्धुभिः सह वर्तमानाः मर्याः इव मनुष्या यथा वर्धन्ते तथा सुवृधः सुष्ठु वर्धयितारः नरः नेतारः ववृधुः वर्धन्ते। इत् एवं महात्मानः सूर्यस्य चक्षुः तेजः वृष्टिभिः प्र मिनन्ति प्रकर्षेण हिंसन्ति आवृण्वन्तीत्यर्थः ॥ ५ ॥

ते अ॑ज्ये॒ष्ठा अक॑निष्ठास उ॒द्भिदो॑ऽमध्य॒मासो॒ मह॑सा॒ वि वा॑वृधुः ।
सु॒जा॒तासो॑ ज॒नुषा॒ पृश्नि॑मातरो दि॒वो मर्या॒ आ नो॒ अच्छा॑ जिगातन ॥ ६ ॥

ते । अ॒ज्ये॒ष्ठाः । अक॑निष्ठासः । उ॒त्ऽभिदः॑ । अम॑ध्यमासः । मह॑सा । वि । व॒वृ॒धुः॒ ।
सु॒ऽजा॒तासः॑ । ज॒नुषा॑ । पृश्नि॑ऽमातरः । दि॒वः । मर्याः॑ । आ । नः॒ । अच्छ॑ । जि॒गा॒त॒न॒ ॥ ६ ॥

स्कन्द० ते मरुतः अज्येष्ठाः अविद्यमानो ज्येष्ठो येषां ते अज्येष्ठाः अकनिष्ठासः अविद्यमानः कनिष्ठो येषां ते अकनिष्ठासः उद्भिदः उद्भेत्तारः। ओषध्यादिबीजानां वृष्टिप्रदानद्वारेण ओषध्यादीनां जनयितार इत्यर्थः। अमध्यमासः अविद्यमानो मध्यमो येषां ते अमध्यमाः। मरुतो हि सहजातास्तेन तेषां न ज्येष्ठः कनिष्ठः मध्यमो वा कश्चित्। महसा माहात्म्येन वि वावृधुः विविधं वर्धन्ते। प्रतिदिनं वर्धमानमाहात्म्या भवन्तीत्यर्थः। किञ्च सुजाताः सुभिक्षप्रदाः। पुण्यकर्माण इत्यर्थः। अथवा सुष्ठु जाताः सुजाताः पुण्यकर्माण इत्यर्थः। जनुषा जन्मनैव परिपूर्णसर्वावयवा इत्यर्थः। पृश्निमातरः दिवः द्युलोकात् मर्याः मनुष्याकाराः नः अस्मान् आ अच्छ आप्तुम् जिगातन। प्रथमपुरुषस्य स्थानेऽयं मध्यमः पुरुषः। आगच्छन्तु ॥ ६ ॥

वेङ्कट० ते ज्येष्ठरहिताः [1]अकनिष्ठाः नापि[1] मध्यमाः, किं तर्हि, सहोत्पन्नाः, उद्भेत्तारः शरीराणां तेजसा वर्धन्ते। सुजाताः जन्मना गोमातरः दिवस्पुत्राः अस्मान् अभ्यागच्छत ॥ ६ ॥

मुद्गल० ते मरुतः अज्येष्ठाः अकनिष्ठासः उद्भिदः उद्भेदयितारः शत्रून् अमध्यमासः महसा तेजसा वि ववृधुः विवर्धन्ते। सुजातासः सुष्ठु संभूताः जनुषा जन्मना पृश्निमातरः पृश्नेः पुत्राः मर्याः मनुष्येभ्यो हिताः यूयम् दिवः सकाशात् नः अस्मान् अच्छ अभिमुखम् आ जिगातन सर्वतः प्रशंसत ॥ ६ ॥

वयो॒ न ये श्रेणीः॑ प॒प्तुरोज॒सान्ता॑न् दि॒वो बृ॑ह॒तः सानु॑न॒स्परि॑ ।
अश्वा॑स एषामु॒भये॒ यथा॑ वि॒दुः प्र पर्व॑तस्य नभ॒नूँर॑चुच्यवुः ॥ ७ ॥

वयः॑ । न । ये । श्रेणीः॑ । प॒प्तुः । ओज॑सा । अन्ता॑न् । दि॒वः । बृ॒ह॒तः । सानु॑नः । परि॑ ।
अश्वा॑सः । ए॒षा॒म् । उ॒भये॑ । यथा॑ । वि॒दुः । प्र । पर्व॑तस्य । न॒भ॒नून् । अ॒चु॒च्य॒वुः॒ ॥ ७ ॥

1. ये ते मूको. 2. नास्ति मूको. 1-1. कनिष्ठानपि मूको.

स्कन्द० वयः न[1] पक्षिण [redacted] ये मरुतः [2]श्रेणीः पङ्क्तयः अवेन गन्तृणाम्[2] पप्तुः पतन्ति । गच्छन्तीत्यर्थः[3] । ओजसा बलेन अन्तान् पर्यन्तान्[4] दिवः द्युलोकस्य बृहतः महतः सानुनः समुच्छ्रितस्य पर्वतादेः परि उपरि । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः एषामित्येतत्समानाधिकरणश्च[5] । तेषाम् एषाम् स्वभूताः अश्वासः अश्वाः उभये देवमनुष्याः यथा विदुः जानन्ति । अत्यन्तप्रकाशमित्यर्थः । पर्वतस्य मेघस्य स्वभूतान् नभनून् 'नभ.' ( निघ १,१२ ) इत्युदकनाम । तस्मादयं नुः प्रत्ययः समूहे द्रष्टव्यः । उदकसमूहान् अचुच्यवुः प्रच्यावयन्ति ॥ ७ ॥

वेङ्कट० पक्षिणः इव स्वावासान् प्रति ये बलेन पतन्ति दिवः अन्तान् प्रति महतः समुच्छ्रिताद् दिवः । अश्वाः एषाम् शिलोच्चयस्य सानूनि प्रच्यावयन्ति, यथा उभयपार्श्वस्था जनाः विदुः । पक्षिगत उत्तरस्य च आवासस्थाने सम्भवति पार्श्वयोः अन्ययोः पर्वत एव तिष्ठति[6] ॥ ७ ॥

मुद्गल० ये मरुतः वयः न पक्षिण इव श्रेणीः पङ्क्तयः सन्तः[7] ओजसा बलेन दिवः अन्तरिक्षस्य अन्तान् पर्यन्तान् बृहतः महतः सानुनः समुन्नतस्याकाशावकाशस्य[8] परि परितः पप्तुः पतन्ति । एषाम् अश्वासः अश्वाः पर्वतस्य मेघस्य नभनून् उदकानि प्र अचुच्यवुः प्रकर्षेण च्यावयन्ति उभये देवा मनुष्याश्च यथा विदुः जानन्ति तथा ॥ ७ ॥

मिमा॑तु॒ द्यौरदि॑ति॒र्वी॒तये॑ नः॒ सं दानु॑चित्रा उ॒षसो॑ यतन्ताम् ।
आचु॑च्यवु॒र्दि॒व्यं कोश॑मे॒त ऋषे॑ रु॒द्रस्य॑ म॒रुतो॑ गृणा॒नाः ॥ ८ ॥

मिमा॑तु । द्यौः । अदि॑तिः । वी॒तये॑ । नः॒ । सम् । दानु॑ऽचित्राः । उ॒षसः॑ । य॒त॒न्ता॒म् ।
आ । अ॒चु॒च्य॒वुः॒ । दि॒व्यम् । कोश॑म् । ए॒ते । ऋषे॑ । रु॒द्रस्य॑ । म॒रुतः॑ । गृ॒णा॒नाः ॥ ८ ॥

स्कन्द० मिमातु इति माङ् माने इत्यस्य रूपम् । निर्मिमीताम्[9] । करोत्वित्यर्थः । किम् । पुरस्तात्सङ्कीर्तितत्वात् वयः । द्यौः मरुतां माता अदितिः च । साऽपि हि मरुतां मातैव । एवं ह्यैतिहासिकाः स्मरन्ति—'अदित्यां कश्यपान्मरुतो जाताः' इति । अथवा अदितिरिति दिव एव विशेषणम् । अदितिः अदीना अक्षीणा द्यौः । वीतये गमनाय प्राप्त्यै । नः अस्मान् प्रति । ताश्च प्राप्ताः दानुचित्राः[10] दानु दानं वृष्ट्युदकस्य, तद् विचित्रं यासां ता दानुचित्राः उषसः । माध्यमिकाः वाचः । गर्जितशब्दा इत्यर्थः । सम् यतन्ताम् सङ्गच्छन्ताम् अस्माभिस्सह । श्रयन्ताम् अस्माभिरित्यर्थः । आ अचुच्यवुः आच्यावयन्ति दिव्यम् दिवि भवम् कोशम् मेघम् । एते अपि हे ऋषे! आत्मन एवेदमन्तरात्मनः सम्बोधनम् । रुद्रस्य षष्ठीश्रुतेः पुत्रा इति वाक्यशेषः । मरुतः गृणानाः स्तूयमानाः । केन । [11]ऋषे इत्यामन्त्रणयोगात्[11] त्वया मया वा ॥ ८ ॥

वेङ्कट० कुरुतां[12] द्यावापृथिवी अन्नाय अस्मान् । सङ्गच्छन्ताम्[13] अस्मान् चित्रदानाः उषसः च । दिवि भवं मेघम् एते[14] आ च्यावयन्तु हे श्यावाश्व![15] रुद्रसम्बन्धिनः मरुतः त्वया स्तूयमानाः । अत्र एकवचनबहुवचनयोः समन्वयः ॥ ८ ॥

---

१. नास्ति मूको. २-२. मरुतः अवगन्तृणाम् मूको. ३. गच्छन्तीति मूको. ४. पर्यान् मूको. ५. पषा मध्ये° मूको. ६. तिष्ठन्ति वि° अ°. ७. सतः मूको. ८. °काशावकाशस्य मूको. ९. निर्मिमीतां मूको. १०. ध दानु° मूको. ११-११. करोत्विति° मूको. १२. कुरुः वि°; कुरा ख°; नास्ति द०. १३. °च्छन्तां द०. १४. मरुतः मूको. १५. श्यावाश्विनः मूको.

मुद्गल० न अस्मदर्थम् द्यौः अन्तरिक्षम्[1] मिमातु निर्मिमातु वृष्टिम्। कीदृशी। अदितिः अदीना। किमर्थम्। वीतये उत्पत्तये। दानुचित्रा विचित्रप्रकाशादिदाना उषसः सम् यतन्ताम्। हे ऋषे! त्वया गृणाना स्तूयमाना मरुतः रुद्रस्य, पुत्रा इत्यर्थः, एते दिव्यम् कोशम् मेघमुदकम् आ अचुच्यवुः सान्यापादयन्ति ॥ ८ ॥

इति चतुर्थाष्टके तृतीयाध्याये चतुर्विंशो वर्गः ॥

[ ६० ]

ईळे अ॒ग्निं स्ववसं॒ नमो॑भिरि॒ह प्र॑स॒त्तो वि च॑यत् कृ॒तं नः॑ ।
रथै॑रिव॒ प्र भ॑रे वाज॒यद्भिः॑ प्रदक्षि॒णिन्म॒रुतां॒ स्तोम॑मृध्याम् ॥ १ ॥

ईळे॑ । अ॒ग्निम् । सु॒ऽअव॑सम् । नम॑ःऽभिः । इ॒ह । प्र॒ऽस॒त्तः । वि । च॒यत् । कृ॒तम् । नः॒ ।
रथैः॑ऽइव । प्र । भ॒रे॒ । वा॒ज॒यत्ऽभिः॑ । प्र॒ऽद॒क्षि॒णित् । म॒रुता॑म् । स्तोम॑म् । ऋ॒ध्या॒म् ॥ १ ॥

स्कन्द० ईळे स्तौमि अग्निम् स्ववसम् सुपालनम् नमोभिः स्तुतिभिः । स ईळितः इह कर्मणि प्रसत्तः, प्र इत्येष नि इत्येतस्य स्थाने, निषण्णः वि चयत् विचिनोतु कृतमिदं कर्म नः अस्माकम्। यदत्राशोभनमस्माभिः कृतं तदपनयतु, यत् शोभनं तत्परिगृह्णातु, येनेदं कर्म मरुतां योग्यं भवतीत्यर्थः । अहमपि रथैः इव यथा रथैः 'अभिमतं देशं कश्चित्' प्रापयेत् तद्वत् प्र भरे प्रहरामि, प्रापयामीत्यर्थः । किम्। सामर्थ्याद्धविः। कस्य। उच्यते। वाजयद्भिः अन्नवता हविर्लक्षणमन्नमिच्छताम् प्रदक्षिणित् प्रदक्षिणम्। देवानां हि कर्मणां प्रादक्षिण्यं धर्मः । केषां अन्नवताम्। उच्यते। मरुताम्। न च केवलं हविः। किं तर्हि। स्तोमम् च ऋध्याम् ऋधु वृद्धौ। सामर्थ्यादन्तर्णीतण्यर्थः। वर्धयामि। 'स्तोत्रं परिवृद्धं' करोमि इत्यर्थः ॥ १ ॥

वेङ्कट० स्तौमि अग्निम् सुरक्षणम् नमोभिः स्तवैः। अत्र प्रसन्नः सन् वि चिनोतु कर्म अस्मदीयम्। रथैः इव प्र भरामि अत्र कुर्वन्ति स्तोमम्। यथा[2] बहु अत्र रथैः[3] प्रभरन्ति तद्वत् बहून् स्तोमान् प्रभरामि। एतदेवाह—प्रदक्षिणम्[4] मरुताम् स्तोमम् वर्धयामीति ॥ १ ॥

मुद्गल० 'ईळे अग्निम्' इति अष्टर्चं चतुर्थं सूक्तम्। श्यावाश्व ऋषिः। सप्तमाष्टम्यौ जगत्यौ, शिष्टास्त्रिष्टुभः। मरुतो देवता।

अहं श्यावाश्वः अग्निम् स्ववसम् सुष्ठुरक्षणम् नमोभिः स्तोत्रैः ईळे स्तौमि। तत्स्तोत्रम् कृतम् इह इदानीम् प्रसत्तः प्रसन्नः नः अस्मदर्थम् वि चयत् विजानातु। वाजयद्भिः अन्नमिच्छद्भिः[5] स्तोत्रैः रथैः इव रथैर्यथाऽभिमतं मानुषाः तद्वत् प्र[6] भरे प्रकर्षेण सम्पादयामि अभिमतम्। प्रदक्षिणित् प्रादक्षिण्येन गच्छन् मरुताम् स्तोमम् स्तोत्रम् ऋध्याम् समर्धयेयम् ॥ १ ॥

---

१. 'क्षम् अदिति मूको   २-२. नास्ति मूको.   ३-३. अत्र परितोऽद्रि मूको   ४. नास्ति वि' लप
५. रथैः ल   ६. प्रदक्षिणित् वि' एपं   ७. नास्ति मूको

आ ये त॒स्थुः पृष॑तीषु श्रु॒तासु॑ सु॒खेषु॑ रु॒द्रा म॒रुतो॒ रथे॑षु ।
वना॑ चिदुग्रा जिहते॒ नि वो॑ भि॒या पृ॑थि॒वी चि॑द्रेजते॒ पर्व॑तश्चित् ॥ २ ॥

आ । ये । त॒स्थुः । पृष॑तीषु । श्रु॒तासु॑ । सु॒ऽखेषु॑ । रु॒द्राः । म॒रुतः॑ । रथे॑षु ।
वना॑ । चि॒त् । उ॒ग्राः॒ । जि॒ह॒ते॒ । नि । वः॒ । भि॒या । पृ॒थि॒वी । चि॒त् । रे॒ज॒ते॒ । पर्व॑तः । चि॒त् ॥

स्कन्द० ये [illegible] कुर्वन्ति मरुतः । उच्यते । आ ये तस्थुः आतिष्ठन्ति । आरोहन्तीत्यर्थः । पृषतीषु पृषद्वर्णासु बडवासु श्रुतासु विख्यातासु, सुखेषु रुद्राः रुद्रपुत्राः मरुतः रथेषु । परोक्षकृतत्वादस्यार्धर्चस्य यच्छब्दश्रुतेश्च तच्छब्दमध्याहृत्य पूर्वयैकवाक्यता[1] योज्या । तेषां मरुतामिति परस्त्वर्धर्चः प्रत्यक्षः । ··· ··· ··· ··· ··· ॥ २ ॥

वेङ्कट० आ तिष्ठन्ति[2] ये पृषद्वर्णासु विश्रुतासु सुखकरेषु[3] च मरुतः रथेषु । वृक्षाः च वः भयेन हे उद्गूर्णाः ! नि जिहते । पृथिवी अपि कम्पते, शिलोच्चयश्च ॥ २ ॥

मुद्गल० ये मरुतः रुद्राः रुद्रपुत्राः आ तस्थुः आतिष्ठन्ति पृषतीषु मरुतां वाहनेषु श्रुतासु ख्यातासु सुखेषु शोभनरथाक्षच्छिद्रेषु रथेषु रथान् आ तस्थुः आतिष्ठन्ति । हे उग्राः ! मरुतः ! यूयं यदा रथान् आरूढाः स्थ तदानीम् वना चित् वनान्यपि नि जिहते न्यग्गच्छन्ति वः युष्माकं भिया भीत्या । पृथिवी चित् पृथिव्यपि रेजते कम्पते । पर्वतः चित् पर्वतोऽपि रेजते । उत्तरार्धः प्रत्यक्षकृतः । पूर्वार्धे च एवम् अकुर्वन् तेषां स्तोमम् करवाम् इति पूर्वेणान्वयः ॥ २ ॥

पर्व॑तश्चिन्महि॑ वृ॒द्धो बि॑भाय दि॒वश्चि॒त् सानु॑ रेजत स्व॒ने वः॑ ।
यत् क्रीळ॑थ मरुत ऋष्टिमन्त॒ आप॑ इव स॒ध्र्य॑ञ्चो धवध्वे ॥ ३ ॥

पर्व॑तः । चि॒त् । महि॑ । वृ॒द्धः । बि॒भा॒य॒ । दि॒वः । चि॒त् । सानु॑ । रे॒ज॒त॒ । स्व॒ने । वः॒ ।
यत् । क्रीळ॑थ । म॒रु॒तः॒ । ऋ॒ष्टि॒ऽम॒न्तः॒ । आपः॑ऽइव । स॒ध्र्य॑ञ्चः । ध॒व॒ध्वे॒ ॥ ३ ॥

स्कन्द० ··· ··· ··· ··· ··· ॥ ३ ॥

वेङ्कट० शिलोच्चयः च अत्यन्तम् वृद्धः बिभेति । तथा पर्वतस्य अन्तरिक्षात् सानु कम्पते भवतां शब्दे । यदा[4] यूयम् क्रीडथ मरुतः ! ऋष्टिमन्तः, तदानीम् उदकानीव सहायन्तो गच्छथ ॥ ३ ॥

मुद्गल० हे मरुतः ! वः युष्माकम् स्वने भयङ्करशब्दे सति पर्वतः चित् पर्वतोऽपि महि महान् वृद्धः सन्नपि बिभाय बिभेति । दिवश्चित् अन्तरिक्षस्यापि सानु समुच्छ्रितः प्रदेशः रेजते कम्पते । यत् यदा क्रीळथ क्रीडथ हे मरुतः ! यूयम् ऋष्टिमन्तः आयुधवन्तः सन्तस्तदा आपः इव सध्र्यञ्चः सहाञ्चनाः धवध्वे गच्छथ ॥ ३ ॥

---

1. पूर्वयैक° मूको. 2. °न्ते वि°, [illegible] 3. [illegible] मूको.

वरा इवेद् रैवतासो हिरण्यैरभि स्वधाभिस्तन्वः पिपिश्रे ।
श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु ॥ ४ ॥

वराःऽइव । इत् । रैवतासः । हिरण्यैः । अभि । स्वधाभिः । तन्वः । पिपिश्रे ।
श्रिये । श्रेयांसः । तवसः । रथेषु । सत्रा । महांसि । चक्रिरे । तनूषु ॥ ४ ॥

स्कन्द० ॥ ४ ॥

वेङ्कट० कन्याया वोढारः इव रैवत पुत्राः[1], हिरण्मयैः आभरणैरुदकैश्च आत्मीयानि शरीराणि संश्लिष्टानि कुर्वन्ति । प्रशस्ता बलवन्तः रथेषु अवस्थाय वा स्थाय सत्यमेव महनीयान्याभरणानि अङ्गेषु कुर्वन्ति ॥ ४ ॥

मुद्गल० वराः इव विवाहयोग्याः[2] युवानः इव ते यथा रैवतासः धनवन्तः हिरण्यैः हिरण्मयैः आभरणैः स्वधाभिः उदकैश्च तन्वः स्वकीयानि शरीराणि अभि पिपिश्रे सम्पोषयन्ति अलङ्कुर्वन्ति, तद्वत् एते मरुतोऽपि रैवतासः धनवन्तः हिरण्यैः हिरण्यस्थानीयैः विद्युदाद्यैराभरणैः स्वधाभिश्च तन्वः स्वकीयानि शरीराणि अभि पिपिश्रे । श्रिये शोभनाय श्रेयांसः श्रेष्ठाः तवसः बलवन्तो मरुतः रथेषु सत्रा सत्यम् तनूषु महांसि तेजांसि चक्रिरे कृतवन्तः । इत् पूरणः ॥ ४ ॥

अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥ ५ ॥

अज्येष्ठासः । अकनिष्ठासः । एते । सम् । भ्रातरः । ववृधुः । सौभगाय ।
युवा । पिता । सुऽअपाः । रुद्रः । एषाम् । सुऽदुघा । पृश्निः । सुऽदिना । मरुत्ऽभ्यः ॥ ५ ॥

स्कन्द० ॥ ५ ॥

वेङ्कट० अमी सम् ववृधुः सुधनत्वाय । तेषाम् युवा सुकर्मा रुद्रः पिता, अमीभ्यः[3] सुदोहा पृश्निः 'सुदिनम्' (निघ ३,६) इति सुखनाम । सुखकरी माता भवति ॥ ५ ॥

मुद्गल० अज्येष्ठासः अकनिष्ठासः परस्परं ज्येष्ठकनिष्ठभावरहिताः सर्वेऽपि समानबलाः एते मरुतः भ्रातरः सन्तः सौभगाय सुभगत्वाय सम् ववृधुः वर्धन्ते । युवा नित्यतरुणः स्वपाः शोभनकर्मा एषाम् मरुताम् रुद्रः पिता, सुदुघा सुष्ठु दोग्ध्री पृश्निः गौर्देवता मातृभूता मरुद्भ्यः मरुदर्थम् सुदिना शोभनदिनानि, करोत्विति शेषः ॥ ५ ॥

यदुत्तमे मरुतो मध्यमे वा यद् वाऽवमे सुभगासो दिवि ष्ठ ।
अतो नो रुद्रा उत वा न्वस्याग्ने वित्ताद्धविषो यद् यजाम ॥ ६ ॥

---

1 °कन्यया मूको　2 वाह° मूको　3 तदेभ्य वि°, तथा दर्प

यत् । उत्ऽतमे । मरुतः । मध्यमे । वा । यत् । वा । अवमे । सुऽभगासः । दिवि । स्थ ।
अतः । नः । रुद्राः । उत । वा । नु । अस्य । अग्ने । वित्तात् । हविषः । यत् । यजाम ॥ ६ ॥

स्कन्द० ··· ··· ··· ··· ··· ॥ ६ ॥

वेङ्कट० त्रयो लोका भवन्ति । तेषु यत्रेदानीं वर्तध्वे[1] । ततः अस्मात् हे रुद्राः । आगत्य अस्य हविषः[2] क्षिप्रं जानीत । हे अग्ने ! त्वं च वेत्थ हविर्यदा यजाम ॥ ६ ॥

मुद्गल० हे अग्ने ! हे मरुतः ! यूयम् यत् उत्तमे उत्कृष्टे दिवि द्युलोके मध्यमे वा दिवि यत् वा अवमे त्रिवि हे सुभगासः ! स्थ भवथ । 'त्रयो वा इमे त्रिवृतो लोकास्त्रिषो दिवः पृथिवी' इति द्युलोकस्य त्रैविध्यम् । अतः अस्मात् स्थानत्रयात् नः अस्मदर्थं हे रुद्राः !, आगच्छतेति[3] शेषः । उत वा अथवा ■ अग्ने यत् यजाम यत् हविः यक्षिषाम, हे अग्ने[4] ! अस्य हविषः तत् हविः वित्तात् वेत्थ ॥ ६ ॥

अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व उत्तरादधि ष्णुभिः ।
ते मन्दसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ॥ ७ ॥

अग्निः । च । यत् । मरुतः । विश्वऽवेदसः । दिवः । वहध्वे । उत्ऽतरात् । अधि । स्नुऽभिः ।
ते । मन्दसानाः । धुनयः । रिशादसः । वामम् । धत्त । यजमानाय । सुन्वते ॥ ७ ॥

स्कन्द० ··· ··· ··· ··· ··· ॥ ७ ॥

वेङ्कट० अग्निः च यदा हे मरुतः ! यूयं च विश्वधनाः दिवः आगच्छथ सम्[5] उच्छ्रितेभ्यः प्रदेशेभ्यः उच्छ्रितेषु वा देशेषु इति । शिष्टं[6] स्पष्टम् ॥ ७ ॥

मुद्गल० हे विश्ववेदसः ! सर्वज्ञाताः ! मरुतः ! यत् यूयम् अग्निश्च दिवः द्युलोकात् उत्तरात् उत्कृष्टतरात् अधि उपरि स्नुभिः सानुभिरुन्नतप्रदेशैः वहध्वे वहथ, तत्र निवसथेत्यर्थः[1] । ते यूयम् मन्दसानाः मोदमानाः अस्मदीयैः स्तोत्रैर्हविर्भिश्च धुनयः शत्रूणां कम्पयितारः रिशादसः अस्मद्धिंसकानामत्तारः[7] सन्तः वामम् वननीयं धनम् धत्त दत्त यजमानाय सुन्वते अभिषवं कुर्वते ॥ ७ ॥

अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥ ८ ॥

अग्ने । मरुत्ऽभिः । शुभयत्ऽभिः । ऋक्वऽभिः । सोमम् । पिब । मन्दसानः । गणश्रिऽभिः ।
पावकेभिः । विश्वम्ऽइन्वेभिः । आयुऽभिः । वैश्वानर । प्रऽदिवा । केतुना । सऽजूः ॥ ८ ॥

स्कन्द० ··· ··· ··· ··· ··· ॥ ८ ॥

१. वर्तध्वे ख. २. हविषा ख. ३. °च्छतेति° मूको. ४. नास्ति मूको. ५. इत्थं दि°. ६. °स्तोत्र° मूको. ७. °नामत्ता° मूको

वेङ्कट० अग्ने! मरुद्भिः अहानि शोभयद्भिः रसाहरणपरैः[1] सह मोदमानः सोमम् पिब गणश्रिभिः[2] गणभावं ये श्रयन्ते तैः[2] शोधकैः विश्वस्य प्रीणयितृभिर्गन्तृभिः वैश्वानर! प्रत्नेन तेजसा संगतः ॥ ८ ॥

मुद्गल० हे अग्ने! मरुद्भिः सह मन्दसानः सन् सोमम् पिब। कीदृशैर्मरुद्भिः। शुभयद्भिः शोभमानैः ऋक्वभिः स्तुत्यैः गणश्रिभिः गणभावमाश्रयद्भिः पावकेभिः शोधकैः विश्वमिन्वेभिः विश्वं व्याप्य प्रीणयद्भिः आयुभिः आयुष्मद्भिः हे वैश्वानर! अग्ने! प्रदिवा पुराणेन केतुना ज्वालापुञ्जेन सजूः सहितः ॥ ८ ॥

इति चतुर्थाष्टके तृतीयाध्याये पञ्चविंशो वर्गः ॥

## [ ६१ ]

के ष्ठा नरः श्रेष्ठतमा य एकएक आयय । परमस्याः परावतः ॥ १ ॥

के । स्थ । नरः । श्रेष्ठऽतमाः । ये । एकःऽएकः । आऽयय । परमस्याः । पराऽवतः ॥ १ ॥

स्कन्द० अत्र श्यावाश्वाख्यानके[3] बृहद्देवतायां ( बृ. ५.५०-६१ ) च पठितमितिहासमाचक्षते[3]। श्यावाश्वस्य ब्रह्मचारिणः पिता आत्रेयोऽर्चनाना राज्ञो रथवीतेर्दाल्भ्यस्य[4] ऋत्विग् बभूव। स कदाचित् यज्ञार्थं वृतः सपुत्र उपागतः। वितते यज्ञे रथवीतेर्दुहितरं कन्यकां ददर्श[5], तां पुत्रार्थं ययाचे। तं रथवीतिर्भार्यया सह सम्मन्त्र्य प्रत्याचचक्षे—अनृषिर्नो न जामाता। अयं च श्यावाश्वो ब्रह्मचारी, न ऋषिः। इति स प्रत्याख्यातो वृत्ते यज्ञे स्वमाश्रमं जगाम। श्यावाश्वस्तु कन्यायामासक्ताभिलाषः कदाचित् पात्रहस्तो भैक्षं चचार। भैक्षं चरन् राज्ञस्तरन्तस्य शशीयस्या भार्यया गृहं जगाम। तं शशीयसी नामगोत्रे पृष्ट्वा भर्त्रे तरन्ताय दर्शयामास। तेन चानुज्ञाता बहुविधं धनमजाविकं गवाश्वं[6] चास्मै ददौ। तरन्तोऽपि धनादिकं दत्त्वा भ्रातुः पुरुमीळ्हस्य सकाशं प्रेषयामास—गच्छ सौम्य!, सोऽपि ते दास्यतीति। गच्छते चास्मै शशीयसी पन्थानं कथयाञ्चकार। अमुकेनामुकेन च पथा गच्छेति। एतस्मिन्नेव काले हि राजर्षि तरन्तं द्रष्टुं यत्र मरुत आजग्मुः। तांस्तुल्यरूपांस्तुल्यवयस्कांश्च दृष्ट्वा[7] विस्मितः श्यावाश्वः[8] पृच्छति स्म—"के ष्ठा नरः"[9] इति।

के यूयम् स्थ हे नरः! मनुष्याकारा! श्रेष्ठतमाः[10] अतिशयेन प्रशस्याः च, आयय आयाताः स्थ एकएकः, पृथक् एकैकस्येन अश्वैनैरित्यर्थः। परमस्याः परावतः 'परावतः'[12] ( निघ ३,२६ ) इति दूरनाम, परमं यद् दूरं तस्मात्। दूरात् कुतोऽपीत्यर्थः ॥ १ ॥

वेङ्कट० शौनकः—　राजर्षिरभवद्दार्भ्यो　रथवीतिरिति　श्रुतः ।
स　यक्ष्यमाणो　राजात्रिमभिगम्य[11]　प्रसाद्य　च ॥
आत्मानं　कार्यमर्थं　च　ख्यापयन्　प्राञ्जलिः　स्थितः ।
अवृणीतर्षिमात्रेयम्　आर्त्विज्यायार्चनानसम् ॥

---

१. रसाहु° वि°. २. नास्ति मूको. ३. °ख्योपाख्यानम् कु. ४. °र्दाल्भ्ये मूको. ५. °गृ वा वि°. ६. दशदर्शतो मूको. ७. यक्ष्यस्य मूको. ८. भैत्रुह मूको. ९-९. नास्ति मूको. १०. °मा मे मूको. ११. राजर्षिरभि° मूको.

स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
यज्ञे च विततेऽपश्यद् राजपुत्रीं[1] यशस्विनीम् ॥

स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
श्यावाश्वस्य मया राजन्निति याच्यं[2] च सोऽब्रवीत्[2] ॥

प्रत्याचष्टे[3] स तं राजा सह सम्मन्त्र्य[4] भार्यया ।
अनृषिर्नैव[4] जामाता कश्चिद् भवितुमर्हति ॥

प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्तत ।
श्यावाश्वस्य तु कन्याया मनो नैव न्यवर्तत ॥
[5]ततस्तौ तु निवर्तेतामुभावेवाभिजग्मतुः[5] ।

तरन्तपुरुमीळ्हौ तु राजानौ वैददश्वपी[6] ॥

शास्त्रौ तौ चक्रतुः पूजाम् ऋषिभ्यां नृपती स्वयम् ।
ऋषिपुत्रं महिष्यास्य दर्शयामास तं नृपः ॥

तरन्तानुमता चैव प्रादाद् बहुविधं वसु ।
अजाविकं गवाश्वं च श्यावाश्वाय शशीयसी ॥

ददर्श संस्थिताम् पार्श्वे तुल्यरूपान् दृढात्मनः ।
समानवयसश्चैव मरुतो रुक्मवक्षसः ॥

तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ।
श्यावाश्वो विस्मितोऽपश्यत् के ष्ठेति मरुतस्ततः ॥

ततस्तु मरुतो देवान् रुद्रसूनबुध्यत ।
[7]'य ईं वहन्त'[7] इत्याभिः बुद्ध्वा तुष्टाव तांस्तथा ॥

अतिक्रमं हि तं मेने ऋषिर्विपुलमात्मनः ।
यत्र दृष्ट्वैव तुष्टाव '[8]यत्र 'के ष्ठ(ा' इ)ति'[8] पृष्टवान् ॥

स्तुताः 'स्तुत्या तया'[9] प्रीता गच्छन्तः पृश्निमातरः ।
अवमुच्य स्ववक्षोभ्यो रुक्मं तस्मै तदा ददुः ॥

१. यज्ञा च पुत्री बि[1]. २-२. यचोऽब्र" छ लपं. ३. प्रत्याचष्ट मूको. ४. अनृषिर्नोऽत्र मूको. ५-५. तनिम्यात्तुमयेनैव अभिजग्मतुस्तदा बि[1]; ततस्तो तनिम्यातु भावेनैवाभिजग्मतुः छ लपं. ६. वैददश्वी मूको. ७. ऋ ५,६१,११ ८-८. यत्र के ष्ठ तु मूको. ९-९. °स्यानया मूको.

अत्रार्थ्यं पुरावृत्तमाहुरागमपारगाः।
अर्चनानाः पुराऽऽत्रेयो दार्भ्येण रथवीतिना॥

आर्त्विज्याय वृतो यज्ञे वितते हौत्र आस्थितः।
रथवीतिसुतां कन्यां ददर्श पितुरन्तिके॥

ययाचे स्वकुमाराय श्यावाश्वाय च तां नृपम्।
स प्रदानमना भार्यामपृच्छत् किं प्रयच्छसि॥

इति पृष्टा पुनः प्राह कथमस्मै प्रदास्यसि[1]।
इतः पूर्वं सुता यस्मा नासीदनृषये क्वचित्॥

तथैवेति निश्चित्य प्रत्याचष्टार्चनानसम्।
श्यावाश्वः संस्थिते यज्ञे तेन राज्ञा निराकृतः॥

तत्प्रत्याख्यानाभितो विप्रस्तपस्तेपे सुदारुणम्।
ब्रह्मचर्यरतः शान्तो भिक्षार्थं पर्यटन् 'द्विजः॥

तरन्तमहिषीं साध्वीं बिभिक्षेऽसौ शशीयसीम्।
सा संप्राप्यान्तिकं पत्युः प्रोवाचागतवानृषिः'॥

इत्युक्तो नृपतिर्भार्यां प्रत्याहैनं प्रपूजय।
साऽनुज्ञाता गवां यूथं प्रादादाभरणानि च॥

तरन्तोऽपि पुनस्तस्मै प्रादाद्धनमपेक्षितम्।
दत्त्वा च पुरुमीळ्हस्य स्वानुजस्यान्तिकं प्रति॥

प्रेषयामास तमृषिं सोऽपि त्वां मानयिष्यति।
तथेति राज्ञो वचनं निशाम्य तद्भार्यया दर्शितसर्वमार्गः॥

व्रजन् शनैरध्वपथे मरुद्गणान् समानरूपान् स्वदिदृक्षयाऽऽगतान्।
विलोक्य विप्रः सहसा प्रणम्य कृताञ्जलिः स्पष्टविताग्रपादः॥

तुष्टाव विद्वान् मरुतो विशिष्टैर्वचोभिः परितुष्टचित्ताः।
सम्प्राप्य सर्वं स्वमभीप्सितं तदा मरुद्गणेभ्यो मुदितात्मविग्रहः॥

---

१. दास्यथ मूले.

सद्यामवदृषिः सूक्तद्रष्टा [1]श्यावाश्वनामकः ।
पश्चात् पुनर्गृहं गत्वा[1] भूयो लब्ध्वा धनं शतम् ॥

दार्भ्यो मन्त्रदृशे राज्ञा[2] चोदितः स्वसुतां ददौ ।
पुरुमीळ्हस्तरन्तश्च तद्भार्या च शशीयसी ॥

दार्भ्यौ रथवीत्याख्यः सप्त ये मरुतां गणाः ।
ते तस्मै[3] यद् ददुस्तस्मात् 'के ष्ठे(ष्ठा' इ)त्यत्र वर्ण्यते ॥ (बृ. बृदे ५,४९,८०)।

हे[4]नरः! नेतारो मरुतः! श्रेष्ठतमाः अत्यन्तं[5] श्रेष्ठा यूयम् के स्थ [illegible] सथ, ये यूयम् एकएकः प्रत्येकम् आयय आगच्छथ। कस्मात्। परमस्याः परावतः अत्यन्तदूरदेशात्, अन्तरिक्षात् इत्यर्थः । ॥ १ ॥

क्व॑ वोऽश्वाः॒ क्वा३भीश॑वः क॒थं शे॑क क॒था य॑य । पृ॒ष्ठे सदो॑ न॒सोर्यमः॑ ॥ २ ॥

क्व॑ । वः॒ । अश्वाः॑ । क्व॑ । अ॒भीश॑वः । क॒थम् । शे॒क॒ । क॒था । य॒य॒ । पृ॒ष्ठे । सदः॑ । न॒सोः । यमः॑ ॥२॥

स्कन्द० अश्वाकारत्वा पूर्वं दृश्यध्वे। "अतः पृच्छामि" क्व वः युष्माकम् अश्वाः पैरुषगताः । क्व वा अभीशवः अश्वप्रग्रहाः । कथम् चाऽत्यन्तसुकुमारास्सन्तः शेक शक्तवन्तः । शाकेस्सर्वत्र कर्मभूतभावन्तरापेक्षत्वाद् आयातुमिति वाक्यशेषः । कथा[6] कथं [redacted] वा प्रकारेण । यय युद्धेऽप्यत्र यातिस्सोपसर्गार्थे द्रष्टव्यः । 'आगताः । तांस्तु[6] एवं पृच्छन्नेव" पार्श्वतोऽवलोकयन् विदूरे पर्याणिधानश्वान् दृष्ट्वाऽऽह —पृष्ठे सदः इति । सीदन्ति-उपविशन्ति यस्मिन्नश्ववराः तत्सदः पर्याणम्, पल्याणमिति यदपभ्रंशेन लोके प्रसिद्धम् । तत् पृष्ठ एवैषामश्वानाम् । नसोः नासिकापुटयोः अपि[8] यमः यम्तु उपधने, यम्यते बध्यतेऽसाविति यमः कवियम्[9] । अथाऽप्येतेऽश्वाः पर्याणिता एवं कविधिताश्चेत्यर्थः[10] ॥ २ ॥

वेङ्कट० अश्वात्[11] अवरुह्य[12] तेनैव[13] वेषेण प्रादुरभवन्[14] । तत्र पृच्छति —क्व युष्माकम् अश्वाः स्थिताः । क्व च अभीशवः । कथम् गन्तुं शक्नुथ सभारााभ्यां पादाभ्याम् । कथं गच्छथ । पृष्ठे ये सीदन्ति नासिकयोः यच्छन्ति अश्वान् ते यथोक्ताः ॥ २ ॥

मुद्गल० हे मरुतः! वः युष्माकम् अश्वाः क्व कुत्रत्याः । क्व अभीशवः बन्धनरज्जवः । कथम् शेक शीघ्रं गन्तुं शक्ता भवथ । कथा कथम् यय यातारः स्थ । पृष्ठे अश्वानां पृष्ठदेशे सदः पर्याणम्, तथा[15] दृश्यते । तथा नसोः नासिकयोः यमः पलायनप्रतिबन्धकारी । कुत्रापि त्वरितगमना इव यूयम् [16]इति दृश्यते[16] ॥ २ ॥

1. 'कः पुरुमीळ्ह गृहं पश्चात् गत्वा मूको. 2. धाह मूको. 3. ततस्तस्मै मूको. ४-४. अपृच्छाणि मूको. ५. नास्ति मूको. ६-६. आगतास्तु मूको. ७. पृच्छन्निव कु. ८. अपि वि[1]; मरि वि[1]. ९. कविचं वि[2,3] अ; कवयम् कु. १०. कविचिता° वि[2,3] अ; कवचिता° कु. ११. नास्ति ऊ रूपं; यस्मा वि[1]. १२. अवारुह्य वि[1]. १३. तेनैव ऊ रूपं. १४. प्रायः दूरादभवत् मूको. १५. तत्र मूको. १६-१६. नास्ति मूको.

जघने चोदं एषां वि सक्थानि नरो यमुः । पुत्रकृथे न जनयः ॥ ३ ॥

जघने । चोदः । एषाम् । वि । सक्थानि । नरः । यमुः । पुत्रऽकृथे । न । जनयः ॥ ३ ॥

स्कन्द० किञ्च[1] जघने चोदः चोद्यतेऽनेनाश्व इति चोदः, कशा 'तोत्रं वा'[1] । स जघन एषाम् अश्वानाम् । अश्ववारा[2] ह्यश्वादवतरन्तोऽप्रणाशार्थं चोदं कशां तोत्रं वा लम्बयन्ति । तेन सोऽश्वानां जघने भवति । तं दृष्ट्वैवमाह—जघने चोद एषाम् इति । किञ्च सक्थानि स्वानि सक्थानि नरः मनुष्याकाराः वि यमुः वियच्छन्ति । विकटाचूरू[3] कुर्वन्ति इत्यर्थः । अश्वादवतीर्णमात्र-स्याश्ववारस्य विकटाचूरू[4] भवतः । पुत्रकृथे न जनयः । पुत्रः क्रियते येन स पुत्रकृथः सुरतव्यापारः । जनयो जायाः । यथा सुरतव्यापारे जाया विकटाचूरू[5] कुर्वन्ति तद्वत् । सर्वं चेदमचिरागतत्वस्य प्रतिजिगमिषुत्वस्य च प्रतिपादनार्थम् । एते अश्वास्तथा पर्याणिता एव अवतीर्णमात्रत्वाद्विकटा-चूरू कुर्वन्ति । अत एते अचिरागताः प्रतिजिगमिषवश्च लक्ष्यन्ते इत्यर्थः । यतश्चैवमत एतान् ब्रवीमि ॥ ३ ॥

वेङ्कट० जघने अश्वाजनिः एषाम् अवलम्बते । सक्थानि वि यच्छन्ति, यथा पुत्रकरणाय जायाः सक्थिनी वियच्छन्ति ॥ ३ ॥

मुद्गल० एषाम् अश्वानाम् जघने इन्त्यप्रदेशे चोदः प्रेरिका कशा वर्तते[6], तथा सक्थानि ऊरुप्र-देशान् नरः नेतारो मरुतः वि विविच्य यमुः नियच्छन्ति । पुत्रकृथे पुत्रकरणे उत्पादने जनयः न अपत्योत्पादयित्र्यो योषित इव । ता यथा पुत्रोत्पादनकामाः[7] सङ्गमसमये ऊरू विवृतौ[8] कुर्वन्ति तद्वदित्यर्थः ॥ ३ ॥

परा वीरास एतन मर्यासो भद्रजानयः । अग्नितपो यथासथ ॥ ४ ॥

परा । वीरासः । इतन । मर्यासः । भद्रऽजानयः । अग्निऽतपः । यथा । असथ ॥ ४ ॥

स्कन्द० पृष्ट्वा तान् प्रेषयामास 'परा वीरास' इत्यृचा ।
क्रीडितुं सह जायाभिः स्वानि गेहानि गच्छत ॥ इति ।

परा इतन परागच्छत । स्वानि गेहानीत्यर्थः । हे वीरासः ! विक्रान्ताः ! मर्यासः ! मनुष्याकाराः ! भद्रजानयः ! भद्रास्तरुण्यो रूपवत्यश्च जाया येषां ते भद्रजानयः । एते हि तरुणा रूपवन्तश्च अत एषां भार्याभिरपि तरुणीभिरेव रूपवतीभिरेव च[9] भवितव्यम् । एवमवधार्यैषां भद्रजानित्व-मिदमाह—हे भद्रजानय इति । अग्नितपो यथा असथ अग्निना ये तप्यन्ते दह्यन्ते ते अग्नितपः ते यथा तद्वत् शीघ्रम् असथ भवथ । यथा अग्निना दह्यमानास्ततः प्रदेशाच्छीघ्रं गच्छन्ति, एवं शीघ्रं प्रतिगच्छत । गत्वा च भद्राभिस्सह क्रीडतेत्यर्थः ॥ ४ ॥

वेङ्कट० परा गच्छत हे वीराः ! स्वगृहं प्रति मर्याः ! भद्रा जाया[1] येषां ते भद्रजानयः ! । आभरणैः अलंकृता यूयम् यथा भवथ तथा अग्नितप्ता इव वर्णतः ॥ ४ ॥

१. नास्ति कु. २-२. तोत्रो वा मूको. ३. अश्वरा मूको. ४. विकटापुरु मूको. ५-५. विकटाः पुरु मूको. ६. नास्ति मूको. ७. °कामे मूको. ८. विवृते मूको. ९. नास्ति वि°.

मुद्गल० हे वीरासः! वीराः! मर्यासः! मर्त्येभ्यो हिताः! परा एतन परागच्छत हे भद्रजानयः! भद्रः स्तुत्यो जानिर्जन्म येषां ते तथोक्ताः। रुद्रपुत्राः! इत्यर्थः। अग्नितपः अग्निना तप्ताः ताम्राद्यः यथा दीप्ताः तद्वत् प्रदीप्ताः असथ भवथ ॥ ४ ॥

सनत् साश्व्यं पशुमुत गव्यं शतावयम्। श्यावाश्वस्तुताय या दोर्वीरायोपबर्बृहत् ॥५॥

सनत्। सा। अश्व्यम्। पशुम्। उत। गव्यम्। शतऽअवयम्।

श्यावाश्वऽस्तुताय। या। दोः। वीराय। उपऽबर्बृहत् ॥ ५ ॥

स्कन्द० उक्त्वैवं मरुतो याताः[1] पुरुमीळ्हस्य वेश्म ताः।
कथितेन शशीयस्या राजपत्न्या यथा पुरा ॥
तरन्तस्य पुनर्भार्या वैददश्विर्महायशाः।
प्राहास्म पुरुमीळ्होऽस्मै धेनूनां प्रददौ शतम् ॥
तरन्तपुरुमीळ्हौ यद् ददतुर्वैददश्विनौ।
शशीयसी तरन्तस्य महिषी मरुतश्च यत् ॥
रथवीतिश्च यद् दार्भ्यः श्यावाश्वायार्चनानसे।
के ष्ठेत्यस्मिन् सूक्ते श्यावाश्वो निजगाद ह ॥ इति।

तरन्तपुरुमीळ्हौ नाम पती राजानौ विददश्विनः पुत्रौ यत् धनं श्यावाश्वाय दत्तवन्तौ। यच्च शशीयसी नाम तरन्तस्य राज्ञो महिषी। महिषीति प्रथमपत्न्यभिधानम्। '[2]दत्तवती। मरुतश्च यद्दत्तवन्त.[2]'। यच्च रथवीतिर्नाम दर्भपुत्रः श्यावाश्वाय दुहितरं च अर्चनानसे दत्तवान्। 'के ष्ठा नरः' इत्येतस्मिन् सूक्ते तत्सर्वं श्यावाश्वो निगदितवान्। तत्रैवाभिहिताभिर्ऋग्भिः[3] सा शशीयसीदानं निजगाद। सनत्, षणु दाने। दत्तवती। सा अश्व्यम् अश्वसमूहम् पशुम् पशुशब्देनात्र "[4]गवाश्वप्रभृतीनां च भेदेनोपादानादजा[4]" एवोच्यते, न पशुमात्रम्। पुद्धोऽप्ययं समूहवद्वितार्थे द्रष्टव्यः। अजसमूहम्। उत अपि गव्यम् गोसमूहम् शतावयम्, अवयवशतसहितमित्यर्थः। [illegible] सा। उच्यते। श्यावाश्वस्तुताय श्यावाश्वेन स्तुताय या दोः बाहुम् वीराय विक्रान्ताय, उपबर्बृहत् वृहू उद्यमने। उपगच्छति परिरम्भणेनोत्क्षिपति या। तरन्तस्य भार्येत्यर्थः[5] ॥ ५ ॥

वेङ्कट० प्रायच्छत् तरन्तभार्या शशीयसी श्यावाश्वाय अश्वसमूहम् पशुम्, अपि शतावियुक्तं[6] गोसंघं च, श्यावाश्वेन भिक्षमाणेन स्तुताय वीराय तरन्ताय या[7] स्वबाहुमुपबर्हद् दत्तवती, तस्य भार्येत्यर्थः ॥ ५ ॥

मुद्गल० सा तरन्तमहिषी मह्यम् पशुम् सनत् अदात्। किम्? अश्व्यम् अश्वसमूहात्मकम्। उत अपि

---

१. याताः मूको. २-२. नास्ति मूको. ३. 'वैदर्भिस' मूको. ४-४. गवाश्वप्रभृतीनां चाभेदेनोक्तो' मूको. ५. 'र्थः' या च मूको. ६. शतयुक्तम् वि'. ७. नास्ति मूको.

च गव्यम् गोसमूहात्मकम् शतावयम् शतादिभिर्युक्तम् । श्यावाश्वस्तुताय श्यावाश्वेन मया स्तुताय वीराय तरन्ताय या दौः स्वकीयमुस्रम् उपबर्हत् उपोदयच्छत् आलिङ्गनाय ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये षड्विंशो वर्गः ॥

उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी । अदेवत्रादराधसः ॥ ६ ॥

उत । त्वा । स्त्री । शशीयसी । पुंसः । भवति । वस्यसी । अदेवऽत्रात् । अराधसः ॥ ६ ॥

स्कन्द० उत शब्दोऽप्यर्थे पुंसः इत्यनेन सम्बन्धयितव्यः । त्वा षष्ठ्यर्थे द्वितीयैषा । तरन्तस्यार्थं प्रतिनिर्देशः । तरन्तस्य स्त्री । भार्येत्यर्थः । शशीयसी नाम । त्व इति 'त्व विनिमदार्थीय' सर्वनामानुदात्तम् ( ग्र. या १,७ ) एकशब्दपर्यायः । तस्मादयं स्त्रियाम् टाप् । त्वा एका । शशीयस्येव एका स्त्री, नान्या काचिदित्यर्थः । पुंसः उत पुंसोऽपि सकाशात् भवति वस्यसी वसु धनम्, अतिशयेन तद्वती वस्यसी । धनवत्तरा । सर्वस्य हि दानेन धनमाविर्भाव्यते । इयच दानं नास्ति पुंसः, अतः इयं तस्माद्धनवत्तरा । अथवा वसुशब्देनात्र देयं धनमुच्यते । तेन यत्किञ्चित् स्वदानं लक्ष्यते । पुंसोऽपि सकाशात् दातृतरेत्यर्थः । कीदृशात् पुंसः ? उच्यते । अदेवत्रात् देवान्यस्त्रायते स देवत्रः । कः पुनरसौ । यः स्तौति । देवा हि स्तूयमाना वीर्येण वर्धन्ते । अतो यस्तान् स्तौति स वीर्यहानितस्त्रायते, तेन स देवत्रः । न देवत्रः अदेवत्रः । तस्माददेवत्रात् । देवानामस्तोतुरित्यर्थः । अराधसः हविर्लक्षणेन धनेन रहितात् । अयष्टुरित्यर्थः । यो हि न देवान् स्तौति न यजते स निर्धनो भवत्यल्पधनो वा । निर्धनत्वादल्पधनत्वाद्वा अश्रद्दधानत्वाच्च नैव ददाति । यद्यपि ददाति तदप्यल्पम् । तस्मात् शशीयसी धनवत्तरा दातृतरा चेत्यर्थः ॥ ६ ॥

वेङ्कट० अपि खलु एका स्त्री शशीयसी नाम पुंसः अपि भवति प्रशस्या देवानामत्रातुः अधनात् ॥ ६ ॥

मुद्गल० उत अपि च हे तरन्त ! त्वा एका शशीयसी तरन्तमहिषी सैव स्त्री पुंसः पुरुषात् वस्यसी वसीयसी भवति । कस्मात् पुंस इत्युच्यते । अदेवत्रात् देवाः त्रायन्ते स्तुत्यादिना यं स [1]देवत्रः, न देवत्रः[1] अदेवत्रः, तस्मात् अराधसः धनरहितात् पुरुषात् ॥ ६ ॥

वि या जानाति जसुरिं वि तृष्यन्तं वि कामिनम् । देवत्रा कृणुते मनः ॥७॥

वि । या । जानाति । जसुरिम् । वि । तृष्यन्तम् । वि । कामिनम् । देवऽत्रा । कृणुते । मनः ॥७॥

स्कन्द० या च[4] वि जानाति भर्तारम् जसुरिम्[5] जसु [6]ताडने । श्रमताडितम्[6] । श्रान्तमित्यर्थः । वि तृष्यन्तम् तृट् पिपासा, पिपासन्तं च विजानाति । वि कामिनम् कामभोगैषिणं[7] च विजानाति । विज्ञाय च यदा यथा परिचरितव्यः तदा च तथैव परिचरति । श्रान्तं मर्दनादिना विश्रमयति । तृष्यते शीतमुदकं ददाति । संभोगैषिणि भोगमित्यर्थः । या च

1-1. वणिग्निमदर्थीय मूको. 2. देवान्यस्त्रायते मूको. 3-3. नास्ति मूको. 4. सात वि[०]. 5. जघुरिम् मूको. 6-6. जसु अथो वाडितम् मूको. 7. [०]भोगेप्सं मूको.

देवत्रा देवेषु कृणुते कुरुते मनः । नित्यं देवान् पूजयतीत्यर्थः। एवं यच्छब्दश्रुतेः "सनत् सा"[1]( ऋ ५, ६१,५-७ ) इति तिसृणामप्यासामृचामेकवाक्यताभावात् तिसृभिरपि शशीयसीदानं निगद्यते ; आद्ययैवैकया शशीयसीदानं निगद्यते । पराभ्यां तु शशीयसी पुंसोऽपि सकाशाद् वस्यसी भवति या विजानाति भर्तारमित्येवमेकवाक्यताभावात् शशीयसी स्तूयते । तथा च भगवता शौनकेनोक्तम्— "'न धा'[2] स्तूयत एतेषु योष्या च स्त्री शशीयसी' इति । श्यावाश्वाख्यानविदस्तु— 'सनत् साश्व्यम्' इत्येकया शशीयसी स्तूयते । पराभ्यां तरन्त इति मन्यन्ते । एवं हि आहुः—

"ऋषिस्तु वा सनिं लब्ध्वा गवाश्वमविकं मजाः[3]।
श्यावाश्वः परितोषेण तरन्तस्याग्रतः[4] स्थितः ॥
दात्रा दत्तं च यद् येन[5] तत्सर्वं परिकीर्तयन्[6]।
'सनत् साश्व्यं पशुम्' इति दृष्ट्वा[7] 'नान्यस्य कस्यचित्'[8]" ॥

'तत्र 'उत त्वा स्त्री शशीयसी' इति द्वाभ्यां स तरन्तमस्तौषीत्[9] 'सनत् साश्व्यम्' इत्येतया तावत्कर्मणा दानेन शशीयसी स्तूयते इत्याचक्षते । उक्तं हि भगवता शौनकेन—

'स्तुतिर्नाम्ना वान्धवकर्मस्यैः[10]' इति ।

'उत त्वा स्त्री' इत्येताभ्यामपि 'तथैव स्त्री वस्यसी नान्या काचित्' इत्येवं तस्य प्राधान्याख्यपनात्तरन्तः स्तूयते, न शशीयसीति व्याख्येयम् ॥ ७ ॥

वेङ्कट० वि जानाति या क्षमक्षीणं पिपासुं च धनकामुकं च अतिथिम्, सा देवेषु कृणुते मनः ॥ ७ ॥

मुद्गल० या शशीयसी जसुरिम् व्यथितं तम् वि जानाति, तृष्यन्तम् पिपासितम् वि जानाति, कामिनम् धनाद्यभिलाषवन्तम् वि जानाति । अनुकम्पया अभिमतं दत्तवतीत्यर्थः । देवत्रा देवेषु मनः कृणुते कुरुते या, सैव स्त्री इति पूर्वेण सम्बन्धः ॥ ७ ॥

## उत घा नेमो अस्तुतः पुमाँ इति ब्रुवे पणिः । स वैरदेय इत् समः ॥ ८ ॥

उत । घ । नेमः । अस्तुतः । पुमान् । इति । ब्रुवे । पणिः । सः । वैरऽदेये । इत् । समः ॥८॥

स्कन्द० तरन्तस्तुतिद्वारेण तद्दानमनयर्चा निगद्यते । उत-शब्दोऽप्यर्थे तृतीयपादस्थेन स इत्येतेन सम्बन्धयितव्यः । घ इति पदपूरणः । स इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यः नेमः अर्धः । कस्य । स्वजायायाः शशीयस्याः । कुत एतत् । जायापत्योः परस्परार्थत्वात् । यथैव हि 'अर्धो वा एष आत्मनो यज्जाया' इति श्रुतेः, अर्धं शरीरमिति लोकप्रसिद्धेः, पत्युरर्धो जाया[11] ; एवमर्धस्य परस्परापेक्षत्वात्पतिरपि जायाया अर्धमित्युपपन्नम् । अस्तुतः । केन । सामर्थ्यादन्यथोऽन्येन केनचिदस्तुतपूर्व इत्यर्थः । पुमान् तरन्तनामा । सः उत सोऽपि वैरदेये वीरा दानशूरास्तेषां दानम् वीरदेयम् । स्वार्थिकस्तद्धितः । तस्मिन् । इत् इति पदपूरणः । समः सदृशः सर्वे

१-१. सा सनत् मूको. २. नरा मूको ३. मनः कु. ४. तरन्तस्याग्रतः मूको; तरन्तस्याग्रतः कु. ५ यतेन कु. ६. परिकीर्तयन् कु. ७ दृष्ट्वा वि[०] अ; प्रष्टव्य कु ८-८. नास्ति वि[०]. ९-९. शशीयसी द्वाभ्यां तरन्तमस्तौषीत् । उत त्वा स्त्री शशीयसीति । तत्र मूको. १०. बृ. दे ६, ५. ११. जायाः मूको.

पणिः पणतेः स्तुत्यर्थस्येदं रूपम्। स्तोताऽहम्। केन पुनः समः। आत्मा पुरुमीळ्हेन। कुत एतद्। तस्योपमानत्वेनोपादीयमानत्वात्। सदृशस्यैवोपमानत्वात्। यथैव पुरुमीळ्हो धेनुशतं दत्तवान् एवं तरन्तोऽपीत्यर्थः। एवं तरन्तस्तुतिद्वारेण तद्दानं निगद्यते ॥ ८ ॥

वेङ्कट० अपि च खलु अस्याः शशीयस्याः अर्धभूतः पुमान् भर्ता मया अस्तुतः इति तं च स्तौमि स्तोताऽहम्। सः धीरस्य मम दत्ते धने समानः एव शशीयस्याः[1] भवति। समाने साम्यमनयोरिति ॥ ८ ॥

मुद्गल० उत च अपि च नेमः अर्धः जायापत्योर्मिलित्वैककार्यकर्तृत्वादेक एव पदार्थः। शशीयस्या अर्धभूतस्तरन्तः पुमान् अस्तुतः इति ब्रुवे बहुधा स्तुतः अपि गुणस्य अतिबाहुल्यत्वात् अस्तुत इति ब्रुवे पणिः स्तोताऽहम्। सः तरन्तः वैरदेये धीराः दानशीलाः वैर्दातव्यं देयम् तस्मिन् धने समः। सर्वेभ्यो दातेत्यर्थः। इत् पूरणः ॥ ८ ॥

उत मेऽरपद् युवतिर्ममन्दुषी प्रति श्यावाय वर्तनिम्।
वि रोहिता पुरुमीळ्हाय येमतुर्विप्राय दीर्घयशसे ॥ ९ ॥

उत। मे। अरपत्। युवतिः। ममन्दुषी। प्रति। श्यावाय। वर्तनिम्।
वि। रोहिता। पुरुऽमीळ्हाय। येमतुः। विप्राय। दीर्घऽयशसे ॥ ९ ॥

स्कन्द० अनेनार्धर्चेन कर्मणा शशीयसी स्तूयते। उत अपि च मे मह्यम् अरपत् रप लप व्यक्तायां वाचि कथनवेलायां च या व्यक्ता वाक् 'सा रपत्, अनया' वाचा कथितवतीत्यर्थः। युवतिः तरुणी शशीयसी नाम तरन्तस्य भार्या ममन्दुषी प्रति मदिरत्र मोदनार्थः। मदि स्तुतिमोदमदस्वप्नकान्तिगतिष्विति। प्रतिशब्दश्च पुरस्तादपकृष्टव्यः। प्रति ममन्दुषी अत्यर्थं प्रतिमोदमाना। प्रीयमाणेत्यर्थः। श्यावाय उत्तरपदलोपोऽत्र द्रष्टव्यः, भीमसेनो भीम इति यथा। श्यावाश्वाय वर्तनिम् पन्थानं पुरुमीळ्हगृहस्य। एवमनेनार्धर्चेन कर्मणा शशीयसी स्तुता। अपरया अर्धर्चया[2] पुरुमीळ्हस्तुतिद्वारेण तद्दानं निगद्यते। रोहिता रक्तवर्णावश्वौ पुरुमीळ्हाय पुरुमीळ्हस्य राज्ञोऽर्थाय, पुरुमीळ्हं वस्यतः इत्येवमर्थमित्यर्थः। वि येमतुः विविधं धर्षितवन्तौ। कौ। सामर्थ्यात्तदीयावश्वौ। कीदृशाय पुरुमीळ्हाय। उच्यते। विप्राय मेधाविने दीर्घयशसे यो दीर्घयशास्तस्मै ॥ ९ ॥

वेङ्कट० अपि च मह्यम् प्रति अकथयत् युवतिः माद्यन्ती हृष्टा श्यावाश्व एव श्यावाश्वस्य मार्गम्। अथ मां रोहितवर्णावश्वौ दीर्घकीर्तिं मेधाविनं पुरुमीळ्हं च प्रति भक्षणाय गन्तुं(?) तेन मार्गेण वि येमतुः ॥ ९ ॥

मुद्गल० उत अपि च श्यावाय श्यावाश्वाय मे मह्यम् अरपत् अलपत् स्पष्टमाचष्ट। किम्। वर्तनिम् मार्गम्। कीदृशी सा। युवतिः प्रति ममन्दुषी प्रतिमोदमाना। कस्मै। दीर्घयशसे

1. शशीयस्या वि° वाहित ह एवं. 2-2. सामाते नास्ति मूको. 3. अर्धर्चा मूको.

प्रसूताम्नाय पुरुमीळ्हाय एतन्नामकाय मसूतगृहाय विप्राय, पुरुमीळ्हं प्राप्तुमित्यर्थः। तदर्थम् रोहिता रोहितवर्णौ अश्वौ शशीयस्या दत्तौ वि येमतुः धृतवन्तावित्यर्थः ॥ ९ ॥

यो मे॑ धे॒नूनां॑ श॒तं वैद॑दश्वि॒र्यथा॒ दद॑त् । त॒रन्त॑इव मं॒हना॑ ॥ १० ॥

यः । मे॒ । धे॒नूनाम् । श॒तम् । वैद॑त्ऽअश्विः । यथा॑ । दद॑त् । त॒रन्तः॑ऽइव । मं॒हना॑ ॥ १० ॥

स्कन्द० [1]यः। कतमः। उच्यते[1]। यः पुरुमीळ्हः मे मह्यम् धेनूनाम् गवाम् शतम् वैददश्विः यथा। श्यावाश्वाख्यानविदस्तु 'उत घा नेमः' (ऋ ५,६१,८) इत्यादिभिस्तिसृभिः पुरुमीळ्हः स्तूयत इति मन्यन्ते —

शशीयसीं तरन्तं च स्तुत्वा दानमथो मुनिः।
'उत घा नेमः' इत्याभिः[2] पुरुमीळ्हमकीर्तयत् ॥ इति।

तत्र 'उत घा नेमः' इत्यत्र तावत् 'नेमो अस्तुतः पुमान्' इत्येतेन पुरुमीळ्ह उच्यते, न तरन्त इति व्याख्येयम्। नेमत्वं चास्य स्वजायापेक्षं वा यथा व्याख्यातम्, अथवा भ्रात्रपेक्षम्। भ्रातुस्तरन्तस्यार्थे इति। कथं भ्राता भ्रातुरर्थः। उच्यते— 'अङ्गादङ्गात्संभवसि हृदयादधि जायसे। आत्मा वै पुत्रनामासि' (माश १४,९,४,८) इति मन्त्रवर्णात्,

पतिर्जायां[3] प्रविशति गर्भो भूत्वा स मातरम्।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥

तज्जायाजाया भवति यदस्यां जायते पुनः। (ऐब्रा ७,१३) इति च

श्रुतेः पितुः पुत्र आत्मा। तत्रश्च पितापुत्रयोरेकत्वाद् द्वौ भ्रातरावेक आत्मा द्विधा विभक्तः। ततश्चैकात्म्यात् तयोरुभयोः परस्परार्थत्वम्। 'स वैरदेये' इत्यत्रापि स पुरुमीळ्हः सम इति व्याख्येयम्। केन समः। भ्रात्रा तरन्तेन। कुत एतत्। परस्यामृचि 'वैददश्विर्यथा ददत्' इति तरन्तेनास्योपमानदर्शनात्। परे अप्यृचौ यं मेऽदधुः पन्थानम् तेन गताय मह्यम्, यस्मै[4] च रोहिता पुरुमीळ्हाय येमतुः, यश्च धेनूनां शतं ददत्, स तरन्त इव मंहना इति एव यच्छब्दाध्याहारेण[5] एकवाक्यभावसमापाय पुरुमीळ्ह आभ्यां स्तूयत इति व्याख्येये[6] ॥ १० ॥

वेङ्कट० यः मे धेनूनाम् शतम् विददश्वस्य पुत्रः तरन्तः इव प्रायच्छत् तं प्रति गन्तुम्। तदेवाह— तरन्तः इव महत्त्वेन ॥ १० ॥

मुद्गल० इयं पुरुमीळ्हस्तुतिः। वैददश्विः पुरुमीळ्होऽपि यः मे मह्यम् धेनूनाम् शतम् यथा येन प्रकारेण ददत् दत्तवान्। तथा मंहना महनीयानि धनान्यपि ददद् तरन्तः इव। स यथा धेनुशतं बहुविधं धनं च दत्तवान्, तद्वद् वैददश्विः पुरुमीळ्होऽपि ददत्। तं स्तुवे इति शेषः ॥ १० ॥

इति चतुर्थाष्टके तृतीयाध्याये सप्तविंशो वर्गः ॥

---

1-1. या कतमः मूको. 2. °त्यादिभिः मूको. 3. पतिर्जायाम् मूको. 4. तस्मै मूको. 5. यच्छब्दाध्या° मूको. 6. °ख्येयम् मूको.

य ईं वहन्त आशुभिः पिबन्तो मदिरं मधु । अत्र श्रवांसि दधिरे ॥ ११ ॥

ये । ईम् । वहन्ते । आशुऽभिः । पिबन्तः । मदिरम् । मधु । अत्र । श्रवांसि । दधिरे ॥ ११ ॥

स्कन्द० "ततस्तु मरुतो देवान् रुद्रसूनूनबुध्यत[1] ॥

'य ईं वहन्त' इत्याभिर्ऋग्भिर्दृष्ट्वा[2] तुष्टाव तांस्ततः ।
अतिक्रमं हि तानृषिर्मेने विपुलमात्मनः ॥

'यत्र स्थ[3]स्वैव' तुष्टाव यत्र 'के ष्ठ(ष्ठा' इ)ति पृष्टवान् ।" (बृदे ५, ६१-७१) इति[4] चतसृभिराभिः[5] ऋग्भिः[6] प्रत्यक्षानपि सतो मरुतः परोक्षवत् स्तौति । ये मरुतः । ईम् इति पदपूरणः । वहन्ते प्राप्नुवन्ति । आत्मानं गमयन्तीत्यर्थः[7] । आशुभिः शीघ्रैरश्वैः पिबन्तः मदिरम् मदकरम् मधुमाध्वीकादिकं लोके प्रसिद्धं पानद्रव्यम् । अथवा पिबन्त इति छन्दसोऽपि[8] सन्नन्तार्थे द्रष्टव्यः । पिपासन्तः मदिरं मधु सोमलक्षणम् । ये अत्र समस्तायां पृथिव्यां श्रवांसि दधिरे ददति धनानि[9] स्तोतृभ्यस्त ॥ ११ ॥

वेङ्कट० ये गच्छन्ति[9] आशुभिः अश्वैः मदकरम् मधु पिबन्तः, ये अस्यां पृथिव्याम् अन्नानि स्थापयन्ति ॥ ११ ॥

मुद्गल० ये मरुतः ईम् इदानीम् आशुभिः शीघ्रगामिभिरश्वैः वहन्ते उह्यन्ते । किं कुर्वन्तः । मदिरम् मदकरम् मधु सोमरसम् पिबन्तः । ये मरुतः अत्र[9] अस्मिन् देशे श्रवांसि स्तुतिजनितानि यशांसि दधिरे धारयन्ति ॥ ११ ॥

येषां श्रियाधि रोदसी विभ्राजन्ते रथेष्वा । दिवि रुक्मइवोपरि ॥ १२ ॥

येषाम् । श्रिया । अधि । रोदसी इति । विऽभ्राजन्ते । रथेषु । आ । दिवि । रुक्मःऽइव । उपरि ॥

स्कन्द० येषाम् इति प्रथमार्थे षष्ठी । ये च श्रिया अधि रोदसी द्यावापृथिव्योः विभ्राजन्ते विविधं भ्राजन्ते । रथेषु आ अत्राधिकरणस्योपसर्गस्य च श्रुतेर्योग्यक्रियापदाध्याहारः । रथेष्वारूढाः । कथं विभ्राजन्ते । उच्यते । दिवि रुक्मः इव उपरि यथाऽयमुपरि द्युलोके स्थितः आदित्यः तद्वत् । द्वयोर-ध्यनयोर्ऋचोः[10] यच्छब्दश्रुतेस्तेषामिति षष्ठ्यन्ततच्छब्दम् अध्याहृत्योत्तरयैकवाक्यतया योज्या ॥ १२ ॥

वेङ्कट० येषाम् श्रिया अधिष्ठिते द्यावापृथिवी, ये च रथेषु विभ्राजन्ते, दिवि आदित्यः इव । उत्तरया सम्बन्धः ॥ १२ ॥

मुद्गल० येषाम् मरुताम् श्रिया कान्त्या रोदसी द्यावापृथिव्यौ अधि अधिष्ठिते भवत इति शेषः ।

---

१. रुद्रसूनानु° कु. २. इत्यष्टाभिर्ऋ° मूको. ३-३. यद् दृष्ट्वैव न मूको. ४. नास्ति मूको. ५. °राभिः कु. ६. नृभिः मूको. ७. गमयन्तीत्यर्थः मूको. ८. छन्दसापि मूको. ९. ध्नन्ति वि° छपं; घ्नन्ति छ. १०. °नयोर्ऋचोः मूको.

यस्मादेते मरुतः रथेषु विभ्राजन्ते विशेषेण दीप्यन्ते । दृष्टान्तः । उपरि उपरिभूते दिवि द्युलोके रुक्मः रोचमान आदित्यः इव । आ पूरणः ॥ १२ ॥

युवा स मारुतो गणस्त्वेषरथो अनेद्यः । शुभंयावाप्रतिष्कुतः ॥ १३ ॥

युवा । सः । मारुतः । गणः । त्वेषऽरथः । अनेद्यः । शुभम्ऽयावा । अप्रतिऽस्कुतः ॥ १३ ॥

स्कन्द० अत्रापि तच्छब्दश्रुतेः मारुतो गण इत्येतत्सम्बन्धी यच्छब्दोऽध्याहार्यः । तेषां यो मरुतां मरुत्समूहरूपो गणः सः[1] युवा तरुणः त्वेषरथः दीप्तरथश्च । अनेद्यः प्रशस्यनामैतत् ( द्र० निघ ३,८ )। प्रशस्यश्च । शुभंयावा शुभमुदकम् तच्च मेघस्थं प्रति गमनशीलः । अप्रतिष्कुतः स्कुञ् आप्रवणे । अप्रतिगतश्च युद्धे याभियुञ्जानः अप्रत्यभियुक्तपूर्वः केनचिदित्यर्थः ॥ १३ ॥

वेङ्कट० युवा सः मारुतः गणः दीप्तरथः अकुत्स्यः शुभं गच्छन् शत्रुभिः अप्रतिकृतः ॥ १३ ॥

मुद्गल० सः मारुतः गणः युवा नित्यतरुणः त्वेषरथः दीप्तरथः अनेद्यः अनिन्द्यः शुभंयावा शोभनं गन्ता अप्रतिष्कुतः अप्रतिशब्दितः एवं महानुभावो गणो दीप्यत इति ॥ १३ ॥

को वेद नूनमेषां यत्रा मदन्ति धूतयः । ऋतजाता अरेपसः ॥ १४ ॥

कः । वेद । नूनम् । एषाम् । यत्र । मदन्ति । धूतयः । ऋतऽजाताः । अरेपसः ॥ १४ ॥

स्कन्द० कः वेद जानाति । न कश्चिदपीत्यर्थः । नूनम् इति पदपूरणः । एषाम् मरुतां स्थानम्[1] । यत्र[1] मदन्ति[2] मदतिर्दीप्तिकर्माऽप्यत्र, इह तु सामर्थ्यात् गत्यर्थः । गच्छन्ति धूतयः कम्पयितारः शत्रूणां मेघानां वा । ऋतजाताः[1] ऋतमुदकम् तेन दातव्येन निमित्तभूतेन जाताः । वृष्टिप्रदानार्थमेवोत्पन्ना इत्यर्थः । अथवा ऋतशब्देनात्र सर्वगतत्वात् द्यौः रुद्रो वोच्यते, तेन(?) जाता दिवो रुद्रस्य वा पुत्राः[1] अरेपसः अपापाः ॥ १४ ॥

वेङ्कट० कः वेद एषाम् तत् स्थानम्[2] यत्र मदन्ति कम्पयितारो यज्ञार्थं जाताः अपापाः ॥ १४ ॥

मुद्गल० एषाम् मरुतां स्थानम् कः वेद को जानाति । नूनम् इदानीम् यत्र स्थाने धूतयः शत्रूणां कम्पकाः मदन्ति हृष्यन्ति ऋतजाताः यज्ञार्थमुत्पन्नाः अरेपसः अपापाः ॥ १४ ॥

यूयं मर्तं विपन्यवः प्रणेतार इत्था धिया । श्रोतारो यामहूतिषु ॥ १५ ॥

यूयम् । मर्तम् । विपन्यवः । प्रऽनेतारः । इत्था । धिया । श्रोतारः । यामऽहूतिषु ॥ १५ ॥

स्कन्द० चतसृभिः परोक्षवत् स्तुत्वाऽनया प्रत्यक्षवत् स्तौति । यूयम् मर्तम् मनुष्यं हे विपन्यवः ! विपन्युरिति मेधाविनाम ( द्र० निघ ३,१५ ) । मेधाविनः ! । प्रणेतारः तच्छील्ये चायं तृन् द्रष्टव्यः । मनुष्यप्रणयनशीलाः । स्वभावेनैव मनुष्यान् नयथेत्यर्थः । इत्था अमुत्र स्वर्गलोके धिया कर्मणा यागाख्येन । यो यागं करोति तमित्यर्थः । अथवा 'इत्था' (निघ ३,१०) इति सत्यनाम । धीरपि प्रज्ञा । सत्यया स्वया प्रज्ञया । श्रोतारः च यामहूतिषु यान्ति देवा यस्मिन्

१. नास्ति मूको. २. सत्या° वि°.

स यामो यज्ञः । हूतयः आह्वानानि । द्वितीयार्थे सप्तमी । यज्ञाह्वानानि । तद्गमनप्रदानं[1] परयर्चा निगद्यते ॥ १५ ॥

वेङ्कट० यूयम् मनुष्यं[2] हे मेधाविनः! प्रणयथ सत्यमेव कर्मणा, श्रोतारः च, [3]याम आगमनम्[3], आगमनार्थेषु तस्याह्वानेषु ॥ १५ ॥

मुद्गल० हे विपन्यवः! स्तुतिकामा मरुतः! यूयम् मर्तम् यजमानम् इत्था अनया धिया इदानीं कृतप्रकारयाऽनुग्रहबुद्ध्या प्रणेतारः प्रकर्षेण प्रापयितारोऽभिमतम् । यामहूतिषु यज्ञेषु श्रोतारः आह्वानानाम् ॥ १५ ॥

इति चतुर्थाष्टके तृतीयाध्याये अष्टाविंशो वर्गः ॥

ते नो वसूनि काम्या पुरुश्चन्द्रा रिशादसः । आ यज्ञियासो ववृत्तन ॥ १६ ॥

ते । नः । वसूनि । काम्या । पुरुऽचन्द्राः । रिशादसः । आ । यज्ञियासः । ववृत्तन ॥ १६ ॥

स्कन्द० ते इति तच्छब्दश्रुतेः प्रकृतसामर्थ्यं सम्बन्धः । पुरुश्चन्द्रा इति च नाऽऽमन्त्रितम् । अतो यच्छब्द-मध्याहृत्यैकवाक्यत्वं[4] नेयम् । ये यूयम् पुरुश्चन्द्राः चन्द्र[5] चन्दते: कान्तिकर्मणः । बहुकान्ताः । ते नः अस्मान् प्रति वसूनि धनानि स्पृहणीयानि काम्या कान्यानि अत्यन्तोत्कृष्टानि हे रिशादसः! हिंसितॄणां[6] क्षेप्तारः! यज्ञियासः! यज्ञियाः! यज्ञार्हाः! आ ववृत्तन अत्यर्थमावर्तयत । अस्मभ्यं दत्तेत्यर्थः । एवमनयोः पाक्यमात्रावश्यं आदि स्वस्मवार्तं विभाव्यते । [7]अथ वा[7] आ ववृत्तनेत्ययं लोट् भूतकालेऽपि ज्ञायते । ततो भूतम् ॥ १६ ॥

वेङ्कट० ते अस्मभ्यम् वसूनि कमनीयानि बहूनां ह्लादयितारः रिशतामसितारः । आ वर्तयत[8] हे यज्ञियाः! ॥ १६ ॥

मुद्गल० हे रिशादसः! हिंसकानां शत्रूणाम् अत्तारः! हे यज्ञियासः! यज्ञार्हाः! पुरुश्चन्द्राः प्रभूताह्लादकधनाः त यूयम् नः अस्मभ्यम् वसूनि धनानि काम्या स्पृहणीयानि आ ववृत्तन आवर्तयत ॥ १६ ॥

एतं मे स्तोममूर्म्ये दार्भ्याय परा वह । गिरो देवि रथीरिव ॥ १७ ॥

एतम् । मे । स्तोमम् । ऊर्म्ये । दार्भ्याय । परा । वह । गिरः । देवि । रथीःऽइव ॥ १७ ॥

स्कन्द० 'महत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः ।
प्रादुर्भूतार्षमात्मानं ज्ञात्वाऽनिकुलनन्दनः ॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा ।
[9]स सद्य ऋषिरात्मानं[9] प्रवक्ष्यन् रथवीतये ॥
एत मे स्तोममित्याभ्यां दौत्ये रात्रीं न्ययोजयत्[10] ।' (बृदे ५,७२-७४)

1. तद्ग्रुपमादानं वि॰; तद्रूपमादानं वि॰ अ. 2. मनुष्याः वि॰; °ष्या अप. 3-3. तस्यागमनम् मूको. 4. 'क्यतां मूको. 5 चन्द्र मूको. 6. हिंसिता मूको. 7-7. अथ च मूको. 8-8. आवर्तत मूको. 9-9 स सद्य ऋषिमात्मानम् मूको. 10. न्ययोजयत् मूको.

योऽयं शशीयस्याः[1] वरन्तस्य पुरुमीळ्हस्य मरुतां च कृतः, एतम् मे स्तोमम् हे ऊर्म्ये। रात्रि! दार्भ्याय दर्भपुत्राय रथवीतये। परा वह पराक्[2] गत्वा आचक्ष्व, येन मामृषिं ज्ञात्वा दुहितरं ददातीत्यर्थः। गिरः सन्देशलक्षणाश्च वाचः हे देवि! रथीरिव[3] यथा कश्चिद्रथी भूभृतो[4] राजन्यस्य वा कस्यचित् सन्देशं शीघ्रं प्रापयेत्[5] तद्वदित्यर्थः ॥ १७ ॥

वेङ्कट० एतम् मे स्तोमम् हे रात्रि! दार्भ्याय राज्ञे रथवीतये अवगमय[6] गिरः च इमा दुहितृयाचनविषयाः, रथवान् इव शीघ्रम् ॥ १७ ॥

मुद्गल० हे ऊर्म्ये! रात्रि देवि! मे मदीयम् एतम् स्तोमम् अस्मयः कृतं स्तोत्रमहं मन्त्रदृक् भूत्वा मरुतः स्तुतवानित्येवम् ख्यापनाय परा पराङ्मुखी दार्भ्याय दार्भ्याभिमुखी सती वह प्रापय। हे रात्रि! देवि! गिरः स्तुतीर्मत्स्तुतिविषयाः परा वह, रथीः इव रथी यथा रथेऽभिप्रेतम् वस्तु स्थापयित्वाऽभिमतदेशं प्रापयति तद्वत् ॥ १७ ॥

उत मे वोचतादिति सुतसोमे रथवीतौ । न कामो अप वेति मे ॥ १८ ॥

उत । मे । वोचतात् । इति । सुतऽसोमे । रथऽवीतौ । न । कामः । अप । वेति । मे ॥ १८ ॥

स्कन्द० उत अपि च। "मे इति" षष्ठीश्रुतेर्वचनेनेति शेषः[7]। मे मम "वचनेन वोचतात् इति"। स्तोमकरणाद् अहम् ऋषिर्जातः त्वद्दुहितरं च तथैव प्रार्थये इति ज्ञात्वा मे देहीत्येतद् ब्रूया इत्यर्थः।

'ऋषेर्नियोगमाज्ञाय देव्या रात्र्या प्रचोदितः।
आदाय कन्यकां दातुमुपेयायार्चनानसम् ॥
पादौ तस्योपसंगृह्य स्थित्वा प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम शशंस च[8] ॥
मया संगतिमिच्छन्त्या[9][10] त्वा प्रत्याख्यापि यत् पुरा।
तत् क्षमस्व नमस्तेऽस्तु मे मा स्म भगवन्! क्रुधः[11] ॥
ऋषेः पुत्रः स्वयमृषिः पिताऽसि भगवन्नृषेः।
इत्त[12] प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत् ॥
तस्मै दत्त्वाश्वशतं स राजा, अलङ्कृत्वा चापि सुतां स्नुषार्थम्।
विवाहकाले तु ददौ नरेशः, श्वेतं ह्यमानां दुहितुः स भर्त्रे ॥
गवां सहस्रं वसु च प्रभूतं, तपस्तु तप्तोऽन्तेऽथ वनं जगाम।' (बृ. दे ५,७५-७९) ॥

तदेतद् दानकथनद्वारेण परस्तात् निगद्यते ॥ १८ ॥

वेङ्कट० अपि च मे ब्रूहि इत्यम् सुतसोमे रथवीतौ न कामः तव दुहितृविषयो मम अपगच्छतीति ॥ १८ ॥

मुद्गल० हे ऊर्म्ये! रात्रि देवि! उत अपि च मे माम् वोचतात् ब्रूहि। किम्। इति इत्थम्। कथमिति। सुतसोमे कृतसोमयागे रथवीतौ राज्ञि[13] मे कामः तत्पुत्रीविषयः न अप वेति नापगच्छति। इत्थं वोचतात् ॥ १८ ॥

---

1. शशीयस्याः मूको. 2. पराक् मूको. 3. रथवीतिरिव मूको. 4. भूतो मूको. 5. प्रापयेत् मूको.
6. अवग° वि° अर्थ. 7-8. नास्ति मूको. 8. नास्ति मूको. 9. सत मूको. 10. संयोगमि° मूको.
11. क्रुधः मूको. 12. °त्त: मूको. 13. राज्ञे मूको.

एष क्षे॑ति॒ रथ॑वीतिर्म॒घवा॒ गोम॑ती॒रनु॑ । पर्व॑ते॒ष्वप॑श्रितः ॥ १९ ॥

एषः । क्षे॒ति॒ । रथ॑ऽवीतिः । म॒घऽवा॑ । गोऽम॑तीः । अनु॑ । पर्व॑तेषु । अप॑ऽश्रितः ॥ १९ ॥

स्कन्द० "कन्यां दत्त्वा कृतार्थं तं श्यावाश्वोऽथ वनं गतम् ।
रथवीतिमपश्यन्तीं रंभेद्यार्षेण चक्षुषा ॥
रम्ये हिमवतः पृष्ठे 'एष क्षेती(ति' इ)ति सोऽब्रवीत्[२] ।' ( बृदे ५,७४:७५ )

एषः क्षेति निवसति रथवीतिः मघवा 'मघम्' ( निघ २, १० ) इति धननाम । देये चात्र धने वर्तते नान्यस्मिन् । तेन च स्वसम्बन्धिदानं लक्ष्यते । धनदानवान् । अश्वशतादेः पूर्वोक्तस्य धनस्य दातेत्यर्थः । गोमतीः अनु गोशब्द उदकवचनः । 'यस्य गा अन्तरश्मनः' ( ऋ ६,४३,३ ) इति यथा । उदकवतीर्नदीः प्रति । पर्वतेषु हिमवच्छिखरभूतेषु अपश्रितः । एवम् अनयर्चा रथवीतिधनकथनद्वारेण तद्दत्तं निगदितमस्ति । "रथवीतिदत्त यद् दार्भ्यः श्यावाश्वायार्थनानसे । के ष्ठे ( ष्ठा इ )त्यत्र स्म तत् सूक्ते श्यावाश्वो निजगाद ह ॥' इति[३] शौनकस्य वचनमन्वेष्यार्थम् । न ह्यस्मिन् सूक्तेऽन्यया कयाचिदृचा रथवीतिदानं निगदितम् ॥ १९ ॥

वेङ्कट० एषः निवसति रथवीतिः धनवान् गोमतीः नदीः लक्षीकृत्य गोमत्याः समीपेऽपि तस्यावासः[४] । तत्र च तपोऽर्थम् पर्वतेषु अपश्रितः । तं गत्वा मदीयं वचनं ब्रूहीति ॥ १९ ॥

मुद्गल० एषः रथवीतिः मघवा धनवान् गोमतीः अनु उदकवतीर्नदीः[५] अनुसृत्य नदीनां तीरे क्षेति निवसति पर्वतेषु पर्वतप्रान्तेषु अपश्रितः आश्रितः ॥ १९ ॥

इति चतुर्थाष्टके तृतीयाध्याये एकोनत्रिंशो वर्गः ॥

[ ६२ ]

ऋ॒तेन॑ ऋ॒तमपि॑हितं ध्रु॒वं वां॒ सूर्य॑स्य॒ यत्र॑ विमु॒चन्त्यश्वा॑न् ।
दश॑ श॒ता स॒ह त॑स्थु॒स्तदेकं॑ दे॒वानां॒ श्रेष्ठं॒ वपु॑षामपश्यम् ॥ १ ॥

ऋ॒तेन॑ । ऋ॒तम् । अपि॑ऽहितम् । ध्रु॒वम् । वा॒म् । सूर्य॑स्य । यत्र॑ । वि॒ऽमु॒चन्ति॑ । अश्वा॑न् ।
दश॑ । श॒ता । स॒ह । त॒स्थुः॒ । तत् । एक॑म् । दे॒वाना॑म् । श्रेष्ठ॑म् । वपु॑षाम् । अ॒प॒श्य॒म् ॥१॥

वेङ्कट० श्रुतवित् । हे मित्रावरुणौ । उदकेन युवयोः स्थानम् अपिहितम् उदकमध्ये वर्तते इत्यर्थः । सूर्यस्य यत्र अश्वान् पश्चिमायां दिशि देवाः विमुञ्चन्ति [६]सारथयो वा[६], तत्र च तत् स्थानम् अभवदिति । तत् च एकम् स्थानम् दश शतानि देवानाम् सह अधितिष्ठन्ति, तेषां देवानां यस्मिन् —ाने वसतानाम् श्रेष्ठम् तत् स्थानं पश्यामि ॥ १ ॥

[१] 'ऋतेन ऋतम्' इति नवर्चं षष्ठं सूक्तम् । आत्रेयः श्रुतवित् ऋषिः । त्रिष्टुप् छन्दः । मित्रावरुणौ देवता ॥

---

१-१. कन्यकां दत्त्वा कृतार्थं वनं गतं रथवीतिं तपस्यन्तं रंभेद्याचक्षुणः स्वचक्षुषा । रम्ये हिमवतः [illegible] एष क्षेति सोऽब्रवीत् मूको. २-२. नास्ति मूको. ३. तस्य वासः वि[?] रूपं. ४. °तीरनु मूको. ५-५. सारथयो वा इ.

सूर्यस्य ऋतम् सत्यभूतं मण्डलम् ऋतेन उदकेन अपिहितम् आच्छादितम् ध्रुवम् शाश्वतम् अपश्यमिति सम्बन्धः। यत्र वाम् युवाभ्यां [1]स्थितं वदित्यर्थः[2]। यत्र यस्मिन् मण्डले स्थितान् अश्वान् विमुचन्ति विमोचयन्ति स्तोतारः। मन्देहादिभिर्निरुद्धानित्यर्थः। यस्मिन् च मण्डले दश शता शतानि[3] सहस्रसङ्ख्याका रश्मयः सह तस्थुः तिष्ठन्ति, देवानाम् वपुषाम् च युष्माकं तेजोवताम् अग्न्यादीनाम् श्रेष्ठम् एकम् मुख्य प्रशस्यम् तत् मण्डलम् अपश्यम् ॥ १ ॥

तत् सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे ।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥ २ ॥

तत् । सु । वाम् । मित्रावरुणा । महिऽत्वम् । ईर्मा । तस्थुषीः । अहऽभिः । दुदुह्रे ।
विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु । वाम् । एकः । पविः । आ । ववर्त ॥ २ ॥

वेङ्कट० तत् सुष्ठु वाम् दोग्धि हे मित्रावरुणौ! महत्त्वम् आदित्यः तत्र स्थिताः अपः अहभिः। आदित्यः मैत्रावरुणं तेजो दोग्धीति। विश्वाः पिन्वथः च युवामादित्यस्य अपः। तौ वाम् आदित्यस्य एकः रश्मिः अनु आ वर्तते ॥ २ ॥

मुद्गल० हे मित्रावरुणा! मित्रावरुणौ! वाम् युवयोः तत् महित्वम् सु सुष्ठु। किं तत्[1]। ईर्मा सततगन्ता आदित्यः अहभिः अहोभिः तस्थुषीः स्थावरभूताः अपः दुदुह्रे दुग्धे। किञ्च स्वसरस्य स्वयं सर्तुरादित्यस्य विश्वाः सर्वाः धेनाः लोकानां प्रीणयित्रीर्मुखीः पिन्वथः वर्धयथः। वाम् युवयोः एकः अप्रतियोगी पविः रथः अनु आ ववर्त अनुक्रमेण परिभ्रमति ॥ २ ॥

अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।
वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥ ३ ॥

अधारयतम् । पृथिवीम् । उत । द्याम् । मित्रऽराजाना । वरुणा । महःऽभिः ।
वर्धयतम् । ओषधीः । पिन्वतम् । गाः । अव । वृष्टिम् । सृजतम् । जीरदानू इति जीरऽदानू ॥

वेङ्कट० अधारयतम् पृथिवीम् अपि च द्याम् हे मित्रावरुणौ! राजानौ! हविर्भिः। वर्धयतम् ओषधीः। पशूंश्चापि पिन्वतम्। वृष्टिम् च अव सृजतम् हे क्षिप्रदानौ! ॥ ३ ॥

मुद्गल० हे मित्रराजाना! मित्रराजानौ!। मित्रभूताः स्तोतारो राजान ईश्वरा याभ्यां भवन्ति तौ हे वरुणा! मित्रावरुणौ! महोभिः तेजोभिः स्वसामर्थ्यैः पृथिवीम् उत अपि च द्याम् अधारयतम्। हे देवौ! युवाम् ओषधीः वर्धयतम्। गाः पिन्वतम् गवाश्वादीन् वर्धयतम्। तदर्थम् वृष्टिम् अव सृजतम् अधस्ताद्भुवं प्रेरयतं हे जीरदानू! क्षिप्रदानौ! ॥ ३ ॥

आ वामश्वासः सुयुजो वहन्तु यतरश्मय उप यन्त्वर्वाक् ।
घृतस्य निर्णिगनु वर्तते वामुप सिन्धवः प्रदिवि क्षरन्ति ॥ ४ ॥

1. स्थितिरित्यर्थः मूको. 2. नास्ति मूको.

आ । वाम् । अश्वासः । सुऽयुजः । वहन्तु । यतऽरश्मयः । उप । यन्तु । अर्वाक् ।
घृतस्य । निःऽनिक् । अनु । वर्तते । वाम् । उप । सिन्धवः । प्रऽदिवि । क्षरन्ति ॥ ४ ॥

वेङ्कट० आ वहन्तु वाम् अश्वाः सुयुजः, नियतप्रग्रहाः उप गच्छन्तु अभिमुखम् । घृतस्य रूपम् वाम् अनु वर्तते [1]परिवृतौ युवामुदकेन[1] । सिन्धवः[2] उप क्षरन्ति युवयोः सकाशात् प्रदीप्ते अन्तरिक्षे ॥ ४ ॥

मुद्गल० हे मित्रावरुणौ ! वाम् युवाम् अश्वासः अश्वाः सुयुजः सुष्ठु रथेषु युक्ताः सन्तः आ वहन्तु, यतरश्मयः सारथिनियतप्रग्रहास्ते अर्वाक् उप यन्तु । घृतस्य उदकस्य निर्णिक् रूपम् वाम् अनु वर्तते अनुगच्छति । किञ्च प्रदिवि पुराणाः सिन्धवः नद्यः उप क्षरन्ति उपगच्छन्ति युवयो-रनुग्रहात् ॥ ४ ॥

अनु श्रुताममतिं वर्धदुर्वीं बर्हिरिव यजुषा रक्षमाणा ।
नमस्वन्ता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वन्तः ॥ ५ ॥

अनु । श्रुताम् । अमतिम् । वर्धत् । उर्वीम् । बर्हिःऽइव । यजुषा । रक्षमाणा ।
नमस्वन्ता । धृतऽदक्षा । अधि । गर्ते । मित्र । आसाथे इति । वरुण । इळासु । अन्तरिति ॥५॥

वेङ्कट० [3]हे मित्रावरुणौ ![3] विश्रुतं भवतोः रूपम् वर्धेत विस्तृतम् बर्हिः इव यजुषा [4]अस्मदुप-रक्षमाणौ[4] हविष्मन्तौ हे बलवन्तौ ! रथस्योपरि अनु आसाथे पृथिवीषु अन्तः देवयजनेषु ॥ ५ ॥

मुद्गल० श्रुताम् विश्रुताम् अमतिम् शरीरदीप्तिम् अनु वर्धत् अनुवर्धयन्तौ । बर्हिः यज्ञः । तत् इव यथा यजुषा मन्त्रेण[5] रक्ष्यते । तद्वत् उर्वीम् भूमिम् रक्षमाणा पालयन्तौ नमस्वन्ता अन्नवन्तौ हे धृतदक्षा ! धारयन्तौ ![6] मित्र ! वरुण ! मित्रावरुणौ ! युवाम् उक्तलक्षणौ सन्तौ इळासु यागभूमिषु अन्तः मध्ये गर्ते अधि रथे आसाथे उपविशथः[7] ॥ ५ ॥

इति चतुर्थाष्टके तृतीयाध्याये त्रिंशो वर्गः ॥

अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वन्तः ।
राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥ ६ ॥

अक्रविऽहस्ता । सुऽकृते । परःऽपा । यम् । त्रासाथे इति । वरुणा । इळासु । अन्तरिति ।
राजाना । क्षत्रम् । अहृणीयमाना । सहस्रऽस्थूणम् । बिभृथः । सह । द्वौ ॥ ६ ॥

वेङ्कट० क्रविर्हिंसाकर्मा । अहिंसितहस्तौ यजमानाय अत्यन्तं रक्षन्तौ हे मित्रावरुणौ ! यम् रक्षथः देवयजनेषु, तस्मै यजमानाय राजानौ धनम् अक्रुध्यन्तौ प्रयच्छथः, तौ युवाम् सहस्रस्थूणम् रथं च सह धारयथः ॥ ६ ॥

---

1-1. परिवृतेनाच्छद° ऋ; °वृते नौवासु° वि[1] लर्ग. 2. नास्ति मूको. 3-3. नास्ति मूको. 4-4. °युंभयो रक्ष° वि[1] लर्ग; °उंसौ रक्ष° ऋ. 5. °ण रक्ष्यमाणा मूको. 6. आयच्छन्तौ मूको. 7. °विशथः मूको.

मुद्गल० अकविहस्ता अकृपणहस्तौ। दक्षौ। सुकृते शोभनस्तुतिकर्त्रे। परस्पा परस्तात् पातारौ। हे वरुण[1]! मित्रावरुणौ! युवाम्[2] यम् यजमानम् इळासु यागभूमिषु अन्तः मध्ये त्रासाथे रक्षथः, तस्मै सुकृते अकविहस्ता परस्पा भवथ इति सम्बन्धः। किञ्च युवाम् राजाना राजमानौ अहृणीयमाना अक्रुध्यन्तौ द्वौ परस्परम् सह[3] साहित्येन क्षत्रम् धनम् सहस्रस्थूणम् अनेकस्तम्भोपेतं सौधादिरूपं गृहं च बिभृथः धारयथः सुकृते यजमानाय ॥ ६ ॥

हिर॑ण्यनिर्णिगयो॑ अस्य॒ स्थूणा॒ वि भ्रा॑जते दि॒व्य१॒॑श्वाज॑नीव ।
भ॒द्रे क्षेत्रे॒ निमि॑ता॒ तिल्वि॑ले वा स॒नेम॒ मध्वो॒ अधि॑गर्त्यस्य ॥ ७ ॥

हिर॑ण्यऽनिर्निक् । अयः॑ । अ॒स्य॒ । स्थूणा॑ । वि । भ्रा॒ज॒ते॒ । दि॒वि । अ॒श्वाज॑नीऽइव ।
भ॒द्रे । क्षेत्रे॑ । निऽमि॑ता । तिल्वि॑ले । वा॒ । स॒नेम॑ । मध्वः॑ । अधि॑ऽगर्त्यस्य ॥ ७ ॥

वेङ्कट० हिरण्यरूपा अयोमयी च अस्य रथस्य स्थूणा, वि भ्राजते च सा अन्तरिक्षे अश्वाजनी इव अवकशयमाना भद्रे सुकल्याणे उद्धृताले प्रशस्तस्ये 'उभे क्षेत्रे'[4] वाशब्दः उपमार्थीयः, तिलविगं-तिकर्मा, अन्नमिव भजेम उदयम् रथे स्थितम् ॥ ७ ॥

मुद्गल० युवयोः रथः हिरण्यनिर्णिक् हिरण्यरूपः। अस्य रथस्य स्थूणा कीलकादयः अयः सुवर्णविकाराः। तादृशो रथः दिवि अन्तरिक्षे वि भ्राजते। किमिव। अश्वाजनी इव अश्वाः व्यापनशीलाः मेघाः, 'तान् अजति'[4] गच्छति इति अश्वाजनी विद्युत्। किञ्च भद्रे कल्याणे क्षेत्रे देवयजने तिल्विले घृतसोमादिना स्निग्धे निमिता स्थूणा यूपयष्टिरवस्थितः। मध्वः मधुपूर्णं गर्त्यम् गर्तं रथम् सनेम संभजेम। वा अपि पूरणो ॥ ७ ॥

हिर॑ण्यरूपमु॒षसो॒ व्यु॑ष्टा॒वयः॑स्थूण॒मुदि॑ता॒ सूर्य॑स्य ।
आ रो॑हथो वरुण मित्र॒ गर्त॒मत॑श्चक्षाथे॒ अदि॑तिं॒ दिति॑ं च ॥ ८ ॥

हिर॑ण्यऽरूपम् । उ॒षसः॑ । विऽउ॑ष्टौ । अयः॑ऽस्थूणम् । उत्ऽइ॑ता । सूर्य॑स्य ।
आ । रो॒ह॒थः॒ । व॒रु॒ण॒ । मि॒त्र॒ । गर्त॑म् । अतः॑ । च॒क्षा॒थे॒ इति॑ । अदि॑तिम् । दिति॑म् । च॒ ॥ ८ ॥

वेङ्कट० हिरण्यरूपम् उषसि व्युष्टायाम् अयःस्थूणम् सूर्ये उदिते, प्रातरित्यर्थः, हे मित्रावरुणौ! रथम् आ रोहथः, 'अस्माद् रथात्'[5] पश्यथः अदीनं दीनम् च जनम् ॥ ८ ॥

मुद्गल० उषसो व्युष्टौ प्रातःकाले सूर्यस्य उदिता उदये, स एव कालः प्रकारान्तरेणोक्तः। तस्मिन् काले हिरण्यरूपम् अयःस्थूणम् अयोमयशङ्कुम् गर्तम् रथं हे वरुण! हे मित्र! युवाम् आ रोहथः धर्तुं प्राप्तुम्। अतः अस्माद्धेतोः अदितिम् भूमिम् दितिम् खण्डितां प्रजादिकाम् च चक्षाथे पश्यथः ॥ ८ ॥

---

१. नास्ति मूको. २. सा मूको. ३-३. नास्ति मूको. ४-४. तान् व्याप्ति मूको. ५-५. अस्मा-द्रथा वि°.

यद् वंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ।
तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्याम ॥ ९ ॥

यत् । वंहिष्ठम् । न । अतिऽविधे । सुदानू इति सुऽदानू । अच्छिद्रम् । शर्म । भुवनस्य । गोपा ।
तेन । नः । मित्रावरुणौ । अविष्टम् । सिषासन्तः । जिगीवांसः । स्याम ॥ ९ ॥

वेङ्कट० यत् अतिशयेन बहुलं विस्तृतम्, न च शत्रूणाम् अतिविधातुं शक्यं भवति हे शोभनदानौ! अच्छिद्रम् गृहम्, हे भुवनस्य गोपायितारौ! तेन अस्मान्[1] हे मित्रावरुणौ! रक्षतम्। शत्रून् सम्भक्तुमिच्छन्तो वयं तेषां जेतारः स्याम ॥ ९ ॥

इत्थं व्याख्यत् सप्तविंशमध्यायं माधवाह्वयः ।
जगतामेकवीरस्य विषये निवसन् सुखम् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके तृतीयोऽध्यायः ॥

मुद्गल० हे सुदानू! शोभनदानौ! हे भुवनस्य गोपा! गोपौ! युवाम् वंहिष्ठम् बहुतमम् यत् अच्छिद्रम् अनवच्छिन्नम् शर्म सुखम् न अतिविधे अतिवेद्धुमशक्यम्, ईदृशं शर्म धारयथः। तेन शर्मणा नः अस्मान् अविष्टम् रक्षतम्। हे मित्रावरुणौ! सिषासन्तः धनानि सम्भक्तुम् इच्छन्तो वयम् जिगीवांसः शत्रूणां धनानि जेतुमिच्छन्तः स्याम भवेम ॥ ९ ॥

इति चतुर्थाष्टके तृतीयाध्याये एकत्रिंशो वर्गः ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके तृतीयोऽध्यायः ॥



1. अस्मान् ल; अस्मात् वि' मूको.

अथ चतुर्थोऽध्यायः

वेङ्कट०

'ऋतस्य गोपाव (पौ' अ) ध्यायं व्याचिख्यासति माधवः ।
पूरणत्वापूरणत्वे वाक्यमत्र प्रदर्शयन् ॥ १ ॥

यथान्तरेषु वाक्येषु बहुध्वावर्तते क्रिया ।
'अश्याम तं काममग्ने'[१] इत्यादावत्र निदर्शनम् ॥ २ ॥

'येनाव तुर्वशं यदुं येन कण्वं धनस्पृतम्'[२] ।
एवंविधेऽनुषङ्गेण वाक्यार्थस्य प्रदर्शनम् ॥ ३ ॥

अनुषङ्गाय येनेति पुनरावर्तते पदम् ।
अतो न तादृशोऽप्यस्ति पूरणत्वमिति स्थितिः ॥ ४ ॥

'नहि ते क्षत्रं न सहः'[३] 'न जातो न जनिष्यते'[४] ।
पृथक् 'अन्नाह मासाः'[५] च तादृशाश्च न पूरणाः ॥ ५ ॥

'भवन्तु नः सुत्रात्रासः सुगोपाः'[६] इति दृश्यते ।
त्राणगोपनयोर्भेदात् न गोपा इति पूरणः[७] ॥ ६ ॥

'समानो वां जनिते(ता'[८] इ)ति यतश्च[९] 'भ्रातरा युवम्'[८] ।
इत्यर्थो भ्रातरेत्येतत्तस्माच्च न पूरणम् ॥ ७ ॥

सूर्याश्वानामियं संज्ञा या 'भद्रा अश्वा हरितः'[१०] ।
हरिनामधेया अश्वा अस्येत्यर्थं[११] प्रदर्शयेत् ॥ ८ ॥

एवंविधेषु नैकस्य शाखा इच्छन्ति निर्वचः ।
'तूर्णं रथेभिराशुभिः'[१२] निर्भूयासादयामिति[१३] ॥ ९ ॥

'पशुं न नष्टमिव'[१४] दृश्येते नमिवौ[१५] सह ।
विशेषणे विशेष्ये च पशुमिव नष्टमिव ॥ १० ॥

तत्रैकं पूरणं केचिदिच्छन्त्यन्यं । मन्वते ।
ऋधिस्वभावाद्[१६] दृश्येते विशेषणविशेष्ययोः ॥ ११ ॥

---

१. ऋ ६,५,७. २. ऋ ८,७,१८. ३. ऋ १,२४,६. ४. ऋ १,८१,५. ५. ऋ १०,८२,११. ६. ऋ ६,५१,११. ७. पूरणम् वि. ८. ऋ ६,५९,२. ९. तत वि. १०. ऋ १,११५,३. ११. °र्थः वि. १२. ऋ ८,५,७ १३. निर्भूयात् इत्ये वेंकम. १४. ऋ १,११६,२३. १५. नमिवौ इत्ये. १६. ऋधिस्वभावात् इत्ये.

'अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि'[1] ।
तृतीयोऽर्चन्त इत्येष[2] केषांचित् पूरणो मतः ॥ १२ ॥

ह्वाने[3] समिन्धने चैव कुर्महेऽर्चनपूर्वकम् ।
रक्षणायेति मन्त्रार्थः तत्रैकमतिरिच्यते[4] ॥ १३ ॥

'न ते वर्तास्ति राधस इन्द्र देवो न मर्त्यः'[5] ।
पादस्य प्रथमस्यात्र प्रपञ्चस्त्वादनन्तरः ॥ १४ ॥

एवं पादो द्वितीयोऽत्र न पूरण इति स्थितिः ।
देवशब्दस्य[6] पादेन मुख्येनैकेऽन्वयं विदुः ॥ १५ ॥

'शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे'[7] ।
दशामपि च दित्सेयमेवं चात्र न पूरणम् ॥ १६ ॥

'विश्वे गन्त मरुतो विश्वे'[8] 'विश्वे भवन्तु मरुतः'[9] ।
आवर्तते विश्वशब्दः स वेच्छति न पूरणम् ॥ १७ ॥

गमने रक्षणे चैव सर्वेषां ह्यन्वयो मतः ।
अपुरणत्वमृचोऽस्माभिरित्थं बह्व्यः प्रदर्शिताः ॥ १८ ॥ इति ।

[ ६३ ]

ऋत॑स्य गोपा॒वधि॑ तिष्ठथो॒ रथं॑ सत्य॑धर्माणा पर॒मे व्यो॑मनि ।
यमत्र॑ मित्रावरुणा॒वथो॑ यु॒वं तस्मै॑ वृ॒ष्टिर्मधु॑मत् पिन्वते दि॒वः ॥ १ ॥

ऋत॑स्य । गो॒पौ॒ । अधि॑ । ति॒ष्ठ॒थः॒ । रथ॑म् । सत्य॑ऽधर्माणा । प॒र॒मे । विऽओ॑मनि ।
यम् । अत्र॑ । मि॒त्रा॒व॒रु॒णा॒ । अव॑थः । यु॒वम् । तस्मै॑ । वृ॒ष्टिः । मधु॑ऽमत् । पि॒न्व॒ते॒ । दि॒वः ॥१॥

वेङ्कट० अर्चनानाः । हे सत्यस्य गोपायितारौ ! अधि तिष्ठथः रथम् सत्यकर्माणौ ! परमे अन्तरिक्षे । यम् अस्मिन् लोके मित्रावरुणौ ! रक्षथः युवम्, तस्मै वृष्टिः उदकवती दिवः पतति ॥ १ ॥

मुद्गल० 'ऋतस्य गोपौ' इति सप्तर्चं सप्तमं सूक्तम् । आत्रेयोऽर्चनाना नाम ऋषिः । जगती छन्दः । मित्रावरुणौ देवता ।

हे ऋतस्य गोपौ ! यज्ञस्य रक्षितारौ ! सत्यधर्माणा ! सत्यधर्माणौ ! युवाम् रथम् अधि तिष्ठथः आरोहथोऽस्मद्यागागमनार्थम् । कुत्र । परमे व्योमनि निरतिशये आकाशे ।

1. ऋ ५,१३,१. 2. इत्येतः वेंकश. 3. पाने वेंकश. 4. तत्रैक मति° वेंकश. 5. ऋ ८,१४,४. 6. तद वि° वस. 7. ऋ ८,१४,२. 8. ऋ ५,४३,१०. 9. ऋ १०,३५,१३.

हे मित्रावरुणौ! युवम् युवाम् अत्र अस्मिन् यज्ञे यम् यजमानम् अवथः रक्षथः, तस्मै यजमानाय वृष्टिः पर्जन्यः मधुमत् उदकम् दिवः द्युलोकात् पिन्वते सिञ्चति वर्षयति ॥ १ ॥

सम्राजावस्य भुवनस्य राजथो मित्रावरुणा विदथे स्वर्दृशा ।
वृष्टिं वां राधो अमृतत्वमीमहे द्यावापृथिवी वि चरन्ति तन्यवः ॥ २ ॥

सम्ऽराजौ । अस्य । भुवनस्य । राजथः । मित्रावरुणा । विदथे । स्वःऽदृशा ।
वृष्टिम् । वाम् । राधः । अमृतऽत्वम् । ईमहे । द्यावापृथिवी इति । वि । चरन्ति । तन्यवः ॥२॥

वेङ्कट० अस्य भूतजातस्येश्वरौ सर्वद्रष्टारौ हे मित्रावरुणौ! यज्ञे राजथः। तौ वाम् वृष्टिम् धनम् अमृतत्वम् च याचामहे। द्यावापृथिवी वि¹ चरन्ति गर्जितशब्दाः ॥ २ ॥

मुद्गल० हे मित्रावरुणा! मित्रावरुणौ! सम्राजौ सम्यक् राजमानौ युवाम् अस्य भुवनस्य राजथः ईशाथे। स्वर्दृशा स्वर्गस्य द्रष्टारौ युवाम् विदथे अस्मद्यज्ञे सम्राजौ इति सम्बन्धः। वाम् युवाम् वृष्टिम् राधः वृष्ट्याख्यम् धनम्² अमृतत्वम् स्वर्गं च ईमहे प्रार्थयामहे। युवयोः तन्यवः विस्तृताः रश्मयः द्यावापृथिवी वि चरन्ति विविधं प्राप्नुवन्ति ॥ २ ॥

सम्राजा उग्रा वृषभा दिवस्पती पृथिव्या मित्रावरुणा विचर्षणी ।
चित्रेभिरभ्रैरुप तिष्ठथो रवं द्यां वर्षयथो असुरस्य मायया ॥ ३ ॥

सम्ऽराजौ । उग्रा । वृषभा । दिवः । पती इति । पृथिव्याः । मित्रावरुणा । विचर्षणी इति विऽचर्षणी ।
चित्रेभिः । अभ्रैः । उप । तिष्ठथः । रवम् । द्याम् । वर्षयथः । असुरस्य । मायया ॥ ३ ॥

वेङ्कट० सम्राजौ उद्गूर्णौ वर्षितारौ दिवः पती पृथिव्याः च मित्रावरुणौ विद्रष्टारौ चित्रैर्मेघैः सह गर्जितशब्दम् उप तिष्ठथः। वर्षयथः च पर्जन्यस्य कर्मणा द्युलोकम् ॥ ३ ॥

मुद्गल० सम्राजौ सम्यक् राजमानौ उग्रा उद्गूर्णबलौ वृषभा वर्षितारौ दिवः द्युलोकस्य पती स्वामिनौ पृथिव्याः च पती विचर्षणी सर्वस्य द्रष्टारौ मित्रावरुणा मित्रावरुणौ चित्रेभिः चायनीयैः अभ्रैः मेघैः सह रवम् स्तोत्रम् उप तिष्ठथः। पश्चात् द्याम् च वर्षयथः असुरस्य उदकनिरसितुः पर्जन्यस्य मायया सामर्थ्येन ॥ ३ ॥

माया वां मित्रावरुणा दिवि श्रिता सूर्यो ज्योतिश्चरति चित्रमायुधम् ।
तमभ्रेण वृष्ट्या गूहथो दिवि पर्जन्य द्रप्सा मधुमन्त ईरते ॥ ४ ॥

माया । वाम् । मित्रावरुणा । दिवि । श्रिता । सूर्यः । ज्योतिः । चरति । चित्रम् । आयुधम् ।
तम् । अभ्रेण । वृष्ट्या । गूहथः । दिवि । पर्जन्य । द्रप्साः । मधुऽमन्तः । ईरते ॥ ४ ॥

---

१. नास्ति मूको. २. धनम् मूको.

वेङ्कट० कर्म युवयोः हे मित्रावरुणौ! दिवि श्रितम्। किञ्च भवत्प्रेषितः सूर्यः ज्योतिः विसृजति चित्रम् आयुधम् अन्तरिक्षे। तम् अभ्रेण वृष्ट्या च गूहथः दिवि। तत्र पर्जन्य! उदकद्रप्सा मधुमन्तः पतन्ति ॥ ४ ॥

मुद्गल० हे मित्रावरुणा! मित्रावरुणौ! वाम् युवयोः माया दिवि श्रिता। सूर्यः सर्वस्य प्रेरक ज्योतिः दीप्यमानः चित्रम् चायनीयम् आयुधम् उत्कृष्टलक्षणायुधस्वरूपः चरति परिभ्रमत्यन्तरिक्षे। शत्रूणां मारकत्वादायुधमुच्यते। तम् सूर्यम् अभ्रेण मेघेन वृष्ट्या च दिवि गूहथः गोपायथः। हे पर्जन्य! देव! मित्रावरुणाभ्यां वृष्ट्यर्थं प्रेरितेन त्वया मधुमन्तः द्रप्साः आपः ईरते ईर्यन्ते स्वरसहिता वा गच्छन्ति ॥ ४ ॥

रथं युञ्जते मरुतः शुभे सुखं शूरो न मित्रावरुणा गविष्टिषु ।
रजांसि चित्रा वि चरन्ति तन्यवो दिवः सम्राजा पयसा न उक्षतम् ॥ ५ ॥

रथम् । युञ्जते । मरुतः । शुभे । सुऽखम् । शूरः । न । मित्रावरुणा । गोऽइष्टिषु ।
रजांसि । चित्रा । वि । चरन्ति । तन्यवः । दिवः । सम्ऽराजा । पयसा । नः । उक्षतम् ॥५॥

वेङ्कट० 'रथम् युञ्जते' मरुतः उदकाय सुखरथम्, शूरः इव युद्धाय, हे मित्रावरुणौ![1] विवसायनेषु। ततो लोकान् चित्रा वि चरन्ति तन्यवः। दिवः सम्राजौ! पयसा अस्मान् सिञ्चतम् ॥ ५ ॥

मुद्गल० हे मित्रावरुणौ! युवयोरनुग्रहात् मरुतः शुभे शुभकार्यार्थम् सुखम् शोभनाक्ष रथम् युञ्जते अश्वैर्योजयन्ति, शूरः न शूर इव, स यथा युद्धार्थं रथं युनक्ति तद्वत्। गविष्टिषु गवामुदकानाम् एषणेषु चित्रा चायनीयानि रजांसि लोकान् तन्यवः तता.[1] ते मरुतः वि चरन्ति विविधं चरन्ति। तस्मात् तै सहितौ हे सम्राजा! सम्राजौ! युवाम् दिवः द्युलोकात् पयसा उदकेन नः अस्मान् उक्षतम् सिञ्चतम् ॥ ५ ॥

वाचं सु मित्रावरुणाविरावतीं पर्जन्यश्चित्रां वदति त्विषीमतीम् ।
अभ्रा वसत मरुतः सु मायया द्यां वर्षयतमरुणामरेपसम् ॥ ६ ॥

वाचम् । सु । मित्रावरुणौ । इराऽवतीम् । पर्जन्यः । चित्राम् । वदति । त्विषिऽमतीम् ।
अभ्रा । वसत । मरुतः । सु । मायया । द्याम् । वर्षयतम् । अरुणाम् । अरेपसम् ॥ ६ ॥

वेङ्कट० वाचम् सुष्ठु वदति हे मित्रावरुणौ! अन्नवतीम् पर्जन्यः चित्राम् दीप्तिमतीम्। अभ्राणि आच्छादयत हे मरुतः! सुकर्मणा। द्याम् वर्षयतम् अरुणवर्णां निर्मलां मित्रावरुणौ! ॥ ६ ॥

मुद्गल० हे मित्रावरुणौ! युवयोरनुग्रहात् पर्जन्यः मेघः सु सुष्ठु इरावतीम् अन्नवतीम् अन्नसाधिकाम्, चित्राम् चायनीयाम् त्विषीमतीम् दीप्तिमतीम् वाचम् गर्जनशब्दम् वदति शब्दयति वृष्ट्यर्थम्।

1. नास्ति वि° स्पे २-२. नास्ति वि° अप- ३ वर्षविधानः तथा मूको.

मरुतः च अभ्रा अभ्राणि मेघान् सु सुष्ठु वसत आच्छादयन्ति मायया स्वप्रज्ञया। युवां च पर्जन्येन मरुद्भिश्च सह अरुणाम् अरुणवर्णाम् अरेपसम् अपापां वृष्टयविघातिनीम् द्याम् वर्षयतम् ॥ ६ ॥

धर्मणा मित्रावरुणा विपश्चिता व्रता रक्षेथे असुरस्य मायया ।
ऋतेन विश्वं भुवनं वि राजथः सूर्यमा धत्थो दिवि चित्र्यं रथम् ॥ ७ ॥

धर्मणा । मित्रावरुणा । विपःऽचिता । व्रता । रक्षेथे इति । असुरस्य । मायया ।
ऋतेन । विश्वम् । भुवनम् । वि । राजथः । सूर्यम् । आ । धत्थः । दिवि । चित्र्यम् । रथम् ॥७॥

वेङ्कट० कर्मणा[2] हे मित्रावरुणौ! प्राज्ञौ! व्रतानि रक्षेथे, पर्जन्यस्य प्रज्ञया च। तेजसा उदकेन वा विश्वम् भुवनम् विराजयथः, दिवि आ धत्थः सुवीर्यं चित्रवर्णम् रथम् ॥ ७ ॥

मुद्गल० हे मित्रावरुणा। विपश्चिता। प्राज्ञौ! युवाम् धर्मणा जगद्धारकेण वृष्ट्यादिलक्षणेन कर्मणा व्रता यज्ञादिकर्माणि रक्षेथे पालयथः, असुरस्य मेघानां निरसितुः पर्जन्यस्य मायया प्रज्ञया च। ऋतेन उदकेन निमित्तेन विश्वम् भुवनम् सर्वं भूतजातम् वि राजथः दीपयथः। सूर्यम् आ सूर्यं च चित्र्यम् पूज्यम् रथम् रंहणस्वभावम् दिवि द्युलोके धत्थः धारयथः जगदुपकारार्थम् ॥ ७ ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये प्रथमो वर्गः ॥

[ ६४ ]

वरुणं वो रिशादसमृचा मित्रं हवामहे । परि व्रजेव बाह्वोर्जगन्वांसा स्वर्णरम् ॥ १ ॥

वरुणम् । वः । रिशादसम् । ऋचा । मित्रम् । हवामहे ।
परि । व्रजाऽइव । बाह्वोः । जगन्वांसा । स्वःऽनरम् ॥ १ ॥

वेङ्कट० वरुणम् युष्माकं रिशताम्[3] अभिहितारं स्तुत्या मित्रम् च अन्येभ्यः परि हवामहे[4] बाह्वोः प्रजामिव, यथा बाहुभ्यां कश्चिद्गच्छन्तं निरुणद्धि, गच्छन्तौ सर्वजनोपेतं तं[5] देशम् ॥ १ ॥

मुद्गल० 'वरुणं वः' इति सप्तर्चमष्टमं सूक्तम्। अर्चनाना[6] ऋषिः। अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः। मित्रावरुणौ देवता।

वः युवयोर्मध्ये रिशादसम् शत्रूणां प्रेरकम् स्वर्णरम् स्वर्गस्य नेतारम्। वरुणम् वरुणलक्षणम् मित्रम् च ऋचा मन्त्रेण हवामहे आह्वयाम.। व्रजा इव गोयूथानीव बाहोः बलेन परि जगन्वांसा परिगच्छन्तौ ॥ १ ॥

ता बाहवा सुचेतुना प्र यन्तमस्मा अर्चते ।
शेवं हि जार्यं वां विश्वासु क्षासु जोगुवे ॥ २ ॥

---

१. विषाद् मूको. २. धर्मणा वि°. ३. रिशाम् वि° स्पं. ४. मरामहे मूको. ५. तं तं वि°, ६. °नानस मूको.

ता । बाहवा । सुऽचेतुना । प्र । यन्तम् । अस्मै । अर्चते ।
शेवम् । हि । जार्यम् । वाम् । विश्वासु । क्षासु । जोगुवे ॥ २ ॥

वेङ्कट० तौ बाहू सुप्रज्ञानौ प्र यच्छतम् अस्मै स्तुवते । सुखकरम् हि स्तोत्रम् युवयोः सर्वासु भूमिषु शब्दयते ॥ २ ॥

मुद्गल० ता तौ युवाम् बाहवा बाहुना सुचेतुना शोभनेन हस्तेन अस्मै अर्चते स्तुवते महान् प्र यन्तम् अभिमतं सुखं प्रगमयतम्, प्रयच्छतमित्यर्थः । जार्यम् स्तुत्यम् शेवम् हि सुखं च वाम् युवयोः सम्बन्धि विश्वासु सर्वासु क्षासु भूमिषु जोगुवे गच्छति व्याप्नोति ॥ २ ॥

यन्नूनमश्यां गतिं मित्रस्य यायां पथा । अस्य प्रियस्य शर्मण्यहिंसानस्य सश्चिरे ॥ ३ ॥
यत् । नूनम् । अश्याम । गतिम् । मित्रस्य । यायाम् । पथा ।
अस्य । प्रियस्य । शर्मणि । अहिंसानस्य । सश्चिरे ॥ ३ ॥

वेङ्कट० यदि खलु गतिम् प्राप्नुयाम्, तदानीं मित्रप्रदिष्टेन पथा यायाम् । अस्य प्रियस्य सुखे हि अहिंसतः सक्ता भवन्ति स्तोतारः[1] ॥ ३ ॥

मुद्गल० यत् यदा नूनम् इदानीम् गतिम् गमनम् अश्याम् प्राप्नुयाम्, तदा मित्रस्य मित्रभूतस्य पथा मार्गेण मित्रप्रापकेण मार्गेण यायाम् गच्छेयम् । न केवलमहमेक एव गन्ता, किन्तु सर्वेऽपि तथाऽगमन्नित्याह — अस्य प्रियस्य अहिंसानस्य अहिंसकस्य, मित्रस्येत्यर्थः, शर्मणि सुखे गृहे सश्चिरे सङ्गताः ॥ ३ ॥

युवाभ्यां मित्रावरुणोपमं धेयामृचा । यद्ध क्षये मघोनां स्तोतॄणां च स्पूर्धसे ॥ ४ ॥
युवाभ्याम् । मित्रावरुणा । उपऽमम् । धेयाम् । ऋचा ।
यत् । ह । क्षये । मघोनाम् । स्तोतॄणाम् । च । स्पूर्धसे ॥ ४ ॥

वेङ्कट० हे मित्रावरुणौ ! युवाभ्याम् उपमानभूतं हविः प्रयच्छामि ऋचा । यत् खलु हविष्मताम् स्तोतॄणाम् च गृहे भवतो. पूरणाय[2] भवति तद्दिति[3] ॥ ४ ॥

मुद्गल० हे मित्रावरुणा ! युवाभ्याम् दातृभ्याम् उपमम् उप समीपे सोपसर्गं धनम् ऋचा स्तुत्या साधनेन धेयाम् धारयामि । यत् ह यत् खलु युवाभ्यां सकाशात् प्राप्तं धनम् मघोनाम् धनवताम् अदातॄणाम् स्तोतॄणाम् च क्षये गृहे स्पूर्धसे स्पर्धनाय[4] भवति ॥ ४ ॥

आ नो मित्र सुदीतिभिर्वरुणश्च सधस्थ आ । स्वे क्षये मघोनां सखीनां च वृधसे ॥ ५ ॥
आ । नः । मित्र । सुदीतिऽभिः । वरुणः । च । सधऽस्थे । आ ।
स्वे । क्षये । मघोनाम् । सखीनाम् । च । वृधसे ॥ ५ ॥

---

1. °रः मूको. 2. पूरणा क. 3. नास्ति वि° छपं. 4. °धंमाना° मूको.

वेङ्कट० आ गच्छतम् अस्मान् सुदानैः मित्रावरुणौ! गृहे। सदेवाह—स्वे गृहे हविष्मतां स्तोतॄणाम् च अस्माकं वर्धनायेति ॥ ५ ॥

मुद्गल० हे मित्र! त्वम् वरुणः च सुदीतिभिः सुदीप्तियुक्तौ²(?) युवाम् नः अस्माकम् सधस्थे सदने यज्ञे आ गच्छतम्¹। द्वितीय आकारोऽनर्थकः। किमर्थम्। मघोनाम् धनवतां हविष्मताम् सखीनाम् च युवयोः सखिभूतानाम् अस्माकम् क्षये गृहे स्वे स्वकीये वृधसे वर्धनाय ॥ ५ ॥

युवं नो येषु वरुण क्षत्रं बृहच्च बिभृथः। उरु णो वाजसातये कृतं राये स्वस्तये ॥ ६ ॥

युवम्। नः। येषु। वरुणा। क्षत्रम्। बृहत्। च। बिभृथः।
उरु। नः। वाजऽसातये। कृतम्। राये। स्वस्तये ॥ ६ ॥

वेङ्कट० हे मित्रावरुणौ! युवाम् अस्मभ्यम् येषु स्तोत्रेषु सत्सु बलम् महत् च धनम् बिभृथः, तेषु सत्सु इदानीम् अस्माकं सङ्ग्रामार्थम् बहु कर्तव्यं कृणुतं धनाय अविनाशाय³ च ॥ ६ ॥

मुद्गल० हे वरुणा! मित्रावरुणौ! युवम् युवाम् नः अस्माकम् क्षत्रम् बलम् बृहत् महत् परिवृढम् धनम् च येषु स्तोत्रेषु निमित्तेषु बिभृथः धारयथः। युवाभ्यां धृतमस्तं च नः अस्मभ्यम् वाजसातये अन्नलाभाय राये धनाय स्वस्तये क्षेमाय उरु विस्तीर्णम् कृतम् कुरुतम् ॥ ६ ॥

उच्छन्त्यां मे यजता देवक्षत्रे रुशद्गवि।
सुतं सोमं न हस्तिभिरा पड्भिर्धावतं नरा बिभ्रतावर्चनानसम् ॥ ७ ॥

उच्छन्त्याम्। मे। यजता। देवऽक्षत्रे। रुशत्ऽगवि।
सुतम्। सोमम्। न। हस्तिऽभिः। आ। पड्ऽभिः। धावतम्। नरा। बिभ्रतौ। अर्चनानसम् ॥

वेङ्कट० उच्छन्त्याम् उषसि मम यष्टव्यौ देवक्षत्र आदित्यः तस्मिन् दीप्यमानतेजसि पाणिभिः हस्तवद्भिः "सुतम् सोमम्" आ धावतम्⁴ बिभ्राणौ अर्चनानसम् पद्भिः अश्वैरिति ॥ ७ ॥

मुद्गल० उच्छन्त्याम् उषसि मे सोममिति सम्बन्धः। यजता यष्टव्यौ रुशद्गवि प्रातःसवने देवक्षत्रे देवानां क्षत्रं बलं यस्मिन् यज्ञे तद्देवक्षत्रम् तस्मिन् मे मदीयम् सुतम् अभिषुतम् सोमम् न नेति सम्प्रत्यर्थे। इदानीम् हस्तिभिः हस्तवद्भिः पड्भिः पादवद्भिः पादचतुष्टयोपेतैरश्वैः आ धावतम् आगच्छतम् हे नरा! मित्रावरुणौ! अर्चनानसम् बिभ्रतौ अर्चनानसम् ऋषिं धारयन्तौ युवाम् ॥ ७ ॥

इति चतुर्थाष्टके चतुर्थाध्याये द्वितीयो वर्गः ॥

---

१. नास्ति वि॰ छ॰. २. °युक्तैः मूको. ३. °क्षत मूको. ४-४. हस्तैर्न छ॰. ५. नाशाय छ वि॰.

[ ६५ ]

यश्चिकेत स सुक्रतुर्देवत्रा स ब्रवीतु नः । वरुणो यस्य दर्शतो मित्रो वा वनते गिरः ॥१॥

यः । चिकेत । सः । सुऽक्रतुः । देवऽत्रा । सः । ब्रवीतु । नः ।
वरुणः । यस्य । दर्शतः । मित्रः । वा । वनते । गिरः ॥ १ ॥

वेङ्कट० शातहव्यः । यः जानाति सः सुप्रज्ञः देवौ मित्रावरुणौ सः अस्माकम् ब्रवीतु यदि जानाति । किं वक्तव्यम् इत्याह — वरुणः मित्रः वा दर्शनीयः यादृशस्य स्तुतीः भजते । कस्य स्तुती एतौ शृणुतः इति प्रश्नः ॥ १ ॥

मुद्गल० 'यश्चिकेत' इति षडृचं नवमं सूक्तम् । रातहव्य आत्रेय ऋषिः । अन्त्या पङ्क्तिः, शिष्टा अनुष्टुभः । मित्रावरुणौ देवता ।

यः चिकेत[1] जानाति[2] युवयोः स्तुतिम् सः सुक्रतुः शोभनकर्मा देवत्रा देवेषु मध्ये[3] । युवयोरेव स्तुतिं यः चिकेत[4] सः नः अस्माकम् ब्रवीतु[5] स्तुतिं परम् उपदिशतु । यस्य दर्शतः दर्शनीयः वरुणः मित्रः वा मित्रश्च गिरः अस्मदीयाः स्तुतीः वनते सम्भजते ॥ १ ॥

ता हि श्रेष्ठवर्चसा राजाना दीर्घश्रुत्तमा । ता सत्पती ऋतावृध ऋतावाना जनेजने ॥२॥

ता । हि । श्रेष्ठऽवर्चसा । राजाना । दीर्घश्रुत्ऽतमा ।
ता । सत्पती इति सत्ऽपती । ऋतऽवृधा । ऋतऽवाना । जनेऽजने ॥ २ ॥

वेङ्कट० तौ हि श्रेष्ठतेजस्कौ राजानौ अतिशयेन दीर्घश्रुतौ सत्पती यज्ञवृधौ सत्यकर्माणौ भवतः जनेजने ॥२॥

मुद्गल० ता हि तौ खलु मित्रावरुणौ श्रेष्ठवर्चसा प्रशस्ततेजस्कौ राजाना ईश्वरौ दीर्घश्रुत्तमा दूरदेशात् आह्वानश्रोतृतमौ । ता तौ सत्पती सतां यजमानानां स्वामिनौ ऋतावृधा यज्ञस्य वर्धयितारौ जनेजने सर्वेषु स्तोतृषु ऋतावाना सत्यवन्तौ ॥ २ ॥

ता वामियानोऽवसे पूर्वा उप ब्रुवे सचा ।
स्वश्वासः सु चेतुना वाजाँ अभि प्र दावने ॥ ३ ॥

ता । वाम् । इयानः । अवसे । पूर्वौ । उप । ब्रुवे । सचा ।
सुऽअश्वासः । [illegible] । चेतुना । वाजान् । अभि । [illegible] । दावने ॥ ३ ॥

वेङ्कट० तौ युवाम् गच्छन् 'रक्षणाय मुख्यौ' युवां स्तौमि सह । स्वश्वाः युवयोः रथाः सुमनसौ भवन्तौ हवींषि प्रति दानाय प्र नयन्तु ॥ ३ ॥

---

1. जानाति मूको. 2. जनोति मूको. 3. °ध्ये यस्य मूको. 4. °त यो जानाति मूको. 5. ब्रव° मूको. 6-6. एतन्मुखस्थौ मूको. 7. मनसः मूको.

मुद्गल० ता तौ पूर्वी पुराणौ वाम् युवाम् इयानः गच्छन् अवसे रक्षणाय सचा सह उप ब्रुवे उपेत्य स्तौमि । स्वश्वासः स्वश्वाः वयम् आत्रेयाः सु चेतुना शोभनप्रज्ञानौ युवाम् वाजान् अन्नानि अभि अभिलक्ष्य प्र प्रकर्षेण दावने दानाय स्तुम इति शेषः ॥ ३ ॥

मित्रो अंहोश्चिदादुरु क्षयाय गातुं वनते ।
मित्रस्य हि प्रतूर्वतः सुमतिरस्ति विधतः ॥ ४ ॥

मित्रः । अंहोः । चित् । आत् । उरु । क्षयाय । गातुम् । वनते ।
मित्रस्य । हि । प्रऽतूर्वतः । सुऽमतिः । अस्ति । विधतः ॥ ४ ॥

वेङ्कट० [1]मित्रः पापस्य अपि यजमानस्य विस्तीर्णं पन्थानं गृहं प्रति गन्तुं ददाति[1] । मित्रस्य हि प्रहिंसतः सुमतिः अस्ति परिचरतः[2] ॥ ४ ॥

मुद्गल० मित्रः देवः अंहोः चित् अंहसः पापिनः अपि स्तोतुः आत् अनन्तरमेव उरु उरवे क्षयाय गृहाय गातुम् उपायम् वनते प्रयच्छति । मित्रस्य मित्रस्य खलु सुमतिः शोभनबुद्धिः प्रतूर्वतः प्रकर्षेण हिंसतोऽपि विधतः परिचरतः शुश्रूषकस्य अस्ति भवति खलु ॥ ४ ॥

वयं मित्रस्यावसि स्याम सप्रथस्तमे । अनेहसस्त्वोतयः सत्रा वरुणशेषसः ॥ ५ ॥

वयम् । मित्रस्य । अवसि । स्याम । सप्रथःऽतमे । अनेहसः । त्वाऽऊतयः । सत्रा । वरुणऽशेषसः ॥५॥

वेङ्कट० वयम् मित्रस्य रक्षणे भवाम सर्वतः पृथुतमे अनुपद्रवाः त्वद्रक्षकाः सदा वरुणशेषसः च । वरुणः शासिता[3] येषाम् ॥ ५ ॥

मुद्गल० वयम् यजमानाः मित्रस्य देवस्य सप्रथस्तमे सर्वतः पृथुतमे अवसि रक्षणे[4] स्याम । किञ्च अनेहसः अपापाः त्वोतयः त्वया रक्षिताः[5] वरुणशेषसः, 'शेषः' ( निघ २,२ ) इति अपत्यनाम, वारकाः पुत्रा येषां ते तादृशाः सत्रा वयं सर्वे सहैव भवेम ॥ ५ ॥

युवं मित्रेमं जनं यतथः सं च नयथः ।
मा मघोनः परि ख्यतं मो अस्माकमृषीणां गोपीथे न उरुष्यतम् ॥ ६ ॥

युवम् । मित्रा । इमम् । जनम् । यतथः । सम् । च । नयथः ।
मा । मघोनः । परि । ख्यतम् । मो इति । अस्माकम् । ऋषीणाम् । गोऽपीथे । नः । उरुष्यतम् ॥

वेङ्कट० हे मित्रावरुणौ! युवाम् इमम् जनम् पृथक् कुरुथः, विशिष्टम्[6] च ताम् नयथः, मा हविष्मतः अस्मान् [7]वर्जयतम्, मा अस्माकं स्तुतीः[7], लोकपाने अस्मान् रक्षतम् ॥ ६ ॥

---

1-1. नास्ति वि॰ लप॰. 2. "चरतः पयति परिचरति मे बर्धं मुनक्ति मूको. 3. शा॰ति वि॰ सप॰.
4. °णे वयम् मूको. 5. °ताः मूको. 6. नवि° वि॰. 7-7. वर्जयतं स्तुतीः मूको.

मुद्गल० हे मित्रा ! मित्रावरुणौ ! युवम् युवाम् इमम् जनम् स्तोतारं मां प्रति यतथः गच्छथः । आगत्य च सम् च नयथः सङ्गमयथ । अस्मान्[1] कामान् प्रापयथ । मघोनः हविर्लक्षणान्नवतः न अस्मान् मा परि ख्यतम् मा परित्यजतम् । मो मैव सूरीणाम् अस्माकम् पुत्रानपि परि ख्यतम् । किन्तु गोपीथे यज्ञे नः उरुष्यतम् रक्षतम् ॥ ६ ॥

इति चतुर्थाष्टके चतुर्थाध्याये तृतीयो वर्गः ॥

[ ६६ ]

आ चिकितान सुक्रतू देवौ मर्त रिशादसा ।
वरुणाय ऋतपेशसे दधीत प्रयसे महे ॥ १ ॥

आ । चिकितान । सुक्रतू इति सुऽक्रतू । देवौ । मर्त । रिशादसा ।
वरुणाय । ऋतऽपेशसे । दधीत । प्रयसे । महे ॥ १ ॥

वेङ्कट० हे जानन् मर्त्य[2] आगतौ सुप्रज्ञौ रिशादसौ । परोक्ष उत्तरार्धः । तयोः वरुणाय सत्यपेशसे मित्राय च सत्यरूपाय महते अन्नाय महदन्नं लब्धुम् हविः प्रयच्छतु 'यजमानो रातहव्य इति'[2] ॥ १ ॥

मुद्गल० 'आ चिकितान' इति षड्टचं दशमं सूक्तम् । रातहव्य ऋषिः । अनुष्टुप् छन्दः । मित्रावरुणौ देवता ॥

हे चिकितान ! जानन् स्तुतिं हे मर्त ! मनुष्य ! रातहव्य ! सुक्रतू शोभनकर्माणौ रिशादसा हिंसकानां हिंसकौ देवौ आह्वय इति शेषः । आहूय च ऋतपेशसे उदकरूपाय[3] वरुणाय प्रयसे हविर्लक्षणान्नवते महे महते दधीत धत्स्व, हविरिति शेषः ॥ १ ॥

ता हि क्षत्रमविह्रुतं सम्यगसुर्य१माशाते । अध व्रतेव मानुषं स्व१र्ण धायि दर्शतम् ॥२॥

ता । हि । क्षत्रम् । अविऽह्रुतम् । सम्यक् । असुर्यम् । आशाते इति ।
अध । व्रताऽइव । मानुषम् । स्वः । न । धायि । दर्शतम् ॥ २ ॥

वेङ्कट० तौ हि बलम् अबाधितम् सम्यक् असुराणां ,इन्द्र' प्राप्नुतः, तदर्थौ यथा मानुषम् कर्म दर्शनीयं भवति, यथा चादित्यः, तथा तद् बलम् अनयोर्निहितम् इति ॥ २ ॥

मुद्गल० ता हि यस्मात् तौ क्षत्रम् बलम् अविह्रुतम् अहिंस्यम् असुर्यम् महद्बलम् सम्यक् आशाते व्याप्नुतः[4], अध अतो हेतो मानुषम् मनुष्येषु प्रवृत्तम् व्रतेव कर्मेव, तद्यथा मनुष्येषु नियतम्, स्वः न सूर्य इव, स यथा दिवि दृश्यते, तद्वत् दर्शतम् दर्शनीयं बलम् धायि मयि निहितम् ॥ २ ॥

ता वामेषे रथानामुर्वीं गव्यूतिमेषाम् । रातहव्यस्य सुष्टुतिं दधृक् स्तोमैर्मनामहे ॥३॥

---

१. मत्स्माद् मूको. २-२. यजमानेऽस्य पातेऽनि वि'. यजमानेऽस्यार्थेऽवेति ह कर्म. ३. 'इन्द्र' मूको. ४. ते वि'. ५. नास्ति मूको

ता । वाम् । एषे । रथानाम् । उर्वीम् । गव्यूतिम् । एषाम् ।
रातऽहव्यस्य । सुऽस्तुतिम् । दधृक् । स्तोमैः । मनामहे ॥ ३ ॥

वेङ्कट० तौ वाम् एषाम् रथानाम् विस्तीर्णं मार्गं गन्तुम्[1] रातहव्यस्य सुष्टुतिम् प्रति धृष्टम् स्तोमैः पूजयामः ॥ ३ ॥

मुद्गल० हे मित्रावरुणौ! ता तौ प्रसिद्धौ वाम् युवाम् रथानाम् अस्मदीयानाम् एषाम् पुरतो वर्तमानानाम् उर्वीम् प्रभूताम् गव्यूतिम् अतिविस्तृतं मार्गम् एषे गन्तुम् । मार्गरक्षणायेत्यर्थः । तदर्थं वाम् मनामहे स्तुमः रातहव्यस्य ऋषेः सम्बन्धिभिः सुष्टुतिम् शोभनस्तुतिसाधनैः स्तोमैः दधृक् धर्षकौ युवाम् ॥ ३ ॥

अधा हि काव्या युवं दक्षस्य पूर्भिरद्भुता । नि केतुना जनानां चिकेथे पूतदक्षसा ॥४॥
अध । हि । काव्या । युवम् । दक्षस्य । पूःऽभिः । अद्भुता ।
नि । केतुना । जनानाम् । चिकेथे इति । पूतऽदक्षसा ॥ ४ ॥

वेङ्कट० अथ खलु काव्यानि[2] युवाम् दक्षस्य प्रजापतेः पूरकैः हविर्भिः सह हे आश्चर्यभूतौ! नियमेन जानीथः, जनानाम् च । अपि वा जनानां मध्ये समर्थस्येति, हे पूतबलौ! प्रज्ञानेन ॥ ४ ॥

मुद्गल० अध अपि च, हि प्रसिद्धौ, काव्या स्तुत्यौ युवम् युवाम् दक्षस्य प्रवृद्धस्य मम पूर्भिः पूरकैः स्तवैः हे अद्भुता! महान्तौ सन्तौ! केतुना प्रज्ञानेन मनसा जनानाम् स्तोतॄणाम् स्तोत्रम् नि चिकिथे नितरां जानीथः हे पूतदक्षसा![3] शुद्धबलौ! ॥ ४ ॥

तदृतं पृथिवि बृहच्छ्रवएष ऋषीणाम् । ज्रयसानावरं पृथ्वति क्षरन्ति यामभिः ॥५॥
तत् । ऋतम् । पृथिवि । बृहत् । श्रवःऽएषे । ऋषीणाम् ।
ज्रयसानौ । अरम् । पृथु । अति । क्षरन्ति । यामऽभिः ॥ ५ ॥

वेङ्कट० तत् सत्यभूतम् हे पृथिवि! महत्[4] ऋषीणाम् अन्नम् एषे[5] विस्तीर्णं पर्याप्तम् अन्तरिक्षं प्रति गच्छन्तौ मित्रावरुणौ स्तोतारः उदकानि क्षारयन्ति गमनैः[6] ॥ ५ ॥

मुद्गल० हे पृथिवि! त्वयि तत् सर्वैर्यज्ञमानत्वेन प्रसिद्धम् बृहत् प्रभूतम् ऋतम् उदकम् ऋषीणाम् स्तोतॄणाम् अस्माकम् श्रवएषे अन्नैषणे सति ज्रयसानौ गच्छन्तौ अरम् अलम् अत्यर्थम् पृथु यथा भवति तथा यामभिः गमनैः अति क्षरन्ति अत्यर्थं वर्षतः[7] ॥ ५ ॥

आ यद् वामीयचक्षसा मित्र वयं च सूरयः । व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥६॥
आ । यत् । वाम् । ईयऽचक्षसा । मित्रा । वयम् । च । सूरयः ।
व्यचिष्ठे । बहुऽपाय्ये । यतेमहि । स्वऽराज्ये ॥ ६ ॥

---

१. इन्तुम् ऊ. २. काव्या ऊ. ३. °लौ । युवाम् मूको. ४. बृहत् वि॰. ५. एषम् मूको.
६. आयसाम् वि॰. ७. °तः वर्षन्तम् मूको.

वेङ्कट० आ गच्छामः यदि वाम् हे गच्छत्तेजसौ! वयम् च अस्मदीयाः सूरयः च, ततोऽतिविस्तीर्णे[1] बहुरक्ष्ये स्वराज्ये वर्तेमहि ॥ ६ ॥

मुद्गल० हे ईयचक्षसा! व्याप्तदर्शनौ! मित्रा! मित्रावरुणौ! वाम् युवाम् यत् ये वयम् च सूरयः स्तोतारः आ आह्वयामः व्यचिष्ठे अत्यन्तं विस्तृते बहुपाय्ये बहुभिर्गोप्तव्ये स्वराज्ये स्वराट्त्वाय[२], एवंविधराज्यार्थम् यतेमहि गच्छेम ॥ ६ ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये चतुर्थो वर्गः ॥

[ ६७ ]

बळित्था देव निष्कृतमादित्या यजतं बृहत् । वरुण मित्रार्यमन् वर्षिष्ठं क्षत्रमाशाथे ॥१॥

बट् । इत्था । देवा । निःऽकृतम् । आदित्या । यजतम् । बृहत् ।
वरुण । मित्र । अर्यमन् । वर्षिष्ठम् । क्षत्रम् । आशाथे इति ॥ १ ॥

वेङ्कट० यजत[1]। सत्यम् इत्थं हे देवौ! संस्कृतः सूनं(?) यजतो बृहत् स ओवनम्(?) अश्नुवत हे अदितेः पुत्रौ! यजमाने मां महान्तं वृद्धतमं क्षत्रियं हे मित्रावरुणौ![२] आशाथे, अर्यमन्! त्वं च ताभ्यां सहितः ॥ १ ॥

मुद्गल० 'बळित्था देव' इति पञ्चर्चमेकादशं सूक्तम्। यजतो नामात्रेय ऋषिः। अनुष्टुप् छन्दः। मित्रावरुणौ देवता।

हे देवा! द्योतमानौ! हे आदित्या! अदितेः पुत्रौ! हे वरुण! हे अर्यमन्! अरीणां नियन्तः![४] हे मित्र! युवाम् बट् सत्यम् निष्कृतम् असाध्यम् इत्था इत्थम् इदानीं वर्तमानप्रकारेण यजतम् यष्टव्यम् बृहत् प्रवृद्धम् वर्षिष्ठम् प्रवृद्धतमम् क्षत्रम् बलम् आशाथे अश्नुवाथे ॥ १ ॥

आ यद् योनिं हिरण्ययं वरुण मित्र सदथः । धर्तारा चर्षणीनां यन्तं सुम्नं रिशादसा ॥२॥

आ । यत् । योनिम् । हिरण्ययम् । वरुण । मित्र । सदथः ।
धर्तारा । चर्षणीनाम् । यन्तम् । सुम्नम् । रिशादसा ॥ २ ॥

वेङ्कट० आ सीदथः यदि गृहं हिरमणीयं हे मित्रावरुणौ!, मनुष्याणां धर्तारौ भवथः। यच्छतम् सुखं हे रिशतामसितारौ! ॥ २ ॥

मुद्गल० यत् यस्मात् हिरण्ययम् हितरमणीयम् योनिम् यज्ञभूमिं हे वरुण! हे मित्र! आ सदथः आगच्छथः। तस्मात् चर्षणीनाम् मनुष्याणाम् धर्तारा धारकौ च हे रिशादसा! हिंसकानां क्षेप्तारौ! युवाम् अस्मभ्यम् सुम्नम् सुखम् यन्तम् कुरुतमित्यर्थः ॥ २ ॥

विश्वे हि विश्ववेदसो वरुणो मित्रो अर्यमा । व्रता पदेव सश्चिरे पान्ति मर्त्यं रिषः ॥३॥

१-१. नास्ति वि. ख. २. °त्वाय मूको. ३. °रुणौ ख. ४. °नौ मा वि°. ५. नियमितः मूको.

विश्वे । हि । विश्वऽवेदसः । वरुणः । मित्रः । अर्यमा ।
व्रता । पदाऽइव । सश्चिरे । पान्ति । मर्त्यम् । रिषः ॥ ३ ॥

वेङ्कट० सर्वे हि सर्वधनाः वरुणादयः यज्ञान् गृहानिव गच्छन्ति, रक्षन्ति च मर्त्यम् हिंसायाः ॥ ३ ॥

मुद्गल० विश्वे हि सर्वेऽपि विश्ववेदसः सर्वविदः वरुणो मित्रः अर्यमा च एते त्रयः सर्वे व्रता अस्मदीयानि कर्माणि पदेव पदानीव स्थानानीव सश्चिरे सङ्गता भवन्ति, आगत्य च माम् मर्त्यम् रिषः हिंसकात् पान्ति रक्षन्ति ॥ ३ ॥

ते हि सत्या ऋतस्पृश ऋतावानो जनेजने । सुनीथासः सुदानवोऽहोश्चिदुरुचक्रयः ॥४॥
ते । हि । सत्याः । ऋतऽस्पृशः । ऋतऽवानः । जनेऽजने ।
सुऽनीथासः । सुऽदानवः । अंहोः । चित् । उरुऽचक्रयः ॥ ४ ॥

वेङ्कट० ते हि सत्याः यज्ञस्पृशः सत्यकर्माणः सर्वेषु जनेषु सुनयनाः शोभनदानाः दरिद्रस्य महद्धनं कर्तारः ॥ ४ ॥

मुद्गल० ते हि खलु सत्याः सत्यभूताः ऋतस्पृशः यज्ञस्य कर्तारः ऋतावानः यज्ञवन्तः जनेजने सर्वेषु यजमानेषु सुनीथासः सुनयनाः सुदानवः सुदानाः । हि प्रसिद्धवाची सर्वत्र सम्बन्धनीयः । एवंमहानुभावा वरुणादयः अंहोः चित् पापिनोऽपि स्वस्तोतुः उरुचक्रयः प्रभूतधनादिकर्तारः ॥ ४ ॥

को नु वां मित्रास्तुतो वरुणो वा तनूनाम् । तत् सु वामेषते मतिरत्रिभ्य एषते मतिः ॥५॥
कः । नु । वाम् । मित्र । अस्तुतः । वरुणः । वा । तनूनाम् ।
तत् । सु । वाम् । आ । ईषते । मतिः । अत्रिऽभ्यः । आ । ईषते । मतिः ॥ ५ ॥

वेङ्कट० हे मित्र ! वरुणः च वाम् मध्ये कः स्विदङ्गम् अस्तुतम् ऋषिभिः । युवयोः तत् अङ्गं स्तोतुम् अत्रिभ्यः स्तुतिः सुष्ठु आभिमुख्येन गच्छति ॥ ५ ॥

मुद्गल० हे मित्र ! वाम् युवयोर्मध्ये त्वं च वरुणः वा कः नु अस्तुतः सर्वैः अस्तूयमानः कोऽस्ति । उभावपि स्तुत्यावित्यर्थः । तनूनाम् तनुभिः स्तुतिभिरस्तुत इति सम्बन्धः । तत् तस्मात् कारणात् अस्मदीया मतिः स्तुतिः वाम् युवाम् सु सुष्ठु आ ईषते अभिगच्छति । अत्रिभ्यः अत्रिगोत्रेभ्यः अस्मभ्यम् अस्मदीया मतिः आ ईषते । आदरार्थं पुनर्वचनम् ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये पञ्चमो वर्गः ॥

[ ६८ ]

प्र वो मित्राय गायत वरुणाय विपा गिरा । महिक्षत्रावृतं बृहत् ॥ १ ॥
प्र । वः । मित्राय । गायत । वरुणाय । विपा । गिरा । महिऽक्षत्रौ । ऋतम् । बृहत् ॥ १ ॥

वेङ्कट० प्र गायत मित्रावरुणाभ्यां मेधया गिरा । महाधनौ महदुदकं प्रयच्छतः ॥ १ ॥

मुद्गल० 'प्र वो मित्राय' इति पञ्चर्चं द्वादशं सूक्तम् । आत्रेयो यजत[1] ऋषिः । गायत्री छन्दः । मित्रावरुणौ देवता ।

हे मदीया ऋत्विजः ! वः यूयम् मित्राय वरुणाय च विपा व्याप्तया गिरा स्तुत्या प्र गायत स्तुतिं कुरुत । हे महिक्षत्रौ ! प्रभूतबलौ युवाम् ऋतम् यज्ञम् बृहत् महत् । स्तुत्यर्थमागच्छतम् इति शेषः ॥ १ ॥

सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च । देवा देवेषु प्रशस्ता ॥ २ ॥

सम्ऽराजा । या । घृतयोनी इति घृतऽयोनी । मित्रः । च । उभा । वरुणः । च । देवा । देवेषु । प्रऽशस्ता ॥ २ ॥

वेङ्कट० सम्राजौ यौ उदकस्थानौ मित्रः च वरुणः च, उभौ देवौ देवेषु प्रशस्तौ, उत्तरत्र सम्बन्धः ॥ २ ॥

मुद्गल० या यौ मित्रः च वरुणः च उभा उभौ सम्राजा सर्वस्य स्वामिनौ घृतयोनी उदकस्योत्पादकौ देवा द्योतमानौ देवेषु मध्ये प्रशस्ता प्रकर्षेण स्तुत्यौ, तौ स्तुत्या गायतेति पूर्वेणान्वयः ॥ २ ॥

ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि वां क्षत्रं देवेषु ॥ ३ ॥

ता । नः । शक्तम् । पार्थिवस्य । महः । रायः । दिव्यस्य । महि । वाम् । क्षत्रम् । देवेषु ॥ ३ ॥

वेङ्कट० तौ अस्मभ्यं दत्तं पार्थिवं रयिं दिव्यं च महान्तम् । महद् हि युवयोः देवानां मध्ये धनम् ॥ ३ ॥

मुद्गल० ता तौ देवौ नः अस्मदर्थम् पार्थिवस्य पृथिवीसम्बद्धस्य दिव्यस्य दिवि भवस्य च महः महतः रायः धनस्य शक्तम् समर्थौ भवतम्, दातुमिति शेषः । हे देवौ ! वाम् युवयोः महि महत् पूज्यम् क्षत्रम् बलम् देवेषु प्रसिद्धम्, स्तुम इति शेषः ॥ ३ ॥

ऋतमृतेन सपन्तेषिरं दक्षमाशाते । अद्रुहा देवौ वर्धेते ॥ ४ ॥

ऋतम् । ऋतेन । सपन्ता । इषिरम् । दक्षम् । आशाते इति । अद्रुहा । देवौ । वर्धेते इति ॥ ४ ॥

वेङ्कट० यज्ञम् यज्ञेन अनुस्यूतं[2] स्पृशन्तौ एषणशीलं बलम् आशाते । अद्रोग्धारौ वर्धयतः स्तोतॄन् ॥ ४ ॥

मुद्गल० ऋतेन उदकेन निमित्तेन ऋतम् यज्ञम् सपन्ता स्पृशन्तौ इषिरम् एषणवन्तम् दक्षम् प्रवृद्धं बलम् आशाते व्याप्नुतः । अद्रुहा अद्रोग्धारौ देवौ मित्रावरुणौ युवाम् वर्धेते प्रवृद्धौ भवतः ॥ ४ ॥

1. जयत मूको. 2. °नुस्यूतं मूको.

वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशाते ॥ ५ ॥

वृष्टिऽद्यावा । रीतिऽआपा । इषः । पती इति । दानुऽमत्याः । बृहन्तम् । गर्तम् । आशाते इति ॥५॥

वेङ्कट० वृष्टिमती ययोर्द्यौर्भवति 'शिवजला च पृथिवी' तौ तथोक्तौ इति वाजसनेयके उक्तम् ( शु. माश ३,९,१,६ ) । अन्नस्य पती दानवत्याः[1] प्रजायाः महान्तं रथम् आशाते ॥ ५ ॥

मुद्गल० वृष्टिद्यावा वर्षार्था द्यौः स्तुतिः ययोस्तौ वृष्टिद्यावा । रीत्यापा रीतिः प्राप्तिः[1] सा एव आपा अभिमतप्राप्तिर्ययोस्तौ तादृशौ । इषः अन्नस्य पती स्वामिनौ दानुमत्याः दानेन उपेतायाः[2] इत्यर्थः । एवंमहानुभावौ[3] बृहन्तम् महान्तम् गर्तम् रथम् आशाते व्याप्नुतः अधितिष्ठतो यागार्थम् ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये षष्ठो वर्गः ॥

[ ६९ ]

त्री रोचना वरुण त्रीँरुत द्यून् त्रीणि मित्र धारयथो रजांसि ।
वावृधानावमतिं क्षत्रियस्यानु व्रतं रक्षमाणावजुर्यम् ॥ १ ॥

त्री । रोचना । वरुण । त्रीन् । उत । द्यून् । त्रीणि । मित्र । धारयथः । रजांसि ।
ववृधानौ । अमतिम् । क्षत्रियस्य । अनु । व्रतम् । रक्षमाणौ । अजुर्यम् ॥ १ ॥

वेङ्कट० उरुचक्रिः । रोचयन्तीति लोका रोचनान्युच्यन्ते । द्योतनात् द्यावः । रञ्जनात् रजांसि । हे वरुण ! हे मित्र ! [3]त्रीन् लोकान्[4] धारयथः इत्यर्थः । वर्धमानौ बलं मम क्षत्रियस्य । अमतिरभिभवकर्मा । [5]कर्म अनु[5] रक्षमाणौ शत्रुभिः[6] अवमितुम् अशक्यम् ॥ १ ॥

मुद्गल० 'त्री रोचना' इति चतुर्ऋचं त्रयोदशं सूक्तम् । उरुचक्रिः नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । मित्रावरुणौ देवता ॥

हे वरुण ! हे मित्र ! युवाम् त्री त्रीणि रोचना रोचमानानि द्युलोकान् धारयथ इति तत्रान्वयः । उत अपि च त्रीन् द्यून् द्योतमानान् अन्तरिक्षलोकान् धारयथः । तथा त्रीणि रजांसि भूर्लोकान्[8] । कीदृशौ युवाम् । वावृधानौ वर्धमानौ क्षत्रियस्य क्षत्र बलं यद्वा इन्द्रस्य अमतिम् रूपम् व्रतम् कर्म च अजुर्यम् अजीर्णमविनश्वरम्[7] अनु रक्षमाणौ ॥ १ ॥

इरावतीर्वरुण धेनवो वां मधुमद् वां सिन्धवो मित्र दुह्रे ।
त्रयस्तस्थुर्वृषभासस्तिसृणां धिषणानां रेतोधा वि द्युमन्तः ॥ २ ॥

---

१. दानवत्याः वि° सर्व. २. निरा मूको ३. °चौ वा मूको. ३-४. विशेषे वि° श्र. ५-५. कर्माणि मूको. ६. शत्रून् मूको. ७. °कार् मूको. ८. °र्थम् निर मूको.

इरांऽवतीः । वरुण । धेनवः । वाम् । मधुंऽमत् । वाम् । सिन्धवः । मित्र । दुहे ।
त्रयः । तस्थुः । वृषभासः । तिसृणाम् । धिषणानाम् । रेतःऽधाः । वि । द्युऽमन्तः ॥ २ ॥

वेङ्कट० अन्नवत्यो हि [1-1]वरुण! मित्र! युवयोः[1-1] धेनवः। तदेवाह— मधूदकं युवयोः स्वभूताः सिन्धवः[2] क्षरन्ति। त्रयः ऋषभाः अग्निवायुसूर्याः तिसृणाम् धिषणानाम् धारकाः, लोका धिषणा उक्ताः, तासां रेतसो निधातारः, अग्निः पृथिव्या गर्भं दधाति वायुरन्तरिक्षस्य आदित्यः दिवः, दीप्तिमन्तः वि तस्थुः ॥ २ ॥

मुद्गल० हे वरुण! हे मित्र! वाम् युवयोराज्ञया धेनवः गावः इरावतीः क्षीरवत्यः भवन्ति। तथा वाम् सिन्धवः नद्यः मधुमत् रसम् दुहे दुहन्ति। तथा त्रयः त्रिसङ्ख्याकाः वृषभासः वर्षितारः रेतोधाः उदकस्य धारकाः द्युमन्तः दीप्तिमन्तोऽग्निवाय्वादित्याः तिसृणाम् त्रिसङ्ख्याकानाम् धिषणानाम् स्थानानां पृथिव्यन्तरिक्षद्युलोकानां स्वामिनः सन्तः वि विविधं प्रत्येकम् तस्थुः तिष्ठन्ति ॥ २ ॥

प्रातर्देवीमदितिं जोहवीमि मध्यंदिन उदिता सूर्यस्य ।
राये मित्रावरुणा सर्वतातेळे तोकाय तनयाय शं योः ॥ ३ ॥

प्रातः । देवीम् । अदितिम् । जोहवीमि । मध्यंदिने । उत्ऽइता । सूर्यस्य ।
राये । मित्रावरुणा । सर्वऽताता । ईळे । तोकाय । तनयाय । शम् । योः ॥ ३ ॥

वेङ्कट० मित्रावरुणसाहचर्याद् अदितेराह्वानं धनार्थम्। हे मित्रावरुणौ! यज्ञे पुत्राय तत्पुत्राय शम् च योः च याचामि[3]। शिष्टं स्पष्टमिति ॥ ३ ॥

मुद्गल० अहम् ऋषिः प्रातः प्रातःकाले अदितिम् देवानां जननीम् देवीम् द्योतमानाम् जोहवीमि आह्वयामि। तथा मध्यंदिने सूर्यस्य उदिता माध्यंदिने सवने जोहवीमि। हे मित्रावरुणा! मित्रावरुणौ! युवाम् राये धनप्राप्तये सर्वताता सर्वतातौ यज्ञे ईळे स्तौमि। पुनः किमर्थम्। तोकाय पुत्राय तनयाय तत्पुत्राय च शम् अरिष्टशमनाय योः सुखस्य मिश्रणाय[4] च ईळे ॥ ३ ॥

या धर्तारा रजसो रोचनस्योतादित्या दिव्या पार्थिवस्य ।
न वां देवा अमृता आ मिनन्ति व्रतानि मित्रावरुणा ध्रुवाणि ॥ ४ ॥

या । धर्तारा । रजसः । रोचनस्य । उत । आदित्या । दिव्या । पार्थिवस्य ।
न । वाम् । देवाः । अमृताः । आ । मिनन्ति । व्रतानि । मित्रावरुणा । ध्रुवाणि ॥ ४ ॥

वेङ्कट० यौ धर्तारौ दीप्तस्य लोकस्य, अपि च आदित्यौ [5-5]दिवि भवौ पार्थिवस्य[5-5] लोकस्य भर्तारौ। न युवयोः देवाः व्रतानि हिंसन्ति अमृताः हे मित्रावरुणौ! स्थिराणि कर्माणीति ॥ ४ ॥

---

१-१. युवयोः वरुण वि॰. २. नास्ति वि॰. ३. याम मूको. ४. °श्रपणा मूको. ५-५. नास्ति वि॰ वि॰.

मुद्गल० या यौ रोचनस्य रोचमानस्य रजसः लोकस्य स्वर्गाख्यस्य, उत अपि च पार्थिवस्य भूलोकस्य धर्तारा धर्तारौ आदित्या अदितेः पुत्रौ दिव्या दिवि भवौ, तौ युवाम् ईळे इति पूर्वत्र सम्बन्धः। हे मित्रावरुणा! मित्रावरुणौ! वाम्[1] युवयोः ध्रुवाणि व्रतानि कर्माणि देवाः अन्ये इन्द्रादयः अमृताः अमरणधर्माणोऽपि न आ मिनन्ति न[2] हिंसन्ति ॥ ४ ॥

इति चतुर्थाष्टके चतुर्थाध्याये सप्तमो वर्गः ॥ ७ ॥

[ ७० ]

पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वंसि वां सुमतिम् ॥ १ ॥

पुरुऽउरुणा । चित् । हि । अस्ति । अवः । नूनम् । वाम् । वरुण । मित्र । वंसि । वाम् । सुऽमतिम् ॥

वेङ्कट० पुरुणा उरुत्वेन अत्यन्तव्याप्त्या लक्षितम् पालनं युवयोः नूनम् हि अस्ति हे वरुण! हे मित्र!। तथा सति भजेय अहं युवयोः सुमतिम् ॥ १ ॥

मुद्गल० 'पुरूरुणा' इति चतुर्ऋचं चतुर्दशं सूक्तम्। उरुचक्रिः ऋषिः। गायत्री छन्दः। मित्रावरुणौ देवता ॥

पुरूरुणा पुरु च तद् उरु च पुरूरु अत्यन्तमुरुतमम्। आवक् वाम् युवयोः अवः रक्षणम् नूनम् निश्चयेन अस्ति। हि प्रसिद्धौ, चित् पूरणः। हे वरुण! हे मित्र! वाम् युवयोः सुमतिम् अनुग्रहबुद्धिम् वंसि संभजेय ॥ १ ॥

ता वां सम्यगद्रुह्वाणेषमश्याम धायसे । वयं ते रुद्रा स्याम ॥ २ ॥

ता । वाम् । सम्यक् । अद्रुह्वाणा । इषम् । अश्याम । धायसे । वयम् । ते । रुद्रा । स्याम ॥२॥

वेङ्कट० तौ वाम् भर्तृ हे अद्रोग्धारौ! अन्नम् सम्यक् प्राप्नुयाम। हे स्तुत्यौ! ते वयम् युवयोः परिचारकाः समृद्धा भवेम ॥ २ ॥

मुद्गल० हे अद्रुह्वाणा! अद्रोग्धारौ! मित्रावरुणौ! ता तौ प्रसिद्धौ वाम् युवाम् सम्यक्, स्तुम इति शेषः। स्तोतारो वयम् इषम् अन्नम् धायसे पानाय अश्याम प्राप्नुयाम। हे रुद्रा! दुःखाद् द्रावयितारौ! ते स्तोतारः वयम् स्याम भवेम। समृद्धा इति शेषः ॥ २ ॥

पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा । तुर्याम दस्यून् तनूभिः ॥ ३ ॥

पातम् । नः । रुद्रा । पायुऽभिः । उत । त्रायेथाम् । सुऽत्रात्रा । तुर्याम । दस्यून् । तनूभिः ॥३॥

वेङ्कट० रक्षतम् अस्मान् स्तुत्यौ! रक्षणैः। अपि च रक्षतम् अस्मान् शोभनेन रक्षणेन। तरेम शत्रून् अङ्गैः ॥ ३ ॥

मुद्गल० हे रुद्रा! मित्रावरुणौ देवौ! युवाम् नः अस्मान् पायुभिः रक्षणैः पातम् रक्षतम्। उत अपि च

१. नास्ति मूको. २. मा मूको.

पुत्राणां शोभनपालकौ युवाम् त्रायेथाम् अभिमतप्रापणेन रक्षतम्। वयं च तनूभिः पुत्रादिभिः सहिताः दस्यून् शत्रून् युवाम हिंस्याम ॥ ३ ॥

मा कस्याद्भुतक्रतू यक्षं भुजेमा तनूभिः । मा शेपसा मा तनसा ॥ ४ ॥

मा । कस्य । अद्भुतक्रतू इत्यद्भुतऽक्रतू । यक्षम् । भुजेम । तनूभिः । मा । शेपसा । मा । तनसा ॥

वेङ्कट० मा कस्य चिदन्यस्य[1] हे आश्चर्यकर्माणौ! वित्तं[2] यागयोग्यं भुजेम शरीरैः, मा च पुत्रेण, मा[3] च तत्पुत्रेण। आत्मार्थं सन्तानार्थं "वा परं" न याचेमहि ॥ ४ ॥

मुद्गल० हे अद्भुतक्रतू! आश्चर्यकर्माणौ! वयम् कस्य अन्यस्य यक्षम् पूजितं धनम् मा भुजेम मा भुञ्जीमहि तनूभिः अस्मदीयैरवयवैः[4]। युवयोरनुग्रहात् समृद्धा वयम् अन्ययाचितधनेन शरीरपोषं न कुर्मः इत्यर्थः। तथा "शेपसा अपत्येन सहिताः मा भुजेम"[4]। अन्ययाचितधनेन[5] शरीरपोषं न कुर्मः। तथा तनसा "पौत्रादिना सहिताः"[5] अन्यात्मकेन धनेन शरीरपोषम् मा कुर्मः ॥ ४ ॥

इति चतुर्थाष्टके चतुर्थाध्याये अष्टमो वर्गः ॥

## [७१]

आ नो गन्तं रिशादसा वरुण मित्र बर्हणा । उपेमं चारुमध्वरम् ॥ १ ॥

आ । नः । गन्तम् । रिशादसा । वरुण । मित्र । बर्हणा । उप । इमम् । चारुम् । अध्वरम् ॥ १ ॥

वेङ्कट० आ गच्छतम् अस्मान् हे हिंसकानामसितारौ! मित्रावरुणौ! वृद्धया, यज्ञं च उप आगच्छतम् कल्याणम्। अस्माकं यज्ञम् उपागच्छतमिति वा ॥ १ ॥

मुद्गल० 'आ नो गन्तम्' इति तृचं[6] पञ्चदशं सूक्तम्। बाहुवृक्त आत्रेय ऋषिः। गायत्री छन्दः। मित्रावरुणौ देवता ॥

हे वरुण! मित्र! रिशादसा! शत्रूणां क्षेप्तारौ! युवाम् नः अस्माकम् इमम् चारुम् रमणीयम् अध्वरम् यज्ञम् उप आ गन्तम् उपागच्छतम्[7]। कीदृशौ। बर्हणा हन्तारौ शत्रूणाम् ॥ १ ॥

विश्वस्य हि प्रचेतसा वरुण मित्र राजथः । ईशाना पिप्यतं धियः ॥ २ ॥

विश्वस्य । हि । प्रऽचेतसा । वरुण । मित्र । राजथः । ईशाना । पिप्यतम् । धियः ॥ २ ॥

वेङ्कट० सर्वस्य एव जगतः प्रकृष्टज्ञानौ! मित्रावरुणौ! राजथः, तथाविधौ आप्यायतम् कर्माणि[9] ॥ २ ॥

मुद्गल० हे मित्र! हे वरुण[8] प्रचेतसा! प्रकृष्टज्ञानौ[8] युवाम् विश्वस्य राजथ सर्वस्य स्वामिनौ भवथः। हि प्रसिद्धौ। हे ईशाना!(?) ईश्वरौ!(?) युवाम् धियः अस्मदीयानि कर्माणि पिप्यतम् प्याययतम् वर्धयतम् ॥ २ ॥

---

१. 'न्नस्य मूको. २. विधि मूको. ३. मा स्तोम तदेवाहा वि'. ४-४. चापं वि'. ५-५. नास्ति मूको. ६. धनेन मूको. ७. निर्वेचम् मूको. ८. 'ध्वन्ताम् मूको ९. 'णि वा वि'.

उप॑ नः सु॒तमा ग॑तं॒ वरु॑ण॒ मित्र॑ दा॒शुषः॑ । अ॒स्य सोम॑स्य पी॒तये॑ ॥ ३ ॥

उप॑ । नः॒ । सु॒तम् । आ । ग॒त॒म् । वरु॑ण । मित्र॑ । दा॒शुषः॑ । अ॒स्य । सोम॑स्य । पी॒तये॑ ॥ ३ ॥

वेङ्कट० उप आ गच्छतम् वरुण! मित्र! अस्माकम् अस्य यजतोऽध्वर्योः सोमम् । तदेवाह—अस्य सोमस्य पानाय ॥ ३ ॥

मुद्गल० नः अस्माकम् सुतम् अभिषुतं सोमं प्रति हे वरुण! हे मित्र! युवाम् उप आ गतम् आगच्छतम् । दाशुषः हविर्दातुर्मम अस्य सोमस्य पीतये पानाय ॥ ३ ॥

इति चतुर्थाष्टके चतुर्थाध्याये नवमो वर्गः ॥

[ ७२ ]

आ मि॒त्रे वरु॑णे व॒यं गी॒र्भिर्जु॑हुमो अत्रि॒वत् । नि ब॒र्हिषि॑ सदतं॒ सोम॑पीतये ॥ १ ॥

आ । मि॒त्रे । वरु॑णे । व॒यम् । गीः॒ऽभिः । जु॒हु॒मः॒ । अ॒त्रि॒ऽवत् । नि । ब॒र्हिषि॑ । स॒द॒त॒म् । सोम॑ऽपीतये ॥

वेङ्कट० मित्रे वरुणे च वयम् स्तुतिभिः आह्वानं कुर्मः । तौ[1] यथा अत्रिः आजुहाव । [2]शिष्टं स्पष्टम्[3] ॥ १ ॥

मुद्गल० 'आ मित्रे' इति तृचं षोडशं सूक्तम् । बाहुवृक्तः ऋषिः । उष्णिक् छन्दः । मित्रावरुणौ देवता ॥

वयम् आत्रेयाः मित्रे वरुणे मित्रावरुणयोरर्थाय गीर्भिः मन्त्रैः आ जुहुमः अत्रिवत् अस्मद्गोत्रप्रवर्तकोऽत्रिरिव । तस्मात् हे मित्रावरुणौ! सोमपीतये बर्हिषि नि सदतम् निषीदतम् ॥ १ ॥

व्र॒तेन॑ स्थो ध्रु॒वक्षे॑मा॒ धर्म॑णा यातय॒ज्जना॑ । नि ब॒र्हिषि॑ सदतं॒ सोम॑पीतये ॥ २ ॥

व्र॒तेन॑ । स्थः॒ । ध्रु॒वऽक्षे॑मा । धर्म॑णा । या॒त॒य॒त्ऽज॑ना । नि । ब॒र्हिषि॑ । स॒द॒त॒म् । सोम॑ऽपीतये ॥ २ ॥

वेङ्कट० कर्मणा भवथः ध्रुवक्षेमौ कर्मणैव[4] नियतारौ जनानां[5] यथा ॥ २ ॥

मुद्गल० हे मित्रावरुणौ! युवाम् धर्मणा जगद्धारकेण व्रतेन कर्मणा ध्रुवक्षेमा स्थः अविचलितस्थानौ भवथः । यातयज्जना यातयन्तः कर्मसु प्रवर्तयन्तो जना ऋत्विजो ययोस्तौ यातयज्जनौ बर्हिषि नि सदतम् सोमपीतये ॥ २ ॥

मि॒त्रश्च॑ नो॒ वरु॑णश्च जु॒षेतां॑ य॒ज्ञमि॒ष्टये॑ । नि ब॒र्हिषि॑ सदतां॒ सोम॑पीतये ॥ ३ ॥

मि॒त्रः । च॒ । नः॒ । वरु॑णः । च॒ । जु॒षेता॑म् । य॒ज्ञम् । इ॒ष्टये॑ । नि । ब॒र्हिषि॑ । स॒द॒ता॒म् । सोम॑ऽपीतये ॥

वेङ्कट० निगदसिद्धा । याग इष्टिः ॥ ३ ॥

---

१. नास्ति रुप. २-२. नास्ति वि°. ३. निरूपणम् मूको. ४. नास्ति वि° रुपं. ५. नियत° स; वरित° रुपं.

मुद्गल० मित्रः च वरुणः च उभौ न अस्माकम् यज्ञम् इष्टये अभीष्टये[1] जुषेताम् सेवेताम् । बर्हिषि नि सदताम् निषीदताम्[2] सोमपीतये सोमपानाय ॥ ३ ॥

इति चतुर्थाष्टके चतुर्थाध्याये दशमो वर्गः ॥

इति पञ्चमे मण्डले पञ्चमोऽनुवाकः ॥

[ ७३ ]

यद॒द्य स्थः प॑रा॒वति॒ यद॑र्वा॒वत्य॑श्विना ।
यद्वा॑ पु॒रू पु॑रुभुजा॒ यद॒न्तरि॑क्ष॒ आ ग॑तम् ॥ १ ॥

यत् । अ॒द्य । स्थः । प॒रा॒ऽवति॑ । यत् । अ॒र्वा॒ऽवति॑ । अ॒श्वि॒ना॒ ।
यत् । वा॒ । पु॒रु । पु॒रु॒ऽभु॒जा॒ । यत् । अ॒न्तरि॑क्षे । आ । ग॒त॒म् ॥ १ ॥

वेङ्कट० पौरः । यत् इदानीं दूरे भवथः यत् वा अन्तिके हे पुरुभोक्तारौ अश्विनौ[1] विस्तीर्णेऽन्तरिक्षे वा देशे यदि वा अन्तरिक्षे, तत आ गच्छतम् ॥ १ ॥

मुद्गल० षष्ठेऽनुवाके पञ्चदश सूक्तानि । तत्र 'यदद्य स्थः' इति दशर्चं प्रथमं सूक्तम् । आत्रेयः पौर ऋषिः । अनुष्टुप् छन्दः । अश्विनौ देवता ।

हे पुरुभुजा ! बहुषु यज्ञेषु भोक्तारौ[1] अश्विना ! अश्विनौ[1] यत् यदि अद्य अस्मिन् काले परावति अत्यन्तं दूरदेशे द्युलोके स्थः भवथः । यत् वा अर्वावति गन्तुं शक्ये प्रदेशे अन्तिके स्थः । यत् यदि वा पुरु बहुप्रदेशेषु स्थः । यत् यदि अन्तरिक्षे स्थः । तस्मात्सर्वस्मात् अत्र आ गतम् आगच्छतम् ॥ १ ॥

इ॒ह त्या पु॑रु॒भूत॑मा पु॒रू दंसां॑सि॒ बिभ्र॑ता ।
व॒र॒स्या या॒म्यध्रि॑गू हु॒वे तु॒विष्ट॑मा भु॒जे ॥ २ ॥

इ॒ह । त्या । पु॒रु॒ऽभूत॑मा । पु॒रु । दंसां॑सि । बिभ्र॑ता ।
व॒र॒स्या । या॒मि॒ । अध्रि॑गू॒ इत्यध्रि॑ऽगू । हु॒वे । तु॒विःऽत॑मा । भु॒जे ॥ २ ॥

वेङ्कट० इह तौ[1] बहूनां भावयितारौ बहूनि कर्माणि धारयन्तौ धनेच्छया याचामि । अप्रतिगमनौ ह्वयामि बहुतमौ भोगाय ॥ २ ॥

मुद्गल० इह अस्मिन् यज्ञे त्या तौ पुरुभूतमा पुरूणां बहूनां यजमानानां भावयितृतमौ पुरु पुरूणि दंसांसि कर्माणि बिभ्रता धारयन्तौ वरस्या वरणीयौ अध्रिगू अन्यैरप्रतिहतगमनकर्माणौ[4] यामि उपागच्छामि । तुविष्टमा प्रभूततमौ भुजे भोगाय हुवे आह्वयामि ॥ २ ॥

---

१ अभिष्टये मूको । २. °दत तम् मूको । ३. त्यौ वि° । ४ °णौ ध्रुवा मूको ।

ईर्मान्यद् वपुषे वपुश्चक्रं रथस्य येमथुः ।
पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः ॥ ३ ॥

ईर्मा । अन्यत् । वपुषे । वपुः । चक्रम् । रथस्य । येमथुः ।
परि । अन्या । नाहुषा । युगा । मह्ना । रजांसि । दीयथः ॥ ३ ॥

वेङ्कट० समितम् अन्यत् उदकार्थम् उह्यमानम् रथस्य चक्रम् अश्विनौ! येमथुः । परि गच्छथः अन्येन महता महोरात्राणि लोकांश्च, त्रिकर्मको वा, लोकेष्विति ॥ ३ ॥

मुद्गल० हे अश्विनौ! युवाम् रथस्य युष्मदीयस्य अन्यत् चक्रम् ईर्मा गन्तरि आदित्ये वपुषे तस्य शोभायै वपुः वपुष्मत् तेजस्वत् चक्रम् येमथुः नियमितवन्तौ स्थ. । अन्या अन्येन चक्रेण मह्ना महत्त्वेन नाहुषा युगा, नहुषा मनुष्याः तेषां युगा युगोपलक्षितान् कालान् प्रातरादिसवनानि रजांसि लोकान् च परि दीयथः परिगच्छथ. ॥ ३ ॥

तदू षु वामेना कृतं विश्वा यद् वामनु ष्टवे ।
नाना जातावरेपसा समस्मे बन्धुमेयथुः ॥ ४ ॥

तत् । ऊँ इति । सु । वाम् । एना । कृतम् । विश्वा । यत् । वाम् । अनु । स्तवे ।
नाना । जातौ । अरेपसा । सम् । अस्मे इति । बन्धुम् । आ । ईयथुः ॥ ४ ॥

वेङ्कट० तत् सुष्ठु एतत् युवयोः कर्म व्याप्तौ!, यत् वाम् अहम् अनु स्तौमि । पृथगुत्पन्नौ अपापौ अस्मासु धनम् सम् गमयथ. ॥ ४ ॥

मुद्गल० हे विश्वा! व्याप्तौ! यत् येन स्तोत्रेण वाम् अनु स्तवे अनुष्टुवे तत्, ऊं पूरणः, एना अनेन पौरेण सु सुष्ठु वाम् युवाभ्याम् कृतम् सम्पादितं भवतु । नाना पृथगेव जातौ समुत्पन्नौ अरेपसा अपापौ अस्मे अस्मभ्यम् बन्धुम् धनम् सम् आ ईयथुः सम्यक् गमयथ[1], सम्यक् प्रयच्छतमित्यर्थः ॥ ४ ॥

आ यद् वां सूर्या रथं तिष्ठद् रघुष्यदं सदा ।
परि वामरुषा वयो घृणा वरन्त आतपः ॥ ५ ॥

आ । यत् । वाम् । सूर्या । रथम् । तिष्ठत् । रघुऽस्यदम् । सदा ।
परि । वाम् । अरुषाः । वयः । घृणा । वरन्ते । आऽतपः ॥ ५ ॥

वेङ्कट० आ तिष्ठत् यदा युवयोः सूर्यस्य दुहिता रथम् सर्वदा शीघ्रं गच्छन्तम्, तदा वाम् परि अवृणन् आरोचमानाः गन्तारो रश्मयः. छन्दांसि वा दीप्त्याऽऽतापयितारः ॥ ५ ॥

---

१. गमयथः मूको.

मुद्गल० हे अश्विनौ! वाम् युवयोः सदा- सर्वदा रघुष्यदम् शीघ्रगम् रथम् सूर्या युवयोः पत्नी यत् यदा आ तिष्ठत् आस्थितवती, तदा वाम् परि परितः वरन्ते वृण्वन्ति[1] । के । अरुषाः आरोच्यमानाः घृणाः दीप्ताः आतपः आतापनाः शत्रूणाम् वयः अश्वाः ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये एकादशो वर्गः ॥

युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा । घर्मं यद्वामरेपसं नासत्यास्ना भुरण्यति ॥ ६ ॥

युवोः । अत्रिः । चिकेतति । नरा । सुम्नेन । चेतसा ।
घर्मम् । यत् । वाम् । अरेपसम् । नासत्या । आस्ना । भुरण्यति ॥ ६ ॥

वेङ्कट० युवाम् अत्रिः जानाति हे नरौ! सुखयुक्तेन[2] चेतसा । यदा अग्निम् अरेपसम् गवीभ्यं हे नासत्यौ! आस्येन भुरण्यति बिभर्ति । आस्यम् उदकम् अभिरम्याम् अक्षाभिरिति ॥ ६ ॥

मुद्गल० हे नरा! अश्विनौ! युवोः युवयोः, युवामित्यर्थः, अत्रिः अस्मत्पिता अत्रिः सुम्नेन सुखेन चेतसा मनसा चिकेतति जानाति, स्तुतवानित्यर्थः । सति दुःखे सुखम् अपेक्ष्यते,[3] दुःखस्य कः प्रसङ्ग इत्यत आह । यत् यस्मात् हे नासत्या! नासत्यौ! वाम् युवयोः आस्ना आस्येन हविष्पकेन कोष्ठेण घर्मम् दीप्तं दहन्तम् अग्निम् असुरैः स्वदाहाय प्रक्षिप्तम् अरेपसम् अपापं सुखकरम् भुरण्यति प्रापयत् ॥ ६ ॥

उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः ।
यद्वां दंसोभिरश्विनात्रिर्नराववर्तति ॥ ७ ॥

उग्रः । वाम् । ककुहः । ययिः । शृण्वे । यामेषु । सम्ऽतनिः ।
यत् । वाम् । दंसःऽभिः । अश्विना । अत्रिः । नरा । आऽववर्तति ॥ ७ ॥

वेङ्कट० उद्गूर्णो युवयोः महान् रथः श्रूयते गमनेषु सन्तन्यमानः, यदा वाम् कर्मभिः हे अश्विनौ! नेतारौ![4] अत्रिः आवर्तयति[5] ॥ ७ ॥

मुद्गल० उग्रः उद्गूर्णबलः वाम् युवयोः ककुहः उच्छ्रितो महान् ययिः गन्ता सन्तनिः सततं गच्छन् रथः यामेषु गमनेषु शृण्वे श्रूयते । हे अश्विना! अश्विनौ! हे नरा! नेतारौ! यत् यस्मात् वाम् युवाम् दंसोभिः कर्मभिः अत्रिः अस्मत्पिता आववर्तति आवर्तयति ॥ ७ ॥

मध्व ऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी ।
यत्समुद्राति पर्षथः पक्वाः पृक्षो भरन्त वाम् ॥ ८ ॥

मध्वः । ऊँ इति । सु । मधुऽयुवा । रुद्रा । सिसक्ति । पिप्युषी ।
यत् । समुद्रा । अति । पर्षथः । पक्वाः । पृक्षः । भरन्त । वाम् ॥ ८ ॥

1. शृण्व° मूको. 2. °सुखे वि° उपं. 3. °क्षते मूको. 4. नास्ति मूको. 5. °यति स्म मूको.

वेङ्कट० हे सोमेच्छौ ! स्तुत्यौ ! वां सोमस्य धारा सेवते प्यायपन्तौ । यदा युवाम् अन्तरिक्षम् अभिगच्छथः, तदानीं पक्वान्यन्नानि वाम् ददति ॥ ८ ॥

मुद्गल० हे मधूयुवा ! मधुरस्य सोमादेर्मिश्रयितारौ ! हे रुद्रा ! रुद्रपुत्रौ ! वाम् युवाम् मध्वः मधुररसेन सु पिप्युषी सुष्ठु प्यायपन्ती स्तुतिरस्मत्कृता सिषक्ति सेवते । यत् यदा समुद्रा समुद्रद्रवणसाधनानि[1] अन्तरिक्षाणि अति पर्षथः अतिपारयथः, यज्ञं प्राप्नुथ इत्यर्थः । पक्वाः[2] पृक्षः अन्नानि भरन्त ध्रियन्ते यजमानैः ॥ ८ ॥

सत्यमिद् वा उं अश्विना युवामाहुर्मयोभुवां ।
ता यामन् यामहूतमा यामन्ना मृळयत्तमा ॥ ९ ॥

सत्यम् । इत् । वै । ऊँ इति । अश्विना । युवाम् । आहुः । मयःऽभुवा ।
ता । यामन् । यामऽहूतमा । यामन् । आ । मृळयत्ऽतमा ॥ ९ ॥

वेङ्कट० सत्यमेव हे अश्विनौ ! युवाम् आहुः सुखस्य भावयितारौ गमनेऽतिशयेन गमनार्थं स्तोतृभिः ह्वातव्यौ भवथः, एवं सुखयितृतमौ च ॥ ९ ॥

मुद्गल० हे अश्विना ! अश्विनौ ! युवाम् सत्यम् इत् सत्यमेव । वै उ पूरणौ । मयोभुवा सुखस्य भावयितारौ आहुः पुराविदः । ता तौ सुखकरत्वेन प्रसिद्धौ युवाम् यामन् यज्ञे यामहूतमा गमनार्थं भृशम् आह्वातव्यौ भवतम्[3] इति शेषः । यामन् अस्मिन् यज्ञे मृळयत्तमा च अतिशयेन सुखयितारौ भवतम् । आ चार्थे ॥ ९ ॥

इमा ब्रह्माणि वर्धनाश्विभ्यां सन्तु शंतमा ।
या तक्षाम रथाँइवावोचाम बृहन्नमः ॥ १० ॥

इमा । ब्रह्माणि । वर्धना । अश्विऽभ्याम् । सन्तु । शम्ऽतमा ।
या । तक्षाम । रथान्ऽइव । अवोचाम । बृहत् । नमः ॥ १० ॥

वेङ्कट० इमानि स्तोत्राणि वर्धनानि अश्विभ्याम् सन्तु सुखतमानि, यानि कुर्वन्तो वयम् रथान् इव, अवोचाम आभ्यां महान्त नमस्कारं स्तुतिं वा ॥ १० ॥

मुद्गल० इमा इमानि इदानीं कृतानि ब्रह्माणि स्तोत्राणि अश्विभ्याम् वर्धना समर्धकानि शन्तमा सुखतमानि सन्तु । या यानि तक्षाम सम्पादयाम रथान् इव शिल्पी, तानि सुखतमानि सन्तु । वयम् बृहत् प्रभूतम् नमः नमस्कारोक्तिम् अवोचाम ॥ १० ॥

इति चतुर्थाष्टके चतुर्थाध्याये द्वादशो वर्गः ॥

---

1. समुद्र° मूको. 2. °क्व मूको. 3. °न्तौ मूको.

[ ७४ ]

कूष्ठो देवावश्विनाद्या दिवो मनावसू । तच्छ्रवथो वृषण्वसू अत्रिर्वामा विवासति ॥ १ ॥

कूऽस्थः[1] । देवौ । अश्विना । अद्य । दिवः । मनावसू इति ।
तत् । श्रवथः । वृषण्वसू इति वृषण्ऽवसू । अत्रिः । वाम् । आ । विवासति ॥ १ ॥

वेङ्कट० क स्थितौ हे देवौ! अश्विनौ! अद्य दिवः आवर्तयतम्[2] हे पूजनीयधनौ!। तत् शृणुतम् हे वृष्यमाणधनौ!, यत् अत्रिकुलजातः वाम् परिचरति स्तोत्रेण। तत् स्तोत्रमिति ॥ १ ॥

मुद्गल० 'कूष्ठः' इति दशर्चं द्वितीयं सूक्तम्। पौर ऋषिः। अनुष्टुप् छन्दः। अश्विनौ देवता।

हे देवौ! मनावसू! स्तुतिधनौ! अश्विना! अश्विनौ! अद्य अस्मिन् यागदिने दिवः द्युलोकात् आगत्य कूष्ठः क्व भूमौ तिष्ठन्तौ सन्तौ तत् स्तोत्रम् श्रवथः शृणुथः। हे वृषण्वसू! वर्षकधनौ! वाम् अत्रिः अत्रेः पुत्रः आ विवासति सर्वतः परिचरति ॥ १ ॥

कुह त्या कुह नु श्रुता दिवि देवा नासत्या ।
कस्मिन्ना यतथो जने को वां नदीनां सचा ॥ २ ॥

कुह । त्या । कुह । नु । श्रुता । दिवि । देवा । नासत्या ।
कस्मिन् । आ । यतथः । जने । कः । वाम् । नदीनाम् । सचा ॥ २ ॥

वेङ्कट० कस्मिन् दीप्ते लोके तौ देवौ नासत्यौ भवतः, कस्मिन् वा विश्रुतौ, कस्मिन्[1] वा जने आ गच्छथः। कः च युवयोः स्तुतीनां सेविता। स्तुवतो भवः ॥ २ ॥

मुद्गल० त्या तौ देवा देवौ नासत्या अश्विनौ कुह कुत्र तिष्ठतः[3]। नु अद्य कुह श्रुता कुत्र श्रुतौ। दिवि द्युलोके, निवसत इति शेषः। अथ[4] प्रत्यक्षकृतः। हे देवौ! युवाम् कस्मिन् जने यजमाने आ यतथः आगच्छथः। कः स्तोता वाम् युवयोः नदीनाम् स्तुतीनाम् सचा सहायः स्यात् ॥ २ ॥

कं याथः कं ह गच्छथः कमच्छा युञ्जाथे रथम् ।
कस्य ब्रह्माणि रण्यथो वयं वामुश्मसीष्टये ॥ ३ ॥

कम् । याथः । कम् । ह । गच्छथः । कम् । अच्छ । युञ्जाथे इति । रथम् ।
कस्य । ब्रह्माणि । रण्यथः । वयम् । वाम् । उश्मसि । इष्टये ॥ ३ ॥

वेङ्कट० कम् प्राप्नुथः, कम् प्राप्तुम् गच्छथः, कम् च अभिगन्तुम् युञ्जाथे रथम्, कस्य वा ब्रह्माणि कामयेथे[6], वयम् इदानीम् वाम् कामयामहे यज्ञार्थम् ॥ ३ ॥

---

१. कोऽस्थः वैप १,११२४ f.c. २. मा वर्तयति मूको. ३. नास्ति वि'. ४. °थ्यः मूको.
५. नास्ति मूको. ६. कामयेते ल; कामयते एवं.

मुद्गल० हे अश्विनौ! युवाम् कम् यजमानं प्रति याथः, कम् [illegible] कं च प्रति गच्छथः। गत्वा च केन सह सङ्गतौ भवथः। कम् वा अच्छ अभिप्राप्तुम् युञ्जाथे योजयथः रथम् अश्वैः। कस्य ब्रह्माणि स्तोत्राणि रण्यथः रमेथे। वयम् च वाम् युवाम् इष्मे आगमनार्थं उश्मसि कामयामहे[2]। तस्मात् कस्य चन[3] यागं प्रति न गन्तव्यमित्यर्थः ॥ ३ ॥

पौरं चिद्ध्युदप्रुतं पौरं पौराय जिन्वथः।
यदीं गृभीततातये सिंहमिव द्रुहस्पदे ॥ ४ ॥

पौरम्। चित्। हि। उदऽप्रुतम्। पौरं। पौराय। जिन्वथः।
यत्। ईम्। गृभीतऽतातये। सिंहम्ऽइव। द्रुहः। पदे ॥ ४ ॥

वेङ्कट० पौरम् पौरो मेघः पूरणात् तम् उदप्रुतम्, पौर! इत्यस्मिन्निर्वे[4] "वाचये वान्वितम्"[5] इत्युक्तम्, पौरनाम्ने महम् उदकेन पूरयथः, यथेनम् अनुदके देशे शत्रोः स्थाने सिंहम् इव लीनं युद्धार्थं मापयथः सहगृहीतं धनं तायते यत्र भटेभ्यः तन्वेति ॥ ४ ॥

मुद्गल० हे पौर! पौरसम्बन्धिनौ अश्विनौ! युवाम् पौरम्, चित् इति पूरणः, पौराणां वृष्टयर्थं माध्यमानरवेण सम्यन्धात् मेघोऽपि पौरः, तम् उदप्रुतम् उदकप्लावकं मेघम् पौराय ऋषये महम् जिन्वथः प्रेरयथः। यत यौ युवाम्, [illegible] पूरणः, गृभीततातये गृहीतयजमानाय पौराय ईम् एनं मेघं प्रति गच्छथः, द्रुहः पदे द्रोहस्य स्थाने अरण्यदेशे सिंहम् इव गर्जन्तं प्रवर्षं सिंहं यथा बलात् व्यापयन्ति सूराशब्दम् क्रियाय इति ॥ ४ ॥

प्र च्यवानाज्जुजुरुषो वव्रिमत्कं न मुञ्चथः।
युवा यदी कृथः पुनरा काममृण्वे वध्वः ॥ ५ ॥

[illegible]। च्यवानात्। जुजुरुषः। वव्रिम्। अत्कम्। न। मुञ्चथः।
युवा। यदि। कृथः। पुनः। आ। कामम्। ऋण्वे। वध्वः ॥ ५ ॥

वेङ्कट० प्र मुञ्चथः जीर्णात्[6] च्यवानात् जराम् कवचम् इव कामयन्ते। यदा चायं च्यवानः पुनः युवा भवद्याम् कृथः, औणादिकथप्रत्ययः, अनन्तरं स युवतीः यथाकामम् आत्मानं प्रापयामास प्राप्तयौवनः। 'जुजुरुषो नासत्या' (ऋ १,११६,१०) इत्युक्तम् ॥ ५ ॥

मुद्गल० च्यवानात् ऋषेः जुजुरुषः जरसा जीर्णात् सकाशात् वव्रिम् हेयं पुराणं रूपम् अत्कम् न कवचमिव प्र मुञ्चथः प्रमुञ्चतम्। 'प्रामुञ्चतं द्रापिमिव च्यवानात्' (ऋ १,११६,१०) इत्यादि मन्त्रान्तरम्। यदि यदा पुनः युवा कृथः, युवानं कुरुथः इत्यर्थः। तदा वध्वः सुरूपायाः स्त्रियः कामम् कमनीयं रूपम् आ ऋण्वे प्राप्तवान् ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये त्रयोदशो वर्गः ॥

1. गमना° मूको.    2. °यामः मूको.    3. च मूको.    4. वैप १,२११२ n मं.
5-5. °यथेनाम्नि° मूको.    6. दीप्ता मूको.

अस्ति हि वामिह स्तोता स्मसि वां संदृशि श्रिये ।
नू श्रुतं म आ गतमवोभिर्वाजिनीवसू ॥ ६ ॥

अस्ति । हि । वाम् । इह । स्तोता । स्मसि । वाम् । सम्ऽदृशि । श्रिये ।
नु । श्रुतम् । मे । आ । गतम् । अवःऽभिः । वाजिनीवसू इति वाजिनीऽवसू ॥ ६ ॥

वेङ्कट० भवति हि वाम् अत्र स्तोता, तथा सति भवाम युवयो सुदर्शने श्र्यर्थम्[1] । उक्त[2] एकवचन-बहुवचनयोरसमन्वय । क्षिप्र श्रूयमाणं मदीय स्तोत्रम् आ गच्छतम् पालने हे अन्नधनौ[3] ॥ ६ ॥

मुद्गल० हे अश्विनौ[1] वाम् स्तोता, पौरः अस्ति हि वर्तते खलु । हे देवौ[1] वाम् इह सन्दर्शने संनिधाने स्मसि स्म भवेम । किमर्थम् । श्रिये । नु अथ मे मदीयमाह्वानम् श्रुतम् शृणुतम् । श्रुत्वा आ गतम् आगच्छतम् । किम् तूष्णीम्, नेत्याह । अवोभि रक्षणै सह हे[1] वाजिनीवसू । अन्नवसू[1] ॥ ६ ॥

को वामद्य पुरूणामा वव्ने मर्त्यानाम् ।
को विप्रो विप्रवाहसा को यज्ञैर्वाजिनीवसू ॥ ७ ॥

कः । वाम् । अद्य । पुरूणाम् । आ । वव्ने । मर्त्यानाम् ।
कः । विप्रः । विप्रऽवाहसा । कः । यज्ञैः । वाजिनीवसू इति वाजिनीऽवसू ॥ ७ ॥

वेङ्कट० बहूना मनुष्याणा मध्ये क वाम् अद्य आ[4] भजते, क मेधावी स्तोत्रेण हे विप्रै वहमानौ[4], क वा यजमान यज्ञै हे अन्नवसू[1] ॥ ७ ॥

मुद्गल० हे वाजिनीवसू । अन्नवसू[1] वाम् युवाम् अद्य अस्मिन् दिने पुरूणाम् मर्त्यानाम् मध्ये क आ वव्ने 'सर्वतो भजति'[5] । हे विप्रवाहसा । विप्रस्य यजमानस्य अभिमतप्रापयितारौ[1] युवाम् क विप्र यज्ञैः, क यजमान यज्ञै युवा वव्ने ॥ ७ ॥

आ वां रथो रथानां येष्ठो यात्वश्विना ।
पुरू चिदस्मयुस्तिर आङ्गूषो मर्त्येष्वा ॥ ८ ॥

आ । वाम् । रथः । रथानाम् । येष्ठः । यातु । अश्विना ।
पुरु । चित् । अस्मऽयुः । तिरः । आङ्गूषः । मर्त्येषु । आ ॥ ८ ॥

वेङ्कट० "हे अश्विनौ"[5] आ यातु युवयो रथ रथानाम् मध्येऽतिशयेन गन्ता । बहुधनम् अस्मभ्य प्रयच्छतु अस्मत्काम प्राप्त । तस्य रथस्य स्तोम मर्त्येषु भवति ॥ ८ ॥

मुद्गल० हे अश्विना[1] अश्विनौ[1] वाम् युवयो रथ एको रथ रथानाम् येष्ठ. इतरदेवरथानाम्

---

1 °मनुष्यम मूको 2 उक्तम् मूको. 3 नास्ति मूको 4-4. वव्ने मूको, 5-5. नास्ति मूको

मध्ये अतिशयेन गन्ता सन् आ यातु। कीदृशः सन्। पुरु चित् बहून् अपि अस्मद्विरोधिनः तिरः हिंसकः अस्मयुः अस्मान् कामयमानः मर्त्येषु सर्वेषु यजमानेषु मध्ये आङ्गूषः स्तुत्यः। आ पूरणः ॥ ८ ॥

शमू षु वां मधूयुवास्माकमस्तु चर्कृतिः ।
अर्वाचीना विचेतसा विभिः श्येनेव दीयतम् ॥ ९ ॥

शम् । ऊँ इति । [redacted] । वाम् । मधुऽयुवा । अस्माकम् । अस्तु । चर्कृतिः ।
अर्वाचीना । विऽचेतसा । विऽभिः । श्येनाऽइव । दीयतम् ॥ ९ ॥

वेङ्कट० सुखकर्त्री एव सुष्ठु भवतु युवयोः हे सोमेप्सू! अस्माकम् स्तुतिः पुनःपुनः क्रियमाणा। अभिमुखौ हे सुमती! युवाम् अश्वैः श्येनाविवागच्छतम् ॥ ९ ॥

मुद्गल० हे मधूयुवा! मधुमन्तौ! वाम् युवाभ्याम् चर्कृतिः युवाभ्याम् अर्थाय पुनःपुनः क्रियमाणं स्तोत्रम् अस्माकम् सु सुष्ठु शम् उ सुखकरमेव अस्तु भवतु। हे अर्वाचीना!(?) अर्वागस्मदभिमुखाञ्चनौ! हे विचेतसा! विशिष्टप्रज्ञौ! श्येना इव श्येनाविव विभिः गन्तृभिः अश्वैः दीयतम् गच्छतम् ॥ ९ ॥

आश्विना यद्ध कर्हि चिच्छुश्रूयातमिमं हवम् ।
वस्वीरू षु वां भुजः पृञ्चन्ति सु वां पृचः ॥ १० ॥

अश्विना । यत् । [redacted] । कर्हि । चित् । शुश्रुयातम् । इमम् । हवम् ।
वस्वीः । ऊँ इति । सु । वाम् । भुजः । पृञ्चन्ति । सु । वाम् । पृचः ॥ १० ॥

वेङ्कट० अश्विनौ! यदि कदाचित् इमम् हवम्[1] आह्वानम् शृणुयातम्। प्रशस्तानि भोजनानि सुष्ठु युवाभ्याम् पृञ्चन्ति। तदेवाह — पृञ्चन्ति इति। सुष्ठु वाम् अन्नानि प्रयच्छन्तीति ॥ १० ॥

मुद्गल० हे अश्विनौ! युवाम् यत् ह कर्हि चित् यत्र कुत्रचित् स्थितवन्तौ भवथः, तत्रापि मे इमम् हवम् आह्वानम् शुश्रुयातम् शृणुतम्। श्रुत्वा आगच्छतमित्यर्थः। किमर्थम्। वस्वीः प्रशस्तानि भुजः धनानि हविर्लक्षणानि सु सुष्ठु वाम् युवाम् पृञ्चन्ति मिश्रयन्ति प्राप्नुवन्ति। उ पूरणः। कीदृश्यो भुजः। वाम् युवाम् सु सुष्ठु पृचः सम्पर्चनाः। युवां प्राप्तुकामाः यजमाना इत्यर्थः ॥ १० ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये चतुर्दशो वर्गः ॥

[ ७५ ]

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवम् ॥ १ ॥

---

१. नास्ति मूको.

प्रति । प्रियऽतमम् । रथम् । वृषणम् । वसुऽवाहनम् ।
स्तोता । वाम् । अश्विनौ । ऋषिः । स्तोमेन । प्रति । भूषति । माध्वी इति । मम । श्रुतम् । हवम् ॥१॥

वेङ्कट० अवस्युः । प्रति भूषति स्तुतिभिरलङ्करोति प्रियतमम् रथम् वर्षितारं धनानां प्रापयितारं युवयोः स्तोता अवस्युः ऋषिः हे अश्विनौ ! । हे मधुमन्तौ ! मम शृणुतम् ह्वानम् ॥ १ ॥

मुद्गल० 'प्रति प्रियतमम्' इति नवर्चं तृतीयं सूक्तम् । अवस्युः नाम आत्रेय ऋषिः । पङ्क्तिः छन्दः । अश्विनौ देवता ॥

हे अश्विनौ ! एकः प्रतिशब्दोऽनुवादः । वाम् युवयोः प्रियतमम् रथम् स्तोता ऋषिः अवस्युः स्तोमेन प्रति भूषति अलङ्करोति । कीदृशं रथम् । वृषणम् वर्षितारं फलानाम् वसुवाहनम् धनवाहकम् । ईदृशं रथमागमनाय स्तौतीत्यर्थः । तस्मात् हे माध्वी ! मधुविद्यावेदितारौ ! मम हवम् आह्वानम् श्रुतम् शृणुतम् ॥ १ ॥

अत्यायातमश्विना तिरो विश्वा अहं सना ।
दस्रा हिरण्यवर्तनी सुषुम्ना सिन्धुवाहसा माध्वी मम श्रुतं हवम् ॥ २ ॥

अति॒ऽआयातम् । अश्विना । तिरः । विश्वाः । अहम् । सना ।
दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । सुऽसुम्ना । सिन्धुऽवाहसा । माध्वी इति । मम ।
श्रुतम् । हवम् ॥ २ ॥

वेङ्कट० अत्यागच्छतम् हे अश्विनौ ! तिरस्कृत्य अन्याः प्रजाः, अहम् हि युवयोः पुरातनः । हे दस्रौ ! हिरण्ययुक्तमार्गौ हे सुसुखौ ! सिन्धूनां प्रापयितारौ ॥ २ ॥

मुद्गल० हे अश्विना ! अश्विनौ ! अत्यायातम् यजमानान् अतिक्रम्यागच्छतम्, यथा अहम् ऋषिः विश्वाः सर्वाः अस्मद्विरोधिप्रजाः सना सदा तिरस्करोमि । हे दस्रा ! शत्रूणामुपक्षपयितारौ ! हिरण्यवर्तनी हिरण्यरथौ हे सुषुम्ना ! सुमनौ ! सिन्धुवाहसा नदीनां प्रवाहयितारौ वृष्टिप्रेरणेन । तादृशौ युवाम् अत्यायातम् ॥ २ ॥

आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवम् ॥ ३ ॥

आ । नः । रत्नानि । बिभ्रतौ । अश्विना । गच्छतम् । युवम् ।
रुद्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । जुषाणा । वाजिनीवसू इति वाजिनीऽवसू । माध्वी इति ।
मम । श्रुतम् । हवम् ॥ ३ ॥

वेङ्कट० आ गच्छतम् अस्माकम् रत्नानि धारयन्तौ हे अश्विनौ !, युवाम् हे रुद्रपुत्रौ ! हिरण्यवर्तनी प्रीयमाणौ हे अन्नवसू ! ॥ ३ ॥

मुद्गल० हे अश्विना ! अश्विनौ ! नः अस्मभ्यम् रत्नानि रमणीयानि धनानि बिभ्रतौ धारयन्तौ युवम् युवाम् अस्मान् आ गच्छतम् । हे रुद्रा ! रुद्रपुत्रौ ! हे वाजिनीवसू ! अन्नधनौ ! युवाम्

हिरण्यवर्तनी हिरण्यरथौ जुषाणा यज्ञं सेवमानौ सन्तौ आगच्छतम् । हे माध्वी! मधुविद्यावेदितारौ! मम हवम् आह्वानम् श्रुतम् शृणुतम् ॥ ३ ॥

सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता ।
उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवम् ॥ ४ ॥

सुऽस्तुभः । वाम् । वृषण्वसू इति वृषण्ऽवसू । रथे । वाणीची । आऽहिता ।
उत । वाम् । ककुहः । मृगः । पृक्षः । कृणोति । वापुषः । माध्वी इति । मम । श्रुतम् । हवम् ॥

वेङ्कट० कल्याणस्य स्तोतुः युवयोः हे वृष्यमाणधनौ! रथे स्तुतिः आहिता । वाणीची इति वाङ्नाम (निघ १,११) । अपि च युवयोः उच्छ्रितः अश्वः मदम् कृणोति उदकहविः[1] ॥ ४ ॥

मुद्गल० हे वृषण्वसू! वर्षकधनौ! अश्विनौ! सुष्टुभः सुस्तोतुः मम वाणीची वाग्रूपा स्तुतिः वाम् युवयोः रथे आहिता स्थापिता । अस्माभिः कृतेत्यर्थः । उत अपि च वाम् युवाभ्याम् ककुहः महान् मृगः मृगयिता[2] वापुषः वपुष्मान् पचमानः पृक्षः अन्नं हविः कृणोति करोति । तस्मात् माध्वी! मम हवम् श्रुतम् इति ॥ ४ ॥

बोधिन्मनसा रथ्येषिरा हवनश्रुता ।
विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवम् ॥ ५ ॥

बोधित्ऽमनसा । रथ्या । इषिरा । हवनऽश्रुता ।
विऽभिः । च्यवानम् । अश्विना । नि । याथः । अद्वयाविनम् । माध्वी इति । मम । श्रुतम् । हवम् ॥

वेङ्कट० हे अश्विनौ! बुध्यमानमनसौ रथ्यौ गन्तारौ स्तुतेः श्रोतारौ च्यवानम् ऋषिम् अश्वैः [3]नि याथ[3] असहायम् ॥ ५ ॥

मुद्गल० हे अश्विना! अश्विनौ! बोधिन्मनसा बुध्यमानमनस्कौ रथ्या रथस्वामिनौ इषिरा शीघ्रगन्तारौ हवनश्रुता स्तुतेः श्रोतारौ[4] युवाम् विभिः अश्वैः च्यवानम् ऋषिम् अद्वयाविनम् मायारहितम् नि याथः । यथा वम् ऋषिं प्राप्नुवन्तौ भवत् मे प्रति पथि नियाथः नितरामागच्छतम् । माध्वी! मम हवम् श्रुतम् ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये पञ्चदशो वर्गः ॥

आ वां नरा मनोयुजोऽश्वासः प्रुषितप्सवः ।
वयो वहन्तु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवम् ॥ ६ ॥

आ । वाम् । नरा । मनःऽयुजः । अश्वासः । प्रुषितऽप्सवः ।
वयः । वहन्तु । पीतये । सह । सुम्नेभिः । अश्विना । माध्वी इति । मम । श्रुतम् । हवम् ॥६॥

---

१. उदकमहितः मि° कपं. २. °ता हविः पक्ता मूको. ३-३. नयाथः मूको. ४. स्तोतारः मूको.

वेङ्कट० आ वहन्तु वाम् हे नेतारौ! अश्विनौ! मनोवेगाः अश्वाः प्रुषितरूपा बिन्दुभिर्युक्ता गन्तारः सोमपानाय सह सुखैः ॥ ६ ॥

मुद्गल० हे नरा! नेतारौ! अश्विना! अश्विनौ! वाम् युवाम् मनोयुजः मनोमात्रेण युज्यमानाः। सुशिक्षिता इत्यर्थः। प्रुषितप्सवः विचित्ररूपाः वयः शीघ्रगन्तारः अश्वासः अश्वाः[1] पीतये सोमपानाय सुम्नेभिः सह अस्मभ्यं देयैः सुखैः सह आ वहन्तु ॥ ६ ॥

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम् ॥ ७ ॥

अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् ।
तिरः । चित् । अर्यया । परि । वर्तिः । यातम् । अदाभ्या । माध्वी इति । मम । श्रुतम् । हवम् ॥

वेङ्कट० अश्विनौ! इह आ गच्छतम्। हे नासत्यौ! मा विगतकामौ भवतम्। तिरस्कृत्य अन्यान् यजमानान् स्वामिनौ मार्गम् परि यातम् हे अहिंसितौ! ॥ ७ ॥

मुद्गल० हे अश्विनौ! इह अस्मिन् यज्ञे आ गच्छतम्। हे नासत्या! सत्यवन्तौ! मा वि वेनतम् विगतकामौ मा भवतम्। हे अदाभ्या! अहिंस्यौ! अर्यया अर्यौ युवाम् तिरः चित् दूरदेशादपि वर्तिः अस्मद्यज्ञगृहम् परि यातम् आगच्छतम् ॥ ७ ॥

अस्मिन् यज्ञे अदाभ्या जरितारं शुभस्पती ।
अवस्युमश्विना युवं गृणन्तमुप भूषथो माध्वी मम श्रुतं हवम् ॥ ८ ॥

अस्मिन् । यज्ञे । अदाभ्या । जरितारम् । शुभः । पती इति ।
अवस्युम् । अश्विना । युवम् । गृणन्तम् । उप । भूषथः । माध्वी इति । मम । श्रुतम् । हवम् ॥ ८ ॥

वेङ्कट० अस्मिन् यज्ञे हे अहिंसितौ! स्तोतारम् हे उदकपती! अवस्युम् हे अश्विनौ! युवां स्तुवन्तम् उप भवथः। मध्यमपुरुषोऽपि सन् दृश्यते ॥ ८ ॥

मुद्गल० हे[2] अदाभ्या! अहिंस्यौ! हे शुभस्पती! उदकस्य स्वामिनौ! अश्विना! अश्विनौ! युवम् युवाम् अस्मिन् यज्ञे जरितारम् स्तोतारम् अवस्युम् गृणन्तम् स्तुवन्तं माम् उप भूषथः प्राप्नुतम् ॥ ८ ॥

अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः ।
अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवम् ॥ ९ ॥

अभूत् । उषाः । रुशत्ऽपशुः । आ । अग्निः । अधायि । ऋत्वियः ।
अयोजि । वाम् । वृषण्वसू इति वृषण्ऽवसू । रथः । दस्रौ । अमर्त्यः । माध्वी इति । मम । श्रुतम् । हवम् ॥ ९ ॥

1. °श्वाः आ वहन्तु मूको. 2. अस्मिन् यज्ञे हे मूको.

वेङ्कट० अभूत् उषाः । दीप्तपशुः आदित्यश्च अग्निः प्राप्तकालो होमाय । युक्तश्च तस्मिन् युवयोः रथः वृषण्वसू ![1] दर्शनीयौ ! अमरणः ॥ ९ ॥

मुद्गल० उषाः व्युष्टिः अभूत् । अग्निः च ऋतप्सुः दीप्तपशुमान्, प्रकाशितहविरित्यर्थः, आ[1] अधायि वेद्याम् आधीयते[2] अग्निः आहवनीयः ऋत्वियः ऋतौ काले भवः । हे वृषण्वसू ! प्रदत्तधनौ ! हे दस्रौ ! शत्रूणाम् उपक्षपयितारौ ! वाम् युवयोः अमर्त्यः अमरणधर्मा रथः अयोजि[3], अयोयुक्तो भवत्वित्यर्थः ॥ ९ ॥

इति चतुर्थाष्टके चतुर्थाध्याये षोडशो वर्गः ॥

[ ७६ ]

आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥ १ ॥

आ । भाति । अग्निः । उषसाम् । अनीकम् । उत् । विप्राणाम् । देवऽयाः । वाचः । अस्थुः ।
अर्वाञ्चा । नूनम् । रथ्या । इह । यातम् । पीपिऽवांसम् । अश्विना । घर्मम् । अच्छ ॥ १ ॥

वेङ्कट० अग्निः । प्रकाशयति अग्निः उषसाम् मुखम्[1] । उत् अस्थुः स्तोतॄणां देवान् गच्छन्त्यः[1] वाचः । अभिमुखौ इदानीम् हे रथ्यौ ! इह आ यातम् अश्विना ![1] पीपिवांसम् यज्ञं प्रति ॥ १ ॥

मुद्गल० 'आ भात्यग्निः' इति पञ्चमं चतुर्थं सूक्तम् । भौम आत्रेय ऋषिः । त्रिष्टुप् छन्दः । अश्विनौ देवता ।

उषसाम् अनीकम्[1] अनीकभूतः । अनीकं मुखम् । उषसि प्रबुध्यमान इत्यर्थः । तादृशः अग्निः आ भाति दीप्यते । किञ्च विप्राणाम् मेधाविनां स्तोतॄणाम् देवया देवकामाः वाचः स्तोत्राणि उत् अस्थुः उत्तिष्ठन्ति । यस्मादेवं तस्मात् हे रथ्या ! रथस्वामिनौ ! अश्विना ! अश्विनौ ! अर्वाञ्चा अस्मदभिमुखावञ्चनौ नूनम् अद्यास्मिन् यागदिने अच्छ अस्मदभिमुखम् आ यातम् । कं प्रति । पीपिवांसम् रसाद्यैः परिवृद्धम् घर्मम् प्रदीप्तयज्ञम् ॥ १ ॥

न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥ २ ॥

न । संस्कृतम् । प्र । मिमीतः । गमिष्ठा । अन्ति । नूनम् । अश्विना । उपऽस्तुता । इह ।
दिवा । अभिऽपित्वे । अवसा । आऽगमिष्ठा । प्रति । अवर्तिम् । दाशुषे । शम्ऽभविष्ठा ॥ २ ॥

वेङ्कट० न संस्कृतम् सोमम् प्र हिंसतः गन्तारौ, अन्तिके इदानीम् अश्विनौ मया उपस्तुतौ अत्र, दिवसे अपराह्णे च रक्षणेन आगन्तृतरौ यजमानस्य अवर्तिम् प्रति सुखस्य भावयितारौ ॥ २ ॥

1. नास्ति मूको. 2. अधी° मूको. 3. आ अयोजि मूको. 4. मुख्यम् मूको. 5. गच्छन्त्यौ मूको.

मुद्गल० अश्विनौ संस्कृतम् घर्मम् न प्र मिमीतः न हिंस्ताम्, किन्तु अन्ति अन्तिके घर्मसमीपे नूनम् इदानीम् इह यज्ञे यमिष्ठा गन्तृतमौ अश्विना अश्विनौ उपस्तुता उपस्तुतौ भवतः। दिवा अभिपित्वे दिवसस्याभिपतने प्रातःकाले अवसा रक्षणेन अन्नेन च सह आगमिष्ठा आगन्तृतमौ, आगत्य अवर्तिम् अजीवनदारिद्र्यम् प्रति हन्तृभूतौ, नाशयन्तौ इति शेषः, दाशुषे हविर्दत्तवते यजमानाय शंभविष्ठा सुखस्य भावयितारौ भवताम् ॥ २ ॥

उ॒त या॑तं संग॒वे प्रा॒तरह्नो॑ म॒ध्यंदि॑न॒ उदि॑ता॒ सूर्य॑स्य ।
दिवा॒ नक्त॒मव॑सा॒ शंत॑मेन॒ नेदानीं॑ पी॒तिर॒श्विना ततान ॥ ३ ॥

उ॒त । आ । या॒त॒म् । स॒म्ऽग॒वे । प्रा॒तः । अह्नः॑ । म॒ध्यंदि॑ने । उत्ऽइ॑ता । सूर्य॑स्य ।
दिवा॑ । नक्त॑म् । अव॑सा । शम्ऽत॑मेन । न । इ॒दानी॑म् । पी॒तिः । अ॒श्विना॑ । आ । त॒ता॒न॒ ॥ ३ ॥

वेङ्कट० अपि च आ गच्छतम् सङ्गवकाले प्रातःकाले च अह्नः, तथा मध्यंदिने, सूर्यस्य उदये च, दिवा नक्तम् च रक्षणेन सुखतमेन। न इदानीम् सायंकाले सोमपीतिः अश्विनौ आ ततोति। 'नायं तयोः काल इति' ॥ ३ ॥

मुद्गल० उत अपि च आ यातम् आगच्छतम्। कदा। संगवे संगवकाले प्रातः प्रातःकाले। तथा अह्नः मध्यंदिने मध्यकाले, सूर्यस्य उदिता उदये। न केवलम् उक्तकाले। किं तर्हि। दिवा नक्तम् सर्वदा शंतमेन अवसा रक्षणेन आगच्छतम्। किमर्थम्। इदानीम् पीतिः इतरदेवानां सोमस्य पानम् न[1] आ ततान तनोति, अश्विना अश्विनौ[1] विहायेति शेषः। तस्मात् आगच्छतम् ॥ ३ ॥

इ॒दं हि वां॑ प्र॒दिवि॒ स्थान॒मोक॑ इ॒मे गृ॒हा अ॑श्विने॒दं दु॑रो॒णम् ।
आ नो॑ दि॒वो बृ॑ह॒तः पर्व॑ता॒दाद्भ्यो या॑त॒मिष॒मूर्जं॒ वह॑न्ता ॥ ४ ॥

इ॒दम् । हि । वा॒म् । प्र॒ऽदिवि॑ । स्थान॑म् । ओकः॑ । इ॒मे । गृ॒हाः । अ॒श्वि॒ना॒ । इ॒दम् । दु॒रो॒णम् ।
आ । नः॒ । दि॒वः । बृ॒ह॒तः । पर्व॑तात् । आ । अ॒त्ऽभ्यः । या॒त॒म् । इष॑म् । ऊर्ज॑म् । वह॑न्ता ॥४॥

वेङ्कट० इदम् हि युवयोः पुराणम्[2] स्थानम् सेव्यमानम्, तथा इमे गृहाः, इदम् च दुरोणम् इत्यदो भेदः[4]। आ यातम् अस्मान् द्युलोकात् महतः पर्वतात् अन्तरिक्षाद्वा अन्नं रसं च वहन्तौ ॥ ४ ॥

मुद्गल० हे अश्विना! अश्विनौ! वाम् युवयोः प्रदिवि पुराणम् इदम् हि ओकः निवासयोग्यम् स्थानम् उत्तरवेद्याख्यम्। इमे गृहाः प्राचीनवंशादयः। इदम् दुरोणम् देवयजनगृहम्। नः अस्मदर्थम् दिवः द्युलोकात् बृहतः पर्वतात् मेघात् अद्भ्यः अपां कारणात् अन्तरिक्षात् आ यातम् आगच्छतम्। किं कुर्वन्तौ। इषम् ऊर्जम् च अन्नं रसं च वहन्ता वहन्तौ ॥ ४ ॥

---

१-१. नास्ति ख ग्रन्थे. २. नास्ति मूको. ३. °ओ न मूको. ४. पुराणेन मूको.
५. भेदम् मूको.

सम॒श्विनो॒रव॑सा॒ नूत॑नेन मयो॒भुवा॑ सु॒प्रणी॑ती गमेम ।
आ नो॑ र॒यिं व॑हत॒मोत वी॒राना विश्वा॑न्यमृता॒ सौभ॑गानि ॥ ५ ॥

सम् । अ॒श्विनोः॑ । अव॑सा । नूत॑नेन । म॒यः॒ऽभुवा॑ । सु॒ऽप्रनी॑ती । ग॒मे॒म॒ ।
आ । नः॒ । र॒यिम् । व॒ह॒त॒म् । आ । उ॒त । वी॒रान् । आ । विश्वा॑नि । अ॒मृ॒ता॒ । सौभ॑गानि ॥ ५ ॥

वेङ्कट० गता ( ऋ ५,४२,१८ द्र. )।

मुद्गल० वयम् शम् गमेम सङ्गच्छेम अश्विनोः नूतनेन अवसा रक्षणेन मयोभुवा सुखस्य भावयित्र्या सुप्रणीती सुप्रणीत्या सुष्ठु आगमनेन च। अपि वा एते उभे अवसो विशेषणे। उक्तलक्षणेन सं गमेम[1]। नः अस्मभ्यम् रयिम् आ वहतम्। उत अपि च वीरान् पुत्रादीन् आ वहतम्। हे अमृता! अमरणधर्माणौ! विश्वानि सौभगानि सुभगत्वानि आ वहतम् ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये सप्तदशो वर्गः ॥

[ ७७ ]

प्रा॒त॒र्यावा॑णा प्रथ॒मा य॑जध्वं पु॒रा गृध्रा॒दर॑रुषः पिबातः ।
प्रा॒तर्हि य॒ज्ञम॒श्विना॑ द॒धाते॒ प्र शं॑सन्ति क॒वयः॑ पूर्व॒भाजः॑ ॥ १ ॥

प्रा॒तः॒ऽयावा॑ना । प्र॒थ॒मा । य॒ज॒ध्व॒म् । पु॒रा । गृध्रा॑त् । अर॑रुषः । पि॒बा॒तः॒ ।
प्रा॒तः । हि । य॒ज्ञम् । अ॒श्विना॑ । द॒धाते॒ इति॑ । प्र । शं॒स॒न्ति॒ । क॒वयः॑ । पू॒र्व॒ऽभाजः॑ ॥ १ ॥

वेङ्कट० प्रातर्गन्तारौ मुख्यौ अश्विनौ यजध्वम्। असमपच्छतोऽपि कदर्यात् सोमपानम् अभिकाङ्क्षतो यजमानात् क्षिप्रम् अश्विनौ सोमम् पिबतः। प्रातः हि यज्ञम् अश्विनौ धारयतः। कवयः प्रातरश्विनौ प्र शंसन्ति पूर्वमेव भजमानाः ॥ १ ॥

मुद्गल० 'प्रातर्यावाणा' इति पञ्चर्चं पञ्चमं सूक्तम्। अत्रिः ऋषिः। त्रिष्टुप् छन्दः। अश्विनौ देवता।

हे मदीया ऋत्विजः! प्रातर्यावाणा प्रातरेव यज्ञं गन्तारौ प्रथमा अत्र इतरेभ्यो देवेभ्यः पूर्वभाविनावश्विनौ यजध्वम्। किमर्थम्। गृध्रात् अभिकाङ्क्षतः अररुषः अदातुः रक्षःप्रभृतेः पुरा पूर्वम् पिबातः पिबताम्। अश्विना अश्विनौ प्रातः हि यज्ञम् दधाते धारयतः सम्भजतः। पूर्वभाजः पूर्वकालीनाः कवयः अनूचाना ऋषयः प्रातरेवैतौ प्र शंसन्ति ॥ १ ॥

प्रा॒तर्य॑जध्वम॒श्विना॑ हिनोत॒ न सा॒यम॑स्ति देव॒या अजु॑ष्टम् ।
उ॒तान्यो अ॒स्मद्य॑जते॒ वि चावः॒ पूर्वः॑पूर्वो॒ यज॑मानो॒ वनी॑यान् ॥ २ ॥

प्रा॒तः । य॒ज॒ध्व॒म् । अ॒श्विना॑ । हि॒नो॒त॒ । न । सा॒यम् । अ॒स्ति॒ । दे॒व॒ऽयाः । अजु॑ष्टम् ।
उ॒त । अ॒न्यः । अ॒स्मत् । य॒ज॒ते॒ । वि । च॒ । आवः॑ । पूर्वः॑ऽपूर्वः । यज॑मानः । वनी॑यान् ॥ २ ॥

१. नास्ति मूको.

वेङ्कट० प्रातः यज्ञं कुरुत। तस्मिन् यज्ञे अश्विनौ प्रापयत। न सायम् अस्ति देवयजनम्। तन्नस्य हि लज्यमानम्[१] अजुष्टम् देवैः। असत्योऽपि च अन्यः[२] यजते 'तथा विविधम्'[३] न आव आह्वयति यजमानः। तत्र पूर्वः पूर्वः यजमानः अश्विनोरत्यन्तं सम्भक्ता भवति। तस्माद् प्रातरेव यजध्वम् इति ॥ २ ॥

मुद्गल० हे मदीयाः पुरुषाः! अश्विना अश्विनौ प्रातः[४] प्रातरेव यजध्वम्। हिनोत प्रहिणुत हवींषि। सायम् सायकाले हविः देवया देवगामि न अस्ति न विद्यते। देवा न स्वीकुर्वन्तीत्यर्थः। अजुष्टम् असेव्यम् तद् भवति[५]। उत अपि च असत् अस्मत्तः अन्यः कोऽपि यजते यजेत सोमेन अपि च आव वितर्पयेत् च हविषा। अतोऽस्मास्वन्येषु च मध्ये पूर्वः पूर्वः यजमानः य पूर्व० पूर्वो यष्टा[६] भवति, स वनीयान् 'देवानां सम्भाजयिता' भवति ॥ २ ॥

हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम्।
मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥ ३ ॥

हिरण्यऽत्वक्। मधुऽवर्णः। घृतऽस्नुः। पृक्षः। वहन्। आ। रथः। वर्तते। वाम्।
मनःऽजवा। अश्विना। वातऽरंहा। येन। अतिऽयाथः। दुःऽइतानि। विश्वा ॥ ३ ॥

वेङ्कट० हिरण्यरूपो हिरण्यच्छविः क्षरदुदकः अन्नम् वहन् आ वर्तते युवयोः [illegible] मनोवेगौ हे अश्विनौ! वातसदृशवेगौ, येन अतिगच्छथ विश्वानि दुरितानि ॥ ३ ॥

मुद्गल० वाम् युवयोः रथः पृक्षः अन्नमसूतम् वहन् आ वर्तते अस्मदभिमुखम् आगच्छति। कीदृशो रथः। हिरण्यत्वक् हिरण्यावृतः मधुवर्णः मनोहरवर्णः घृतस्नुः उदकस्य प्रस्रावकः मनोजवा॰ मनोवेगौ वातरंहा॰ वातसदृशवेगौ। हे अश्विना! अश्विनौ! येन रथेन विश्वा सर्वाणि दुरितानि दुर्गमनान् मार्गान् अतियाथः अतिक्रम्य गच्छथः ॥ ३ ॥

यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे।
स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥ ४ ॥

यः। भूयिष्ठम्। नासत्याभ्याम्। विवेष। चनिष्ठम्। पित्वः। ररते। विऽभागे।
सः। तोकम्। अस्य। पीपरत्। शमीभिः। अनूर्ध्वऽभासः। सदम्। इत्। तुतुर्यात् ॥ ४ ॥

वेङ्कट० यः बहुतरम् अन्नम् नासत्याभ्याम् प्रापयति, यो वा चनिष्ठम् अन्नं प्रयच्छति देवेभ्यः अन्ने विभज्यमाने, स यजमानः पुत्रं कर्मभिः अस्य अन्नस्य पूरयति पुत्रलाभं कर्मभिः साधयति। तथाऽनुद्गततेजस्कान् शत्रून् सदैव तरति। चनिष्ठम् आज्यम् आह, अल्पमित्यपरमिति ॥ ४ ॥

मुद्गल० यः यजमानः विभागे हविर्विभागवति यागे नासत्याभ्याम् अश्विभ्याम् भूयिष्ठम् चनिष्ठम्

---

१ यजमाने मूको. २ नास्ति मूको. ३-३ तथाविधं मूको. ४ नहि मूको. ५-५. यष्टृगण मूको. ६-६ देवान् भाजोकर मूको.

बहुलं कर्म विधेय करोति। पितः अवस् ररते ददाति। सः यजमानः अस्य आत्मनः एव तोकम् पुत्रम् पीपरत् पालयेत्[1] । शमीभिः कर्मभिः अनूर्ध्वभासः "अग्निरहितान् अपप्लुन्[2]" सदम् इत् सदैव तुतुर्यात् हिंस्यात् ॥ ४ ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५ ॥

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।
आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥५॥

वेङ्कट० ऋ ५,४२,१८ द्र. ॥ ५ ॥

मुद्गल० वयम् सम् गमेम सङ्गच्छेम अश्विनोः नूतनेन अभिनवकृतेन अवसा रक्षणेन मयोभुवा सुखस्य भावयित्र्या सुप्रणीती सुप्रणीत्या सुष्ठु आगमनेन च। अपि [illegible] एते उभे अवोविशेषणे। उक्तलक्षणेन सं गमेम। नः अस्मभ्यम् रयिम् आ वहतम्। उत अपि च वीरान् पुत्रादीन् आ वहतम्। हे अमृता! अमरणधर्माणौ! विश्वानि सौभगानि सुभगत्वानि आ वहतम् ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये अष्टाविंशो वर्गः ॥

[७८]

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् । हंसाविव पततमा सुताँ उप ॥ १ ॥

अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् ।
हंसौऽइव । पततम् । आ । सुतान् । उप ॥ १ ॥

वेङ्कट० सप्तवध्रिः । गतार्था ॥ १ ॥

मुद्गल० 'अश्विनावेह' इति नवर्चं षष्ठं सूक्तम्। सप्तवध्रिर्नाम आत्रेय ऋषिः। आदितः तिस्र उष्णिहः, चतुर्थी त्रिष्टुप्, शिष्टा अनुष्टुभः। अश्विनौ देवता ॥

हे अश्विनौ! इह अस्मिन् यागे आ गच्छतम्। हे नासत्या! सत्यवन्तौ! मा वि वेनतम्' मा विकामौ भवतम्। हंसौ इव तौ यथा निर्मलोदकम् आगच्छतस्तद्वत् सुतान् अभिषुतान् सोमान् उप आ पततम् उपागच्छतम् ॥ १ ॥

अश्विना हरिणाविव गौराविवानु यवसम् । हंसाविव पततमा सुताँ उप ॥ २ ॥

अश्विना । हरिणौऽइव । गौरौऽइव । अनु । यवसम् । हंसौऽइव । पततम् । आ । सुतान् । उप ॥ २ ॥

वेङ्कट० गतार्था ॥ २ ॥

---

1. पालयद् मूको. 2-2. °रहितदप्लु° मूको.

मुद्गल० हे अश्विना! अश्विनौ! हरिणौ इव गौरौ इव गौरमृगाविव, च तौ यथा यवसम् घासम् अनु धावतः[1] ताविव, हंसौ इव [2]च सुतान् सोमान् उप आ गच्छतम्[2] ॥ २ ॥

अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये । हंसाविव पततमा सुताँ उप ॥ ३ ॥

अश्विना । वाजिनीवसू इति वाजिनीऽवसू । जुषेथाम् । यज्ञम् । इष्टये ।
हंसौऽइव । पततम् । आ । सुतान् । उप ॥ ३ ॥

वेङ्कट० गतार्था ॥ ३ ॥

मुद्गल० हे वाजिनीवसू! अन्नार्थं वासयितारौ! अश्विना! अश्विनौ! यज्ञम् अस्मदीयम् इष्टये अभीष्टाय[3] जुषेथाम् सेवेथाम् ॥ ३ ॥

अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा ।
श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शंतमेन ॥ ४ ॥

अत्रिः । यत् । वाम् । अवऽरोहन् । ऋबीसम् । अजोहवीत् । नाधमानाऽइव । योषा ।
श्येनस्य । चित् । जवसा । नूतनेन । आ । अगच्छतम् । अश्विना । शम्ऽतमेन ॥ ४ ॥

वेङ्कट० अत्रिः यदा वाम् असुरैः क्षिप्यमाणः ऋबीसम् प्रति अवरोहन् आजुहाव याचमानेव स्त्री परित्राणम्, तदा श्येनस्य इव जवसा नवतरेण आ अगच्छतम् हे अश्विनौ! सुखतमेन ॥ ४ ॥

मुद्गल० अत्रिः अस्मत्पिता यत् यदा वाम् युवाम् अजोहवीत् अस्तौषीत् नाधमाना याचमाना योषा इव[4] योषिदिव सा यथा पतिं प्रीणयति तद्वत् कुर्वन् । ऋबीसम् तुषाग्निम् अग्निकुण्डे[5] क्षिप्तः सन् अवरोहन् विमुञ्चन् अजोहवीत् । श्येनस्य चित् नूतनेन जवसा प्रथमजवेन शंतमेन अस्माकं सुखतमेन च रथेन रक्षितुम् आ अगच्छतम् हे अश्विना! अश्विनौ! ॥ ४ ॥

इति चतुर्थाष्टके चतुर्थाध्याये एकोनविंशो वर्गः ॥

वि जिहीष्व वनस्पते योनिः सूष्यन्त्या इव ।
श्रुतं मे अश्विना हवं सप्तवध्रिं च मुञ्चतम् ॥ ५ ॥

वि । जिहीष्व । वनस्पते । योनिः । सूष्यन्त्याःऽइव ।
श्रुतम् । मे । अश्विना । हवम् । सप्तऽवध्रिम् । च । मुञ्चतम् ॥ ५ ॥

वेङ्कट० शौनकः "[6]सप्तकृत्वोऽपराधे[6] तु विफलो[7] दारसङ्गमे ।
भ्रातृभिः कृतोऽश्मपेटेन भारतेनेति वै श्रुतिः ॥

1. धावत मूको. 2-2. नास्ति मूको. 3. अभिष्टये मूको. 4. नास्ति मूको. 5. कुम्भे मूको. 6-6. 'रार्थे वि' इत्यं; 'राद्धे स; एम ह्लाघराधान् बृदे. 7. 'फले बृदे.

तमष्टमेऽपराधे[1] [illegible] वृक्षद्रोण्यां च पार्थिवः ।
ऋचीसे ह विनिक्षिप्य [2]स्विन्नं रात्रौ न्यधापयत्[2] ॥

सो(सः [3]अ)श्विनावि(नौ[3] इ)ति सूक्तेन वृध्यवर्पिः शुभस्पती ।
तौ तं तस्मात् समुद्धृत्य[3] चक्रतुः सफलं पुनः ॥

तूचः स्वस्यैव[4] गर्भार्थे स्वपतस्तस्य गर्भवत् ।
[5]यथा वातः[12] इति [6]ज्ञेये त्वस्मिन्नामितरे[6] ऋचौ" ॥ (बृ. दे ५,८२-८६) इति ॥

विवृतद्वारो भव वनस्पते । योनिरिव सूष्यन्त्याः । श्रुतम् इति स्पष्टम् ॥ ५ ॥

मुद्गल०　　'अत्र बुधन्तीतिहासं सप्तवध्रेः पुराविदः ।
भ्रातृव्याः पेटिकायां तम् ऋषिं प्रक्षिप्य यत्नतः ॥

मुद्रां कृत्वा गृहे स्वीये रक्षयित्वा न्यवेशयन् ।
न सङ्गच्छेत भार्यां स्वां यथा रात्रौ तथा कृतम् ॥

प्रातःप्रातः समुद्धाट्य निर्गमयिष्यन्ति[7] तं मुनिम् ।
एवं स्थित्वा चिरं कालं पेटायां दुःखितः कृशः ॥

उपायं चिन्तयामास निर्गमाय चिरं मुनिः ।
इति निश्चित्य नासत्यावस्तौषीद् दुष्टमानसः ॥

तमश्विनौ समागत्य समुद्घाट्य च पेटिकाम् ।
उद्धृत्य तमृषिं शीघ्रं तावदृष्टौ बभूवतुः ॥

स ऋषिर्भार्यया सार्धं रमित्वाऽथ पुनर्भयात् ।
प्रातरेव पुनः पेटां प्रविश्य प्रागिव स्थितः ॥

पेटानिवारणमयं[8] दृष्ट्वानुद्वयं तदा[1] ।

हे वनस्पते ! वनस्पतिविकाररूपे पेटिके ! वि जिहीष्व विगच्छ विवृता भव सूष्यन्त्याः इव प्रसोष्यमाणायाः स्त्रियाः योनिः इव । हे अश्विना ! अश्विनौ ! मे हवम् आह्वानम् श्रुतम् शृणुतम् । श्रुत्वा च सप्तवध्रिम् च माम् ऋषिम् मुञ्चतम् मोचयतम् ॥ ५ ॥

भीताय नाधमानाय ऋषये सप्तवध्रये ।
मायाभिरश्विना युवं वृक्षं सं च वि चाचथः ॥ ६ ॥

---

१. °ऽरे मूको.　२-२. स्वन्नं रात्रौ न्यपारयत् मूदे.　३. समुद्धत्य मूको.　४. तावेव मूको.
५. ऋ ५,७८,७.　६-६. ज्ञेयोऽर्धर्च[?] ...　७. °निर्गमिष्यन्ति मूको.　८. °पेटाति° मूको.

भीताय । नाधमानाय । ऋषये । सप्तऽवध्रये ।
मायाभिः । अश्विना । युवम् । वृक्षम् । सम् । च । वि । च । अचथः ॥ ६ ॥

वेङ्कट० भीताय याचमानाय मह्यम् ऋषये कर्मभिः हे अश्विना । युवम् मञ्जूषां वृक्षकृतां निर्गमार्थं पुनःप्रवेशार्थं च वि घटयतम् सम् गमयतम् च । असौ मञ्जूषां निधाय सायं 'निर्गच्छन्ति रक्षकाः'[1] निर्गतेषु तेषु मञ्जूषा विघटिता भवति । ततः ऋषिश्च निर्गत्य यथाकामं[2] भार्यया सह रमते । प्रातश्च विशति रक्षिणां प्रवेशात् पूर्वमेव । ततः सद्घटिता मञ्जूषा भवति इति ॥ ६ ॥

मुद्गल० भीताय भ्रातृभ्यः बिभ्युषे नाधमानाय विमोक्षं याचमानाय सप्तवध्रये ऋषये हे अश्विना ! अश्विनौ ! युवम् युवाम् मायाभिः वृक्षम् वृक्षविकारं पेटिकाम् सम् च अचथः मम निर्गमार्थं सङ्गच्छथः । 'वि अचथः'[3] च विभक्तं कुरुथः ॥ ६ ॥

यथा वातः पुष्करिणीं समिङ्गयति सर्वतः ।
एवा ते गर्भ एजतु निरैतु दशमास्यः ॥ ७ ॥

यथा । वातः । पुष्करिणीम् । सम्ऽइङ्गयति । सर्वतः ।
एव । ते । गर्भः । एजतु । निःऽएतु । दशऽमास्यः ॥ ७ ॥

वेङ्कट० यथा[4] वातः पुष्करिणीम् सम् चालयति सर्वतः एवं तव गर्भः चालयतु निर्गच्छतु[5] च सम्पूर्णः दशमास्यः इति भार्याम् आह अष्टगर्भाम् अश्विभ्यां सफलः कृतः ॥ ७ ॥

मुद्गल० सप्तवध्रिर्भिषग्भिः स्तवोचितः गर्भिण्याः प्रसवायानेन स्तुतवान् अश्विनौ । यथा वातः पुष्करिणीम् सरःप्रभृतिकम् सर्वतः समिङ्गयति सम्यक् चालयति एव एवम् ते तव गर्भः एजतु कम्पताम् इतस्ततः सञ्चरतु । दशमास्यः दश मासान् गर्भे स्थितः निरैतु निर्गच्छतु ॥ ७ ॥

यथा वातो यथा वनं यथा समुद्र एजति ।
एवा त्वं दशमास्य सहावेहि जरायुणा ॥ ८ ॥

यथा । वातः । यथा । वनम् । यथा । समुद्रः । एजति ।
एव । त्वम् । दशऽमास्य । सह । अव । इहि । जरायुणा ॥ ८ ॥

वेङ्कट० यथा वातः यथा वृक्षो यथा सिन्धुश्चलति एवम् त्वम् दशमास्यो भूत्वा जरायुणा सह 'सम्पूर्णः अव गच्छ इति निर्विकं[6] रेतो वदति[7] ॥ ८ ॥

मुद्गल० वातो यथा कम्पमानः वनम्[8] एजति कम्पयति स्वयम्, यथा समुद्रः तरङ्गैः

1-1. निर्गच्छन्त्यथाः मूको. 2. नास्ति क. 3-3. अचथः मूको. 4. नास्ति वि' लप. 5. नास्ति वि'. 6-6. "र्णो भव गच्छति निर्वि" मूको. 7. वदन्ति वि'. 8. "नम् यथा मूको.

कम्पति, एव एवम् त्वम् हे दशमास्य! दश मासान् 'गर्भे स्थित्वा' जरायुणा गर्भवेष्टनेन सह वेष्टितः अव इहि निर्गच्छ ॥ ८ ॥

दश मासाञ्छशयानः कुमारो अधि मातरि ।
निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि ॥ ९ ॥

दश । मासान् । शशयानः । कुमारः । अधि । मातरि ।
निःऽऐतु । जीवः । अक्षतः । जीवः । जीवन्त्याः । अधि ॥ ९ ॥

वेङ्कट० निगदसिद्धा ॥ ९ ॥

मुद्गल० मातरि अधि मातृकुक्षौ कुमारः दश मासान् शशयानः शयित्वा निरैतु निर्गच्छतु । जीवन्त्याः सकाशात् जीवः कुमारः अक्षतः सम्पूर्णावयवः[1] सन् अधि जीवः जीवतु, उभौ अपि जीवतामित्यर्थः ॥ ९ ॥

इति चतुर्थाष्टके चतुर्थाध्याये विंशो वर्गः ॥

[ ७९ ]

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १ ॥

महे । नः । अद्य । बोधय । उषः । राये । दिवित्मती ।
यथा । चित् । नः । अबोधयः । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ १ ॥

वेङ्कट० सत्यश्रवाः । महते[2] अस्मान् अद्य बोधय धनाय हे उषः! दीप्ता त्वम्, यथा मा अस्मानेव पुरा बोधयसि सत्यश्रवसि अपि वय्यकुलजे हे शोभनजनने! अदर्श कल्याणीभिर्व्याहृतिभिर्युक्ते! कल्याणाश्वे[3] । वा ॥ १ ॥

मुद्गल० 'महे नो अद्य' इति दशर्चं सप्तमं सूक्तम् । आत्रेयः सत्यश्रवा ऋषिः । पङ्क्तिः छन्दः । उषा देवता ।

अद्य अस्मिन् यागदिने हे उषः! देवि! दिवित्मती दीप्तिमती त्वम् नः अस्मान् महे महते राये धनप्राप्तये बोधय प्रज्ञापय, यथा चित् यथैव पूर्वम् नः अस्मान् अबोधयः प्राज्ञापयः । तथा हे सुजाते! शोभनप्रादुर्भूते! अश्वसूनृते! अश्वात्मा प्रियसत्यात्मिका वाक् यस्याः सा हे तादृशि! देवि! वाय्ये वय्यपुत्रे सत्यश्रवसि मय्यनुगृहाण इत्यर्थः ॥ १ ॥

या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ २ ॥

---

१-१. नास्ति मूको. २. ०ष्याः भवयवाः मूको. ३. महतः मूको. ४. कल्याणा भवे मूको.

या । सुऽनीथे । शौचत्ऽरथे । वि । औच्छः । दुहितः । दिवः ।
सा । वि । उच्छ । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ २ ॥

वेङ्कट० या त्वम् सुनीथे राजनि शुचद्रथपुत्रे व्युष्टा असि हे दिवः दुहितः! कल्याणम् (?), सा तथाय वि उच्छ अत्यर्थं बलवति मयि ॥ २ ॥

मुद्गल० हे दिवः दुहितः! सूर्यस्य पुत्रि! उषः! या त्वम् सुनीथे एतन्नामके शौचद्रथे शुचद्रथस्या॰ पत्ये पूर्वम् वि औच्छः व्यवासयस्तमांसि, सा त्वम् सहीयसि अतिशयेन बलवति वाय्ये वय्यपुत्रे सत्यश्रवसि मयि वि उच्छ तमो विवासय हे सुजाते! अश्वसूनृते! ॥ २ ॥

सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।
यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥

सा । नः । अद्य । आभरत्ऽवसुः । वि । उच्छ । दुहितः । दिवः ।
यो इति । वि । औच्छः । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ ३ ॥

वेङ्कट० अस्माकम् अद्य आह्रियमाणधना[1] वि उच्छ हे दिवः दुहितः!, यैव पुरा वि औच्छः मयि ॥ ३ ॥

मुद्गल० हे दिवः दुहितः! उषः! आभरद्वसुः आहृतधना सा प्रसिद्धा त्वम् नः अद्य अस्मिन् दिने वि उच्छ तमो विवासय। सहीयसि यो या। उकारोऽनर्थकः। त्वं पूर्वम् वि औच्छः सा व्यवासयीति ॥ ३ ॥

अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः ।
मघैर्मघोनि सुश्रियो दामन्वन्तः सुरातयः सुजाते अश्वसूनृते ॥ ४ ॥

अभि । ये । त्वा । विभाऽवरि । स्तोमैः । गृणन्ति । वह्नयः ।
मघैः । मघोनि । सुऽश्रियः । दामन्ऽवन्तः । सुऽरातयः । सुऽजाते । अश्वऽसूनृते ॥ ४ ॥

वेङ्कट० अभि गृणन्ति ये त्वा हे उषः![2] स्तोमैः वोढारः, धनैः हे धनवति! ते[1] शोभनश्रीकाः दानवन्तः शोभनदातिकाः शोभनदाना वा भवन्ति[1] ॥ ४ ॥

मुद्गल० हे विभावरि! प्रकाशोपेते उषः! त्वा त्वाम् अभि[3] प्रति ये वह्नयः वोढारः ऋत्विजः स्तोतारः स्तोमैः स्तोत्रैः गृणन्ति स्तुवन्ति, ते स्तोतारः हे मघोनि! धनवति! मघैः धनैस्त्वद॰ नुग्रहात् सुश्रियः भवन्ति सुष्ठु अतिथिभिराश्रयणीया भवन्ति, दामन्वन्तः दानवन्तः भवन्ति, सुरातयः सुदानाश्च भवन्ति ॥ ४ ॥

यच्चिद्धि ते गणा इमे छदयन्ति मघत्तये ।
परि चिद्वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृते ॥ ५ ॥

---

1. स्थि॰ वि॰ कर्प. 2. नास्ति वि॰. 3. नास्ति मूको.

यत् । चित् । हि । ते । गणाः । इमे । छदयन्ति । मघत्तये ।
परि । चित् । वष्टयः । दधुः । ददतः । राधः । अह्रयम् । सुऽजाते । अश्वऽसूनृते ॥ ५ ॥

वेङ्कट० यत् चित् हि ते गणाः इमे छन्नं कुर्वन्ति धनदानाय, तदानीं परितो धारयन्ति कामिनः प्रयच्छन्तो धनं याचमानेभ्यः अलज्जं प्रभूतम् ॥ ५ ॥

मुद्गल० हे उषः! यत् चित् हि। हि पूरणः। ये केचन ते तव स्वभूताः इमे पुरतो वर्तमानाः गणाः मघत्तये धनदानाय छदयन्ति उपच्छन्दयन्ति, ते सर्वेऽप्यस्मान् परि चित् दधुः परितो धारयन्ति वष्टयः अस्मानेव कामयमानाः। किं कुर्वन्तः। अह्रयम् अह्रीयमाणम् अक्षीणम् राधः धनं हविर्लक्षणम् ददतः यजन्त इत्यर्थः ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये एकविंशो वर्गः ॥

ऐषु धा वीरवद् यश उषो मघोनि सूरिषु ।
ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृते ॥ ६ ॥

आ । एषु । धाः । वीरऽवत् । यशः । उषः । मघोनि । सूरिषु ।
ये । नः । राधांसि । अह्रया । मघऽवानः । अरासत । सुऽजाते । अश्वऽसूनृते ॥ ६ ॥

वेङ्कट० आ धेहि एषु वीरवत् अन्नम् उषः! धनवति! प्राज्ञेषु, ये अस्मभ्यं धनानि बहूनि धनाढ्याः[1] प्रयच्छन्ति ॥ ६ ॥

मुद्गल० हे उषः! देवि! मघोनि! मघवति! एषु सूरिषु प्रज्ञावत्सु वीरवत् वीरैः पुत्रादिभिरुपेतं यशः आ धाः आधेहि। ये मघवानः धनवन्तः सूरयः नः अस्मभ्यं तव स्तोतृभ्यः अह्रया अक्षीणानि राधांसि धनानि अरासत ददुः तेभ्य इत्यर्थः ॥ ६ ॥

तेभ्यो द्युम्नं बृहद् यश उषो मघोन्या वह ।
ये नो राधांस्यश्व्या गव्या भजन्त सूरयः सुजाते अश्वसूनृते ॥ ७ ॥

तेभ्यः । द्युम्नम् । बृहत् । यशः । उषः । मघोनि । आ । वह ।
ये । नः । राधांसि । अश्व्या । गव्या । भजन्त । सूरयः । सुऽजाते । अश्वऽसूनृते ॥ [illegible] ॥

वेङ्कट० तेभ्यः द्योतमानं महद्यशः हे उषः! मघोनि! आ वह, ये अस्मभ्यं धनानि अश्वसमूहान् गोसमूहांश्च प्रायच्छन् सूरयः ॥ ७ ॥

मुद्गल० हे उषः! मघोनि! धनवति! त्वम् द्युम्नम् द्योतमानं हिरण्यादिरूपं धनम् बृहत् यशः महतीं कीर्तिं तेभ्यो यजमानेभ्यः आ वह प्रापय। ये आढ्याः[2] नः अस्मभ्यम् राधांसि धनानि अश्व्या अश्वैर्युक्तानि[3] गव्या गोभिर्युक्तानि[3] भजन्त भजेरन् ददुः[4], सूरयः दातारः ॥ ७ ॥

१. नास्ति मूको. २. अश्वादयः मूको. ३-३. नास्ति मूको. ४. ददुः ते मूको.

उत नो गोमतीरिष आ वहा दुहितर्दिवः ।
साकं सूर्यस्य रश्मिभिः शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृते ॥ ८ ॥

उत । नः । गोऽमतीः । इषः । आ । वह । दुहितः । दिवः ।
साकम् । सूर्यस्य । रश्मिऽभिः । शुक्रैः । शोचत्ऽभिः । अर्चिऽभिः । सुऽजाते । अश्वऽसूनृते ॥ ८ ॥

वेङ्कट० निगदसिद्धा ॥ ८ ॥

मुद्गल० उत अपि च नः अस्मभ्यम् गोमतीः गोभिर्युक्तानि इषः अन्नानि आ वह आनय हे दिवः दुहितः! उषः! । कदा । सूर्यस्य रश्मिभिः साकम् शोचद्भिः दीपयद्भिः शुक्रैः निर्मलैः अर्चिभिः अग्नेस्तेजोभिश्च साकम् । सूर्योदयकालेऽग्न्याधानकाले[1] चेत्यर्थः ॥ ८ ॥

व्युच्छा दुहितर्दिवो मा चिरं तनुथा अपः ।
नेत् त्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा सुजाते अश्वसूनृते ॥ ९ ॥

वि । उच्छ । दुहितः । दिवः । मा । चिरम् । तनुथाः । अपः ।
न । इत् । त्वा । स्तेनम् । यथा । रिपुम् । तपाति । सूरः । अर्चिषा । सुऽजाते । अश्वऽसूनृते ॥ ९ ॥

वेङ्कट० वि उच्छ हे दिवः दुहितः! । मा चिरम् कुरु उदयलक्षणं कर्म । शीघ्रं व्युच्छेत्यर्थः । नैव त्वाम् यथा स्तेनम्[2] रिपुम् च पुरुषो बाधते एवं सूर्यः अर्चिषा तपतु । व्युष्टायां तापोऽस्मत्कृतम् न भवत्विति ॥ ९ ॥

मुद्गल० हे दिवः दुहितः! उषः! त्वम् वि उच्छ तमोविवासनं कुरु । अपः अस्मदीयम् कर्म प्रति चिरम् विलम्बम् मा तनुथाः मा कुरु । त्वा त्वाम् रिपुम् स्तेनम् यथा सन्तापयति राजादिः, तद्वत् सूरः सूर्यः अर्चिषा तेजसा न इत् तपाति न तप्यात्[3] । शीघ्रं नोदेत्वित्यर्थः ॥ ९ ॥

एतावद् वेदुषस्त्वं भूयो वा दातुमर्हसि ।
या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते अश्वसूनृते ॥ १० ॥

एतावत् । वा । इत् । उषः । त्वम् । भूयः । वा । दातुम् । अर्हसि ।
या । स्तोतृऽभ्यः । विभाऽवरि । उच्छन्ती । न । प्रऽमीयसे । सुऽजाते । अश्वऽसूनृते ॥ १० ॥

वेङ्कट० यावदस्मिन् सूक्ते उक्तम् एतावत् वा भूयः वा त्वम् उषः! दातुम् अर्हसि । या त्वम् स्तोतृभ्यः उषः! व्युच्छन्ती न शत्रुभिः हिंस्यसे[4] सा ॥ १० ॥

मुद्गल० हे उषः! त्वमस्मभ्यम् वा अथवा दित्सितं किम् एतावत् । इत् पूरणे । अस्मिन् सूक्ते प्रार्थितमेवेत्यर्थः । अथवा भूयः दातुम् अर्हसि अप्रार्थितम् अपि । यद् दातव्यमस्ति तत्सर्वं देहि इत्यर्थः । हे विभावरि! प्रकाशोपेते! उषः! या त्वम् स्तोतृभ्यः तेषां लौकिकवैदिकव्यवहारार्थं

---

१. सूर्योदयकाले मूको. २. स्तेनम् छ. ३. तप्येत मूको. ४. हिंस्यते मूको.

उच्छन्ती तमो विवासयन्ती न प्रमीयसे न हिंसि, न क्षुभ्यसीत्यर्थः, सा त्वं दातुमर्हसि ॥ १० ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये द्वाविंशो वर्गः ॥

[ ८० ]

द्युतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीम् ।
देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥ १ ॥

द्युतत्ऽयामानम् । बृहतीम् । ऋतेन । ऋतऽवरीम् । अरुणऽप्सुम् । विऽभातीम् ।
देवीम् । उषसम् । स्वः । आऽवहन्तीम् । प्रति । विप्रासः । मतिऽभिः । जरन्ते ॥ १ ॥

वेङ्कट० दीप्तगमनां महतीम् उदकेन उदकवतीम्, सत्यं वा ऋतम्, अरुणरूपां व्युच्छन्तीं देवीम् उषसम् कल्याणम् आवहन्तीम् प्रति स्तुवन्ति मेधाविनः स्तुतिभिः ॥ १ ॥

मुद्गल० 'द्युतद्यामानम्' इति षडृचम् अष्टमं सूक्तम्। सत्यश्रवा ऋषिः। त्रिष्टुप् छन्दः। उषा देवता।

द्युतद्यामानम् दीप्तरथाम् बृहतीम् ऋतेन सत्येन ऋतावरीम् सत्यवतीम् अरुणप्सुम् अरुणरूपाम् विभातीम् व्युच्छन्तीम्[1] देवीम् द्योतमानाम् उषसम् स्वः आवहन्तीम् सूर्यं गमयन्तीम् पूर्वमहाशुभासाम् उषसम् विप्रासः मेधाविनः ऋत्विजः मतिभिः स्तुतिभिः प्रति जरन्ते स्तुवन्ति ॥ १ ॥

एषा जनं दर्शता बोधयन्ती सुगान् पथः कृण्वती यात्यग्रे ।
बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नाम् ॥ २ ॥

एषा । जनम् । दर्शता । बोधयन्ती । सुऽगान् । पथः । कृण्वती । याति । अग्रे ।
बृहत्ऽरथा । बृहती । विश्वम्ऽइन्वा । उषाः । ज्योतिः । यच्छति । अग्रे । अह्नाम् ॥ २ ॥

वेङ्कट० एषा उषाः जनम् दर्शनीया बोधयन्ती सुगमान् मार्गान् कुर्वती गच्छति अग्रे। महारथा महती सर्वव्यापिनी उषाः[2] ज्योतिः नियच्छति अह्नाम् अग्रे ॥ २ ॥

मुद्गल० दर्शता दर्शनीया एषा उषाः बोधयन्ती। कम्। जनम्। प्रसुप्तमित्यर्थः। पथः मार्गान् सुगान् सुगमनान् कृण्वती अग्रे 'सूर्यस्य पुरस्तात्'[3] याति गच्छति। कीदृश्युषाः। बृहद्रथा प्रभूतरथा बृहती महती विश्वमिन्वा विश्वतर्पणा। ईदृशी उषाः अह्नाम् अग्रे ज्योतिः तेजः यच्छति ॥ २ ॥

एषा गोभिररुणेभिर्युजानास्रेधन्ती रयिमप्रायु चक्रे ।
पथो रदन्ती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥ ३ ॥

---

१. व्युच्छन्तीम् मूको. २. नास्ति वि' एवं. ३-३. सूर्यपुर' मूको.

एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधन्ती । रयिम् । अप्रऽआयु । चक्रे ।
पथः । रदन्ती । सुविताय । देवी । पुरुऽस्तुता । विश्वऽवारा । वि । भाति ॥ ३ ॥

वेङ्कट० एषा गोभिः अरुणवर्णैः युज्यमाना अक्षीयमाणा रयिम् अप्रगमनस्वभावम् स्तोतृभ्यः करोति, मार्गान् तेजसा विलिखन्ती धनाय देवी बहुभिः स्तुता विश्वैर्वरणीया व्युच्छति ॥ ३ ॥

मुद्गल० एषा उषाः अरुणेभिः अरुणवर्णैः गोभिः बलीवर्दैः रथम् युजाना योजयन्ती अस्रेधन्ती अक्षुष्यन्ती । किम् । रयिम् धनम् अप्रायु अप्रगन्तृ अविचलितम् चक्रे करोति । किं कुर्वती । पथः मार्गान् रदन्ती प्रकाशयन्ती । किमर्थम् । सुविताय सुष्ठु गमनाय । देवी द्योतमाना पुरुष्टुता बहुभिः स्तुता विश्ववारा सर्वैर्वरणीया वि भाति प्रकाशं करोति ॥ ३ ॥

एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् ।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ४ ॥

एषा । विऽएनी । भवति । द्विऽबर्हाः । आविःऽकृण्वाना । तन्वम् । पुरस्तात् ।
ऋतस्य । पन्थाम् । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥ ४ ॥

वेङ्कट० एषा अरक्तं श्वेतवर्णा प्रादुर्भवति द्वयोः स्थानयोः परिवृढा आविष्कृण्वाना शरीरं प्राच्याम् । आदित्यस्य पन्थानम् अनु गच्छति । साधु प्रजानतीवागच्छन्ती दिशः न हिनस्ति, यथा रात्रिरन्धकारेण दिशो हिनस्ति नैवं हिनस्ति ॥ ४ ॥

मुद्गल० एषा उषाः व्येनी प्रकाशवती भवति । द्विबर्हाः द्वयोः प्रथममध्यमयोः स्थानयोः[1] परिवृढा उषाः पश्चात् तन्वम् स्वीयां तनूम् आविष्कृण्वाना प्रकटीकुर्वती अत्र पुरस्तात् पूर्वस्यां दिशि न मिनाति न हिनस्ति । प्रत्युत दिशः प्रकाशयति । ऋतस्य आदित्यस्य पन्थाम् पन्थानं मेरोः प्रान्तदेशम् अनुक्रमेण साधु सम्यक् एति गच्छति प्रजानतीव सूर्यस्य मार्गं मया अपि गन्तव्यमिति चेतयन्तीव ॥ ४ ॥

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् ।
अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥ ५ ॥

एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती । दृशये । नः । अस्थात् ।
अप । द्वेषः । बाधमाना । तमांसि । उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात् ॥ ५ ॥

वेङ्कट० एषा शोभमाना अलङ्कृतेव स्त्री शरीराणि ज्ञापयन्ती नः[2] दर्शनाय ऊर्ध्वा अस्थात्, यथा वा स्नानं कुर्वाणा जलाद् ऊर्ध्वम् उत्तिष्ठति । शत्रून् बाधमाना तमांसि ज्योतिषा अप गमयति उषाः दिवः दुहिता इति ॥ ५ ॥

---

१. नास्ति मूको. २. स्नानं मूको.

मुद्गल० एषा उषाः शुभ्रा न शुभ्रवर्णा निर्मला स्वलङ्कृता योषिदिव तन्वः अङ्गानि विदाना प्रज्ञापयन्ती स्नाती स्नानं कुर्वाणा ऊर्ध्वेव उच्छ्रितेव स्नानादुत्तिष्ठन्तीव नः अस्माकम् दृशये दर्शनाय उद् अस्थात् पूर्वस्यां दिशि उत्तिष्ठति । किं कुर्वती । द्वेषः द्वेष्याणि[1] तमांसि अप बाधमाना दिवः दुहिता उषाः ज्योतिषा तेजसा सह आ अगात् आगच्छति ॥ ५ ॥

एषा प्रतीची दुहिता दिवो नॄन् योषेव भद्रा नि रिणीते अप्सः ।
व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः ॥ ६ ॥

एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषाऽइव । भद्रा । नि । रिणीते । अप्सः ।
विऽऊर्ण्वती । दाशुषे । वार्याणि । पुनः । ज्योतिः । युवतिः । पूर्वऽथा । अकरित्यकः ॥ ६ ॥

वेङ्कट० एषा अभिमुखा दिवः दुहिता मनुष्यानभ्येति, योषा इव भजनीया निर्गमयति रूपम्, प्रकाशयन्ती यजमानाय धनानि पुनः च ज्योतिः युवतिः सदैव उषाः करोति ॥ ६ ॥

मुद्गल० एषा उषाः प्रतीची अभिमुखा सती दिवः दुहिता नॄन् सर्वान् प्राणिनः प्रति भद्रा योषा इव कल्याणवेषा योषिदिव अप्सः रूपम् नि रिणीते गमयति । किञ्च दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि धनानि व्यूर्ण्वती प्रयच्छन्ती युवतिः नित्ययौवना पूर्वथा पूर्वमिव पुनः ज्योतिः तेजः अकः करोति ॥ ६ ॥

इति चतुर्थाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः ॥

[ ८१ ]

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ १ ॥

युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः । विप्रस्य । बृहतः । विपःऽचितः ।
वि । होत्राः । दधे । वयुनऽवित् । एकः । इत् । मही । देवस्य । सवितुः । परिऽस्तुतिः ॥१॥

वेङ्कट० श्यावाश्वः । युञ्जते मनः सवितुः, अपि च युञ्जते कर्माणि मेधाविनः विप्रस्य महतः स्तोत्रविदः । वि दधे सप्त होत्राः मार्गवित् एकः एव सविता । इत्थं महती देवस्य सवितुः परितः क्रियमाणा स्तुतिः ॥ १ ॥

मुद्गल० 'युञ्जते' इति पञ्चर्चं नवमं सूक्तम् । श्यावाश्वो नाम आत्रेय ऋषिः । जगती छन्दः । सविता देवता ॥

विप्राः मेधाविनः ऋत्विग्यजमानाः मनः स्वीयं सर्वेषु कर्मसु युञ्जते योजयन्ति । सवितुः अनुग्रहाय सङ्कल्पं कुर्वन्तीत्यर्थः । उत अपि च धियः कर्माण्यपि युञ्जते प्राप्नुयन्ति । कस्यानुग्रहेणेत्युच्यते[1] । विप्रस्य मेधाविनः बृहतः महतः विपश्चितः स्तुत्यस्य सवितुरनुग्रहेणेति[2] । स एव

१. द्वेष्या मूको. २. "आर्ष" मूको.

सविता होता। सप्तहोत्रकाणाम् वयुनाः क्रियाः वयुनावित् प्रज्ञावेत्ता एकः इत् एकः एव वि दधे करोति पृथक्पृथग् अवधारयति। किञ्च तस्य सवितुः देवस्य परिष्टुतिः स्तुतिः मही महती ॥ १ ॥

विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद् भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे ।
वि नाक॑मख्यत् सवि॒ता वरे॒ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ॥ २ ॥

विश्वा॑ । रू॒पाणि॑ । प्रति॑ । मु॒ञ्च॒ते॒ । क॒विः । प्र । अ॒सा॒वी॒त् । भ॒द्रम् । द्वि॒ऽपदे॑ । चतुः॑ऽपदे ।
वि । नाक॑म् । अ॒ख्य॒त् । स॒वि॒ता । वरे॑ण्यः । अनु॑ । प्र॒ऽयान॑म् । उ॒षसः॑ । वि । रा॒ज॒ति॒ ॥२॥

वेङ्कट० नानाविधानि रूपाणि प्रति मुञ्चते कविः, प्र सौति च भद्रम् द्विपदे चतुष्पदे, व्यख्यत् च नाकलोकम् सविता वरणीयः। सोऽयमुषसि गतायां स्वकाले वि राजति ॥ २ ॥

मुद्गल० कविः मेधावी सविता विश्वा सर्वाणि रूपाणि आत्मनि प्रति मुञ्चते बध्नाति धारयति। किञ्च भद्रम् कल्याणं गमनादिविषयम् प्र असावीत् अनुजानाति। कस्मै। द्विपदे मनुष्याय चतुष्पदे गवाश्वादिकाय। किञ्च सविता सर्वस्य प्रेरको देवः वरेण्यः वरणीयः सन् वि अख्यत् व्यापयति प्रकाशयति। किम्। नाकम् स्वर्गम्। स्वर्गं यजमानार्थं प्रकाशयतीत्यर्थः। स देवः उषसः प्रयाणम् अनु वि राजति प्रकाशते। सवितुरुदयात् पूर्वं हि उषा उदेति ॥ २ ॥

यस्य॑ प्र॒याण॒मन्व॒न्य इद् य॒युर्दे॒वा दे॒वस्य॑ महि॒मान॒मोज॑सा ।
यः पार्थि॑वानि विम॒मे स एत॑शो॒ रजां॑सि दे॒वः स॑वि॒ता म॑हित्व॒ना ॥ ३ ॥

यस्य॑ । प्र॒ऽयान॑म् । अनु॑ । अ॒न्ये । इत् । य॒युः । दे॒वाः । दे॒वस्य॑ । म॒हि॒मान॑म् । ओज॑सा ।
यः । पार्थि॑वानि । वि॒ऽम॒मे । सः । एत॑शः । रजां॑सि । दे॒वः । स॒वि॒ता । म॒हि॒ऽत्व॒ना ॥ ३ ॥

वेङ्कट० यस्य प्रयाणम् अनु गच्छन्ति अन्ये देवाः देवस्य महिमानम् आत्मीयं सवितुर्बलेन। यः च पार्थिवान् लोकान् निर्ममे, सः श्वेतवर्णः देवः सविता सर्वान् लोकान् महत्त्वेन विमिमीते ॥ ३ ॥

मुद्गल० अन्ये इत् देवाः अग्न्यादयः यस्य देवस्य सवितुः प्रयाणम् अनु ययुः गच्छन्ति प्राप्नुवन्ति। किम्। महिमानम् महत्त्वम्। सवितुरुदयाभावेऽग्निहोत्राद्यभिव्यसेः तेषां हविःस्तुत्या-द्यभावात्। ओजसा बलेन च युक्ता भवन्ति[1]। यः सविता पार्थिवानि रजांसि पृथिव्यादि-लोकान् महित्वना महत्त्वेन विममे परिच्छिनत्ति, सः देवः एतशः शुभ्रवर्णः शुभ्रः शोभमानः सन्, राजते इति शेषः ॥ ३ ॥

उ॒त या॑सि सवितस्त्री॒णि रो॑च॒नोत सूर्य॑स्य र॒श्मिभिः॑ समु॒च्यसि ।
उ॒त रात्री॑मुभ॒यतः॒ परी॑यस उ॒त मि॒त्रो भ॑वसि देव॒ धर्म॑भिः ॥ ४ ॥

1. °न्ति भगवद् महिमानम् मूको.

उत । यासि । सवितरिति । त्रीणि । रोचना । उत । सूर्यस्य । रश्मिऽभिः । सम् । उच्यसि ।
उत । रात्रीम् । उभयतः । परि । ईयसे । उत । मित्रः । भवसि । देव । धर्मऽभिः ॥ [redacted] ॥

वेङ्कट० अपि च गच्छसि हे सवितः! त्रीणि तेजांसि लोकान् [redacted] । अपि च सूर्यस्य रश्मिभिः सङ्गच्छसे स्वरूपेण । अपि च रात्रीम् उभयतः परि गच्छसि । उत मित्रः च देव![1] भवसि[2] कर्मभिः[3] ॥ ४ ॥

मुद्गल० हे सवितः! उत अपि च त्रीणि रोचना रोचमानान् द्युलोकान् इन्द्रप्रजापतिसत्याख्यान् त्रीन् लोकान् यासि गच्छसि । उत अपि च सूर्यस्य रश्मिभिः सम् उच्यसि सङ्गच्छसि । उत अपि च रात्रीम् उभयतः उभयपार्श्वे परि ईयसे परिगच्छसि । उत अपि [redacted] हे देव! सवितः! त्वम् धर्मभिः जगद्धारकैः कर्मभिः मित्रः भवसि मित्राख्यो देवो भवसि ॥ ४ ॥

उतेशिषे प्रसवस्य त्वमेक इदुत पूषा भवसि देव यामभिः ।
उतेदं विश्वं भुवनं वि राजसि श्यावाश्वस्ते सवितः स्तोममानशे ॥ ५ ॥

उत । ईशिषे । प्रऽसवस्य । त्वम् । एकः । इत् । उत । पूषा । भवसि । देव । यामऽभिः ।
उत । इदम् । विश्वम् । भुवनम् । वि । राजसि । श्यावऽअश्वः । ते । सवितरिति । स्तोमम् ।
आनशे ॥ ५ ॥

वेङ्कट० अपि च ईशिषे अनुज्ञायाः त्वम् एकः एव । अपि च पूषा भवसि देव! आगमनैः । अपि च इदम् विश्वम् भुवनम् वि राजसि । श्यावाश्वः ते सवितः![5] स्तोमम् व्याप्नोति कुरुते ॥ ५ ॥

मुद्गल० हे सवितः! त्वम् एकः इत् एक एव प्रसवस्य सर्वकार्यानुज्ञाकरणस्य ईशिषे समर्थो भवसि । उत अपि च पूषा पोषकः भवसि हे देव! यामभिः गमनैः । उत अपि च इदम् विश्वम् भुवनम् सर्वं भूतजातम् वि राजसि ईशिषे धारयितुम् । यस्मात् एवंमहानुभावः तस्मात् हे सवितः! ते तुभ्यम् श्यावाश्वः ऋषिः स्तोमम् स्तोत्रम् आनशे व्याप्नोति करोति । इत्येवम् आत्मानं परोक्षतया निर्दिश्याह ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः ॥

[८२]

तत् सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥१॥

तत् । सवितुः । वृणीमहे । वयम् । देवस्य । भोजनम् ।
श्रेष्ठम् । सर्वऽधातमम् । तुरम् । भगस्य । धीमहि ॥ १ ॥

वेङ्कट० तत् सवितुः वृणीमहे वयम् देवस्य भोजनम्, श्रेष्ठम् सर्वेषाम् अतिशयेन धारकं भजनीयस्य सवितुः [5]प्रेरकं तेजश्च धारयामः[5] ॥ १ ॥

1. देवः मूको. 2. भवति मूको. 3. नास्ति वि[1] अर्प. 4. सवितुः मूको. 5-5. प्रेरके त्रिभाति धन्यानि धीमहि वि[1]; नास्ति अर्प.

मुद्गल० 'तत्सवितुः' इति नवर्चं दशमं सूक्तम्। श्यावाश्व ऋषिः। प्रथमा अनुष्टुप्, शिष्टा गायत्र्यः। सविता देवता।

तत् भोजनम् धनम् वयम् स्तोतारः वृणीमहे प्रार्थयामहे। कस्य धनम्? सवितुः प्रेरकस्य देवस्य स्वभूतम्। श्रेष्ठम् प्रशस्यम् सर्वधातमम् सर्वस्य धातृतमम्, सर्वस्य भोगप्रदमित्यर्थः, तुरम् शत्रूणां हिंसकम् धनम् भगस्य भजनीयस्य सवितुरनुग्रहात् धीमहि धारयाम, उपभोगं करवामेत्यर्थः ॥ १ ॥

अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम्। न मिनन्ति स्वराज्यम् ॥ २ ॥

अस्य। हि। स्वयशःऽतरम्। सवितुः। कत्। चन। प्रियम्। न। मिनन्ति। स्वऽराज्यम् ॥ २ ॥

वेङ्कट० 'अस्य हि अस्यन्तं स्वभूतयशस्कम् सवितुः कदाचिदपि प्रियम् न हिंसन्ति स्वराज्यम्[1] ॥ २ ॥

मुद्गल० अस्य सवितुः स्वयशस्तरम् अतिशयेन स्वयशस्कम्[2] प्रियम् सर्वेषां प्रियभूतम् स्वराज्यम् स्वयमेव राजमानत्वम् ऐश्वर्यम् कत् चन केचिदपि असुरादयः न मिनन्ति न हि हिंसन्ति ॥ २ ॥

स हि रत्नानि दाशुषे सुवाति सविता भगः। तं भागं चित्रमीमहे ॥ ३ ॥

सः। हि। रत्नानि। दाशुषे। सुवाति। सविता। भगः। तम्। भागम्। चित्रम्। ईमहे ॥ ३ ॥

वेङ्कट० सः हि रत्नानि यजमानाय प्रसौति[3] सविता भजनीयः। तम्[4] धनम् चित्रम् याचामहे ॥ ३ ॥

मुद्गल० सः हि स खलु सविता भगः भजनीयो देवः दाशुषे हविर्दात्रे यजमानाय रत्नानि रमणीयानि धनानि सुवाति प्रेरयति प्रयच्छति। तम् देवम् भागम् भजनीयम् चित्रम् चायनीयं धनम् ईमहे याचामहे ॥ ३ ॥

अद्या नो देव सवितः प्रजावत् सावीः सौभगम्। परा दुःष्वप्न्यं सुव ॥ ४ ॥

अद्य। नः। देव। सवितरिति। प्रजाऽवत्। सावीः। सौभगम्। परा। दुःऽस्वप्न्यम्। सुव ॥४॥

वेङ्कट० अद्य अस्माकम् हे देव! सवितः! प्रजायुक्तं धनं देहि, विनाशय च दुःस्वप्न्यम् ॥ ४ ॥

मुद्गल० हे सवितः! देव! नः अस्मभ्यम् अद्य अस्मिन् यागदिने प्रजावत् पुत्राद्युपेतम् सौभगम् धनम् सावीः प्रेरय। दुःस्वप्न्यम् दारिद्र्यम् परा सुव दूरे प्रेरय ॥ ४ ॥

विश्वानि देव सवितर्दुरितानि परा सुव। यद् भद्रं तन्न आ सुव ॥ ५ ॥

विश्वानि। देव। सवितः। दुःऽइतानि। परा। [illegible]। यत्। भद्रम्। तत्। नः। आ। सुव ॥५॥

वेङ्कट० निगदसिद्धा ॥ ५ ॥

---

१-१. नास्ति वि॰ अ॰. २. स्वस्य यशस्कम् मूको. ३-३. भजमा वि॰ अ॰. ४. तद् मूको.

मुद्गल॰ हे सवितः! देव! त्वम् विश्वानि दुरितानि परा सुव, यत् भद्रम् प्रजापशुगृहादिकं तत् नः अस्मभ्यम् आ सुव अस्मदभिमुखं प्रेरय ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये पञ्चविंशो वर्गः ॥

अनागसो अदितये देवस्य सवितुः सवे । विश्वा वामानि धीमहि ॥ ६ ॥

अनागसः । अदितये । देवस्य । सवितुः । सवे । विश्वा । वामानि । धीमहि ॥ ६ ॥

वेङ्कट॰ अनागसः अदित्यै पृथिव्यै देवस्य सवितुः प्रसवे विश्वानि धनानि[1] धीमहि[2] ॥ ६ ॥

मुद्गल॰ वयमनुष्ठातारः सवितुः प्रेरकस्य देवस्य सवे अनुज्ञायां सत्याम् अदितये देव्यै भूम्यै अनागसः स्याम अनपराधिनो भवेम । अपगतेष्वागःसु विश्वा सर्वाणि वामानि वननीयानि धनानि धीमहि धारयाम ॥ ६ ॥

आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे । सत्यसवं सवितारम् ॥ ७ ॥

आ । विश्वऽदेवम् । सत्ऽपतिम् । सुऽउक्तैः । अद्य । वृणीमहे । सत्यऽसवम् । सवितारम् ॥ ७ ॥

वेङ्कट॰ निगदसिद्धा ॥ ७ ॥

मुद्गल॰ विश्वदेवम् विश्वे देवा यस्य वशे भवन्ति तादृशम् सत्पतिम् सताम् अनुष्ठातॄणां पालकम् सत्यसवम् सत्यानुज्ञम् सवितारम् देवम् अद्य अस्मिन् यागदिने सूक्तैः आ वृणीमहे सम्भजामहे ॥ ७ ॥

य इमे उभे अहनी पुर एत्यप्रयुच्छन् । स्वाधीर्देवः सविता ॥ ८ ॥

यः । इमे इति । उभे इति । अहनी इति । पुरः । एति । अप्रऽयुच्छन् । सुऽआधीः । देवः । सविता ॥ ८ ॥

वेङ्कट॰ यः इमे उभे अहोरात्रे पुरः एति अप्रमाद्यन् सुकर्मा देवः सविता ॥ ८ ॥

मुद्गल॰ यः सविता देवः स्वाधीः शोभनाध्यानः[3] सन् इमे उभे अहनी तयोः पुरः पुरस्तात् अप्रयुच्छन् अप्रमाद्यन् एति गच्छति, तम् आवृणीमहे इति सम्बन्धः ॥ ८ ॥

य इमा विश्वा जातान्याश्रावयति श्लोकेन । प्र च सुवाति सविता ॥ ९ ॥

यः । इमा । विश्वा । जातानि । आऽश्रावयति । श्लोकेन । प्र । च । सुवाति । सविता ॥ ९ ॥

वेङ्कट॰ यः इमानि विश्वानि जातानि श्लोकेन[4] आश्रावयति, प्र सौति च देवः सविता, तम् आवृणीमहे इति ॥ ९ ॥

मुद्गल॰ यः देवः इमा इमानि विश्वा सर्वाणि जातानि उत्पन्नान् प्राणिनः, जङ्गमानित्यर्थः । तान् श्लोकेन यशसा आश्रावयति । सर्वेऽप्यस्य स्तुतिं शृण्वन्तीत्यर्थः । किञ्च सविता प्र सुवाति, प्रेरयति, तम् आवृणीमहे इति । च पूरणः ॥ ९ ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये षड्विंशो वर्गः ॥

---

१. धना वि॰ छपं.　२. नास्ति वि॰ छपं.　३. 'नध्या' मूको.　४. शौनस वि॰ छपं; शौनकः छ.

[८३]

अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास ।
कनिक्रदद् वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ॥ १ ॥

अच्छ । वद । तवसम् । गीःऽभिः । आभिः । स्तुहि । पर्जन्यम् । नमसा । आ । विवास ।
कनिक्रदत् । वृषभः । जीरऽदानुः । रेतः । दधाति । ओषधीषु । गर्भम् ॥ १ ॥

वेङ्कट० ऋषिः । अभिवद वृद्धम्, गीर्भिः आभिः स्तुहि पर्जन्यम्, नमसा च परिचर । यः शब्दं कुर्वन् वर्षिता क्षिप्रदानः उदकम् दधाति ओषधीषु गर्भम् च गर्भहेतुं चोदकम् ॥ १ ॥

मुद्गल० 'अच्छा वद' इति दशर्चमेकाशीतं सूक्तम् । भौम आत्रेय ऋषिः । 'यत् पर्जन्य' इत्येषा नवमी अनुष्टुप्, 'वि वृक्षान्' इत्याद्याः तिस्रो जगत्यः, शिष्टाः षट् त्रिष्टुभः । पर्जन्यो देवता ॥

हे स्तोतः ! तवसम् बलवन्तम् पर्जन्यम् अच्छ अभिमाष्य वद प्रार्थय, आभिः गीर्भिः स्तुतिवाग्भिः स्तुहि, नमसा अन्नेन हविर्लक्षणेन आ विवास सर्वतः परिचर । यः पर्जन्यः वृषभः अपां वर्षिता जीरदानुः क्षिप्रदानः कनिक्रदत् गर्जनशब्दं कुर्वन् ओषधीषु गर्भम् गर्भस्थानीयम् रेतः उदकम् दधाति स्थापयति, तं स्तुहि ॥ १ ॥

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।
उतानागा ईषते वृष्ण्यावतो यत् पर्जन्यः स्तनयन् हन्ति दुष्कृतः ॥ २ ॥

वि । वृक्षान् । हन्ति । उत । हन्ति । रक्षसः । विश्वम् । बिभाय । भुवनम् । महाऽवधात् ।
उत । अनागाः । ईषते । वृष्ण्यऽवतः । यत् । पर्जन्यः । स्तनयन् । हन्ति । दुःऽकृतः ॥ २ ॥

वेङ्कट० 'वि हन्ति वृक्षान्, वि हन्ति च रक्षांसि, सर्वाणि च अस्माद् भूतानि बिभ्यति महावधात् । महान् हि अस्य वधः, अप्यनपराधो भीतः पलायते वर्षकर्मवतः, यत् पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः' इति यास्कः ( १०,११ ) ॥ २ ॥

मुद्गल० अनागाः निष्पापः पर्जन्यः वृक्षान् वि हन्ति, रक्षसः रक्षांसि सर्वाणि हन्ति । उत अपि च विश्वम् सर्वम् भुवनम् महावधात् अपराधात् बिभाय बिभेति । उत अपि च वृष्ण्यावतः वर्षकर्मवतः ईषते हन्ति । दुष्कृतः पापकृतः यत् यः पर्जन्यः स्तनयन् हन्ति ॥ २ ॥

रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान् कृणुते वर्ष्याँ अह ।
दूरात् सिंहस्य स्तनथा उदीरते यत् पर्जन्यः कृणुते वर्ष्यं नभः ॥ ३ ॥

रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् । आविः । दूतान् । कृणुते । वर्ष्यान् । अह ।
दूरात् । सिंहस्य । स्तनथाः । उत् । ईरते । यत् । पर्जन्यः । कृणुते । वर्ष्यम् । नभः ॥ ३ ॥

वेङ्कट० सारथिः इव कशया अश्वान् अभिक्षिपन्[1] आविः कृणुते वर्षणनिमित्तान् मरुत्प्रभृतीन्। अह इत्याश्चर्ये। दूरात् एव सिंहशब्दाः अस्य मेघस्य शब्दाः उत् गच्छन्ति, यदा पर्जन्यः करोति वर्षणहेतुम् आकाशम्[2] ॥ ३ ॥

मुद्गल० रथीव रथस्वामीव। स यथा कशया अश्वान् अभिक्षिपन् दूतान् भटान् आविष्करोति तद्वदसौ पर्जन्योऽपि कशया अश्वान् मेघान् अभिक्षिपन् प्रेरयन् वर्ष्यान् वर्षकान् दूतान् मेघान् [3]आविः कृणुते[3] प्रकटयति। अह पूरणः। एवम् सिंहस्य मेघस्य स्तनथाः गर्जनशब्दाः दूरात् उत् ईरते उद्गच्छन्ति। कदा। यत् यदा पर्जन्यः नभः अन्तरिक्षम् वर्ष्यम् वर्षोपेतम् कृणुते करोति तदा ॥ ३ ॥

प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।
इरा विश्वस्मै भुवनाय जायते यत् पर्जन्यः पृथिवीं रेतसावति ॥ ४ ॥

प्र । वाताः । वान्ति । पतयन्ति । विऽद्युतः । उत् । ओषधीः । जिहते । पिन्वते । स्व१रिति स्वः ।
इरा । विश्वस्मै । भुवनाय । जायते । यत् । पर्जन्यः । पृथिवीम् । रेतसा । अवति ॥ ४ ॥

वेङ्कट० प्र वान्ति वाताः, विद्युतः च पतन्ति, ओषध्यश्च उत् गच्छन्ति, सर्वं च स्वरसं क्षरति[4], अन्नं च विश्वस्मै भुवनाय जायते यदा पर्जन्यः पृथिवीम् उदकेन रक्षति ॥ ४ ॥

मुद्गल० प्र वान्ति वाताः वृष्ट्यर्थम्। पतयन्ति गच्छन्ति समन्तात् सञ्चरन्ति विद्युतः। ओषधीः ओषधयः उत् जिहते उद्गच्छन्ति प्रवर्धन्ते। स्वः अन्तरिक्षम् पिन्वते क्षरति। इरा भूमिः विश्वस्मै सर्वस्मै भुवनाय जायते सर्वजगद्धिताय समर्था भवति। कदा। यत् यदा पर्जन्यः देवः पृथिवीम् रेतसा उदकेन अवति रक्षति तदा एवं भवति ॥ ४ ॥

यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति ।
यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥ ५ ॥

यस्य । व्रते । पृथिवी । नन्नमीति । यस्य । व्रते । शफऽवत् । जर्भुरीति ।
यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य । महि । शर्म । यच्छ ॥ ५ ॥

वेङ्कट० यस्य कर्मणि पृथिवी अत्यन्तम् आर्द्रीभूता नमति, यस्य कर्मणि शफवत् पश्वादि पुष्टं भवति, यस्य व्रते ओषध्यः विश्वरूपाः जायन्ते, सः त्वम् नः हे पर्जन्य! महत् सुखं प्रयच्छ ॥ ५ ॥

मुद्गल० यस्य पर्जन्यस्य व्रते कर्मणि पृथिवी नन्नमीति अत्यर्थं नमति सर्वेषाम् नम्रो भवति, यस्य व्रते शफवत् गवादिकम् जर्भुरीति गच्छति, यस्य व्रते ओषधीः ओषध्यः विश्वरूपाः नानारूपा भवन्ति। हे पर्जन्य! सः महानस्त्वम् नः अस्मभ्यम् महि शर्म महत् सुखम् यच्छ प्रयच्छ ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये सप्तविंशो वर्गः ॥

---

१. मभिं मूको. २. आप्तन वि॰ ल. ३-३. आविष्करोति मूको. ४. रसं॰ त वि॰ द.

दि॒वो नो॑ वृ॒ष्टिं म॑रुतो ररीध्वं॒ प्र पि॑न्वत॒ वृष्णो॒ अश्व॑स्य॒ धाराः॑ ।
अ॒र्वाङे॒तेन॑ स्तनयि॒त्नुनेह्य॒पो नि॑षि॒ञ्चन्नसु॑रः पि॒ता नः॑ ॥ ६ ॥

दि॒वः । नः॒ । वृ॒ष्टिम् । म॒रु॒तः॒ । र॒री॒ध्व॒म् । प्र । पि॒न्व॒त॒ । वृष्णः॑ । अश्व॑स्य । धाराः॑ ।
अ॒र्वाङ् । ए॒तेन॑ । स्त॒न॒यि॒त्नुना॑ । आ । इ॒हि॒ । अ॒पः । नि॒ऽसि॒ञ्चन् । असु॑रः । पि॒ता । नः॒ ॥६॥

वेङ्कट० दिवः नः वृष्टिम् हे मरुतः! प्रयच्छत । प्रप्यायत[1] वर्षितुः अश्वस्य पर्जन्यस्य धाराः । अर्वाङ् एतेन स्तनयित्नुना आ इहि अपः निषिञ्चन् प्राज्ञः पालयिता अस्माकम् ॥ ६ ॥

मुद्गल० हे मरुतः! यूयम् दिवः अन्तरिक्षात् सकाशात् नः अस्मभ्यम् वृष्टिम् ररीध्वम् दत्त । वृष्णः वर्षकस्य अश्वस्य व्यापकस्य मेघस्य सम्बन्धिन्यः धाराः उदकस्य धाराः प्र पिन्वत प्रक्षारत[2] । हे पर्जन्य! त्वम् एतेन स्तनयित्नुना गर्जता मेघेन सह अर्वाङ् अस्मदभिमुखम् आ इहि आगच्छ । किं कुर्वन् । अपः अम्भांसि निषिञ्चन् स देवः पर्जन्यः असुरः उदकानां निरसिता सन् नः अस्माकम् पिता पालकश्च ॥ ६ ॥

अ॒भि क्र॑न्द स्त॒नय॒ गर्भ॒मा धा॑ उद॒न्वता॒ परि॑ दीया॒ रथे॑न ।
दृतिं॒ सु क॑र्ष॒ विषि॑तं॒ न्य॑ञ्चं स॒मा भ॑वन्तू॒द्वतो॑ निपा॒दाः ॥ ७ ॥

अ॒भि । क्र॒न्द॒ । स्त॒नय॑ । गर्भ॑म् । आ । धाः॒ । उ॒द॒न्ऽवता॑ । परि॑ । दी॒य॒ । रथे॑न ।
दृति॑म् । सु । क॒र्ष॒ । विऽसि॑तम् । न्य॑ञ्चम् । स॒माः । भ॒व॒न्तु॒ । उ॒त्ऽवतः॑ । नि॒ऽपा॒दाः ॥ ७ ॥

वेङ्कट० अभि क्रन्द, स्तनितशब्दं च कुरु । ओषधीनाम् गर्भम् आ धेहि । परितो गच्छ उदकवता रथेन । दृतिसदृशं मेघं सुष्ठु कर्ष[3] विषिताऽऽस्यम्[4] नीचीनमुखम् । समाः भवन्तु उदकेन उच्छ्रिताः निम्नाश्च देशाः ॥ ७ ॥

मुद्गल० हे पर्जन्य! अभि भूम्याभिमुख्यम् क्रन्द[5] शब्दय[6], स्तनय गर्ज । गर्भम् गर्भस्थानीयम् उदकम् ओषधीषु आ धाः आ धेहि । तदर्थम् उदन्वता उदकवता रथेन परि दीय परितो गच्छ । दृतिम् मेघम् विषितम् बद्धम् न्यञ्चम् न्यक् अधोमुखम् सु सुष्ठु कर्ष आकर्ष मुञ्चार्थम् । एवं कृते उद्वतः उन्नतप्रदेशाः निपादाः न्यग्भूतपादा निम्नतप्रदेशाः समाः उदकपूर्णाः भवन्तु ॥ ७ ॥

म॒हान्तं॒ कोश॒मुद॑चा॒ नि षि॑ञ्च॒ स्यन्द॑न्तां कु॒ल्या विषि॑ताः पु॒रस्ता॑त् ।
घृ॒तेन॒ द्यावा॑पृथि॒वी व्यु॑न्धि सुप्रपा॒णं भ॑वत्व॒घ्न्याभ्यः॑ ॥ ८ ॥

म॒हान्त॑म् । कोश॑म् । उत् । अ॒च॒ । नि । सि॒ञ्च॒ । स्यन्द॑न्ताम् । कु॒ल्याः॑ । विऽसि॑ताः । पु॒रस्ता॑त् ।
घृ॒तेन॑ । द्यावा॑पृथि॒वी इति॑ । वि । उ॒न्धि॒ । सु॒ऽप्र॒पा॒नम् । भ॒व॒तु॒ । अ॒घ्न्याभ्यः॑ ॥ ८ ॥

---

१. प्राप्य॰ वि॰ छर्प. २. वधत्त मूको. ३. कर्षण वि॰ छर्प. ४. विषितास्य वि॰ छर्प ५. भूम्यभि मूको. ६. शब्द मूको.

वेङ्कट० महान्तम् मेघम् उत् सिञ्च वत्सिकम् उदकं च पृथिव्यां नि सिञ्च। स्यन्दन्ताम् कुल्याः विमुक्ताः पुरस्तात्। उदकेन द्यावापृथिवी विविधं क्लेदय। सुप्रपाणम् भवतु गोभ्यः ॥ ८ ॥

मुद्गल० हे पर्जन्य! त्वम् महान्तम् प्रवृद्धम् कोशम् कोशस्थानीयं मेघम् उत् अच उद्गच्छ। नि सिञ्च नीचैः क्षारय। कुल्याः नद्यः विषिताः विप्लुताः सत्यः स्यन्दन्ताम् प्रवहन्तु पुरस्तात् पूर्वाभिमुखम्। प्रायेण नद्यः प्राच्यः स्यन्दन्ते[1]। घृतेन उदकेन द्यावापृथिवी दिवं च पृथिवीं च वि उन्धि क्लेदय। अघ्न्याभ्यः गोभ्यः सुप्रपाणम् सुप्रपातव्यम् उदकम् भवतु ॥ ८ ॥

यत् पर्जन्य कनिक्रदत् स्तनयन् हंसि दुष्कृतः।
प्रतीदं विश्वं मोदते यत् किं च पृथिव्यामधि ॥ ९ ॥

यत्। पर्जन्य। कनिक्रदत्। स्तनयन्। हंसि। दुःऽकृतः।
प्रति। इदम्। विश्वम्। मोदते। यत्। किम्। च। पृथिव्याम्। अधि ॥ ९ ॥

वेङ्कट० यदा हे पर्जन्य![2] शब्दं कुर्वन्[3]स्तनयन् च[3] हंसि रक्षांसि, प्रमोदते तदा पुनः[4] विश्वम् यत् किम् चित् पृथिव्याम् अधि भवति ॥ ९ ॥

मुद्गल० हे पर्जन्य! यत् यदा त्वम् कनिक्रदत् अत्यर्थं शब्दयन् स्तनयन् दुष्कृतः पापकृतो मेघान् हंसि विदारयसि। तदानीम् इदम् विश्वम् जगत् प्रति मोदते। यत् किम् च पृथिव्याम् अधि भूम्याम् अभिष्ठितं यत् चराचरात्मकं तद् इदं विश्वं मोदते हृष्यति ॥ ९ ॥

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम् ॥ १० ॥

अवर्षीः। वर्षम्। उत्। ऊँ इति। सु। गृभाय। अकः। धन्वानि। अतिऽएतवै। ऊँ इति।
अजीजनः। ओषधीः। भोजनाय। कम्। उत। प्रऽजाभ्यः। अविदः। मनीषाम् ॥ १० ॥

वेङ्कट० अवर्षीः, वर्षम् सुष्ठु चोद्गृहीतवानसि। तथा निरुदकानपि देशान् करोषि[5] अतीत्य गन्तुम्। तथा ओषधीः च भोजनाय अजीजनः। उत प्रजाभ्यः प्रज्ञाम् अलम्भयः ॥ १० ॥

मुद्गल० इयम् अतिवृष्टिविमोचनी। हे पर्जन्य! त्वम् अवर्षीः वृष्टवानसि। वर्षम् उत् उ [illegible] गृभाय वस् उत्कृष्टम् सु सुष्ठु गृभाय गृहाण। परिहरेत्यर्थः। धन्वानि निरुदकप्रदेशान् अकः अलवतः कृतवानसि। किमर्थम्। अत्येतवे उ अतिक्रम्य गन्तुम्। ओषधीः अजीजनः उदपादयः। किमर्थम्। भोजनाय भोगाय। कम् पूरणः। उत अपि च प्रजाभ्यः सकाशात् मनीषाम् स्तुतिम् अविदः प्राप्तवानसि ॥ १० ॥

इति चतुर्थाष्टके चतुर्थाध्याये अष्टाविंशो वर्गः ॥

---

१. स्यन्दते मूको. २. °न्यः मूको. ३-३. स्तनयित्नु विं क्षपं. ४. एवं मूको. ५. करोषि इ; अन्तरोपि [illegible] क्षपं.

[ ८४ ]

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ १ ॥

बट् । इत्था । पर्वतानाम् । खिद्रम् । बिभर्षि । पृथिवि ।
प्र । या । भूमिम् । प्रवत्वति । मह्ना । जिनोषि । महिनि ॥ १ ॥

वेङ्कट० सत्यं त्वं मेघानाम्[1] छेदनम् अमुत्र धारयसि पृथिवि!, प्र जिन्वसि या भूमिम् हे प्रवणवति! महत्त्वेन हे उदकवति![2] ( बृ० या ११,३७ ) इति पृथिव्या अधिदेवतां मध्यस्थानपठितां पृथिवीम् आह ( निघ ५,५ ) ॥ १ ॥

मुद्गल० 'बळित्था' इति तृचात्मकं द्वादशं सूक्तम् । भौम आत्रेय ऋषिः । अनुष्टुप् छन्दः । पृथिवी देवता ॥

हे पृथिवि! मध्यस्थानदेवते! इत्था इत्थम् अमुत्र अन्तरिक्षे वा बट् ,सत्यम् पर्वतानाम् मेघानां वा खिद्रम् खेदनं भेदनम् बिभर्षि धारयसि । हे महिनि! महति! हे प्रवत्वति! प्रकर्षवति! प्रवणोदकवति! या या त्वम् भूमिम् प्रवणां पृथिवीम् मह्ना महत्त्वेन प्र जिनोषि प्रकर्षेण प्रीणयसि ॥ १ ॥

स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभिः ।
प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि ॥ २ ॥

स्तोमासः । त्वा । विऽचारिणि । प्रति । स्तोभन्ति । अक्तुऽभिः ।
प्र । या । वाजम् । न । हेषन्तम् । पेरुम् । अस्यसि । अर्जुनि ॥ २ ॥

वेङ्कट० स्तोमासः त्वा विचरणस्वभावे! प्रति अर्चन्ति हविर्भिः सह । प्र क्षिपसि या अश्वमिव शब्दं कुर्वन्तं पूरकं मेघं शुक्लवर्णे! ॥ २ ॥

मुद्गल० हे विचारिणि! विविधं चरणशीले! पृथिवीदेवि! त्वा त्वाम् स्तोमासः स्तोतारः अक्तुभिः गमनशीलैः स्तोत्रैः प्रति स्तोभन्ति अभिष्टुवन्ति । किञ्च या त्वम् हेषन्तम् शब्दयन्तम्[3] वाजम् न अश्वमिव पेरुम् पूरकं मेघम् प्र अस्यसि प्रक्षिपसि हे अर्जुनि! शुक्लवर्णे! ॥ २ ॥

दृळ्हा चिद् या वनस्पतीन् क्ष्मया दर्धर्ष्योजसा ।
यत् ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥ ३ ॥

दृळ्हा । चित् । या । वनस्पतीन् । क्ष्मया । दर्धर्षि । ओजसा ।
यत् । ते । अभ्रस्य । विऽद्युतः । दिवः । वर्षन्ति । वृष्टयः ॥ ३ ॥

१. पर्वतानां वि° स्वं. २. प्रवति वि° स्वं. ३. शब्दायमानम् मूको.

वेङ्कट० दृढानपि वनस्पतीन् अनया पृथिव्या यान् त्वं धारयसि बलेन, यदा तव अभ्रस्य विद्योतमानस्य द्युलोकस्य [1]वर्षन्ति उदकानि[1] पर्जन्याः[2], पतन्ति वा[3] उदकानि, तदा धारयसि ॥ ३ ॥

मुद्गल० हे पृथिवि! या त्वम् दृळ्हा चित् दृढया क्ष्मया भूम्या सह वनस्पतीन् वृक्षान् ओजसा बलेन दर्धर्षि धारयसि। यत् यस्मात् ते तव सम्बन्धिनः वृष्टयः वर्षका मेघाः विद्युतः विद्योतमानात् अभ्रस्य अभ्रात् अपो दृष्टुंः दिवः अन्तरिक्षात् वर्षन्ति ॥ ३ ॥

इति चतुर्थाष्टके चतुर्थाध्याये एकोनत्रिंशो वर्गः ॥

[ ८५ ]

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥ १ ॥

प्र । सम्ऽराजे । बृहत् । अर्च । गभीरम् । ब्रह्म । प्रियम् । वरुणाय । श्रुताय ।
वि । यः । जघान । शमिताऽइव । चर्म । उपऽस्तिरे । पृथिवीम् । सूर्याय ॥ १ ॥

वेङ्कट० प्र उच्चारय सर्वेषां राज्ञे बृहत् गम्भीरम् प्रियम् ब्रह्म वरुणाय श्रुताय। वि हन्ति यः मेघम्[4] शमिता इव चर्म[4] मध्यमस्थानपतिताम् पृथिवीम् सूर्याय पर्जन्याय उपस्तरणार्थम्, अद्भिः[5] पृथिवीं छादयितुम्। अपि वा मेघः चर्म तं विहन्ति पृथिवीं तेजसा छादयितुमिति ॥ १ ॥

मुद्गल० 'प्र सम्राजे' इति अष्टर्चं अष्टमं सूक्तम्। अत्रिर्ऋषिः। त्रिष्टुप् छन्दः। वरुणो देवता।

अत्रिः स्वात्मानं सम्बोध्य ब्रवीति। हे अत्रे![6] त्वम् सम्राजे सम्यक् राजमानाय ईश्वराय श्रुताय सर्वत्र श्रूयमाणाय वरुणाय उपद्रवस्य निवारकाय देवाय बृहत् प्रभूतम् गभीरम् दुरवगाहम् प्रियम् प्रियभूतम् ब्रह्म स्तोत्ररूपम् कर्म प्र अर्च, प्रोच्चारयेत्यर्थः। यः वरुणः शमिता इव चर्म शमिता पशुविशसनकर्ता[7] यथोपस्तरणाय चर्म हन्ति तद्वत् पृथिवीम् विस्तीर्णम् अन्तरिक्षम् सूर्याय सूर्यस्य उपस्तिरे आस्तरणाय वि जघान विस्तारयामास ॥ १ ॥

वनेषु व्य१न्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो अप्स्व१ग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ २ ॥

वनेषु । वि । अन्तरिक्षम् । ततान । वाजम् । अर्वत्ऽसु । पयः । उस्रियासु ।
हृत्ऽसु । क्रतुम् । वरुणः । अप्ऽसु । अग्निम् । दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ ॥२॥

वेङ्कट० वनेषु हीदम् एषु वृक्षाग्रेषु अन्तरिक्षम् विततम्। तस्मादाह—'वनेषु व्यन्तरिक्षं ततान' (काश ४,१,४,४) इत्यादि वाजसनेयकम्। बलम् अश्वेषु, पयः गोषु, प्रज्ञानम् हृत्सु[7], वरुणः अप्सु

1-1. वर्षन्त्यवर्षितानि वि[1] लपं. 2. °न्यः मूको. 3. च वि[1] स्पं 4. नास्ति मूको, 5. अद्भिः वि[1]; अविभि. ह; अविभि लपं. 6. अत्र मूको. 7. पशु विशां मूको.

अग्निम्, दिवि च सूर्यम् अदधात्, सोमम् च अद्रौ। तत्र ब्राह्मणम् —'अद्रिषु हीमेषु गिरिषु सोमो हितः'[1] ( काठ ४,३,४,४ ) इति ॥ २ ॥

मुद्गल० मयम् वरुणः वनेषु वृक्षाग्रेषु अन्तरिक्षम् [illegible] ततान विस्तारितवान्। वाजम् बलम् अर्वत्सु अश्वेषु, पयः क्षीरम् उस्रियासु गोषु, हृत्सु हृदयेषु क्रतुम् कर्मसङ्कल्पम्, अप्सु उदकेषु अग्निम् वैद्युतम्। सर्वत्र विततान इति सम्बन्धः। किञ्च दिवि द्युलोके सूर्यम् अदधात् स्थापितवान् सोमम् च अद्रौ पर्वते अदधात् ॥ २ ॥

नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम्।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ३ ॥

नीचीनऽबारम्। वरुणः। कवन्धम्। प्र। ससर्ज। रोदसी इति। अन्तरिक्षम्।
तेन। विश्वस्य। भुवनस्य। राजा। यवम्। न। वृष्टिः। वि। उनत्ति। भूम ॥ ३ ॥

वेङ्कट० नीचीनद्वारम् वरुणः मेघम् प्र सृजति त्रीन् लोकान् प्रति, तेन सर्वस्य भुवनस्य राजा यवम् इव वृष्टिः वि उनत्ति पृथिवीम् ॥ ३ ॥[1]

मुद्गल० नीचीनबारम् अधोमुखबिलम् प्र ससर्ज कृतवान्। कम्। कवन्धम् जलम् उदकम्[2] वद् धीयतेऽत्र इति कवन्धो मेघः, तं तथा अकरोत्। किं प्रतीत्युच्यते। रोदसी द्यावापृथिव्यौ अन्तरिक्षम् च प्रति। लोकहितायेत्यर्थः। तेन उदकेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी वरुणः भूम भूमिम् वि उनत्ति क्लेदयति, वृष्टिः सेक्ता पुमान् यवम् न यवमिव, यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वत् भूमिं सर्वत्रोनत्ति ॥ ३ ॥[1]

उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित्।
समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥ ४ ॥

उनत्ति। भूमिम्। पृथिवीम्। उत। द्याम्। यदा। दुग्धम्। वरुणः। वष्टि। आत्। इत्।
सम्। अभ्रेण। वसत। पर्वतासः। तविषीऽयन्तः। श्रथयन्त। वीराः ॥ ४ ॥

वेङ्कट० क्लेदयति पृथिवीम् अन्तरिक्षं च दिवं च यदा दुग्धमुदकं कामयते वरुणः। अनन्तरमेव सवासं कुर्वन्ति त्रिलोकचयाः मेघेन। बलमु बलमिच्छन्तः[3] पार्थिवाः सर्वसद्भावाय श्लथनं कुर्वन्ति, भिन्नाः स्वेषु राष्ट्रेषु गच्छन्ति ॥ ४ ॥

मुद्गल० वरुणः भूमिम् पृथिवीम् प्रथितम् अन्तरिक्षम् उत अपि च द्याम् द्युलोकम् उनत्ति क्लेदयति। यदा दुग्धम् उदकपूरणम्[4] वष्टि कामयते। आत् इत् अनन्तरमेव सम् वसत आच्छादयन्ति। के। पर्वतासः पर्ववन्तः [illegible]। केन। अभ्रेण मेघेन। किञ्च तविषीयन्तः बलमिच्छन्तः वीराः विशेषेण वृष्टेः प्रेरयितारो मरुतः श्रथयन्त विदारितवन्तो मेघान् ॥ ४ ॥

---

१. तु० या १०,४. २. नास्ति मूको. ३. बलमि° छपे. ४. उदपूरम् मूको.

इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम् ।
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ॥ ५ ॥

इमाम् । ऊँ इति । सु । आसुरस्य । श्रुतस्य । महीम् । मायाम् । वरुणस्य । प्र । वोचम् ।
मानेनऽइव । तस्थिऽवान् । अन्तरिक्षे । वि । यः । ममे । पृथिवीम् । सूर्येण ॥ ५ ॥

वेङ्कट० इमाम् एव सुष्ठु असुराणां हन्तुः विश्रुतस्य वरुणस्य महतीम् मायाम् प्र ब्रवीमि । मानदण्डेनेव तस्थिवान् अन्तरिक्षे परिच्छिनत्ति यः सूर्येण अन्तरिक्षम् ॥ ५ ॥

मुद्गल० आसुरस्य असुरहन्तुः वरुणस्य श्रुतस्य प्रख्यातस्य महीम् महतीम् इमाम् मायाम् प्र वोचम् प्रब्रवीमि । यः वरुणः अन्तरिक्षे तस्थिवान् तिष्ठन् मानेन इव दण्डेनेव सूर्येण पृथिवीम् अन्तरिक्षम् वि ममे परिच्छिनत्ति, तस्यैषा माया । ऊँ सु पूरणौ ॥ ५ ॥

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥ ६ ॥

इमाम् । ऊँ इति । नु । कविऽतमस्य । मायाम् । महीम् । देवस्य । नकिः । आ । दधर्ष ।
एकम् । यत् । उद्ना । न । पृणन्ति । एनीः । आऽसिञ्चन्तीः । अवनयः । समुद्रम् ॥ ६ ॥

वेङ्कट० इमाम् खलु कवितमस्य महतीम् मायाम् देवस्य न कश्चित् आ धर्षयति । यत् एकम् समुद्रम् उदकेन न[1] पूरयन्ति श्वेतवर्णाः[2] आभिमुख्येन गच्छन्त्यः नद्यः ॥ ६ ॥

मुद्गल० कवितमस्य देवस्य वरुणस्य महीम् महतीम् इमाम् मायाम् नकिः नैव आ दधर्ष न हिनस्ति कश्चिदपि । उ नु पूरणौ । यत् यस्मात् एकम् समुद्रम् उद्ना उदकेन न पृणन्ति न पूरयन्ति । काः । एनीः एन्यः शुभ्राः आसिञ्चन्तीः उदकमासेचयन्त्यः अवनयः नद्यः (द्र. निघ १,१३) । अन्तरिक्षत्रिकारादिसमुद्रपूरणधर्मकं कर्म वरुणस्य एव । अत एव वरुणो महान् ॥ ६ ॥

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद् भ्रातरं वा ।
वेशं वा नित्यं वरुणारणं वा यत् सीमागश्चकृमा शिश्रथस्तत् ॥ ७ ॥

अर्यम्यम् । वरुण । मित्र्यम् । वा । सखायम् । वा । सदम् । इत् । भ्रातरम् । वा ।
वेशम् । वा । नित्यम् । वरुण । अरणम् । वा । यत् । सीम् । आगः । चकृम । शिश्रथः । तत् ।

वेङ्कट० हे वरुण । अर्यमैवार्यम्यः योऽस्मभ्यं प्रयच्छति, यः वा मित्रं भवति, यः वा समानख्यानः, यः वा भ्राता, यः वा समीपगृहस्थः, यः वा गृहस्थः, यो वा गृहमागतः । एतान् सर्वान् यत् वयं पापं कृतवन्तः, तत् विश्लथय ॥ ७ ॥

---

१. नास्ति मूको. २. नास्ति श्वेतवर्णाः मूको.

मुद्गल० हे वरुण! अर्यम्यम् अर्यमैवार्यम्यः तं प्रदातारम्, वा अथवा मित्र्यम् अनुरक्तम्, वा अथवा सखायम् समानख्यानम्, सदम् इत् सर्वदैव भ्रातरम् वा। नित्यम् निरन्तरम् वेशम् निकटनिकेतनवर्तिनम् वा अरणम् वा, अशब्दमित्यर्थः। एतान् प्रति यत् सीम् सदेतत् आगः अपराधम् चकृम, तत् शिश्रथः अस्मत्तो विनाशय ॥ ७ ॥

कितवासो यद् रिरिपुर्न दीवि यद् वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥ ८ ॥

कितवासः । यत् । रिरिपुः । न । दीवि । यत् । वा । घ । सत्यम् । उत । यत् । न । विद्म ।
सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध । ते । स्याम । वरुण । प्रियासः ॥८॥

वेङ्कट० कितवा अस्मासु दिविति पणिमिव पापं[2] देवने, तत्रस्थे यदृणम् अस्माकमस्तीत्यर्थः। तत्र तस्यावश्यप्रतिकर्तव्यत्वात्[1] नशब्दः। तथा च मन्त्रः —'यदृदीव्यन्नृणमहं बभूव' ( तैआ २,४,१ ) इति। यत् वा खलु सत्यम् ऋणम्, वा बुद्धिपूर्वं कृतम्, अपि 'वा यत्' न जानीमः, सर्वाणि तानि विश्लथय शिथिलानीव बन्धनानि। अथ ऊर्ध्वं तव स्याम हे देव! वरुण! प्रियाः ॥ ८ ॥

मुद्गल० कितवासः द्यूतकृतः दीवि न देवने द्यूते यथा यत् रिरिपुः लेपयन्ति पापमारोपयन्ति अपि एतत् पापमकरोः इत्याक्षिपन्ति। वा अथवा। घ एवार्थः। यत् पापम् सत्यम् आरोपमन्तरेण कृतवन्तः स्मः। उत अपि च यत् कृतं पापम् न विद्म न जानीमः। ता तानि सर्वा सर्वाणि शिथिरा इव 'शिथिलबन्धनानि फलानीव' वि ष्य विमोचय। हे देव! वरुण! अध अनन्तरम् ते तव प्रियासः प्रियाः स्याम ॥ ८ ॥

इति चतुर्थाष्टके चतुर्थाध्याये एकत्रिंशो वर्गः ॥

[८६]

इन्द्राग्नी यमवथ उभा वाजेषु मर्त्यम् ।
दृळ्हा चिद् स प्र भेदति द्युम्ना वाणीरिव त्रितः ॥ १ ॥

इन्द्राग्नी इति । यम् । अवथः । उभा । वाजेषु । मर्त्यम् ।
दृळ्हा । चित् । सः । प्र । भेदति । द्युम्ना । वाणीःऽइव । त्रितः ॥ १ ॥

वेङ्कट० हे इन्द्राग्नी! पालयथः उभौ सहितौ सङ्ग्रामेषु यम् मनुष्यम्, दृढान्यपि सः प्र भिनत्ति शत्रूणाम् धनान्युदकानीव त्रितः 'ऋषिः जननकाले'[4]। स हि भद्रया उत्पन्नः ॥ १ ॥

मुद्गल० 'इन्द्राग्नी यम्' इति षडृचं चतुर्दशं सूक्तम्। अत्रिर्ऋषिः। षष्ठी विराट्पूर्वा, आद्यौ 'दशवाषटकाद्यः' ( ऋअ ९,११ ) इति परिभाषितत्वात्। शिष्टा अनुष्टुभः। इन्द्राग्नी देवता।

---

१. तत्र तस्यावश्यत्वात्प्रति वि° कपं. २-२. पापं कपं; पापं वि°. ३-३. शिथिलानीव विपाकानीव मूको. ४-४. ऋषिजन° मूको.

मुद्गल० हे इन्द्राग्नी! उभा उभौ परस्पराविद्युक्तौ युवाम् यम् मर्त्यम् अवथः रक्षथः वाजेषु सङ्ग्रामेषु, सः मर्त्यः दृळ्हा चित् दृढान्यपि द्युम्ना द्योतमानानि धनानि [1]शत्रुसम्बन्धीनि प्र भेदति भिनत्ति, त्रितः ऋषिः[1] वाणीः इव प्रतिवादिवाक्यानीव ॥ १ ॥

या पृतनासु दुष्टरा या वाजेषु श्रवाय्या ।
या पञ्च चर्षणीरभीन्द्राग्नी ता हवामहे ॥ २ ॥

या । पृतनासु । दुस्तरा । या । वाजेषु । श्रवाय्या ।
या । पञ्च । चर्षणीः । अभि । इन्द्राग्नी इति । ता । हवामहे ॥ २ ॥

वेङ्कट० यौ सेनासु दुस्तरौ, यौ सङ्ग्रामे श्रवणीयौ, यौ पञ्च जनान् अभि भवतः, तौ इन्द्राग्नी हवामहे ॥२॥

मुद्गल० [2]या यौ इन्द्राग्नी पृतनासु[2] सङ्ग्रामेषु दुष्टरा दुस्तरौ अनभिभाव्यौ, या यौ वाजेषु अन्नेषु श्रवाय्या श्रवाय्यौ स्तुत्यौ, या यौ पञ्च चर्षणीः मनुष्यान्[3] अभि रक्षतः इति शेषः, ता तौ महानुभावौ हवामहे स्तुमः ॥ २ ॥

तयोरिदमवच्छवस्तिग्मा दिद्युन्मघोनोः । प्रति द्रुणा गभस्त्योर्गवां वृत्रघ्न एषते ॥३॥

तयोः । इत् । अमऽवत् । शवः । तिग्मा । दिद्युत् । मघोनोः ।
प्रति । द्रुणा । गभस्त्योः । गवाम् । वृत्रऽघ्ने । आ । ईषते ॥ ३ ॥

वेङ्कट० तयोः एव इदम् अभिभवत् बलं तीक्ष्णं चाऽऽयुधं धनवतोः । तत्र हस्तयोः स्थितेन द्रुममयेन चमसेन अध्वर्युः प्रत्यभिमुखं गच्छति इन्द्राय गोसिद्ध्यर्थम् ॥ ३ ॥

मुद्गल० अमवत् अभिभावुकम् शवः बलम् तयोः इत् तयोरेव । मघोनोः मघवतोर्धनवतोः तयोः दिद्युत् वज्रम् तिग्मा तीक्ष्णं वर्तते गभस्त्योः हस्तयोः । एवंभूतौ देवौ गवाम् पणिभिरपहृतानां गवां लाभाय द्रुणा द्रुमविकारेण एकेन [4]रथेन वृत्रघ्ने वृत्रासुरवधाय प्रति ईषते प्रतिगच्छतः । आ पूरणः ॥ ३ ॥

ता वामेषे रथानामिन्द्राग्नी हवामहे । पती तुरस्य राधसो विद्वांसा गिर्वणस्तमा ॥४॥

ता । वाम् । एषे । रथानाम् । इन्द्राग्नी इति । हवामहे ।
पती इति । तुरस्य । राधसः । विद्वांसा । गिर्वणःऽतमा ॥ ४ ॥

वेङ्कट० तौ वाम् [5]रथानाम् गमनाय[5] अस्मदीयानाम्[5] इन्द्राग्नी हवामहे स्वामिनौ तारकस्य धनस्य विद्वांसौ अतिशयेन गीर्भिर्वननीयौ ॥ ४ ॥

मुद्गल० हे देवौ! ता तौ वक्ष्यमाणगुणौ वाम् युवाम् हवामहे स्तुमः । किमर्थम् । रथानाम् एषे

---

१-१. शत्रुसम्बन्धी … ऋषिः मूको. २-२. …नासु मूको. ३. °ष्यान् मूको. ४-४. रथेन भाग° छ लुप्तं. ५. मस्मदीयौ वि°; अस्मदीयान् छ लुप्तं.

युद्धे रथानां प्रेरणाय । कीदृशौ युवाम् । इन्द्राग्नी इन्द्रम् अग्निं [illegible] परस्परयुग्मभूतौ तुरस्य जङ्गमरूपस्य राधसः धनादिलक्षणस्य पती स्वामिनौ विद्वांसा सर्वज्ञौ गिर्वणस्तमा गीर्भिर्वननीयतमौ युवां हवामहे ॥ ४ ॥

ता वृधन्तावनु द्यून् मर्ताय देवावदभा । अर्हन्ता चित् पुरो दधेऽशेव देवावर्वते ॥५॥

ता । वृधन्तौ । अनु । द्यून् । मर्ताय । देवौ । अदभा ।
अर्हन्ता । चित् । पुरः । दधे । अंशाऽइव । देवौ । अर्वते ॥ ५ ॥

वेङ्कट० तौ वर्धमानौ दिवसेषु मनुष्याय देवौ हिंसारहितौ पूज्यौ पुरः स्थापयामि, अंशौ इव देवौ यथैकस्तोत्रौ समानाकारौ तथेन्द्राग्नी भवतः । यद्वांशश्च भगश्चादित्यौ द्वौ । अश्वलाभाय भवतम् ॥ ५ ॥

मुद्गल० ता तौ अनु द्यून् प्रतिदिनम् 'मर्ताय मनुष्याय' वृधन्तौ वर्धमानौ अदभा अहिंस्यौ अर्हन्ता चित् प्रकर्षेण पूज्यौ । तादृशौ महानुभावौ देवौ अर्वते अश्वलाभाय पुरो दधे पुरस्कुर्वे । अंशा इव अंशौ इव आदित्यौ इव दीप्तौ इत्यर्थः ॥ ५ ॥

एवेन्द्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः ।
ता सूरिषु श्रवो बृहद् रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतम् ॥ ६ ॥

एव । इन्द्राग्निऽभ्याम् । अहावि । हव्यम् । शूष्यम् । घृतम् । न । पूतम् । अद्रिऽभिः ।
ता । सूरिषु । श्रवः । बृहत् । रयिम् । गृणत्ऽसु । दिधृतम् । इषम् । गृणत्ऽसु । दिधृतम् ॥६॥

वेङ्कट० एवम् इन्द्राग्निभ्याम् हव्यम् हूयते बलकरम् घृतम् इव ग्रावभिः अभिषुतं सोममयम् । तौ स्तोतृषु महतीं कीर्तिं धनं च स्तुवत्सु[1] धारयतम्, अन्नं च ॥ ६ ॥

मुद्गल० एव एवम् इन्द्राग्निभ्याम् हव्यम् हविः अहावि परित्यक्तमासीत् । कीदृशं तत् । शूष्यम् बलकरम् । किमिव । अद्रिभिः ग्रावभिः पूतम् अभिषुतम् घृतम् न "सोमरसः इव" । तद् यथा युवाभ्यां प्रदीयते तद्वत् चरुपुरोडाशादिकमपि । ता तौ देवौ सूरिषु मेधाविषु गृणत्सु स्तुवत्सु अस्मासु बृहत् प्रभूतम् श्रवः अन्नम् रयिम् धनं [illegible] दिधृतम् धारयतम्, इषम् अन्नम् गृणत्सु स्तुवत्सु दिधृतम् । पुनरुक्तिरादरार्था ॥ ६ ॥

इति चतुर्थाष्टके चतुर्थोऽध्याये द्वात्रिंशो वर्गः ॥

[ ८७ ]

प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
प्र शर्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ १ ॥

1. स्तुवत्सु वि' वर्थ: स्तुवत्सु छ. २-२. नास्ति मूको. ३. तुवाभ्यु मूको. ३-३. 'एमिर मूको.

प । वः । महे । मतर्यः । यन्तु । विष्णवे । मरुत्वते । गिरिऽजाः । एवयामरुत् ।
प्र । शर्धाय । प्रऽयज्यवे । सुऽखादये । तवसे । भन्दत्ऽइष्टये । धुनिऽव्रताय । शवसे ॥ १ ॥

वेङ्कट० एवयामरुत् । प्र गच्छन्तु युष्माकम् स्तुतयः महते[1] विष्णवे मरुत्वते, गिरेर्जनयिता भवति अथम् एवयामरुत् । गिरिरिति[2] वाचमाह । प्र गच्छन्तु प्रकृष्टयज्ञाय मारुताय शर्धाय शोभनखादये वृद्धाय स्तूयमानयज्ञाय[3] धूननकर्मणे वेगवते । मारुतं सूक्तं विष्णुस्त्वहमिति[4] ॥ १ ॥

मुद्गल० 'प्र वो महे' इति नवर्चं पञ्चदशं सूक्तम् । एवयामरुदात्रेय ऋषिः । अतिजगती छन्दः । मरुतो देवता ।

प्र यन्तु गच्छन्तु गिरिजाः वाङ्निष्पन्नाः मतयः स्तुतयः । कस्मै । वः युष्मभ्यम् विष्णवे महे महते मरुत्वते मरुद्भिस्तद्वते । कस्य स्तुतयः । एवयामरुत् एतन्नामकस्य ऋषेः । किञ्च प्र यन्तु स्तुतयः । कस्मै । शर्धाय बलाय मारुताय । इतःपरं सर्वं बलविशेषणम् । प्रयज्यवे प्रकर्षेण यष्टव्याय सुखादये शोभनाभरणाय तवसे बलवते भन्ददिष्टये स्तुतिरूपा इष्टिर्यस्य तत् भन्ददिष्टि तस्मै धुनिव्रताय मेघानां चालनं कर्म[5] यस्य तादृशाय शवसे गमनवते[6] इति ॥ १ ॥

प्र ये जाता महिना ये च नु स्वयं प्र विद्मना ब्रुवत एवयामरुत् ।
क्रत्वा तद् वो मरुतो नाधृषे शवो दाना मह्ना तदेषामधृष्टासो नाद्रयः ॥ २ ॥

प्र । ये । जाताः । महिना । ये । च । नु । स्वयम् । प्र । विद्मना । ब्रुवते । एवयामरुत् ।
क्रत्वा । तत् । वः । मरुतः । न । आऽधृषे । शवः । दाना । मह्ना । तत् । एषाम् । अधृष्टासः । न । अद्रयः ॥२॥

वेङ्कट० प्र ब्रुवते महता यशेन सह[7] प्रादुर्भूताः, ये च स्वयम् एव प्रादुर्भूताः प्र ब्रुवते वेदनेनैव । अथ प्रत्यक्षः । कर्मणा तत् वः हे मरुतः ! न आधर्षणाय भवति बलम् । दानेन महत्वा तत् एषाम् बलं प्राप्यते । तेऽप्यमी भवन्त्यनाधृष्टाः इव अद्रयः "प्राबल्येन । सदिदम् एवयामरुत्प्रोक्तम्[8] इत्युक्तम् एवयामरुत् इति ॥ २ ॥

मुद्गल० ये महिना महत्वा[9] इन्द्रेण सह प्र जाताः प्रादुर्भूताः, 'ये च विद्मना यज्ञगमनविषयज्ञानेन सह प्र जाताः[9]', तान् मरुतः एवयामरुत् ब्रुवते स्तौति । अथ प्रत्यक्षः । हे मरुतः ! वः युष्माकम् तत् प्रसिद्धम् शवः बलम् क्रत्वा कर्मणा न आधृषे केनचिदपि आधर्षणीयं न भवति । किञ्च एषाम् युष्माकम् तत् बलम् दाना अभिमतदानेन मह्ना महत्त्वेन च अपेतम् । ये च यूयम् अधृष्टासः अधर्षणीयाः अद्रयः न ते यथा अधृष्याः तद्वत् यूयमपि । नु स्वयम् न पूरणाः ॥ २ ॥

प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व एवयामरुत् ।
न येषामिरी सधस्थ ईष्ट आँ अग्नयो न स्वविद्युतः प्र स्पन्द्रासो धुनीनाम् ॥ ३ ॥

---

१. नास्ति मूको. २. गिरिति ख. ३. स्तूयमानयज्ञाय वि'; स्तूयमानाय यज्ञाय एवं. ४. विष्णुर्न्दंग' मूको. ५. 'नाय मूको. ६. नास्ति क एवं ७-७. 'एवमेनैव इदमेन' मूको. ८. 'ता विधना मूको. ९-९. नास्ति मूको.

प्र । ये । दिवः । बृहतः । शृण्विरे । गिरा । सुऽशुक्वानः । सुऽभ्वः । एवयामरुत् ।
न । येषाम् । इरी । सधऽस्थे । ईष्टे । आ । अग्नयः । न । स्वऽविद्युतः । प्र । स्पन्द्रासः । धुनीनाम् ॥ ३ ॥

वेङ्कट० प्र श्रूयन्ते ये शब्देन महतः दिवः आगच्छन्तः[1] सुष्ठु शोचयितारः महान्तः । न येषाम् शत्रुः ईश्वरो भवति । स्थाने च अग्नयः इव स्वयमेव दीप्ताः नदीनां कम्पयितारः प्रकर्षेण ते भवन्ति । समानम् एवयामरुत् इति ॥ ३ ॥

मुद्गल० ये मरुतः बृहतः दिवः द्युलोकात् प्र शृण्विरे श्रूयन्ते, तान् मरुतः गिरा एवयामरुत् स्तुतवान् । कीदृशास्ते । सुशुक्वानः[2] सुदीप्ताः[3] सुभ्वः सुष्ठु भवन्तः । येषाम् मरुताम् सधस्थे सहस्थाने स्वकीये निवासे स्थिताम् इरी ईरिता प्रेरिता न ईष्टे "आ न च ईश्वरः" कश्चन भवति चालयितुम् । आ चार्थे । अग्नयः न अग्नय स्वविद्युतः स्वयम् एव द्योतमानाः, धुनीनाम् नदीनाम् प्र स्पन्द्रासः वर्षणेन चालयितारश्च ॥ ३ ॥

स चक्रमे महतो निरुरुक्रमः समानस्मात् सदस एवयामरुत् ।
यदायुक्त त्मना स्वादधि ष्णुभिर्विष्पर्धसो विमहसो जिगाति शेवृधो नृभिः ॥४॥

सः । चक्रमे । महतः । निः । उरुऽक्रमः । समानस्मात् । सदसः । एवयामरुत् ।
यदा । अयुक्त । त्मना । स्वात् । अधि । स्नुऽभिः । विऽस्पर्धसः । विऽमहसः । जिगाति । शेऽवृधः । नृऽभिः ॥ ४ ॥

वेङ्कट० सः निः चक्रमे महतः समानात् स्थानात् उरुक्रमणः । एवयामरुत् इत्युक्तार्थम् । यदा अयुक्त[4], स्वयमेव स्वस्मात् स्थानात् गन्तृभिः अश्वैः विगतस्पर्धा विशिष्टपूजा गच्छति सुखस्य वर्धयिता स गणो यजमानानां तदानीमिति ॥ ४ ॥

मुद्गल० सः मरुद्गणः महतः प्रवृद्धात् समानस्मात् सर्वेषां साधारणात् सदसः स्थानात् अन्तरिक्षात् उरुक्रमः विस्तीर्णक्रमणः सन् निः चक्रमे निरगच्छत्[6] । एवयामरुत् ऋषिः । यदा स्वात् स्वकीय स्थानात्, अधि इति पञ्चम्यर्थानुवादी, त्मना आत्मनैव स्नुभिः गन्तृभिः नृभिः स्वनेतृभिरश्वैः अयुक्त युक्तोऽभवत् आगमनाय । अथ बहुवदुच्यते । तदानीम् विस्पर्धसः अहं पुरतो गच्छाम्यहं पुरतो गच्छामीति येषां स्पर्धा । विमहसः विशिष्टबलाः शेवृधः सुखस्य वर्धयितारः जिगाति निर्गच्छन्ति । स्वस्वयेन एकवचनम् ॥ ४ ॥

स्वनो न वोऽमवान् रेजयद् वृषा त्वेषो ययिस्तविष एवयामरुत् ।
येना सहन्त ऋञ्जत स्वरोचिषः स्थारश्मानो हिरण्ययाः स्वायुधास इष्मिणः ॥५॥

स्वनः । न । वः । अमऽवान् । रेजयत् । वृषा । त्वेषः । ययिः । तविषः । एवयामरुत् ।
येन । सहन्तः । ऋञ्जत । स्वऽरोचिषः । स्थाःऽरश्मानः । हिरण्ययाः । सुऽआयुधासः । इष्मिणः ॥

1. आगन्तः छ; आगताः वि[1] एवं. 2. सुशुक्वाना: मूको. 3. दीप्ताः मूको. 4-4. अनीश्वरो मूको. 5. युक्त मूको. 6. निरगच्छत् मूको.

वेङ्कट० स्वनः न युष्माकं बलवान् कम्पयतु वर्षिता दीप्तः गन्ता वृद्धः एवयामरुत्—इत्युक्तार्थम्। येन शत्रून् सहन्ते तम् अलङ्कारं कुर्वन्ति स्वदीप्तयः स्थिररश्मयः हिरण्मयालङ्काराः शोभमाना-युधाः गमनशीलाः ॥ ५ ॥

मुद्गल० हे मरुतः! वः युष्माकम् स्वनः वेगजनितः शब्दः न रेजयत् कम्पयतु एवयामरुत् एवयामरुतं माम्। अमवान् बलवान् वृषा वर्षिता वृष्टेः त्वेषः दीप्तः यथिः गन्ता तविषः प्रवृद्धः। येन स्वनेन सहन्तः शत्रूनभिभवन्तो यूयम् ऋञ्जत प्रसाधयथ। कीदृशा यूयम्। स्वरोचिषः स्वायत्तरश्मयः स्थारश्मानः स्थिररश्मयः हिरण्ययाः हिरण्याभरणाः स्वायुधासः स्वायत्तायुधाः इध्मिणः गमनवन्तः ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये त्रयस्त्रिंशो वर्गः ॥

अपारो वो महिमा वृद्धशवसस्त्वेषं शवोऽवत्वेवयामरुत् ।
स्थातारो हि प्रसितौ संदृशि स्थन ते न उरुष्यता निदः शुशुक्वांसो नाग्नयः ॥६॥

अपारः । वः । महिमा । वृद्धऽशवसः । त्वेषम् । शवः । अवतु । एवयामरुत् ।
स्थातारः । हि । प्रऽसितौ । सम्ऽदृशि । स्थन । ते । नः । उरुष्यत । निदः । शुशुक्वांसः । न । अग्नयः ॥ ६ ॥

वेङ्कट० अपर्यन्तः वः महिमा हे वृद्धबलाः!। दीप्तं बलं रक्षतु माम्। स्थातारः हि प्रबन्धे सन्दर्शने भवथ। ते अस्मान् रक्षत निन्दितुः दीप्ता इव अग्नयः ॥ ६ ॥

मुद्गल० हे मरुतः! वः युष्माकम् महिमा अपारः अनवधिकः। हे वृद्धशवसः! प्रवृद्धबलाः! त्वेषम् दीप्तम् शवः युष्माकम् बलम् अवतु रक्षतु एवयामरुत् एवयामरुतं माम्। यूयम् प्रसितौ यज्ञे संदृशि सन्दर्शने स्थातारः हि स्थाननियमेन तिष्ठन्तः स्थन भवथ खलु। ते यूयम् नः अस्मान् निदः निन्दकात् शत्रोः सकाशात् उरुष्यत रक्षत अग्नयः इव शुशुक्वांसः दीप्ताः ॥ ६ ॥

ते रुद्रासः सुमखा अग्नयो यथा तुविद्युम्ना अवन्त्वेवयामरुत् ।
दीर्घं पृथु पप्रथे सद्म पार्थिवं येषामज्मेष्वा महः शर्धांस्यद्भुतैनसाम् ॥ ७ ॥

ते । रुद्रासः । सुऽमखाः । अग्नयः । यथा । तुविऽद्युम्नाः । अवन्तु । एवयामरुत् ।
दीर्घम् । पृथु । पप्रथे । सद्म । पार्थिवम् । येषाम् । अज्मेषु । आ । महः । शर्धांसि । अद्भुतऽएनसाम् ॥७॥

वेङ्कट० ते रुद्रपुत्राः सुमखाः अग्नयः इव बहुदीप्तयो रक्षन्तु। दीर्घाकारं विस्तीर्णं प्रथते पार्थिवम् [1]सद्म ओषध्यादिकम्[1] येषाम् गमनेषु महान्ति बलानि तेषाम् अमृतपापानाम्[2] ॥ ७ ॥

1-1. सधोष° वि° हर्त. २. अमृतपा° वि°; अमृत-पानान् हर्त.

मुद्गल० ते मरुतः रुद्रासः रुद्रपुत्राः सुमखाः शोभनयज्ञाः अग्नयः यथा अग्नयः इव तुविद्युम्नाः प्रभूतदीप्तयः अवन्तु रक्षन्तु एवयामरुत् एवन्नामानम्[1] ऋषिं माम्। पार्थिवम् पृथिवी अन्तरिक्षम् तत्सम्बन्धि दीर्घम्[1] आयतम् पृथु विस्तीर्णम् सद्म सदनम् पप्रथे मरुद्भिः प्रथितमभूत्। अद्भुतैनसाम् अपापानाम् येषाम् अज्मेषु गमनेषु महः महान्ति शर्धांसि च बलानि आ गच्छन्ति इति शेषः ॥ ७ ॥

अद्वेषो नो मरुतो गातुमेतन श्रोता हवं जरितुरेवयामरुत् ।
विष्णोर्महः समन्यवो युयोतन स्मद्रथ्यो३ न दंसनाप द्वेषांसि सनुतः ॥ ८ ॥

अद्वेषः[1] । नः । मरुतः । गातुम् । आ । इतन । श्रोत । हवम् । जरितुः । एवयामरुत् ।
विष्णोः । महः । सऽमन्यवः । युयोतन । स्मत् । रथ्यः । न । दंसना । अप । द्वेषांसि । सनुतरिति ॥

वेङ्कट० द्वेषवर्जिताः अस्माकं हे मरुतः! गमनम् आभिमुख्येन प्राप्नुत, शृणुत च स्तोत्रम् जरितुः। विष्णोः महतः हे समानस्तुतिकाः! मरुतः! अस्मत्तः शत्रून् अन्तर्हितान् अप युयोत रथिनः इव कर्मभिः। यद्वा लुप्तविभक्तिकम् एवयामरुत् इति येनान्वितं भवति तत्तदनुगुणं विभक्तिरुपनेया, यथा जरितुः एवयामरुत इति। यत्र तु न कथंचिदपि अन्वयस्तत्र स्वयमेव वाक्यपदीति ॥ ८ ॥

मुद्गल० हे मरुतः! अद्वेषः अद्वेषसो यूयम् नः अस्माकम् गातुम् गमनस्वभावं स्तोत्रं प्रति आ इतन आगच्छत, जरितुः स्तोतुः एवयामरुत् एवयामरुतो मम हवम् आह्वानम् श्रोत शृणुत। विष्णो.[4] व्यापकस्य महः महतः हे समन्यवः! समानप्रज्ञाः! यूयम् स्मत् प्रशस्ताः रथ्यः न[3] रथिनो योद्धार इव, ते यथा शत्रून् अपाकुर्वन्ति तद्वत्, अस्माकम् दंसना कर्मणा सनुतः अन्तर्हितान्[5] द्वेषांसि द्वेष्टॄन् अप युयोतन दूरे वियोजयत ॥ ८ ॥

गन्ता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत् ।
ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदः ॥९॥

गन्त । नः । यज्ञम् । यज्ञियाः । सुऽशमि । श्रोत । हवम् । अरक्षः । एवयामरुत् ।
ज्येष्ठासः । न । पर्वतासः । विऽओमनि । यूयम् । तस्य । प्रऽचेतसः । स्यात । दुःऽधर्तवः । निदः ॥९॥

वेङ्कट० गच्छत अस्माकम् यज्ञम् हे यज्ञियाः! सुकर्माणः शृणुत च स्तुतिम्। राक्षसवर्जितोऽयमस्तु[1] एवयामरुत्। श्रेष्ठा इव मेघा अन्तरिक्षे यूयम् तस्य श्रिता.[7] भवत, हे सुमतयः! शत्रोर्मदीयस्य भवत दुर्धराः निन्दितुः ॥ ९ ॥

मुद्गल० हे यज्ञियाः! मरुतः! यूयम् नः अस्माकम् यज्ञम् गन्त आगच्छत। सुशमि शोभनकर्म यथा भवति तथा। सुकर्मत्वायेत्यर्थः। तदर्थम् एवयामरुत् एवयामरुतः हवम् अस्मदीयम्

---

1. °मान मूको. 2. नास्ति मूको. 3. वेप १,१२९ p इ. 4. न विष्णोः मूको. 5. °नोः मूको. 6. ए.,स.,वि.; स. 7. मा स्थ, याथ ह, सन्तः ह प्रस्ताराः.

आह्वानम् श्रोत शृणुत। अरक्षः रक्षोवर्जिता यूयम्। ज्येष्ठासः ज्येष्ठाः पर्वतासः विन्ध्यादय इवातिप्रवृद्धाः व्योमनि अन्तरिक्षे वर्तमानाः हे प्रचेतसः! प्रकृष्टज्ञानाः! यूयम् तस्य निदः निन्दकस्य दुर्धर्तवः दुर्धराः स्यात भवत ॥ ९ ॥

इति चतुर्थाष्टके चतुर्थाध्याये चतुस्त्रिंशो वर्गः ॥

इति पञ्चमे मण्डले षष्ठोऽनुवाकः ॥

—*—

इति ऋग्वेदे सभाष्ये पञ्चमं मण्डलं समाप्तम् ॥



अथ

# ऋग्वेदे सभाष्ये

## षष्ठं मण्डलम्

### [१]

त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥ १ ॥

त्वम् । हि । अग्ने । प्रथमः । मनोता । अस्याः । धियः । अभवः । दस्म । होता ।
त्वम् । सीम् । वृषन् । अकृणोः । दुस्तरीतु । सहः । विश्वस्मै । सहसे । सहध्यै ॥ १ ॥

वेङ्कट० बार्हस्पत्यो भरद्वाजः षष्ठं मण्डलमपश्यत् । त्वम् हि अग्ने! मुख्यः मनोता यस्मिन् देवानां मनांस्योतानि[1] स मनोताऽस्य कर्मणः अभवः[2] हे दर्शनीय! होता । त्वं सर्वतः कृणोषि हे वर्षितः! परितुमशक्यं बलम् विश्वस्मै बलाय सम्पूर्णाय सोढवे ॥ १ ॥

मुद्गल० भारद्वाजे षष्ठे मण्डले षडनुवाकाः । तत्र प्रथमेऽनुवाके पञ्चदश सूक्तानि । तत्र 'त्वं ह्यग्ने' इति त्रयोदशर्चं प्रथमं सूक्तम् । भरद्वाज ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता ।

हे अग्ने! प्रथमः देवानां मध्ये प्रथमः प्रकृष्टतमः त्वम् मनोता हि देवानां मनो यत्रोतं सम्बद्धं भवति तादृशः खलु हे दस्म! दर्शनीय! अस्याः धियः अस्य कर्मणः होता देवानामाह्वाता अभवः भवसि । हे वृषन्! कामानां वर्षितः! त्वम् सीम् सर्वतः दुस्तरीतु अहिंस्यम् सहः बलम् अकृणोः अकरोः । किमर्थम् । विश्वस्मै सहसे सर्वस्यापि बलवतः सहध्यै अभिभवनाय ॥ १ ॥

अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन् ॥ २ ॥

अध । होता । नि । असीदः । यजीयान् । इळः । पदे । इषयन् । ईड्यः । सन् ।
तम् । त्वा । नरः । प्रथमम् । देवऽयन्तः । महः । राये । चितयन्तः । अनु । ग्मन् ॥ २ ॥

वेङ्कट० अध[3] होता निषण्णो भवसि यष्टृतमः इळायाः पदे वेद्यां हविरिच्छन् स्तुत्यः सन्[4] । तम् त्वां[5] मनुष्याः प्रथमम् एव यज्ञेषु मुखे देवकामाः महते धनाय बुध्यमानाः अनु गच्छन्ति ॥ २ ॥

---

१. मनांस्युतानि मूको. २. नास्ति मूको. ३. अथ ख. ४. नास्ति वि॰ ख॰. ५. त्वा वि॰.

मुद्गल० अथ अधुना हे अग्ने! यजीयान् अतिशयेन यष्टा त्वम् होता होमनिष्पादकः सन् इळः भूम्याः वेदिलक्षणायाः पदे स्थाने नि असीद निषण्णवानसि। किं कुर्वन्। इषयन् पशुपुरोडाशादिलक्षणमन्नमिच्छन् ईड्यः स्तुत्यः सन्। तम् तादृशम् त्वा त्वाम् प्रथमम् इतरदेवताभ्यः पूर्वम् देवयन्तः देवं त्वामात्मन इच्छन्तः नरः नेतारः ऋत्विग्यजमानाः महे महते राये धनाय चितयन्तः जानन्तः अनु ग्मन् अन्वगच्छन् पूर्वम् ॥ २ ॥

धृतेव यन्तं बहुभिर्वसव्यै३स्त्वे रयिं जागृवांसो अनु ग्मन् ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥ ३ ॥

धृताऽइव । यन्तम् । बहुऽभिः । वसव्यैः । त्वे इति । रयिम् । जागृऽवांसः । अनु । ग्मन् ।
रुशन्तम् । अग्निम् । दर्शतम् । बृहन्तम् । वपाऽवन्तम् । विश्वहा । दीदिऽवांसम् ॥ ३ ॥

वेङ्कट० मार्गेणेव गच्छन्तं बहुभिः धनसमूहैः सहोदारं त्वयि स्थितं धनं सर्वे अनु गच्छन्ति जागरणशीलाः। दीप्यमानम् अग्निम् दर्शनीयम् महान्तम् अन्नवन्तं¹ सर्वदा क्रीडन्तम् अनुगच्छन्ति धनार्थमिति ॥ ३ ॥

मुद्गल० धृता इव मार्गेण इव। इव सम्प्रत्यर्थे। लोकद्वयमध्यगतेन मार्गेण बहुभिः अनेकैः वसव्यैः वसुभिर्यजमानानां निवासयोग्यैः सार्धम् यन्तम् गच्छन्तं त्वाम् अनु ग्मन् अनुगच्छन्ति। कीदृशास्ते। त्वे त्वयि देवे रयिम् धनम् जागृवांसः प्रपश्यन्तः। कीदृशं त्वाम्। रुशन्तम् दीप्तवर्णम् अग्निम् महत्त्वादिगुणविशिष्टम् दर्शतम् दर्शनीयम् बृहन्तम् महान्तम् वपावन्तम् विश्वहा सर्वेषु कालेषु दीदिवांसम् दीप्यमानम् ॥ ३ ॥

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥ ४ ॥

पदम् । देवस्य । नमसा । व्यन्तः । श्रवस्यवः । श्रवः । आपन् । अमृक्तम् ।
नामानि । चित् । दधिरे । यज्ञियानि । भद्रायाम् । ते । रणयन्त । सम्ऽदृष्टौ ॥ ४ ॥

वेङ्कट० स्थानं देवस्य हविषा गच्छन्तः अन्नम् इच्छमानाः अन्नं प्राप्नुवन्² अहिंसितं शत्रुभिः देवाः नामानि च दधिरे यज्ञार्हाणि। भद्रायाम् ते सन्दृष्टौ सन्दर्शने रमन्ते। 'पश्वा न तायुम्' (ऋ १,६५,१) इत्युक्तम् ॥ ४ ॥

मुद्गल० देवस्य द्योतमानस्याग्नेः पदम् आहवनीयादिस्थानम् नमसा हविषा व्यन्तः गच्छन्तः श्रवस्यवः अन्नमिच्छन्तो यजमानाः श्रवः अन्नम् अमृक्तम् अन्यैरपरिबाध्यम् आपन् प्राप्नुवन्ति। हे अग्ने! ते तव भद्रायाम् स्तुत्याम् संदृष्टौ निमित्तायाम् रणयन्त रमयन्ति³। यज्ञियानि यज्ञयोग्यानि नामानि नमनीयानि वैश्वानरो जातवेदा इत्यादीनि दधिरे धारयन्ति। चित् पूरणः ॥ ४ ॥

---

१ अन्नवन्तम् वि' स्प. २. 'वन्त. मूको. ३. 'यन्त मूको.

त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां रायं उभयासो जनानाम् ।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम् ॥ ५ ॥

त्वाम् । वर्धन्ति । क्षितयः । पृथिव्याम् । त्वाम् । रायः । उभयासः । जनानाम् ।
त्वम् । त्राता । तरणे । चेत्यः । भूः । पिता । माता । सदम् । इत् । मानुषाणाम् ॥ ५ ॥

वेङ्कट० त्वाम् वर्धयन्ति मनुष्याः पृथिव्याम् । त्वाम् आश्रयन्ते जनानाम् धनानि उभयविधानि स्थावरजङ्गमात्मकानि । त्वम् रक्षक हे क्षिप्र[1] ज्ञातव्यो भवसि, पिता माता च सदैव मानुषाणाम् ॥ ५ ॥

मुद्गल० हे अग्ने[1] त्वाम् क्षितयः मनुष्याः ऋत्विजः पृथिव्याम् वेदिलक्षणायाम् वर्धन्ति वर्धयन्ति । उभयासः[1] उभयविधानि पश्वपशुरूपाणि जनानाम् यजमानानाम् सम्बन्धीनि रायः धनानि ऋत्विजः अध्वर्य्वादयः त्वाम् त्वत्सुदित्य[2] वर्धयन्ति । हे तरणे ! दुःखतारक अग्ने[1] त्वम् चेत्यः ज्ञातव्यः स्तुत्यः सन् त्राता रक्षिता भूः भवसि । किञ्च मानुषाणाम् मनुष्याणाम् स्तोतॄणाम् अस्माकम् सदम् इत् सर्वदा पिता माता च मातापितृस्थानीयो भवसि ॥ ५ ॥

इति चतुर्थाष्टके चतुर्थाध्याये पञ्चत्रिंशो वर्गः ॥

सपर्येण्यः स प्रियो विक्ष्व१ग्निर्होता मन्द्रो नि षसादा यजीयान् ।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥ ६ ॥

सपर्येण्यः । सः । प्रियः । विक्षु । अग्निः । होता । मन्द्रः । नि । ससाद । यजीयान् ।
तम् । त्वा । वयम् । दमे । आ । दीदिऽवांसम् । उप । ज्ञुऽबाधः । नमसा । सदेम ॥ ६ ॥

वेङ्कट० परिचरणीयः स प्रियः च मनुष्येषु अग्निः नि षीदति होता मादयिता यजीयान् । तम् त्वा वयम् गृहे दीप्यमानम् उप आ सीदेम जान्वोः बाधितारः[3] सम्भ्रमजानुका नमस्कारेण ॥ ६ ॥

मुद्गल० [illegible] अग्निः सपर्येण्यः पूज्यः प्रियः कामानां पूरकः विक्षु प्रजासु होता होमनिष्पादकः मन्द्रः मदनीयः यजीयान् अतिशयेन इतरदेवानां यष्टा । एवमहानुभावोऽग्निः नि ससाद निषण्णोऽभूत् । अथ प्रत्यक्षः । तम् त्वा तादृशं त्वाम् वयम् यजमानाः दमे गृहे दीदिवांसम् दीप्यमानम् ज्ञुबाधः जानुनी बाधयन्तः प्रणताः सन्तः नमसा स्तोत्रेण उप आ सदेम आसादयेम ॥ ६ ॥

तं त्वा वयं सुध्यो३ नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ ७ ॥

तम् । त्वा । वयम् । सुऽध्यः । नव्यम् । अग्ने । सुम्नऽयवः । ईमहे । देवऽयन्तः ।
त्वम् । विशः । अनयः । दीद्यानः । दिवः । अग्ने । बृहता । रोचनेन ॥ ७ ॥

---

१. त्वाम् वय° मूको. २. उदित्व मूको. ३ बोधिनार ह.

वेङ्कट० तम् त्वा वयम् सुकर्माणः[1] स्तुत्यम् अग्ने! सुखकामा याचामहे देवानिच्छन्तः। त्वम् मनुष्यान् नयसि दीप्यमानो द्युलोकात् अग्ने! महता तेजसा ॥ ७ ॥

मुद्गल० हे अग्ने! तम् तादृशं महानुभावम् नव्यम् स्तुत्यम् त्वा त्वाम् सुध्यः शोभनबुद्धयः सुम्नायवः सुखम् इच्छन्तः देवयन्तः देवं त्वाम् इच्छन्तो वयम् ईमहे याचामहे। हे अग्ने! त्वम् दीद्यानः दीप्यमानः सन्। केन? बृहता रोचनेन रोचमानेन तेजसा। विशः प्रजाः स्तोतृन् अस्मात् दिवः स्वर्गम्[2] अनयः अगमयः ॥ ७ ॥

विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।
प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणाम् ॥ ८ ॥

विशाम् । कविम् । विश्पतिम् । शश्वतीनाम् । निऽतोशनम् । वृषभम् । चर्षणीनाम् ।
प्रेतिऽइषणिम् । इषयन्तम् । पावकम् । राजन्तम् । अग्निम् । यजतम् । रयीणाम् ॥ ८ ॥

वेङ्कट० बह्वीनाम् विशाम् विश्पतिम् स्वामिनम् कविम् हन्तारं शत्रूणां वर्षितारं कामानां मनुष्याणाम्। प्रेतीषणिम्[3] प्रेतिर्गमनं तस्मिन्निच्छा यस्य तं गच्छन्तम् पावकम् राजन्तम् अग्निम् दातारं धनानाम् ॥ ८ ॥

मुद्गल० शश्वतीनाम् नित्यानाम् विशाम् ऋत्विग्यजमानलक्षणानाम् विश्पतिम् स्वामिनम् कविम् क्रान्तदर्शिनम् नितोशनम् शत्रूणां हिंसकम् वृषभम् कामानां वर्षकम् चर्षणीनाम् मनुष्याणां स्तोतृणाम् प्रेतीषणिम् प्राप्तगमनम् इषयन्तम् अन्नं कुर्वन्तम् पावकम् शोधकम्[4] दीप्यमानम् रयीणाम् लाभाय यजतम् यष्टव्यम् अग्निम् स्तुम इति शेषः ॥ ८ ॥

सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम् ।
य आहुतिं परि वेदा नमोभिर्विश्वेत् स वामा दधते त्वोतः ॥ ९ ॥

सः । अग्ने । ईजे । शशमे । च । मर्तः । यः । ते । आनट् । सम्ऽइधा । हव्यऽदातिम् ।
यः । आऽहुतिम् । परि । वेद । नमःऽभिः । विश्वा । इत् । सः । वामा । दधते । त्वाऽऊतः ॥ ९ ॥

वेङ्कट० सः एव हे अग्ने! ईजे तुष्टाव च मर्तः, यः तुभ्यं प्रापयति समिधा[1] हविषो दातिम्। यः[5] आहुतिम् परितो लम्भयिता नमस्कारैः सः[1] विश्वान्येव धनानि धारयति त्वया रक्षितः ॥ ९ ॥

मुद्गल० हे अग्ने! त्वाम् सः मर्तः यजमानः ईजे यजते शशमे स्तौति च। यः यजमानः ते तव समिधा सह हव्यदातिम् हविषां दानम् आनट् करोति। किञ्च यः यजमानः नमोभिः स्तुतिभिः आहुतिम् आज्यादिलक्षणाम् परि वेद परितो वेत्ति, ददातीत्यर्थः। सः यजमानः त्वोतः त्वया रक्षितः सन् विश्वा इत् सर्वाणि वामा वननीयानि धनानि दधते धारयति ॥ ९ ॥

---

१. सुकु° वि॰ लर्प.  २. स्वर्गः तम् मूको.  ३. नास्ति मूको.  ४. °धन्तम् मूको.
५. यतः वि॰ लर्प.

अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम ॥ १० ॥

अस्मै । ऊँ इति । ते । महि । महे । विधेम । नमःऽभिः । अग्ने । सम्ऽइधा । उत । हव्यैः । वेदी । सूनो इति । सहसः । गीःऽभिः । उक्थैः । आ । ते । भद्रायाम् । सुऽमतौ । यतेम ॥१०॥

वेङ्कट० अस्मै एव तुभ्यं महते पूजाम् विधेम नमोभिः अग्ने! समिधा अपि च हव्यैः । वेद्याम्, हे सहसः पुत्र! स्तोत्रशस्त्रैः आ गच्छेम तव कल्याण्याम् सुमतौ ॥ १० ॥

मुद्गल० हे अग्ने! महे महते अस्मै ते तुभ्यम् महि महत् अत्यधिकम् विधेम परिचरेम । कैः । नमोभिः नमस्कारैः समिधा वा उत अपि च हव्यैः हविर्भिः । हे सहसः सूनो! बलस्य पुत्र! वेदी वेद्याम् गीर्भिः स्तोत्रैः उक्थैः शस्त्रैश्च विधेमेति सम्बन्धः । किञ्च ते तव भद्रायाम् सुमतौ शोभनानुग्रहबुद्धौ आ यतेम आगच्छेम, भवेमेत्यर्थः । उ पूरणः ॥ १० ॥

आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्य१स्तरुत्रः ।
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भाहि ॥ ११ ॥

आ । यः । ततन्थ । रोदसी इति । वि । भासा । श्रवःऽभिः । च । श्रवस्यः । तरुत्रः । बृहत्ऽभिः । वाजैः । स्थविरेभिः । अस्मे इति । रेवत्ऽभिः । अग्ने । विऽतरम् । वि । भाहि ॥११॥

वेङ्कट० वि आततन्थ यः त्वम् रोदसी तेजसा अन्नैः च अन्नहितः तारकः, सः त्वं बृंहितैः अन्नैः वृद्धैः अस्माकम् हे अग्ने! धनयुक्तैः अत्यन्तं दीप्यस्व ॥ ११ ॥

मुद्गल० हे अग्ने! यः त्वम् रोदसी द्यावापृथिव्यौ भासा दीप्त्या वि आ ततन्थ व्यतनोः । किञ्च तरुत्रः तारकस्त्वम् श्रवोभिः स्तुतिभिः श्रवस्यः स्तुत्यः च भवसि । हे तादृश अग्ने! बृहद्भिः महद्भिः वाजैः अन्नैः स्थविरेभिः स्थविरैः रेवद्भिः रयिमद्भिः अस्मे अस्मदर्थम् वितरम् विशिष्टतरम् वि भाहि विशेषेण दीप्यस्व ॥ ११ ॥

नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा अस्मे भद्रा सौश्रवसानि सन्तु ॥ १२ ॥

नृऽवत् । वसो इति । सदम् । इत् । धेहि । अस्मे इति । भूरि । तोकाय । तनयाय । पश्वः । पूर्वीः । इषः । बृहतीः । आरेऽअघाः । अस्मे इति । भद्रा । सौश्रवसानि । सन्तु ॥ १२ ॥

वेङ्कट० नृयुक्तं हे प्रशस्य! सदैव प्रयच्छ अस्मभ्यं पुत्राय तत्पुत्राय [illegible] पशोः भूरि, पशुसहस्रं प्रयच्छेत्यर्थः । बहूनि अन्नानि बृंहितानि दूरे पापं येषां तानि अस्मासु सौश्रवसानि कल्याणानि सन्तु ॥ १२ ॥

---

१. द्र वैप १,१०२३१. २. नास्ति मूको.

मुद्गल० हे वसो! धनवन्! अग्ने! नृवत् मनुष्यैरुपेतं धनम् सदम् इत् सर्वदा अस्मे अस्मासु धेहि स्थापय। किञ्च भूरि प्रभूतान् पश्वः पशूंश्च धेहि। किमर्थम्। तोकाय अस्मत्पुत्राय तनयाय तत्पुत्राय। किञ्च पूर्वीः पुरुभ्यः कामानाम् बृहतीः महत्यः आरेअघाः दूरे अघानि पापानि याः, ताः, शरदः इषः अन्नानि भद्रा भद्राणि सौश्रवसानि सुष्ठु यशूनि अस्मे अस्मासु सन्तु भवन्तु ॥१२॥

पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन् वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥ १३ ॥

पुरूणि । अग्ने । पुरुधा । त्वाऽया । वसूनि । राजन् । वसुता । ते । अश्याम् ।
पुरूणि । हि । त्वे इति । पुरुऽवार । सन्ति । अग्ने । वसु । विधते । राजनि । त्वे इति ॥१३॥

वेङ्कट० बहूनि अग्ने! बहुधा त्वत्कामनया[1] वसूनि हे राजन्! वसुतायै निवासार्थम् त्वत्तः प्राप्नुयाम्। बहूनि हि त्वयि हे बहुभिर्वरणीय! सन्ति हे अग्ने! वसूनि परिचरते राजनि। पुनः "त्वे इति" पूरणम् ॥१३॥

इत्थं व्याख्यद्दशर्चमध्यायं माधवात्मजः ।
चोलेषु निवसन् कश्चित् सत्यमालिषु सर्वदा ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके चतुर्थोऽध्यायः ॥

मुद्गल० हे अग्ने! राजन्! ते तव पुरूणि बहूनि पुरुधा गवाश्वादिरूपेण[1] बहुप्रकाराणि वसूनि धनानि वसुता वसुतायै[2] वसुमत्त्वाय त्वाया त्वया हि अश्याम् व्याप्नुयाम्। हे पुरुवार! बहुभिर्वरणीय अग्ने! राजनि विराजमाने त्वे त्वयि पुरूणि बहूनि वसु वसूनि त्वे त्वाम् विधते परिचरते मह्यं दातव्यानि सन्ति ॥ १३ ॥

इति चतुर्थाष्टके चतुर्थाध्याये षट्त्रिंशो वर्गः ॥

—※—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके चतुर्थोऽध्यायः समाप्तः ॥



1. त्वं काम° वि° ऊर्ष. 2-2. त्वयीति ङ; त्वमिति ऊर्ष; त्वमी वि°. 3. "त्वादीति रू" मूको.
4. °पेन मूको.

अथ पञ्चमोऽध्यायः

घेङ्कट० 'त्वं हि क्षैतवद्यशो'ऽग्ने[1] व्याचिख्यासति माधवः।
पादभेदे पूरणेषु वक्तव्यं संप्रदर्शयन् ॥ १ ॥

अवान्तराः केचिदर्था ऋक्पादेषु व्यवस्थिताः।
समुदायस्तु तेषां यः स वाक्यार्थ इति स्थितिः ॥ २ ॥

क्रियापदान्वयः पादे यावताऽपीह सिध्यति।
अवान्तरार्थं तं प्राहुः 'अग्निमीळे पुरोहितम्'[2] ॥ ३ ॥

अपेक्षा जायते पादे 'पुरुत्रा हि सदृङ्ङसि'[3]।
के किञ्च तस्य कर्तव्यं तत्रैतदुपतिष्ठति ॥ ४ ॥

पुरोहितेन रहितम् अग्निमीळे पदद्वयम्।
पद्येतयोरन्यतरत् पादेऽन्यस्मिन्व्यवस्थितम् ॥ ५ ॥

नापेक्षते पदं पूर्वं नतरामुभयं यदि।
तस्मात् पादान्तरेणैतत् उभयं पूरणं विदुः ॥ ६ ॥

'ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे'[4]।
न पूरणोऽत्र तच्छब्दः "पादे यस्मिन् व्यवस्थितः" ॥ ७ ॥

'अस्माकमत्र पितरस् त एव'[5] ... 'अन्तमः'[5]।
पुनर् युवाभ्याम् इत्युक्ते न संदिग्धमिव पूरणम् ॥ ८ ॥

'यदा ते मारुतीर्विशस्तुभ्यमिन्द्र नियेमिरे'[6]।
आवर्तते पदं तेऽत्र नोभयोः पूरणे पदे ॥ ९ ॥

'वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा'[7] इति।
पथोऽध्वनश्च भेदश्च चकारेण प्रतीयते ॥ १० ॥

'प्रोतये वरुणं मित्रमिन्द्रं मरुतः कृष्वावसे'[8] इति।
पुनः प्रयुज्यते तत्र भेदः सूक्ष्मोऽस्ति कश्चन ॥ १२ ॥

'स नो नियुद्भिरा पृण कामं वाजेभिरश्विभिः'[9]।
स्त्रीपुंविभेदादत्रापि नास्ति कश्चन पूरणः ॥ १३ ॥

---

१. °यशो मेकत्र. २. [illegible] १,१,१. ३. ऋ १,२१,२. ४-५. नास्ति एष. ५. ऋ ८, ५,१८. ६. ऋ ८,१२,२९. ७. ऋ ६,१६,३. ८. ऋ ६,२१,९. ९. ऋ ६,४५,२१.

'पुरूण्यग्ने पुरुधे (धा'[1] इ)ति मन्त्रान्ते श्रूयते पदम्।
त्वये इत्येवत् पादभेदाद् बहवः सन्ति तादृशाः॥ १४॥
'वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम्'[2]।
यावन्तेते वयमिति सन्ति चान्येऽपि तादृशाः॥ १५॥
इत्थं व्युत्पत्तिसिद्ध्यर्थमृचोऽस्माभिरुदाहृताः।
तासामाकृतिविद् विप्रो न मन्त्रार्थेषु मुह्यति॥ १६॥ इति॥

[२]

त्वं हि क्षैतवद् यशोऽग्ने मित्रो न पत्यसे।
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि॥ १॥

त्वम्। हि। क्षैतऽवत्। यशः। अग्ने। मित्रः। न। पत्यसे।
त्वम्। विऽचर्षणे। श्रवः। वसो इति। पुष्टिम्। न। पुष्यसि॥ १॥

वेङ्कट० भरद्वाजः। त्वम् हि 'निवासवद् धनम्'[3] अग्ने! सखा इव पालयसि। त्वम्[4] हे विद्रष्टः! वासयितः![5] अन्नम् पुष्टिम् च पोषयसि॥ १॥

मुद्गल० 'त्वं हि' इत्येकादशर्चं द्वितीयं सूक्तम्। भरद्वाज ऋषिः। अन्त्या षट्पञ्चाशदक्षरा शाक्वरी, आदितो दश अनुष्टुभः। अग्निर्देवता।

हे अग्ने! त्वम् हि त्वं खलु क्षैतवत् क्षैतं शुष्कं काष्ठं तद्युक्तम् यशः अन्नं हविर्लक्षणम् पत्यसे गच्छसि। दृष्टान्तः। मित्रः न मित्रदेव इव। हे विचर्षणे! सर्वस्य द्रष्टः! वसो! वासक! अग्ने! त्वम् यजमानगृहे[6] श्रवः अन्नम् अन्नकार्यभूताम् पुष्टिम् च। न चार्थे। पुष्यसि वर्धयसि॥ १॥

त्वां हि ष्मा चर्षणयो यज्ञेभिर्गीर्भिरीळते।
त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः॥ २॥

त्वाम्। हि। स्म। चर्षणयः। यज्ञेभिः। गीःऽभिः। ईळते।
त्वाम्। वाजी। याति। अवृकः। रजःऽतूः। विश्वऽचर्षणिः॥ २॥

वेङ्कट० त्वाम् हि खलु मनुष्याः हविर्भिः स्तुतिभिश्च स्तुवन्ति। त्वाम् वेगवान् अनुगच्छति स्तेनवर्जितः लोकानां तरिता सर्वस्य द्रष्टा वायुः॥ २॥

मुद्गल० हे अग्ने! त्वाम् हि स्म त्वामेव खलु चर्षणयः मनुष्याः यज्ञेभिः यज्ञसाधनैर्हविर्भिः गीर्भिः

---

१. ऋ ६,१,१३. २. ऋ १,८,४. ३-३. निवासवर्धने वि' कर्प. ४. नास्ति वि'. ५. वासितः वि' कर्प. ६. °गृहम् मूको.

स्तुतिभिः ईळते स्तुवन्ति। अपि च वाजी वाजो गमनं तद्वान् सूर्यः त्वाम् याति गच्छति। कीदृशो वाजी। अवृकः हिंसकरहितः रजस्तुः रज उदकं तस्य वृष्टिलक्षणस्य प्रेरयिता विश्वचर्षणिः सर्वस्य द्रष्टा ॥ २ ॥

सुजोषस्त्वा दिवो नरो यज्ञस्य केतुमिन्धते ।
यद्ध स्य मानुषो जनः सुम्नायुर्जुह्वे अध्वरे ॥ ३ ॥

सुऽजोषः । त्वा । दिवः । नरः । यज्ञस्य । केतुम् । इन्धते ।
यत् । ह । स्यः । मानुषः । जनः । सुम्नऽयुः । जुह्वे । अध्वरे ॥ ३ ॥

वेङ्कट० सङ्गताः त्वाम् दिवः नेतारो मरुतः यज्ञस्य केतुभूतम्[1] इन्धते, यदा खलु अयम् मानुषः जनः सुखमिच्छन् आह्वयति यज्ञे ॥ ३ ॥

मुद्गल० हे अग्ने! सजोषः सजोषस. सह प्रीयमाणाः दिवः स्तुतेः नरः नेतार ऋत्विजः। यज्ञस्य केतुम् प्रज्ञापकम् त्वा त्वाम् इन्धते समिद्धं कुर्वन्ति। कदा। यत् ह यदा खलु स्यः सः मानुषः मनोरपत्यभूतः जनः यजमानः सुम्नायुः[2] सुखमात्मनः इच्छन् अध्वरे यज्ञे त्वाम् जुह्वे आह्वयति, सर्वेत्यर्थः ॥ ३ ॥

ऋधद् यस्ते सुदानवे धिया मर्तः शशमते ।
ऊती ष बृहतो दिवो द्विषो अंहो न तरति ॥ ४ ॥

ऋधत् । यः । ते । सुऽदानवे । धिया । मर्तः । शशमते ।
ऊती । सः । बृहतः । दिवः । द्विषः । अंहः । न । तरति ॥ ४ ॥

वेङ्कट० ऋद्धम् यः तुभ्यं शोभनदानाय कर्मणा मनुष्योऽर्चनं करोति, सः दीप्तस्य महतस्तव पालनेन शत्रून् पापं च तरति ॥ ४ ॥

मुद्गल० ऋधत् स यजमानः ऋध्नुयात्, हे अग्ने! सुदानवे शोभनदानाय [3]ते तुभ्यम्[3] तव सम्बन्धिन्या धिया कर्मणा यः मर्तः यजमानः शशमते शमयति। सः यजमानः बृहतः महतः दिवः दीप्तस्य तव सम्बन्धिन्या ऊती ऊत्या रक्षया द्विषः द्वेष्टॄन् अंहः न आहननशीलं पापमिव तरति अतिक्रामति ॥ ४ ॥

समिधा यस्त आहुतिं निशितिं मर्त्यो नशत् ।
वयावन्तं स पुष्यति क्षयमग्ने शतायुषम् ॥ ५ ॥

सम्ऽइधा । यः । ते । आऽहुतिम् । निऽशितिम् । मर्त्यः । नशत् ।
वयाऽवन्तम् । सः । पुष्यति । क्षयम् । अग्ने । शतऽआयुषम् ॥ ५ ॥

---

१. यज्ञस्यूचित्र मूको. २. सुम्नयुः मूको. ३-३. तुभ्यं ते मूको.

वेङ्कट० समिधा यः मर्त्यः तुभ्यम् आहुतिम् मन्त्रेण संस्कृतां प्रापयति, सः कान्तिमद् गृहम् पुष्यति अग्ने! यद्वत्रं शरीरम् ॥ ५ ॥

मुद्गल० हे अग्ने! समिधा समिन्धनहेतुभूतेनेध्मेन सह ते त्वदीयाम् निशितिम् निशितां संस्कृताम् आहुतिम् यः मर्त्यः मनुष्यः नशत् व्याप्नुयात्, सः मनुष्यो यजमानः वयावन्तम् वयाः शाखाः पुत्रपौत्रादिलक्षणाः तद्युक्तम् शतायुषम् चिरकालजीवनम् क्षयम् गृहं च पुष्यति पोषयति ॥ ५ ॥

इति चतुर्थाष्टके पञ्चमाध्याये प्रथमो वर्गः ॥

त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ६ ॥

त्वेषः । ते । धूमः । ऋण्वति । दिवि । सन् । शुक्रः । आऽततः ।
सूरः । न । हि । द्युता । त्वम् । कृपा । पावक । रोचसे ॥ ६ ॥

वेङ्कट० दीप्तः ते धूमः गच्छति अन्तरिक्षे सन् शुक्लवर्णो विस्तृतः । सूर्य इव दीप्तया त्वम्[1] ज्वालया हे पावक! रोचसे ॥ ६ ॥

मुद्गल० हे अग्ने! त्वेषः दीप्तस्य ते तव शुक्रः निर्मलः धूमः दिवि अन्तरिक्षे आततः विस्तीर्णः सन् ऋण्वति मेघात्मना परिणतो गच्छति । अपि च हे पावक! शोधक! अग्ने! सूरः न सूर्य इव कृपा स्तुत्या समुपगतः त्वम् द्युता दीप्त्या रोचसे हि दीप्यसे खलु ॥ ६ ॥

अधा हि विक्ष्वीड्योऽसि प्रियो नो अतिथिः ।
रण्वः पुरीव जूर्यः सूनुर्न त्रययाय्यः ॥ ७ ॥

अध । हि । विक्षु । ईड्यः । असि । प्रियः । नः । अतिथिः ।
रण्वः । पुरिऽइव । जूर्यः । सूनुः । न । त्रययाय्यः ॥ ७ ॥

वेङ्कट० अथ हि मनुष्येषु स्तोतव्यः असि, प्रियः चास्माकम् अतिथिः । रमणीयस्त्वं भवसि पुर इव राजा स्तोतव्यः, सूनुः इव च त्रिभिर्यातव्यः[2] पित्रादिभिः । यथा त्रिषु जीवत्सु जातः पुत्रो लालनीयः ॥ ७ ॥

मुद्गल० अध अपि च विक्षु प्रजासु हे अग्ने! त्वम् ईड्यः स्तुत्यः असि । हि यस्मादेवम् तस्मात् नः अस्माकम् अतिथिः अतिथिरिव प्रियः असि । तथा पुरीव नगर्याम् जूर्यः जीर्णो वृद्धो राजेव रण्वः रमणीयो भवसि । तथा सूनुः न पुत्र इव त्रययाय्यः यजमानैः त्रातव्यः पालयितव्यो भवसि ॥ ७ ॥

क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न कृत्व्यः ।
परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः ॥ ८ ॥

1. नास्ति वि॰. 2. त्रातनीय वि॰ अर्थ.

क्रत्वा । हि । द्रोणे । अज्यसे । अग्ने । वाजी । न । कृत्व्यः ।
परिज्माऽइव । स्वधा । गयः । अत्यः । न । ह्वार्यः । शिशुः ॥ ८ ॥

वेङ्कट० कर्मणा हि गृहे त्वम् आज्येन अज्यसे । अग्ने ! अश्व इव कर्मणि साधुः, परितो गन्ता इव अन्नार्थम् गयः गौर्वा रथो वा, सततशीलः[1] इव अश्वः युवा त्वमिति ॥ ८ ॥

मुद्गल० हे अग्ने ! क्रत्वा कर्मणा मन्थनरूपेण द्रोणे काष्ठेऽरण्यां विद्यमानस्त्वम् अज्यसे हि व्यज्यसे खलु । तथा वाजी न अश्व इव कृत्व्यः हविर्वहनादीनां कर्मणां कर्ता । तथा परिज्मा इव परितः सर्वत्र गन्ता वायुरिव दावाग्न्यादिरूपेण सर्वत्र गन्ता त्वम् स्वधा अन्नम् गयः गृहं च भवसि, उभयोः धातोरर्थः । अपि [illegible] शिशुः जातमात्रो बालोऽपि त्वम् अत्यः न सततगामी अश्व इव ह्वार्यः कुटिलं[2] गन्ताऽसि ॥ ८ ॥

त्वं त्या चिदच्युताग्ने पशुर्न यवसे ।
धामा ह यत् ते अजर वना वृश्चन्ति शिक्वसः ॥ ९ ॥

त्वम् । त्या । चित् । अच्युता । अग्ने । पशुः । न । यवसे ।
धाम । ह । यत् । ते । अजर । वना । वृश्चन्ति । शिक्वसः ॥ ९ ॥

वेङ्कट० त्वम् तानि अच्युतानि अपि काष्ठानि भक्षयसि अग्ने ! पशुः इव यवसे विसृष्टः । तेजांसि यदा ते[3] हे जरावर्जित ! वृक्षान् छिन्दन्ति शाक्तस्य ॥ ९ ॥

मुद्गल० हे अग्ने ! त्वम् त्या चित् तानि काष्ठानि अच्युता अच्युतानि [4]अपि । अत्सीति[5] शेषः । दृष्टान्तः— यवसे प्राप्ते विसृष्टः पशुः न पशुरिव, स यथा सर्वं भक्षयति तथा त्वं प्रौढकाष्ठादीनि क्षणमात्रेण दहसीत्यर्थः । हे अजर ! जरारहित ! अग्ने ! यत् यस्य शिक्वसः दीप्तस्य ते तव धाम धामानि तेजांसि वना वननीयानि अरण्यानि वृश्चन्ति छिन्दन्ति भक्षयन्ति स त्वमिति पूर्वेणान्वयः । ह पूरणः ॥ ९ ॥

वेषि ह्यध्वरीयतामग्ने होता दमे विशाम् ।
समृधो विश्पते कृणु जुषस्व हव्यमङ्गिरः ॥ १० ॥

वेषि । हि । अध्वरिऽयताम् । अग्ने । होता । दमे । विशाम् ।
सम्ऽऋधः । विश्पते । कृणु । जुषस्व । हव्यम् । अङ्गिरः ॥ १० ॥

वेङ्कट० गच्छसि हि अध्वरमिच्छताम् अग्ने ! होता गृहे मनुष्याणाम् । समृद्धान् हे विशां पते ! कृणु सेवस्व हविश्च अङ्गिरः ! ॥ १० ॥

मुद्गल० हे अग्ने ! अध्वरीयताम् यज्ञमात्मन इच्छताम् विशाम् यजमानानाम् दमे गृहे त्वम् होता देवानामाह्वाता सन् वेषि हि स्तुतिं यतः कामयसे, अतः कारणात् हे विश्पते ! यजमानानां पालक ! अग्ने !

1. तैन वि° एषं. 2. कुटिलेन मूको. 3. धाक्षि मूको. 4-5. अपि इति मूको.

समृधः समृद्धान् अस्मान् यजमानान् कृणु कुरु । कृत्वा च हे अङ्गिरः! अदनादिगुणयुक्त! अग्ने! हव्यम् अस्मदीयं हविः जुषस्व सेवस्व ॥ १० ॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन् द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥११॥

अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिम् । रोदस्योः ।
वीहि । स्वस्तिम् । सुऽक्षितिम् । दिवः । नॄन् । द्विषः । अंहांसि । दुःऽइता । तरेम । ता ।
तरेम । तव । अवसा । तरेम ॥ ११ ॥

**वेङ्कट०** हे मित्राणां पूजयितः! अग्ने! अस्माकं दिवि पृथिव्यां च देवान् प्रति सुमतिम् ब्रूहि, कामयस्व अस्मदर्थम् दिवः नेतॄन् देवान् स्वस्तिम् सुनिवासं च । शत्रून् पापानि दुरितानि च तरेम, अस्मत्कृतं च तरेम, तव रक्षणेन[1] तरेम ॥ ११ ॥

**सायण०** हे मित्रमहः! अनुकूलदीप्ते! देव! दानादिगुणयुक्त! अग्ने! रोदस्योः द्यावापृथिव्योर्वर्तमानस्त्वम् देवान् इन्द्रादीन् अच्छ आभिमुख्येन नः अस्माकम् सुमतिम् वोचः ब्रूहि । दिवः स्तुतेः नॄन् नेतॄन् अस्मान् सुक्षितिम् शोभननिवासयुक्तम् स्वस्तिम् अविनाशम् वीहि गमय । वयम् द्विषः शत्रून् अंहांसि पापानि दुरिता दुर्गमनानि तरेम अतिक्रामेम । तथा ता तानि व्यवहितानि जन्मान्तरकृतानि पापादीनि तरेम हे अग्ने! तव अवसा रक्षणेन द्विषः द्वेष्टॄन् तरेम ॥ ११ ॥

इति चतुर्थाष्टके पञ्चमे द्वितीयो वर्गः ॥

[३]

अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे ।
यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥ १ ॥

अग्ने । सः । क्षेषत् । ऋतऽपाः । ऋतेऽजाः । उरु । ज्योतिः । नशते । देवऽयुः । ते ।
यम् । त्वम् । मित्रेण । वरुणः । सऽजोषाः । देव । पासि । त्यजसा । मर्तम् । अंहः ॥ १ ॥

**वेङ्कट०** अग्ने! सः निवसति यज्ञस्य पालयिता यज्ञार्थं जातः विस्तीर्णम् ज्योतिः[2] आप्नोति, यः देवयुः[3] ते [4]देवकामः त्वाम् इच्छति[4] । यम्[5] त्वम् मित्रेण सहितो धारयिता देव । रक्षसि क्रोधेन मनुष्यम् आहन्तुः शत्रोः ॥ १ ॥

**सायण०** 'अग्ने स क्षेषत्' इत्यष्टर्चं तृतीयं सूक्तम् । भरद्वाज ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता ।

हे अग्ने! सः यजमानः क्षेषत् क्षियति निवसति । चिरकालं जीवेदित्यर्थः । कीदृशो यजमानः । ऋतपाः यज्ञस्य पालकः ऋतेजाः 'यज्ञनिमित्तं जातः' ते त्वदीयम् देवयुः देवानिच्छन् । स

---

१ क्षणेन वि॰ अर्प. २. व्याप्तिः लपं; व्याप्ति वि॰. ३. नास्ति मूको. ४-४. 'कामयमानमिच्छ' मूको.
५ यः मूको. ६-६. 'मित्रमतः मूको.

यजमानः उरु विस्तीर्णम् ज्योतिः सूर्यात्मकम् नशते प्राप्नोति । हे देव! द्योतमान अग्ने! यम् मर्तम् मनुष्यम् मित्रेण वरुणः वरुणेन च सजोषाः सह प्रीयमाणः त्वम् त्यजसा आयुधेन अंहः अंहसः पापात् पासि रक्षसि ॥ १ ॥

ईळे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश ।
एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः ॥ २ ॥

ईळे । यज्ञेभिः । शशमे । शमीभिः । ऋधत्ऽवाराय । अग्नये । ददाश ।
एव । चन । तम् । यशसाम् । अजुष्टिः । न । अंहः । मर्तम् । नशते । न । प्रऽदृप्तिः ॥ २ ॥

वेङ्कट० यजते यज्ञैः । स्तौति च स्तुतिभिः । समृद्धवरणीयधनाय अग्नये हविश्च प्रयच्छति । एवं च क्रियमाणेऽयशसामप्रीतिः पापं दर्पश्चेत्येतानि न तम् मर्तम्[१] व्याप्नुवन्ति ॥ २ ॥

मुद्गल० यो यजमानः[१] ऋधद्वाराय ऋध्यत् समृद्धं वारं वरणीयं धनं यस्य तादृशाय अग्नये ददाश हवींषि ददाति, स यजमानः यज्ञेभिः यज्ञैः ईळे इष्टवान् भवति, तथा शमीभिः कर्मभिः कृच्छ्रचान्द्रायणादिभिः शशमे श्रान्तो भवति । सर्वफलं लभत इत्यर्थः । अपि च तम् यजमानम् यशसाम् यशस्विनां पुत्राणाम् अजुष्टिः अप्रीतिः न एव नशते नैव प्राप्नोति । पुत्रवान् भवतीत्यर्थः । तथा मर्तम् मनुष्यं तम् अंहः पापम् न नशते । तथा प्रदृप्तिः अनर्थहेतुर्दर्पश्च तम् न प्राप्नोति । न पूरणः ॥ २ ॥

सूरो न यस्य दृशतिररेपा भीमा यदेति शुचतस्त आ धीः ।
हेषस्वतः शुरुधो नायमक्तोः कुत्रा चिद्रण्वो वसतिर्वनेजाः ॥ ३ ॥

सूरः । न । यस्य । दृशतिः । अरेपाः । भीमा । यत् । एति । शुचतः । ते । आ । धीः ।
हेषस्वतः । शुरुधः । न । अयम् । अक्तोः । कुत्र । चित् । रण्वः । वसतिः । वनेऽजाः ॥ ३ ॥

वेङ्कट० सूर्यः इव यस्य दर्शनम् अपापम् । यस्य च तव दीप्तिः भीमा आगच्छति । दीप्यमानस्य शब्दवतस्तेजसो रोधयितुः कालानामक्तुः अग्नेः वने आसः निवासः अयम् कुत्र चिद् अपि न रमणीयो भवति ॥ ३ ॥

मुद्गल० सूरः न सूर्यस्येव यस्य अग्नेः दृशतिः दर्शनम् अरेपाः पापरहितम्[२] । हे अग्ने! यत् यस्य ते तव शुचतः ज्वलतः धीः धारयित्री ज्वाला भीमा भयङ्करा सती आ समन्तात् एति गच्छति । यथा [३]अयम् अग्निः[३] हेषस्वतः शब्दयुक्ताः शुरुधः न, न चार्थे, शुचः शोकस्य रोधयित्री-र्गाश्च[४] अक्तोः अपक्तुः रात्रिः तत्र सञ्चारिण्यो राक्षसादः स्वभूता ददातीति शेषः । सोयम् वसतिः सर्वेषाम् आवासभूतः वनेजाः अरण्ये जायमानः कुत्र चित् कचिदेव स्थाने पर्वताग्रे रण्यः रमणीयो भवति ॥ ३ ॥

---

१-१. नास्ति मूको. २. °मानाय मूको. ३. °रित मूको. ४-४. तत्र मूको. ५. °दिग्धः मूको.

तिग्मं चिदेम महि वर्पो अस्य भसदश्वो न यमसान आसा ।
विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥ ४ ॥

तिग्मम् । चित् । एम । महि । वर्पः । अस्य । भसत् । अश्वः । न । यमसानः । आसा ।
विऽजेहमानः । परशुः । न । जिह्वाम् । द्रविः । न । द्रवयति । दारु । धक्षत् ॥ ४ ॥

वेङ्कट० तिग्मम् खलु अस्य गमनम् महच्च रूपम् दीप्तमूलस्य भक्षयति अश्वः इव यच्छन् आस्येन । विगमयन् परशुः इव अस्य ज्वालां छेत्तेव गमयति दारु दहन् ॥ ४ ॥

मुद्गल० अस्य अग्नेः एम गमनसाधनभूतो मार्गः तिग्मम् चित् तीक्ष्णम्, अस्य च वर्पः रूपम् महि महत् भसत् दीप्यते । कीदृशोऽग्निः । अश्वः न अश्व इव आसा आस्येन यमसानः तृणादिकं नियच्छन् भक्षति । परशुः न यथा परशुः स्वकीयां धारां काष्ठे प्रक्षिपति । जिह्वाम् ज्वालाम् विजेहमानः तरुगुल्मादौ प्रक्षिपन्, तथा दारु काष्ठम् धक्षत् दहन् द्रविः न द्रविः द्रावयिता स्वर्णकारः । स यथा स्वर्णादिकं द्रावयति तथा सर्वं वनम् द्रावयति भस्मसात् करोतीत्यर्थः ॥ ४ ॥

स इदस्तेव प्रति धादसिष्यञ्छिशीत तेजोऽयसो न धाराम् ।
चित्रध्रजतिररतिर्यो अक्तोर्वेर्न द्रुषद्वा रघुपत्मजंहाः ॥ ५ ॥

सः । इत् । अस्ताऽइव । प्रति । धात् । असिष्यन् । शिशीत । तेजः । अयसः । न । धाराम् ।
चित्रऽध्रजतिः । अरतिः । यः । अक्तोः । वेः । न । द्रुऽसद्वा । रघुपत्मऽजंहाः ॥ ५ ॥

वेङ्कट० सः अग्निः पेक्षेव शरान् क्षेप्स्यन् प्रति दधाति, तीक्ष्णीकरोति तेजः परशोरिव धाराम् चित्रगमनः अभिगन्ता । यः रात्रेः पक्षीव द्रुमं प्रति गच्छन् शीघ्रगमनवहनः ॥ ५ ॥

मुद्गल० सः इत् स खल्वग्निः अस्ता इव बाणादेः क्षेप्तेव प्रति धात् स्वकीयज्वालां प्रतिधत्ते । प्रतिधाय च असिष्यन् ज्वालां प्रक्षेप्स्यन् तेजः स्वकीयम् शिशीत तीक्ष्णीकरोति । दृष्टान्तः । अयसः न धाराम् यथा अयोमयस्य परश्वादेर्धारां प्रक्षेप्तुकामस्तीक्ष्णीकरोति तद्वत् । तीक्ष्णीकृत्य च चित्रध्रजतिः विचित्रगतिः अक्तोः रात्रेः अरतिः अभिगन्ता वेः न पक्षीव द्रुषद्वा वृक्षेषु सीदन् रघुपत्मजंहाः लघुपतनसमर्थपादः । एवंभूतः सन् यः अग्निः वर्तते सः इत् इति पूर्वत्रान्वयः ॥ ५ ॥

इति चतुर्थाष्टके पञ्चमाध्याये तृतीयो वर्गः ॥

स ईं रेभो न प्रति वस्त उस्राः शोचिषा रारपीति मित्रमहाः ।
नक्तं य ईमरुषो यो दिवा नॄनमर्त्यो अरुषो यो दिवा नॄन् ॥ ६ ॥

सः । ईम् । रेभः । न । प्रति । वस्ते । उस्राः । शोचिषा । रारपीति । मित्रऽमहाः ।
नक्तम् । यः । ईम् । अरुषः । यः । दिवा । नॄन् । अमर्त्यः । अरुषः । यः । दिवा । नॄन् ॥ ६ ॥

द्यावो न यस्य॑ पनय॒न्त्यभ्वं॒ भासां॑सि वस्ते॒ सूर्यो॒ न शुक्रः ।
वि य इ॒नोत्य॒जरः॑ पाव॒कोऽश्न॑स्य चिच्छिश्नथत् पू॒र्व्याणि॑ ॥ ३ ॥

द्यावः॑ । न । यस्य॑ । प॒नय॑न्ति । अभ्व॑म् । भासां॑सि । व॒स्ते॒ । सूर्यः॑ । न । शु॒क्रः ।
वि । यः । इ॒नोति॑ । अ॒जरः॑ । पा॒व॒कः । अश्न॑स्य । चि॒त् । शि॒श्न॒थ॒त् । पू॒र्व्याणि॑ ॥ ३ ॥

वेङ्कट० दीप्ता देवाश्च यस्य स्तुवन्ति महत्त्वम्, स तेजांसि आच्छादयति सूर्यः इव दीप्यमानः । विविधम् यः गच्छति ¹प्रीणयति वा अजर पावकः¹, स मेघस्य अपि श्नथति चिरन्तनानि उदकानि ॥ ३ ॥²

मुद्गल० द्यावः स्तोतारः, न सम्प्रत्यर्थे, सम्प्रति इदानीम् यस्य अग्नेः अभ्वम् महत् कर्म पनयन्ति स्तुवन्ति, सोऽग्निः सूर्यः न सूर्य इव शुक्रः शुक्लवर्णः सन् भासांसि तेजांसि वस्ते आच्छादयति । यः ▪ अजरः जरारहितः पावक शोधकोऽग्नि वि इनोति भासा सर्वं व्याप्नोति, अश्नस्य चित् व्यापनशीलस्य अपि राक्षसादेः पूर्व्याणि चिरन्तनानि पुराणि शिश्नथत् हिंसयति ॥ ३ ॥³

व॒द्मा हि सू॑नो॒ अस्य॑द्म॒सद्वा॑ च॒क्रे अ॒ग्निर्ज॒नुषाज्मान्न॑म् ।
स त्वं न॑ ऊर्जसन॒ ऊर्जं॑ धा॒ राजे॑व जेरवृ॒के क्षे॑ष्य॒न्तः ॥ ४ ॥

व॒द्मा । हि । सू॒नो॒ इति॑ । असि॑ । अ॒द्म॒ऽसद्वा॑ । च॒क्रे । अ॒ग्निः । ज॒नुषा॑ । अज्म॑ । अन्न॑म् ।
सः । त्वम् । नः॒ । ऊ॒र्ज॒ऽस॒न॒ । ऊर्ज॑म् । धाः॒ । राजा॑ऽइव । जेः॒ । अ॒वृ॒के । क्षे॒षि॒ । अ॒न्तरिति॑ ॥

वेङ्कट० वदिता हि हे सहसः सूनो! भवसि त्वम् अन्नेषु सीदन् । अथ परोक्षः । अग्निः¹ करोति अन्नं जन्मना अभिगन्तव्यम् । सः त्वम् अस्मभ्यम् हे अन्नस्य दातः! अन्नं धेहि, राजा इव शत्रून् जय, स्तेनरहिते गृहे अन्तः² निवससि ॥ ४ ॥

मुद्गल० हे सूनो! सहसः पुत्र! अग्ने! वद्मा वदनीयः स्तुत्यः असि हि अद्मसद्वा अद्मसु अदनीयेषु हविःषु सीदन् हविः स्वीकरणार्थमुपविशन् । अग्निः जनुषा जन्मना स्वभावेन एव अज्म गृहम् अन्नम् च यजमानानाम् चक्रे करोति । हे ऊर्जसने! अन्नदातः! अग्ने! नः अस्मभ्यं तादृशः त्वम् ऊर्जम् अन्नम् धाः देहि । तथा राजा इव जेः अस्मच्छत्रून् जय ।¹ एतत्सर्वार्थम् अवृके राक्षसादिभिर्बाधकैर्वियुक्तेऽस्मदीये अग्न्यागारे अन्तः मध्ये क्षेषि निवससि ॥ ४ ॥

निति॑क्ति॒ यो वा॑र॒णमन्न॒मत्ति॑ वा॒युर्न राष्ट्र्य॒त्ये॑त्य॒क्तून् ।
तु॒र्याम॒ यस्त॑ आ॒दिशा॒मरा॑ती॒रत्यो॒ न ह्रु॒तः पत॑तः परि॒ह्रुत् ॥ ५ ॥

निऽतिक्ति॑ । यः । वा॒र॒णम् । अन्न॑म् । अत्ति॑ । वा॒युः । न । राष्ट्री॑ । अति॑ । ए॒ति॒ । अ॒क्तून् ।
तु॒र्याम॑ । यः । ते॒ । आ॒ऽदिशा॑म् । अरा॑तीः । अत्यः॑ । न । ह्रु॒तः । पत॑तः । प॒रि॒ऽह्रुत् ॥ ५ ॥

१-१. अजरः पावकः प्रीणयति ▪ मूको. २. तु. क (२,३०,५) भाष्यम्. ३. नास्ति मूको.
४. नास्ति एपं.

वेङ्कट० मन्त्रेण संस्कृतम्[1] यः वरणीयम् अन्नम् अत्ति, सः वायुः इव राष्ट्रवान् अभिगच्छति तमांसि शत्रून् वा । तरेम अतितरेम अभियान्तीः[2] तुभ्यम् आभिमुख्येन हवींषि दिशताम् अस्माकम् अरातीः च । अत्यः[3] इव हिंसतोऽभिगच्छतः[4] सैनिकान् सर्वतो हिंसिता ॥ ५ ॥

मुद्गल० यः अग्निः वारणम् तमसां निवारकं स्वकीयं तेजः नितिक्ति तीक्ष्णीकरोति । 'यश्च अन्नम् यज्वभिर्दीयमानं हविर्लक्षणम् अत्ति भक्षयति । सोऽग्निः वायुः न वायुरिव राष्ट्री राज्यवान् वायुर्यथा[5] स्वमाहात्म्येन सर्वमीष्टे तद्वत् । सर्वस्येश्वर इत्यर्थः । तादृशः सन् अक्तून् रात्रीः अत्येति अतिक्रामति । तद्गतमन्धकारं तिरस्करोतीत्यर्थः । वयं च त्वत्प्रसादात्[6] यः जनः ते तुभ्यम् आदिशाम् आदिश्यमानानां दीयमानानां हविषाम् अराती अरातिः भवति तम् [7]तुर्याम तरेम[7] हिंस्याम । एवं च अत्यः न शीघ्रगामी अश्व इव द्रुतः हिंसकान् पततः आभिमुख्येन गच्छतः शत्रून् परिह्रुत् परिभूय हन्ता भव ॥ ५ ॥

इति चतुर्थाष्टके पञ्चमाध्याये पञ्चमो वर्गः ॥

आ सूर्यो न भानुमद्भिरर्कैरग्ने ततन्थ रोदसी वि भासा ।
चित्रो नयत् परि तमांस्यक्तः शोचिषा पत्मन्नौशिजो न दीयन् ॥ ६ ॥

आ । सूर्यः । न । भानुमत्ऽभिः । अर्कैः । अग्ने । ततन्थ । रोदसी इति । वि । भासा ।
चित्रः । नयत् । परि । तमांसि । अक्तः । शोचिषा । पत्मन् । औशिजः । न । दीयन् ॥ ६ ॥

वेङ्कट० आ ततन्थ सूर्यः इव दीप्तिमद्भिस्तेजोभिरग्ने द्यावापृथिवी तेजसा । परोक्षः शेषः । चित्रवर्णः परितो नयति विनाशयति तमांसि हविर्भिः अक्तः तेजसा दिवि गच्छन् स्तोतॄणां कामानां प्रदाता इव ॥ ६ ॥

मुद्गल० हे अग्ने । रोदसी द्यावापृथिव्यौ भासा दीप्त्या वि आ ततन्थ विशेषेण आच्छादयसि । दृष्टान्तः । भानुमद्भिः प्रभावद्भिः अर्कैः अर्चनीयैः किरणैः सूर्यः न, यथा सूर्य आतनोति तद्वत् । परोक्षः । पत्मन् मार्गे औशिजः न सूर्य इव दीयन् गच्छन् शोचिषा तेजसा अक्तः संश्लिष्टः अत एव चित्रः चायनीयोऽग्निः तमांसि अन्धकाराणि परि नयत् परितो गमयति ॥ ६ ॥

त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने ।
इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ ७ ॥

त्वाम् । हि । मन्द्रऽतमम् । अर्कऽशोकैः । ववृमहे । महि । नः । श्रोषि । अग्ने ।
इन्द्रम् । न । त्वा । शवसा । देवता । वायुम् । पृणन्ति । राधसा । नृऽतमाः ॥ ७ ॥

वेङ्कट० त्वाम् हि स्तुत्यतमम् अर्चनीयैः तेजोभिः भजामहे । महत् स्तोत्रम् अस्माकम् शृणोषि हि अग्ने । त्वाम्, इन्द्रम्[8] इव बलेन देवता, वाय्वर्थं पूरयन्ति नेतृतमाः धनेन ॥ ७ ॥

---

१. संस्कृतम् वि°. २. °यान्ति मूको. ३. नास्ति मूको. ४. हिंसितो° मूको ५. वायुर्यथा मूको.
६. °त् तुर्याम तरेम मूको. ७-७. नास्ति मूको. ८. इन्द्रः मूको.

वेङ्कट० सः अयं ज्वालाः आच्छादयति यन्दीव वस्त्राणि सद्मे प्रविशन्। तेजसाऽत्यन्तं शब्दं करोति मित्राणां पूजनीयः, रात्रौ यः अयं दीप्यमानो भवति, यः च दिवा नेतॄन् देवान् अमर्त्यः आरोचमानो यज्ञं प्रति नयतीति ॥ ६ ॥[1]

मुद्गल० सः ईम् सोऽयमग्निः रेभः न स्तुत्यः सूर्य इव उस्राः दीप्ता ज्वालाः प्रति वस्ते आच्छादयति। तथा मित्रमहाः सर्वेषामनुकूलप्रकाशः सन् शोचिषा तेजसा रारपीति भृशं शब्दं करोति। यः ईम् योऽयमग्निः नक्तम् रात्रौ अरुषः आरोचमानः सन् दिवा अहनि इव[1] नॄन् मनुष्यान् स्वस्वकार्ये प्रेरयति। तथा अमर्त्यः अमरणधर्मा अरुषः रोषरहितः यः अग्निः दिवा द्योतमानेन तेजसा नॄन् नेतॄन् आत्मीयान् रश्मीन् प्रेरयति स इति पूर्वत्र सम्बन्धः। यः दिवा नॄन् इति पुनरुक्तिः आदरार्था ॥ ६ ॥

दिवो न यस्य विधतो नवीनोद् वृषा रुक्ष ओषधीषु नूनोत्।
घृणा न यो ध्रजसा पत्मना यन्ना रोदसी वसुना दं सुपत्नी ॥ ७ ॥

दिवः। न। यस्य। विधतः। नवीनोत्। वृषा। रुक्षः। ओषधीषु। नूनोत्।
घृणा। न। यः। ध्रजसा। पत्मना। यन्। आ। रोदसी इति। वसुना। दम्। सुपत्नी इति सुऽपत्नी ॥

वेङ्कट० द्युलोकस्येव यस्य देवान् परिचरतो महत्त्वम् स्तोता स्तौति, सः वृषा अग्निः दीप्तः ओषधीषु शब्दं करोति। तेजसा वेगेन च सह यः मार्गेण च गच्छन् आ पूरयति शोभनपतिके द्यावापृथिवी दमयिता[2] वासयितॄणां तेजसा[3] ॥ ७ ॥

मुद्गल० दिवः न दीप्तस्य सूर्यस्येव विधतः विधातुः रश्मीन्कुर्वतः यस्य अग्नेः नवीनोत् भृशं शब्दोऽभूत्। एतदेव व्याचष्टे। वृषा कामानां वर्षिता रुक्षः दीप्तः सोऽग्निः ओषधीषु वनस्पतिषु नूनोत् भृशं शब्दमकरोत्। यः घृणा न सरणशीलेन दीप्तेनेव ध्रजसा गमनशीलेन तेजसा पत्मना इतस्ततः उत्पतता यन् गच्छन् वर्तते सोऽग्निः दम् अस्मद्गृहम् दमयन् सुपत्नी शोभनपतिके रोदसी द्यावापृथिव्यौ वसुना धनेन आ पूरयति ॥ ७ ॥

धायोभिर्वा यो युज्येभिरर्कैर्विद्युन्न दविद्योत् स्वेभिः शुष्मैः।
शर्धो वा यो मरुतां ततक्ष ऋभुर्न त्वेषो रभसानो अद्यौत् ॥ ८ ॥

धायःऽभिः। वा। यः। युज्येभिः। अर्कैः। विऽद्युत्। न। दविद्योत्। स्वेभिः। शुष्मैः।
शर्धः। वा। यः। मरुताम्। ततक्ष। ऋभुः। न। त्वेषः। रभसानः। अद्यौत् ॥ ८ ॥

वेङ्कट० धारकैरिव मित्रैः यः अग्निः अर्चनीयैस्तेजोभिर्युक्तः, सः विद्युत् इव विद्योतते स्वैः शोषकैस्तेजोभिः। यः च मरुताम् अपि बलम् करोति, स आदित्य इव दीप्तः बलमाचरन् द्योतते ॥ ८ ॥

मुद्गल० यः अग्निः धायोभिः वा धारकैः अश्वैरिव युज्येभिः युज्यैः स्वयमेव युज्यमानैः अर्कैः दीप्तिभिर्गच्छति। सोऽग्निः विद्युत् न विद्युदिव स्वेभिः स्वकीयैः शुष्मैः शोषकैस्तेजोभिः

1. नास्ति मूको. 2. मदयिता मूको. 3. तेजसा[illegible]

दविद्योत् विद्योतते । यः च मरुताम् एतत्संज्ञकानाम् शर्धः वा बलमिव ततक्ष तनूकरोति शोषयति । सोऽयम् ऋभुः न भासमानः सूर्य इव त्वेषः दीप्तः रभसानः वेगं कुर्वन् अद्यौत् विद्योतते प्रकाशते ॥ ८ ॥

इति चतुर्थोऽष्टके पञ्चमाध्याये चतुर्थो वर्गः ॥

[४]

यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि ।
एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान् ॥ १ ॥

यथा । होतः । मनुषः । देवऽताता । यज्ञेभिः । सूनो इति । सहसः । यजासि ।
एव । नः । अद्य । समना । समानान् । उशन् । अग्ने । उशतः । यक्षि । देवान् ॥ १ ॥

वेङ्कट० यथा होतः! पुरा मनुषः[1] यज्ञे देवान् हविर्भिः हे सहसः पुत्र! अयजः, एवम् अस्माकम् अद्य यज्ञे समानकालीनान् समना[2] कामयमानः त्वम् अग्ने! यज उशतः[2] देवान् ॥ १ ॥

मुद्गल० 'यथा होता' इत्यष्टर्चं चतुर्थं सूक्तम् । भरद्वाज ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता ।

हे होतः! देवानाम् आह्वातः! सहसः सूनो! बलस्य पुत्र! अग्ने! यथा येन प्रकारेण मनुषः मनोः प्रजापतेर्यजमानस्य देवताता देवताती यज्ञे यज्ञेभिः हविर्भिः यजासि देवान् यजसि, एव एवमेव हे अग्ने! नः अस्माकम् अद्य अस्मिन् यज्ञे समानान् स्वस्वरूपान् इन्द्रादीन् उशन् कामयमानस्त्वम् उशतः कामयमानान् यष्टव्यान् देवान् समना क्षिप्रम् यक्षि यज ॥ १ ॥

स नो विभावा चक्षणिर्न वस्तोरग्निर्वन्दारु वेद्यश्चनो धात् ।
विश्वायुर्यो अमृतो मर्त्येषूषर्भुद् भूदतिथिर्जातवेदाः ॥ २ ॥

सः । नः । विभाऽवा । चक्षणिः । न । वस्तोः । अग्निः । वन्दारु । वेद्यः । चनः । धात् ।
विश्वऽआयुः । यः । अमृतः । मर्त्येषु । उषःऽभुत् । भूत् । अतिथिः । जातऽवेदाः ॥ २ ॥

वेङ्कट० सः[2] नः[2] दीप्तिमान् आदित्य इव अह्नि अग्निः वन्दनीयम् अन्नं दधातु विदितः, सर्वायुः यः अमरणधर्मा मनुष्येषु उषसि बुध्यमानः भवति अतिथिः जातप्रज्ञः ॥ २ ॥

मुद्गल० वस्तो अहनि चक्षणिः [illegible] प्रकाशकः सूर्य इव विभावा विशेषेण दीप्यमानः वेद्यः सर्वैर्ज्ञातव्यः सः अग्निः नः अस्मभ्यम् वन्दारु वन्दनीयं स्तुत्यम् चनः अन्नम् धात् दधातु, प्रयच्छत्वित्यर्थः । विश्वायुः सर्वायुः अमृतः मरणरहितः अतिथिः हविर्वहनाय सततगामी जातवेदाः जातधनः, पूर्वभूतः यः अग्निः मर्त्येषु यजमानेषु उषर्भुत् भूत् उषःकाले अग्निहोत्रार्थं प्रबुद्धो भवति, स इति पूर्वेणान्वयः ॥ २ ॥

---

१. मनु° लप. २. नास्ति मूको.

मुद्गल० हे अग्ने! मन्द्रतमम् स्तुत्यतमम् त्वाम् अर्कशोकैः अर्चनीयैर्दीप्तिभिर्युक्तम् हि यस्मात् वयमहे सम्भजामहे, तस्मात् महि महत् नः अस्मदीयं स्तोत्रम् श्रोषि शृणु। हे अग्ने! नृतमा. नेतृतमाः स्तुतीनाम् ऋत्विजः शवसा बलेन वायुम् गन्तारम् इन्द्रम् न इन्द्रमिव देवता देवतात्मानम् त्वा त्वाम् राधसा हविर्लक्षणेन धनेन पृणन्ति प्रीणयन्ति ॥ ७ ॥

नू नो अग्नेऽवृकेभिः स्वस्ति वेषि रायः पथिभिः पर्ष्यंहः ।
ता सूरिभ्यो गृणते रासि सुम्नं मदेम शतहिमाः सुवीराः ॥ ८ ॥

नु । नः । अग्ने । अवृकेभिः । स्वस्ति । वेषि । रायः । पथिऽभिः । पर्षि । अंहः ।
ता । सूरिऽभ्यः । गृणते । रासि । सुम्नम् । मदेम । शतऽहिमाः । सुऽवीराः ॥ ८ ॥

वेङ्कट० हे अग्ने! क्षिप्रम् अस्माकम् अस्तेनैः पथिभिरागत्य अविनाशेन धनानि कामयस्व। पर्षि रक्षसः[1]। देवेभ्यः स्तुवते मह्यं सुखं प्रयच्छ। मोदेम शतसंवत्सराः सुपुत्रा.[2] ॥ ८ ॥

मुद्गल० हे अग्ने! नः अस्मान् अवृकेभिः अस्तेनैः पथिभिः मार्गैः रायः धनानि स्वस्ति क्षेमेण नु अद्य वेषि गमय[3] प्रापय। अंहः अंहसः पापात् पर्षि उत्कृष्टलक्षणैर्मार्गैः पारय। सूरिभ्यः स्तोतृभ्यो, देयानि ता तानि सुम्नम्[4] सुम्नानि सुखानि गृणते स्तुवते मह्यम् रासि देहि। वयं च शतहिमा. शतहेमन्ताम् संवत्सरान् सुवीराः शोभनपुत्रादिसहिता. सन्तः मदेम हृष्येम ॥ ८ ॥

इति चतुर्थाष्टके पञ्चमाध्याये षष्ठो वर्ग. ॥

[ ५ ]

हुवे वः सूनुं सहसो युवानमद्रोघवाचं मतिभिर्यविष्ठम् ।
य इन्वति द्रविणानि प्रचेता विश्ववाराणि पुरुवारो अध्रुक् ॥ १ ॥

हुवे । वः । सूनुम् । सहसः । युवानम् । अद्रोघऽवाचम् । मतिऽभिः । यविष्ठम् ।
यः । इन्वति । द्रविणानि । प्रऽचेताः । विश्वऽवाराणि । पुरुऽवारः । अध्रुक् ॥ १ ॥

वेङ्कट० ह्वयामि त्वां[5] सहसः सूनुम् युवानम् अहिंसितवाचं स्तुतिभि.[6] युवतमम्, यः प्रयच्छति धनानि सुमतिः सर्वैर्वरणीयानि बहुभिर्वरणीयः अद्रोग्धा ॥ १ ॥

मुद्गल० 'हुवे व.' इति सप्तर्चं पञ्चमं सूक्तम्। भरद्वाज ऋषि.। त्रिष्टुप् छन्दः। अग्निर्देवता।

हे अग्ने! वः त्वाम् मतिभिः मननीयैः स्तोत्रैः हुवे आह्वयामि। कीदृशम्। सहस. बलस्य सूनुम् पुत्रम् युवानम् नित्यतरुणम् अद्रोघवाचम् अद्रोग्धव्या प्रशस्ता स्तुतिरूपा वाक् यस्मिन् तादृशम् यविष्ठम् अतिशयेन युवानम्। प्रचेताः प्रकृष्टज्ञानः पुरुवारः बहुभिर्वरणीयः अध्रुक् अद्रोग्धा

1. रक्षः ए: मूको. 2. संपु° रूपं; सुपुत्रा वि°. 3. गमनाय मूको. 4. सुम्नानम् मूको.

यजमानानाम् । एवंभूतः यः अग्निः विश्ववाराणि सर्वैर्वरणीयानि द्रविणानि धनानि इन्वति प्रेरयति स्तोतृभ्यो ददातीति यावत् । तं त्वां हुवे इति पूर्वत्र सम्बन्धः ॥ १ ॥

त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥ २ ॥

त्वे इति । वसूनि । पुरुऽअनीक । होतरिति । दोषा । वस्तोः । आ । ईरिरे । यज्ञियासः ।
क्षामऽइव । विश्वा । भुवनानि । यस्मिन् । सम् । सौभगानि । दधिरे । पावके ॥ २ ॥

वेङ्कट० त्वयि धनानि हे बहुरश्म्यनीक! होतः! अह्नि रात्रौ च स्थितानि आभिमुख्येन प्रापयन्ति यजमानाः । क्षोणीमिव[1] भूतानि आश्रये, विश्वानि भूतानि यस्मिन् सम् दधिरे पावके वसूनि[2] ॥ २ ॥

मुद्गल० हे पुर्वणीक! बहुज्वाल! होतः! देवानाम् आह्वातः! अग्ने! त्वे त्वयि दोषा रात्रौ वस्तोः अहनि च यज्ञियासः यज्ञार्हाः यजमानाः वसूनि हविर्लक्षणानि धनानि आ ईरिरे आभिमुख्येन प्रेरयन्ति[3], जुह्वतीत्यर्थः । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि क्षाम इव क्षमायां भूम्याम् इव यस्मिन् पावके शोधकेऽग्नौ सौभगानि सम् दधिरे देवाः सम्यक् निहितवन्तः; यस्मिन्[4] त्वयि इति पूर्वत्र योज्यम् ॥ २ ॥

त्वं विक्षु प्रदिवः सीद आसु क्रत्वा रथीरभवो वार्याणाम् ।
अत इनोषि विधते चिकित्वो व्यानुषग्जातवेदो वसूनि ॥ ३ ॥

त्वम् । विक्षु । प्रऽदिवः । सीदः । आसु । क्रत्वा । रथीः । अभवः । वार्याणाम् ।
अतः । इनोषि । विधते । चिकित्वः । वि । आनुषक् । जातऽवेदः । वसूनि ॥ ३ ॥

वेङ्कट० त्वम् एषु मनुष्येषु पुराण[5] (तु. निघ ३,२७) सीदसि । कर्मणा रथी[6] ॥ भवसि धनानां नेता । अतः आदाय प्रयच्छसि परिचरते हे ज्ञात! विविधम् अनुपक्वं हे जातधन! वसूनि ॥ ३ ॥

मुद्गल० हे अग्ने! त्वम् प्रदिवः पुरातनकालीनासु विक्षु प्रजासु आसु परिदृश्यमानासु च सीदः सीदसि वैश्वानरात्मना[7] वर्तसे । तथा क्रत्वा आत्मीयेन कर्मणा वार्याणाम् वरणीयानां धनानाम् रथीः अभवः रंहिता यजमानेभ्यः प्रापयिताऽभूः । अतः कारणात् हे चिकित्वः! विद्वन्! जातवेदः! जातानां प्राणिनां वेदितः! अग्ने! विधते परिचरते यजमानाय वसूनि धनानि आनुषक् अनुषक्तं सततं यथा भवति तथा वि इनोषि विविधं प्रेरयसि ॥ ३ ॥

यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात् ।
तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥ ४ ॥

---

१. दक्षिणा[ँ] वि[ँ] लप. २. तु. तै १,५,१,१. ३. प्रेरयति मूको. ४. यस्मिन् मूको. ५. पुराण वि[ँ] लप. ६. रथी क; रथि लप. ७. विश्वान्तरात्मना मूको.

यः । नः । सनुत्यः । अभिऽदासत् । अग्ने । यः । अन्तरः । मित्रऽमहः । वनुष्यात् ।
तम् । अजरेभिः । वृषऽभिः । तव । स्वैः । तप । तपिष्ठ । तपसा । तपस्वान् ॥ ४ ॥

वेङ्कट० यः अस्मान् अन्तर्हिते देशे दूरे वर्तमानोऽभिदासति अग्ने! बाधते, यः वा समीपस्थो हे मित्राणां पूजयितः! हन्ति, तम् अजरहितैः वर्षितृभिः तव स्वभूतैस्तेजोभिः तप, हे तेजसाम् तप्तृतम! तपसा सन्तापवान् ॥ ४ ॥

मुद्गल० हे अग्ने! यः सनुत्यः अन्तर्हितदेशे वर्तमानः सन् नः अस्मान् अभिदासत् उपक्षयति बाधते, यः च अन्तरः अभ्यन्तरवर्ती सन् हे मित्रमहः! अनुकूलदीप्ते! मित्राणाम् महयितः! वा वनुष्यात् क्रुध्येत, तम् उभयविधं हे तपिष्ठ! तपन्! अग्ने! तपसा तेजसा तपस्वान् तेजस्वी त्वम् अजरेभिः जरारहितैः वृषभिः वर्षितृभिः वृष्टेर्हेतुभूतैः तव स्वैः असाधारणैः तेजोभिः तप दह ॥ ४ ॥

यस्ते यज्ञेन समिधा य उक्थैरर्केभिः सूनो सहसो ददाशत् ।
स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥ ५ ॥

यः । ते । यज्ञेन । सम्ऽइधा । यः । उक्थैः । अर्केभिः । सूनो इति । सहसः । ददाशत् ।
सः । मर्त्येषु । अमृत । प्रऽचेताः । राया । द्युम्नेन । श्रवसा । वि । भाति ॥ ५ ॥

वेङ्कट० यः तुभ्यम् यज्ञेन [1]समिधा दानं[1] करोति, यः च स्तोत्रशस्त्रैः हे सहसः सूनो!, सः मनुष्येषु अमृत! प्रकृष्टज्ञानो धनेन अन्नेन कीर्त्या च वि भाति ॥ ५ ॥

मुद्गल० हे सहसः सूनो! बलस्य पुत्र! अग्ने! ते त्वाम् यः यजमानः यज्ञेन यागेन ददाशत् परिचरति, यः च समिधा समिन्धनसाधनेन, यश्च उक्थैः शस्त्रैः अर्केभिः अर्चनीयैः स्तोत्रैश्च परिचरति, हे अमृत! मरणधर्मरहित! अग्ने! सः यजमानः मर्त्येषु मनुष्येषु प्रचेताः प्रकृष्टज्ञानः सन् राया धनेन द्युम्नेन द्योतमानेन श्रवसा अन्नेन च[2] वि भाति विशेषेण प्रकाशते ॥ ५ ॥

स तत् कृधीषितस्तूयमग्ने स्पृधो बाधस्व सहसा सहस्वान् ।
यच्छस्यसे द्युभिरक्तो वचोभिस्तज्जुषस्व जरितुर्घोषि मन्म ॥ ६ ॥

सः । तत् । कृधि । इषितः । तूयम् । अग्ने । स्पृधः । बाधस्व । सहसा । सहस्वान् ।
यत् । शस्यसे । द्युऽभिः । अक्तः । वचःऽभिः । तत् । जुषस्व । जरितुः । घोषि । मन्म ॥ ६ ॥

वेङ्कट० सः तत् कुरु प्रेषितः क्षिप्रम् अग्ने!। किमित्याह — शत्रून् बाधस्व बलेन बलवान्। यदा स्तूयसे दीप्तैः वचोभिः अक्तः, तदानीं तत् स्तोत्रम् घुष्यमाणं स्तोतुः सेवस्व ॥ ६ ॥

मुद्गल० हे अग्ने! सः त्वम् इषितः प्रेषितः सन् तूयम् क्षिप्रम् तत् कृधि कुरु। किम्। सहस्वान्

---

1. नास्ति ख्रूयं. 2. नास्ति मूको. 3-3. समिदाधानम् वि° ख्रूयं.

यस्मात् त्वम् स्पृधः स्पर्धमानान् सहसा बलेन बाधस्व विनाशय। द्युभिः द्योतमानैस्तेजोभिः [1]अक्तः सिक्तः[1] त्वम् वचोभिः स्तुतिरूपैर्वाक्यैः यत् सस्यसे स्तूयसे, तत् मन्म मननीयम् घोषि घोषणीयम् अद्भिः स्तोत्रम् जुषस्व सेवस्व ॥ ६ ॥

अश्याम॒ तं काम॑मग्ने॒ तवो॒ती अ॒श्याम॑ र॒यिं र॑यिवः सु॒वीर॑म् ।
अ॒श्याम॒ वाज॑म॒भि वा॒जय॑न्तो॒ऽश्याम॑ द्यु॒म्नम॑जरा॒जरं॑ ते ॥ ७ ॥

अ॒श्याम॑ । तम् । काम॑म् । अ॒ग्ने॒ । तव॑ । ऊ॒ती । अ॒श्याम॑ । र॒यिम् । र॒यि॒ऽवः॒ । सु॒ऽवीर॑म् ।
अ॒श्याम॑ । वाज॑म् । अ॒भि । वा॒जय॑न्तः । अ॒श्याम॑ । द्यु॒म्नम् । अ॒ज॒र॒ । अ॒जर॑म् । ते॒ ॥ ७ ॥

वेङ्कट० प्राप्नुयाम तम् कामम् अग्ने! तव रक्षणेन। अश्याम धनम् हे धनवन्! सुपुत्रम्। अभि अश्याम अन्नम् अन्नमिच्छमानाः। अश्याम यशः अजर![2] जरावर्जित त्वत्सकाशात् स्वमूतम्[3] ॥ ७ ॥

मुद्गल० हे अग्ने! तव त्वदनुग्रहरूपया ऊती ऊत्या रक्षया तम् कामम् अश्याम प्राप्नुयाम। यं कामं वियुणोति। हे रयिवः! धनवन्नग्ने! सुवीरम् पुत्रादियुक्तम् रयिम् धनम् अश्याम प्राप्नुयाम। तथा वाजयन्तः वाजमन्नम् आत्मन इच्छन्तो वयम् वाजम् त्वया दत्तमन्नम् अभि आभिमुख्येन अश्याम प्राप्नुयाम। हे अजर! जरारहिताग्ने! ते त्वदीयम् जरारहितम् द्युम्नम् द्योतमानम् यशश्च अश्याम प्राप्नुयाम ॥ ७ ॥

इति चतुर्थाष्टके पञ्चमाध्याये सप्तमो वर्गः ॥

[ ६ ]

प्र नव्य॑सा॒ सह॑सः सू॒नुमच्छा॑ य॒ज्ञेन॑ गा॒तुमव॑ इ॒च्छमा॑नः ।
वृ॒श्चद्व॑नं कृ॒ष्णया॑मं॒ रुश॑न्तं वी॒ती होता॑रं दि॒व्यं जि॑गाति ॥ १ ॥

प्र । नव्य॑सा । सह॑सः । सू॒नुम् । अच्छ॑ । य॒ज्ञेन॑ । गा॒तुम् । अवः॑ । इ॒च्छमा॑नः ।
वृ॒श्चत्ऽव॑नम् । कृ॒ष्णऽया॑मम् । रुश॑न्तम् । वी॒ती । होता॑रम् । दि॒व्यम् । जि॒गा॒ति॒ ॥ १ ॥

वेङ्कट० प्र गच्छति नवतरेण अग्निं प्रति यज्ञेन गमनीयम् अन्नम् इच्छमानः छिद्यमानवृक्षं कृष्णगमनमार्गं श्वेतं कामेन दैव्यम् होतारम् मनुष्यः ॥ १ ॥

मुद्गल० 'प्र नव्यसा' इति सप्तर्चं षष्ठं सूक्तम्। भरद्वाज ऋषिः। त्रिष्टुप् छन्दः। अग्निर्देवता।

गातुम् उपगन्तव्यम् सहसः सूनुम् बलस्य पुत्रम् अग्निम् अवः अन्नम् इच्छमानः इच्छन् स्तोता नव्यसा नवतरेण यज्ञेन युक्तः सन् अच्छ आभिमुख्येन प्र जिगाति प्रकर्षेण गच्छति। कीदृशम् अग्निम्। वृश्चद्वनम् निर्दग्धं वनं येन तादृशम् कृष्णयामम्[4] कृष्णवर्त्मानम् रुशन्तम् दीप्तम् वीती कान्तेन यज्ञेन होतारम् यष्टारम् दिव्यम् दिवि भवम् ॥ १ ॥

---

१-१. अक्तोऽसि मूको. २. नास्ति मूको. ३. स्वत्सूतम् वि' ख'. ४. ˚यामम् कृष्णयाम मूको.

स श्वि॒तान॑स्तन्य॒तू रो॑चन॒स्था अ॒जरे॑भि॒र्नान॑दद्भि॒र्यवि॑ष्ठः ।
यः पा॑व॒कः पु॑रु॒तमः॑ पु॒रूणि॑ पृ॒थून्य॒ग्निर॑नु॒याति॒ भर्व॑न् ॥ २ ॥

सः । श्वि॒तानः॑ । त॒न्य॒तुः । रो॒च॒न॒ऽस्थाः । अ॒जरे॑भिः । नान॑दत्ऽभिः । यवि॑ष्ठः ।
यः । पा॒व॒कः । पु॒रु॒ऽतमः॑ । पु॒रूणि॑ । पृ॒थूनि॑ । अ॒ग्निः । अ॒नु॒ऽयाति॑ । भर्व॑न् ॥ २ ॥

वेङ्कट० सः दावरूपः शुक्लवर्णोऽभवत् विस्तारयिता रोचनेऽन्तरिक्षे तिष्ठन् जरावर्जितैस्तेजोभिः शब्दं कुर्वद्भिः युवतमः । यः पावकः बहूनां गमयिता अग्निः[1] अनुगच्छति बहूनि काष्ठानि विस्तीर्णानि भक्षयन् ॥ २ ॥

मुद्गल० सः अग्निः[1] श्वितानः श्वेतवर्णः वर्तते तन्यतुः शब्दकारी[2] रोचनस्थाः अन्तरिक्षे स्थितः अजरेभिः जरारहितैः नानदद्भिः अत्यर्थं शब्दं कुर्वद्भिः रश्मिभिर्युक्तः यविष्ठः युवतमः । यः पावकः शोधकः अग्निः पुरुतमः अतिशयेन प्रभूतः सन् पुरूणि बहूनि पृथूनि स्थूलानि काष्ठानि भर्वन् वहन् अनुयाति अनुगच्छति, स इत्थं वर्तत इति पूर्वेण सम्बन्धः ॥ २ ॥

वि ते॒ विष्व॒ग्वात॑जूतासो अग्ने॒ भामा॑सः शुचे॒ शुच॑यश्चरन्ति ।
तु॒वि॒म्र॒क्षासो॑ दि॒व्या नव॑ग्वा॒ वना॑ वनन्ति धृष॒ता रु॒जन्तः॑ ॥ ३ ॥

वि । ते॒ । विष्व॑क् । वात॑ऽजूतासः । अग्ने॒ । भामा॑सः । शु॒चे॒ । शुच॑यः । च॒र॒न्ति॒ ।
तु॒वि॒ऽम्र॒क्षासः॑ । दि॒व्याः । नव॑ऽग्वाः । वना॑ । व॒न॒न्ति॒ । धृ॒ष॒ता । रु॒जन्तः॑ ॥ ३ ॥

वेङ्कट० वि चरन्ति तव इतस्ततो वातप्रेरिताः अग्ने! रश्मयः हे दीप्यमान! दीप्यमानाः । बहूनां स्प्रष्टारो दिवि भवाः नवतमाः, अरण्यानि भजन्ते धृष्टेन तेजसा भञ्जन्तः[3] ॥ ३ ॥

मुद्गल० हे शुचे! शुद्ध! दीप्तिमन्! अग्ने! ते त्वदीयाः वातजूतासः वातेन प्रेरिताः शुचयः निर्मलाः भामासः दीप्तयः विष्वक् सर्वत्र वि चरन्ति विविधं गच्छन्ति । तुविम्रक्षासः बहूनि[4] काष्ठानि स्पृशन्तः दिव्याः द्योतमानेऽग्नौ भवाः नवग्वाः नूतनगमनास्ते रश्मयः वना वनानि वनन्ति[5], वहन्तीत्यर्थः । किं कुर्वन्तः । धृषता धर्षकेण तेजसा रुजन्तः वनानि भञ्जयन्तः ॥ ३ ॥

ये ते॑ शु॒क्रासः॒ शुच॑यः शुचिष्मः॒ क्षां वप॑न्ति॒ विषि॑तासो॒ अश्वाः॑ ।
अध॑ भ्र॒मस्त॑ उर्वि॒या वि भा॑ति या॒तय॑मानो॒ अधि॒ सानु॒ पृश्नेः॑ ॥ ४ ॥

ये । ते॒ । शु॒क्रासः॑ । शुच॑यः । शु॒चि॒ष्मः॒ । क्षाम् । वप॑न्ति । विऽसि॑तासः । अश्वाः॑ ।
अध॑ । भ्र॒मः । ते॒ । उ॒र्वि॒या । वि । भा॒ति॒ । या॒तय॑मानः । अधि॑ । सानु॑ । पृश्नेः॑ ॥ ४ ॥

१. नास्ति मूको. २. °रो नैव मूको. ३. भञ्जन्तु मूको. ४. तुवि मूको. ५. °न्ति रुजन्तः मूको.

वेङ्कट० ये ते शोचमानाः रश्मयः हे दीप्तिमन्! पृथिवीम् ओषधिवनस्पतियुक्ताम् वपन्ति, विमुक्ताः अश्वाः इत्यौपमिकम्। तदनन्तरम् उरुः तव भ्रमः वि भाति पृथिव्याः सानूनि स्थितं स्थावरं गमयन्[१] ॥ ४ ॥

मुद्गल० हे शुचिष्मः! दीप्तिमन्! अग्ने! ते तव ये शुक्रासः शुभ्राः शुचयः दीप्तयः क्षाम् भूमिम् वपन्ति मुण्डयन्ति। केशस्थानीयान् ओषधिवनस्पतीन् दहन्तीत्यर्थः। ते रश्मयः विषितासः विमुक्ताः अश्वाः इव, इतस्ततो गच्छन्तीति शेषः। अध यस्मिन् काले ते त्वदीयः भ्रमः भ्रमणशीलो ज्वालासमूहः पृथ्वेः भूमेः अधि उपरि सानु समुच्छ्रितं देशं पर्वताग्रादिकं प्रति यातयमानः स्वकीयम् अर्थं[२] व्यापारयन् उर्विया उरु बहुलम् वि भाति विशेषेण प्रकाशते ॥ ४ ॥

अध॑ जि॒ह्वा पा॑पतीति॒ प्र वृष्णो॑ गोषु॒युधो॒ नाशनिः॑ सृजा॒ना ।
शूर॑स्येव॒ प्रसि॑तिः क्षा॒तिर॒ग्नेर्दु॒र्वर्तु॑र्भी॒मो द॑यते॒ वना॑नि ॥ ५ ॥

अध॑ । जि॒ह्वा । पा॒प॒ती॒ति॒ । प्र । वृष्णः॑ । गो॒षु॒ऽयुधः॑ । न । अ॒शनिः॑ । सृ॒जा॒ना ।
शूर॑स्यऽइव । प्रऽसि॑तिः । क्षा॒तिः । अ॒ग्नेः । दुः॒ऽवर्तुः॑ । भी॒मः । द॒य॒ते॒ । वना॑नि ॥ ५ ॥

वेङ्कट० अध[१] ज्वाला प्र[३] पतति अग्नेः गोभिमित्तं युध्यतः शूरस्येव आयुधं सृज्यमानम्। किञ्च शूरस्य बाहुः अग्नेः ज्वाला, प्रसितिः बाहुः प्रबन्धनात्, क्षातिः विदारणात्। दुर्वारः भीमः भक्षयति काष्ठानि दहति वा ( द्र० या ४,१७ ) ॥ ५ ॥

मुद्गल० अध अपि च वृष्णः वर्षितुरग्नेः जिह्वा ज्वाला सृजाना दाहेनोत्सार्यमाणा प्र पापतीति प्रकर्षेण पतति[४]। दृष्टान्तः। गोषुयुधः उदकनिमित्तात् घातकः अशनिः न अशनिः इव, स यथा पतति तद्वत्। अपि च दुर्वर्तुः दुर्दाहकज्वालाभिः वर्तमानस्य अग्नेः भीमः भयङ्करः क्षातिः दर्पः वनानि दयते दहति। दृष्टान्तः। शूरस्य इव प्रसितिः यथा शूरस्य बाधकं प्राणिनां घातकं भवति तद्वत् ॥ ५ ॥

आ भा॒नुना॒ पार्थि॑वानि॒ ज्रयां॑सि म॒हस्तो॒दस्य॑ धृष॒ता त॑तन्थ ।
स बा॑धस्वाप॑ भ॒या सहो॑भिः॒ स्पृधो॑ वनु॒ष्यन् व॒नुषो॒ नि जू॑र्व ॥ ६ ॥

आ । भा॒नुना॑ । पार्थि॑वानि । ज्रयां॑सि । म॒हः । तो॒दस्य॑ । धृ॒ष॒ता । त॒त॒न्थ॒ ।
सः । बा॒ध॒स्व॒ । अप॑ । भ॒या । सहः॑ऽभिः । स्पृधः॑ । व॒नु॒ष्यन् । व॒नुषः॑ । नि । जू॒र्व॒ ॥ ६ ॥

वेङ्कट० आ ततन्थ धृषता[६] तेजसा पार्थिवानि वनानि[६], ज्रयतिर्गतिकर्मा पृथिव्या उपयितानि, महतः व्यथयितुः तव एवम्भूतेन। सः अप[७] बाधस्व भयानि बलैः। शत्रून् हिंसन् हन्तॄन् नि जहि ॥ ६ ॥

मुद्गल० हे अग्ने! सः त्वम् महः महान् पार्थिवानि पृथिव्यां वर्तमानानि ज्रयांसि व्यवहारार्थम् इतस्ततः गच्छन्ति[८] भूतानि ततन्थ विस्तारय, बाधकं निवारय इत्यर्थः। अपि च तोदस्य

१. गतान् मूको. २. उग्र मूको. ३. अध वि[१] रुपं. ४. नास्ति मूको. ५. पातयति मूको
६. नास्ति वि[१] रुपं. ७. अव लुप. ८. गच्छमानानि मूको.

सोऽहं प्राणिनाम् उपद्रवम् धृषता भानुना धर्षकेण तेजसा आ (?) समन्तात् बाधस्व। अपि च अपभया (?) भयरहितैः शहोभिः बलैः हे अग्ने! वनुष्यन् क्रोधं कुर्वन् वनुषः हिंसकान् स्पृधः अस्मच्छत्रून् नि जूर्व नितरां जय घातयेत्यर्थः ॥ ६ ॥

स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् ।
चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥ ७ ॥

सः । चित्र । चित्रम् । चितयन्तम् । अस्मे इति । चित्रऽक्षत्र । चित्रऽतमम् । वयःऽधाम् ।
चन्द्रम् । रयिम् । पुरुऽवीरम् । बृहन्तम् । चन्द्र । चन्द्राभिः । गृणते । युवस्व ॥ ७ ॥

वेङ्कट० स. त्वं हे चायनीय! चायनीयं महत्त्वा ज्ञापयन्तं मह्यं हे चित्रबल! अतिशयेन चायनीयम् अन्नस्य धारकं कान्तम् रयिम् बहुपुत्रं महान्तं हे ह्लादक![1] चित्राभिः ज्वालाभि. स्तुवते मिश्रय देहि ॥ ७ ॥

मुद्गल० हे चित्र! चायनीय! चित्रक्षत्र! विविधबल![2] हे चन्द्र! आह्लादक अग्ने! सः तादृशः त्वम् चन्द्राभिः आह्लादयित्रीभिः स्तुतिभिः गृणते वचनव्यत्ययः। स्तुवद्भ्यः अस्मे अस्मभ्यं वाञ्छम् रयिम् धनम् युवस्व पृथक् कुरु। कीदृशं रयिम्। चित्रम् चायनीयम् चितयन्तम् ज्ञापयन्तम्। धनेन हि पुरुषः प्रख्यायते। चित्रतमम् अतिशयेन आश्चर्यभूतम् वयोधाम् वयसोऽन्नस्य धातारं दातारम्. चन्द्रम् आह्लादकम् पुरुवीरम् पुरुभिर्बहुभिर्वीरैः पुत्रपौत्रादिभिर्युक्तम् बृहन्तम् महान्तम्। ईदृशं धनम् अस्मभ्यं प्रयच्छेत्यर्थः ॥ ७ ॥

इति चतुर्थाष्टके पञ्चमाध्याये अष्टमो वर्गः ॥

[७]

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ १ ॥

मूर्धानम् । दिवः । अरतिम् । पृथिव्याः । वैश्वानरम् । ऋते । आ । जातम् । अग्निम् ।
कविम् । सम्ऽराजम् । अतिथिम् । जनानाम् । आसन् । आ । पात्रम् । जनयन्त । देवाः ॥१॥

वेङ्कट० द्युलोकस्य उच्छ्रितम् ततः पृथिव्याश्च गन्तारम् वैश्वानरम् यज्ञप्रजितम् अग्निम् कविम् सम्राजम् अतिथिस्थानीयम् जनानाम् अस्माकम् आस्येन आ जनयन्त देवाः भुक्तस्य पात्रभूतम् ॥ १ ॥

मुद्गल० 'मूर्धानम्' इति सप्तर्चं सप्तमं सूक्तम्। भरद्वाज ऋषिः। षष्ठीसप्तम्यौ जगत्यौ, शिष्टाः त्रिष्टुभः। वैश्वानरोऽग्निर्देवता।

मूर्धानम् शिरोभूतम्। कस्य। दिवः द्युलोकस्य। पृथिव्याः भूमेः अरतिम् गन्तारम् वैश्वानरम् विश्वेषां नराणां सम्बन्धिनम् ऋते यज्ञस्य निमित्तम् आ जातम् आभिमुख्येन जातं सृष्ट्यादावुत्पन्नम् कविम् क्रान्तदर्शिनम् सम्राजम् सम्यक् राजमानम् जनानाम् यजमानानाम्

१. द्रष्टव्य एस्प. २. विवक्त मूको.

अतिथिम् हविर्वहनाय सततं गन्तारम् आसन् आसनि आस्यभूतम्। अग्निलक्षणेन आस्येन देवा हवींषि भुञ्जते। पात्रम् पातारं रक्षकम्[1]। एवंगुणविशिष्टं वैश्वानरम् अग्निम् देवाः स्तोतार ऋत्विजः आ जनयन्त अरण्योः सकाशाद् उदपादयन् ॥ १ ॥

नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त ।
वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥ २ ॥

नाभिम् । यज्ञानाम् । सदनम् । रयीणाम् । महाम् । आऽहावम् । अभि । सम् । नवन्त ।
वैश्वानरम् । रथ्यम् । अध्वराणाम् । यज्ञस्य । केतुम् । जनयन्त । देवाः ॥ २ ॥

वेङ्कट० नाभिस्थानम् यज्ञानाम्, आवासस्थानम् रयीणाम्, महान्तम् आह्वातव्यभूतम्, निपानम् आहाव। वम्, अभि यतन्ति। वैश्वानरम् नेतारम् [यज्ञानाम् यज्ञस्य केतुभूतम् जनयन्त देवाः[2]] ॥ २ ॥

मुद्गल० यज्ञानाम् ज्योतिष्टोमादियागानाम् नाभिम् बन्धकं तथा रयीणाम् धनानाम् सदनम् स्थानम् महाम् महान्तम् आहावम् आहूयन्तेऽस्मिन्नाहुतय[3] इति आहावः तादृशम्, एवंभूतम् अग्निम् अभि सम् नवन्त स्तोतारः सम्यक् स्तुवन्ति। तथा वैश्वानरम् विश्वेषां नराणां सम्बन्धिनम् अध्वराणाम् यज्ञानाम् रथ्यम् रथिनम् यथा रथी स्वरथं नयति तद्वन्नेतारम् प्रापयितारम्[4] यज्ञस्य केतुम् प्रज्ञापकम्। एवंविधम् अग्निम् देवाः स्तोतार ऋत्विजः जनयन्त मथनेनोत्पादयन्ति ॥ २ ॥

त्वद् विप्रो जायते वाज्यग्ने त्वद् वीरासो अभिमातिषाहः ।
वैश्वानर त्वमस्मासु धेहि वसूनि राजन्त्स्पृहयाय्याणि ॥ ३ ॥

त्वत् । विप्रः । जायते । वाजी । अग्ने । त्वत् । वीरासः । अभिमातिऽसहः ।
वैश्वानर । त्वम् । अस्मासु । धेहि । वसूनि । राजन् । स्पृहयाय्याणि ॥ ३ ॥

वेङ्कट० [5]त्वत्तः मेधावी अश्वः जायते अग्ने। त्वत्तः एव अभिमातीनां सोढारः नरः। वैश्वानर! त्वम् अस्मासु धेहि धनानि राजन्! स्पृहणीयानि[5] ॥ ३ ॥

मुद्गल० हे अग्ने! वाजी हविर्लक्षणान्नवान् पुरुषः त्वत् त्वत्तः सकाशात् विप्रः मेधावी जायते। तथा वीरासः वीराः त्वत् त्वत्तः अभिमातिषाहः शत्रूणामभिभवितारो जायन्ते। यस्मादेवं तस्मात् हे वैश्वानर! राजन्! राजमानाग्ने! त्वम् अस्मासु स्पृहयाय्याणि स्पृहणीयानि वसूनि धेहि निधेहि ॥ ३ ॥

त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवन्ते ।
तव क्रतुभिरमृतत्वमायन् वैश्वानर यत् पित्रोरदीदेः ॥ ४ ॥

---

१. सोमम् मूको. २. नास्ति वि॰. [-] नास्ति लपं. ३. °हूतय मूको ४. प्रवेतारम् मूको. ५-५. नास्ति वि॰ लपं.

त्वाम् । विश्वे । अमृत । जायमानम् । शिशुम् । न । देवाः । अभि । सम् । नवन्ते ।
तव । क्रतुऽभिः । अमृतऽत्वम् । आयन् । वैश्वानर । यत् । पित्रोः । अदीदेः ॥ ४ ॥

वेङ्कट० दीदेथिर्दीप्तिकर्मा । शिष्टं स्पष्टम् ॥ ४ ॥

मुद्गल० हे अमृत! मरणधर्मरहित! अग्ने! विश्वे सर्वे देवाः स्तोतारः जायमानम् अरण्योः सकाशाद् उत्पद्यमानम् त्वाम् शिशुम् न पुत्रमिव अभि सम् नवन्ते अभिसंस्तुवन्ति । अपि च हे वैश्वानर! अग्ने! यत् यदा पित्रोः पालयित्र्योः द्यावापृथिव्योर्मध्ये अदीदेः दीप्यसे तदानीम् तव त्वदीयैः क्रतुभिः कर्मभिर्ज्योतिष्टोमादिभिर्यागैः अमृतत्वम् देवत्वम् आयन् यजमानाः प्राप्नुवन्ति ॥ ४ ॥

वैश्वानर तव तानि व्रतानि महान्यग्ने नकिरा दधर्ष ।
यज्जायमानः पित्रोरुपस्थेऽविन्दः केतुं वयुनेष्वह्नाम् ॥ ५ ॥

वैश्वानर । तव । तानि । व्रतानि । महानि । अग्ने । नकिः । आ । दधर्ष ।
यत् । जायमानः । पित्रोः । उपऽस्थे । अविन्दः । केतुम् । वयुनेषु । अह्नाम् ॥ ५ ॥

वेङ्कट० वैश्वानर! तव तानि कर्माणि महान्ति अग्ने! न कश्चित् आ धर्षयति । यदा जायमानः द्यावापृथिव्योः उपस्थे मात सूर्यात्मना लम्भयसि प्रज्ञानम् अह्नाम् गमनेषु ॥ ५ ॥

मुद्गल० हे वैश्वानर! अग्ने! तव स्वकीयानि तानि प्रसिद्धानि[1] व्रतानि कर्माणि महानि महान्ति नकिः आ दधर्ष न कश्चन अन्यो धर्षयति बाधते । यत् यदा त्वम् पित्रोः द्यावापृथिव्योः उपस्थे उपस्थाने अन्तरिक्षे वयुनेषु गन्तव्येषु मार्गेषु जायमानः सन् अह्नाम् केतुम् प्रज्ञापकं सूर्यं स्वर्भानुनाऽऽवृतम् अविन्दः अलम्भय । तमोरूपम् असुरं स्वतेजसा निवारयन् अस्थापय इत्यर्थः । तदा तानि व्रतानीति पूर्वेणान्वयः ॥ ५ ॥

वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।
तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः ॥ ६ ॥

वैश्वानरस्य । विऽमितानि । चक्षसा । सानूनि । दिवः । अमृतस्य । केतुना ।
तस्य । इत् । ऊँ इति । विश्वा । भुवना । अधि । मूर्धनि । वयाःऽइव । रुरुहुः । सप्त । विऽस्रुहः ॥ ६ ॥

वेङ्कट० वैश्वानरस्य निर्मितानि तेजसा प्रकाशकेन समुच्छ्रितानि तेजांसि अमृतस्य[2] द्युलोकस्य । तस्य एव विश्वानि भुवनानि मूर्धनि आश्र रुरुहुः शाखा इव सप्त च नद्यः (द्र या ६ २) ॥ ६ ॥

मुद्गल० वैश्वानरस्य अग्नेः चक्षसा तेजसा अमृतस्य उदकस्य केतुना प्रज्ञापकेन दिवः द्युलोकस्य सानूनि समुच्छ्रितस्थानानि विमितानि निर्मितानि । तस्य इत् उ तस्यैव वैश्वानरस्य मूर्धनि उपरि वर्तमाने धूमे मेघात्मना परिणते विश्वा विश्वानि व्याप्तानि[3] भुवना भुवनान्युदकानि अधि वसन्ति ।

---

1. °नि स्वकीयानि मूको. 2. नास्ति मूको. 3. व्याप्तानि मूको.

तथा यथा पक्षिण इव सास सर्पणशीला सप्तसङ्ख्याका वाः विश्रुह नद्यश्च गङ्गाद्या रुरुहु रोहन्ति । अस्मादेव वैश्वानरात् प्रादुर्भवन्ति ॥ ६ ॥

वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः ।
परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य रक्षिता ॥ ७ ॥

वि । यः । रजांसि । अमिमीत । सुऽक्रतुः । वैश्वानरः । वि । दिवः । रोचना । कविः ।
परि । यः । विश्वा । भुवनानि । पप्रथे । अदब्धः । गोपाः । अमृतस्य । रक्षिता ॥ ७ ॥

वेङ्कट० वि ममे यः लोकान् सुप्रज्ञः वैश्वानरः, वि ममे स दिवः रोचनानि कविः । 'परि पप्रथे' यः विश्वानि भुवनानि अहिंसितः गोपायिता उदकस्य रक्षिता ॥ ७ ॥

मुद्गल० सुक्रतुः सुकर्मा वैश्वानरः विश्वेषां नराणां हितः यः अग्निः रजांसि उदकानि लोकान् वा वि अमिमीत निर्मितवान् । तथा दिवः द्युलोकस्य सम्बन्धीनि रोचना रोचमानानि नक्षत्रादीनि कविः क्रान्तदर्शी सन् योऽग्निः वि अमिमीत । यः च विश्वा सर्वाणि भुवनानि परि पप्रथे परितोऽप्रथयत्, सोऽयम् अदब्धः केनाप्यहिंसितः गोपाः सर्वस्य गोपायिता अमृतस्य उदकस्य रक्षिता पालयिता सन् वर्तत इति शेषः ॥ ७ ॥

इति चतुर्थाष्टके पञ्चमाध्याये नवमो वर्गः ॥

[८]

पृक्षस्य वृष्णो अरुषस्य नू सहः प्र नु वोचं विदथा जातवेदसः ।
वैश्वानराय मतिर्नव्यसी शुचिः सोम इव पवते चारुरग्नये ॥ १ ॥

पृक्षस्य । वृष्णः । अरुषस्य । नु । सहः । प्र । नु । वोचम् । विदथा । जातऽवेदसः ।
वैश्वानराय । मतिः । नव्यसी । शुचिः । सोमःऽइव । पवते । चारुः । अग्नये ॥ १ ॥

वेङ्कट० सम्पर्चयितुः वृष्णः आरोचमानस्य क्षिप्रम् सहः प्र वोचम् विज्ञानेन जातवेदसः । एको तु परण । वैश्वानराय स्तुतिः नवतरा शुचिः सोम इव चारु[1] निर्गच्छति अग्नये[1] ॥ १ ॥

मुद्गल० 'पृक्षस्य' इति सप्तर्चम् अष्टमं सूक्तम् । भारद्वाज ऋषिः । आद्या षट् जगत्यः, सप्तमी त्रिष्टुप् । वैश्वानरोऽग्निर्देवता ॥

पृक्षस्य सम्पृक्तस्य[2] व्याप्तस्य वृष्णः कामानां वर्षितुः अरुषस्य आरोचमानस्य जातवेदसः जातानि वेदितुर्वैश्वानराग्नेः सहः बलम् अभिभवनसमर्थम् विदथा विदथे यज्ञे नु क्षिप्रम् प्र वोचम् प्रब्रवीमि, प्रकर्षेण स्तौमीत्यर्थः । एक नु पूरकः । नव्यसी नवतरा शुचिः निर्मला चारुः शोभना मतिः स्तुतिः अस्मै वैश्वानराय अग्नये पवते अस्मन्मुखात् स्रवति । स्वयमेव निर्गच्छतीत्यर्थः । सोमः इव यथा सोमो दशापवित्रात् स्रवति तद्वत् ॥ १ ॥

1 भारित मूको　२-२. वरिद्वः वि' एवे　३. चाव मूको　४. पृक्ष मूको

स जायमानः परमे व्योमनि व्रतान्यग्निर्व्रतपा अरक्षत ।
व्य१न्तरिक्षममिमीत सुक्रतुर्वैश्वानरो महिना नाकमस्पृशत् ॥ २ ॥

सः । जायमानः । परमे । विऽओमनि । व्रतानि । अग्निः । व्रतऽपाः । अरक्षत ।
वि । अन्तरिक्षम् । अमिमीत । सुऽक्रतुः । वैश्वानरः । महिना । नाकम् । अस्पृशत् ॥ २ ॥

वेङ्कट० निगदसिद्धा ॥ २ ॥

मुद्गल० सः वैश्वानरः अग्निः व्रतपाः व्रतस्य पालकः परमे उत्कृष्टे व्योमनि आकाशे जायमानः सूर्यात्मना प्रादुर्भवन् व्रतानि व्रतकर्माणि लौकिकानि वैदिकानि च अरक्षत रक्षति, अन्तरिक्षम् च वि अमिमीत एतदुपलक्षितांस्त्रीन् लोकान् निर्मितवान्। तथा सुक्रतुः शोभनकर्मा वैश्वानरः अग्निः महिना स्वमहिम्ना तेजसा नाकम् द्युलोकम् अस्पृशत् स्पृशति स्म ॥ २ ॥

व्यस्तभ्नाद्रोदसी मित्रो अद्भुतोऽन्तर्वावदकृणोज्ज्योतिषा तमः ।
वि चर्मणीव धिषणे अवर्तयद्वैश्वानरो विश्वमधत्त वृष्ण्यम् ॥ ३ ॥

वि । अस्तभ्नात् । रोदसी इति । मित्रः । अद्भुतः । अन्तःऽवावत् । अकृणोत् । ज्योतिषा । तमः ।
वि । चर्मणी इवेति चर्मणीऽइव । धिषणे इति । अवर्तयत् । वैश्वानरः । विश्वम् । अधत्त । वृष्ण्यम् ॥ ३ ॥

वेङ्कट० अधश्चोर्ध्वं च चकार द्यावापृथिव्यौ मित्रभूतः महान्। अन्तर्गतम् अकरोत् ज्योतिषा तमः। वि वर्तयति द्वे चर्मणी इव द्यावापृथिवी विश्लिष्टे करोति। वैश्वानरः विश्वम् धारयति वर्षणसमिधम् ॥ ३ ॥

मुद्गल० मित्रः मित्रभूतः सर्वेषाम् अद्भुतः महान् वैश्वानरोऽग्निः रोदसी द्यावापृथिव्यौ वि अस्तभ्नात् विशेषेण स्तम्भितवान्। तथा ज्योतिषा तेजसा तमः अन्धकारम् अन्तर्वावत् अन्तर्हितम् अकृणोत् अकरोत्। अपि च धिषणे धारयित्र्यौ द्यावापृथिव्यौ चर्मणी इव यथा पशोर्निवासिता द्वे चर्मणी शोषणार्थं प्रसारयति तथा वि अवर्तयत् विस्तृते अकरोत्। किं बहुना। वैश्वानरः अयमग्निः विश्वम् सर्वम् वृष्ण्यम् वीर्यम् अधत्त धत्ते धारयति ॥ ३ ॥

अपामुपस्थे महिषा अगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियम् ।
आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः ॥ ४ ॥[1]

अपाम् । उपऽस्थे । महिषाः । अगृभ्णत । विशः । राजानम् । उप । तस्थुः । ऋग्मियम् ।
आ । दूतः । अग्निम् । अभरत् । विवस्वतः । वैश्वानरम् । मातरिश्वा । पराऽवतः ॥ ४ ॥

वेङ्कट० अन्तरिक्षे महान्तः देवाः वैश्वानरम् धारयन्ति। तत्र विशः राजानम् उप तस्थुः स्तुत्यम् इमम्। अग्निम् दूतः मातरिश्वा दूरात् दिवः विवस्वतः आहृतवान्[1] ॥ ४ ॥

मुद्गल० अपाम् अन्तरिक्षस्य उपस्थे उपस्थाने मध्ये महिषाः महान्तो मरुतः अगृभ्णत अगृह्णन्। इमं वैश्वानरं वैद्युतात्मना वर्तमानमग्निमित्यर्थः। गृहीत्वा च विशः प्रजाः राजानम् स्वामिनम्

1. ऋगेषा यास्केन व्याख्याता ( ७,२६ ).

अग्निमयम् अर्चनीयम् उप तस्थुः अस्तुवन्। अपि च वैश्वानरम् अग्निम् पुरा सूर्यसमीपे विद्यमानम् दूतः देवानाम् दूतः मातरिश्वा वायुः परावतः दूरदेशात् विवस्वतः आदित्यात् आ अभरत् इमं लोकं प्रति आजहार ॥ ४ ॥

युगेयुगे विदथ्यं गृणद्भ्योऽग्ने रयिं यशसं धेहि नव्यसीम् ।
पव्येव राजन्नघशंसमजर नीचा नि वृश्च वनिनं न तेजसा ॥ ५ ॥

युगेऽयुगे । विदथ्यम् । गृणत्ऽभ्यः । अग्ने । रयिम् । यशसम् । धेहि । नव्यसीम् ।
पव्याऽइव । राजन् । अघऽशंसम् । अजर । नीचा । नि । वृश्च । वनिनम् । न । तेजसा ॥५॥

वेङ्कट० दिवसेदिवसे गृहयोग्यं स्तुवद्भ्यः अग्ने! रयिम् अन्नं च प्रयच्छ, तथा नवतरां भार्यां च। आयुधेनेव राजन्! अजर! हे तेजसा स्तेनम् नीचा निः वृश्च यथा वृक्षवद् अरण्यस्थम् आयुधेनेति ॥५॥

मुद्गल० हे अग्ने! युगेयुगे कालेकाले विदथ्यम् विदथो यज्ञः तदर्हं त्वामुद्दिश्य नव्यसीम् नवतरां स्तुतिम् गृणद्भ्यः उच्चारयितृभ्योऽस्मभ्यम् रयिम् धनम् यशसम् यशस्विनं पुत्रं च धेहि निधेहि कुरु। किञ्च हे राजन्! राजमान! अजर! जरारहित! अग्ने! पव्या इव वज्रेणेव आत्मीयेन तेजसा वनिनम् न वृक्षमिव अघशंसम् अघस्य अनर्थस्य शंसितारं शत्रुम् नीचा नीचीनः सन् न्यग्भूः यथा भवति तथा नि वृश्च छिन्धि ॥ ५ ॥

अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यम् ।
वयं जयेम शतिनं सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥ ६ ॥

अस्माकम् । अग्ने । मघवत्ऽसु । धारय । अनामि । क्षत्रम् । अजरम् । सुऽवीर्यम् ।
वयम् । जयेम । शतिनम् । सहस्रिणम् । वैश्वानर । वाजम् । अग्ने । तव । ऊतिऽभिः ॥६॥

वेङ्कट० अस्माकम् अग्ने! धनवत्सु बन्धुषु धारय अनतम्[1] बलम् जरारहितम् शोभनवीर्यम्। वयम् जयेम शतिनम् सहस्रिणम् च सङ्ग्रामम् तव रक्षणैः वैश्वानर![2] अग्ने![3] ॥ ६ ॥

मुद्गल० हे अग्ने! अस्माकम् अस्मदीयेषु मघवत्सु हविर्लक्षणेन धनेन युक्तेषु क्षत्रम् बलम् धारय। कीदृशम्। अनामि अनमनीयम् अनपहार्यम् अजरम् जरारहितम् सुवीर्यम् शोभनवीर्योपेतम्। किञ्च हे वैश्वानर! अग्ने! तव ऊतिभिः त्वत्सम्बन्धिभी रक्षणैः वयम् शतिनम् शतसङ्ख्यायुक्तं तथा सहस्रिणम् वाजम् अन्नम् जयेम लभेमहि ॥ ६ ॥

अदब्धेभिस्तव गोपाभिरिष्टेऽस्माकं पाहि त्रिषधस्थ सूरीन् ।
रक्षा च नो ददुषां शर्धो अग्ने वैश्वानर प्र च तारीः स्तवानः ॥ ७ ॥

अदब्धेभिः । तव । गोपाभिः । इष्टे । अस्माकम् । पाहि । त्रिऽसधस्थ । सूरीन् ।
रक्ष । च । नः । ददुषाम् । शर्धः । अग्ने । वैश्वानर । प्र । च । तारीः । स्तवानः ॥ ७ ॥

१. नास्ति वि' हर्प. २. अनतम् वि' हर्प. ३. नास्ति मूको.

वेङ्कट० अहिंसितैः तव गोपनैः हे यहृव्य[1] अस्माकम् पाहि हे त्रिस्थान[1] 'स्तोतॄन् पुत्रान्'। रक्ष च अस्माकम् यजमानानां बलम् अग्ने। वैश्वानर। । प्र तारय च अस्मान् स्तूयमान ॥ ७ ॥

मुद्गल० हे इष्टे। यहृव्य[1] त्रिषधस्थ। त्रिषु लोकेषु सहस्थायिन्[1] अदब्धेभिः केनाप्यहिंसितैः तव त्वदीयैः गोपाभिः रक्षकैस्तेजोभिः अस्माकम् सूरीन् अस्मदीयान् स्तोतॄन् पाहि रक्ष। हे वैश्वानर। अग्ने। ददुषाम् हवींषि दत्तवताम् नः अस्माकम् शर्धः बलम् रक्ष च। स्तवान स्तूयमानस्त्वम् प्र च तारीः प्रवर्धय च ॥ ७ ॥

इति चतुर्थाष्टके पञ्चमाध्याये दशमो वर्गः ॥

[ ९ ]

अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥ १ ॥

अहः । च । कृष्णम् । अहः । अर्जुनम् । च । वि । वर्तेते इति । रजसी इति । वेद्याभिः ।
वैश्वानरः । जायमानः । न । राजा । अव । अतिरत् । ज्योतिषा । अग्निः । तमांसि ॥ १ ॥

वेङ्कट० अहः च कृष्णवर्णम् अहः श्वेतवर्णं च इत्यहोरात्रे वदति। ते वि वर्तेते तेजसा तमसा च रञ्जके, 'वेदितव्याभिः प्रवृत्तिभिः' इति (२.२१) यास्कः। वैश्वानरः जायमानः इवोद्यन् आदित्यः सर्वेषाम् ज्योतिषा विनाशयति अग्निः तमांसि ॥ १ ॥

मुद्गल० 'अहश्च' इति सप्तर्चं नवमं सूक्तम्। भरद्वाज ऋषिः। त्रिष्टुप् छन्दः। वैश्वानरोऽग्निर्देवता ॥

आहरति पुरुषोऽस्मिन् कर्माणीति अहः। कृष्णम् कृष्णवर्णं रात्रिः च। अर्जुनम् च सौरेण तेजसा शुक्लवर्णम् अहः दिवसश्च। रजसी स्वस्वभासा सर्वं जगद्रञ्जयन्त्यौ[2] वेद्याभिः वेदितव्याभिः स्वप्रवृत्तिभिः[3] वि वर्तेते विविधं पर्यावर्तेते। एतस्य वैश्वानरस्येच्छया इति शेषः। स च वैश्वानरः अग्निः जायमानः न राजा प्रादुर्भवन् वर्धमानो राजेव ज्योतिषा तेजसा तमांसि अव अतिरत् विनाशयति ॥ १ ॥

नाहं तन्तुं न वि जानाम्योतुं न यं वयन्ति समरेऽतमानाः ।
कस्य स्वित् पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥ २ ॥

न । अहम् । तन्तुम् । न । वि । जानामि । ओतुम् । न । यम् । वयन्ति । समऽअरे । अतमानाः ।
कस्य । स्वित् । पुत्रः । इह । वक्त्वानि । परः । वदाति । अवरेण । पित्रा ॥ २ ॥

वेङ्कट० वैश्वानरस्य रश्मिभिरिदं भूतजातं प्रोतम्। तत्रेदमाह—न अहम् पटस्य दीर्घतन्तुम् जानामि

1-1. स्तोतॄ° वि° इप. 2. व्याख्यातमेतद् यास्केन (२,२१). 3. °यन्ती मूको. 4. स्वावृत्तिभि मूको.

न तिर्यक् तन्तुम्। न यम् तन्तुम् वयन्ति 'तन्तुवायाः सह' प्रति गच्छन्ति। कस्य वा पुत्र इह वक्तव्यानि वाक्यानि परस्मिन् स्थित अपरस्मिन् स्थाने स्थितेन पित्रा वदति ॥ २ ॥

मुद्गल० तन्तुम् तन्तव पटस्य प्रागायतानि सूत्राणि, तानि च यज्ञात्मकस्य वस्त्रस्य गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि च। तानि अहम् न वि जानामि। तथा ओतुम् ओतव तिरश्चीनानि सूत्राणि[२], अत्र च यजूंषि आध्वर्यवाणि च कर्माणि। तानि अहम् न विजानामि। अपि चैतदुभयसाध्य त पट यज्ञलक्षणम्[३] न विजानामि, यम् पट यज्ञलक्षणम् समरे सङ्गमने देवयजने अजमाना सतत चेष्टमाना ऋत्विज वयन्ति सन्तन्वन्ति, वस्त्ररूपेण निष्पादयन्ति इत्यर्थ। इह अस्मिन् लोके कस्य स्वित् कस्य खलु पुत्र मनुष्य वक्त्वानि वक्तव्यानि तानि इमानि पर परस्तात् अमुष्मिन् लोके वर्तमानो य सूर्यस्तस्य पित्रा अवरेण अवस्तात् अस्मिन् लोके वर्तमानेन वैश्वानराग्निनाऽनुशिष्ट सन् वदाति वदेत्, न कश्चिदपि वदितु शक्नोतीत्यर्थ ॥ २ ॥

स इत् तन्तुं स वि जानात्योतुं स वक्त्वान्यृतुथा वदाति।
य ईं चिकेतदमृतस्य गोपा अवश्चरन् परो अन्येन पश्यन् ॥ ३ ॥

स। इत्। तन्तुम्। स। वि। जानाति। ओतुम्। स। वक्त्वानि। ऋतुऽथा। वदाति।
य। ईम्। चिकेतत्। अमृतस्य। गोपा। अव। चरन्। पर। अन्येन। पश्यन् ॥ ३ ॥

वेङ्कट० स एव वैश्वानर तन्तुम् वि जानाति स एव ओतुम् च। स एव वाक्यानि अग्नौ वदति पर्जन्यो भूत्वाऽन्तरिक्षे शब्द कुर्वन्। य वैश्वानर एव तन्तुम् ओतु च वेत्ता अमृतस्य गोपायिता पृथिव्या वर्तमान पर भूत्वा अन्येन आदित्यरूपेण सर्वं जगत् पश्यन्। वैश्वानरोऽहरादित्यो[४] भूत्वा जगत् पश्यतीति 'स तस्य' पुत्रमाह। तथा स एव पर्जन्यो भूत्वा वर्षतीति ॥ ३ ॥

मुद्गल० स इत् स एव वैश्वानरोऽग्नि तन्तुम् तन्तुस्थानीयानि गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि वि जानाति। तथा स एव ओतुम् ओतुस्थानीयानि यजूंष्याध्वर्यवाणि च कर्माणि[५] विजानाति। स एव ऋतुथा काले काले तत्तदनुष्ठानसमये वक्त्वानि वक्तव्यानि च तानि वदाति वदेत्। य अयं वैश्वानर अमृतस्य गोपा रक्षिता अव अवस्तात् भूलोके चरन् पार्थिवाग्निरूपेण सञ्चरन् पर परस्तात् दिवि अन्येन सूर्यात्मना पश्यन् सर्वं जगत् प्रकाशयन् ईम् इमानि परिदृश्यमानानि सर्वाणि चिकेतत् जानाति, स एव इति पूर्वत्र सम्बन्ध ॥ ३ ॥

अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु।
अयं स जज्ञे ध्रुव आ निषत्तोऽमर्त्यस्तन्वा वर्धमानः ॥ ४ ॥

अयम्। होता। प्रथम। पश्यत। इमम्। इदम्। ज्योति। अमृतम्। मर्त्येषु।
अयम्। स। जज्ञे। ध्रुव। आ। निऽसत्त। अमर्त्य। तन्वा। वर्धमान ॥ ४ ॥

---

१-१. तन्तुवायसह छ, तन्तुवायसहै वि[१], तन्तुवायसं एप. २. नास्ति मूको ३. °ज्ञस्य लक्षणं मूको. ४. °रो ऽहरादि° वि[१]. ५-५. तन्तस्त्र एपे, तत्राप वि[१]. ६. °नि स एव मूको.

वेङ्कट० अयम् होता प्रथमः। पश्यत इमम्। इदम् ज्योतिः अमृतम् मरणधर्मिषु। अयम् सः जायते मेधो[1]-भूतः सर्वतो निषण्णः अमरणधर्मा शरीरेण वर्धमानः ॥ ४ ॥

मुद्गल० अयम् वैश्वानरोऽग्निः प्रथमः आद्यः होता। मानुषो हि होता द्वितीयः। हे मनुष्याः! तम् इमम् पश्यत भजतेत्यर्थः। मर्त्येषु मरणस्वभावेषु शरीरेषु अमृतम् मरणरहितम् इदम् वैश्वानराख्यम् ज्योतिः जाठररूपेण वर्तत इत्यर्थः। अपि च सः अयम् अग्निः ध्रुवः निश्चलः आ समन्तात् निषत्तः निषण्णः सर्वव्यापी, अत एव अमर्त्यः मरणरहितोऽपि तन्वा शरीरेण सम्बन्धात् जज्ञे जायते। वर्धमानः च भवतीति उपचर्यते ॥ ४ ॥

ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।
विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु ॥ ५ ॥

ध्रुवम् । ज्योतिः । निऽहितम् । दृशये । कम् । मनः । जविष्ठम् । पतयत्ऽसु । अन्तरिति ।
विश्वे । देवाः । सऽमनसः । सऽकेताः । एकम् । क्रतुम् । अभि । वि । यन्ति । साधु ॥ ५ ॥

वेङ्कट० ध्रुवम् ज्योतिः वैश्वानराख्यं स्थापितं दर्शनाय। कम् इति पूरणम्। मनसोऽपि वेगवत्तरं जङ्गमेषु अन्तः। विश्वे देवाः समनसः समप्रज्ञाः एकम् वैश्वानरं कर्तारम् अभि विविधं गच्छन्ति कल्याणम् ॥ ५ ॥

मुद्गल० ध्रुवम् निश्चलम् मनः मनसः तस्मादपि जविष्ठम् अतिशयेन वेगवत्[2] ईदृशं वैश्वानराख्यम् ज्योतिः पतयत्सु गच्छत्सु जङ्गमेषु प्राणिषु अन्तः मध्ये निहितम् प्रजापतिना स्थापितम्। किमर्थम्। दृशये कम् दर्शनार्थम्। किञ्च विश्वे सर्वे देवाः च समनसः समानमनस्काः सकेताः समानप्रज्ञाश्च सन्तः एकम् मुख्यम् क्रतुम् कर्मणां कर्तारम् साधु सम्यक् अभि [illegible] यन्ति आभिमुख्येन विविधं प्राप्नुवन्ति सेवन्त इत्यर्थः ॥ ५ ॥

वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत् ।
वि मे मनश्चरति दूरआधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥ ६ ॥

वि । मे । कर्णा । पतयतः । वि । चक्षुः । वि । इदम् । ज्योतिः । हृदये । आऽहितम् । यत् ।
वि । मे । मनः । चरति । दूरेऽआधीः । किम् । स्वित् । वक्ष्यामि । किम् । ऊँ इति । नु । मनिष्ये ॥

वेङ्कट० वि पततः मम कर्णौ श्रोतव्यं प्रति वैश्वानरेणाधिष्ठितस्य। वि पतति चक्षुः च। तथा इदम् ज्योतिः च हृदये आहितम् परबुद्ध्याख्यम्। तथा मे मनः च वि चरति, यत् मनः दूर आधीयते[3]। तस्मिन्नाश्चर्ये किम् स्वित् अहम् वक्ष्यामि, किमु[4] वा मनिष्ये। अवबोधनकर्मा[5] मनिः ॥ ६ ॥

मुद्गल० वैश्वानरं श्रोतुकामस्य मे मम कर्णा कर्णौ वि पततः विविधं गच्छतः। श्रोतव्यानां

१. मेधि(,धी)-, मेढि(,ढी)-, मेदि(,दी)- इत्यन्यत्र पाठान्तराणि. २. °गमनतम् मूको. ३. आनीयते इप. ४. नास्ति वि° एपं. ५. बोधन° ल.

तदीयगुणानां बहुत्वात्। तथा वैश्वानरं विक्षमाणस्य मम चक्षुः इन्द्रियम् वि पतयति विविधं गच्छति। तथा ज्योतिः प्रकाशकम् हृदये हृदयपुण्डरीके आहितम् निहितम् यत् बुद्धितत्त्वम् इदम् अपि वि पतयति ··· ··· ··· ॥ ६ ॥

विश्वे देवा अनमस्यन् भियानास्त्वामग्ने तमसि तस्थिवांसम् ।
वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥ ७ ॥

विश्वे । देवाः । अनमस्यन् । भियानाः । त्वाम् । अग्ने । तमसि । तस्थिऽवांसम् ।
वैश्वानरः । अवतु । ऊतये । नः । अमर्त्यः । अवतु । ऊतये । नः ॥ ७ ॥

वेङ्कट० विश्वे देवाः अनमस्यन् बिभ्यतः त्वाम् अग्ने! तमसि उदकस्य अन्तः अपक्रम्य तस्थिवांसम्। सः[1] वैश्वानरः गच्छतु रक्षणाय अस्मान् मरणवर्जितः ॥ ७ ॥

[2]इति चतुर्थाष्टके पञ्चमाध्याये एकादशो वर्गः[2] ॥

[ १० ]

[3]भरद्वाजो बार्हस्पत्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः, सप्तमी द्विपदा विराट्[3] ।

पुरो वो मन्द्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वम् ।
पुर उक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥ १ ॥

पुरः । वः । मन्द्रम् । दिव्यम् । सुऽवृक्तिम् । प्रऽयति । यज्ञे । अग्निम् । अध्वरे । दधिध्वम् ।
पुरः । उक्थेभिः । सः । हि । नः । विभाऽवा । सुऽअध्वरा । करति । जातऽवेदाः ॥ १ ॥

वेङ्कट० पुरः दधिध्वम् पूर्वं मदयितारं दिवि भवं सुष्टुतिं वर्तमाने यज्ञे अग्निम् अहिंसिते, अमतः उक्थेभिः[1]। अस्मान् अग्निः हि[1] दीप्तिमान् सुयज्ञान् करोति सञ्जातप्रज्ञः ॥ १ ॥

तमु द्युमः पुर्वणीक होतरग्ने अग्निभिर्मनुष इधानः ।
स्तोमं यमस्मै ममतेव शूषं घृतं न शुचि मतयः पवन्ते ॥ २ ॥

तम् । ऊँ इति । द्युऽमः । पुरुऽअनीक । होतः । अग्ने । अग्निऽभिः । मनुषः । इधानः ।
स्तोमम् । यम् । अस्मै । ममताऽइव । शूषम् । घृतम् । न । शुचि । मतयः । पवन्ते ॥ २ ॥

वेङ्कट० तम् स्तोमम् शृणु हे दीप्तिमन्! बहुज्वालानीक! होतः! अग्ने! अन्यैः अग्निभिः सह मनुष्यस्यार्थे दीप्यमानः। स्तोमम् यम् अस्मै तुभ्यं दीर्घतमसो माता ममता इव सुखकरम् घृतम् न शुद्धं स्तोतारः प्रेरयन्ति ॥ २ ॥

पीपाय स श्रवसा मर्त्येषु यो अग्नये ददाश विप्र उक्थैः ।
चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्य साता गोमतो दधाति ॥ ३ ॥

---

१. नास्ति एवं. २-२. नास्ति मूको. ३. नास्ति मूको.

पीपाय । सः । श्रवसा । मर्त्येषु । यः । अग्नये । ददाश । विप्रः । उक्थैः ।
चित्राभिः । तम् । ऊतिऽभिः । चित्रऽशोचिः । व्रजस्य । साता । गोऽमतः । दधाति ॥ ३ ॥

वेङ्कट० वर्धते सः अन्नेन मनुष्येषु, यः अग्नये हविः प्रयच्छति मेधावी उक्थैः सह। चित्रैः तम् रक्षणैः चित्रदीप्तिः गोमतः व्रजस्य लाभे स्थापयति ॥ ३ ॥

आ यः पप्रौ जायमान उर्वी दूरेदृशा भासा कृष्णाध्वा ।
अध बहु चित् तम ऊर्म्यायास्तिरः शोचिषा ददृशे पावकः ॥ ४ ॥

आ । यः । पप्रौ । जायमानः । उर्वी इति । दूरेऽदृशा । भासा । कृष्णऽअध्वा ।
अध । बहु । चित् । तमः । ऊर्म्यायाः । तिरः । शोचिषा । ददृशे । पावकः ॥ ४ ॥

वेङ्कट० आ पूरयति यः जायमानः द्यावापृथिव्यौ दूरे दृश्यमानया भासा कृष्णवर्त्मा। अथ [1]बहु चित् तमः[1] रात्रेः ( तु. निघ १,७ ) तिरस्कृत्य शोचिषा[2] दृश्यते पावकः ॥ ४ ॥

नू नश्चित्रं पुरुवाजाभिरूती अग्ने रयिं मघवद्भ्यश्च धेहि ।
ये राधसा श्रवसा चात्यन्यान्त्सुवीर्येभिश्चाभि सन्ति जनान् ॥ ५ ॥

नु । नः । चित्रम् । पुरुऽवाजाभिः । ऊती । अग्ने । रयिम् । मघवत्ऽभ्यः । च । धेहि ।
ये । राधसा । श्रवसा । च । अति । अन्यान् । सुऽवीर्येभिः । च । अभि । सन्ति । जनान् ॥ ५ ॥

वेङ्कट० क्षिप्रम् अस्मभ्यम् [3]मघवद्भ्यः च[3] चित्रम् बहुभिः रक्षणैः सह अग्ने। धनं प्रयच्छ। ये धनेन अन्नेन च अति[4] अन्यान् अभि भवन्ति जनान्, सुवीर्यैः च अभिभवन्ति, तेभ्योऽस्मभ्यमिति ॥ ५ ॥

इमं यज्ञं चनो धा अग्न उशन् यं त आसानो जुहुते हविष्मान् ।
भरद्वाजेषु दधिषे सुवृक्तिमवीर्वाजस्य गध्यस्य सातौ ॥ ६ ॥

इमम् । यज्ञम् । चनः । धाः । अग्ने । उशन् । यम् । ते । आसानः । जुहुते । हविष्मान् ।
भरत्ऽवाजेषु । दधिषे । सुऽवृक्तिम् । अवीः । वाजस्य । गध्यस्य । सातौ ॥ ६ ॥

वेङ्कट० इमम् यज्ञम् चनः [illegible] धारय अग्ने। कामयमानः, यम् सौभाग्ये यज्ञं जुह्वत् आसीनः होता प्रयच्छति हविष्मान्। भरद्वाजेषु धारयसि स्तुतिम्, रक्षिता अन्नस्य त्वयि क्षेत्रस्य भजते। गध्यतिर्मिश्रीभावकर्मा ( तु. या ५,१५ ) ॥ ६ ॥

वि द्वेषांसीनुहि वर्धयेळां मदेम शतहिमाः सुवीराः ॥ ७ ॥

वि । द्वेषांसि । इनुहि । वर्धय । इळाम् । मदेम । शतऽहिमाः । सुऽवीराः ॥ ७ ॥

---

१-१. बन्तितमः मूको, बहितमः वि॰. २. शोचिषा वि॰ मूको. ३-३. हविः मूको. ४. नास्ति मूको.

वेङ्कट० शत्रून् वि नाशय। वर्धय अन्नम् अस्माकम्। मदेमहि शतसंवत्सराः सुपुत्राः [illegible] ॥

[1]इति चतुर्थाष्टके पञ्चमाध्याये द्वादशो वर्गः[1] ॥

[ ११ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः[1]।

यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति ।
आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥ १ ॥

यजस्व। होतः। इषितः। यजीयान्। अग्ने। बाधः। मरुताम्। न। प्रऽयुक्ति।
आ। नः। मित्रावरुणा। नासत्या। द्यावा। होत्राय। पृथिवी इति। ववृत्याः ॥ १ ॥

वेङ्कट० यजस्व होतः! प्रेषितः यष्टृतरः तत्र त्वम् अग्ने!। यथा मरुताम् शर्धः प्रयुज्यमानं "प्रादुर्भवत् देवान् आवर्तयति", तद्वद् आ वर्तय अस्माकं मित्रावरुणौ अश्विनौ द्यावापृथिव्यौ च[2]। तथा[3] तान् यजस्वेति ॥ [illegible] ॥

त्वं होता मन्द्रतमो नो अध्रुगन्तर्देवो विदथा मर्त्येषु ।
पावकया जुह्वा३ वह्निरासाग्ने यजस्व तन्वं१ तव स्वाम् ॥ २ ॥

त्वम्। होता। मन्द्रऽतमः। नः। अध्रुक्। अन्तः। देवः। विदथा। मर्त्येषु।
पावकया। जुह्वा। वह्निः। आसा। अग्ने। यजस्व। तन्वम्। तव। स्वाम् ॥ २ ॥

वेङ्कट० त्वम् होता मादयितृतमः अस्माकम् अद्रोग्धा मनुष्येषु अन्तः यज्ञे देवः वर्तसे[4]। [illegible] शोधयित्र्या ज्वालया आस्यभूतया वह्निः त्वम् अग्ने! तव स्वभूताम् तनुम् यजस्व ॥ २ ॥

धन्या चिद्धि त्वे धिषणा वष्टि प्र देवाञ्जन्म गृणते यजध्यै ।
वेपिष्ठो अङ्गिरसां यद्ध विप्रो मधुच्छन्दो भनति रेभ इष्टौ ॥ ३ ॥

धन्या। चित्। हि। त्वे इति। धिषणा। वष्टि। प्र। देवान्। जन्म। गृणते। यजध्यै।
वेपिष्ठः। अङ्गिरसाम्। यत्। ह। विप्रः। मधु। छन्दः। भनति। रेभः। इष्टौ ॥ ३ ॥

वेङ्कट० धननिमित्ता स्तुतिः त्वां कामयते। तथा सति प्र गच्छ देवान् जन्मनि जातस्य स्तुवते यष्टुम् यष्टुम्। अङ्गिरसाम् अत्यन्तं कम्पयिता यस्मात् खलु विप्रः भरद्वाजः मधुसदृशम् छन्दः उच्चारयति स्तोता यज्ञे ॥ ३ ॥

अदिद्युतत्स्वपाको विभावाग्ने यजस्व रोदसी उरूची ।
आयुं न यं नमसा रातहव्या अञ्जन्ति सुप्रयसं पञ्च जनाः ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. "न्म् यथा देवाना न" मूको. ३. नास्ति मूको. ४. यथा मूको, ५. पर्ने वि[5] सर्व.

अद्युतत् । सु । अपाकः । विऽभावा । अग्ने । यजस्व । रोदसी इति । उरूची इति ।
आयुम् । न । यम् । नमसा । रातऽहव्याः । अञ्जन्ति । सुऽप्रयसम् । पञ्च । जनाः ॥ ४ ॥

वेङ्कट० द्योतते सुष्ठु अपक्तव्यप्रज्ञः[१] दीप्तिमान् प्रत्यक्षोऽग्निः । अथ त्वम् अग्ने! यजस्व द्यावापृथिव्यौ विस्तीर्णे । मनुष्यमिव अन्नेन यम् त्वां दत्तहविष्काः आज्येन अञ्जन्ति शोभनान्नम् पञ्च जनाः, स [२]त्वं यजस्वेति[२] ॥ ४ ॥

वृञ्जे ह यन्नमसा बर्हिरग्नावयामि स्रुग्घृतवती सुवृक्तिः ।
अम्यक्षि सद्म सदने पृथिव्या अश्रायि यज्ञः सूर्ये न चक्षुः ॥ ५ ॥

वृञ्जे । ह । यत् । नमसा । बर्हिः । अग्नौ । अयामि । स्रुक् । घृतऽवती । सुऽवृक्तिः ।
अम्यक्षि । सद्म । सदने । पृथिव्याः । अश्रायि । यज्ञः । सूर्ये । न । चक्षुः ॥ ५ ॥

वेङ्कट० वृणज्मि अन्नेन सह यदा बर्हिः अग्निसमीपे, तदा दृढाभ्यां यता[३] भवति स्रुक् घृतवती सुप्रवृत्ता । गम्यते स्वकं स्थानं देवैर्वेद्याम् । अथ तत्र यज्ञः च श्रितोऽभितो भवति सूर्ये[४] इव तेजः ॥ ५ ॥

दशस्या नः पुर्वणीक होतर्देवेभिरग्ने अग्निभिरिधानः ।
रायः सूनो सहसो वावसाना अति स्रसेम वृजनं नांहः ॥ ६ ॥

दशस्य । नः । पुरुऽअनीक । होतः । देवेभिः । अग्ने । अग्निऽभिः । इधानः ।
रायः । सूनो इति । सहसः । ववसानाः । अति । स्रसेम । वृजनम् । न । अंहः ॥ ६ ॥

वेङ्कट० देहि अस्मभ्यम् हे पुर्वणीक! होतः! अग्ने! दीप्यमानैरन्यैः अग्निभिः तवानुचरैः सह दीप्यमानो धनानि । हे सहसः सूनो! स्पृहं वर्तमानाः अति तरेम उपद्रवं च आहम् ॥ ६ ॥

[५]इति चतुर्थाष्टके पञ्चमाध्याये त्रयोदशो वर्गः[५] ॥

[ १२ ]

[६]भरद्वाजो बार्हस्पत्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः, षष्ठी गुरुस्वाज्ज्योतिर्वा[६] ।

मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी यजध्यै ।
अयं स सूनुः सहस ऋतावा दूरात् सूर्यो न शोचिषा ततान ॥ १ ॥

मध्ये । होता । दुरोणे । बर्हिषः । राट् । अग्निः । तोदस्य । रोदसी इति । यजध्यै ।
अयम् । सः । सूनुः । सहसः । ऋतऽवा । दूरात् । सूर्यः । न । शोचिषा । ततान ॥ १ ॥

वेङ्कट० मध्ये होता गृहे यज्ञस्य राजा अग्निः हविषः प्रेरयितुः यजमानस्य दीप्यमाने द्यावापृथिवी

१. यजस्व° वि' मूको. २-२. त्वं यजस्व इ मूको; त्वं यजस्व इ अस्त्वानाः. ३. यदा मूको. ४. आर्ये वि' मूको. ५-५ नास्ति मूको.

तेजसा तनोति। तदेवाह—अयम् सः[१] सहसः सूनुः यज्ञवान् दूरे स्थितोऽपि ततः सूर्यः इव तेजसा तनोति ॥ १ ॥

आ यस्मिन् त्वे स्वपाके यजत्र यक्षद् राजन्त्सर्वतातेव नु द्यौः ।
त्रिषधस्थस्ततरुषो न जंहो हव्या मघानि मानुषा यजध्यै ॥ २ ॥

आ । यस्मिन् । त्वे इति । सु । अपाके । यजत्र । यक्षत् । राजन् । सर्वतातोऽइव । नु । द्यौः ।
त्रिऽसधस्थः । ततरुषः । न । जंहः । हव्या । मघानि । मानुषा । यजध्यै ॥ २ ॥

वेङ्कट० आभिमुख्येन इज्यते यस्मिन् त्वयि सुष्ठु अपकृष्यमाणे[२] यजत्र। दीप्यमान। यज्ञे इव द्युलोकः[३]। त्रिस्थानः स त्वम्, द्युलोके तरत आदित्यस्येव वेगः, हवींषि महनीयानि मनुष्य-सम्बन्धीनि यष्टुं वेगयुक्तो भवति ॥ २ ॥

तेजिष्ठा यस्यारतिर्वनेराट् तोदो अध्वन् न वृधसानो अद्यौत् ।
अद्रोघो न द्रविता चेतति त्मन्नमर्त्योऽवर्त्र ओषधीषु ॥ ३ ॥

तेजिष्ठा । यस्य । अरतिः । वनेऽराट् । तोदः । अध्वन् । न । वृधसानः । अद्यौत् ।
अद्रोघः । न । द्रविता । चेतति । त्मन् । अमर्त्यः । अवर्त्रः । ओषधीषु ॥ ३ ॥

वेङ्कट० अतिशयेन तेजस्विनी यस्य ज्वाला वने राजते। तुद्यमानोऽश्व इव अध्वनि शीघ्रं गच्छन् वर्धमानः अग्निः[४] द्योतते। द्रोहरहित इव वायुः गच्छन् आत्मनैव अश्वं जानाति अमर्त्यः ओषधीषु शुष्कासु अवारणीयः[५] ॥ ३ ॥

सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः ।
द्र्वन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥ ४ ॥

सः । अस्माकेभिः । एतरि । न । शूषैः । अग्निः । स्तवे । दमे । आ । जातऽवेदाः ।
द्रुऽअन्नः । वन्वन् । क्रत्वा । न । अर्वा । उस्रः । पिताऽइव । जारयायि । यज्ञैः ॥ ४ ॥

वेङ्कट० सः अग्निः अस्मदीयैर्वचनैः सुखकरैः स्तूयते यज्ञगृहे जातवेदाः, यथा एतरनामधेये ऋषौ। दार्वन्नः भजमानः प्रज्ञयेवाश्वः सङ्ग्रामे बलीवर्दः इव पालयिता गोयूथस्य 'जारयायि कर्मभिः'[६] बलीवर्द-माधिष्ठितं गोवधूः[७] गच्छन्। यज्ञानुद्दिश्य शीघ्रं गच्छतीत्यर्थः। ह्रस्वश्छान्दसः ॥ ४ ॥

अध स्मास्य पनयन्ति भासो वृथा यत् तक्षदनुयाति पृथ्वीम् ।
सद्यो यः स्पन्द्रो विषितो धवीयानृणो न तायुरति धन्वा राट् ॥ ५ ॥

१. नास्ति मूको. २. अपकृष्य° वि°; अपकर्ष° ऋषं. ३. द्युलोकः वि°; द्युलोके ऋषं; द्युलोके च प्रकरणम्. ४. नास्ति ऋ°. ५. अवारणीयः ऋ. ६-६. कर्मणा-येन मूको. ७. वेद १,१५०१ ऋ. द्र.

अर्ध । स्म । अस्य । पनयन्ति । भासः । वृथा । यत् । तक्षत् । अनुऽयाति । पृथ्वीम् ।
सद्यः । यः । स्पन्द्रः । विऽसितः । धवीयान् । ऋणः । न । तायुः । अति । धन्व । राट् ॥५॥

वेङ्कट० अथ खलु एनं स्तुवन्ति दीप्यमानम्[१] अनायासेन यदा छिन्दन् अनुयाति भूमिम्[२] । सद्यः एव यः स्पन्दनशीलो[३] विसृष्टोऽत्यन्तं गन्ता मनुष्यसकाशाद् गच्छन्निव स्तेनः धन्व अतिक्रम्यारण्यं प्राप्य राजते ॥ ५ ॥

स त्वं नो अर्वन् निदाया विश्वेभिरग्ने अग्निभिरिधानः ।
वेषि रायो वि यासि दुच्छुना मदेम शतहिमाः सुवीराः ॥ ६ ॥

सः । त्वम् । नः । अर्वन् । निदायाः । विश्वेभिः । अग्ने । अग्निऽभिः । इधानः ।
वेषि । रायः । वि । यासि । दुच्छुनाः । मदेम । शतऽहिमाः । सुऽवीराः ॥ ६ ॥

वेङ्कट० सः त्वम् अस्मान् गन्तः! निन्दित्र्याः प्रजायाः परिरक्ष विश्वेभिः अग्ने! अग्निभिः शाखाभूतैर्दीप्यमानः । काममस्य च धनानि, वि जहि च शत्रून्, मदेम शतहिमाः सुवीराः ॥ ६ ॥

[४]इति चतुर्थाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[४] ॥

[ १३ ]

[५]भरद्वाजो बार्हस्पत्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[५] ।

त्वद् विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः ।
श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् ॥ १ ॥

त्वत् । विश्वा । सुऽभग । सौभगानि । अग्ने । वि । यन्ति । वनिनः । न । वयाः ।
श्रुष्टी । रयिः । वाजः । वृत्रऽतूर्ये । दिवः । वृष्टिः । ईड्यः । रीतिः । अपाम् ॥ १ ॥

वेङ्कट० त्वत्तः विश्वानि[६] सुभग! अग्ने![६] सौभाग्यानि[७] विविधं गच्छन्ति 'वृक्षाद् इव शाखाः'[८] । क्षिप्रं धनं शत्रौ च अस्मासु स्वतो भवति । अपां[९] त्वत्सकाशादेव दिवः वृष्टिः निपतति । स्तुत्यः त्वं भवसि अपाम् प्रेरयिता ॥ १ ॥

त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः ।
अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेः ॥ २ ॥

त्वम् । भगः । नः । आ । हि । रत्नम् । इषे । परिज्माऽइव । क्षयसि । दस्मऽवर्चाः ।
अग्ने । मित्रः । न । बृहतः । ऋतस्य । असि । क्षत्ता । वामस्य । देव । भूरेः ॥ २ ॥

---

१. दिव्यग् एपं. २. भूमिम् मूको. ३. स्पन्दन° ह. ४-४. नास्ति मूको. ५. विधा धि' एपं. ६. नास्ति मूको. ७. °गेन मूको. ८-८. वृक्षादिशाखाः मूको. ९. यथा [illegible] एपं.

वेङ्कट० त्वम् भजनीयः अस्माकम् । [1]त्वत्तः हि रत्नम् आभिमुख्येन इष्यते[1] । वायुरिव त्वं सर्वत्र निवससि दर्शनीयतेजाः । अग्ने ! सखेव वृद्धितस्य[2] सत्यभूतस्य भवसि दाता धनस्य देव ! वहोः ॥ २ ॥

स सत्पतिः शवसा हन्ति वृत्रमग्ने विप्रो वि पणेर्भर्ति वाजम् ।
यं त्वं प्रचेत ऋतजात राया सजोषा नप्त्रापां हिनोषि ॥ ३ ॥

सः । सत्ऽपतिः । शवसा । हन्ति । वृत्रम् । अग्ने । विप्रः । वि । पणेः । भर्ति । वाजम् ।
यम् । त्वम् । प्रऽचेतः । ऋतऽजात । राया । सऽजोषाः । नप्त्रा । अपाम् । हिनोषि ॥ ३ ॥

वेङ्कट० सः सत्पतिः बलेन हन्ति शत्रुम् । अग्ने ! मेधावी विविधं हरति पणेः अन्नम् । पणिः पणनात् अपणनमानः । यम् त्वम् हे प्रकृष्टज्ञान ! यज्ञार्थं जात ! अपाम् नप्त्रा देवेन सहितः सद्मानं प्रेरयसि धनार्थम् ॥ ३ ॥

यस्ते सूनो सहसो गीर्भिरुक्थैर्यज्ञैर्मर्तो निशितिं वेद्यानट् ।
विश्वं स देव प्रति वारमग्ने धत्ते धान्यं पत्यते वसव्यैः ॥ ४ ॥

यः । ते । सूनो इति । सहसः । गीःऽभिः । उक्थैः । यज्ञैः । मर्तः । निऽशितिम् । वेद्या । आनट् ।
विश्वम् । सः । देव । प्रति । वा । अरम् । अग्ने । धत्ते । धान्यम् । पत्यते । वसव्यैः ॥ ४ ॥

वेङ्कट० यः मर्तः[3] तुभ्यम् हे सहसः सूनो ! स्तोत्रशस्त्रैः सर्वं वेद्यां सस्कृतं हविः सोमैः सह प्रापयति, सर्वविधम् सः देव ! अग्ने ![4] पर्याप्तम् धान्यम् आत्मानं प्रति च धत्ते । तथा वसुसमूहैः सह च गच्छति ॥ ४ ॥

ता नृभ्य आ सौश्रवसा सुवीराग्ने सूनो सहसः पुष्यसे धाः ।
कृणोषि यच्छवसा भूरि पश्वो वयो वृकायारये जसुरये ॥ ५ ॥

ता । नृऽभ्यः । आ । सौश्रवसा । सुऽवीरा । अग्ने । सूनो इति । सहसः । पुष्यसे । धाः ।
कृणोषि । यत् । शवसा । भूरि । पश्वः । वयः । वृकाय । अरये । जसुरये ॥ ५ ॥

वेङ्कट० "आ निहितानि" तानि नृभ्यः यशांसि सुपुत्राणि अग्ने ! सहसः सूनो ! पुष्टयर्थम् । करोषि यत्त्वम् बलेन बहु पशोः अभिगन्ता स्तेनाय अभिगन्त्रे उपक्षपयित्रे[5] अन्नाय[6] ॥ ५ ॥

वद्मा सूनो सहसो नो विहाया अग्ने तोकं तनयं वाजि नो दाः ।
विश्वाभिर्गीर्भिरभि पूर्तिमश्यां मदेम शतहिमाः सुवीराः ॥ ६ ॥

वद्मा । सूनो इति । सहसः । नः । विऽहायाः । अग्ने । तोकम् । तनयम् । वाजि । नः । दाः ।
विश्वाभिः । गीःऽभिः । अभि । पूर्तिम् । अश्याम् । मदेम । शतऽहिमाः । सुऽवीराः ॥ ६ ॥

---

१-१. त्वत्तोऽभिमुख्यानिष्यन्ते वि° रुपं. २. प्रवृद्धितस्य वि° रुपं. ३. नास्ति मूको. ३-४. मत्यर्थि° मूको.
५. °यित्रे ल. ६. अन्नाय मूको.

वेङ्कट० वदिता हे सहसः सूनो! महान् अस्माकम् अग्ने! पुत्रं सत्पुत्रं च अवधद् अस्माकं धारय । सर्वाभिः स्तुतिभिः पूर्तिम् पूरणम् अभिप्राप्नुयाम् ॥ ६ ॥

इति चतुर्थाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[२] ॥

## [ १४ ]

[१]भरद्वाज ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः, षष्ठी शक्वरी[१] ॥

अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः । भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥१॥

अग्ना । यः । मर्त्यः । दुवः । धियम् । जुजोष । धीतिऽभिः ।
भसत् । नु । सः । प्र । पूर्व्यः । इषम् । वुरीत । अवसे ॥ १ ॥

वेङ्कट० अग्नौ यः मनुष्यः परिचर्यां कर्म च सेवते मन्त्रामिः, प्र दीप्यते शीघ्रम् सः मुख्यः अन्नं च वृणीते रक्षणाय पुत्रादीनाम् ॥ १ ॥

अग्निरिद्धि प्रचेता अग्निर्वेधस्तम ऋषिः । अग्निं होतारमीळते यज्ञेषु मनुषो विशः ॥२॥

अग्निः । इत् । हि । प्रऽचेताः । अग्निः । वेधःऽतमः । ऋषिः ।
अग्निम् । होतारम् । ईळते । यज्ञेषु । मनुषः । विशः ॥ २ ॥

वेङ्कट० मनुषः विशः ऋत्विजः । स्पष्टं शिष्टम् ॥ २ ॥

नाना ह्यग्नेऽवसे स्पर्धन्ते रायो अर्यः । तूर्वन्तो दस्युमायवो व्रतैः सीक्षन्तो अव्रतम् ॥३॥

नाना । हि । अग्ने । अवसे । स्पर्धन्ते । रायः । अर्यः ।
तूर्वन्तः । दस्युम् । आयवः । व्रतैः । सीक्षन्तः । अव्रतम् ॥ ३ ॥

वेङ्कट० नाना हि अग्ने! रक्षणाय स्पर्धन्ते त्वया दत्ताः रायः अभिगन्तारः स्तोतृषु । तथा त्वया हिंसन्तः शत्रुं मनुष्याः कर्मभिः सहमाना भवन्ति अयजमानम् ॥ ३ ॥

अग्निरप्सामृतीषहं वीरं ददाति सत्पतिम् ।
यस्य त्रसन्ति शवसः संचक्षि शत्रवो भिया ॥ ४ ॥

अग्निः । अप्ऽसाम् । ऋतिऽसहम् । वीरम् । ददाति । सत्ऽपतिम् ।
यस्य । त्रसन्ति । शवसः । सम्ऽचक्षि । शत्रवः । भिया ॥ ४ ॥

वेङ्कट० अग्निः कर्मणः सम्भक्तारं हिंसायाः सोढारं पुत्रम् ददाति सतां पतिम् । यस्य पुत्रस्य बलात् त्रस्यन्ति सन्दर्शने शत्रवः भयेन ॥ ४ ॥

---

१-१. नास्ति मूको. २. वर्ग° वि°.

अग्निर्हि विद्मना निदो देवो मर्तमुरुष्यति ।
सहावा यस्यावृतो रयिर्वाजेष्ववृतः ॥ ५ ॥

अग्निः । हि । विद्मना । निदः । देवः । मर्तम् । उरुष्यति ।
सहऽवा । यस्य । अवृतः । रयिः । वाजेषु । अवृतः ॥ ५ ॥

वेङ्कट० अग्निः हि प्रज्ञानेन निन्दितुः स्तोतारं मनुष्यम् देवः रक्षति । शत्रूणां सोढा यस्य रयिः सङ्ग्रामेषु अनावृतो भवति, शत्रुभ्यो दीयते ॥ ५ ॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन् द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥ ६ ॥

अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिम् । रोदस्योः ।
वीहि । स्वस्तिम् । सुऽक्षितिम् । दिवः । नॄन् । द्विषः । अंहांसि । दुःऽइता । तरेम । ता ।
तरेम । तव । अवसा । तरेम ॥ ६ ॥

वेङ्कट० ऋ ६,२,११ द्र. ॥ ६ ॥

'इति चतुर्थाष्टके पञ्चमाध्याये षोडशो वर्गः' ॥

[ १५ ]

'भरद्वाजो बार्हस्पत्यो वीतहव्य आङ्गिरसो वा ऋषिः । अग्निर्देवता । तृतीयापञ्चदश्यौ शक्वर्यौ, षष्ठी अतिशक्वरी, सप्तदश्यनुष्टुप्, अष्टादशी बृहती, दशम्याद्याः पञ्च षोडश्येकोनविंशी चेति सप्त त्रिष्टुभः, शिष्टा जगत्यः' ।

इममू षु वो अतिथिमुषर्बुधं विश्वासां विशां पतिमृञ्जसे गिरा ।
वेतीद्दिवो जनुषा कच्चिदा शुचिर्ज्योक्चिदत्ति गर्भो यदच्युतम् ॥ १ ॥

इमम् । ऊँ इति । सु । वः । अतिथिम् । उषःऽबुधम् । विश्वासाम् । विशाम् । पतिम् । ऋञ्जसे । गिरा ।
वेति । इत् । दिवः । जनुषा । कत् । चित् । आ । शुचिः । ज्योक् । चित् । अत्ति । गर्भः । यत् । अच्युतम् ॥

वेङ्कट० वीतहव्यस्य भरद्वाजस्य[1] वेदं सूक्तम् । इमम् एव युष्माकम् अतिथिम् उषसि बुध्यमानम् विश्वासाम् विशाम् पतिम् हे ऋषे! सुष्ठु[1] स्तुत्या अलङ्कुर्वित्यात्मन एवानुशासनम् । सोऽयम् शुचिः अग्निररण्योर्जन्मना दिवः[3] यदि आ गच्छति, यदि दिवः आगत्याऽरण्योः प्रादुर्भवति, तदा[2] चिरं गृहे स्थितया गुरुभूतः अच्युतम् अग्निहोत्रं सायं प्रातश्च हवनात् यत्[4] भवति तद् भक्षयति ॥ १ ॥

मित्रं न यं सुधितं भृगवो दधुर्वनस्पतावीड्यमूर्ध्वशोचिषम् ।
स त्वं सुप्रीतो वीतहव्ये अद्भुत प्रशस्तिभिर्महयसे दिवेदिवे ॥ २ ॥

---

१-१. नास्ति मूको.　२. नास्ति चि° लपं　३. नास्ति मूको.　४. यत् अच्युतम् मूको.

मित्रम् । न । यम् । सुऽधितम् । भृगवः । दधुः । वनस्पतौ । ईड्यम् । ऊर्ध्वऽशोचिषम् ।
सः । त्वम् । सुऽप्रीतः । वीतऽहव्ये । अद्भुत । प्रशस्तिऽभिः । महयसे । दिवेऽदिवे ॥ २ ॥

वेङ्कट० सुहृदमिव यम् सुनिहितम् भृगवः नि दधुः वानस्पत्येषु सम्भारेषु स्तुत्यम् ऊर्ध्वतेजसम्, सः त्वम् सुप्रीतः वीतहव्ये ऋषौ हे आश्चर्यभूत[1] स्तुतिभिः पूज्यसे अन्वहम् ॥ २ ॥

स त्वं दक्षस्यावृको वृधो भूरर्यः परस्यान्तरस्य तरुषः ।
रायः सूनो सहसो मर्त्येष्वा छर्दिर्यच्छ वीतहव्याय सप्रथो भरद्वाजाय सप्रथः ॥ ३ ॥

सः । त्वम् । दक्षस्य । अवृकः । वृधः । भूः । अर्यः । परस्य । अन्तरस्य । तरुषः ।
रायः । सूनो इति । सहसः । मर्त्येषु । आ । छर्दिः । यच्छ । वीतऽहव्याय । सऽप्रथः । भरत्ऽवाजाय । सऽप्रथः ॥

वेङ्कट० सः त्वम् दक्षस्य प्रवृद्धस्य मम स्तेनरहितो वर्धयिता भव । अरेः परस्य हिंसकस्य[2] तरिता च भव । धनानि च हे सहसः सूनो ! मदीयेषु मर्त्येषु आ धेहि, गृहम् प्रयच्छ सर्वतः पृथुतमम् दत्तहविष्काय भरद्वाजाय, भरद्वाजकुलजाताय वा वीतहव्याय ॥ ३ ॥

द्युतानं वो अतिथिं स्वर्णरमग्निं होतारं मनुषः स्वध्वरम् ।
विप्रं न द्युक्षवचसं सुवृक्तिभिर्हव्यवाहमरतिं देवमृञ्जसे ॥ ४ ॥

द्युतानम् । वः । अतिथिम् । स्वःऽनरम् । अग्निम् । होतारम् । मनुषः । सुऽअध्वरम् ।
विप्रम् । न । द्युक्षऽवचसम् । सुवृक्तिऽभिः । हव्यऽवाहम् । अरतिम् । देवम् । ऋञ्जसे ॥ ४ ॥

वेङ्कट० हे स्तोतः[1] दीप्यमानम् युष्माकम् अतिथिम् सर्वमनुष्यम् दीप्तम् होतारम् मनुष्यस्य शोभनयज्ञम् मेधाविनमिव दीप्तवचसम् स्तुतिभिः हव्यवाहम् अभिगन्तारम् देवम्[3] अलङ्कुरु ॥ ४ ॥

पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना ।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥ ५ ॥

पावकया । यः । चितयन्त्या । कृपा । क्षामन् । रुरुचे । उषसः । न । भानुना ।
तूर्वन् । न । यामन् । एतशस्य । नु । रणे । आ । यः । घृणे । न । ततृषाणः । अजरः ॥ ५ ॥

वेङ्कट० शोधयित्र्या यः प्रज्ञापयन्त्या ज्वालया शुष्कारण्ये रोचते, यथा उषसः भानुना रोचन्ते[3], परिचरन् इव गमने । यथा हिंसको हिंस्यं प्रति शीघ्रं गच्छति तथा गच्छन् एतशस्य रूपे सूर्येण सह युद्धे यः क्षिप्रम् आ जगाम निरुदक इव देशे तृष्यन्नश्वो यथा सतः शीघ्रमागच्छति तद्वत्, जरावर्जितः[4] । उत्तरत्र सम्बन्धः ॥ ५ ॥

[5]इति चतुर्थाष्टके पञ्चमाध्याये सप्तदशो वर्गः[5] ॥

---

१ द्र. सम्पू. ऋ (१०,१३८,५) भाष्यम् २ नास्ति मूको ३ रोचते वि[1] रुपं, रोचते ल
४ °वर्जित एव वि[1] रुपं ५-५ नास्ति मूको

अ॒ग्निम॑ग्निं वः स॒मिधा॑ दुवस्यत प्रि॒यंप्रि॑यं वो॒ अति॑थिं गृणी॒षणि॑ ।
उप॑ वो गी॒र्भिर॒मृतं॑ विवासत दे॒वो दे॒वेषु॒ वन॑ते॒ हि वार्यं॑ दे॒वो दे॒वेषु॒ वन॑ते॒ हि नो॒ दुवः॑ ॥६॥

अ॒ग्निम्ऽअ॑ग्निम् । वः॒ । स॒म्ऽइधा॑ । दु॒व॒स्य॒त॒ । प्रि॒यम्ऽप्रि॑यम् । वः॒ । अति॑थिम् । गृ॒णी॒षणि॑ ।
उप॑ । वः॒ । गीः॒ऽभिः । अ॒मृत॑म् । वि॒वा॒स॒त॒ । दे॒वः । दे॒वेषु॑ । वन॑ते । हि । वार्य॑म् । दे॒वः । दे॒वेषु॑ । वन॑ते । हि । नः॒ । दुवः॑ ॥ ६ ॥

वेङ्कट० तम् अग्निमेव यूयम् समिधा परिचरत प्रियम् अतिथिम् स्तुत्या सम्भजने[1] । गृणी स्तुतिः, तस्यामतिथिरयमागच्छति[2] । यूयम् उप परिचरत स्तुतिभिः अमृतम् । देवः देवेषु वनते हि धनम् परिचर्यां च अस्माकम् ॥ ६ ॥

समि॑द्धम॒ग्निं स॒मिधा॑ गि॒रा गृ॑णे॒ शुचिं॑ पाव॒कं पु॒रो अ॑ध्व॒रे ध्रु॒वम् ।
विप्रं॒ होता॑रं पुरु॒वार॑म॒द्रुहं॑ क॒विं सु॒म्नैरी॑महे जा॒तवे॑दसम् ॥ ७ ॥

सम्ऽइ॑द्धम् । अ॒ग्निम् । स॒म्ऽइधा॑ । गि॒रा । गृ॒णे॒ । शुचि॑म् । पा॒व॒कम् । पु॒रः । अ॒ध्व॒रे । ध्रु॒वम् ।
विप्र॑म् । होता॑रम् । पु॒रु॒ऽवार॑म् । अ॒द्रुह॑म् । क॒विम् । सु॒म्नैः । ई॒म॒हे॒ । जा॒तऽवे॑दसम् ॥ ७ ॥

वेङ्कट० समिद्धम् अग्निम् समिधया स्तुत्या स्तौमि शुचिम् पावकम् पुरः यज्ञे निश्चलम् आहवनीयम् । विप्रम् होतारम् बहूनां वरणीयम् अद्रोग्धारम् कविम् सुखैः स्तोत्रैः अभिलषितं याचामहे जातवेदसम् ॥ ७ ॥

त्वां दू॒तम॑ग्ने अ॒मृतं॑ यु॒गेयु॑गे हव्य॒वाहं॑ दधिरे पा॒युमीड्य॑म् ।
दे॒वास॑श्च॒ मर्ता॑सश्च॒ जागृ॑विं वि॒भुं वि॒श्पतिं॒ नम॑सा॒ नि षे॑दिरे ॥ ८ ॥

त्वाम् । दू॒तम् । अ॒ग्ने॒ । अ॒मृत॑म् । यु॒गेऽयु॑गे । ह॒व्य॒ऽवाह॑म् । द॒धि॒रे॒ । पा॒युम् । ईड्य॑म् ।
दे॒वासः॑ । च॒ । मर्ता॑सः । च॒ । जागृ॑विम् । वि॒ऽभुम् । वि॒श्पति॑म् । नम॑सा । नि । से॒दि॒रे॒ ॥८॥

वेङ्कट० त्वाम् दूतम् अग्ने! अमृतम् अहन्यहनि हव्यवाहम् धारयन्ति पालकम् स्तुत्यम् । देवाः च मनुष्याः च जागरणशीलम्[3] विभुम् विश्पतिम् अन्नेन नि सीदन्ति ॥ ८ ॥

वि॒भूष॑न्नग्न उ॒भयाँ॒ अनु॑ व्र॒ता दू॒तो दे॒वानां॒ रज॑सी॒ समी॑यसे ।
यत् ते॑ धी॒तिं सु॑म॒तिमा॑वृणी॒महेऽध॑ स्मा नस्त्रि॒वरू॑थः शि॒वो भ॑व ॥ ९ ॥

वि॒ऽभूष॑न् । अ॒ग्ने॒ । उ॒भया॑न् । अनु॑ । व्र॒ता । दू॒तः । दे॒वाना॑म् । रज॑सी॒ इति॑ । सम् । ई॒य॒से॒ ।
यत् । ते॒ । धी॒तिम् । सु॒ऽम॒तिम् । आ॒ऽवृ॒णी॒महे॑ । अध॑ । स्म॒ । नः॒ । त्रि॒ऽवरू॑थः । शि॒वः । भ॒व॒ ॥९॥

वेङ्कट० मर्तेषु देवमनुष्यान् विविधं भावयितुमिच्छन् अग्ने! देवानाम् दूतः त्वं द्यावापृथिव्यौ सम् गच्छसे । दिवः पृथिव्यामागच्छसि,[4] पृथिव्या दिवम् । यदा ते कर्म सुमतिं च आभिमुख्येन वृणीमहे, अथ खलु अस्माकं त्र्यायतनः त्वम् शिवः भव ॥ ९ ॥

---

1. जने मूको. 2. °ती° मूको. 3. °रणी° वि॰ एर्ष. 4. °ति क.

तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम ।
स यक्षद् विश्वा वयुनानि विद्वान् प्र हव्यमग्निरमृतेषु वोचत् ॥ १० ॥

तम् । सुऽप्रतीकम् । सुऽदृशम् । सुऽअञ्चम् । अविद्वांसः । विदुःऽतरम् । सपेम ।
सः । यक्षत् । विश्वा । वयुनानि । विद्वान् । प्र । हव्यम् । अग्निः । अमृतेषु । वोचत् ॥ १० ॥

वेङ्कट० तम् शोभनावयवं सुदर्शनं सुगमनम् अविद्वांसः अतिशयेन विद्वांसं स्तुत्या स्पृशेम । सः यजतु विश्वानि भूतानि विद्वान्, प्र ब्रवीतु च अग्निः हव्यम् देवेषु ॥ १० ॥

[1]इति चतुर्थाष्टके पञ्चमाध्याये अष्टादशो वर्गः[1] ॥

तमग्ने पास्युत तं पिपर्षि यस्त आनट् कवये शूर धीतिम् ।
यज्ञस्य वा निशितिं वोदितिं वा तमित् पृणक्षि शवसोत राया ॥ ११ ॥

तम् । अग्ने । पासि । उत । तम् । पिपर्षि । यः । ते । आनट् । कवये । शूर । धीतिम् ।
यज्ञस्य । वा । निऽशितिम् । वा । उत्ऽइतिम् । वा । तम् । इत् । पृणक्षि । शवसा । उत । राया ॥ ११ ॥

वेङ्कट० तम् अग्ने! रक्षसि, अपि च तम् पारयसि, यः तुभ्यम् प्रापयति कवये हे शूर! कर्म यज्ञस्य वा संस्कारं[2] हविः वा स्तुतिम् वा । तम् एव पूरय बलेन अपि च धनेन ॥ ११ ॥

त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात् ।
सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥ १२ ॥

त्वम् । अग्ने । वनुष्यतः । नि । पाहि । त्वम् । ऊँ इति । नः । सहसाऽवन् । अवद्यात् ।
सम् । त्वा । ध्वस्मन्ऽवत् । अभि । एतु । पाथः । सम् । रयिः । स्पृहयाय्यः । सहस्री ॥ १२ ॥

वेङ्कट० त्वम् अग्ने! हन्तुः अस्मान् नि पाहि, त्वम् एव अस्मान् बलवन्! गर्हात् । सम् अभि एतु त्वा ध्वंसनक्रियायुक्तमन्नं धनं च स्पृहणीयं सहस्रसङ्ख्याकम् । मदीये गृहे वर्तमानं त्वाम् अन्नम् अभ्येतु धनं चेति ॥ १२ ॥

अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।
देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥ १३ ॥

अग्निः । होता । गृहऽपतिः । सः । राजा । विश्वा । वेद । जनिम । जातऽवेदाः ।
देवानाम् । उत । यः । मर्त्यानाम् । यजिष्ठः । सः । प्र । यजताम् । ऋतऽवा ॥ १३ ॥

वेङ्कट० अग्निः होता गृहपतिः सः राजा विश्वानि जातानि भूतानि वेद[3] जातप्रज्ञः । देवानाम् अपि च यः मर्त्यानाम् यजिष्ठः यष्टृतरः[4], सः प्रकर्षेण यागं करोतु सत्यवान् ॥ १३ ॥

---

१-१. नास्ति मूको. २-२. तु. ऋ (६,१३,४) भाष्यम्; संस्कारम् द. ३. नास्ति मूको. ४. यः यष्टृ° मूको.

अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।
ऋता यजासि महिना वि यद् भूर्हव्या वह यविष्ठ या ते अद्य ॥ १४ ॥

अग्ने । यत् । अद्य । विशः । अध्वरस्य । होतरिति । पावकऽशोचे । वेः । त्वम् । हि । यज्वा ।
ऋता । यजासि । महिना । वि । यत् । भूः । हव्या । वह । यविष्ठ । या । ते । अद्य ॥ १४ ॥

वेङ्कट० अग्ने! यत् अद्य मनुष्यस्य हे यज्ञस्य होतः! हे शोधकदीप्ते! जानासि कर्तव्यम्, ततः त्वम् एव यष्टा नाऽन्यो मनुष्यः। काले यज। महत्त्वेन यत् त्वं विविध भवसि, अतो हव्यानि वह हे यविष्ठ!, यानि ते अद्य आस्ये हूयन्ते ॥ १४ ॥

अभि प्रयांसि सुधितानि हि ख्यो नि त्वा दधीत रोदसी यजध्यै ।
अवा नो मघवन् वाजसातावग्ने विश्वानि दुरिता तरेम ता तरेम तवावसा तरेम ॥१५॥

अभि । प्रयांसि । सुऽधितानि । हि । ख्यः । नि । त्वा । दधीत । रोदसी इति । यजध्यै ।
अव । नः । मघऽवन् । वाजऽसातौ । अग्ने । विश्वानि । दुःऽइता । तरेम । ता । तरेम ।
तव । अवसा । तरेम ॥ १५ ॥

वेङ्कट० अभि पश्य हि अन्नानि सुनिहितानि। त्वां द्यावापृथिव्योः नि दधे प्रजापतिः यज्ञार्थम्। अवेति स्पष्टः ॥ १५ ॥

[1]इति चतुर्थाष्टके पञ्चमाध्याये एकोनविंशो वर्गः[1] ॥

अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिम् ।
कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधु ॥ १६ ॥

अग्ने । विश्वेभिः । सुऽअनीक । देवैः । ऊर्णाऽवन्तम् । प्रथमः । सीद । योनिम् ।
कुलायिनम् । घृतऽवन्तम् । सवित्रे । यज्ञम् । नय । यजमानाय । साधु ॥ १६ ॥

वेङ्कट० अग्ने! विश्वैः देवैः हे शोभनज्वालावीक! ऊर्णास्तुकावन्तम् मुख्यः सीद [2]स्थानम् उत्तरवेदिम्। तैः सम्भारैः पौतुदारवादिभिः[2] कुलायिनम् घृतवन्तम् प्रेरयित्रे यजमानाय यज्ञम् नय कल्याणम् ॥ १६ ॥

इममु त्यमथर्ववदग्निं मन्थन्ति वेधसः ।
यमङ्कूयन्तमानयन्नमूरं श्याव्याभ्यः ॥ १७ ॥

इमम् । ऊँ इति । त्यम् । अथर्वऽवत् । अग्निम् । मन्थन्ति । वेधसः ।
यम् । अङ्कुऽयन्तम् । आ । अनयन । अमूरम् । श्याव्याभ्यः ॥ १७ ॥

१-१. नास्ति मूको. २-२ °वेदिं तैः संभवारः पौतुदवादि वि°; °वेदि कैः समस्कारो वैतु दवादि ब.

वेङ्कट० तम् इमम् यथाऽथर्वा निर्मथ्नन्ति[1] ऋत्विजः, यम् [2]अद्भुतं नाम यज्ञमिच्छन्तम्[2] आ अनयत् अमूढम् श्यावचर्णाभ्य ओषधीभ्यः [3]देवा रात्रिभ्यो[3] वा ॥ १७ ॥

जनि॑ष्वा दे॒ववी॑तये स॒र्वता॑ता स्व॒स्तये॑ ।
आ दे॒वान् व॑क्ष्य॒मृताँ॑ ऋता॒वृधो॑ य॒ज्ञं दे॒वेषु॑ पिस्पृशः ॥ १८ ॥

जनि॑ष्व । दे॒वऽवी॑तये । स॒र्वऽता॑ता । स्व॒स्तये॑ ।
आ । दे॒वान् । व॒क्षि॒ । अ॒मृता॑न् । ऋ॒तऽवृधः॑ । य॒ज्ञम् । दे॒वेषु॑ । पि॒स्पृ॒शः॒ ॥ १८ ॥

वेङ्कट० जायस्व देवानां भक्षणार्थं यज्ञे अविनाशाय[4] च । आ वह देवान् अमृतान् यज्ञस्य वर्धयितॄन् । अथ तेषु यज्ञम् स्पर्शय ॥ १८ ॥

व॒यमु॑ त्वा गृहपते जनाना॒मग्ने॒ अक॑र्म स॒मिधा॑ बृ॒हन्त॑म् ।
अ॒स्थू॒रि नो॒ गार्ह॑पत्यानि सन्तु ति॒ग्मेन॑ न॒स्तेज॑सा॒ सं शि॑शाधि ॥ १९ ॥

व॒यम् । ऊँ॒ इति॑ । त्वा॒ । गृ॒ह॒ऽप॒ते॒ । ज॒ना॒ना॒म् । अग्ने॑ । अक॑र्म । स॒म्ऽइधा॑ । बृ॒हन्त॑म् ।
अ॒स्थू॒रि । नः॒ । गार्ह॑ऽपत्यानि । स॒न्तु॒ । ति॒ग्मेन॑ । नः॒ । तेज॑सा । सम् । शि॒शा॒धि॒ ॥ १९ ॥

वेङ्कट० वयम् त्वा हे जनानाम् गृहपते ! अग्ने ! समिद्भिरिन्धनैः[5] महान्तं कुर्मः । अस्थूरीणि अस्माकम् गार्हपत्यानि भवन्तु । तीक्ष्णेन अस्माकम् तेजसा[6] तीक्ष्णीकुरु । अश्वेनैकेन युक्तो रथः स्थूरिरुच्यते । बहुभिर्युक्तोऽस्थूरिः । बहुभिः प्रजापशुभिर्युक्तानि गृहैश्वर्याण्यस्थूरीण्युच्यन्ते ॥ १९ ॥

[7]इति चतुर्थाष्टके पञ्चमाध्याये विंशो वर्गः[7] ॥

## [ १६ ]

[*]बार्हस्पत्यो भरद्वाज ऋषिः । अग्निर्देवता । गायत्री छन्दः, प्रथमाषट्त्रौ वर्धमाने, सप्तविंशी अन्तिमे च अनुष्टुभः, षट्चत्वारिंशी त्रिष्टुप्[*] ।

त्वम॑ग्ने य॒ज्ञानां॒ होता॒ विश्वे॑षां हि॒तः । दे॒वेभि॒र्मानु॑षे॒ जने॑ ॥ १ ॥

त्वम् । अ॒ग्ने॒ । य॒ज्ञाना॑म् । होता॑ । विश्वे॑षाम् । हि॒तः । दे॒वेभिः॑ । मानु॑षे । जने॑ ॥ १ ॥

वेङ्कट० त्वम् अग्ने ! सर्वेषाम् यज्ञानाम् होता देवैः मानुषे जने निहितः ॥ १ ॥

स नो॑ म॒न्द्राभि॑रध्व॒रे जि॒ह्वाभि॑र्यजा म॒हः । आ दे॒वान् व॑क्षि॒ यक्षि॑ च ॥ २ ॥

सः । नः॒ । म॒न्द्राभिः॑ । अ॒ध्व॒रे । जि॒ह्वाभिः॑ । य॒ज॒ । म॒हः । आ । दे॒वान् । व॒क्षि॒ । यक्षि॑ । च॒ ॥

---

1. निरमन्थत् वि॰ स्पं; निर्मन्थति स. 2-2. अंगननामानमभि॰ क स्पं; भिगननामप्रनभि॰ वि॰. 3-3. देवारत्रिभ्यः ख स्पं; देवा रात्रीभ्यः वि॰. 4. अविनाशं मूको. 5. समिन्धनेन ख. 6. नास्ति स्पं. 7-7. नास्ति मूको.

वेङ्कट० सः अस्माकं मदयित्रीभिः ज्वालाभिः यज्ञे यज महतः देवान्। तदेवाह—आ वह देवान् यज च इति ॥ २ ॥

वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रतो ॥ ३ ॥

वेत्थ । हि । वेधः । अध्वनः । पथः । च । देव । अञ्जसा । अग्ने । यज्ञेषु । सुक्रतो इति सुऽक्रतो ॥

वेङ्कट० जानासि हे मेधाविन्! अध्वनः पथः च। अस्पोऽनयोर्भेदः। देव! अञ्जसा अग्ने! यज्ञेषु स्थितान् हे सुप्रज्ञ! ॥ ३ ॥

त्वामीळे अध द्विता भरतो वाजिभिः शुनम् । ईजे यज्ञेषु यज्ञियम् ॥ ४ ॥

त्वाम् । ईळे । अध । द्विता । भरतः । वाजिऽभिः । शुनम् । ईजे । यज्ञेषु । यज्ञियम् ॥ ४ ॥

वेङ्कट० त्वाम् अस्तौद् द्विधाऽवस्थितं गार्हपत्याहवनीयरूपेण दुष्यन्तपुत्रः ऋत्विग्भिः सुखावहम्। ईजे[1] अथयज्ञेषु[2] यज्ञार्हम् ॥ ४ ॥

त्वमिमा वार्या पुरु दिवोदासाय सुन्वते । भरद्वाजाय दाशुषे ॥ ५ ॥

त्वम् । इमा । वार्या । पुरु । दिवःऽदासाय । सुन्वते । भरत्ऽवाजाय । दाशुषे ॥ ५ ॥

वेङ्कट० त्वम् इमानि धनानि पुरूणि दिवोदासाय यजमानाय भरद्वाजाय प्रयच्छसे देहि। दिवोदासपुरुतो भरद्वाजः। अपि योगाभ्यां प्रयच्छ[3] इति ॥ ५ ॥

"इति चतुर्थाष्टके पञ्चमाध्याये एकविंशो वर्गः" ॥

त्वं दूतो अमर्त्य आ वहा दैव्यं जनम् । शृण्वन्विप्रस्य सुष्टुतिम् ॥ ६ ॥

त्वम् । दूतः । अमर्त्यः । आ । वह । दैव्यम् । जनम् । शृण्वन् । विप्रस्य । सुऽस्तुतिम् ॥ ६ ॥

वेङ्कट० त्वम् देवदूतः अमर्त्यः आ वह दिवि भवम् जनम्[5] शृण्वन् भरद्वाजस्य स्तुतिम् ॥ ६ ॥

त्वामग्ने स्वाध्यो मर्तासो देववीतये । यज्ञेषु देवमीळते ॥ ७ ॥

त्वाम् । अग्ने । सुऽआध्यः । मर्तासः । देवऽवीतये । यज्ञेषु । देवम् । ईळते ॥ ७ ॥

वेङ्कट० त्वाम् अग्ने! सुकर्माणः मनुष्याः देवानां भक्षणाय यज्ञेषु देवम् स्तुवन्ति ॥ ७ ॥

तव प्र यक्षि संदृशमुत क्रतुं सुदानवः । विश्वे जुषन्त कामिनः ॥ ८ ॥

तव । प्र । यक्षि । सम्ऽदृशम् । उत । क्रतुम् । सुऽदानवः । विश्वे । जुषन्त । कामिनः ॥ ८ ॥

---

१. ईजे मूको.　२. यजथ° वि°; यजय° लपं; अय° ल.　३. प्रयच्छ मूको.　४-४. नास्ति मूको.　५. जनन् ह.

वेङ्कट० तव प्रकर्षेण यच्छामि सन्दर्शनम्, अपि च प्रज्ञाम्। शोभनदानाः, दानुर्दानम्, मत्तो व्यतिरिक्ताश्च कामिनः तदुभयं सेवन्ते ॥ ८ ॥

त्वं होता मनुर्हितो वह्निरासा विदुष्टरः । अग्ने यक्षि दिवो विशः ॥ ९ ॥

त्वम् । होता । मनुःऽहितः । वह्निः । आसा । विदुःऽतरः । अग्ने । यक्षि । दिवः । विशः ॥ ९ ॥

वेङ्कट० त्वम् होता मनुना हितः वोढा हविषाम् आस्येन अतिशयेन विद्वान् अग्ने! यक्षि द्युलोकस्य निवेशयितॄन् देवान् ॥ ९ ॥

अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ १० ॥

अग्ने । आ । याहि । वीतये । गृणानः । हव्यऽदातये । नि । होता । सत्सि । बर्हिषि ॥ १० ॥

वेङ्कट० अग्ने! आ गच्छ हे अमुष्मिन् लोके स्थित! लोकानां विधारयितुम्। 'अग्निरमुष्मिन् लोक आसीत् आदित्योऽस्मिन्' ( तै २,५,८,१ ) इत्याद्यध्वर्युब्राह्मणम्। 'गृणानो हव्यदातय इति यजमानो यजमानायैवैतदाह' ( ब्रा. माध्य १,४,१,२४ ) इति विज्ञायते। नि सीद बर्हिषि होता सन्। 'अग्न आयाहि वीतय इत्याहाऽनयोर्लोकयोर्वीत्यै' ( ब्रा. माध्य १,४,१,२३ ) इति च विज्ञायते ॥ १० ॥

[1]इति चतुर्थाष्टके पञ्चमाध्याये द्वाविंशो वर्गः[2] ॥

तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥ ११ ॥

तम् । त्वा । समित्ऽभिः । अङ्गिरः । घृतेन । वर्धयामसि । बृहत् । शोच । यविष्ठ्य ॥ ११ ॥

वेङ्कट० तम् त्वा समिद्भिः हे अङ्गिरसाम् एक! घृतेन[3] वर्धयामः। अत्यन्तं च[4] दीप्यस्व हे युवतम! ॥ ११ ॥

स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥ १२ ॥

सः । नः । पृथु । श्रवाय्यम् । अच्छ । देव । विवाससि । बृहत् । अग्ने । सुऽवीर्यम् ॥ १२ ॥

वेङ्कट० अदो गमय अस्मानिति ॥ १२ ॥

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ १३ ॥

त्वाम् । अग्ने । पुष्करात् । अधि । अथर्वा । निः । अमन्थत । मूर्ध्नः । विश्वस्य । वाघतः ॥ १३ ॥

वेङ्कट० त्वाम् अग्ने! पुष्करपर्णात् अधि अथर्वा ऋषिः निः अमन्थत मूर्ध्नः सर्वस्य वोढुः। 'पुष्करपर्णे ह्येनमुपश्रितमविन्दत्' ( तै ५,१,४,४ ) इति ब्राह्मणम् ॥ १३ ॥

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् ॥ १४ ॥

---

१. नास्ति वि° ल°. १-२. नास्ति मूको. ३. °न च मूको. ४. नास्ति मूको.

तम् । ऊँ इति । त्वा । दध्यङ् । ऋषिः । पुत्रः । ईधे । अथर्वणः । वृत्रऽहनम् । पुरम्ऽदरम् ॥ १४ ॥

वेङ्कट० निगदसिद्धा ॥ १४ ॥

तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयं रणेरणे ॥ १५ ॥

तम् । ऊँ इति । त्वा । पाथ्यः । वृषा । सम् । ईधे । दस्युहन्ऽतमम् । धनम्ऽजयम् । रणेऽरणे ॥

वेङ्कट० तम् एव त्वां पथ्यायाः पुत्रो दध्यङ् वृषा समीधे दस्यूनामतिशयेन हन्तारं धनस्य जेतारं युद्धेयुद्धे । 'पूर्वेणैनोदितमुत्तरेणाभिगृणोति' इति ब्राह्मणम् ॥ १५ ॥

'इति चतुर्थाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः' ॥

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिः ॥ १६ ॥

आ । इहि । ऊँ इति । सु । ब्रवाणि । ते । अग्ने । इत्था । इतराः । गिरः । एभिः । वर्धासे । इन्दुऽभिः ॥

वेङ्कट० आ गच्छ, सुष्ठु ब्रवाणि ते स्तुतीः अग्ने! अमुत्र असुरेषु वर्तमानाः भवन्ति इतराः अवेदमयाः अश्रोतव्याः । एभिः अस्मदीयैः सोमैः वर्धस्व । 'असुर्या ह वा इतरा गिरः' ( ऐब्रा ३,४९ ) इति ब्राह्मणम् ॥ १६ ॥

यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्रा सदः कृणवसे ॥ १७ ॥

यत्र । क्व । च । ते । मनः । दक्षम् । दधसे । उत्ऽतरम् । तत्र । सदः । कृणवसे ॥ १७ ॥

वेङ्कट० यत्र क्व चित् तव मनः[1] तत्र पूजा भवति, तत्र बुद्धिम् उद्गततरां करोषि, तथा तत्र स्थानं च करोषि स्तोतरि ॥ १७ ॥

नहि ते पूर्तमक्षिपद् भुवन्नेमानां वसो । अथा दुवो वनवसे ॥ १८ ॥

नहि । ते । पूर्तम् । अक्षिऽपत् । भुवत् । नेमानाम् । वसो इति । अथ । दुवः । वनवसे ॥ १८ ॥

वेङ्कट० नहि ते भासनं[4] अक्ष्णः पातकं भवति, अनवरतं प्रवर्तमानात्[5] न चक्षुः पतति, सन्ततं प्रवर्तत इत्यर्थः, हे नेमानाम् वासयितः!, 'नेमा अस्मान् पूजकाः । ततश्च'[6] परिचर्यां मनुष्येभ्यो भजसे ॥ १८ ॥

आग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतिः ॥ १९ ॥

आ । अग्निः । अगामि । भारतः । वृत्रऽहा । पुरुऽचेतनः । दिवःऽदासस्य । सत्ऽपतिः ॥ १९ ॥

वेङ्कट० आभिमुख्येन गम्यते अग्निः भारतः,[7] "भारतेभ्येष हि देवेभ्यो हव्यं भरति"[8] (माश १,४,२,२) इति ब्राह्मणम्, शत्रूणां हन्ता बहुप्रज्ञः दिवोदासार्थं भया सतां पतिः ॥ १९ ॥

---

१-१. नास्ति मूको. २. लोपे मूको. ३. नास्ति मूको. ४. भाने वि' लपं; दानम् छ. ५. प्रवर्तमाने छ स्प. ६-६. नेमानां मानार् पूजकश्च वि'; नेमानामानाम् पूजकश्च छर्दः; नेमा : मनान् पूजकास्ततश्च छ. ७. भोभ्यरेष छ. ८. भरति वि' लपं.

स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना । वन्वन्नवातो अस्तृतः ॥ २० ॥

सः । हि । विश्वा । अति । पार्थिवा । रयिम् । दाशत् । महिऽत्वना । वन्वन् । अवातः । अस्तृतः ॥ २० ॥

वेङ्कट० सः हि विश्वानि[1] पार्थिवानि भूतानि अतिक्रान्तः रयिम् प्रयच्छति महत्त्वेन भजमानो हवींषि, अनभिगतः शत्रुभिः अहिंसितश्च ॥ २० ॥

'इति चतुर्थाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः' ॥

स प्रत्नवन्नवीयसाऽग्ने द्युम्नेन संयता । बृहत् ततन्थ भानुना ॥ २१ ॥

सः । प्रत्नऽवत् । नवीयसा । अग्ने । द्युम्नेन । सम्ऽयता । बृहत् । ततन्थ । भानुना ॥ २१ ॥

वेङ्कट० सः पुरातनेनेव नवीयसा अधुना प्रादुर्भूतेन सङ्गच्छमानेन[3] अग्ने! द्योतमानेन तेजसा विस्तृतमन्तरिक्षम् ततन्थ ॥ २१ ॥

प्र वः सखायो अग्नये स्तोमं यज्ञं च धृष्णुया । अर्च गाय च वेधसे ॥ २२ ॥

प्र । वः । सखायः । अग्नये । स्तोमम् । यज्ञम् । च । धृष्णुऽया । अर्च । गाय । च । वेधसे ॥ २२ ॥

वेङ्कट० प्र अर्चत गायत च यूयं हे[4] सखायः! अग्नये स्तोमम् च यज्ञम् च[5] धृष्णवे विधात्रे ॥ २२ ॥

स हि यो मानुषा युगा सीदद्धोता कविक्रतुः । दूतश्च हव्यवाहनः ॥ २३ ॥

सः । हि । यः । मानुषा । युगा । सीदत् । होता । कविऽक्रतुः । दूतः । च । हव्यऽवाहनः ॥ २३ ॥

वेङ्कट० सः हि यः मानुषान् कालान् दर्शपूर्णमासाद्याधारभूतान् सीदति होता भूत्वा क्रान्तप्रज्ञः[6] दूतः च भवतीति हविषां वोढा ॥ २३ ॥

ता राजाना शुचिव्रतादित्यान् मारुतं गणम् । वसो यक्षीह रोदसी ॥ २४ ॥

ता । राजाना । शुचिऽव्रता । आदित्यान् । मारुतम् । गणम् । वसो इति । यक्षि । इह । रोदसी इति ॥ २४ ॥

वेङ्कट० तौ मित्रावरुणौ शुचिकर्माणौ आदित्यान् धाम्नान् "मरुतां च" गणम् हे वासयितः! यज द्यावापृथिवी च ॥ २४ ॥

वस्वी ते अग्ने संदृष्टिरिषयते मर्त्याय । ऊर्जो नपादमृतस्य ॥ २५ ॥

यस्वी । ते । अग्ने । सम्ऽदृष्टिः । इषऽयते । मर्त्याय । ऊर्जः । नपात् । अमृतस्य ॥ २५ ॥

---

१. विश्वा छपं, नास्ति छपं. २-२. नास्ति मूको. ३. द्र. ऋ (१,१५१,८) भाष्यम्; सङ्गमानः वि[1]; संगमनः छपं. ४. ये ह छपं. ५ नास्ति छ. ६. क्रान्त° मूको. ७-७. माहताश्च छपं; मरुतां च वि[1].

वेङ्कट० प्रशस्या तव अग्ने! सन्दृष्टिः अन्नमिच्छते मनुष्याय हे अन्नस्य पौत्र! अमृतस्य[1] तव ॥ २५ ॥

[2]इति चतुर्थाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः[2] ॥

क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्त्सुरेक्णाः । मर्त आनाश सुवृक्तिम् ॥ २६ ॥

क्रत्वा । दाः । अस्तु । श्रेष्ठः । अद्य । त्वा । वन्वन् । सुऽरेक्णाः । मर्तः । आनाश । सुऽवृक्तिम् ॥२६॥

वेङ्कट० कर्मणा दाता अस्तु तुभ्यम् श्रेष्ठः । अद्य त्वां याचमानः सुधनः मनुष्यः व्याप्नोति सुप्रवृत्तां स्तुतिम् ॥ २६ ॥

ते ते अग्ने त्वोता इषयन्तो विश्वमायुः ।
तरन्तो अर्यो अरातीर्वन्वन्तो अर्यो अरातीः ॥ २७ ॥

ते । ते । अग्ने । त्वाऽऊताः । इषयन्तः । विश्वम् । आयुः ।
तरन्तः । अर्यः । अरातीः । वन्वन्तः । अर्यः । अरातीः ॥ २७ ॥

वेङ्कट० ते तव अग्ने! त्वया रक्षिताः विश्वम् अन्नम् इच्छन्तः तरन्ते, गन्तारः शत्रून् वन्वन्तः च भवन्ति । वधकर्मा वनितिरिति ॥ २७ ॥

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणम् । अग्निर्नो वनते रयिम् ॥२८ ॥

अग्निः । तिग्मेन । शोचिषा । यासत् । विश्वम् । नि । अत्रिणम् । अग्निः । नः । वनते । रयिम् ॥२८॥

वेङ्कट० अग्निः तिग्मेन तेजसा नि हन्तु विश्वम् रक्षः । अग्निः अस्मभ्यम् प्रयच्छतु धनम् ॥ २८ ॥

सुवीरं रयिमा भर जातवेदो विचर्षणे । जहि रक्षांसि सुक्रतो ॥ २९ ॥

सुऽवीरम् । रयिम् । आ । भर । जातऽवेदः । विऽचर्षणे । जहि । रक्षांसि । सुक्रतो इति सुऽक्रतो ॥२९॥

वेङ्कट० निगदसिद्धा ॥ २९ ॥

त्वं नः पाह्यंहसो जातवेदो अघायतः । रक्षा णो ब्रह्मणस्कवे ॥ ३० ॥

त्वम् । नः । पाहि । अंहसः । जातऽवेदः । अघऽयतः । रक्ष । नः । ब्रह्मणः । कवे ॥ ३० ॥

वेङ्कट० त्वम् अस्मान् पाहि रक्षसः जातवेदः! । अघमिच्छतः रक्ष अस्मान् हे स्तोत्रस्य कर्तः! ॥ ३० ॥

[2]इति चतुर्थाष्टके पञ्चमाध्याये षड्विंशो वर्गः[3] ॥

यो नो अग्ने दुरेव आ मर्तो वधाय दाशति । तस्मान्नः पाह्यंहसः ॥ ३१ ॥

---

१. भोता मस्य कर्प; होश मस्य वि°. २-२. नास्ति मूको. ३. ग्रामग्रकतां कर्प; °इवर वि°.

यः । नः । अग्ने । दुःऽएवः । आ । मर्तः । वधाय । दाशति । तस्मात् । नः । पाहि । अंहसः ॥३१

वेङ्कट० यः अस्मान् अग्ने! दुष्टागमनो मनुष्यो हन्त्रे आभिमुख्येन प्रयच्छति, तस्मात् अस्मान् रक्ष महन्तुः ॥ ३१ ॥

त्वं तं देव जिह्वया परि बाधस्व दुष्कृतम् । मर्तो यो नो जिघांसति ॥ ३२ ॥

त्वम् । तम् । देव । जिह्वया । परि । बाधस्व । दुःऽकृतम् । मर्तः । यः । नः । जिघांसति ॥ ३२ ॥

वेङ्कट० विस्पष्टार्था ॥ ३२ ॥

भरद्वाजाय सप्रथः शर्म यच्छ सहन्त्य । अग्ने वरेण्यं वसु ॥ ३३ ॥

भरत्ऽवाजाय । सऽप्रथः । शर्म । यच्छ । सहन्त्य । अग्ने । वरेण्यम् । वसु ॥ ३३ ॥

वेङ्कट० भरद्वाजाय हे सहनशील! सहन्त्य![1] गृहं सर्वतः पृथुतमं धनं च प्रयच्छ । अवशिष्टं स्पष्टम् ॥ ३३ ॥

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः ॥ ३४ ॥

अग्निः । वृत्राणि । जङ्घनत् । द्रविणस्युः । विपन्यया । सम्ऽइद्धः । शुक्रः । आऽहुतः ॥ ३४ ॥

वेङ्कट० अग्निः शत्रून् हन्तु धनमिच्छन् स्तुत्या[2] समिद्धः शुक्लवर्णः आहुतः ॥ ३४ ॥

गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे । सीदन्नृतस्य योनिमा ॥ ३५ ॥

गर्भे । मातुः । पितुः । पिता । विऽदिद्युतानः । अक्षरे । सीदन् । ऋतस्य । योनिम् । आ ॥३५॥

वेङ्कट० द्यावापृथिव्योः गर्भे अन्तरिक्षे सीदन्[3] पालयिता 'अग्निः विद्योतमानः[4] यज्ञम् आ प्यायति ॥ ३५ ॥

[5]इति चतुर्थाष्टके पञ्चमाध्याये सप्तविंशो वर्गः[5] ॥

ब्रह्म प्रजावदा भर जातवेदो विचर्षणे । अग्ने यद् दीदयद् दिवि ॥ ३६ ॥

ब्रह्म । प्रजाऽवत् । आ । भर । जातऽवेदः । विऽचर्षणे । अग्ने । यत् । दीदयत् । दिवि ॥ ३६ ॥

वेङ्कट० अन्नं प्रजायुक्तं देहि हे जातवेदः! विद्वन्!, अग्ने! यत् दीप्यते दीप्ते स्वर्गे ॥ ३६ ॥

उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत । अग्ने ससृज्महे गिरः ॥ ३७ ॥

उप । त्वा । रण्वऽसंदृशम् । प्रयस्वन्तः । सहःऽकृत । अग्ने । ससृज्महे । गिरः ॥ ३७ ॥

वेङ्कट० उप सृजामहे त्वां रमणीयसन्दर्शनम् अन्नवन्तः हे सहसोत्पादित! अग्ने! स्तुतीः ॥ ३७ ॥

---

१. सहन्त्यो मूको. २. स्तुत्या एव स्थं; °च्छं स्तुत्याः वि°. ३. नास्ति मूको. ४. विविद्योत° वि°; विद्योतमाना स्थं. ५-५. नास्ति मूको.

उप॑च्छा॒यामि॑व॒ घृणे॑रग॑न्म॒ शर्म॑ ते व॒यम् । अग्ने॒ हिर॑ण्यसंदृशः ॥ ३८ ॥

उप॑ । छा॒याम्ऽइ॑व । घृणेः॑ । अग॑न्म । शर्म॑ । ते॒ । व॒यम् । अग्ने॑ । हिर॑ण्यऽसंदृशः ॥ ३८ ॥

वेङ्कट० उप गच्छाम वयम् छायामिव तेजसः सुखम् अग्ने! हिरण्यरूपस्य तव ॥ ३८ ॥

य उ॒ग्र इ॑व शर्य॒हा ति॒ग्मशृ॑ङ्गो॒ न वंस॑गः । अग्ने॒ पुरो॑ रु॒रोजि॑थ ॥ ३९ ॥

यः । उ॒ग्रःऽइ॑व । श॒र्य॒ऽहा । ति॒ग्मऽशृ॑ङ्गः । न । वंस॑गः । अग्ने॑ । पुरः॑ । रु॒रोजि॑थ ॥ ३९ ॥

वेङ्कट० यः त्वम् उद्गूर्ण इव वीरः घातयितव्यानां हन्ता तीक्ष्णशृङ्ग इव च वृषभः अग्ने! शत्रुपुराणि रुरोजिथ । पूर्वत्र सम्बन्ध उत्तरत्र वा[1] ॥ ३९ ॥

आ यं हस्ते॒ न खा॒दिनं॒ शिशुं॑ जा॒तं न बिभ्र॑ति । वि॒शाम॒ग्निं स्व॑ध्व॒रम् ॥ ४० ॥

आ । यम् । हस्ते॑ । न । खा॒दिन॑म् । शिशु॑म् । जा॒तम् । न । बिभ्र॑ति । वि॒शाम् । अ॒ग्निम् । सु॒ऽअ॒ध्व॒रम् ॥ ४० ॥

वेङ्कट० यथा हस्ते खादिनम् आयुधं धारयति, यथा वा जातम् शिशुम्, एवम् यम् आ बिभ्रति विशाम् अग्निम् सुयज्ञम् । उत्तरत्र सम्बन्धः ॥ ४० ॥

[2]इति चतुर्थाष्टके पञ्चमाध्याये अष्टाविंशो वर्गः[2] ॥

प्र दे॒वं दे॒ववी॑तये॒ भर॑ता वसु॒वित्त॑मम् । आ स्वे योनौ॒ नि षी॑दतु ॥ ४१ ॥

प्र । दे॒वम् । दे॒वऽवी॑तये । भर॑त । व॒सु॒वित्ऽत॑मम् । आ । स्वे । योनौ॑ । नि । सी॒द॒तु॒ ॥ ४१ ॥

वेङ्कट० प्र भरत आहवनीये देवम् देवानां भक्षणाय अत्यर्थं धनस्य लम्भयितारम् । आ नि सीदतु सः स्वे स्थाने आहवनीये ॥ ४१ ॥

आ जा॒तं जा॒तवे॑दसि प्रि॒यं शि॑शी॒ताति॑थिम् । स्यो॒न आ गृ॒हप॑तिम् ॥ ४२ ॥

आ । जा॒तम् । जा॒तऽवे॑दसि । प्रि॒यम् । शि॒शी॒त॒ । अति॑थिम् । स्यो॒ने । आ । गृ॒हऽप॑तिम् ॥ ४२ ॥

वेङ्कट० स्थापयत इरणे[3] इरः । 'जात इरणे जातवेदाः' ( ऐआ १,१६ ) इत्यादि ब्राह्मणम् ॥ ४२ ॥

अग्ने॑ यु॒क्ष्वा हि ये तवाश्वा॑सो देव सा॒धवः॑ । अरं॒ वह॑न्ति म॒न्यवे॑ ॥ ४३ ॥

अग्ने॑ । यु॒क्ष्व । हि । ये । तव॑ । अश्वा॑सः । दे॒व॒ । सा॒धवः॑ । अर॑म् । वह॑न्ति । म॒न्यवे॑ ॥ ४३ ॥

वेङ्कट० अग्ने! रथे युङ्क्ष्व[4] तान्, ये तव अश्वाः देव! साधयितारः पर्याप्तम् वहन्ति[5] स्तुत्यर्थम् ॥ ४३ ॥

अच्छा॑ नो याह्या व॑हा॒भि प्रयां॑सि वी॒तये॑ । आ दे॒वान्त्सोम॑पीतये ॥ ४४ ॥

अच्छ॑ । नः॒ । या॒हि॒ । आ । व॒ह॒ । अ॒भि । प्रयां॑सि । वी॒तये॑ । आ । दे॒वान् । सोम॑ऽपीतये ॥ ४४ ॥

---

१. एव वि° लपं. २-२. नास्ति मूको. ३. आह° वि° लपं. ४. युङ्क्ष्व वि° लपं. ५. भरद्° ल लपं; भावहन्ति क प्रस्तावः.

वेङ्कट० अभिगच्छ अस्मान् । अभि आ वह च अस्मानि अक्षण्णाय । आ वह च देवान् सोमपानाय ॥ ४४ ॥

उद॑ग्ने भारत द्युमदज॑स्रेण दवि॑द्युतत् । शोचा॒ वि भा॑ह्यजर ॥ ४५ ॥

उत् । अ॒ग्ने॒ । भा॒र॒त॒ । द्यु॒ऽमत् । अज॑स्रेण । दवि॑द्युतत् । शोच॑ । वि । भा॒हि॒ । अ॒ज॒र॒ ॥ ४५ ॥

वेङ्कट० उत् शोच अग्ने! भारत![1] 'अग्निर्वै[2] वा एष[3] प्राणो भूत्वा[4] प्रजा बिभर्ति तस्मादाह भारतः[5]' इति वाजसनेयकम् ( तु. काश २,४,१,२ ) दीप्तियुक्तम्। अजस्रेण शोचिषा अत्यन्तं दीप्यमानः माहि च हे जरारहित! ॥ ४५ ॥

[6]इति चतुर्थाष्टके पञ्चमाध्याये एकोनत्रिंशो वर्गः[6] ॥

वी॒ती यो दे॒वं मर्तो॑ दुव॒स्येद॒ग्निमी॑ळीताध्व॒रे ह॒विष्मा॑न् ।

होता॑रं सत्य॒यजं॒ रोद॑स्योरुत्ता॒नह॑स्तो॒ नम॒सा वि॑वासेत् ॥ ४६ ॥

वी॒ती । यः । दे॒वम् । मर्तः॑ । दु॒व॒स्येत् । अ॒ग्निम् । ई॒ळी॒त॒ । अ॒ध्व॒रे । ह॒विष्मा॑न् ।

होता॑रम् । स॒त्य॒ऽयज॑म् । रोद॑स्योः । उ॒त्ता॒नऽह॑स्तः । नम॑सा । आ । वि॒वा॒से॒त् ॥ ४६ ॥

वेङ्कट० हविषा यः देवम् मर्तः परिचरति, सः हविष्मान् अग्निम् स्तोतुमर्हति यज्ञे हविर्वहनाय। होतारम् सत्येन यष्टारं द्यावापृथिव्योः उत्तानहस्तः यजमानः प्रदानार्थमुत्क्षिप्तहस्तः अन्नेन परिचरेदिति ॥ ४६ ॥

आ ते॑ अग्न ऋ॒चा ह॒विर्हृ॒दा त॒ष्टं भ॑रामसि ।

ते ते॑ भवन्तू॒क्षण॑ ऋष॒भासो॑ व॒शा उ॒त ॥ ४७ ॥

आ । ते॒ । अ॒ग्ने॒ । ऋ॒चा । ह॒विः । हृ॒दा । त॒ष्टम् । भ॒रा॒म॒सि॒ ।

ते । ते॒ । भ॒व॒न्तु॒ । उ॒क्षणः॑ । ऋ॒ष॒भासः॑ । व॒शाः । उ॒त ॥ ४७ ॥

वेङ्कट० आ भरामः तुभ्यम्[7] अग्ने! ऋचा एव हविः, सैषमृग् भवतु हविःसमेति[8]। तस्येदं हविर्हृदयेन संस्कृतम्। हृदयेन हि स्तोत्रं क्रियते। ते ते भवन्तु उक्षादयो मदीया स्तुतिः, उक्षादि-समा[9] भवतु[10] इति समुदायार्थः। इत्थमिममाश्वलायनगृह्ये व्याख्यातेति। तत्रोक्षादिभिः सामानाधिकरण्यात् तच्छन्दस्य लिङ्गभेदः ॥ ४७ ॥

अ॒ग्निं दे॒वासो॑ अग्रि॒यमि॒न्धते॑ वृत्र॒हन्त॑मम् ।

येना॒ वसू॒न्याभृ॑ता तृ॒ळ्हा रक्षां॑सि वा॒जिना॑ ॥ ४८ ॥

---

१. नास्ति मूको. २. °मृद काश. ३. एष एव काश. ४. इदमिमाः काश ५. °तेति काश. ६-६. नास्ति मूको. ७. तुभ्यम् मूको. ८. हविः समनि वि° छपं; °समेमिति ह. ९. °साम मूको, °समाः छ प्रस्तारः. १०. भवन्तु छ छपं.

अ॒ग्निम् । दे॒वासः॑ । अ॒ग्रियम् । इ॒न्धते॑ । वृ॒त्र॒हन्ऽत॑मम् ।
येन॑ । वसू॑नि । आऽभृ॑ता । तृ॒ळ्हा । रक्षां॑सि । वा॒जिना॑ ॥ ४८ ॥

वेङ्कट० अग्निम् देवाः मुख्यम् इन्धते वृत्रस्य हन्तारम्, येन धनानि आहृतानि स्तोतृभ्यः, येन च तृळ्हानि रक्षांसि बलिनेति ॥ ४८ ॥

[1]इति चतुर्थाष्टके पञ्चमाध्याये त्रिंशो वर्गः[1] ॥

एकोनत्रिंशमध्यायं व्याचकारेति माधवः ।
नदीमाश्रित्य निवसन् कावेरीं लोकमाश्रिताम् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके पञ्चमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके पञ्चमोऽध्यायः समाप्तः ॥



१-१. नास्ति मूको.

## अथ षष्ठोऽध्यायः

वेङ्कट०
अथ 'पिबा सोममभि' व्याचिख्यासति माधवः ।
पादे समाने वक्तव्यं पूरणेषु प्रदर्शयन् ॥ १ ॥

तस्मिन् पादे यदा पश्येत् तमेवाविकृतं पुनः ।
तं पादपूरणं ब्रूयादिति वृद्धेभ्य आगमः ॥ २ ॥

किमुदाहरणं तत्र न 'यासि देवः प्रवत्वा'[1] ।
[2]यानि 'ये चुच्यवन्ते(न्त'† इ)ति'[2] भिन्ने वाक्ये यतस्तयोः ॥ ३ ॥

'आ याहि पूर्वीरति( र्ति[3] इ )ति पादो नात्र निदर्शनम् ।
दृश्यते पूरणो ह्येष आकारः केवलोऽपि सन् ॥ ४ ॥

'त्वमग्ने व्रतपा असि'[4] मन्त्रस्तत्र निदर्शनम् ।
तत्र प्रथम आकारो निरर्थक इति स्थितिः ॥ ५ ॥

[5]नहि देवत्वमागत्य मर्त्येष्वपि च वर्तसे[5] ।
इति सार्थोऽत्र आकार इदं तस्मिन्निदर्शनम् ॥ ६ ॥

'अयं ते अस्तु हर्यतः'[6], 'को वो वर्षिष्ठ आ नरः'[7] ।
निपातव्यतिरेकेण तस्माद् वो च निदर्शनम् ॥ ७ ॥

'स यन्ता विप्र एषां स यज्ञानामथा हि षः'[8] ।
पादे द्वितीये तच्छब्द एकस्तत्रास्तु पूरणः[9] ॥ ८ ॥

'अस्मा एतन्मह्याङ्गूषम्'[10] एकोऽस्मा इति पूरणः[11] ।
सर्वनामानि पादेषु समानेष्विति पूरणम् ॥ ९ ॥

नास्ति निर्वचनं येषां रूपभेदेऽपि तान् विदुः ।
पूरणानेव कवयः 'एमेनं सृजता सुते'[12] ॥ १० ॥

'स यक्षत् सेदु होता(ता[13] इ)ति समानार्थाविदू श्रुतौ ।
तत्रैकं पूरणं विद्याद् बहवः सन्ति तादृशाः ॥ ११ ॥

---

१. ऋ १,३५,३. २-२. यानि देव उक्तेति वेंकट. † ऋ ५,३१,१२. ३. ऋ ३,४३,२. ४. ऋ ८,११,१. ५-५. नहि देवेष्विति पूर्णं देवत्वा नन्वं मर्त्येषु च वर्तसे वि° लुप्तं. ६. ऋ ३,४४,१. ७. ऋ १,३७,६. ८. ऋ ३,१३,३. ९. पूरणम् वि° लुप्तं. १०. ऋ ६,३४,५. ११. पूरणः वि°. १२. ऋ १,९,२. १३. ऋ १०,२,२.

भद्रेत्येति द्यौ पृथिवी सत्यनामसु वैदिकैः ।
न तावत्यन्त्यपर्यायौ सत्येनेति विपश्चितः ॥ १२ ॥

[११]'सत्यमद्धा नकिरन्यः'[११] †, 'सत्यमित्था वृषेदसि'[१२] ।
सत्यं तथा, सत्यमित्थमित्यर्थस्तत्र दर्शितः ॥ १३ ॥

'पुत्रिणा ता कुमारिणा'[१३] कुमारा अर्भका इति ।
न पौनरुक्त्यमत्रास्ति तेनैको नात्र पूरणः ॥ १४ ॥

उदाहरणविद् विप्रः परिपत्सु न सीदति ।
प्रदर्शितास्ततोऽस्माभिरित्थं नानाविधा ऋचः[४] ॥ १५ ॥

[ १७ ]

[५]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः, पञ्चदशी द्विपदा त्रिष्टुप्[५] ।

पिबा सोममभि यमुग्र तर्द ऊर्वं गव्यं महि गृणान इन्द्र ।
वि यो धृष्णो वधिषो वज्रहस्त विश्वा वृत्रममित्रिया शवोभिः ॥ १ ॥

पिब । सोमम् । अभि । यम् । उग्र । तर्दः । ऊर्वम् । गव्यम् । महि । गृणानः । इन्द्र ।
वि । यः । धृष्णो इति । वधिषः । वज्रऽहस्त । विश्वा । वृत्रम् । अमित्रिया । शवःऽभिः ॥ १ ॥

वेङ्कट० भरद्वाजः । पिब सोमम्, यम् सोमम् अभि वै पीत्वा उग्र! तृण्णवान् असि महद् गव्यम् सर्व स्तूयमान! इन्द्र! पणिभिरपहृतम्[६] । विविधं च अवधीः यः त्वं हे धृष्णो! वज्रहस्त! विश्वम् उपद्रवम् अमित्रभवं बलैः ॥ १ ॥

स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान् वृषभो यो मतीनाम् ।
यो गोत्रभिद् वज्रभृद् यो हरिष्ठाः स इन्द्र चित्राँ अभि तृन्धि वाजान् ॥ २ ॥

सः । ईम् । पाहि । यः । ऋजीषी । तरुत्रः । यः । शिप्रऽवान् । वृषभः । यः । मतीनाम् ।
यः । गोत्रऽभित् । वज्रऽभृत् । यः । हरिऽस्थाः । सः । इन्द्र । चित्रान् । अभि । तृन्धि । वाजान् ॥ २ ॥

वेङ्कट० सः पुनः सोमं पिब, यः ऋजीषेण सहवान् । हर्योरस्य स भागो भवति । तरिता शत्रूणाम्, यः महान्, यः च स्तोतॄणां वर्षिता, यः मेघानां भेत्ता वज्रभृत् च, यः च हर्योरधिष्ठाता, सः त्वम् इन्द्र! नानारूपान् पणिभिरपहृतानन्नसाधनान् पशून् अभि तृन्धि ॥ २ ॥

---

१-१. नास्ति वि° कपे. † ऋ १,५२,१२. ११. ऋ ८,३३,१०. १२. ऋ ८,३१,८. ४. ऋचः । इति द. ५-५. नास्ति मूको. ६. °हृताः मूको.

एवा पाहि प्रत्नथा मन्दतु त्वा श्रुधि ब्रह्म वावृधस्वोत गीर्भिः ।
आविः सूर्यं कृणुहि पीपिहीषो जहि शत्रूँरभि गा इन्द्र तृन्धि ॥ ३ ॥

एव । पाहि । प्रत्नऽथा । मन्दतु । त्वा । श्रुधि । ब्रह्म । ववृधस्व । उत । गीःऽभिः ।
आविः । सूर्यम् । कृणुहि । पीपिहि । इषः । जहि । शत्रून् । अभि । गाः । इन्द्र । तृन्धि ॥३॥

वेङ्कट० एवं पिब प्रत्नतमं सोमं प्रत्नमिव । स सोमस्त्वाम् मन्दतु । शृणु स्तुतिम् । अपि च वर्धस्व स्तुतिभिः । आविष्कुरु च सूर्यम् । कृत्वा च प्यायय अन्नानि गोलक्षणानि । विनाशय च पणीन् । तैरपहृताः गाः च अभि तृन्धि ॥ ३ ॥

ते त्वा मदा बृहदिन्द्र स्वधाव इमे पीता उक्षयन्त द्युमन्तम् ।
महामनूनं तवसं विभूतिं मत्सरासो जर्हृषन्त प्रसाहम् ॥ ४ ॥

ते । त्वा । मदाः । बृहत् । इन्द्र । स्वधाऽवः । इमे । पीताः । उक्षयन्त । द्युऽमन्तम् ।
महाम् । अनूनम् । तवसम् । विऽभूतिम् । मत्सरासः । जर्हृषन्त । प्रऽसहम् ॥ ४ ॥

वेङ्कट० ते त्वा सोमाः बृहन्तम् इन्द्र! अन्नवन् ! इमे पीताः प्रत्यामासुर्दीप्तिमन्तम् । महान्तम् अनूनम् बलवन्तं विविधमूर्तिं मदकरा अत्यन्तं हर्षयन्ति प्रकर्षेण शत्रूणामभिभवितारम् ॥ ४ ॥

येभिः सूर्यमुषसं मन्दसानोऽवासयोऽप दृळ्हानि दर्द्रत् ।
महामद्रिं परि गा इन्द्र सन्तं नुत्था अच्युतं सदसः परि स्वात् ॥ ५ ॥

येभिः । सूर्यम् । उषसम् । मन्दसानः । अवासयः । अप । दृळ्हानि । दर्द्रत् ।
महाम् । अद्रिम् । परि । गाः । इन्द्र । सन्तम् । नुत्थाः । अच्युतम् । सदसः । परि । स्वात् ॥५॥

वेङ्कट० यैः सोमैर्मोदमानः सूर्यम् उषसम् च 'असुरैरपि आसेनं' स्थाने निवासयसि[1] दृळ्हानि तमांस्यसुरैरपादितानि अपदारयन् । महान्तं मेघं व्रजम् गाः परितः सन्तम् इन्द्र! स्वस्मात् स्थानात् अच्युतम् प्रेरय ॥ ५ ॥

[1]इति चतुर्थाष्टके षष्ठाध्याये प्रथमो वर्गः[1] ॥

तव क्रत्वा तव तद् दंसनाभिरामासु पक्वं शच्या नि दीधः ।
और्णोर्दुर उस्रियाभ्यो वि दृळ्होदूर्वाद् गा असृजो अङ्गिरस्वान् ॥ ६ ॥

तव । क्रत्वा । तव । तत् । दंसनाभिः । आमासु । पक्वम् । शच्या । नि । दीधरिति दीधः ।
और्णोः । दुरः । उस्रियाभ्यः । वि । दृळ्हा । उत् । ऊर्वात् । गाः । असृजः । अङ्गिरस्वान् ॥६॥

1-1. मत्वरैरिव नास्ती एवं. २. °सि ए. ३-३. नास्ति मूको.

वेङ्कट० तव प्रज्ञानेन तव कर्मभिश्च तत् कृतम् । किं तदित्याह — आमासु गोषु पक्वम् [1]पयोऽम्बु यो[1] बुद्ध्या निहितवानसि, विघटितवानसि द्वाराणि शिलोच्चयस्य गवार्थं दृढानि, तत उत् असृजः ऊर्वात् महतः शिलोच्चयात् पशून् अङ्गिरोभिर्युक्तः ॥ ६ ॥

पप्राथ क्षां महि दंसो व्यु१र्वीमुप द्यामृष्वो बृहदिन्द्र स्तभायः ।
अधारयो रोदसी देवपुत्रे प्रत्ने मातरा यह्वी ऋतस्य ॥ ७ ॥

पप्राथ । क्षाम् । महि । दंसः । वि । उर्वीम् । उप । द्याम् । ऋष्वः । बृहत् । इन्द्र । स्तभायः ।
अधारयः । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । प्रत्ने इति । मातरा । यह्वी इति । ऋतस्य ॥७॥

वेङ्कट० वि पप्रथे पृथिवीं विस्तीर्णां महता कर्मणा इन्द्रः । उप अस्तम्नाच्च द्याम् महतीं महान् इन्द्रः । अथ महत्त्व. । धारयसि द्यावापृथिवी, ययोर्देवाः पुत्राः, महत्यौ पुराणे यज्ञस्य मातरौ[2] ॥ ७ ॥

अध त्वा विश्वे पुर इन्द्र देवा एकं तवसं दधिरे भराय ।
अदेवो यदभ्यौहिष्ट देवान्त्स्वर्षाता वृणत इन्द्रमत्र ॥ ८ ॥

अध । त्वा । विश्वे । पुरः । इन्द्र । देवाः । एकम् । तवसम् । दधिरे । भराय ।
अदेवः । यत् । अभि । औहिष्ट । देवान् । स्वःऽसाता । वृणते । इन्द्रम् । अत्र ॥ ८ ॥

वेङ्कट० अध त्वाम् विश्वे देवाः सङ्ग्रामार्थम् पुरः दधिरे एकम् बलवन्तम्[3] । वृत्रः देवान् यत् अभि औहिष्ट, यद्देहिरे[4] छान्दसं रूपम्, ऊहिवान् बाहिना समः, अभिजगाम । तदा सङ्ग्रामेऽस्मिन् देवाः इन्द्रम् वृणते ॥ ८ ॥

अध द्यौश्चित् ते अप सा नु वज्राद् द्वितानमद् भियसा स्वस्य मन्योः ।
अहिं यदिन्द्रो अभ्योहसानं नि चिद् विश्वायुः शयथे जघान ॥ ९ ॥

अध । द्यौः । चित् । ते । अप । सा । नु । वज्रात् । द्विता । अनमत् । भियसा । स्वस्य । मन्योः ।
अहिम् । यत् । इन्द्रः । अभि । ओहसानम् । नि । चित् । विश्वऽआयुः । शयथे । जघान ॥९॥

वेङ्कट० अध वृत्रे हते द्यौः अपि[5] सा क्षिप्रं द्विधा अप अनमत् तव वज्रात् बिभ्यती त्वदीयस्य क्रोधस्य । अहिम् यदा इन्द्रः आभिमुख्येन नि जघान गच्छन्तं सर्वगामी पृथिव्यां शाययितुम् ॥ ९ ॥

अध त्वष्टा ते मह उग्र वज्रं सहस्रभृष्टिं ववृतच्छताश्रिम् ।
निकाममरमणसं येन नवन्तमहिं सं पिणगृजीषिन् ॥ १० ॥

---

1-1. पयः ल. 2. यातारौ वि॰ अवे. 3. समर्थम् मूको. 4. पदेरि॰ मूको. 5. इव मूको.

अध । त्वष्टा । ते । महः । उग्र । वज्रम् । सहस्रऽभृष्टिम् । ववृतत् । शतऽअश्रिम् ।
निऽकामम् । अरऽमनसम् । येन । नवन्तम् । अहिम् । सम् । पिणक् । ऋजीषिन् ॥ १० ॥

वेङ्कट० अथ त्वष्टा ते महतः हे उद्गूर्ण ! वज्रम् सहस्रधारम् शताश्रिम् वर्तयामास प्रादात्[1] । अथ निवर्तितकामं पर्याप्तमनसम् येन वज्रेणाभिगच्छन्तम् अहिम् सम् पिष्टवानसि ऋजीषिन् ! ॥ १० ॥

"इति चतुर्थाष्टके षष्ठाध्याये द्वितीयो वर्गः" ॥

वर्धान् यं विश्वे मरुतः सजोषाः पचच्छतं महिषाँ इन्द्र तुभ्यम् ।
पूषा विष्णुस्त्रीणि सरांसि धावन् वृत्रहणं मदिरमंशुमस्मै ॥ ११ ॥

वर्धान् । यम् । विश्वे । मरुतः । सऽजोषाः । पचत् । शतम् । महिषान् । इन्द्र । तुभ्यम् ।
पूषा । विष्णुः । त्रीणि । सरांसि । धावन् । वृत्रऽहनम् । मदिरम् । अंशुम् । अस्मै ॥ ११ ॥

वेङ्कट० अवर्धयन् यम् विश्वे मरुतः सङ्गताः, तस्मै तुभ्यम् इन्द्र ! वृत्रवधाय शतम् महिषान् अपचत्[3] पूषा विष्णुः च । तथा त्रीणि सरांसि अधावयन् । तदेवाह — वृत्रहणम् मदकरम् अंशुम् इन्द्राय ॥ ११ ॥

आ क्षोदो महि वृतं नदीनां परिष्ठितमसृज ऊर्मिमपाम् ।
तासामनु प्रवत इन्द्र पन्थां प्रार्दयो नीचीरपसः समुद्रम् ॥ १२ ॥

आ । क्षोदः । महि । वृतम् । नदीनाम् । परिऽस्थितम् । असृजः । ऊर्मिम् । अपाम् ।
तासाम् । अनु । प्रऽवतः । इन्द्र । पन्थाम् । प्र । आर्दयः । नीचीः । अपसः । समुद्रम् ॥ १२ ॥

वेङ्कट० आ असृजः उदकं महद् वृत्रेण "वृतम् नदीनाम्" । तदेवाह — परितः स्थितम् अपाम् ऊर्मिम् मातरम्" इति । तासाम् अपां प्रवणाभिमुखस्य वेगस्य समुद्रम् अपगन्तुं नीचीनं मार्गं च इन्द्र ! "प्र आर्दयः" ॥ १२ ॥

एवा ता विश्वा चकृवांसमिन्द्रं महामुग्रमजुर्यं सहोदाम् ।
सुवीरं त्वा स्वायुधं सुवज्रमा ब्रह्म नव्यमवसे ववृत्यात् ॥ १३ ॥

एव । ता । विश्वा । चकृऽवांसम् । इन्द्रम् । महाम् । उग्रम् । अजुर्यम् । सहःऽदाम् ।
सुऽवीरम् । त्वा । सुऽआयुधम् । सुऽवज्रम् । आ । ब्रह्म । नव्यम् । अवसे । ववृत्यात् ॥ १३ ॥

वेङ्कट० एवं[7] तानि विश्वानि कर्माणि कृतवन्तम् इन्द्रम् महान्तम् उग्रम् अहिंस्यं बलस्य दातारम् सुवीरम्[8] त्वां शोभनायुधं शोभनवज्रम् आवर्तयतु अभिनवं स्तोत्रं रक्षणाय ॥ १३ ॥

स नो वाजाय श्रवस इषे च राये धेहि द्युमत इन्द्र विप्रान् ।
भरद्वाजे नृवत इन्द्र सूरीन् दिवि च स्मैधि पार्ये न इन्द्र ॥ १४ ॥

---

१. प्रदात् मूको. २-२. नास्ति मूको. ३. अपचन् वि॰. ४-४. एतादीनाम् मूको. ५. मातरमव मूको. ६-६. प्रवणम वि॰. ७. एव वि॰ अपं. ८. रिवरं वि॰ अपं.

सः । नः । वाजाय । श्रवसे । इषे । च । राये । धेहि । द्युऽमतः । इन्द्र । विप्रान् ।
भरत्ऽवाजे । नृऽवतः । इन्द्र । सूरीन् । दिवि । च । स्म । एधि । पार्ये । नः । इन्द्र ॥१४॥

वेङ्कट० सः अस्मान् बलाय कीर्त्यैऽन्नाय धनाय च कुरु इन्द्र[1] । दीप्तिमतो मेधाविनः । तथा भरद्वाजे मयि मनुष्ययुक्तान् स्तोतॄन् कुरु[2] इन्द्र ।[3] । दिवि च खलु पारयितव्ये त्वम् अस्माकम् इन्द्र ! भव[4] पारयितेति ॥ [illegible] ॥

अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ १५ ॥

अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ १५ ॥

वेङ्कट० अनया स्तुत्या अन्नं लभेमहि यत् यागस्य देवैर्निहितम् अस्ति । मदेम शतहिमाः[5] सुवीराः ॥ १५ ॥

[6]इति चतुर्थाष्टके पञ्चमाध्याये तृतीयो वर्गः[6] ॥

[ १८ ]

[6]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[6] ।

तमु ष्टुहि यो अभिभूत्योजा वन्वन्नवातः पुरुहूत इन्द्रः ।
अषाळ्हमुग्रं सहमानमाभिर्गीर्भिर्वर्ध वृषभं चर्षणीनाम् ॥ १ ॥

तम् । ऊँ इति । स्तुहि । यः । अभिभूतिऽओजाः । वन्वन् । अवातः । पुरुऽहूतः । इन्द्रः ।
अषाळ्हम् । उग्रम् । सहमानम् । आभिः । गीःऽभिः । वर्ध । वृषभम् । चर्षणीनाम् ॥ १ ॥

वेङ्कट० तम् एव स्तुहि, यः अभिभवितृबलः भजमानः शत्रून् अनभिगतः[4] शत्रुभिः पुरुहूतः इन्द्रः । अपाळ्हम्[1] इति स्पष्टम् ॥ १ ॥

स युध्मः सत्वा खजकृत् समद्वा तुविम्रक्षो नदनुमाँ ऋजीषी ।
बृहद्रेणुश्च्यवनो मानुषीणामेकः कृष्टीनामभवत् सहावा ॥ २ ॥

सः । युध्मः । सत्वा । खजऽकृत् । समत्ऽवा । तुविऽम्रक्षः । नदनुऽमान् । ऋजीषी ।
बृहत्ऽरेणुः । च्यवनः । मानुषीणाम् । एकः । कृष्टीनाम् । अभवत् । सहऽवा ॥ २ ॥

वेङ्कट० सः युद्धशीलः दाता सङ्ग्रामकृत् सङ्ग्रामवान् बहूनाम् आमर्शकः शब्दवान् ऋजीषी बृहद्वेणुः महाधूलिः च्यावयिता अभवत् एकः बह्वीनाम् मानुषीणाम् प्रजानां बलवान् ॥ २ ॥

त्वं ह नु त्यददमायो दस्यूँरेकः कृष्टीरवनोरार्याय ।
अस्ति स्विन्नु वीर्यं तत् त इन्द्र न स्विदस्ति तदृतुथा वि वोचः ॥ ३ ॥

१. नास्ति मूको. २. नास्ति लपं. ३. नास्ति क. ४-४. नास्ति मूको. ५. अभिगताः वि॰ लपं. ६. अषाळ्ह वि॰.

त्वम् । ह । नु । त्यत् । अदमयः । दस्यून् । एकः । कृष्टीः । अवनोः । आर्याय ।
अस्ति । स्वित् । नु । वीर्यम् । तत् । ते । इन्द्र । न । स्वित् । अस्ति । तत् । ऋतुऽथा । वि । वोचः ॥

वेङ्कट० त्वम् खलु त्यत्[1] दस्यून् अदमयः । असहाय एव अवधीः प्रजा यजमानाय शत्रुभूताः । वीर्यम् इन्द्र! इदानीं तव अस्ति, स्वित् आहोस्वित् न अस्ति । तत् सम्प्रति विस्पष्टं ब्रूहि ॥ ३ ॥

सदिद्धि ते तुविजातस्य मन्ये सहः सहिष्ठ तुरतस्तुरस्य ।
उग्रमुग्रस्य तवसस्तवीयोऽरध्रस्य रध्रतुरो बभूव ॥ ४ ॥

सत् । इत् । हि । ते । तुविऽजातस्य । मन्ये । सहः । सहिष्ठ । तुरतः । तुरस्य ।
उग्रम् । उग्रस्य । तवसः । तवीयः । अरध्रस्य । रध्रऽतुरः । बभूव ॥ ४ ॥

वेङ्कट० विद्यमानमेव तव बहुजन्मनस्य जानामि बलम् हे अतिशयेन बलवन्! हिंसितुर्हिंसकस्य । उद्गूर्णम् उद्गूर्णस्य प्रवृद्धस्य अतिशयेन वृद्धं तद् भवति । असमृद्धस्य यजमानस्यार्थे समृद्धं तच्छत्रुं यो हंसि ॥ ४ ॥

तन्नः प्रत्नं सख्यमस्तु युष्मे इत्था वदद्भिर्वलमङ्गिरोभिः ।
हन्नच्युतच्युद् दस्मेषयन्तमृणोः पुरो वि दुरो अस्य विश्वाः ॥ ५ ॥

तत् । नः । प्रत्नम् । सख्यम् । अस्तु । युष्मे इति । इत्था । वदत्ऽभिः । वलम् । अङ्गिरःऽभिः ।
हन् । अच्युतऽच्युत् । दस्म । इषयन्तम् । ऋणोः । पुरः । वि । दुरः । अस्य । विश्वाः ॥५॥

वेङ्कट० तत् अस्माकम् पुराणम् सख्यम् अस्तु त्वयि स्तोत्रम् । सत्यम् वदद्भिः अङ्गिरोभिः वलम् हतवानसि हे अच्युतानां[2] च्यावयितः! दर्शनीय! गच्छन्तम् । विवृतमिकृतवानसि अस्य पुरः द्वाराणि सर्वाणि ॥ ५ ॥

[3]इति चतुर्थाष्टके षष्ठाध्याये चतुर्थो वर्गः[3] ॥

स हि धीभिर्हव्यो अस्त्युग्र ईशानकृन्महति वृत्रतूर्ये ।
स तोकसाता तनये स वज्री वितन्तसाय्यो अभवत् समत्सु ॥ ६ ॥

सः । हि । धीभिः । हव्यः । अस्ति । उग्रः । ईशानऽकृत् । महति । वृत्रऽतूर्ये ।
सः । तोकऽसाता । तनये । सः । वज्री । वितन्तसाय्यः । अभवत् । समत्ऽसु ॥ ६ ॥

वेङ्कट० सः हि प्रज्ञाभिः आह्वातव्यो भवति उद्गूर्ण ईश्वरं कुर्वन् महति सङ्ग्रामे । सः पुत्रभजने पौत्रभजने च दातव्यः । सः वज्री सङ्ग्रामेषु वितन्तसाय्यः भवति, अत्यन्तं शत्रुभिः सेवितव्यो भवति ॥ ६ ॥

१. एतद् मूको. २. अच्युतां छ. ३-३. नास्ति मूको.

स मज्मना जनिम मानुषाणाममर्त्येन नाम्नाति प्र सर्स्रे ।
स द्युम्नेन स शवसोत राया स वीर्येण नृतमः समोकाः ॥ ७ ॥

सः । मज्मना । जनिम । मानुषाणाम् । अमर्त्येन । नाम्ना । अति । प्र । सर्स्रे ।
सः । द्युम्नेन । सः । शवसा । उत । राया । सः । वीर्येण । नृऽतमः । समऽओकाः ॥ ७ ॥

वेङ्कट० सः बलेन मनुष्याणां जन्मानि अमरणधर्मेणा परेषां नमयित्रा अति प्र सरति । सः तेजसा सः वेगेन धनेन च सः वीर्येण नेतृतमः सङ्गतः इति ॥ ७ ॥

स यो न मुहे न मिथू जनो भूत् सुमन्तुनामा चुमुरिं धुनिं च ।
वृणक् पिप्रुं शम्बरं शुष्णमिन्द्रः पुरां च्यौत्नाय शयथाय नू चित् ॥ ८ ॥

सः । यः । न । मुहे । न । मिथु । जनः । भूत् । सुमन्तुऽनामा । चुमुरिम् । धुनिम् । च ।
वृणक् । पिप्रुम् । शम्बरम् । शुष्णम् । इन्द्रः । पुराम् । च्यौत्नाय । शयथाय । नु । चित् ॥८॥

वेङ्कट० सः यः इन्द्रो मोहाय न भवति । न च कदाचिद् मिथ्या प्रादुर्भवति । सुमन्तुरिति नाम यस्य सः इन्द्रः पिप्रुप्रभृतीन् अहन् पुराम् च्यावयित्रे '[1]क्षिप्रम् शयथाय । शयथा[1] कुत्स इत्याहुः ॥ ८ ॥

उदावता त्वक्षसा पन्यसा च वृत्रहत्याय रथमिन्द्र तिष्ठ ।
धिष्व वज्रं हस्त आ दक्षिणत्राभि प्र मन्द पुरुदत्र मायाः ॥ ९ ॥

उत्ऽअवता । त्वक्षसा । पन्यसा । च । वृत्रऽहत्याय । रथम् । इन्द्र । तिष्ठ ।
धिष्व । वज्रम् । हस्ते । आ । दक्षिणऽत्रा । अभि । प्र । मन्द । पुरुऽदत्र । मायाः ॥ ९ ॥

वेङ्कट० उद्गच्छता शत्रूणां तनूकरणशीलेन बलेन सह वृत्रं हन्तुम् रथम् इन्द्र! '[2]आ तिष्ठ' । आ[2] धेहि च वज्रम् दक्षिणे हस्ते, अभि प्र गच्छ हे पुरुदान! शत्रूणाम् मायाः ॥ ९ ॥

अग्निर्न शुष्कं वनमिन्द्र हेती रक्षो नि धक्ष्यशनिर्न भीमा ।
गम्भीरय ऋष्वया यो रुरोजाध्वानयद् दुरिता दम्भयच्च ॥ १० ॥

अग्निः । न । शुष्कम् । वनम् । इन्द्र । हेती । रक्षः । नि । धक्षि । अशनिः । न । भीमा ।
गम्भीरया । ऋष्वया । यः । रुरोज । अध्वानयत् । दुःऽइता । दम्भयत् । च ॥ १० ॥

वेङ्कट० अग्निः इव दहता शुष्कम् वनम् रक्षः नि दह, यथा अशनिः भीमा[4] दिवः पतिता

---

१-१. एष क्षिप्रं शयथः वि° रूपं; "शयथः दमः ख. २-२. नास्ति छ रूपं. ३. नास्ति वि° रूपं.
४. भीमः छ रूपं.

विनाशयति। गम्भीरया महत्या च शक्त्या शत्रून् स्तोज शब्दापयति दुरितानि[1] च विनाशयतीति परोक्ष उत्तरार्धं ॥ १० ॥

[2]इति चतुर्थाष्टके पञ्चमाध्याये पञ्चमो वर्गः[2] ॥

आ स॒हस्रं॑ प॒थिभि॑रिन्द्र रा॒या तुवि॑द्युम्न तुविवाजेभिर॒र्वाक् ।
या॒हि सू॑नो सहसो॒ यस्य॒ नू चि॒ददे॑व॒ ईशे॑ पुरुहूत॒ योतोः॑ ॥ ११ ॥

आ । स॒हस्र॑म् । प॒थिऽभिः॑ । इ॒न्द्र॒ । रा॒या । तुवि॑ऽद्युम्न । तु॒वि॒ऽवा॒जेभिः॑ । अ॒र्वाक् ।
या॒हि । सू॒नो॒ इति॑ । स॒ह॒सः॒ । यस्य॑ । नु । चि॒त् । अदे॑वः । ईशे॑ । पु॒रु॒ऽहू॒त॒ । योतोः॑ ॥ ११ ॥

वेङ्कट० आ याहि सहस्रेण धनेन सह मार्गैः हे बहुधन[1] बहुबलैरश्वैः अभिमुखम् सहसः सूनो! [2]महेन्द्र[2]! यत्कत्वर्थम्[3] यस्य यजमानस्य क्षिप्रम् असुर ईश्वरो भवति, पृथक्करणाय[4] [4]यम् अस्माभिम् असुर[4] आगच्छति[5], तत्[6] आगच्छेति ॥ ११ ॥

प्र तु॑विद्यु॒म्नस्य॒ स्थवि॑रस्य॒ घृष्वे॑र्दि॒वो र॑रप्शे महि॒मा पृ॑थि॒व्याः ।
नास्य॒ शत्रु॒र्न प्र॑ति॒मान॑मस्ति॒ न प्र॑ति॒ष्ठिः पु॑रुमा॒यस्य॒ सह्योः॑ ॥ १२ ॥

प्र । तु॒वि॒ऽद्यु॒म्नस्य॑ । स्थवि॑रस्य । घृष्वेः॑ । दि॒वः । र॒र॒प्शे॒ । म॒हि॒मा । पृ॒थि॒व्याः ।
न । अ॒स्य॒ । शत्रुः॑ । न । प्र॒ति॒ऽमान॑म् । अ॒स्ति॒ । न । प्र॒ति॒ऽस्थिः । पु॒रु॒ऽमा॒यस्य॑ । सह्योः॑ ॥ १२ ॥

वेङ्कट० बहुधनस्य स्थविरस्य घर्षणशीलस्य महत्त्वम् दिवः पृथिव्याः च प्र रिरिचे। रपशतिर्महत्त्वावकर्मा। न अस्य शत्रुः कश्चित् अस्ति, न च प्रतिमानम्, न प्रतिष्ठाता अभिगन्ता बहुप्रज्ञस्य अभिभवत ॥ १२ ॥

प्र तत्ते॑ अ॒द्या कर॑णं कृ॒तं भू॒त्कुत्सं॒ यदा॒युम॑तिथि॒ग्वम॑स्मै ।
पु॒रू स॒हस्रा॒ नि शि॑शा अ॒भि क्षामुत्तूर्व॑याणं धृष॒ता नि॑नेथ ॥ १३ ॥

प्र । तत् । ते॒ । अ॒द्य । कर॑णम् । कृ॒तम् । भू॒त् । कुत्स॑म् । यत् । आ॒युम् । अ॒ति॒थि॒ऽग्वम् । अ॒स्मै॒ ।
पु॒रु । स॒हस्रा॑ । नि । शि॒श॒ । अ॒भि । क्षाम् । उत् । तूर्व॑याणम् । धृ॒ष॒ता । नि॒ने॒थ॒ ॥ १३ ॥

वेङ्कट० प्र भवति इदानीमुत्कृष्टम् भवति जनेषु तत् ते[6] कृतम् कर्म। यत् त्वम् अस्मै कर्मणे कुत्सादीनृषीन् रक्ष्यानकरोः[7] तवस्तेरस्मैर्मन्त्रैरन्यथा इति। तेषां कुत्सादीनां शत्रूणां बहूनि सहस्राणि पृथिव्यां तनूकृतवानसि, तूर्वयाणम् च धृष्टेन बलेन तत्स्थानात् उन्नीतवानसि ॥ १३ ॥

अनु॒ त्वाहि॑घ्ने॒ अध॑ देव दे॒वा मद॒न्विश्वे॑ क॒वित॑मं कवी॒नाम् ।
करो॒ यत्र॒ वरि॑वो बाधि॒ताय॑ दि॒वे जना॑य त॒न्वे॑ गृणा॒नः ॥ १४ ॥

1 नास्ति मूको २-२ नास्ति मूको ३-३ माहेन्द्रबल" मूको ४ पृथक् कुरु रणस्य मूको ५-५ यं मार्गमसुर ६ प्रस्ताव ६ गच्छति एप. ७ तव वि[?] ८ नास्ति छपे. ९ "नरवक"
वि[?] ए

अनु । त्वा । अहिऽघ्ने । अध । देव । देवाः । मदन् । विश्वे । कविऽतमम् । कवीनाम् ।
करः । यत्र । वरिवः । बाधिताय । दिवे । जनाय । तन्वे । गृणानः ॥ १४ ॥

वेङ्कट० अनु अमदन् त्वाम् अहिहननाय अथ 'हे देव!'[1] सर्वे देवाः अत्यन्तं कविम्, कृतवानसि यदा धनम् बाधिताय स्तोत्रे जनाय तनूकर्षे[2] च स्तूयमानः ॥ १४ ॥

अनु द्यावापृथिवी तत् त ओजोऽमर्त्या जिहत इन्द्र देवाः ।
कृष्वा कृत्नो अकृतं यत् ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः ॥ १५ ॥

अनु । द्यावापृथिवी इति । तत् । ते । ओजः । अमर्त्याः । जिहते । इन्द्र । देवाः ।
कृष्व । कृत्नो इति । अकृतम् । यत् । ते । अस्ति । उक्थम् । नवीयः । जनयस्व । यज्ञैः ॥१५॥

वेङ्कट० 'हे इन्द्र!'[1] अनु गच्छतः द्यावापृथिवी तत् तव बलम्, तथा अमरणाः देवाः च अनुगच्छन्ति । कुरु हे करणशील!, अकृतम् यदि ते किंचित् अस्ति । नवतरं स्तोत्रम् यज्ञैः सह जनयस्व । कृते हि कर्मणि[3] नवानि च कथयन्त्युक्थयो यज्ञेष्विति ॥ १५ ॥

[1]इति चतुर्थाष्टके पञ्चाध्याये षष्ठो वर्गः[1] ॥

[ १९ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥ १ ॥

महान् । इन्द्रः । नृऽवत् । आ । चर्षणिऽप्राः । उत । द्विऽबर्हाः । अमिनः । सहःऽभिः ।
अस्मद्र्यक् । ववृधे । वीर्याय । उरुः । पृथुः । सुऽकृतः । कर्तृऽभिः । भूत् ॥ १ ॥

वेङ्कट० यथा शत्रून् विजित्यान्यो[4] महाराजो भवति मनुष्यः, एवम् इन्द्रः वृत्रं हत्वा महान् अभवत् । 'इन्द्रो ह वा एष पुरा वृत्रस्य वधादथ वृत्रं जघ्निवान् महेन्द्रो यथा महाराजोऽन्यो विजित्य' ( श. ब्रा. १,६,४,२१ ) इति[5] वाजसनेयकम् । किं च मनुष्याणां पूरयिता अपि[6] च[7] द्वयोः परिवृढः अहिंसितो बलैः । सोऽयं मदभिमुखं वीर्यकरणार्थं वर्धते च । अपि शोभनकर्मणः कर्मभिः उरुः पृथुः च भवति ॥ १ ॥

इन्द्रमेव धिषणा सातये धाद् बृहन्तमृष्वमजरं युवानम् ।
अषाळ्हेन शवसा शूशुवांसं सद्यश्चिद् यो वावृधे असामि ॥ २ ॥

---

१-१. नास्ति मूको. २. कर्षे वि॰ लर्प. ३. कर्माणि कृते मूको. ४. विजिग्यानो वि॰ लर्प, ५. नास्ति वि॰ लर्प. ६. नास्ति वि॰. ७. नास्ति लर्प.

इन्द्रम् । एव । धिषणा । सातये । धात् । बृहन्तम् । ऋष्वम् । अजरम् । युवानम् ।
अषाळ्हेन । शवसा । शूशुऽवांसम् । सद्यः । चित् । यः । ववृधे । असामि ॥ २ ॥

वेङ्कट० इन्द्रम् एव बुद्धेर्लाभाय निदधाति महान्तं दर्शनीयम् अजरम् युवानम् शत्रुभिरसोढेन बलेन वर्धमानम्, सद्यः जातः [illegible] ववृधे अन्यूनः ॥ २ ॥

पृथू करस्ना बहुला गभस्ती अस्मद्र्य१क् सं मिमीहि श्रवांसि ।
यूथेव पश्वः पशुपा दमूना अस्माँ इन्द्राभ्या ववृत्स्वाजौ ॥ ३ ॥

पृथू इति । करस्ना । बहुला । गभस्ती इति । अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ।
यूथाऽईव । पश्वः । पशुऽपाः । दमूनाः । अस्मान् । इन्द्र । अभि । आ । ववृत्स्व । आजौ ॥३॥

वेङ्कट० पृथू करौ, दीर्घौ बाहू, स त्वमस्मदभिमुखस्[1] सम् मिमीहि अन्नानि, पशोः यूथानीव[2] पशुपालो दममनाः अस्मान् इन्द्र । अभि आ वर्तयस्व आजौ ॥ ३ ॥

तं व इन्द्रं चतिनमस्य शाकैरिह नूनं वाजयन्तो हुवेम ।
यथा चित् पूर्वे जरितार आसुरनेद्या अनवद्या अरिष्टाः ॥ ४ ॥

तम् । वः । इन्द्रम् । चतिनम् । अस्य । शाकैः । इह । नूनम् । वाजऽयन्तः । हुवेम ।
यथा । चित् । पूर्वे । जरितारः । आसुः । अनेद्याः । अनवद्याः । अरिष्टाः ॥ ४ ॥

वेङ्कट० तम् युष्माकम् इन्द्रम् शत्रूणां नाशयितारम् अस्य सहायैर्मरुद्भिः सह इदानीं युद्धं कुर्वन्तो ह्वयामः । यथा एव पूर्वे स्तोतारोऽभूवन् प्रशस्या अनिन्द्या अहिंसिता[3], तद्वद् वयमपि भूयास्मेति ॥ ४ ॥

धृतव्रतो धनदाः सोमवृद्धः स हि वामस्य वसुनः पुरुक्षुः ।
सं जग्मिरे पथ्या३ रायो अस्मिन्त्समुद्रे न सिन्धवो यादमानाः ॥ ५ ॥

धृतऽव्रतः । धनऽदाः । सोमऽवृद्धः । सः । हि । वामस्य । वसुनः । पुरुऽक्षुः ।
सम् । जग्मिरे । पथ्याः । रायः । अस्मिन् । समुद्रे । न । सिन्धवः । यादमानाः ॥ ५ ॥

वेङ्कट० धृतकर्मा धनस्य दाता सोमेन वृद्धः सः हि प्रशस्यस्य धनस्य बहोर्दाता । सम् गच्छन्ते मनुष्यहितानि धनानि अस्मिन् समुद्रे समागता[4] इव सिन्धवः । नावादिभ्यः समागता वा पथ्या. इति ॥ ५ ॥

[3]इति चतुर्थाष्टके षष्ठाध्याये सप्तमो वर्गः[4] ॥

यविष्ठं न आ भर शूर शव ओजिष्ठमोजो अभिभूत उग्रम् ।
विश्वा द्युम्ना वृष्ण्या मानुषाणामस्मभ्यं दा हरिवो मादयध्यै ॥ ६ ॥

---

1. त्वमस्मद° एर्च. 2. यूथानीव वि° एर्च. 3. नास्ति मूको. 3-4. नास्ति मूको.

शविष्ठम् । नः । आ । भर । शूर । शवः । ओजिष्ठम् । ओजः । अभिऽभूते । उग्रम् ।
विश्वा । द्युम्ना । वृष्ण्या । मानुषाणाम् । अस्मभ्यम् । दाः । हरिऽवः । मादयध्यै ॥ ६ ॥

वेङ्कट॰ बलवत्तमम् अस्मभ्यम् आ हर शूर! बलम् ओजस्वितमम् ओजः च उद्गूर्णं हे शत्रूणाम् अभिभवितः! । विश्वानि च धनानि वर्षणनिमित्तानि शत्रूणां मनुष्याणाम् आदाय अस्मभ्यम् देहि हे हरिवः! अस्मान् मादयितुम् ॥ ६ ॥

यस्ते मदः पृतनाषाळमृध्र इन्द्र तं न आ भर शूशुवांसम् ।
येन तोकस्य तनयस्य सातौ मंसीमहि जिगीवांसस्त्वोताः ॥ ७ ॥

यः । ते । मदः । पृतनाषाट् । अमृध्रः । इन्द्र । तम् । नः । आ । भर । शूशुऽवांसम् ।
येन । तोकस्य । तनयस्य । सातौ । मंसीमहि । जिगीवांसः । त्वाऽऊताः ॥ ७ ॥

वेङ्कट॰ यः ते मदः अभिभविता अहिंसितः, इन्द्र! तम् अस्माकम् आ हर प्रवृद्धम् । येन मदेन शत्रुजयार्थं त्वया भृतेन लब्धधनाः पुत्रस्य च तत्पुत्रस्य भजने तेन[1] धनप्रदानेन अर्चयामः शत्रून् जिगीवांसः त्वया रक्षिताः ॥ ७ ॥

आ नो भर वृषणं शुष्ममिन्द्र धनस्पृतं शूशुवांसं सुदक्षम् ।
येन वंसाम पृतनासु शत्रून् तवोतिभिरुत जामीँरजामीन् ॥ ८ ॥

आ । नः । भर । वृषणम् । शुष्मम् । इन्द्र । धनऽस्पृतम् । शूशुऽवांसम् । सुऽदक्षम् ।
येन । वंसाम । पृतनासु । शत्रून् । तव । ऊतिऽभिः । उत । जामीन् । अजामीन् ॥ ८ ॥

वेङ्कट॰ आ भर अस्मभ्यं वर्षितृ बलम् इन्द्र! धनस्य स्पष्टृ[2] वृद्धं शोभनोत्साहम्, येन हनाम पृतनासु शत्रून् तव रक्षणैः अपि च ज्ञातीन् अज्ञातीन्[3] ॥ ८ ॥

आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा पुरस्तात् ।
आ विश्वतो अभि समेत्वर्वाङिन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ ९ ॥

आ । ते । शुष्मः । वृषभः । एतु । पश्चात् । आ । उत्तरात् । अधरात् । आ । पुरस्तात् ।
आ । विश्वतः । अभि । सम् । एतु । अर्वाङ् । इन्द्र । द्युम्नम् । स्वःऽवत् । धेहि । अस्मे इति ॥

वेङ्कट॰ त्वदीयं बलम् अस्मान् सर्वतः अभिगच्छतु, इन्द्र! अन्नम् अभ्युदययुक्तम् अस्मासु धेहि ॥ ९ ॥

नृवत् त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः ।
ईक्षे हि वस्व उभयस्य राजन् धा रत्नं महि स्थूरं बृहन्तम् ॥ १० ॥

---

१. तौ वि॰ स्पं. २. स्पष्टारम् = अप्यारम वि॰ स्रौ. ३. नास्ति भको.

नृऽवत् । ते । इन्द्र । नृऽतमाभिः । ऊती । वंसीमहि । वामम् । श्रोमतेभिः ।
ईशे । हि । वस्वः । उभयस्य । राजन् । धाः । रत्नम् । महि । स्थूरम् । बृहन्तम् ॥ १० ॥

वेङ्कट० मनुष्ययुक्तं त्वत्तः इन्द्र! नेतृतमैः रक्षणैः भजेमहि वननीयं धनं श्रोतव्यैः । ईशिषे हि धनस्य दिव्यस्य उत पार्थिवस्य राजन्!, धेहि रत्नम् महनीयं परिणाहवद् बृंहितम् ॥ १० ॥

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ ११ ॥

मरुत्वन्तम् । वृषभम् । ववृधानम् । अकवऽअरिम् । दिव्यम् । शासम् । इन्द्रम् ।
विश्वऽसहम् । अवसे । नूतनाय । उग्रम् । सहःऽदाम् । इह । तम् । हुवेम ॥ ११ ॥

वेङ्कट० निगदव्याख्याता ॥ ११ ॥

जनं वज्रिन् महि चिन्मन्यमानमेभ्यो नृभ्यो रन्धया येष्वस्मि ।
अधा हि त्वा पृथिव्यां शूरसातौ हवामहे तनये गोष्वप्सु ॥ १२ ॥

जनम् । वज्रिन् । महि । चित् । मन्यमानम् । एभ्यः । नृऽभ्यः । रन्धय । येषु । अस्मि ।
अध । हि । त्वा । पृथिव्याम् । शूरऽसातौ । हवामहे । तनये । गोषु । अप्ऽसु ॥ १२ ॥

वेङ्कट० ममतः स्थिरतया पुष्यन्तम् जनम् वज्रिन्! महान्तम् मन्यमानम् एभ्यः नृभ्यः वशीकुरु, येषु योद्धृषु अहम् अस्मि । अथ हि त्वा दिवः पृथिव्याम्[1] युद्धे पुत्राद्यर्थम् हवामहे इति ॥ १२ ॥

वयं त एभिः पुरुहूत सख्यैः शत्रोःशत्रोरुत्तर इत् स्याम ।
घ्नन्तो वृत्राण्युभयानि शूर राया मदेम बृहता त्वोताः ॥ १३ ॥

वयम् । ते । एभिः । पुरुऽहूत । सख्यैः । शत्रोःऽशत्रोः । उतऽतरे । इत् । स्याम ।
घ्नन्तः । वृत्राणि । उभयानि । शूर । राया । मदेम । बृहता । त्वाऽऊताः ॥ १३ ॥

वेङ्कट० वयम् ते एभिः स्तोत्रकृतैः पुरुहूत! सख्यैः सह असाधारणशत्रोः उत्कृष्टतरा[2] एव भवेम[3] घ्नन्तः शत्रून् प्रत्यक्षान् परोक्षांश्च शूर! राया मदेम बृहता त्वया रक्षिताः ॥ १३ ॥

"इति चतुर्थाष्टके षष्ठाध्याये अष्टमो वर्गः"[4] ॥

[ २० ]

"भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः, सप्तमी विराट्"[5] ।

द्यौर्न य इन्द्राभि भूमार्यस्तस्थौ रयिः शवसा पृत्सु जनान् ।
तं नः सहस्रभरमुर्वरासां दद्धि सूनो सहसो वृत्रतुरम् ॥ १ ॥

१. नास्ति मूको. २. पृथिव्या वि' लपं. ३. °तरा: ह लपं. ४-५. नास्ति मूको.

द्यौः । न । यः । इन्द्र । अभि । भूम । अर्यः । तस्थौ । रयिः । शवसा । पृत्ऽसु । जनान् ।
तम् । नः । सहस्रऽभरम् । उर्वराऽसाम् । दद्धि । सूनो इति । सहसः । वृत्रऽतुरम् ॥ १ ॥

वेङ्कट० आदित्यः इव यः इन्द्र! अभि तिष्ठति पृथिवीम् अरीन् जनान् बलेन रयिः[1] सङ्ग्रामेषु । तम् अस्मभ्यं सहस्रस्य भर्तारं सर्वस्या भूमेर्दातारम् दद्धि हे सहसः सूनो! शत्रूणां हिंसितारम् ॥ १ ॥

दिवो न तुभ्यमन्विन्द्र सत्रासुर्यं देवेभिर्धायि विश्वम् ।
अहिं यद् वृत्रमपो वव्रिवांसं हन्नृजीषिन् विष्णुना सचानः ॥ २ ॥

दिवः । न । तुभ्यम् । अनु । इन्द्र । सत्रा । असुर्यम् । देवेभिः । धायि । विश्वम् ।
अहिम् । यत् । वृत्रम् । अपः । ववृिऽवांसम् । हन् । ऋजीषिन् । विष्णुना । सचानः ॥ २ ॥

वेङ्कट० आदित्यस्येव तुभ्यम् अनु अधायि नूनं[2] महद् बलं सर्वं देवैः, अहिम् यदा वृत्रम् अपां निरन्धानं हतवानसि ऋजीषिन्! विष्णुना सहायेन सेव्यमानः ॥ २ ॥

तूर्वन्नोजीयान् तवसस्तवीयान् कृतब्रह्मेन्द्रो वृद्धमहाः ।
राजाभवन्मधुनः सोम्यस्य विश्वासां यत् पुरां दर्त्नुमावत् ॥ ३ ॥

तूर्वन् । ओजीयान् । तवसः । तवीयान् । कृतऽब्रह्मा । इन्द्रः । वृद्धऽमहाः ।
राजा । अभवत् । मधुनः । सोम्यस्य । विश्वासाम् । यत् । पुराम् । दर्त्नुम् । आवत् ॥ ३ ॥

वेङ्कट० तरन् अतिशयेन बलवान् वृद्धादपि वृद्धः कृतस्तोत्रः इन्द्रः वृद्धतेजाः राजा अभूत् सोममयस्य मधोः, विश्वासाम् पुराम् यदा दारयितारं वृत्रम् अभ्यगच्छत् ॥ ३ ॥

शतैरपद्रन् पणय इन्द्रात्र दशोणये कवयेऽर्कसातौ ।
वधैः शुष्णस्याशुषस्य मायाः पित्वो नारिरेचीत् किं चन प्र ॥ ४ ॥

शतैः । अपद्रन् । पणयः । इन्द्र । अत्र । दशऽओणये । कवये । अर्कऽसातौ ।
वधैः । शुष्णस्य । अशुषस्य । मायाः । पित्वः । न । अरिरेचीत् । किम् । चन । प्र ॥ ४ ॥

वेङ्कट० शतैः वधैस्त्वया कृतैः अपाद्रवन्[3] असुराः अस्मिन् युद्धे । द्रविर्गतिकर्मा ( निघ २,१४ ) । कस्मिन्नित्याह — दशावासत्वात् कुत्स- कविर्दशोणिस्तस्मिन्नर्थे त्वया कृते युद्धे । वधैः शुष्णस्य शोषयितुमशक्यस्य मायाः अयानि न किम् चिदपि प्र अरेचयः । सर्वं विनाशितवानिति ॥ ४ ॥

महो द्रुहो अप विश्वायु धायि वज्रस्य यत् पतने पादि शुष्णः ।
उरु ष सरथं सारथये करिन्द्रः कुत्साय सूर्यस्य सातौ ॥ ५ ॥

---

1. रयि वि' कपे. 2. नू मूको. 3. युद्धेऽपद्रन् कः युधेऽद्रवन् वि' कपे.

मह । द्रुह । अपं । विश्वऽआयु । धायि । वज्रस्य । यत् । पतने । पादि । शुष्णः ।
उरु । स । सऽरथम् । सारथये । कः । इन्द्रः । कुत्साय । सूर्यस्य । सातौ ॥ ५ ॥

वेङ्कट० महतो द्रोग्धुः अप धायि सर्वेण शरीरम्, वज्रस्य यदा पतने पतितः शुष्णासुरः । बहु कार्यम् स इन्द्र एकं रथमास्थाय सारथ्यं कुर्वते कुत्साय अकरोत् सूर्यस्य सम्भजने । 'श्वेतश सूर्ये' ( ऋ १, ६१,१५ ) इत्युक्तम् ॥ ५ ॥

'इति चतुर्थाष्टके पञ्चाध्याये नवमो वर्गः' ॥

प्र श्येनो न मंदिरमंशुमस्मै शिरों दासस्य नमुचेर्मथायन् ।
प्रावन्नमीं साप्यं ससन्तं पृणग्राया समिषा सं स्वस्ति ॥ ६ ॥

प्र । श्येनः । न । मदिरम् । अंशुम् । अस्मै । शिरः । दासस्य । नमुचेः । मथायन् ।
प्र । आवत् । नमीम् । साप्यम् । ससन्तम् । पृणक् । राया । सम् । इषा । सम् । स्वस्ति ॥६॥

वेङ्कट० यथा इन्द्राय श्येन मदिरम् सोमम् आजे अमथ्नात्, एवमस्मै सपपुत्रस्य स्वपतो मायायाऽसुरस्य नमुचेः असुरस्य शिरः प्र[1] मथायन्, स प्रकर्षेणारक्षत्[2], तदनन्तरम् नमीम् धनेनान्नेन स्वस्तिना च सम् अयोजयत् ॥ ६ ॥

नि पिप्रोरहिमायस्य दृळ्हाः पुरो वज्रिञ्छवसा न दर्दः ।
सुदामन् तद् रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः ॥ ७ ॥

वि । पिप्रोः । अहिऽमायस्य । दृळ्हाः । पुरः । वज्रिन् । शवसा । न । दर्दरिति दर्दः ।
सुऽदामन् । तत् । रेक्णः । अप्रऽमृष्यम् । ऋजिश्वने । दात्रम् । दाशुषे । दाः ॥ ७ ॥

वेङ्कट० वि दारितवानसि पिप्रोः आहन्तृमायस्य दृढाः पुरः वज्रिन् । बलेन । न इति सम्प्रत्ययार्थीय । शोभनदान ![3] पिप्रोः तत् [4]धनम् अन्यैरनभिभवनीय बहुत्वाद् ऋजिश्वने यजमानाय दत्तवानसि चरपुत्र्यो दातव्यम्[5] ॥ ७ ॥

स वेतसुं दशमायं दशोणिं तूतुजिमिन्द्रः स्वभिष्टिसुम्नः ।
आ तुग्रं शश्वदिभं द्योतनाय मातुर्न सीमुप सृजा इयध्यै ॥ ८ ॥

स । वेतसुम् । दशऽमायम् । दशऽओणिम् । तूतुजिम् । इन्द्रः । स्वभिष्टिऽसुम्नः ।
आ । तुग्रम् । शश्वत् । इभम् । द्योतनाय । मातुः । न । सीम् । उप । सृज । इयध्यै ॥ ८ ॥

वेङ्कट० [6]स इन्द्र सुष्ठ्वभ्येषणीयसुखो द्योतमानाय ऋषये वेतसुप्रभृतीन् उपगतान् अकरोद् बहून् एतान् । यथा मातुः [7] [8]पुत्रा वशवर्तिन[8] एवं वशमनयत् । आकार समुच्चये । सीम् इति परिग्रहार्थीय ( द्र. या १,७ ) । इयध्यै कनकदानाय[9] गन्तुम् ॥ ८ ॥

---

१ १. नास्ति मूको २ नास्ति मूको ३ °स मूको ४. °दातम् स एर्प. ५ ५ नास्ति छप. ६-६ पुत्राय वशवर्तिने स एर्प ७ प्रदानाय ए

स ईं स्पृधो वनते अप्रतीतो बिभ्रद् वज्रं वृत्रहणं गभस्तौ ।
तिष्ठद्धरी अध्यस्तेव गर्ते वचोयुजा वहत इन्द्रमृष्वम् ॥ ९ ॥

सः । ईम् । स्पृधः । वनते । अप्रतिऽइतः । बिभ्रत् । वज्रम् । वृत्रऽहनम् । गभस्तौ ।
तिष्ठत् । हरी इति । अधि । अस्ताऽइव । गर्ते । वचःऽयुजा । वहतः । इन्द्रम् । ऋष्वम् ॥९॥

वेङ्कट० सः एतान् शत्रून् स्वयं भजते शत्रुभिरप्रतिगतः बिभ्रत् वज्रम् शत्रूणां हन्तारं बाहौ, आतिष्ठति[1] च अश्वौ योद्धेव रथम् । वचोयुजौ तौ[2] इन्द्रम् वहतः दर्शनीयम् ॥ ९ ॥

सनेम तेऽवसा नव्य इन्द्र प्र पूरवः स्तवन्त एना यज्ञैः ।
सप्त यत् पुरः शर्म शारदीर्दर्द्धन् दासीः पुरुकुत्साय शिक्षन् ॥ १० ॥

सनेम । ते । अवसा । नव्यः । इन्द्र । प्र । पूरवः । स्तवन्ते । एना । यज्ञैः ।
सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् । हन् । दासीः । पुरुऽकुत्साय । शिक्षन् ॥ १० ॥

वेङ्कट० 'हे इन्द्र !'[3] भजेमहि नवतरं धनं तव रक्षणेन । अनेन धनेन हेतुना हविर्भिः सह मनुष्यास्त्वां प्रकर्षेण स्तुवन्ति । सप्त यदा विशारदीयाः नारकाः पुरीः दारितवान्, तदा हतवान् इन्द्रः पुरुकुत्साय दासीः सेनाः वशं नयन् धनं वा प्रयच्छन् ॥ १० ॥

त्वं वृध इन्द्र पूर्व्यो भूर्वरिवस्यन्नुशने काव्याय ।
परा नववास्त्वमनुदेयं महे पित्रे ददाथ स्वं नपातम् ॥ ११ ॥

त्वम् । वृधः । इन्द्र । पूर्व्यः । भूः । वरिवस्यन् । उशने । काव्याय ।
परा । नवऽवास्त्वम् । अनुऽदेयम् । महे । पित्रे । ददाथ । स्वम् । नपातम् ॥ ११ ॥

वेङ्कट० त्वम् वर्धयिता इन्द्र ! मुख्योऽभूः धनमिच्छन् कविपुत्राय उशनसे । तथा पराऽऽदत्तवानसि महते पित्रे स्वपुत्रं[4] युद्धे [5]त्वया गृहीतं महते याचमानाय[5] नववास्त्वनामानम् अनुदातव्यम्[6] ॥ ११ ॥

त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवन्तीः ।
प्र यत् समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥ १२ ॥

त्वम् । धुनिः । इन्द्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवन्तीः ।
प्र । यत् । समुद्रम् । अति । शूर । पर्षि । पारय । तुर्वशम् । यदुम् । स्वस्ति ॥ १२ ॥

वेङ्कट० व्याख्याता[6] ( ऋ १,१७४,९ द. ) ॥ १२ ॥

---

१. अतिष्ठति वि[1] लपं. २. तावद् वि[1] लपं. ३-३. नास्ति मूको. ४. पुत्रं वि[1]. ५-५. त्वया गृहीतमत्यया॰ वि[1]; त्वया गृहीतमहत्वयवाय ल लपं. ६. व्याख्यातव्यः वि[1] लपं.

त्वं ह त्यदिन्द्र विश्वमाजौ सस्तो धुनीचुमुरी या ह सिष्वप् ।
दीदयदित् तुभ्यं सोमेभिः सुन्वन् दभीतिरिध्मभृतिः पक्थ्यर्कैः ॥ १३ ॥

त्वम् । ह । त्यत् । इन्द्र । विश्वम् । आजौ । सस्तः । धुनीचुमुरी इति । या । ह । सिस्वप् ।
दीदयत् । इत् । तुभ्यम् । सोमेभिः । सुन्वन् । दभीतिः । इध्मऽभृतिः । पक्थी । अर्कैः ॥ १३ ॥

वेङ्कट० त्व एव इन्द्र! सङ्ग्रामे एतत् विश्वम् कर्म भवति, यत् सुष्ठु उक्तम्। तथा धुनिश्च चुमुरिश्चासुरौ अद्यापि स्वपतः, त्वं यौ अस्वापयः। दीप्यत एव तुभ्यम् सोमैः सुन्वन् दभीतिः नाम ऋषिम् इध्मैर्बिभ्रत् पचन् पक्तव्यान्[1] स्तुतिभिः सह ॥ १३ ॥

[2]इति चतुर्थाष्टके षष्ठाध्याये दशमो वर्गः[2] ॥

[ २१ ]

[3]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता, नवम्येकादश्योर्विश्वे देवाः । त्रिष्टुप् छन्दः[3] ।

इमा उ त्वा पुरुतमस्य कारोर्हव्यं वीर हव्या हवन्ते ।
धियो रथेष्ठामजरं नवीयो रयिर्विभूतिरीयते वचस्या ॥ १ ॥

इमाः । ऊँ इति । त्वा । पुरुऽतमस्य । कारोः । हव्यम् । वीर । हव्याः । हवन्ते ।
धियः । रथेऽस्थाम् । अजरम् । नवीयः । रयिः । विऽभूतिः । ईयते । वचस्या ॥ १ ॥

वेङ्कट० इमाः खलु त्वा बहुतमस्य कोतुः ह्वानार्हम् वीर! ह्वानकुशलाः स्तुतयः ह्वयन्ते रथे स्थितम् अजरम् नवतरम्। रयिः विभूतिः च प्राप्यते तव स्तुत्येति ॥ १ ॥

तमु स्तुष इन्द्रं यो विदानो गिर्वाहसं गीर्भिर्यज्ञवृद्धम् ।
यस्य दिवमति मह्ना पृथिव्याः पुरुमायस्य रिरिचे महित्वम् ॥ २ ॥

तम् । ऊँ इति । स्तुषे । इन्द्रम् । यः । विदानः । गिर्वाहसम् । गीःऽभिः । यज्ञऽवृद्धम् ।
यस्य । दिवम् । अति । मह्ना । पृथिव्याः । पुरुऽमायस्य । रिरिचे । महिऽत्वम् ॥ २ ॥

वेङ्कट० तम् एव स्तौमि इन्द्रम्, यः विद्वान् इन्द्रः। कीदृशं[1] तम्। गीर्भिः यज्ञे वर्धितम्। यस्य महत्वम् महत्त्वेन दिवम् अति रिरिचे पृथिव्याः चातिरिक्तं भवति बहुप्रज्ञस्य ॥ २ ॥

स इत् तमोऽवयुनं ततन्वत् सूर्येण वयुनवच्चकार ।
कदा ते मर्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः ॥ ३ ॥

सः । इत् । तमः । अवयुनम् । ततन्वत् । सूर्येण । वयुनऽवत् । चकार ।
कदा । ते । मर्ताः । अमृतस्य । धाम । इयक्षन्तः । न । मिनन्ति । स्वधाऽवः ॥ ३ ॥

---

१. पक्थ्या वि' सर्व. २-२. नास्ति मूको. ३. नास्ति मूको.

वेङ्कट० सः एव इन्द्रः[१] यः तमः प्रकाशरहितं विस्तारवत् सूर्येण प्रज्ञानवत् चकार। कदाचिदपि मर्ताः अमृतस्य यस्य धाम यद्धुणिष्पन्नाः शत्रुभिः न हिंस्यन्ते हे अन्नवन्! ॥ ३ ॥

यस्ता चुकार स कुह स्विदिन्द्रः कमा जर्नं चरति कासु विक्षु ।
कस्ते युज्ञो मनसे शं वराय को अर्क ईन्द्र कतमः स होता ॥ ४ ॥

यः । ता । चुकार । सः । कुह । स्वित् । इन्द्रः । कम् । आ । जनम् । चरति । कासु । विक्षु ।
कः । ते । युज्ञः । मनसे । शम् । वराय । कः । अर्कः । इन्द्र । कुतमः । सः । होता ॥ ४ ॥

वेङ्कट० यः तानीमानि कर्माणि चकार सः इन्द्रः कुह स्वित् भवति, कम् वा जनपदम् आभिमुख्येन चरति, कासु [redacted] प्रजासु। कः तव यज्ञः मनसे वरणीयाय सुखकरो भवति, कः वा मन्त्रः, कतमः वा सः होता इति ॥ ४ ॥

इदा हि ते वेविषतः पुराजाः प्रत्नास आसुः पुरुकृत् सखायः ।
ये मध्यमास उत नूतनास उतावमस्य पुरुहूत बोधि ॥ ५ ॥

इदा । हि । ते । वेविषतः । पुराऽजाः । प्रत्नासः । आसुः । पुरुऽकृत् । सखायः ।
ये । मध्यमासः । उत । नूतनासः । उत । अवमस्य । पुरुऽहूत । बोधि ॥ ५ ॥

वेङ्कट० इदानीं खलु तव सर्वं जगद् व्याप्नुवानस्य "पुरा जाताः" प्रत्नाः अभवन् हे बहूनां कर्मणां कर्तः! स्तोतारः। ततः पूर्वे च ये मध्यमाः, अपि च नूतनाः। अपि च अवमस्य मम स्तुतिम् पुरुहूत! बुध्यस्व ॥ ५ ॥

"इति चतुर्थाष्टके पञ्चमाध्याये एकादशो वर्गः"[२] ॥

तं पृच्छन्तोऽवरासः पराणि प्रत्ना त इन्द्र श्रुत्यानु येमुः ।
अर्चामसि वीर ब्रह्मवाहो यादेव विद्म तात् त्वा महान्तम् ॥ ६ ॥

तम् । पृच्छन्तः । अवरासः । पराणि । प्रत्ना । ते । इन्द्र । श्रुत्या । अनु । येमुः ।
अर्चामसि । वीर । ब्रह्मऽवाहः । यात्[३] । एव । विद्म । तात् । त्वा । महान्तम् ॥ ६ ॥

वेङ्कट० तम् त्वा कीदृशः इन्द्र इति पृच्छन्तः अवराः तव पराणि प्रत्नानि श्रवणीयानि कर्माणि अनु यच्छन्ति स्तुतिभिर्बध्नन्ति "हे इन्द्र!"[१]। अर्चामः वीर! वोढः! त्वाम् महान्तम्, यानि एव चरितानि जानीमः तैः। द्वितीयाया आकारादेशस्तृतीयायाश्चेति ॥ ६ ॥

अभि त्वा पाजो रक्षसो वि तस्थे महि जज्ञानमभि तत् सु तिष्ठ ।
तव प्रत्नेन युज्येन सख्या वज्रेण धृष्णो अप ता नुदस्व ॥ ७ ॥

१. नास्ति मूको. २. द्र. वैप १,२५८९c. ३-३. नास्ति मूको.

अभि । त्वा । पाजः । रक्षसः । वि । तस्थे । महि । जज्ञानम् । अभि । तत् । सु । तिष्ठ ।
तव । प्रत्नेन । युज्येन । सख्या । वज्रेण । धृष्णो इति । अप । ता । नुदस्व ॥ ७ ॥

वेङ्कट० अभि वि तिष्ठते अभिभवति त्वा रक्षसः बलम् महत्, तत् प्रादुर्भूतं शवः[1] त्वम् अभि भव। तव पुराणेन योग्येन सख्या वज्रेण हे धृष्णो! तानि रक्षांसि अप नुदस्व ॥ ७ ॥

स तु श्रुधीन्द्र नूतनस्य ब्रह्मण्यतो वीर कारुधायः ।
त्वं ह्याऽ३पिः प्रदिवि पितृणां शश्वद् बभूथ सुहव एष्टौ ॥ ८ ॥

सः । तु । श्रुधि । इन्द्र । नूतनस्य । ब्रह्मण्यतः । वीर । कारुऽधायः ।
त्वम् । हि । आपिः । प्रऽदिवि । पितृणाम् । शश्वत् । बभूथ । सुऽहवः । आऽइष्टौ ॥ ८ ॥

वेङ्कट० सः तु शृणु इन्द्र! सम्प्रतितनस्य स्तुतिमिच्छतः वीर! स्तोतृणां धर्तः! । त्वम् हि ज्ञातिः[2] पुराणे "काले अस्माकम्" पितृणाम् सर्वदा बभूव स्वाह्वानः आभिमुख्येन यागे ॥ ८ ॥

प्रोतये वरुणं मित्रमिन्द्रं मरुतः कृष्वावसे नो अद्य ।
प्र पूषणं विष्णुमग्निं पुरंधिं सवितारमोषधीः पर्वतांश्च ॥ ९ ॥

प्र । ऊतये । वरुणम् । मित्रम् । इन्द्रम् । मरुतः । कृष्व । अवसे । नः । अद्य ।
प्र । पूषणम् । विष्णुम् । अग्निम् । पुरम्ऽधिम् । सवितारम् । ओषधीः । पर्वतान् । च ॥ ९ ॥

वेङ्कट० स्तोतः! वरुणादीन् अस्माकम् रक्षणाय प्र कुरुष्व । पुनः अवसे इति पूरणम् । वाक् पुरंधिः । वरुणादिदेवतापेक्षमिति[3] ॥ ९ ॥

इम उ त्वा पुरुशाक प्रयज्यो जरितारो अभ्यर्चन्त्यर्कैः ।
श्रुधी हवमा हुवतो हुवानो न त्वावाँ अन्यो अमृत त्वदस्ति ॥ १० ॥

इमे । ऊँ इति । त्वा । पुरुऽशाक । प्रयज्यो इति प्रऽयज्यो । जरितारः । अभि । अर्चन्ति । अर्कैः ।
श्रुधि । हवम् । आ । हुवतः । हुवानः । न । त्वाऽवान् । अन्यः । अमृत । त्वत् । अस्ति ॥ १० ॥

वेङ्कट० इमे त्वां बहुधन! प्रकर्षेण यष्टव्य! स्तोतारः अभि अर्चन्ति स्तोत्रैः । आ शृणु हवम् हुवतः[4] हूयमानस्त्वम् । न त्वत्सदृशः अन्यः त्वत्तः कश्चित् अस्ति अमृत![5] ॥ १० ॥

नू म आ वाचमुप याहि विद्वान् विश्वेभिः सूनो सहसो यजत्रैः ।
ये अग्निजिह्वा ऋतसाप आसुर्ये मनुं चक्रुरुपरं दसाय ॥ ११ ॥

1. महः मूको. 2-2. ज्ञातिः आसन्नः वि; ज्ञातेऽस्मभ्यम् क; ज्ञातस्मभ्यम् अर्प. 3. "देवतेव" मूको. 4. मास्ति मूको. 5. "तः मूको.

नु । मे । आ । वाचम् । उप । याहि । विद्वान् । विश्वेभिः । सूनो इति । सहसः । यजत्रैः ।
ये । अग्निऽजिह्वाः । ऋतऽसापः । आसुः । ये । मनुम् । चक्रुः । उपरम् । दसाय ॥ ११ ॥

वेङ्कट० क्षिप्रं मदीयाम् वाचम् उप आ गच्छ जानन् सर्वैर्देवैः हे बलस्य पुत्र[1]। ये देवा अग्न्यास्या यज्ञस्पृशो भवन्ति, ये वा मनुष्य कुर्वन्ति उत्तमम् अवस्थितं शत्रूणामुपक्षपणाय ॥ ११ ॥

स नो बोधि पुरएता सुगेषूत दुर्गेषु पथिकृद् विदानः ।
ये अश्रमास उरवो वहिष्ठास्तेभिर्न इन्द्राभि वक्षि वाजम् ॥ १२ ॥

सः । नः । बोधि । पुरःऽएता । सुऽगेषु । उत । दुःऽगेषु । पथिऽकृत् । विदानः ।
ये । अश्रमासः । उरवः । वहिष्ठाः । तेभिः । नः । इन्द्र । अभि । वक्षि । वाजम् ॥ १२ ॥

वेङ्कट० ॥ अस्माकं बुध्यस्व पुरोगन्ता सुगेषु दुर्गेषु च पथिषु पथां कर्ता विद्वान् पथः । ये अश्रमा आन्तिमगच्छन्तः उरवः[2] वोढृतमा अश्वाः, तेभिः इन्द्र! अस्माकं सङ्ग्रामम् अभि वह ॥ १२ ॥

[3]इति चतुर्थाष्टके पञ्चमाध्याये द्वादशो वर्गः[3] ॥

## [२२]

भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ।

य एक इद्धव्यश्चर्षणीनामिन्द्रं तं गीर्भिरभ्यर्च आभिः ।
यः पत्यते वृषभो वृष्ण्यावान्त्सत्यः सत्वा पुरुमायः सहस्वान् ॥ १ ॥

यः । एकः । इत् । हव्यः । चर्षणीनाम् । इन्द्रम् । तम् । गीःऽभिः । अभि । अर्चे । आभिः ।
यः । पत्यते । वृषभः । वृष्ण्यऽवान् । सत्यः । सत्वा । पुरुऽमायः । सहस्वान् ॥ १ ॥

वेङ्कट० यः एकः एव आह्वातव्यः मनुष्याणाम्, इन्द्रम् तम् आभिः स्तुतिभिः अभि स्तौमि । यः पतति स्तोतॄन् वर्षिता वीर्यवान् सत्यकर्मा सादयिता बहुप्रज्ञः बलवान् ॥ १ ॥

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः ।
नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ॥ २ ॥

तम् । ऊँ इति । नः । पूर्वे । पितरः । नवऽग्वाः । सप्त । विप्रासः । अभि । वाजयन्तः ।
नक्षत्ऽदाभम् । ततुरिम् । पर्वतेऽस्थाम् । अद्रोघऽवाचम् । मतिऽभिः । शविष्ठम् ॥ २ ॥

वेङ्कट० तम् एव अस्माकम् पितरः पूर्वे सप्त विप्राः [4]अङ्गिरसः अभि अर्चन्ति अन्नमिच्छन्तः व्याप्तारम्-

---

१ नास्ति वि॰ ... २ नास्ति मूको. ३-३ नास्ति मूको.

सुराणां दम्भितारम्। तरणशीलं मेधस्थितम्[1] अनतिक्रमणीयवचनं स्तुतिभिः बलवत्तमम् ॥ २ ॥

तमी॑महु इन्द्र॑मस्य रा॒यः पु॑रु॒वीर॑स्य नृ॒वतः॑ पुरु॒क्षोः ।
यो अस्कृ॑धोयुर॒जरः॒ स्व॑र्वा॒न् तमा भ॑र हरिवो माद॒यध्यै॑ ॥ ३ ॥

तम् । ई॒महे । इन्द्र॑म् । अ॒स्य । रा॒यः । पु॒रु॒ऽवीर॑स्य । नृ॒ऽवतः॑ । पु॒रु॒ऽक्षोः ।
यः । अस्कृ॑धोयुः । अ॒जरः॑ । स्वः॑ऽवान् । तम् । आ । भ॒र । ह॒रि॒ऽवः॒ । मा॒द॒यध्यै॑ ॥ ३ ॥

वेङ्कट० तम् याचामहे इन्द्रम् इमं रयिं बहुवीरं पुरुषवन्तं बहुशब्दम्, यः अस्कृधोयुः, यत्र यास्कः—'नक्षत्रामम् अस्कुधानत्रामम्। अस्यकमेन कन्नोतीति वा' । ××× अस्कृधोयुरकृध्वायुः । कृध्विति ह्रस्वनाम । निकृत्तं भवति' (या ६,३) इति, अजरः स्वर्वान्। तम् रयिम् आ भर हे हरिवः! मादयितुम् अस्मान् ॥ ३ ॥

तन्नो॒ वि वो॑चो॒ यदि॑ ते पु॒रा चि॑ज्जरि॒तार॑ आन॒शुः सु॒म्नमि॑न्द्र ।
कस्ते॑ भा॒गः किं वयो॑ दुध्र खिद्वः॒ पुरु॑हूत पुरूवसोऽसुर॒घ्नः ॥ ४ ॥

तत् । नः॒ । वि । वो॒चः॒ । यदि॑ । ते॒ । पु॒रा । चि॒त् । ज॒रि॒तारः॑ । आ॒न॒शुः । सु॒म्नम् । इ॒न्द्र॒ ।
कः । ते॒ । भा॒गः । किम् । वयः॑ । दु॒ध्र॒ । खि॒द्वः॒ । पुरु॑ऽहूत । पु॒रु॒व॒सो॒ इति॑ पुरुऽवसो । अ॒सु॒र॒ऽघ्नः ॥

वेङ्कट० तत् अस्माकं विविच्य ब्रूहि, यदि ते पूर्वस्मिन् काले स्तोतारः आनशुः सुखम् इन्द्र! कः तव 'सुखहेतुः भागः', किम् चान्नम् हे दुर्धर! शत्रूणाम् खेदयितः! पुरुहूत! बहुधन! असुराणां हन्तः ॥ ४ ॥

तं पृ॒च्छन्ती॒ वज्र॑हस्तं रथे॒ष्ठामिन्द्रं॒ वेपी॒ वक्व॑री॒ यस्य॒ नू गीः ।
तु॒वि॒ग्रा॒भं तु॑वि॒कू॒र्मिं र॑भो॒दां गा॒तुमि॑षे॒ नक्ष॑ते॒ तुम्र॒मच्छ॑ ॥ ५ ॥

तम् । पृ॒च्छन्ती॑ । वज्र॑ऽहस्तम् । र॒थे॒ऽस्थाम् । इन्द्र॑म् । वेपी॑ । वक्व॑री । यस्य॑ । नु । गीः ।
तु॒वि॒ऽग्रा॒भम् । तु॒वि॒ऽकू॒र्मिम् । र॒भः॒ऽदाम् । गा॒तुम् । इ॒षे॒ । नक्ष॑ते । तुम्र॑म् । अच्छ॑ ॥ ५ ॥

वेङ्कट० तम् इन्द्रम् पृच्छन्ती, क्व वर्तत इति प्रश्नः, वज्रहस्तम् रथे स्थातारं बहूनां ग्रहीतारं बहूनां कर्तारं बलस्य दातारं गन्तव्यमिच्छति। अभिगच्छति प्रेरयितारम्। कमित्याह—इन्द्रम्। वेपनशीला उच्यमाना स्तुतिः यस्य स्तोतृभिः क्षिप्रम् अभिगच्छतीति ॥ ५ ॥

"इति चतुर्थाष्टके षष्ठाध्याये त्रयोदशो वर्गः" ॥

अ॒या ह॒ त्यं मा॒यया॑ वावृधा॒नं म॑नो॒जुवा॑ स्वतवः॒ पर्व॑तेन ।
अच्यु॑ता चिद्वीळि॒ता स्वो॑जो रु॒जो वि दृ॒ळ्हा धृ॑ष॒ता वि॑रप्शिन् ॥ ६ ॥

---

१. मेघे स्थि° वपं. २. नास्ति मूको. ३-३. °हेतुः भागं वि°; °हेतुभगः ब; °हेतुभागं वपं. ४-४. नास्ति मूको.

अया । ह । त्यम् । मायया । ववृधानम् । मनःऽजुवा । स्वऽतवः । पर्वतेन ।
अच्युता । चित् । वीळिता । सुऽओजः । रुजः । वि । दृळ्हा । धृषता । विरप्शिन् ॥ ६ ॥

वेङ्कट० अनया खलु तम् मायया वर्धमानं वृत्रं मनोवेगेन वज्रेण हे स्वभूतवेग! वि रुजः, अच्युतानि दृढानि तस्य पुराणि च शोभनबल! धर्षकेण[1] दृढानि महन्! ॥ ६ ॥

तं वो धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नवत्परितंसयध्यै ।
स नो वक्षदनिमानः सुवह्नेन्द्रो विश्वान्यति दुर्गहाणि ॥ ७ ॥

तम् । वः । धिया । नव्यस्या । शविष्ठम् । प्रत्नम् । प्रत्नऽवत् । परिऽतंसयध्यै ।
सः । नः । वक्षत् । अनिऽमानः । सुऽवह्मा । इन्द्रः । विश्वानि । अति । दुःऽगहानि ॥ ७ ॥

वेङ्कट० तम् यूयं स्तुत्या नवतरया बलवत्तरम् प्रत्नम्, यथा प्रत्ना ऋषयः पर्यगृह्णन्, तथा परितंसयितुम् इच्छत । सः अस्मान् अति वहतु अमात्रः सुष्ठु वोढा इन्द्रः विश्वानि दुःखेन गाहितव्यानि ॥ ७ ॥

आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽन्तरिक्षा ।
तपा वृषन्विश्वतः शोचिषा तान्ब्रह्मद्विषे शोचय क्षामपश्च ॥ ८ ॥

आ । जनाय । द्रुह्वणे । पार्थिवानि । दिव्यानि । दीपयः । अन्तरिक्षा ।
तप । वृषन् । विश्वतः । शोचिषा । तान् । ब्रह्मऽद्विषे । शोचय । क्षाम् । अपः । च ॥ ८ ॥

वेङ्कट० आ दीपय भवतस्य मनुष्याणां द्रोग्धे राक्षसजनाय दिव्यानि अन्तरिक्ष्याणि[2] पार्थिवानि च स्थानानि, यथा राक्षसजनस्तेषु न तिष्ठेत् । तप च तान् वर्षितः! तेजसा सर्वतः । ब्रह्मद्विषे शोचय पृथिवीम् अन्तरिक्षं च[3] ॥ ८ ॥

भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेषसंदृक् ।
धिष्व वज्रं दक्षिण इन्द्र हस्ते विश्वा अजुर्य दयसे वि मायाः ॥ ९ ॥

भुवः । जनस्य । दिव्यस्य । राजा । पार्थिवस्य । जगतः । त्वेषऽसंदृक् ।
धिष्व । वज्रम् । दक्षिणे । इन्द्र । हस्ते । विश्वाः । अजुर्य । दयसे । वि । मायाः ॥ ९ ॥

वेङ्कट० भवसि जनस्य दिवि भवस्य राजा, तथा पार्थिवस्य च, जङ्गमस्य च हे दीप्तसन्दर्शन! । धारय वज्रम् इन्द्र! अजुर्य![4] हस्ते दक्षिणे, विश्वाः च शत्रूणाम् मायाः क्षपयेति ॥ ९ ॥

आ संयतमिन्द्र णः स्वस्तिं शत्रुतूर्याय बृहतीममृध्राम् ।
यया दासान्यार्याणि वृत्रा करो वज्रिन्त्सुतुका नाहुषाणि ॥ १० ॥

---

१. अधृष्टेन मूको.   २. अन्त° दि° रूपं.   ३. नेति वि°.   ४. नास्ति मूको.

आ । सम्ऽयतम् । इन्द्र । नः । स्वस्तिम् । शत्रुऽतूर्याय । बृहतीम् । अमृध्राम् ।
यया । दासानि । आर्याणि । वृत्रा । करः । वज्रिन् । सुऽतुका । नाहुषाणि ॥ १० ॥

वेङ्कट० आ कुरु इन्द्र! अस्माकं सङ्ग्रामम् अविनाशहेतुं शत्रूणां तरणाय महान्तम् अहिंसितम्। येन सङ्ग्रामेण 'असुरैश्च आर्यैश्च' नहुषैर्मनुष्यैरस्माकम् उपपादितानि वृत्राणि सुतुकानि करोषि। सुकस्तुजतेर्हिंसाकर्मणः' । अनायासेन हिंसितानि करोषीति ॥ १० ॥

स नो नियुद्भिः पुरुहूत वेधो विश्ववाराभिरा गहि प्रयज्यो ।
न या अदेवो वरते न देव आभिर्याहि तूयमा मद्र्यद्रिक् ॥ ११ ॥

सः । नः । नियुत्ऽभिः । पुरुऽहूत । वेधः । विश्वऽवाराभिः । आ । गहि । प्रयज्यो इति प्रऽयज्यो ।
न । याः । अदेवः । वरते । न । देवः । आ । आभिः । याहि । तूयम् । आ । मद्र्यद्रिक् ॥ ११ ॥

वेङ्कट० सः अस्मान् आ गच्छ अश्वैः विश्ववरणीयैः पुरुहूत! विधातः! प्रकर्षेण यष्टव्य!। न याः नियुतः वारयति असुरः, न अपि देवः, आभिः नियुद्भिः क्षिप्रम् आ याहि मदभिमुखम् ॥ ११ ॥

[1]इति चतुर्थाष्टके पञ्चाध्याये चतुर्दशो वर्गः[1] ॥

[ २३ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

सुत इत् त्वं निमिश्ल इन्द्र सोमे स्तोमे ब्रह्मणि शस्यमान उक्थे ।
यद् वा युक्ताभ्यां मघवन् हरिभ्यां बिभ्रद् वज्रं बाह्वोरिन्द्र यासि ॥ १ ॥

सुते । इत् । त्वम् । निऽमिश्लः । इन्द्र । सोमे । स्तोमे । ब्रह्मणि । शस्यमाने । उक्थे ।
यत् । वा । युक्ताभ्याम् । मघऽवन् । हरिऽभ्याम् । बिभ्रत् । वज्रम् । बाह्वोः । इन्द्र । यासि ॥ १ ॥

वेङ्कट० सुते एव सोमे त्वम् इन्द्र! आत्मानम् अभिमुखं करोषि, बृहति वा स्तोमे गीयमाने, उक्थे वा शस्यमाने। यद् वा युद्धार्थं गच्छसीति वदति। यदा इति स्पष्टम् ॥ १ ॥

यद् वा दिवि पार्ये सुष्विमिन्द्र वृत्रहत्येऽवसि शूरसातौ ।
यद् वा दक्षस्य बिभ्युषो अबिभ्यदरन्धयः शर्धत इन्द्र दस्यून् ॥ २ ॥

यत् । वा । दिवि । पार्ये । सुस्विम् । इन्द्र । वृत्रऽहत्ये । अवसि । शूरऽसातौ ।
यत् । वा । दक्षस्य । बिभ्युषः । अबिभ्यत् । अरन्धयः । शर्धतः । इन्द्र । दस्यून् ॥ २ ॥

वेङ्कट० इन्द्र! यदा वा "दिवसे अन्तिमे" युद्धस्य अभिषोतारम् पुत्रं[2] सूर्येण पदस्थाने सङ्ग्रामे रक्षसि

1-1. सुरैरासुरैश्च वि॰ ख॰; असुरान्नार्यांश्च क. 2. "स्ताव" मूको. 3-3. नास्ति मूको. 4. दिवसे ख. 5. नास्ति वि॰ ख॰.

शूरैः सम्मजनीये, यदा वा दक्षस्य प्रजापतेर्दस्युभ्यः बिभ्युषः अबिभयत्, यान् दस्यून् वेगं कुर्वाणान् वशम् अनयः, तदा [1]चास्मानम् अभिमुखं अयासि[1] ॥ २ ॥

पाता सुतमिन्द्रो अस्तु सोमं प्रणेनीरुग्रो जरितारमूती ।
कर्ता वीराय सुष्वय उ लोकं दाता वसु स्तुवते कीरये चित् ॥ ३ ॥

पाता । सुतम् । इन्द्रः । अस्तु । सोमम् । प्रऽनेनीः । उग्रः । जरितारम् । ऊती ।
कर्ता । वीराय । सुस्वये । ऊँ इति । लोकम् । दाता । वसु । स्तुवते । कीरये । चित् ॥३॥

वेङ्कट० सुतम् सोमम् इन्द्रः पाता भवतु तत्परीत्येन, तथा स्तोतारं चात्मनः प्रणयतु रक्षणेन उद्गूर्णः । कर्ता वीराय सुन्वानाय लोकम्, दाता धनम् स्तुवते स्तोत्रेऽस्त्विति ॥ ३ ॥

गन्तेयान्ति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः ।
कर्ता वीरं नर्यं सर्ववीरं श्रोता हवं गृणतः स्तोमवाहाः ॥ ४ ॥

गन्ता । इयन्ति । सवना । हरिऽभ्याम् । बभ्रिः । वज्रम् । पपिः । सोमम् । ददिः । गाः ।
कर्ता । वीरम् । नर्यम् । सर्वऽवीरम् । श्रोता । हवम् । गृणतः । स्तोमऽवाहाः ॥ ४ ॥

वेङ्कट० गन्ता[2] त्रीणि सवनानि अश्वाभ्याम् । बभ्रिः इति स्पष्टम् । कर्ता पुत्रं नृहितम् सर्ववीरम्, श्रोता आह्वानं स्तुवतः स्तोत्रैरुह्यमानः ॥ ४ ॥

अस्मै वयं यद् वावान तद् विविष्म इन्द्राय यो नः प्रदिवो अपस्कः ।
सुते सोमे स्तुमसि शंसदुक्थेन्द्राय ब्रह्म वर्धनं यथासत् ॥ ५ ॥

अस्मै । वयम् । यत् । ववान । तत् । विविष्मः । इन्द्राय । यः । नः । प्रऽदिवः । अपः । करिति कः ।
सुते । सोमे । स्तुमसि । शंसत् । उक्था । इन्द्राय । ब्रह्म । वर्धनम् । यथा । असत् ॥ ५ ॥

वेङ्कट० इन्द्रप्रीत्यर्थम् वयम् यत् इन्द्रो भजते '[3]तत् व्याप्नुमः[3]' परिगृहीमः इन्द्राय, यः पुराणः उदकानि करोति । सुते सोमे स्तुमः इमम् । अथ तदर्थं होता च उक्थानि शंसतु यथा इन्द्राय स्तोत्रम् वर्धनम् भवति ॥ ५ ॥

[4]इति चतुर्थाष्टके षष्ठाध्याये पञ्चदशो वर्गः[4] ॥

ब्रह्माणि हि चकृषे वर्धनानि तावत् त इन्द्र मतिभिर्विविष्मः ।
सुते सोमे सुतपाः शन्तमानि राण्ड्या क्रियास्म वक्षणानि यज्ञैः ॥ ६ ॥

ब्रह्माणि । हि । चकृषे । । वर्धनानि । तावत् । ते । इन्द्र । मतिऽभिः । विविष्मः ।
सुते । सोमे । सुतऽपाः । शम्ऽतमानि । राण्ड्या । क्रियास्म । वक्षणानि । यज्ञैः ॥ ६ ॥

---

1-1. च न मिश्रयति मूको. 2. नास्ति स छपे. 3-3. तानि मन्तुमः छ, त व्या° एप.
4-4. नास्ति मूको.

वेङ्कट० स्तोत्राणि हि करोषि आत्मनः वर्धनानि । यावत् तव पर्याप्तं भवति स्तोत्रम् तावत् ते इन्द्र! बुद्धिभिः परिगृह्णीमः । सुते सोमे हे सुतस्य पातः! सुखतमानि रमणीयानि कुर्मस्तव वाहकानि ब्रह्माणि हविर्भिः सह ॥ ६ ॥

स नो॑ बोधि पुरो॒ळाशं॒ ररा॑णः पिबा॒ तु सोमं॒ गोऋ॑जीकमिन्द्र ।
एदं ब॒र्हिर्यज॑मानस्य सीदो॒रुं कृ॑धि त्वाय॒त उ॑ लो॒कम् ॥ ७ ॥

सः॑ । नः॒ । बो॒धि॒ । पु॒रो॒ळाश॑म् । ररा॑णः । पिब॑ । तु । सोम॑म् । गोऽऋ॑जीकम् । इ॒न्द्र॒ ।
आ । इ॒दम् । ब॒र्हिः । यज॑मानस्य । सी॒द॒ । उ॒रुम् । कृ॒धि॒ । त्वा॒ऽय॒तः । उँ॒ इति॑ । लो॒कम् ॥ ७ ॥

वेङ्कट० सः अस्मदीयं बुध्यस्व पुरोडाशम् रममाणः । पिब इन्द्र! सोमम् गोमिश्रणम् ऋजुतमं पयसा मिश्रितम् । आ सीद इदम् बर्हिः यजमानस्य । विस्तीर्णं कुरु त्वत्कामस्य मम लोकम् ॥ ७ ॥

स मन्द॑स्वा॒ ह्यनु॒ जोष॑मुग्र॒ प्र त्वा॑ य॒ज्ञास॑ इ॒मे अ॑श्नुवन्तु ।
प्रेमे हवा॑सः पुरुहू॒तम॒स्मे आ त्वे॒यं धीरव॑स इन्द्र यम्याः ॥ ८ ॥

सः । म॒न्द॒स्व॒ । हि । अनु॑ । जोष॑म् । उ॒ग्र॒ । प्र । त्वा॒ । य॒ज्ञासः॑ । इ॒मे । अ॒श्नु॒व॒न्तु॒ ।
प्र । इ॒मे । हवा॑सः । पु॒रु॒ऽहू॒तम् । अ॒स्मे इति॑ । आ । त्वा॒ । इ॒यम् । धीः । अव॑से । इ॒न्द्र॒ । य॒म्याः॒ ॥

वेङ्कट० सः पर्याप्तम् अनु मन्दस्व उद्गूर्ण! । त्वाम् इमे सोमाः प्राप्नुवन्तु च इमानि स्तोत्राणि अस्मदीयानि । आ यच्छतु त्वाम् इन्द्र! कर्म अस्मदीयं रक्षणाय अस्माकम् ॥ ८ ॥

तं वः॑ सखायः॒ सं यथा॑ सु॒तेषु॒ सोमे॑भि॒रीं पृणता भो॒जमिन्द्र॑म् ।
कु॒वित् तस्मा॒ अस॑ति नो॒ भरा॑य॒ न सुष्वि॒मिन्द्रोऽव॑से मृधाति ॥ ९ ॥

तम् । वः॒ । स॒खा॒यः॒ । सम् । यथा॑ । सु॒तेषु॑ । सोमे॑भिः । ई॒म् । पृ॒ण॒त॒ । भो॒जम् । इन्द्र॑म् ।
कु॒वित् । तस्मै॑ । अस॑ति । नः॒ । भरा॑य । न । सु॒स्वि॒म् । इन्द्रः॑ । अव॑से । मृ॒धा॒ति॒ ॥ ९ ॥

वेङ्कट० तम् यूयं हे सखायः! । यथा अन्येषु सोमेषु पूर्वे पूरयामासुः, एवमेनं भोजयितारम् इन्द्रम् सोमैः[1] सम् पूरयत । बहु अस्माकं विधत्त इन्द्रस्य भरणार्थम् । न च सुष्विम् इन्द्रः रक्षितुं क्लिष्टो[2] भवति, अनायासेन रक्षति ॥ ९ ॥

ए॒वेदिन्द्रः॑ सु॒ते अ॑स्तावि॒ सोमे॑ भ॒रद्वा॑जेषु॒ क्षय॒दिन्म॒घोनः॑ ।
अस॒द् यथा॑ जरि॒त्र उ॒त सू॒रिरिन्द्रो॑ रा॒यो वि॒श्ववा॑रस्य दा॒ता ॥ १० ॥

ए॒व । इत् । इन्द्रः॑ । सु॒ते । अ॒स्ता॒वि॒ । सोमे॑ । भ॒रत्ऽवा॑जेषु । क्षय॑त् । इत् । म॒घोनः॑ ।
अस॑त् । यथा॑ । ज॒रि॒त्रे । उ॒त । सू॒रिः । इन्द्रः॑ । रा॒यः । वि॒श्वऽवा॑रस्य । दा॒ता ॥ १० ॥

१. नास्ति मूको. २. क्लि° वि° मूको.

वेङ्कट० एवम् इन्द्रः सुते सोमे स्तुतः । भरद्वाजेषु नित्यसखेव सोमः[1] इन्द्रस्य भवति । यथा सूरिः इन्द्रः जरित्रे भवति[2] धनस्य विधेर्वरणीयस्य दाता, [3]स तथा अस्मानि इति[3] ॥ १० ॥

[4]इति चतुर्थाष्टके पञ्चमाध्याये षोडशो वर्गः[4] ॥

[ २४ ]

[4]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[4] ।

वृषा मद इन्द्रे श्लोक उक्था सचा सोमेषु सुतपा ऋजीषी ।
अर्चत्र्यो मघवा नृभ्य उक्थैर्द्युक्षो राजा गिरामक्षितोतिः ॥ १ ॥

वृषा । मदः । इन्द्रे । श्लोकः । उक्था । सचा । सोमेषु । सुतऽपाः । ऋजीषी ।
अर्चत्र्यः । मघऽवा । नृऽभ्यः । उक्थैः । द्युक्षः । राजा । गिराम् । अक्षितऽऊतिः ॥ १ ॥

वेङ्कट० वर्षिता सोमः स्तोत्रम् उक्थानि च इन्द्रे सङ्गच्छन्ते । [5]सङ्गतो भवति[5] सोमेषु सुतस्य पाता इन्द्रः । ऋजीषवान् अर्चनीयो मघवान् मनुष्येभ्यः शस्त्रैर्दीप्तः स्तुतीनाम् राजा अक्षीणरक्षणः । [6]अर्चत्रम् अर्चनं तदर्हस्तमोक्तः[6] ॥ १ ॥

तुतुरिर्वीरो नर्यो विचेताः श्रोता हवं गृणत उर्व्यूतिः ।
वसुः शंसो नरां कारुधाया वाजी स्तुतो विदथे दाति वाजम् ॥ २ ॥

तुतुरिः । वीरः । नर्यः । विऽचेताः । श्रोता । हवम् । गृणतः । उर्विऽऊतिः ।
वसुः । शंसः । नराम् । कारुऽधायाः । वाजी । स्तुतः । विदथे । दाति । वाजम् ॥ २ ॥

वेङ्कट० सङ्ग्रामम् तूतुरिः वीरः नृहितः विशिष्टचेताः स्तुवतः स्तोत्रम् श्रोता विस्तीर्णरक्षणः वासयिता नराम् शंसनीयः स्तोतॄन्[7] धर्ता बलवान् स्तुतः यज्ञे प्रयच्छति अन्नम् ॥ २ ॥

अक्षो न चक्र्योः शूर बृहन् प्र ते मह्ना रिरिचे रोदस्योः ।
वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिन्द्र पूर्वीः ॥ ३ ॥

अक्षः । न । चक्र्योः । शूर । बृहन् । प्र । ते । मह्ना । रिरिचे । रोदस्योः ।
वृक्षस्य । नु । ते । पुरुऽहूत । वयाः । वि । ऊतयः । रुरुहुः । इन्द्र । पूर्वीः ॥ ३ ॥

वेङ्कट० यथा महान् अक्षः चक्रयोर्निर्गच्छति एवं द्यावापृथिवी भित्त्वा तव महत्त्वम् उभयतो निर्जगाम । वृक्षस्य इव ते पुरुहूत शाखाः[8] ऊतयः वि रुरुहुः इन्द्र बह्व्यः ॥ ३ ॥

१. सोमम् मूको. २. °ति सः मूको. ३-३. त्वामाप्ताविति मूको. ४-४. नास्ति मूको.
५-५. संगता भवन्ति मूको. ६-६. अर्चमर्चनं तदह° मूको. ७. स्तोतॄणां ध. ८. शाखास्त्र मूको.

शचीवतस्ते पुरुशाक शाका गवामिव स्रुतयः संचरणीः ।
वत्सानां न तन्तयस्त इन्द्र दामन्वन्तो अदामानः सुदामन् ॥ ४ ॥

शचीऽवतः । ते । पुरुऽशाक । शाकाः । गवाम्ऽइव । स्रुतयः । सम्ऽचरणीः ।
वत्सानाम् । न । तन्तयः । ते । इन्द्र । दामन्ऽवन्तः । अदामानः । सुऽदामन् ॥ ४ ॥

वेङ्कट० प्रज्ञावतः ते बहुसहाय! सहायाः भवन्ति, गवाम् इव सञ्चरणाधिकरणभूताः मार्गाः गोभिः परिवृताः भवन्ति, त्वां यजन्त इति। वत्सानाम् इव तन्तयः शत्रूणां बन्धनाय दामन्वन्तः तव शाकाः स्वयमबन्धनाः[1] भवन्ति इन्द्र![2] शोभनदान! शोभनबन्धन! इति ॥ ४ ॥

अन्यदद्य कर्वरमन्यदु श्वोऽसच्च सन्मुहुराचक्रिरिन्द्रः ।
मित्रो नो अत्र वरुणश्च पूषार्यो वशस्य पर्येतास्ति ॥ ५ ॥

अन्यत् । अद्य । कर्वरम् । अन्यत् । ॐ इति । श्वः । असत् । च । सत् । मुहुः । आऽचक्रिः । इन्द्रः ।
मित्रः । नः । अत्र । वरुणः । च । पूषा । अर्यः । वशस्य । परिऽएता । अस्ति ॥ ५ ॥

वेङ्कट० अन्यत् अद्य कर्म, अन्यत् एव श्वः। अकल्याणम् च शुभम् मित्रविषयम् मुहुः आभिमुख्येन करोति इन्द्रः। तस्मिंस्तस्मिन् कर्मणि ईश्वरस्वेन्द्रस्य मित्रादिदेव ईश्वरोऽभवन्[3] परितो गन्ता भवति साहाय्यार्थम् ॥ ५ ॥

"इति चतुर्थाष्टके षष्ठाध्याये सप्तदशो वर्गः" ॥

वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरिन्द्रानयन्त यज्ञैः ।
तं त्वाभिः सुष्टुतिभिर्वाजयन्त आजिं न जग्मुर्गिर्वाहो अश्वाः ॥ ६ ॥

वि । त्वत् । आपः । न । पर्वतस्य । पृष्ठात् । उक्थेभिः । इन्द्र । अनयन्त । यज्ञैः ।
तम् । त्वा । आभिः । सुस्तुतिऽभिः । वाजयन्तः । आजिम् । न । जग्मुः । गिर्वाहः । अश्वाः ॥६॥

वेङ्कट० वि अनयन् त्वत्तः कामान् स्तोत्रैर्हविर्भिश्च उदकानीव मेघस्य पृष्ठात् इन्द्र![4] । तम् त्वा आभिः सुष्टुतिभिः बलिनं कुर्वाणाः स्तोतारो गच्छन्ति सङ्ग्राममिव अश्वाः हे गोभिस्सम्भाव! ॥ ६ ॥

न यं जरन्ति शरदो न मासा न द्याव इन्द्रमवकर्शयन्ति ।
वृद्धस्य चिद् वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमाना ॥ ७ ॥

न । यम् । जरन्ति । शरदः । न । मासाः । न । द्यावः । इन्द्रम् । अवऽकर्शयन्ति ।
वृद्धस्य । चित् । वर्धताम् । अस्य । तनूः । स्तोमेभिः । उक्थैः । च । शस्यमाना ॥ ७ ॥

वेङ्कट० न यम् जरयन्ति मासाः शरदः च। यं च इन्द्रम्[4] तेजांसि न अवकर्शयन्ति। वृद्धस्य अपि वर्धताम् अस्य[5] तनूः[5] स्तोमैः उक्थैः च शस्यमाना ॥ ७ ॥

---

१. °बन्धना इ हपं. २. नास्ति मूको. ३. °वत् मूको. ४-४. नास्ति मूको. ५. तनूः वि° हपं.

न वीळ्वे नमते न स्थिराय न शर्धते दस्युजूताय स्तवान् ।
अज्रा इन्द्रस्य गिरयश्चिदृष्वा गम्भीरे चिद् भवति गाधमस्मै ॥ ८ ॥

न । वीळवे । नमते । न । स्थिराय । न । शर्धते । दस्युऽजूताय । स्तवान् ।
अज्राः । इन्द्रस्य । गिरयः । चित् । ऋष्वाः । गम्भीरे । चित् । भवति । गाधम् । अस्मै ॥ ८ ॥

वेङ्कट० न दृढाय नमते, न च स्थिराय, न चोत्साहमानाय दस्युभिः परिवृताय स्तवान्[1] स्तूयमानः[2]। अवक्षेपणीयाः[3] इन्द्रस्य महान्तः पर्वता अपि भवन्ति। अगाधेऽपि तीर्थे गाधम् इन्द्राय भवति इच्छते ॥ ८ ॥

गम्भीरेण न उरुणामत्रिन् प्रेषो यन्धि सुतपावन् वाजान् ।
स्था ऊ षु ऊर्ध्व ऊती अरिषण्यन्नक्तोर्व्युष्टौ परितक्म्यायाम् ॥ ९ ॥

गम्भीरेण । नः । उरुणा । अमत्रिन् । प्र । इषः । यन्धि । सुतऽपावन् । वाजान् ।
स्थाः । ऊँ इति । सु । ऊर्ध्वः । ऊती । अरिषण्यन् । अक्तोः । विऽउष्टौ । परिऽतक्म्यायाम् ॥९॥

वेङ्कट० हे अमत्रवन्! अस्मभ्यम् अगाधेन विस्तीर्णेन प्र यच्छ अन्नानि हे सुतस्य पातः! "बलानि च"। ऊर्ध्वः तिष्ठ अहिंसन् रक्षणाय अस्माकं रात्रेः व्युष्टौ अह्नि परितक्म्यायाम् रात्रौ च ॥ ९ ॥

सचस्व नायमवसे अभीक इतो वा तमिन्द्र पाहि रिषः ।
अमा चैनमरण्ये पाहि रिषो मदेम शतहिमाः सुवीराः ॥ १० ॥

सचस्व । नायम् । अवसे । अभीके । इतः । वा । तम् । इन्द्र । पाहि । रिषः ।
अमा । च । एनम् । अरण्ये । पाहि । रिषः । मदेम । शतऽहिमाः । सुऽवीराः ॥ १० ॥

वेङ्कट० "हे इन्द्र!" सेवस्व नेतारं रक्षणाय युद्धे, तथा इतः च हिंसितुः तम् रक्ष। तथा गृहे अरण्ये च एनम् रक्ष हिंसितुः। मदेम इति गतम् ( ऋ ६,१०,१५ द्र० ) ॥ १० ॥

"इति चतुर्थाष्टके पञ्चाध्याये अष्टादशो वर्गः" ॥

[ २५ ]

"भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः"।

या त ऊतिरवमा या परमा या मध्यमेन्द्र शुष्मिन्नस्ति ।
ताभिरू षु वृत्रहत्येऽवीर्न एभिश्च वाजैर्महान् न उग्र ॥ १ ॥

या । ते । ऊतिः । अवमा । या । परमा । या । मध्यमा । इन्द्र । शुष्मिन् । अस्ति ।
ताभिः । ऊँ इति । सु । वृत्रऽहत्ये । अवीः । नः । एभिः । च । वाजैः । महान् । नः । उग्र ॥

1. स्तोत्रवान् वि॰ अ॰प॰. 2. स्तूयमान ह अ॰प॰. 3. अवक्षे॰ वि॰ अ॰प॰. ४-४. नास्ति मूको.

वेङ्कट० [1]हे बलवन्! इन्द्र![1] अवममध्यमोत्तमानि यानि भवन्ति तव रक्षणानि, तैरस्मान् सङ्ग्रामे सुष्ठु रक्ष, अश्वैः च एभिः महान् अस्मान् उद्गूर्णः[2] ॥ १ ॥

आभिः स्पृधो मिथतीररिषण्यन्नमित्रस्य व्यथया मन्युमिन्द्र ।
आभिर्विश्वा अभियुजो विषूचीरार्याय विशोऽव तारीर्दासीः ॥ २ ॥

आभिः । स्पृधः । मिथतीः । अरिषण्यन् । अमित्रस्य । व्यथय । मन्युम् । इन्द्र ।
आभिः । विश्वाः । अभिऽयुजः । विषूचीः । आर्याय । विशः । अव । तारीः । दासीः ॥ २ ॥

वेङ्कट० आभिः स्तुतिभिः स्पृधः आक्रोशन्तीः अहिंसन् अस्मान् अमित्रस्य व्यथय इन्द्र![1], तथा मन्युम् च तस्य व्यथय । आभिः विश्वाः अभियोक्त्रीः विष्वगञ्चनाः आर्याय विशः विनाशय आसुरीः ॥ २ ॥

इन्द्र जामय उत येऽजामयोऽर्वाचीनासो वनुषो युयुज्रे ।
त्वमेषां विथुरा शवांसि जहि वृष्ण्यानि कृणुही पराचः ॥ ३ ॥

इन्द्र । जामयः । उत । ये । अजामयः । अर्वाचीनासः । वनुषः । युयुज्रे ।
त्वम् । एषाम् । विथुरा । शवांसि । जहि । वृष्ण्यानि । कृणुहि । पराचः ॥ ३ ॥

वेङ्कट० इन्द्र! ज्ञातयः अपि च ये अज्ञातयः अर्वाचीनाः अभिमुखाः हिंसाः योजयन्ति, त्वम् एषाम् विधुराणि बाधकानि बलानि जहि वीर्याणि च, कुरु च तान् पराङ्मुखान् ॥ ३ ॥

शूरो वा शूरं वनते शरीरैस्तनूरुचा तरुषि यत् कृण्वैते ।
तोके वा गोषु तनये यदप्सु वि क्रन्दसी उर्वरासु ब्रवैते ॥ ४ ॥

शूरः । वा । शूरम् । वनते । शरीरैः । तनूऽरुचा । तरुषि । यत् । कृण्वैते इति ।
तोके । वा । गोषु । तनये । यत् । अप्ऽसु । वि । क्रन्दसी इति । उर्वरासु । ब्रवैते इति ॥ ४ ॥

वेङ्कट० शूरः एकम् शूरम्[2] अङ्गैर्भजते, तन्वा रोचमानौ सङ्ग्रामे यदा परस्परं हिंस्तः, यदा वा तोकार्थं क्रन्दमानौ[3] परस्परं वि ब्रूतः परुषाणि ॥ ४ ॥

नहि त्वा शूरो न तुरो न धृष्णुर्न त्वा योधो मन्यमानो युयोध ।
इन्द्र नकिष्ट्वा प्रत्यस्त्येषां विश्वा जातान्यभ्यसि तानि ॥ ५ ॥

नहि । त्वा । शूरः । न । तुरः । न । धृष्णुः । न । त्वा । योधः । मन्यमानः । युयोध ।
इन्द्र । नकिः । त्वा । प्रति । अस्ति । एषाम् । विश्वा । जातानि । अभि । असि । तानि ॥५॥

वेङ्कट० किमत इत्याह । नहि त्वादृशः शूरः, न अपि तरिता, न च धृष्णुः, न च योद्धा मन्यः

---

1-1. नास्ति मूको. २. °भैः मूको. ३. नास्ति मूको. ४. तु. ऋ २,११,८.

मानं कुर्वन् शुष्यति । इन्द्र ! न कश्चित् एषाम् अन्यतमः प्रति भवति त्वाम्, विश्वानि तानि भूतानि त्वम् अभि भवसीति ॥ ५ ॥

[1]इति चतुर्थाष्टके पञ्चाध्याये एकोनविंशो वर्गः[1] ॥

स पत्यत उभयोर्नृम्णमयोर्यदी वेधसः समिथे हवन्ते ।
वृत्रे वा महो नृवति क्षये वा व्यचस्वन्ता यदि वितन्तसैते ॥ ६ ॥

सः । पत्यते । उभयोः । नृम्णम् । अयोः । यदि । वेधसः । सम्ऽइथे । हवन्ते ।
वृत्रे । वा । महः । नृऽवति । क्षये । वा । व्यचस्वन्ता । यदि । वितन्तसैते इति ॥ ६ ॥

वेङ्कट० सः गच्छति द्यावापृथिव्योः उभयोः बलमूलः, यदि एनं दिव्याः पार्थिवा वा स्तोतारः सङ्ग्रामार्थम् ह्वयन्ते । उपद्रवे वा महति मनुष्ययुक्ते वा यज्ञगृहे व्याप्तिमत्यौ द्यावापृथिव्यौ यदि एनं विस्तारयितुमिच्छतः, तत्र च पत्यते इति ॥ ६ ॥

अध स्मा ते चर्षणयो यदेजानिन्द्र त्रातोत भवा वरूता ।
अस्माकासो ये नृतमासो अर्य इन्द्र सूरयो दधिरे पुरो नः ॥ ७ ॥

अध । स्म । ते । चर्षणयः । यत् । एजान् । इन्द्र । त्राता । उत । भव । वरूता ।
अस्माकासः । ये । नृऽतमासः । अर्यः । इन्द्र । सूरयः । दधिरे । पुरः । नः ॥ ७ ॥

वेङ्कट० अध खलु तव[2] मनुष्याः यदा सङ्ग्रामार्थं चलन्ति, तदा तेषाम् त्राता भव सम्भक्ता च । अस्मदीयाः ये नेतृतमाः गन्तारः इन्द्र ! प्राज्ञाः अस्मान् पुरः दधिरे तेषामिति ॥ ७ ॥

अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये ॥ ८ ॥

अनु । ते । दायि । महे । इन्द्रियाय । सत्रा । ते । विश्वम् । अनु । वृत्रऽहत्ये ।
अनु । क्षत्रम् । अनु । सहः । यजत्र । इन्द्र । देवेभिः । अनु । ते । नृऽसह्ये ॥ ८ ॥

वेङ्कट० अनु दायि तुभ्यं महद् बलं दृष्ट्वा तदर्थं देवैः करः । तथा सत्यमेव [3]'सर्वं धनं'[3] त्वया वृत्रे हते तुभ्यम् अनु अदायि । तथा त्वयि बलम् अभिभवसामर्थ्यं च दृष्ट्वा अनु अदायि हे यजनीय ! । इन्द्र ! देवैः तथा अनु अदायि तुभ्यं नृणामभिभवे ॥ ८ ॥

एवा नः स्पृधः समजा समत्स्विन्द्र रारन्धि मिथतीरदेवीः ।
विद्याम वस्तोरवसा गृणन्तो भरद्वाजा उत त इन्द्र नूनम् ॥ ९ ॥

---

१-१. नास्ति मूको. २. नास्ति मूको. ३-३. 'सर्वं' मूको.

एव । नः । स्पृधः । सम् । अज । सुमत्ऽसु । इन्द्र । रारन्धि । मिथतीः । अदेवीः ।
विद्याम । वस्तोः । अवसा । गृणन्तः । भरत्ऽवाजाः । उत । ते । इन्द्र । नूनम् ॥ ९ ॥

वेङ्कट० एवम् अस्माकं सम् प्रेरय शत्रून् सङ्ग्रामेषु इन्द्र ! । उपरमय आक्रोशन्तीः आसुरीः प्रजाः । लभेमहि धनं रक्षणार्थं स्तुवन्तः भरद्वाजाः तव इदानीम् इन्द्र ! इति ॥ ९ ॥

'इति चतुर्थाष्टके षष्ठाध्याये विंशो वर्गः' ॥

[ २६ ]

'भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः' ।

श्रुधी न इन्द्र ह्वयामसि त्वा महो वाजस्य सातौ वावृषाणाः ।
सं यद् विशोऽयन्त शूरसाता उग्रं नोऽवः पार्ये अहन् दाः ॥ १ ॥

श्रुधि । नः । इन्द्र । ह्वयामसि । त्वा । महः । वाजस्य । सातौ । ववृषाणाः ।
सम् । यत् । विशः । अयन्त । शूरऽसातौ । उग्रम् । नः । अवः । पार्ये । अहन् । दाः ॥१॥

वेङ्कट० शृणु अस्माकं स्तुतीः इन्द्र ! । ह्वयामसि त्वां[1] महतः वाजस्य लाभार्थं[1] वर्धमानाः । सम् गच्छन्ते यदा शूराः सङ्ग्रामे तदानीम् अन्तिमे अहनि उद्गूर्णं रक्षणम् अस्माकं देहीति ॥ १ ॥

त्वां वाजी हवते वाजिनेयो महो वाजस्य गध्यस्य सातौ ।
त्वां वृत्रेष्विन्द्र सत्पतिं तरुत्रं त्वां चष्टे मुष्टिहा गोषु युध्यन् ॥ २ ॥

त्वाम् । वाजी । हवते । वाजिनेयः । महः । वाजस्य । गध्यस्य । सातौ ।
त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । तरुत्रम् । त्वाम् । चष्टे । मुष्टिऽहा । गोषु । युध्यन् ॥ २ ॥

वेङ्कट० त्वाम् अन्नवान् हविष्मान् भरद्वाजो वाजिन्याः पुत्रः हवते महतः अन्नस्य अभिकाङ्क्षितस्य लाभाय । त्वाम् वृत्रेषु इन्द्र ! सतां पतिं तारकं पश्यति, तथा त्वामेव पश्यति मुष्टिभिः शत्रूणां हन्ता गोनिमित्तम् युध्यन् ॥ २ ॥

त्वं कविं चोदयोऽर्कसातौ त्वं कुत्साय शुष्णं दाशुषे वर्क् ।
त्वं शिरो अमर्मणः पराहन्नतिथिग्वाय शंस्यं करिष्यन् ॥ ३ ॥

त्वम् । कविम् । चोदयः । अर्कऽसातौ । त्वम् । कुत्साय । शुष्णम् । दाशुषे । वर्क् ।
त्वम् । शिरः । अमर्मणः । परा । अहन् । अतिथिऽग्वाय । शंस्यम् । करिष्यन् ॥ ३ ॥

वेङ्कट० त्वम् कविम् कुत्सम् अचोदयः युद्धे । त्वम् च कुत्साय यजमानाय शुष्णम् छित्तवानसि ।

1-1. नास्ति मूको. २. त्वा वि' छपं. ३. लाभाय वि'.

तथा त्वम् तिरोहितमसंस्थानस्य शम्बरस्य शिरः पराहतवानसि दिवोदासाय शंसनीयं सुखम् करिष्यन् ॥ ३ ॥

त्वं रथं प्र भरो योधमृष्वमावो युध्यन्तं वृषभं दशद्युम् ।
त्वं तुग्रं वेतसवे सचाहन् त्वं तुजिं गृणन्तमिन्द्र तूतोः ॥ ४ ॥

त्वम् । रथम् । प्र । भरः । योधम् । ऋष्वम् । आवः । युध्यन्तम् । वृषभम् । दशऽद्युम् ।
त्वम् । तुग्रम् । वेतसवे । सचा । अहन् । त्वम् । तुजिम् । गृणन्तम् । इन्द्र । तूतोरिति तूतोः ॥

वेङ्कट० 'त्वम् एव रथम्' योद्धारं दर्शनीयं प्रहृतवानसि, तथा रक्षितवानसि युध्यन्तम् वर्षितारं दशद्युनामानम् ॥ ४ ॥

त्वं तदुक्थमिन्द्र बर्हणा कः प्र यच्छता सहस्रा शूर दर्षि ।
अव गिरेर्दासं शम्बरं हन् प्रावो दिवोदासं चित्राभिरूती ॥ ५ ॥

त्वम् । तत् । उक्थम् । इन्द्र । बर्हणा । कुरिति कः । प्र । यत् । शता । सहस्रा । शूर । दर्षि ।
अव । गिरेः । दासम् । शम्बरम् । हन् । प्र । आवः । दिवःऽदासम् । चित्राभिः । ऊती ॥ ५ ॥

वेङ्कट० अव अहन् । प्रकर्षेण रक्षितवानसि दिवोदासम् शम्बरसीयं चित्रैः रक्षणैः ॥ ५ ॥

'इति चतुर्थाष्टके पञ्चाध्याये एकविंशो वर्गः' ॥

त्वं श्रद्धाभिर्मन्दसानः सोमैर्दभीतये चुमुरिमिन्द्र सिष्वप् ।
त्वं रजिं पिठीनसे दशस्यन् षष्टिं सहस्रा शच्या सचाहन् ॥ ६ ॥

त्वम् । श्रद्धाभिः । मन्दसानः । सोमैः । दभीतये । चुमुरिम् । इन्द्र । सिस्वप् ।
त्वम् । रजिम् । पिठीनसे । दशस्यन् । षष्टिम् । सहस्रा । शच्या । सचा । अहन् ॥ ६ ॥

वेङ्कट० "हे इन्द्र !" त्वम् सोमैः मन्दसानः दभीतये श्रद्धाभिः[1] श्रद्धया एव चुमुरिम् नाम अस्वापयः अमारयः । त्वम् राज्यं पिठीनसे[2] प्रयच्छन् शत्रूणाम् षष्टिम् सहस्राणि प्रज्ञया सह हतवान्, सहायो वा तस्य भूत्वेति ॥ ६ ॥

अहं चन तत् सूरिभिरानश्यां तव ज्याय इन्द्र सुम्नमोजः ।
त्वया यत् स्तवन्ते सधवीर वीरास्त्रिवरूथेन नहुषा शविष्ठ ॥ ७ ॥

अहम् । चन । तत् । सूरिऽभिः । आनश्याम् । तव । ज्यायः । इन्द्र । सुम्नम् । ओजः ।
त्वया । यत् । स्तवन्ते । सधऽवीर । वीराः । त्रिऽवरूथेन । नहुषा । शविष्ठ ॥ ७ ॥

वेङ्कट० अहम् अपि तत् स्तोतृभिः पुत्रपौत्रैः सह प्राप्नुयाम् तव प्रशस्यतरं सुखं बलं च त्वया दत्तेन सुखेन दत्तम्, यत् स्तुवन्ति वीराः मनुष्याः हे वीरैः सहित ! बलवत्तम ! इन्द्र ![5] ॥ ७ ॥

1-1. नास्ति वि[1] लपे. 2-2. नास्ति मूको. 3. नास्ति वि[1] अपं. 4. "दीनमना" मूको. 5. नास्ति मूको.

वयं ते अस्यामिन्द्र द्युम्नहूतौ सखायः स्याम महिन प्रेष्ठाः ।
प्रातर्दनिः क्षत्रश्रीरस्तु श्रेष्ठो घने वृत्राणां सनये धनानाम् ॥ ८ ॥

वयम् । ते । अस्याम् । इन्द्र । द्युम्नऽहूतौ । सखायः । स्याम । महिन । प्रेष्ठाः ।
प्रातर्दनिः । क्षत्रऽश्रीः । अस्तु । श्रेष्ठः । घने । वृत्राणाम् । सनये । धनानाम् ॥ ८ ॥

वेङ्कट० वयम् तव सम्यग्विधानि अस्मिन् यशाह्वाने सखायः स्याम पूज्य! प्रियतमाः । प्रतर्दनस्य पुत्रः क्षत्रश्रीः नाम राजा अस्मदीयः अस्तु प्रशस्यतमः हनने शत्रूणाम् धनानाम् च भजने इति ॥ ८ ॥

[1]इति चतुर्थाष्टके षष्ठाध्याये द्वाविंशो वर्गः[1] ॥

[ २७ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता, अष्टम्या अभ्यावर्तिदानम् । त्रिष्टुप् छन्दः[1] ।

किमस्य मदे किम्वस्य पीताविन्द्रः किमस्य सख्ये चकार ।
रणा वा ये निषदि किं ते अस्य पुरा विविद्रे किमु नूतनासः ॥ १ ॥

किम् । अस्य । मदे । किम् । ऊँ इति । अस्य । पीतौ । इन्द्रः । किम् । अस्य । सख्ये । चकार ।
रणाः । वा । ये । निऽसदि । किम् । ते । अस्य । पुरा । विविद्रे । किम् । ऊँ इति । नूतनासः ॥१॥

वेङ्कट० किम् अस्य सोमस्य मदे, किम् वा अस्य पीतौ, किम् वा अस्य सख्ये इन्द्रः चकार । स्तोतारः वा ये निषदने प्रवर्तन्ते सोमस्य ते इन्द्र! किम् अस्य पुरा पुरातनाः, किम् वा सम्प्रति नूतना इति ॥ १ ॥

सदस्य मदे सद्वस्य पीताविन्द्रः सदस्य सख्ये चकार ।
रणा वा ये निषदि सत् ते अस्य पुरा विविद्रे सदु नूतनासः ॥ २ ॥

सत् । अस्य । मदे । सत् । ऊँ इति । अस्य । पीतौ । इन्द्रः । सत् । अस्य । सख्ये । चकार ।
रणाः । वा । ये । निऽसदि । सत् । ते । अस्य । पुरा । विविद्रे । सत् । ऊँ इति । नूतनासः ॥२॥

वेङ्कट० प्रथमस्योत्तरम्—सदस्येति । कल्याणमेव करोतीति ॥ २ ॥

नहि नु ते महिमनः समस्य न मघवन् मघवत्त्वस्य विद्म ।
न राधसोराधसो नूतनस्येन्द्र नकिर्ददृश इन्द्रियं ते ॥ ३ ॥

नहि । नु । ते । महिमनः । समस्य । न । मघऽवन् । मघवत्ऽत्वस्य । विद्म ।
न । राधसःऽराधसः । नूतनस्य । इन्द्र । नकिः । ददृशे । इन्द्रियम् । ते ॥ ३ ॥

१-१. नास्ति मूको.

वेङ्कट० नहि खलु ते[1] सर्वं महिमानं वयं जानीमः, न च मघवन्![2] सर्वं धनवत्त्वम्, न च नूतनं राधकस्य। न कश्चित् अपश्यत् इन्द्र![3] तव बलम् ॥ ३ ॥

एतत् त्यत् त इन्द्रियमचेति येनावधीर्वरशिखस्य शेषः ।
वज्रस्य यत् ते निहतस्य शुष्मात् स्वनाच्चिदिन्द्र परमो ददार ॥ ४ ॥

एतत् । त्यत् । ते । इन्द्रियम् । अचेति । येन । अवधीः । वरऽशिखस्य । शेषः ।
वज्रस्य । यत् । ते । निऽहतस्य । शुष्मात् । स्वनात् । चित् । इन्द्र । परमः । ददार ॥ ४ ॥

वेङ्कट० तद्[1] एतत् ते[2] बलम् इन्द्र! लोके विख्यातमासीत्, येन हतवान् वरशिखासुरस्य पुत्रम्। वज्रस्य यस्मात् त्वया निहितस्य सकाशात् बलात् शब्दाच्चोत्कृष्टः सोऽसुरो दीर्णवानिति ॥ ४ ॥

वधीदिन्द्रो वरशिखस्य शेषोऽभ्यावर्तिने चायमानाय शिक्षन् ।
वृचीवतो यद्धरियूपीयायां हन् पूर्वे अर्धे भियसापरो दर्त् ॥ ५ ॥

वधीत् । इन्द्रः । वरऽशिखस्य । शेषः । अभिऽआवर्तिने । चायमानाय । शिक्षन् ।
वृचीवतः । यत् । हरिऽयूपीयायाम् । हन् । पूर्वे । अर्धे । भियसा । अपरः । दर्त् ॥ ५ ॥

वेङ्कट० वधीत् इन्द्रः वरशिखस्य पुत्रम् अभ्यावर्तिनाम्ने चायमानपुत्राय वशं नयन्। वृचीवतः[4] असुरान् यदा हरियूपीयाख्यायां नगर्याम् पूर्वे अर्धे युद्धार्थं निर्गतो[5] वा हतवान् इन्द्रः, तदानीम् अपरः परार्धे स्थितो वरशिखस्य पुत्रो भयेन[5] दीर्णः इति ॥ ५ ॥

[6]इति चतुर्थाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः[6] ॥

त्रिंशच्छतं वर्मिण इन्द्र साकं यव्यावत्यां पुरुहूत श्रवस्या ।
वृचीवन्तः शरवे पत्यमानाः पात्रा भिन्दाना न्यर्थान्यायन् ॥ ६ ॥

त्रिंशत्ऽशतम् । वर्मिणः । इन्द्र । साकम् । यव्याऽवत्याम् । पुरुऽहूत । श्रवस्या ।
वृचीवन्तः । शरवे । पत्यमानाः । पात्रा । भिन्दानाः । निऽअर्थानि । आयन् ॥ ६ ॥

वेङ्कट० त्रिंशच्छतम् कवचिनः इन्द्र! साकम् यव्यावत्याम् नगर्याम् पुरुहूत! यशेच्छया वृचीवत्पुत्राः युद्धार्थं निर्गच्छन्तः त्वया भिद्यमानाः[6] न्यर्थानि पतनानि[7] प्राप्नुवन्, पराङ्मुखा आसन्नित्यर्थः ॥६॥

यस्य गावावरुषा सूयवस्यू अन्तरू षु चरतो रेरिहाणा ।
स सृञ्जयाय तुर्वशं परादाद् वृचीवतो दैववाताय शिक्षन् ॥ ७ ॥

यस्य । गावौ । अरुषा । सुयवस्यू इति सुऽयवस्यू । अन्तः । ऊँ इति । सु । चरतः । रेरिहाणा ।
सः । सृञ्जयाय । तुर्वशम् । परा । अदात् । वृचीवतः । दैवऽवाताय । शिक्षन् ॥ ७ ॥

---

१. नास्ति मूको. २. तम् मूको. ३. हितवान् वि° ल्प°; हितवतः ऋ. ४. °त ल्प°.
५-५. नास्ति मूको. ६. °नानि ल. ७. नास्ति वि° ल्प°.

वेङ्कट० यस्य अश्वौ शोभमानौ शोभनं घासमिच्छन्तौ द्यावापृथिव्योः अन्तः चरतः घासं रेरिहाणौ, सः सृञ्जयाय राज्ञे तुर्वशम् नाम परा अदात् वृचीवतः दैववाताय प्रयच्छन्[1] ॥ ७ ॥

द्वयाँ अग्ने रथिनो विंशतिं गा वधूमन्तो मघवा मह्यं सम्राट् ।
अभ्यावर्ती चायमानो ददाति दूणाशेयं दक्षिणा पार्थवानाम् ॥ ८ ॥

द्वयान् । अग्ने । रथिनः । विंशतिम् । गाः । वधूऽमन्तः । मघऽवा । मह्यम् । सम्ऽराट् ।
अभिऽआवर्ती । चायमानः । ददाति । दुःऽनशा । इयम् । दक्षिणा । पार्थवानाम् ॥ ८ ॥

वेङ्कट० रथवधूयुक्तत्वात् द्विविधाः विंशतिम् गाः धनवान् प्रादात् मह्यम् सम्राट् अभ्यावर्ती चायमानः मह्यं ददाति । दुर्नशा नाशयितुमशक्या इयम् दक्षिणा अस्तु सर्वदा पार्थवा पृथुकुलजातानाम् इत्यभ्यावर्तिनश्चायमानस्य दानस्तुतिः ॥ ८ ॥

[2]इति चतुर्थाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः[2] ॥

[ २८ ]

[3]भरद्वाजो बार्हस्पत्य ऋषिः । गावो देवता, द्वितीयाष्टम्योः इन्द्रो गावो वा । त्रिष्टुप् छन्दः, द्वितीयादिचतुर्थ्यन्ता जगत्यः, अष्टमी अनुष्टुप्[3] ।

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे ।
प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥ १ ॥

आ । गावः । अग्मन् । उत । भद्रम् । अक्रन् । सीदन्तु । गोऽस्थे । रणयन्तु । अस्मे इति ।
प्रजाऽवतीः । पुरुऽरूपाः । इह । स्युः । इन्द्राय । पूर्वीः । उषसः । दुहानाः ॥ १ ॥

वेङ्कट० गव्यसूक्तम् । 'द्वितीयैन्द्री गाऽन्त्यस्य पादः' ( ऋअ २,६,२८ ) । आयता अभ्यावर्तिनश्चायमानात् मयि गावः, अपि च कल्याणम् अकुर्वन् । सीदन्तु चास्मद्गोष्ठे, 'रमयन्तु चास्मान्' । वत्सयुक्ताः श्वेताः कृष्णाश्च वर्णैर्बहुरूपाः इह स्युः इन्द्रार्थं बह्वीः उषसः पयः दुहानाः ॥ १ ॥

इन्द्रो यज्वने पृणते च शिक्षत्युपेद्ददाति न स्वं मुषायति ।
भूयोभूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये नि दधाति देवयुम् ॥ २ ॥

इन्द्रः । यज्वने । पृणते । च । शिक्षति । उप । इत् । ददाति । न । स्वम् । मुषायति ।
भूयःऽभूयः । रयिम् । इत् । अस्य । वर्धयन् । अभिन्ने । खिल्ये । नि । दधाति । देवऽयुम् ॥

वेङ्कट० इन्द्रः यज्वने दरिद्रेभ्यः प्रयच्छते च धनं च तस्मै प्रयच्छति, न कदाचित् तस्य स्वम् मुष्णाति । भूयोभूयः रयिम् एव अस्य वर्धयन् शत्रुभिः अभिन्ने अप्रतिहते च स्थाने स्थापयति देवकामम् ॥ २ ॥

---

१. प्रायच्छत् वि॰ कपं. २-२. नास्ति मूको. ३-३. नास्ति कपं.

न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति ।
देवाँश्च याभिर्यजते ददाति च ज्योगित् ताभिः सचते गोपतिः सह ॥ ३ ॥

न । ताः । नशन्ति । न । दभाति । तस्करः । न । आसाम् । आमित्रः । व्यथिः । आ । दधर्षति ।
देवान् । च । याभिः । यजते । ददाति । च । ज्योक् । इत् । ताभिः । सचते । गोऽपतिः । सह ॥

वेङ्कट० न ताः नशन्ति, न च ताः हिनस्ति तस्करः[1], न[2] चोरयति, न[3] तासाम् अमित्रभवः व्यथिः आधर्षणं करोति । देवान् च याभिः[4] यजते, याः च दरिद्रेभ्यः प्रयच्छति, दीर्घकालम् ताभिः सह सचनं करोति गोपतिः । सर्वदा पत्यप्रदा भवन्त्यस्मा इति ॥ ३ ॥

न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि ।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ॥ ४ ॥

न । ताः । अर्वा । रेणुऽककाटः । अश्नुते । न । संस्कृतऽत्रम् । उप । यन्ति । ताः । अभि ।
उरुऽगायम् । अभयम् । तस्य । ताः । अनु । गावः । मर्तस्य । वि । चरन्ति । यज्वनः ॥४॥

वेङ्कट० ककाटिर्दलकर्मा । भिद्यमानरेणुः शत्रूणाम् अश्वः न ताः हर्तुं प्राप्नोति, याभिर्देवान् यजते । न च संस्कृतत्रम् उप अभि गच्छन्ति, संस्कारं श्राणं च नापेक्षन्ते । तस्य यज्वनः मर्तस्य बहुभिः स्तोतव्यम् अभयम् प्रति गावः वि चरन्ति ॥ ४ ॥

गावो भगो गाव इन्द्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः ।
इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ ५ ॥

गावः । भगः । गावः । इन्द्रः । मे । अच्छान् । गावः । सोमस्य । प्रथमस्य । भक्षः ।
इमाः । याः । गावः । सः । जनासः । इन्द्रः । इच्छामि । इत् । हृदा । मनसा । चित् । इन्द्रम् ॥

वेङ्कट० गावः एव भगः देवः, गावः एव इन्द्रः, तादृशो भग इन्द्रश्च माम् आगच्छतु । गावः सोमस्य क्रीतस्य मुख्यस्य भक्षः । 'अत्र राजानमाहृत्य पयसोदनेन[2] परिविविषन्त्याक्रयात्'[1] (आपश्री १०,२,७) इत्युक्तम् । इमाः याः गावः ब्राह्मणस्य साधयित्र्यः, ता एव हे जनाः! इन्द्रः भवति । इच्छामि हृदयेन मनसा भूतम् इन्द्रम् ॥ ५ ॥

यूयं गावो मेदयथा कृशं चिदश्रीरं चित् कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो बृहद् वो वय उच्यते सभासु ॥ ६ ॥

यूयम् । गावः । मेदयथ । कृशम् । चित् । अश्रीरम् । चित् । कृणुथ । सुऽप्रतीकम् ।
भद्रम् । गृहम् । कृणुथ । भद्रऽवाचः । बृहत् । वः । वयः । उच्यते । सभासु ॥ ६ ॥

---

१. नास्ति कर्प. २. नास्ति वि[°]. ३. नास्ति वि[°] कर्प. ४. नाभिः मूको. ५. [°]दनी मूको.
६. 'भक्ष' मूको.

वेङ्कट० यूयम् गावः! पीनं कुरुथ कृशम् अपि, अशोभनावयवम् अपि कुरुथ शोभनावयवम्। भद्रम् च गृहम् कृणुथ हे भद्रवाचः!। भद्रः वः वयम् उच्यते सहायेषु क्षीरादिकम् ॥ ६ ॥

प्रजावतीः सूयवसं रिशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा वः स्तेन ईशत माघशंसः परि वो हेती रुद्रस्य वृज्याः ॥ ७ ॥

प्रजाऽवतीः । सुऽयवसम् । रिशन्तीः । शुद्धाः । अपः । सुऽप्रपाने । पिबन्तीः ।
मा । वः । स्तेनः । ईशत । मा । अघऽशंसः । परि । वः । हेतिः । रुद्रस्य । वृज्याः ॥ ७ ॥

वेङ्कट० प्रजावतीः शोभनं घासं भक्षयन्तीः शुद्धानि उदकानि शोभने तीर्थे पिबन्तीः वः [1]स्तेनः मा ईशिष्ट, मा च पापाभिलापः[1], रुद्रस्य हेतिः [2]च वः[2] परि वृणक्तु। बुभुक्षा पिपासा अशनिः इति रुद्रस्य हेतयः। तासाम् मा ईशितेति ॥ ७ ॥

उपेदमुपपर्चनमासु गोषूप पृच्यताम् । उप ऋषभस्य रेतस्युपेन्द्र तव वीर्ये ॥ ८ ॥

उप । इदम् । उपऽपर्चनम् । आसु । गोषु । उप । पृच्यताम् ।
उप । ऋषभस्य । रेतसि । उप । इन्द्र । तव । वीर्ये ॥ ८ ॥

वेङ्कट० उप पृच्यताम् इदम् जगतः उपपर्चनम् पयः गोषु आसु। तथा उप पृच्यताम् ऋषभस्य रेतसि। [2]पयसो हि ऋषभस्य रेतः[2]। तथा उप पृच्यताम् इन्द्र! तव वीर्यभूतासु गोष्विति ॥ ८ ॥

[1]इति चतुर्थाष्टके षष्ठाध्याये पञ्चविंशो वर्गः[1] ॥

व्याकरोत् त्रिंशमध्यायं माधवो नाम कश्चन ।
वीरमाभिरय विवसन् कावेर्या दक्षिणे[3] सुवसन् ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके षष्ठोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके षष्ठोऽध्यायः ॥



१-१. नास्ति मूको. २. °ऋषभस्य रे॰ वि॰ लर्य; पयसोऽनृषभस्य रेः क. ३. दक्षिणा वि°; दक्षिणे क.

## अथ सप्तमोऽध्यायः

वेङ्कट०

'इन्द्रं वो नरः सख्याय' व्याचिख्यासति माधवः।
मत्वर्थीयेषु वक्तव्यं पूरणेषु प्रदर्शयन् ॥ १ ॥

मत्वर्थीयान्मत्वर्थीयो न तु लोके प्रदृश्यते[1]।
प्रयुज्यते[2] स वेदे तु पादं पूरयितुं पुनः ॥ २ ॥

'वाजेभिर्वाजिनीवती'[3], 'रक्षोहत्याय वज्रिवः'[4]।
'मा त्रातुर्मातुमार्वताम्'[5] इति पादा निदर्शनम् ॥ ३ ॥

मत्वर्थीयो बहुव्रीहेर्नेष्यते तादृशैरिह।
'अर्यमा सुदानवः'[6] इति दृष्टो वेदेषु तादृशः ॥ ४ ॥

'इत्था दर्शिष्ठ(ष्ठा[10] इ)ति पदे तथा 'रथ्या रथीतमा'[7]।
इत्था रथ्येति तत्राहुः[8] पूरणे नेति[9] माधवः ॥ ५ ॥

स्तुतिर्विरम्याभिधानाद् अर्थभेदेऽपि गम्यते।
दर्शनीयाविमौ देवावित्युक्त्या भाषते पुनः ॥ ६ ॥

न दर्शनीयावपि तु दर्शनीयतमाविति[11]।
तथा न रथ्यावपि तु रथनेतृतमाविति ॥ ७ ॥

पूर्वप्रयुक्तोपसर्गस्मरणार्थं पुनः क्वचित्।
उपसर्गाः प्रयुज्यन्ते न[12] ते केवलपूरणाः ॥ ८ ॥

'आ वामश्वासः शुचयः'[12], 'आ भारती भारतीभिः'[13]।
पादे चतुर्थे आकारः प्रयुक्त उभयोरपि ॥ ९ ॥

'अभि त्वा गोतमा गिरा'[14] बहवः सन्ति तादृशाः।
प्रागाख्यातास् प्रयुज्यन्ते ततः प्रागपि केचन ॥ १० ॥

'त्वं नो अग्ने तव देव'[15], 'मरुतो मारुतस्य नः'[16]।
पूर्वविधेषु मन्त्रेषु पूरणत्वं न विद्यते ॥ ११ ॥ इति[17]।

---

१. नास्ति वि॰. २. नास्ति सर्व. ३. ऋ १,३,१०. ४. ऋ ६,४५,१८. ५ ऋ ८, ६०,२०. ६. ऋ १,१४१,९. ७. ऋ १,१८२,२. ८. °ष्ठ बॅकस. ९. इति बॅकस. १० °मामिति बॅकस. ११. नास्ति वि॰ सर्व. १२. ऋ १,१८१,२. १३. ऋ ३,४,८. १४. ऋ १, ७८,१. १५. ऋ १,३१,१२. १६. ऋ ८,२०,२२. १७. नास्ति बॅकस.

[ २९ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

इन्द्रं॑ वो॒ नरः॑ स॒ख्याय॑ सेपुर्म॒हो यन्तः॑ सुम॒तये॑ चका॒नाः ।
म॒हो हि दा॒ता वज्र॑हस्तो॒ अस्ति॑ म॒हामु॑ र॒ण्वमव॑से यजध्वम् ॥ १ ॥

इन्द्र॑म् । वः॒ । नरः॑ । स॒ख्याय॑ । से॒पुः॒ । म॒हः । यन्तः॑ । सु॒ऽम॒तये॑ । च॒का॒नाः ।
म॒हः । हि । दा॒ता । वज्र॑ऽहस्तः । अस्ति॑ । म॒हाम् । ऊँ॒ इति॑ । र॒ण्वम् । अव॑से । य॒ज॒ध्व॒म् ॥ १ ॥

स्कन्द० ' 'अत ऊर्ध्वम् अनादिष्टमैन्द्रम्' ( सु अनु १,१२,७ ) इत्येवमैन्द्रं प्राग् 'अधि बृबु पणीनाम्' ( ६,४५,३१ ) इत्यतः'' । इन्द्रम् वः व्यत्ययेनेदं बहुवचनम् । त्वा । नरः मनुष्या ऋत्विगादयः सख्याय सखित्वाय सेपुः स्तुतवन्तः । महः महद्यागलक्षणं कर्म यन्तः । गच्छन्त इत्यर्थः । सुमतये नित्य चतुर्थ्यर्थम् इत्यधा शोभना मतिर्यस्य स सुमतिः यजमानः, तदर्थम् चकानाः सततम् अभिप्रेतम् अर्थं कामयमानाः । उत्तरोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम् । महः हि हिशब्दो यस्मादर्थे । यस्मान्महतः अन्नस्य धनस्य वा दाता वज्रहस्तः इन्द्रः अस्ति भवति । यस्मादिति वचनात् तस्मादित्यध्याहार्यम् । तस्मात् महाम् महान्तम् इन्द्रम् । उ इति पदपूरणः । रण्वम् रमणीयम् अवसे तर्पणाय पालनाय वा यजध्वम् हे ऋत्विजः[1] ॥ १ ॥

वेङ्कट० भरद्वाज । इन्द्रम् युष्माकम् ऋत्विजः सख्याय स्तुतिषु महान्तं गच्छन्तः इन्द्रस्य सुमतये कामयमानाः । महतः हि दाता वज्रहस्तः भवति । महान्तं रमणीयं रक्षणाय यजध्वम् ॥ १ ॥

आ यस्मि॒न् हस्ते॒ नर्या॑ मिमि॒क्षुरा रथे॑ हिर॒ण्यये॑ रथे॒ष्ठाः ।
आ र॒श्मयो॒ गभ॑स्त्योः स्थू॒रयो॒राध्व॒न्नश्वा॑सो॒ वृष॑णो युजा॒नाः ॥ २ ॥

आ । यस्मि॑न् । हस्ते॑ । नर्याः॑ । मि॒मि॒क्षुः । आ । रथे॑ । हि॒र॒ण्यये॑ । र॒थे॒ऽस्थाः ।
आ । र॒श्मयः॑ । गभ॑स्त्योः । स्थू॒रयोः॑ । आ । अध्व॑न् । अश्वा॑सः । वृष॑णः । यु॒जा॒नाः ॥ २ ॥

स्कन्द० यस्य किमुच्यते । यस्मिन् इति षष्ठ्यर्थे सप्तमी । यस्येन्द्रस्य हस्ते नर्याः नराकारस्येन्द्रस्य स्वभूता मुष्टयो वा हिताः आ मिमिक्षुः व्याप्तवन्तः । मिमिक्षुः इति सम्प्रसारणमेतद् रूपम् । आगच्छन्ति । कः । रश्मय इति वक्ष्यति । यो रश्मीन् हस्तेन गृह्णातीत्यर्थः । न च हस्त एव केवलम् । किं तर्हि । आ रथे रथेऽप्यागच्छन्ति । रथेऽप्यासज्यन्तीत्यर्थः । कीदृशे । हिरण्यये सुवर्णमये । कीदृशो रश्मयः । रथेष्ठाः नित्यं रथे स्थातारः । न च हस्ते रथे च केवलम् । किं तर्हि । आ[2] गभस्त्योः । गभस्ति इति बाहुनाम । बाह्वोरप्यागच्छन्ति । स्थूरयोः जङ्घायाः अधोभागः पादसन्निकृष्टः स्थूर इत्युच्यते तयोश्च । स इन्द्रोऽतिबहुत्वाद्रश्मीनां केषाञ्चिद्रश्मीन् हस्तेन गृह्णाति, केषाञ्चिद्रथ आसजति केषाञ्चिद्बाह्वोः, केषाञ्चिज्जङ्घयोरित्यर्थः । यस्य च आ अध्वन् आगच्छन्ति अध्वनि शत्रून् यष्टॄन् वा प्रति अश्वासः अश्वाः वृषणः वर्षितारः रेतसः सेक्तारः । बलवन्त

---

1 1 नास्ति मूको २ आ रश्मयो मूको

इत्यर्थः । युजानाः योजनशीलाः । रथे नित्यं युक्ता इत्यर्थः । तच्छब्दमध्याहृत्य तं यजध्व-मिति पूर्वयर्चैकवाक्यता योज्या ॥ २ ॥

वेङ्कट० अपि यस्मिन् इन्द्रे हस्ते नृहिता कर्याणि तिष्ठन्ति, अपि च यः हिरण्मये रथे तिष्ठति, अपि च यस्य स्थूलयोः बाह्वोः अश्वमहा भवन्ति, अपि च अध्वनि 'यस्य रथे' अश्वाः पुमांसः युञ्जानाः भवन्ति ॥ २ ॥

श्रिये ते पादा दुव आ मिमिक्षुर्धृष्णुर्वज्री शवसा दक्षिणावान् ।
वसानो अत्कं सुरभिं दृशे कं स्व१र्ण नृतविषिरो बभूथ ॥ ३ ॥

श्रिये । ते । पादा । दुवः । आ । मिमिक्षुः । धृष्णुः । वज्री । शवसा । दक्षिणऽवान् ।
वसानः । अत्कम् । सुरभिम् । दृशे । कम् । स्वः । न । नृतो इति । इषिरः । बभूथ ॥ ३ ॥

स्कन्द० श्रिये अर्थम् ते तव स्वभूतौ पादा पादौ दुवः परिचर्याम् आ मिमिक्षुः व्यक्तास्तिरथ सामर्थ्यादस्मर्णीतिव्यर्थः । आगमयन्ति प्रापयन्ति । श्रियः प्राप्तुं तव पादौ मनुष्याः परिचरन्तीत्यर्थः । किञ्च धृष्णुः अभिभविता शत्रूणां त्वम् वज्री सन् शवसा बलेन दक्षिणावान् दक्षिणा दानमुत्साहो वा, तद्वांश्च असि । किञ्च वसानः आच्छादयन् उरस्यपिनह्यन् अत्कम् कवचम् सुरभिम् सुगन्धिं "लोहरजवद् अङ्गपरिहितं" दृशे दर्शनाय सुरूपाय[1] । कम् सुखम्, पदपूरणो वा कंशब्दः । स्वः न आदित्य इव हे नृतो! नर्तनशील! इषिरः इषिरिच्छा शत्रुवधे, तद्वान् । अथवा गत्यादिस्यस्य, इषिर्गतिः, तद्वान् । बभूथ भवसि । यथा आदित्यस्तमोवधे[2] सर्वदा इच्छावान् "तथा त्वं शत्रुवधे इच्छावान्"[4] शत्रून् वा प्रति गतिमान् भवसीत्यर्थः ॥ ३ ॥

वेङ्कट० श्रयणाय मनुष्याणां तव पादानि तेजांसि मनुष्याणां परिचर्यां कुर्वन्ति, प्रकाशं कुर्वन्ति गमनाय । धर्षिता बलेन वज्री दानवान् आच्छादयन् रूपं शोभनगन्धं दर्शनाय त्वम्[1] आदित्य इव गमनशीलो भवसि हे नेतः । ॥ ३ ॥

स सोम आमिश्लतमः सुतो भूद् यस्मिन् पक्तिः पच्यते सन्ति धानाः ।
इन्द्रं नरः स्तुवन्तो ब्रह्मकारा उक्था शंसन्तो देववाततमाः ॥ ४ ॥

सः । सोमः । आमिश्लऽतमः । सुतः । भूत् । यस्मिन् । पक्तिः । पच्यते । सन्ति । धानाः ।
इन्द्रम् । नरः । स्तुवन्तः । ब्रह्मऽकाराः । उक्था । शंसन्तः । देववातऽतमाः ॥ ४ ॥

स्कन्द० सोमः आमिश्लतमः अतिशयेन पयआदिभिः श्रयणैरामिश्रः[7] सुतः अभिषुतः भूत् अस्तेर्भूरादेशः, लडर्थे च लुङ् । अस्ति । यस्मिन् पक्तिः पच्यतेऽसाविति पक्तिः सवनीयपुरोडाशादिकं पच्यते । न च केवलः सोमोऽस्ति । किं तर्हि । सन्ति धानाः अपि । इन्द्रस्य सोमोऽस्ति, हर्योरप्यस्य धानाः सन्तीत्यर्थः । क पुनः सन्ति । सामर्थ्यादभिषवसाधने सर्वत्र वा । किञ्च इन्द्रम् नरः मनुष्याः स्तुवन्त- स्तोत्रैः ब्रह्मकाराः उक्था शस्त्राणि च शंसन्तः देववाततमाः[8] अतिशयेन देवैरभिगताः सन्ति । "केवलमामिश्रः सोमो धानाश्चेत्यर्थः"[9] ॥ ४ ॥

१-१. नास्ति मूको. २-२. लोहरजवद्" मूको. ३. सुरूपाय मूको. ४. "त्यस्तोमोवधे मूको, ५-५. नास्ति मूको. ६. त्वाम् क लपं. ७. श्रयणैरमिय: मूको. ८. नास्ति मूको. ९-९ "लमाधाना" मूको.

वेङ्कट० सः सोमः आभिमुख्येन इन्द्रस्य प्रियमिच्छता सुतः अभवत्। यस्मिन् पुरोडाशः पच्यते सवनीयः, सन्ति च धानाः। इन्द्रम् नरः स्तुवन्तः स्तोत्रस्य कर्तारः उक्थानि च शंसन्तः देवैः अतिशयेन अभिगम्यन्ते स्तोमशस्त्रानुष्ठातृभिः ॥ ४ ॥

न ते अन्तः शवसो धाय्यस्य वि तु बाबधे रोदसी महित्वा।
आ ता सूरिः पृणति तूतुजानो यूथेवाप्सु समीजमान ऊती ॥ ५ ॥

न। ते। अन्तः। शवसः। धायि। अस्य। वि। तु। बबाधे। रोदसी इति। महिऽत्वा।
आ। ता। सूरिः। पृणति। तूतुजानः। यूथाऽइव। अप्ऽसु। सम्ऽईजमानः। ऊती ॥ ५ ॥

स्कन्द० न ते तव अन्तः शवसः बलस्य धायि दधातिर्धारणार्थः। कुद्रोऽपि चायमवधार्थे द्रष्टव्यः। अवधार्यते ज्ञायते केनचित् अस्य। अनन्तं त्वदीयं बलमित्यर्थः। 'वि तु' बाबधे तु इति पदपूरणौ अनर्थकौ वा। भृशं च विबाधते रोदसी द्यावापृथिव्यावपि, किं पुनरन्यत्। महित्वा महत्त्वेन। परोऽर्धर्चः परोक्षकृतः[१]। ता तच्छब्देनात्र प्रकृतत्वेन्द्रस्य प्रतिनिर्देशः। द्वितीयैकवचनस्य 'आयम्-अम आकारः'[२]। तम् इन्द्रम् सूरिः स्तोता आ पृणति पृण प्रीणने[३]। आप्रीणयति। तर्पयति सोमेनेत्यर्थः। तूतुजानः अत्यादरेण त्वरमाणः। अथवा ता इति तच्छब्देन स्तोतुः प्रतिनिर्देशः श्रुतेरेव यच्छब्दोऽध्याहार्यः। यं सूरिं स्तोतारम् इन्द्रः धनेन आप्रीणयति त्वरमाणः क्षिप्रमित्यर्थः। कथम्? यूथेव अप्सु इति तृतीयार्थे सप्तमी। गोयूथानीवाद्भिः गोपालः[६] प्रभूतेनोदकेनेत्यर्थः। समीजमानः ईज गतिकुत्सनयोः। सङ्गच्छमानः। ऊती पालयिता पालयित्रा वा ॥ ५ ॥

वेङ्कट० न तव अस्य बलस्य अन्तः केनचित् क्रियते। महत्त्वेन तव शवः द्यावापृथिव्यौ वि बाधते शीघ्रम्। आ प्रयच्छति[७] तानि धनानि सूरिः[८] त्वरमाणः गोयूथानीव गोधुक् अप्सु सङ्गच्छमानः रक्षणार्थम् ॥ ५ ॥

एवेदिन्द्रः सुहव ऋष्वो अस्तूती अनूती हिरिशिप्रः सत्वा।
एवा हि जातो असमात्योजाः पुरू च वृत्रा हनति नि दस्यून् ॥ ६ ॥

एव। इत्। इन्द्रः। सुऽहवः। ऋष्वः। अस्तु। ऊती। अनूती। हिरिऽशिप्रः। सत्वा।
एव। हि। जातः। असमातिऽओजाः। पुरु। च। वृत्रा। हनति। नि। दस्यून् ॥ ६ ॥

स्कन्द० एव-शब्द एवमित्यस्यार्थे, इत् शब्द एवेत्यस्य। एवमेवेति वचनाद् 'यथैवेदानीमिति योग्यार्थसम्बद्धमध्याहार्यम्'[९]। यथैवेदानीमेवमेव इन्द्रः सुहवः स्वाह्वानः[१०] सर्वदास्माकम् अस्तु। ऋष्वः महान्, ऊती पालयिता सन् अनूती अपालयिता इतरेषाम्। हिरिशिप्रः हिरिशब्दो हरितपर्यायः। शिप्रे

---

१. नास्ति 'श्रि' छपे. २-२. विविदु मूको. ३. °क्षरं मूको. ४-४. चायममातरः मूको. ५. पूरणे मूको. ६. गोपाल मूको. ७. प्रयच्छन्ति मूको. ८. नास्ति मूको. ९-९. यथैवेति योग्यार्थसम्बन्धम° मूको. १०. स्वाह्वानः मूको.

हनू । हरितसोमपानात्[१] 'हरितीभूतहनुः । सत्वा[२] दाता । कस्मात् पुनरेतत् प्रार्थ्यते । उच्यते । एवं हि जातः हिशब्दो यस्मादर्थे । जनित्वस्थाप्राप्तौ । यस्मादेवं जात. आह्वानागतिलक्षणामवस्थां प्राप्तो[३] नित्यमाहूयमानोऽस्माभिरागम्यमानः सन्नित्यर्थः । असमात्योजाः असमशब्दस्याऽतिशब्द उपजनः । असमौजाः 'अन्येनासमबलः । पुरु च वृत्रा हनति नि निशब्दोऽत्र वृत्रशब्दात् परो द्रष्टव्यः । बहून् अस्माकं शत्रूंश्च निहन्ति दस्यून् च । [४]चोरा अत्र दस्यव[४] उच्यन्ते[५] ॥ ६ ॥

वेङ्कट० एवमेव इन्द्रः स्वाह्वानो दर्शनीयो भवतु रक्षणायास्माकम् अरक्षणाय च शत्रूणां हरणशीलहनुः सदनशीलः । एवम् हि जातः इन्द्रः असमात्योजा [६]समातिबलो यो भवति[६] स समात्योजाः, अतादृश आसीत् । पुरूणि च वृत्राणि हन्ति, [७]निं च हन्ति[७] असुरान् इति ॥ ६ ॥

[८]इति चतुर्थाष्टके सप्तमाध्याये प्रथमो वर्गः[८] ॥

[ ३० ]

[८]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[८] ।

भूय इद्वावृधे वीर्यायँ एको अजुर्यो दयते वसूनि ।
प्र रिरिचे दिव इन्द्रः पृथिव्या अर्धमिदस्य प्रति रोदसी उभे ॥ १ ॥

भूयः । इत् । वृवृधे । वीर्याय । एकः । अजुर्यः । दयते । वसूनि ।
प्र । रिरिचे । दिवः । इन्द्रः । पृथिव्याः । अर्धम् । इत् । अस्य । प्रति । रोदसी इति । उभे इति ॥ १ ॥

स्कन्द० भूयः बहुतरम् । कुतः[९] । द्यावापृथिव्योः अपत्रोपादानात् सत्सदसदन्तरिक्षात् । इत् सर्वतः पदपूरणो वा[९] । वावृधे वृद्धवान् इन्द्रः वीर्याय वीरकर्मणे । एकः[१०] इन्द्रः एकः[१०] अजुर्यः जूर्यतेर्वधकर्मणो[११] एतद्रूपम् । अवध्यः[८] जराकर्षितो वा । दयते ददाति स्तोतृभ्यो वसूनि धनानि । किञ्च प्र रिरिचे अतिरिच्यते दिवः सकाशात् इन्द्रः पृथिव्याः च । कियता भागेन । उच्यते । अर्धम् इत् अस्य प्रति रोदसी उभे उभयोर्द्यावापृथिव्योः सकाशाद् द्विगुण इत्यर्थः ॥ १ ॥

वेङ्कट० भूयः एव वर्धते वीर्यकरणाय । स्वयमेव जरयितुमशक्यः प्रयच्छति धनानि । सोऽयम् इन्द्रः पृथिव्याः दिवः च अतिरिक्त आसीत् । अर्धम् एव प्रति अस्य इन्द्रस्य उभे द्यावापृथिवी भवतः ॥ १ ॥

अधा मन्ये बृहदसुर्यमस्य यानि दाधार नकिरा मिनाति ।
दिवेदिवे सूर्यो दर्शतो भूद्वि सद्मान्युर्विया सुक्रतुर्धात् ॥ २ ॥

अध । मन्ये । बृहत् । असुर्यम् । अस्य । यानि । दाधार । नकिः । आ । मिनाति ।
दिवेऽदिवे । सूर्यः । दर्शतः । भूत् । वि । सद्मानि । उर्विया । सुऽक्रतुः । धात् ॥ २ ॥

स्कन्द० अधशब्दः पदपूरणः, अपि वा इत्यस्य वार्थे । अपि वा अहं तावत् मन्ये, अतोऽपि बृहत्

---

१. "तसेनामरा" मूको. २-२. "तीमू… तुरसता मूको. ३. प्राप्तं मूको. ४-४. चोरास्त दस्य च मूको. ५. ड…तो मूको. ६-६. "मिलो यो भवतः मूको ७-७. न च हन्ति विं एपं. ८-८. नास्ति मूको. ९. नास्ति मूको. १०. एकश्च एकः मूको. ११. जुर्व मूको.

महत् असुर्यम् वीर्यम् अस्य इन्द्रस्य । किं धारणम् । उच्यते । यानि दाधार धारणं मर्मणामपरित्याग[1] नित्यकरणम्[2] । यान्यय पृथिव्यादिकर्माणि नित्यं करोति । यानीति षष्ठ्यर्थश्रुतेस्तानीत्यध्याहार्यम् । तानि न कश्चित् आ मिनाति हिनस्ति । प्रतिबन्धु शक्नोतीत्यर्थः । किञ्च दिवेदिवे अहन्यहनि सूर्यः दर्शतः दर्शनीयः भूत् क्रियासामान्यवचनत्वात् भवतिरत्र सामर्थ्यादुदये द्रष्टव्यः । छन्दसि च लुङ् । इन्द्रस्य प्रसादेन उदयति । इन्द्रो हि वृत्रं हत्वा सूर्यं दिव्यारोहयदित्येतत् सम्यगोक्तम्—'इन्द्रं यदिन्द्र शवसा मधोरहिम्' ( ऋ १,५१,४ ) इति । तेन सूर्यं इन्द्रस्य प्रसादेनोदयति । सद्मानि सद्नानि स्थानानि उर्विया उरूणि बहूनि सुक्रतुः सुकर्मा इन्द्रः वि धात् विधत्ते । वृष्ट्यादिद्वारेण विविधं धारयति निष्पादयति । अथवा सद्मानि उदकानि । दधातिरपि दानार्थः । ददाति ॥ २ ॥

वेङ्कट० महत् असुर्यम् इन्द्रस्य बलमिति । यानि असौ धारयति, न तानि कश्चिद् हिनस्ति प्रवाति । तस्यैतदुरु बलम्—अन्वहं दर्शनीयः सूर्यः भवति । तथा सुकर्मा इन्द्रः सद्मानि उरूणि पृथिव्यादीनि वि धारयतीति ॥ २ ॥

अधा चिन्नू चित् तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र ।
नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि ॥ ३ ॥

अध । चित् । नु । चित् । तत् । अपः । नदीनाम् । यत् । आभ्यः । अरदः । गातुम् । इन्द्र ।
नि । पर्वताः । अद्मऽसदः । न । सेदुः । त्वया । दृळ्हानि । सुक्रतो इति सुऽक्रतो । रजांसि ॥३॥

स्कन्द० चिच्छब्दौ द्वावपि समुच्चयार्थौ । नुशब्दोऽप्यपरोर्मैतस्य प्रतियोगित्वेनोपात्तत्वात् समुच्चयार्थचिच्छब्दश्रुतेश्च पुराशब्दार्थे । अध च पुरा च । सर्वकालमित्यर्थः । तत् अपः कर्म नदीनाम् यत् आभ्यः स्यप्रत्ययेनैते द्वितीयाचतुर्थ्यौ । यस्मै इमा यदर्थमेता नदी अरदः अखनः । इन्द्रेण वारिप्रमुखक मलदी खनति तदिन्द्र एव खनतीत्युच्यते । तथा चोक्तम्—'इन्द्रो अस्माँ अरदद्वज्रबाहुः' ( ऋ ३,३३,६ ) इति । गातुम् यस्मादित्यनम्[3] सामानाधिकरण्यादिद्वापि चतुर्थ्यर्थ एव द्वितीया । गमनाय समुद्रं प्रति गमनाय हे इन्द्र[4] । अथवा यच्छब्दो यस्मादर्थे । सर्वत्र विभक्तय स्वार्थे । गातुशब्दस्तु करणसाधनो गमनमार्गवचनः । अध च पुरा च तदेव कर्म नदीनाम् । कस्मात् । यस्मादसामर्थ्यादासन 'स्रोत इन्द्र' इति । किञ्च पर्वताः मेघाः अद्मसदः अद्म अन्नं तत्र ये निषण्णा औदरिका[5] आत्मम्भरयः ते यथा[6] तद्वत् नि सेदुः । त्वया हन्यमाना निषीदन्ति निषण्णा वा । यथा भोजनप्रधाना दैहिकप्रधाना[7] पित्र्यकर्मवर्जिता मनुष्या नरकान्नरक पतन्ति अधोऽधो गच्छन्ति तद्वत्त्वया हन्यमाना मेघा इत्यर्थः । किञ्च त्वया दृळ्हानि सुस्थितानि हे सुक्रतो । सुकर्मन्[1] सुप्रज्ञ[1] वा रजांसि, लोका अपि त्वयस्त्वदाश्रिता इत्यर्थः ॥ ३ ॥

वेङ्कट० अद्य पुरा च तवैवं वेग नदीनाम्, यत्र आभ्यः मार्गं वज्रेण अरदः इन्द्र ।। तथा शिलोच्चयाश्च आत्मनैव स्वस्थाने सीदन्त नि सीदन्ति । त्वया दृढा भवन्ति सुकर्मन्[1] लोका ॥ ३ ॥

---

१. °मागमित्यास मूको २. 'करण मूको ३. यस्मादित्य° मूको ४. यस्मादसोमार्था° मूको ५. औदरिका मूको ६. तथा मूको. ७. दैहिक° मूको. ८. उक्त मूको

सत्यमित् तन्न त्वावाँ अन्यो अस्तीन्द्र देवो न मर्त्यो ज्यायान् ।
अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रम् ॥ ४ ॥

सत्यम् । इत् । तत् । न । त्वाऽवान् । अन्यः । अस्ति । इन्द्र । देवः । न । मर्त्यः । ज्यायान् ।
अहन् । अहिम् । परिऽशयानम् । अर्णः । अव । असृजः । अपः । अच्छ । समुद्रम् ॥ ४ ॥

स्कन्द० इत् इति पदपूरणः । सत्यम् तत् । यत् कतमत् । उच्यते । न त्वावान् त्वत्सदृशः अन्यः अस्ति[1] हे इन्द्र ! देवः[2] न अपि मर्त्यः कश्चित्, नापि ज्यायान् प्रशस्यतरो वृद्धतरो वाऽस्ति । किं कारणम् । अहन् अहिम् हतवानसि मेघम् परिशयानम् शयतिः स्थानार्थः । सामर्थ्याच्चात्र तत्पूर्वकस्य संरोधस्योपलक्षणार्थः । सर्वतः संरुधानमित्यर्थः । अर्णः उदकम् । हत्वा च अव असृजः मवक्षिप्तवान् अपः उदकानि अच्छ आप्तुम् समुद्रम् पार्थिवम् । सर्वाणि मेघोदकानि नदीरूपेण समुद्रं प्राप्नुवन्ति । अत इदमुच्यते — आप्तुं समुद्रमिति । ॥ ४ ॥

वेङ्कट० सत्यम् इत् तत्, न त्वत्सदृशः इन्द्र ! अन्यः कश्चित् अस्ति देवः मर्त्यः वा, न च ज्यायान् इति । हतवानसि अहिम् उदकं परिवृत्य शयानम् । हत्वा च समुद्रम् प्रति अव असृजः अपः ॥ ४ ॥

त्वमपो वि दुरो विषूचीरिन्द्र दृळ्हमरुजः पर्वतस्य ।
राजाभवो जगतश्चर्षणीनां साकं सूर्यं जनयन् द्यामुषासम् ॥ ५ ॥

त्वम् । अपः । वि । दुरः । विषूचीः । इन्द्र । दृळ्हम् । अरुजः । पर्वतस्य ।
राजा । अभवः । जगतः । चर्षणीनाम् । साकम् । सूर्यम् । जनयन् । द्याम् । उषसम् ॥ ५ ॥

स्कन्द० त्वम् अपः व्यत्ययेनेदम् । अपाम् दुरः निर्गमनद्वाराणि विषूचीः विषुशब्दो नानार्थवाची । नानादिर्गत्यर्थः । नानागताः । इतश्चेतश्च व्यवस्थितानि बिलानीत्यर्थः । हे इन्द्र ! दृळ्हम् सुदृढं वि अरुजः विविधं भग्नवान् । बलादुद्घाटितवानित्यर्थः । पर्वतस्य मेघस्य । किञ्च राजा ईश्वरः अभवः भवसि जगतः त्रैलोक्यस्य सम्बन्धिनाम् चर्षणीनाम् मनुष्याणाम् । यावन्तस्त्रैलोक्ये मनुष्याः तेषां सर्वेषामित्यर्थः । साकम् सह सूर्यम् द्याम् दिवम् उषसम् च जनयन् । कथं पुनरिन्द्रः सह सूर्यादीनि जनयति । कृत्स्नस्य जगतो जन्मनो धर्माधर्मायत्तत्वात्, तयोश्च वृष्ट्यायत्तत्वात्, वृष्ट्याश्चैन्द्रकर्तृत्वात् ॥ ५ ॥

वेङ्कट० त्वम् उदकानि मेघस्य 'द्वाराणि वि अरुजः' विष्वगञ्चनानि इन्द्र !, दृढम् अपाम् निर्गमनद्वारं च । राजा अभवः जगतः मनुष्याणाम् सूर्यम् दिवम् उषसम् च सह जनयन् ॥ ५ ॥

[3]इति चतुर्थाष्टके सप्तमाध्याये द्वितीयो वर्गः[3] ॥

## [ ३१ ]

[3]सुहोत्रो भारद्वाज ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[3] ।

अभूरेको रयिपते रयीणामा हस्तयोरधिथा इन्द्र कृष्टीः ।
वि तोके अप्सु तनये च सूरेऽवोचन्त चर्षणयो विवाचः ॥ १ ॥

1. नास्ति मूको. 2. देव मूको. 3-3. नास्ति मूको.

अभूः । एकः । र्यिऽपते । रयीणाम् । आ । हस्तयोः । अधिथाः । इन्द्र । कृष्टीः ।
वि । तोके । अप्ऽसु । तनये । च । सूरे । अवोचन्त । चर्षणयः । विऽवाचः ॥ १ ॥

स्कन्द० 'सुहोत्रोऽभूर्द्विसूक्तभाक्'[1] । सुहोत्रो नामर्षिः 'अभूरेकः' -इति द्वे सूक्ते अपश्यत् । द्वे एते सूक्ते सुहोत्रस्यार्षमित्यर्थः । अभूः भवसि त्वमेव एकः हे रयिपते! धनानां स्वामिन्! रयीणाम् षष्ठीश्रुतेरभूरित्यस्य च को भवामीति साकाङ्क्षत्वात् दातेति वाक्यशेषः । धनानां दाता । किञ्च हस्तयोः आ अधिथाः लडर्थे लुङ् । आदधासि स्थापयसि हे इन्द्र! कृष्टीः मनुष्यान् । सर्वमनुष्यांश्च वशे करोषीत्यर्थः । किञ्च वि तोके अप्सु तनये च सूरे 'तोकः पुत्रः'[2] । आपो वृष्टिलक्षणाः । तनयः पौत्रः । सूर आदित्यः, तेन चात्र तदुदयो लक्ष्यते । सर्वत्र च 'निमित्तात् कर्मसंयोगे' ( पावा २,३,३६ ) इत्येवमियं सप्तमी । 'चर्मणि द्वीपिनं हन्ति'—इति यथा । पुत्रादिनिमित्तमित्यर्थः[3] । अवोचन्त 'विविधं त्वा'[4] स्तुवन्ति । याचन्त इत्यर्थः । चर्षणयः मनुष्याः विवाचः विविधाभिः स्तुतिलक्षणाभिः वाग्भिर्युक्ताः । स्तुवन्त इत्यर्थः ॥ १ ॥

वेङ्कट० सुहोत्रो भारद्वाजः[5] । [6]हे रयिपते! इन्द्र![6] त्वमेव एकः धनानामीश्वरः अभवः । तथा तव हस्तयोः समीपे प्रजाः करोषि । धनकामाः त्वां तनयादिनिमित्तं विविधम् आह्वयन्ते । सूरः सूर्यः ॥ १ ॥

त्वद् भियेन्द्र पार्थिवानि विश्वाच्युता चिच्च्यावयन्ते रजांसि ।
द्यावाक्षामा पर्वतासो वनानि विश्वं दृळ्हं भयते अज्मन्ना ते ॥ २ ॥

त्वत् । भिया । इन्द्र । पार्थिवानि । विश्वा । अच्युता । चित् । च्यवयन्ते । रजांसि ।
द्यावाक्षामा । पर्वतासः । वनानि । विश्वम् । दृळ्हम् । भयते । अज्मन् । आ । ते ॥ २ ॥

स्कन्द० त्वत्तः भिया भयेन, हे इन्द्र! पार्थिवानि 'पृथिवी' ( निघ १,३ ) इत्यन्तरिक्षनाम, तस्यां भवानि विश्वा सर्वाणि अच्युता चित् अच्युतपूर्वाण्यपि च्यावयन्ते पातयन्ति रजांसि उदकानि । के । सामर्थ्यान्मेघाः । किंच द्यावाक्षामा द्यावापृथिव्यौ, पर्वतासः पर्वताः वनानि वृक्षसमूहाः अन्यच्च विश्वम् सर्वम् दृळ्हम् बलवत् भयते बिभेति अज्मन् आ अजतिर्गत्यर्थः । आगमने ते तव । यदा त्वमागच्छसि तदा सर्वो बिभेतीत्यर्थः ॥ २ ॥

वेङ्कट० त्वत्तः भयेन अच्युतानि अपि पार्थिवानि रजांसि लोकाः स्वस्थानात् च्यवन्ते । द्यावापृथिवी त्रिलोकस्थाः वनानि विश्वम् दृढम् तव गमने बिभेति ॥ २ ॥

त्वं कुत्सेनाभि शुष्णमिन्द्राशुषं युध्य कुयवं गविष्टौ ।
दश प्रपित्वे अध सूर्यस्य मुषायश्चक्रमविवे रपांसि ॥ ३ ॥

त्वम् । कुत्सेन । अभि । शुष्णम् । इन्द्र । अशुषम् । युध्य । कुयवम् । गोऽइष्टौ ।
दश । प्रऽपित्वे । अध । सूर्यस्य । मुषायः । चक्रम् । अविवेः । रपांसि ॥ ३ ॥

१. 'भूद्विसूक्त' मूको. २-२. तोकन मूको. ३. पुत्रमित्यर्थः मूको. ४-४. विविधस्त्वा मूको. ५. भर' मूको. ६-६. नास्ति मूको.

स्कन्द० कुत्सशब्दोऽत्रेन्द्रसखस्यर्षेर्वाचकः। तृतीया च सहयोगलक्षणा वा चतुर्थ्यर्थे वा। त्वम् कुत्सेन ऋषिणा सह कुत्सस्य वार्थाय शुष्णम् शुष्णनामानमसुरं हे इन्द्र! अशुषम् 'अन्येन शोषयितुं' विनाशयितुमशक्यम् अभि युध्य। लुङर्थे लोट्। अभ्ययुद्धाः अभियोधितवान्। आभिमुख्येनेत्यर्थः। न च केवलं शुष्णम्। किं तर्हि। कुयवम् कुयवनामानं च गविष्टौ गाव इष्यन्ते यत्र ■ गविष्टिः सङ्ग्रामस्तस्मिन्। दश चान्यानसुरान् प्रपित्वे आसन्ननामैतत् गविष्टाविस्येतेन समानाधिकरणम्। आसन्ने प्राप्ते सङ्ग्राम इत्यर्थः। अध सूर्यस इत्यादि। अत्रेतिहासमाचक्षते—असुरैर्बाधितानां देवानां कुत्सस्य चार्थाय सूर्यस्य स्वभूतचक्रमपहृत्य तेनासुरानिन्द्रो जघानेति। तदेतद्वामदेवे-नोक्तम्— 'प्रमोत चाधितेभ्यश्चक्रं कुत्साय युध्यते। मुषाय इन्द्र सूर्यम्' (ऋ ४,३०,४) इति। यदेतदिहाप्युच्यते। अध-शब्दः अपि चेत्यस्यार्थे। अपि च सूर्यस्य स्वभूतम् मुषायः अपहृतवान् त्वम् चक्रम् रथस्य। किंच अविवेः। वेतिर्गत्यर्थः सामर्थ्याच्चान्तर्णीतण्यर्थः, शुद्धोऽपि चापपूर्वार्थे द्रष्टव्यः। अपगमयसि त्वम् रपांसि 'पापानि दृष्टिद्वारेण' सर्वप्राणिनाम् ॥ ३ ॥

वेङ्कट० त्वम् कुत्सेन सह अभि अयोधीः, शोषयितुमशक्यम् 'शुष्णम् असुरम्' इन्द्र! कुयवम् चासुरम् गवामन्वेषणे, दश चासुरान् तत्सहायान्। प्रातःकाले सूर्यस्य चक्रम् अमुष्णाः। येन चक्रेण तान् दश अभिवेः अपागमयः। रपःशब्दोऽसुरवचनः ॥ ३ ॥

त्वं शतान्यव शम्बरस्य पुरो जघन्थाप्रतीनि दस्योः ।
अशिक्षो यत्र शच्या शचीवो दिवोदासाय सुन्वते सुतक्रे भरद्वाजाय गृणते वसूनि ॥४॥

त्वम् । शतानि । अव । शम्बरस्य । पुरः । जघन्थ । अप्रतीनि । दस्योः ।
अशिक्षः । यत्र । शच्या । शचीऽवः । दिवःऽदासाय । सुन्वते । सुतऽक्रे । भरत्ऽवाजाय । गृणते । वसूनि ॥

स्कन्द० 'हे इन्द्र! त्वम् शतानि शतसङ्ख्यकानि शम्बरस्य एतन्नामकस्यासुरस्य पुरः नगराणि अव जघन्थ अवहतवान्। विनाशितवानित्यर्थः। अप्रतीनि अविद्यमानः प्रत्येता प्रतिगन्ता प्रतिद्व-राविता येषु तान्यप्रतीनि। भीतत्रस्तसर्वयोद्धृकाणीत्यर्थः। कीदृशस्य शम्बरस्य। दस्योः शत्रुभूतस्य उपक्षपयितव्यस्य वा। कस्मिन् काले। उच्यते। अशिक्षः अदाः यत्र यस्मिन् काले शच्या प्रज्ञया कर्मणा वा पुरदमनलक्षणेन हे शचीवः! प्रज्ञावन्! कर्मवन्! वा दिवोदासाय राज्ञे सुन्वते सोमाभिषवं कुर्वते हे सुतके!। अनुदात्तत्वात् इन्द्रसम्बोधनमेवैतत् न दिवोदासविशेषणम्। कर्मो-तिशयस्य क्रियासामान्यवचनः सामर्थ्यात् पाने द्रष्टव्यः। हे सुतप! भरद्वाजाय भरद्वाजनाम्ने ऋषये गृणते स्तुवते। अथवा भरद्वाजशब्दोऽत्र भरद्वाजसम्बन्धे दिवोदास एव वर्तते। अपि अपि महा-दश इति यथा जटिनि महादचशब्दः। भरद्वाजसम्बन्धाय दिवोदासायेत्यर्थः। कः[10] पुनर्दिवोदास-भरद्वाजयोः सम्बन्धः। दातृसम्प्रदानलक्षणः। दाता दिवोदासः प्रतिग्रहीता भरद्वाजः। यदेतदृष्यपि 'दशाश्वान् दश कोशान्' (ऋ ६,४७,२३) इति। किं पुनरदाः। उच्यते—वसूनि धनानि ॥ ४ ॥

वेङ्कट० त्वम् शम्बरासुरस्य शतानि पुरः हतवानसि शत्रुभिरप्रतिगतानि उपक्षपयितुः। मायया

1-1. °नाशय मूको. २. यविशामि° मूको. ३. अधः शब्दः मूको. ४-४. पानि दृष्टिद्वाराणि मूको. ५-५. शुष्णाद्यु° दर्प. ६. °षो मरः वि° दर्प. ७. तु. वैय १,३४००]. ८-८. नास्ति मूको. ९. भर° मूको. १०. का मूको.

यत्र मघावन्! प्रसखा दिवोदासाय सुन्वते हे सुतके! सुतमिन्द्रः फलप्रदानेन प्रीणाति, भरद्वाजकुलजाय[1] स्तुवते धनानि, तदानीम् अव जघन्थ इति ॥ ४ ॥

स सत्यसत्वन् महते रणाय रथमा तिष्ठ तुविनृम्ण भीमम् ।
याहि प्रपथिन्नवसोप मद्रिक् प्र च श्रुत श्रावय चर्षणिभ्यः ॥ ५ ॥

सः । सत्यऽसत्वन् । महते । रणाय । रथम् । आ । तिष्ठ । तुविऽनृम्ण । भीमम् ।
याहि । प्रऽपथिन् । अवसा । उप । मद्रिक् । प्र । च । श्रुत । श्रवय । चर्षणिऽभ्यः ॥ ५ ॥

स्कन्द० स सत्यगुणोऽसि सः, सत्यसत्वन्! । सत्वा दाता, सत्यश्चासौ सत्वा च सत्यसत्वा[2], तस्य सम्बोधनं सत्यसत्वन्! महते रणाय सङ्ग्रामाय रथम् आ तिष्ठ आक्राम । आरोहेत्यर्थः । हे तुविनृम्ण! बहुधन![3] भीमम् भयानकम् आस्थाय च याहि । '[4]अवसोपेत्यत्र चः' उपशब्दः[4][5] पाहीत्यनेनाख्यातेन सम्बन्धयितव्यः । उप याहि हे प्रपथिन्! अवसा अस्मत्पालनेन निमित्तेन वयं पालयितव्या इत्येवमर्थमित्यर्थः । मामञ्चतीति मद्रिक् । अस्मदुपपदे अञ्चतेः 'ऋत्विग्दधृक्' (पा ३,२,५९) इत्यादिना क्विन् । अस्मदो मपर्यन्तस्य 'त्वमावेकवचने', 'प्रत्ययोत्तरपदयोश्च' (पा ७,२,९७।९८) इति म आदेशः । अद्-शब्दस्यापि[6] 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (पा ६,३,९२) इति अद्रिरादेशः । छान्दसत्वाद्यकारलोपः । क्रियाविशेषणत्वाच्च नपुंसकत्वम् । '[7]मद्रिक् मद्गामि' अथवाहि मदभिमुखमित्यर्थः । प्र च श्रावय प्रकर्षेण च श्रावय विख्यापय हे श्रुत! विख्यात! चर्षणिभ्यः । सर्वमनुष्याणां सकाशात् प्रख्यातान् कुर्वित्यर्थः ॥ ५ ॥

वेङ्कट० सः[8] सत्यबल! महते सङ्ग्रामाय रथम् आ तिष्ठ बहुधन! भीमम् । उप याहि प्रशस्तमार्ग! रक्षणार्थं मदभिमुखम् । प्रश्रावय[9] चास्मान् मनुष्येभ्यः हे विश्रुत! ॥ ५ ॥

[10]इति चतुर्थाष्टके सप्तमाध्याये तृतीयो वर्गः[10] ॥

[ ३२ ]

[1]सुहोत्रो भारद्वाज ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शंतमानि वचांस्यासा स्थविराय तक्षम् ॥ १ ॥

अपूर्व्या । पुरुऽतमानि । अस्मै । महे । वीराय । तवसे । तुराय ।
विऽरप्शिने । वज्रिणे । शम्ऽतमानि । वचांसि । आसा । स्थविराय । तक्षम् ॥ १ ॥

स्कन्द० अपूर्व्या अन्येनाकृतपूर्वाणि पुरुतमानि अतिशयेन बहूनि अस्मै प्रकृतायेन्द्राय महे महते वीराय । महच्छब्दोऽत्र वीरेत्यस्य विशेषणम् । महते वीराय महावीरायेत्यर्थः । तवसे 'तव.'

---

१. °जकुलाय वि[1] लपं. २. °सत्वः मूको. ३. बहुकं मूको. ४-४. नपठेत्यस्य मूको. ५. उपशब्दस्य मूको. ६. मशब्द° मूको. ७. मद्रिक् मद् गामि मूको. ८. नास्ति वि[1] लपं. ९. प्रत्यापय मूको. १०-१०. नास्ति मूको.

( निघ २,९ ) इति बलनाम । सामर्थ्याच्चान्तर्णीतमत्वर्थः । बलवते । तुराय त्वरमाणाय हिंसित्रे वा शत्रूणाम् । विरप्शिने 'विरप्शी' ( निघ ३,३ ) इति महन्नाम । महते शरीरिणे वज्रिणे वज्रवते शन्तमानि अतिशयसुखानि वचांसि स्तुतिलक्षणानि आसा आस्येन स्थविराय वृद्धाय तक्षम् करोमि ॥ १ ॥

वेङ्कट० नूतनानि बहुतमानि अस्मै महते वीराय वृद्धाय[1] क्षिप्राय स्तुतिमते वज्रिणे सुखतमानि वचांसि आस्येन करोमि स्थविराय ॥ १ ॥

स मातरा सूर्येणा कवीनामवासयद् रुजदद्रिं गृणानः ।
स्वाधीभिर्ऋक्वभिर्वावशान उदुस्रियाणामसृजन्निदानम् ॥ २ ॥

सः । मातरा । सूर्येण । कवीनाम् । अवासयत् । रुजत् । अद्रिम् । गृणानः ।
सुऽआधीभिः । ऋक्वऽभिः । वावशानः । उत् । उस्रियाणाम् । असृजत् । निऽदानम् ॥ २ ॥

स्कन्द० य उक्तगुण इन्द्रः सः मातरा मातृभूते द्यावापृथिव्यौ । कस्य । उच्यते— कवीनाम् मेधाविनां[2] स्तोतृणाम् सूर्येण सह अवासयत् स्वस्मिन्स्वस्मिन् स्थाने वासयति । वृष्टिद्वारेण धारयतीत्यर्थः । रुजत् आख्यातमेतत् । तिङ्पूर्वपदत्वात् तु निघाताभावः । भिनत्ति च अद्रिम् मेघम् गृणानः स्तूयमानः स्वाधीभिः । आध्यानमाधीः प्रार्थना, सुप्रार्थनैः । ऋक्वभिः[3] ऋचः स्तुतयः, तद्वद्भिः स्तोतृभिः । मत्वर्थस्य च वावशानः वृष्टिजन्यं लोकोपकारं विविधमाशंसमानः[4] उस्रियाणाम् अपाम् उत् असृजत् । छन्दोऽत्र वास्त्वर्थानुवादी । तत्र विसर्गे । विसृष्टवान् । दत्तवानित्यर्थः । निदानम् नियतं दानम्, यावद्यत्र दातव्यं तावत्तत्रेत्यर्थः । अथवा स्वाधीभिर्ऋक्वभिरित्येताभ्यां[5] मरुतः प्रतिनिर्दिश्यन्ते[5], न स्तोतारः । सहयोगलक्षणा च तृतीया । असृजदित्यनेन च सम्बन्धः । स्वाध्यानैः स्तुतिमद्भिः मरुद्भिः सह ॥ २ ॥

वेङ्कट० सः द्यावापृथिवी सूर्येण स्तोतृणामर्थाय वासयति । भिनत्ति च मेघम् स्तूयमानः । सुकर्मभिः स्तुतिमद्भिर्मरुद्भिः सह कामयमानः गवामसुरापहृतानां बन्धनम् उत् असृजत् इति ॥ २ ॥

स वह्निभिर्ऋक्वभिर्गोषु शश्वन्मितज्ञुभिः पुरुकृत्वा जिगाय ।
पुरः पुरोहा सखिभिः सखीयन् दृळ्हा रुरोज कविभिः कविः सन् ॥ ३ ॥

सः । वह्निऽभिः । ऋक्वऽभिः । गोषु । शश्वत् । मितज्ञुऽभिः । पुरुऽकृत्वा । जिगाय ।
पुरः । पुरःऽहा । सखिऽभिः । सखिऽयन् । दृळ्हाः । रुरोज । कविऽभिः । कविः । सन् ॥ ३ ॥

स्कन्द० सः इन्द्रः वह्निभिः वोढृभिः ऋक्वभिः गोषु अप्सु निमित्तभूतासु आपः पातयितव्याः इत्येवमर्थमित्यर्थः । शश्वत् नित्यम् मितज्ञुभिः संश्लिष्टासियजानुभिः । सुरूपैरित्यर्थः । पुरुकृत्वा बहूनां कर्मणां कर्ता जिगाय मेघं प्रति 'गच्छति । किञ्च पुरः[6] असुराणां स्वभूताः

1. नास्ति मूको. 2. कविभिः मूको. 3. °माध्यमान मूको. 4. °कैरिति मूको.
5. °निदिश्यन्ते मूको. 6-6. गच्छतीय पुरः मूको.

पुरोहा असुराणां पुरो हन्ता सखिभिः मरुद्भिः सह सखीयन् सखीव मरुतः सखीनिच्छन् । तैः सह प्रीयमाण इत्यर्थः । दृढाः दृढाः दुर्भेद्याः रुरोज बभञ्ज कविभिः मेधाविभिः कविः सन् स्वयमपि मेधाव्येव सन् । अथवा सप्रज्ञः प्रशस्यवचनः । मेधावी प्रशस्तश्च ॥ ३ ॥

वेङ्कट० सः वोढृभिः मरुद्भिः सह गोषु सर्वदा क्षिप्तजानुभिः विक्षिप्तपादैः बहूनां कर्मणां कर्ता गच्छति । पुरः पुरोहन्ता सखिभिः सखित्वमिच्छन्[1] दृढाः मज्जयति कविभिः मरुद्भिः सह कविः सन् इति ॥ ३ ॥

स नी॒व्या॑भिर्जरि॒तार॑म॒च्छा म॒हो वाजे॑भिर्म॒हद्भि॑श्च॒ शुष्मैः॑ ।
पु॒रु॒वीरा॑भिर्वृषभ क्षिती॒नामा गि॑र्वणः सुवि॒ताय॒ प्र या॑हि ॥ ४ ॥

सः । नी॒व्या॑भिः । ज॒रि॒तार॑म् । अच्छ॑ । म॒हः । वाजे॑भिः । म॒हत्ऽभिः॑ । च॒ । शुष्मैः॑ ।
पु॒रु॒ऽवीरा॑भिः । वृ॒ष॒भ॒ । क्षि॒ती॒नाम् । आ । गि॒र्व॒णः॒ । सु॒वि॒ताय॑ । प्र । या॒हि॒ ॥ ४ ॥

स्कन्द० य उक्तगुणोऽसि सः नीव्याभिः स्तुत्यं प्रति नेतव्यत्वान्नीव्याः[2] स्तुतय उच्यन्ते । ताभिर्निमित्त-भूताभिः । स्तुतयः श्रोतव्या इत्येवमर्थमित्यर्थः । जरितारम् माम् अच्छ आप्तुम् महः । सहयोगलक्षणतृतीयार्थे[3] द्वितीया, व्यत्ययेन चैकवचनम् । महद्भिः वाजेभिः अन्नैः सह महद्भिश्च शुष्मैः बलैर्मह यानि दातव्यानि महान्त्यन्नानि, महान्ति च बलानि तानि[4] गृहीत्वेत्यर्थः । कीदृशीभिः स्तुतिभिरिति । उच्यते— पुरुवीराभिः बहवोऽस्मत्पुत्रपौत्रा ऋत्विजो वा वीराः '[5]स्तुतिकरणशूरा यासां कर्तृत्वेन[5]' सन्ति ताः "[6]पुरुवीराः, ताभिः[6]" पुरुवीराभिर्बहुवीरकर्तृकाभिरित्यर्थः । वृषभ! वर्षितः! क्षितीनाम् मनुष्याणामस्माकं स्वभूताभिः हे गिर्वणः! स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः! सुविताय, 'गत्यर्थकर्मणि' (पा २,३,१२) इत्यनेनापि चतुर्थी कर्मणि । अभ्युदयार्थं सुगतं वा यागमिदं कर्म आ प्र याहि आभिमुख्येन प्रगच्छ ॥ ४ ॥

वेङ्कट० सः त्वम् पुरुवीराभिः बन्धनसमर्थाभिर्नियुद्भिः स्तोतारम् प्रति महद्भिः अन्नैः महद्भिः च बलैः कामानां वर्षितः! गीर्भिर्वननीय! अभि प्र याहि अभ्युदयाय मनुष्याणां मध्ये जरितारम् इति ॥ ४ ॥

स सर्गे॑ण॒ शव॑सा त॒क्तो अत्यै॑र॒प इन्द्रो॑ दक्षिण॒तस्तु॑रा॒षाट् ।
इ॒त्था सृ॑जा॒ना अन॑पावृ॒दर्थं॑ दि॒वेदि॑वे विविषुरप्रमृ॒ष्यम् ॥ ५ ॥

सः । सर्गे॑ण । शव॑सा । त॒क्तः । अत्यैः॑ । अ॒पः । इन्द्रः॑ । द॒क्षि॒ण॒तः । तु॒रा॒षाट् ।
इ॒त्था । सृ॒जा॒नाः । अन॑पऽवृत् । अर्थ॑म् । दि॒वेऽदि॑वे । वि॒वि॒षुः॒ । अ॒प्र॒ऽमृ॒ष्यम् ॥ ५ ॥

---

१. सखीभिरिच्छन् वि॰ कपं, सखित्वमिच्छन् ल. २. नेव्यत्वा° मूको. ३. °आप्तु° मूको ४. नास्ति मूको. ५-५. नास्ति मूको. ६-६. 'शूराया सन्ति' मूको.

स्कन्द० य वक्तुगुणः सः सर्गेण वेगेन शवसा शवःशब्दोऽत्रान्तर्णीतमत्वर्थः। बलवता। महतेत्यर्थः। तक्तः तकतिर्गतिकर्मा। यदायदा गन्तव्यं तदातदा गतः अत्यैः अश्वैः अपः मेघस्थाः प्रति इन्द्रः दक्षिणतः 'दक्षिणोत्तराभ्यामतसुच्' (पा ५, ३, २८) इत्येवमर्थे[१] सप्तम्या अतसुच्। सप्तम्यर्थयुक्तदक्षिणतःशब्दश्रुतेश्चावस्थिता इति वाक्यशेषः। दक्षिणे देशेऽवस्थिताः। उत्तरदेशवर्तिमेरुपृष्ठे हि स्वर्गास्येऽवस्थितस्येन्द्रस्य सर्वं दक्षिणतः। अत [२]वषपन्नं मेघस्थानामपां[३] दक्षिणतोऽवस्थितत्वम्। तुराषाट् तूर्वतेर्हिंसार्थस्य[४] [५]तुरः। तुराः[६] सङ्ग्रामा हिंसितारो वा तेषु[७] तेषां [८] [९]अभिभविता। तदा च इत्था इत्थम् अनेन प्रकारेण सृजानाः सृज्यमानाः। गोप्यमाना इत्यर्थः[१०]। कारता। सामर्थ्यात् स्तुतयः। अनपावृत् द्वितीयार्थे प्रथमैषा। अनपावृतमनवगन्तारम्। सङ्ग्रामेष्वपलायिनमित्यर्थः। अर्थम् अर्तेर्गत्यर्थस्य इदं रूपम्। शुद्धोऽपि चाप्नार्थिरुपपूर्वार्थे द्रष्टव्यः। उपगन्तारं चेन्द्रम् दिवेदिवे अहन्यहनि विविधुः व्याप्नुवन्ति अप्रमृष्यम् अमर्षितारम्। क्षमारहितमित्यर्थः ॥ ५ ॥

वेङ्कट० "सः इन्द्रः" उत्साहेन बलेन च सक्तः अश्वैः क्षोत्रलक्षणं कर्म युद्धं यज्ञं वा दक्षिणतः तूर्णमभिभविता सेवते। इत्थम् स्तुतिं सृजन्तः अपवपवरणीयं धनम् दिवेदिवे प्राप्नुवन्ति शत्रुभिः अप्रमृष्यम्[८] इति ॥ ५ ॥

[९]इति चतुर्थाष्टके सप्तमाध्याये चतुर्थो वर्गः[९] ॥

[ ३३ ]

[१]शुनहोत्रो भारद्वाज ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[१]।

य ओजिष्ठ इन्द्र तं सु नो दा मदो वृषन्त्स्वभिष्टिर्दास्वान्।
सौवश्व्यं यो वनवत् स्वश्वो वृत्रा समत्सु सासहदमित्रान् ॥ १ ॥

यः। ओजिष्ठः। इन्द्र। तम्। सु। नः। दाः। मदः। वृषन्। सुऽअभिष्टिः। दास्वान्।
सौवश्व्यम्। यः। वनवत्। सुऽअश्वः। वृत्रा। समत्ऽसु। ससहत्। अमित्रान् ॥ १ ॥

स्कन्द० 'शुनहोत्रस्तु 'पञ्चर्चे द्वे'[१]। शुनहोत्रो नाम ऋषिः 'य ओजिष्ठः' इत्येते द्वे सूक्ते अपश्यत्। हे इन्द्र! तम् तृतीयार्थे द्वितीयैषा। तेन नः अस्मभ्यम् सु दाः सुष्ठु देहि यदद्वये प्रार्थयामहे। केन[१०]। हे इन्द्र! यः ओजिष्ठः अतिशयेन बलवान् तव मदः सोमजनितः। हे वृषन्! वर्षितः! स्वभिष्टिः उच्यते। यः ओजिष्ठः अतिशयेन बलवान् तव मदः सौवश्व्यम् स्वश्वस्य कर्म सुरमभीष्टः प्रार्थ्यते यः[११] स स्वभिष्टिः दास्वान् दानवान् मदः सौवश्व्यम् स्वश्वस्य कर्म सम्भजते सङ्ग्रामम्। यः चेन्द्रस्य वनवत् 'वन षण सम्भक्तौ' इत्यस्यायमुक्तातो विकरणश्छान्दसः[१२]। सम्भजते सङ्ग्रामम्। यः चेन्द्रस्य वनवत्। वृत्रमसुरम् समत्सु सङ्ग्रामेषु सासहत् स्वश्वः शोभनाश्वयुक्तः वृत्रा द्वितीयैकवचनस्यायमाकारः। वृत्रमसुरम् समत्सु सङ्ग्रामेषु सासहत् अभिभवन् अमित्रान् अन्यान् च शत्रून्। यद्यपि च सङ्ग्रामसम्भजनं वृत्रामित्राभिभवनं[१३] चेन्द्र एव करोति, [redacted] मदः, तथापि मद इन्द्रस्तत्करोति। मदनिमित्तत्वात् तद् एव करोतीत्युच्यते ॥ १ ॥

१. °थमिथं मूको. २-२. °यामेषपन्ना° मूको. ३. तुरं° मूको. ३-४. तुरस्तुरः मूको. ५. तासिमन् मूको. ६-६. °मीनाथ···हस्वं मूको. ७-७. नास्ति मूको. ८. °प्र स्पं; °प्रतिम्ब वि°. ९-९. यद्धे. पद्. मूको. १०. यः ता मूको. ११. यं मूको. १२-१२. °त्मकन्दसः मूको. १३. इन्द्रियं° मूको.

वेङ्कट० शुनहोत्रो भारद्वाजः[1]। यः ओजस्वितमः शुष्मः, तम् इन्द्र! अस्मभ्यम् सुष्ठु देहि, मादस्य च धर्षितः! सुष्ठ्वभ्येषणीयः दानवान् प्रदाता। सौवश्व्यस्य सुवम् यः भजते शोभनाश्वः युद्धेषु उपद्रवान् अमित्रान् च अत्यन्तं सहमानः[2] ॥ १ ॥

त्वां हीन्द्रावसे विवाचो हवन्ते चर्षणयः शूरसातौ ।
त्वं विप्रेभिर्वि पणीँरशायस्त्वोत इत्सनिता वाजमर्वा ॥ २ ॥

त्वाम् । हि । इन्द्र । अवसे । विऽवाचः । हवन्ते । चर्षणयः । शूरऽसातौ ।
त्वम् । विप्रेभिः । वि । पणीन् । अशायः । त्वाऽऊतः । इत् । सनिता । वाजम् । अर्वा ॥ २ ॥

स्कन्द० त्वाम् हि इति पदपूरणः। हे इन्द्र! अवसे पालनाय आत्मनः विवाचः विविधवचनाः हवन्ते आह्वयन्ति चर्षणयः मनुष्याः शूरसातौ सङ्ग्रामे। किञ्च त्वम् विप्रेभिः मेधाविभिः मरुद्भिः पणीन् वणिजः अयष्टॄन् वि अशायः वीरशयनमशीरयेतस्य स्थानं। अतिशाययसि अभिभावयसि। यष्टृभ्यमयष्टृभ्यः उत्कृष्टान् करोषीत्यर्थः। किञ्च त्वोतः त्वया ऊतः पालितः। इत् इति पदपूरणः। सनिता सम्भक्ता वाजम् अन्नम् अर्वा त्वां प्रति स्तुतिभिर्गम्या तव स्तोता। त्वया पालितोऽन्नं सम्भजत इत्यर्थः ॥ २ ॥

वेङ्कट० त्वाम् हि इन्द्र! रक्षणाय विविधवाचः हवन्ते चर्षणयः युद्धे। त्वम् च मरुद्भिः सह असुरान् युद्धे निःशेषं शाययसि। त्वोतः एव भवते गन्ता योद्धा पुरुषः सङ्ग्रामम् ॥ २ ॥

त्वं ताँ इन्द्रोभयाँ अमित्रान्दासा वृत्राण्यार्या च शूर ।
वधीर्वनेव सुधितेभिरत्कैरा पृत्सु दर्षि नृणां नृतम ॥ ३ ॥

त्वम् । तान् । इन्द्र । उभयान् । अमित्रान् । दासा । वृत्राणि । आर्या । च । शूर ।
वधीः । वनाऽइव । सुऽधितेभिः । अत्कैः । आ । पृत्ऽसु । दर्षि । नृणाम् । नृऽतम ॥ ३ ॥

स्कन्द० तच्छब्दश्रुतेर्यच्छब्दार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। ये 'त्वां न परिचरन्ति'[3] त्वम् तान् हे इन्द्र! उभयान् उभौ वक्ष्यमाणावयवौ येषां तान्[3] उभयेनानुमित्रान्[5] अमित्रान् शत्रून्। कतमान्। उच्यते—दासा वृत्राणि आर्या च। दासशब्दोऽत्रासदाचारवचनः। वृत्रशब्दः शत्रुवचनः। आविष्टलिङ्गत्वाच्च नपुंसकता। ये चासदाचाराः अनार्याः शत्रवः ये चाऽऽर्याः तान् हे शूर! वधीः हंसि वनेव वनानि वृक्षसमूहाः तानि तक्षेव अन्यो वा कश्चित्। सुधितेभिः 'धिञ् धारणे' इत्येतस्यैतदन्तर्णीतण्यर्थस्य रूपम्। सुधायितैः सुनिशितैः तीक्ष्णैरित्यर्थः। अथवा सुधितेभिरिति दधातेर्धारणार्थस्य रूपम्। सुधारितैः सुगृहीतैरित्यर्थः। अत्कैः अत्कशब्दोऽत्र रूपवचनो वा 'अत्कं न पुरो जरिमा वि दर्दः' (ऋ ४,१६,१४) इति, कवचवचनो[6] वा 'हिरण्ययान् प्रत्यत्काँ अमुग्ध्वम्' (ऋ ५,५५,६) इति। इह तु सामर्थ्याद् वज्रवचनः। वज्रैः। इन्द्रस्य

1. मर° मूको. 2. °न ल. 3-3. त्वामवरि मूको. 4. नास्ति मूको. 5. °येनानुमित्राम् मूको.
6. वचनो मूको.

हि बहवो वज्राः। अतो बहुवचनमविरुद्धम्। व्यत्ययेन वा। किञ्च पृत्सु सङ्ग्रामेषु आ दर्षि आदारयसि। नृणाम् द्वितीयार्थे षष्ठ्येषा। नॄन् शत्रुभूतान् मनुष्यानसुरादीन् हे नृतम! अतिशयेन पुरुष!। शूरेत्यर्थः ॥ ३ ॥

वेङ्कट० त्वम् तान् इन्द्र! उभयान् अमित्रान् अवधीः दासान् आर्यान् च। तदेवाऽऽह— दासा वृत्राणि आर्या च शूर! वधीः अरण्यानीव सुतीक्ष्णैः आयुधैः। आ दर्षि च नॄन् युद्धेषु नेतृतम! ॥ ३ ॥

स त्वं न॑ इन्द्राकवा॑भिरू॒ती सखा॑ वि॒श्वायु॑रवि॒ता वृ॒धे भूः॑।
स्व॑र्षाता॒ यद्ध्वया॑मसि त्वा॒ युध्य॑न्तो नेमधि॑ता पृ॒त्सु शू॑र ॥ ४ ॥

सः। त्वम्। नः॒। इ॒न्द्र॒। अक॑वाभिः। ऊ॒ती। सखा॑। वि॒श्वऽआ॑युः। अ॒वि॒ता। वृ॒धे। भूः॒।
स्वः॑ऽसाता। यत्। ह्वया॑मसि। त्वा॒। युध्य॑न्तः। ने॒मऽधि॑ता। पृ॒त्ऽसु। शू॒र॒ ॥ ४ ॥

स्कन्द० तच्छन्दश्रुतेः प्रच्छन्नः 'सखा विश्वायुः' इत्येतत्सम्बन्धी भव्याहार्यः। सखा सखिस्थानीयोऽस्माकम् विश्वायुः सर्वत्र गन्ता च यः सः त्वम् नः अस्माकम् हे इन्द्र! अकवाभिः उत्कृष्टाभिः ऊती ऊतिभिः पालनैः अविता रक्षिता वृधे वर्धनाय भूः भव। कथं वयं वर्धेमहि इत्येवमर्थ- मुत्कृष्टैः पालनैः पालयास्मानित्यर्थः। कदा। उच्यते— स्वर्षाता स्वः[1] सर्वं शत्रुधनम् येन सम्भ- ज्यते स स्वर्षातिः तस्मिन् यत् यदा ह्वयामसि आह्वयामः[2] त्वां वयं युध्यन्तः युध्यमानाः नेमधिता नेमधिते सङ्ग्रामे। पृत्सु। सङ्ग्रामनामैतत्। [illegible] तं नेमधितेत्यनेन सङ्ग्रामस्योक्तत्वात् तत्कारिषु वर्तते। कथम्। पृतच्छब्दात् 'तत्करोति' (पावा ३,१,२६) इति 'णिच्। ण्यन्तात्' क्विप्। सप्तमी चेयं 'यस्य च भावेन भावलक्षणम्' (पा २,३,३७) इति। तच्छ्रुतेरेव लक्षणयोग्यक्रियापदा- ध्याहारः। सङ्ग्रामकारिषु प्राप्तेषु हे शूर! विक्रान्त! ॥ ४ ॥

वेङ्कट० सः त्वम् अस्माकम् इन्द्र! अकुत्सितैः रक्षणैः सखा सर्वतः रक्षिता वर्धनाय भव। यदा सर्वैः सम्भजनीये नेमधितौ सङ्ग्रामे त्वाम् ह्वयामः पृतनासु युध्यन्तः शूर! इति ॥ ४ ॥

नू॒नं न॑ इन्द्राप॒राय॑ च स्या॒ भवा॑ मृळी॒क उ॒त नो॑ अ॒भिष्टौ॑।
इ॒त्था गृ॒णन्तो॑ म॒हिन॑स्य॒ शर्म॑न् दि॒वि स्या॑म॒ पार्ये॑ गो॒षत॑माः ॥ ५ ॥

नू॒नम्। नः॒। इ॒न्द्र॒। अ॒प॒राय॑। च॒। स्याः॒। भव॑। मृ॒ळी॒कः। उ॒त। नः॒। अ॒भिष्टौ॑।
इ॒त्था। गृ॒णन्तः॑। म॒हिन॑स्य। शर्म॑न्। दि॒वि। स्या॒म॒। पार्ये॑। गो॒सऽत॑माः ॥ ५ ॥

स्कन्द० नूनम् इति पदपूरणः। अस्माकं हे इन्द्र! अपराय च अपरशब्दः सन्निकृष्टकालवचनः। सन्निकृष्टकालाय। चशब्दोर्विप्रकृष्टकालाय चेति वाक्यशेषः। स्याः भव। यथा वयं सन्निकृष्टं विप्रकृष्टं च कालं प्राप्नुमः। चिरंजीविनोऽस्मान् कुर्वित्यर्थः। भव च त्वम् मृळीकः उत सुखोऽपि नः अस्माकम् अभिष्टौ अभिष्टिः प्रार्थना यागो वा। तत्र प्रार्थ्यमान इज्यमानो वा

1. स्वं मूको. 2. आह्वयाम मूको. 3. ण्यर्थण्यन्तात् मूको.

सुखोऽस्माकं भवेत्यर्थः । किंच इत्था सत्यम् गृणन्तः स्तुवन्तः महिनस्य महतस्तव स्वभूते शर्मन् गृहे दिवि द्युलोकाख्ये । अथवा दिवीति व्यधिकरणं गृहस्य विशेषणम् । द्युलोके यद् गृहं तत्र वयं स्याम । सत्यं स्तुवन्तो मरणोत्तरकालमपि स्वर्गम् इन्द्रलोकं गच्छेमेत्यर्थः । अथवा गावः सास्नामत्य एव । तासामतिशयेन सम्भकारः । इह लोकेऽप्यस्माकं गावः सन्त्वित्यर्थः ॥ ५ ॥

वेङ्कट० अस्माकम् इन्द्र ! अभ्रे अह्नि अपरस्मै[1] च स्याः । अथ च भद्रा भव । अपि च सुखयिता भव अस्माकम् अश्वेषणे । इत्थम् स्तुवन्तः महतस्तव सुखे अह्नि परे भवे उत्तमे स्याम[2] अतिशयेन पशूनां सम्भकारः ॥ ५ ॥

[3]इति चतुर्थाष्टके सप्तमाध्याये पञ्चमो वर्गः[3] ॥

[ ३४ ]

[4]शुनहोत्रो भारद्वाज ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[4] ।

सं च॒ त्वे ज॒ग्मुर्गिर॑ इन्द्र पू॒र्वीर्वि च॒ त्वद्य॑न्ति वि॒भ्वो॑ मनी॒षाः ।
पु॒रा नू॒नं च॑ स्तु॒तय॒ ऋषी॑णां पस्पृ॒ध्र इन्द्रे॒ अध्यु॑क्था॒र्का ॥ १ ॥

सम् । च॒ । त्वे इति॑ । ज॒ग्मुः॒ । गिरः॑ । इ॒न्द्र॒ । पू॒र्वीः । वि । च॒ । त्वत् । य॒न्ति॒ । वि॒ऽभ्वः॑ । म॒नी॒षाः ।
पु॒रा । नू॒नम् । च॒ । स्तु॒तयः॑ । ऋषी॑णाम् । प॒स्पृ॒ध्रे । इन्द्रे॑ । अधि॑ । उ॒क्थ॒ऽअ॒र्का ॥ १ ॥

स्कन्द० त्वे इति तृतीयायाः शे आदेशः । त्वया सह सम् च जग्मुः सङ्गच्छन्ते च गिरः वाचः स्तुतिलक्षणाः हे इन्द्र ! पूर्वीः [4]चिरन्तन्यः पूर्वमस्माभिः[4] कृता पूर्वेत्यर्थः । वि च त्वत् यन्ति वियन्ति च त्वत्तः । विभ्वः [5]अपठितमपि महत्नामैतत्[5] । महत्यः मनीषाः स्तुतयः । बहुत्वात् स्तुतीनां काश्चित्त्वां गच्छन्ति, काश्चित् स्तुत्वोपरमन्तीत्यर्थः । न च साम्प्रतमेव केवलम् । किं तर्हि । पुरा नूनम् च नूनंशब्दोऽत्रेदानीमित्यस्यार्थे । पुरा च इदानीं च स्तुतयः ऋषीणां पस्पृध्रे अहं शोभनाऽहं शोभनेत्येव स्पर्धन्ते इव इन्द्रे अधि इन्द्रस्योपरि । इन्द्रम- भिप्रेत्य कल्पिता भवेत्यर्थः । कीदृशो इन्द्रे । उच्यते । उक्थार्के उक्थानि शस्त्रविशेषाः । अर्का मन्त्राः । उक्थेषु मन्त्रा यस्य स्तुत्यप्रकाशकतया सम्बन्धिनः स उक्थार्कः [6]"दिवोदासात्" ( ऋ ६,४७,२२ ) इत्येवमादिस्तोत्रकः[6] तस्मिन्नुक्थार्के । सप्तम्या आकारः । अथवा यमुद्दिश्य "तस्य वक्तव्यो" यः स उक्थः । अर्को देवः । उक्थश्चासावर्कश्च उक्थार्कः सः । तस्मिन्नुक्थार्के ॥ १ ॥

वेङ्कट० इन्द्र ! त्वयि बह्व्यः स्तुतयः सम् गच्छन्ते सहाभिगच्छन्ति । तथा विविधम् च त्वयि गच्छन्त्येकैकशः[8] महत्यः स्तुतयः । अपि वा त्वत्तः स्तोतॄणाम् बह्व्यः सुमतयो विगच्छन्ति[9] । पुरा सम्प्रति च स्तुतयः ऋषीणाम् इन्द्रे स्पर्धन्तेऽहमहमिकयोपतिष्ठन्ति उक्थैरर्चनीये ॥ १ ॥

पु॒रु॒हू॒तो यः पु॑रुगू॒र्त ऋभ्वाँ॒ एकः॑ पुरुप्रश॒स्तो अस्ति॑ य॒ज्ञैः ।
रथो॒ न म॒हे शव॑से युजा॒नो॑ऽ३॒॑स्माभि॒रिन्द्रो॑ अनु॒माद्यो॑ भूत् ॥ २ ॥

---

1. परस्मै वि॰. 2. स्याम क॰. 3-3. नास्ति मूको. 4-4. °न्तन्यपूर्वं मूको. 5-5. अपठितमह° मूको. 6-6. दिवोदासादित्यवस्तोत्रकः मूको. 7-7 तदर्थान्य मूको. 8. °शं° ल. 9. °च्छन्ते क; °च्छन्तः लपं; °च्छन्त वि°.

पुरुऽहूतः । यः । पुरुऽगूर्तः । ऋभ्वा । एकः । पुरुऽप्रशस्तः । अस्ति । यज्ञैः ।
रथः । न । महे । शवसे । युजानः । अस्माभिः । इन्द्रः । अनुऽमाद्यः । भूत् ॥ २ ॥

स्कन्द० पुरुहूतः यः इन्द्रः पुरुगूर्तः गुरतेः कर्तरि चेयं निष्ठा। बहूनां शत्रूणामुपरि वज्रस्योद्यन्ता। ऋभ्वा 'ऋभुः' ( निघ ३,१५ ) इति मेधाविनाम। प्रथमार्थे च[1] तृतीया। मेधावी एकः अन्तर्णीतावधारणमेतत्। एक एव पुरुप्रशस्तः बहुभिः स्तुतः .अस्ति भवति यज्ञैः। सप्तम्यर्थे तृतीयैषा। यज्ञेषु। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सः[2], रथः न रथ इव महे महते शवसे बलाय सेनालक्षणाय युजानः। यथा रथो महच्छत्रुबलं जेतुं युज्यते एवम्। सर्वदैव अस्माभिः इन्द्रः अनुमाद्यः 'मदति' ( निघ ३,१४ ) इत्यर्चतिकर्मा। अनुशब्दश्चात्र पाश्चात्यानुवादी। स्तोतव्यः भूत् भवत्वित्याशास्महे ॥ २ ॥

वेङ्कट० बहुभिराहूतः यः, यश्च बहुभिरुद्योजितः, यश्च भवति महान् एक एव बहुभिश्च प्रशस्तः स्तवैः यज्ञैः हेतुभिः, सोऽयम् रथः इव महते बलाय युञ्जानः अस्माभिः इन्द्रः अनुमदनीयः भवतु ॥ २ ॥

न यं हिंसन्ति धीतयो न वाणीरिन्द्रं नक्षन्तीदभि वर्धयन्तीः ।
यदि स्तोतारः शतं यत् सहस्रं गृणन्ति गिर्वणसं शं तदस्मै ॥ ३ ॥

न । यम् । हिंसन्ति । धीतयः । न । वाणीः । इन्द्रम् । नक्षन्ति । इत् । अभि । वर्धयन्तीः ।
यदि । स्तोतारः । शतम् । यत् । सहस्रम् । गृणन्ति । गिर्वणसम् । शम् । तत् । अस्मै ॥ ३ ॥

स्कन्द० न यम् हिंसन्ति धीतयः शत्रूणां प्रज्ञाः कर्माणि वा। न च वाणीः स्तुतिलक्षणा वाचः इन्द्रम् नक्षन्ति व्याप्नुवन्ति। इत् इति पदपूरणः। अभि वर्धयन्तीः अभि वर्धयन्त्यः। किम्। सामर्थ्यात् गुणान्। सर्वगुणविवक्षया विप्राः युज्यमाना नैव सर्वान् गुणान् इन्द्रस्य प्रकाश-यन्तीत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तम् यदि स्तोतारः शतम् यत् यच्छब्दोऽयं यदिशब्दस्यार्थे। यदि सहस्रम् गृणन्ति स्तुवन्ति गिर्वणसम् गिरः[3] स्तुतयः ताभिः सम्भजनीयम्[4] वासो वा सम्भक्तारम् शम् सुखमेव तत् अस्मै इन्द्राय। अतिबहुभिरपि स्तोतृभिः प्रयुज्यमानाः स्तुतयः इन्द्रं प्रीणयन्त्येव नातिबहुत्वाद् उद्वेजयन्तीत्यर्थः ॥ ३ ॥

वेङ्कट० न यम् हिंसन्ति कर्माणि, न च स्तुतिशब्दाः यम् इन्द्रम्, अभि गच्छन्ति एव वर्धयन्तः[5]। यदि स्तोतारः शतम् यदि वा सहस्रम् स्तुवन्ति गीर्भिर्वननीयम्। तत् सर्वम् अस्मै सुखकरमेव भवति, न हिंसकम्। अनाढ्यो हि हिंसयते स्तुतिभिरशक्नुवन्[6] दातुमिति ॥ ३ ॥

अस्मा एतद् दिव्य१र्चेव मासा मिमिक्ष इन्द्रे न्ययामि सोमः ।
जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः ॥ ४ ॥

---

१. वा मूको. २. नास्ति मूको. ३. गिरः मूको. ४. संभजनीयः मूको. ५. वर्धयन्तः मूको. ६. स्तुतीरश° वि°, स्तुतिरश° छ कर्प.

अस्मै । एतत् । दिवि । अर्चाऽइव । मासा । मिमिक्षः । इन्द्रे । नि । अयामि । सोमः ।
जनम् । न । धन्वन् । अभि । सम् । यत् । आपः । सत्रा । ववृधुः । हवनानि । यज्ञैः ॥४॥

स्कन्द० अस्मै इति इन्द्रे इत्येतेन सामानाधिकरण्यात् सप्तम्यर्थे चतुर्थी । एतत् इति व्यत्ययेन नपुंसकता । अस्मिन्नेष: दिवि अर्चा इव मासा अर्चशब्दो दीप्तवचनः पूज्यमानवचनो वा । मासशब्दश्चन्द्रमसो वाचकः, द्विवचननिर्देशाच्चात्र तत्सहचरितः सूर्योऽपि द्वितीयो गृह्यते । यथा द्युलोके दीप्तौ पूजितौ वा सूर्याचन्द्रमसौ गच्छतः[1] एवम् मिमिक्षः गन्ता इन्द्रे नि अयामि नियतः सोमः । किं तर्हि 'तस्य सोमस्य'[2] । उच्यते । जनम् न धन्वन् धन्वेति[3] मरुदेश उच्यते । यथा तृषितं जनं मरुदेशे एवम् यत् यम् आपः वसतीवर्यैकधनाख्यलक्षणाः सत्रा सदा अभि सम् ववृधुः अभिसंवर्धयन्ति । न च केवलः सोमो नियतः । किं तर्हि । हवनानि हूयन्तीत्यर्थे तिस्रमा । स्तुतयश्च यज्ञैः सह । सप्तम्यर्थे वा तृतीया । यज्ञेषु । यथा सूर्याचन्द्रमसौ दिव्येव गच्छतः नान्यत्र, एवं नायान् कश्चित् सोमः स्तुतियंत्रो वा स सर्वं इन्द्रं प्रति गच्छतीत्यर्थः ॥ ४ ॥

वेङ्कट० अस्मै एव[4] एतम्[5] नियम्यते दिवि स्थिता[6] मासश्चन्द्रमसः सम्बन्धिनी दीप्तिरिव । तदेवाहसिच्यमानः सोमः इन्द्रार्थं नियम्यत इति । धन्वनि स्थितम् जनम् यदा आपः न अभि सम् गच्छन्ते, तदानीं सद्यमेव हवनानि इन्द्रविषयाणि वर्धयन्ति यज्ञैः सहेति ॥ ४ ॥

अस्मा एतन्मह्याङ्गूषमस्मा इन्द्राय स्तोत्रं मतिभिरवाचि ।
असद् यथा महति वृत्रतूर्य इन्द्रो विश्वायुरविता वृधश्च ॥ ५ ॥

अस्मै । एतत् । महि । आङ्गूषम् । अस्मै । इन्द्राय । स्तोत्रम् । मतिऽभिः । अवाचि ।
असत् । यथा । महति । वृत्रऽतूर्ये । इन्द्रः । विश्वऽआयुः । अविता । वृधः । च ॥ ५ ॥

स्कन्द० अस्मै अस्य इन्द्रस्य अर्थाय एतत् महि महत् आङ्गूषम् शस्त्रलक्षणं स्तुतिरूपम् अस्मै एव इन्द्राय स्तोत्रम् सामगीतिसम्बद्धं स्तोत्राख्यं स्तुतिरूपं मतिभिः मेधाविभिः अस्माभिः अवाचि उक्तम् । कथं पुनरवाचि । असत् भवति यथा महति वृत्रतूर्ये सङ्ग्रामे इन्द्रः विश्वायुः सर्वगामी, सर्वत्राप्रतिहतगतिरित्यर्थः । अविता पालयिता वृधः च वर्धयिता च ॥ ५ ॥

वेङ्कट० अस्मै एतत् महत् स्तोत्रम् । पुनः अस्मै इति पूरणम् । इन्द्राय स्तोत्रम् स्तोतृभिः उक्तमासीत् । भवति यथा महति सङ्ग्रामे इन्द्रः विश्वात्मा रक्षिता वर्धकः च इति ॥ ५ ॥

[7]इति चतुर्थाष्टके सप्तमाध्याये षष्ठो वर्गः[7] ॥

[ २५ ]

[7]नरो भारद्वाज ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[7] ।

कदा भुवन् रथक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रपोष्यं दाः ।
कदा स्तोमं वासयोऽस्य राया कदा धियः करसि वाजरत्नाः ॥ १ ॥

---

१ नास्ति मूको. २-२. यस्य कस्य मूको. ३. धन्वेतीति मूको. ४. नास्ति ल; एवं लपं. ५. तत् वि' लपं. ६. स्थिताः छ लपं. ७-७ नास्ति मूको.

कदा । भुवन् । रथऽक्षयाणि । ब्रह्म । कदा । स्तोत्रे । सहस्रऽपोष्यम् । दाः ।
कदा । स्तोमम् । वासयः । अस्य । राया । कदा । धियः । करसि । वाजऽरत्नाः ॥ १ ॥

स्कन्द० 'कदा भुवन् नरस्य' । च शब्द ¹ पञ्चर्चग्रहणानुकर्षणार्थः । नरो नामर्षि पञ्चर्चमेव 'कदा भुवन्' इत्येतदपश्यत् । कदा कस्मिन् काले भुवन् भविष्यन्ति रथक्षयाणि त्वाम् प्राप्य रथस्य निवासानि ब्रह्म अस्मदीयानि स्तुतिरूपाणि । कदा मत्स्तुतयस्त्वा प्राप्स्यन्तीत्यर्थः । प्राप्तश्च सन् स्तुतिभि कदा मह्यम् स्तोत्रे सहस्रपोष्यम् करण चाय कृत्यमस्यय । सहस्रञ्च पोषणञ्च सहस्रस्य वा पोषणम् सहस्रपोष्यम् । किं पुनस्तत् । गोयूथ तद् दा दास्यसि । कदा वा स्तोमम् वासय आच्छादयिष्यसि । अस्य आत्मन एवायमिदमाऽन² प्रतिनिर्देश । अस्य मम नरात्मस्य स्तोतु स्वभूतेन राया धनेन । कदा मह्य स्तुवत धन दास्यसीत्यर्थ । कदा वा धिय कर्माणि मागारत्यानि करसि करिष्यसि वाजरत्ना अन्नेन रमणीया । अन्नमपि कदा दास्यसीत्यर्थः । दानविलम्बनादुपालम्भोऽयम् ॥ १ ॥

वेङ्कट० नरो भारद्वाज । कदा भविष्यन्ति रथनिवासानि अन्नानि बहूनि । बहु च इन्द्र¹ रथवाहम् अन्नम् भवति । कदा वा स्तोत्रे सहस्रपोषनिमित्त धन दास्यसि । कदा वा स्तोमम् अस्य धनेन छादयिष्यसि । कदा वा करिष्यसि कर्माणि रमणीयान्नानि ॥ १ ॥

कर्हि स्वित् तदिन्द्र यन्नृभिर्नॄन् वीरैर्वीरान् नीळयासे जयाजीन् ।
त्रिधातु गा अधि जयासि गोष्विन्द्र द्युम्नं स्वर्वद् धेह्यस्मे ॥ २ ॥

कर्हि । स्वित् । तत् । इन्द्र । यत् । नृऽभिः । नॄन् । वीरैः । वीरान् । नीळयासे । जय । आजीन् ।
त्रिऽधातु । गाः । अधि । जयासि । गोषु । इन्द्र । द्युम्नम् । स्वःऽवत् । धेहि । अस्मे इति ॥२॥

स्कन्द० अयमप्युपालम्भ एव । कर्हि कस्मिन् काले । स्विद् इति पदपूरण । तद् वीर्यं हे इन्द्र¹ । यत् कतमत् । उच्यते । यत् तृतीयार्थे प्रथमा । येन नृभि मनुष्यैरात्मीयै नॄन् तदीयान् वीरैः शूरैः वीरान् शूरानपि सत³ नीळयासे नीलशब्दात् 'तत्करोति तदाचष्टे' (पा० ३,१,२६) इत्येव⁴ ण्यन्तात् 'हेतुमति च' (पा ३,१,२६) इति द्वितीयो णिच । नीलान् कारयसि । मृतश्च सन् नीलो भवतीति नीलत्वेन मरण लक्ष्यते । मारयसीत्यर्थः । जय एतदर्थेऽत्र लोट । जयसि च आजीन् सङ्ग्रामान् । येन च त्रिधातु गा अभि जयासि अधिशब्द अधिपरी अनर्थकौ' (पा १,४,९३) इति कर्मप्रवचनीय पदपूरण । जयसि । त्रिधातव इति भूते वर्तमाने भविष्यति च त्रिष्वपि कालेषु उदकानि दत्तासीत्यर्थः । अथवा त्रिधातव इति गवां विशेषणम् । व्यत्ययेन तु नपुंसकैकवचने । धातुशब्द स्वभाववचनोऽमृतवचनो वा । त्रीणि धाऽमृतानि देवपितृमनुष्योपभोग्यानि यस्य स्वभावा देवपितृमनुष्यतर्पणलक्षणा यासाम्, त्रिधातवो गाव, ता जयसि । उपसुपालम्भ आकाङ्क्षण वाक्यम्—गोषु सहयोग याता वा त्रिधातवो गाव, ता जयसि । य गोभि सह हे इन्द्र । द्युम्नम् यशोऽन्न धन वा स्ववत् सर्वाभिलक्षणतृतीयार्थे सप्तमी । य गोभि सह हे इन्द्र । द्युम्नम् प्रशस्तयुक्त सकलमित्यर्थ । धेहि देहि अस्मे अस्मभ्यम् ॥ २ ॥

१ कदा भुवन् नरस्य मूको  २ °दमन्न मूको  ३ सता मूको  ४. इत्येव मूको

वेङ्कट० कदा स्वित् तत् इन्द्र ! भवति, यत् त्वम् परकीयैः[1] नेतृभिः अस्मदीयान् नेतॄन् वीरैः च वीरान् सङ्गमयसि । जयसि चास्मदर्थम् आजीन् । गोषु गन्त्रीः सेनास्त्वम् त्रिधातु अधि जयसि त्रिगुणं जयसि । तथा सत्यस्मासु इन्द्र ! अन्नं सर्वमनुष्ययुक्तम् धेहि इति ॥ २ ॥

कर्हि स्वित् तदिन्द्र यज्जरित्रे विश्वप्सु ब्रह्म कृणवः शविष्ठ ।

कदा धियो न नियुतो युवासे कदा गोमघा हवनानि गच्छाः ॥ ३ ॥

कर्हि । स्वित् । तत् । इन्द्र । यत् । जरित्रे । विश्वऽप्सु । ब्रह्म । कृणवः । शविष्ठ ।

कदा । धियः । न । निऽयुतः । युवासे । कदा । गोऽमघा । हवनानि । गच्छाः ॥ ३ ॥

स्कन्द० अयमपि पूर्ववदुपालम्भः[2] । कस्मिन्[3] काले तद् वीर्यं तव हे इन्द्र !, यत् येन जरित्रे स्तोत्रे विश्वप्सु 'प्सुः' ( निघ ३,७ ) इति रूपनाम । सर्वरूपम् 'ब्रह्म' ( निघ २,७ ) अन्ननामैतत् । कृणवः करोषि शविष्ठ ! अतिशयेन बलवन् ! । कदा वा धियः कर्माणि यागाख्यानि न नियुतः पुरस्तादुपचारोऽप्ययं नकारः सामर्थ्यादुपमार्थीयः । मत्या इव युवासे[4] आत्मना मिश्रयसि । कदा मदयावद् यागान् अधितिष्ठसीत्यर्थः । कदा गोमघा गावो धनं फलत्वेन येषां तेभ्यस्तानि गोमघानि हवनानि आह्वानानि गच्छाः गच्छसि । कदा गोफलान्याह्वानानि गच्छसि । कदा आहूत आगत्य मा युवासीरित्यर्थः ॥ ३ ॥

वेङ्कट० कदा स्वित् तत् इन्द्र ! भवति, यत्[5] त्वम् जरित्रे विश्वरूपम् अन्नं करोषि हे बलवत्तम ! । कदा धुर्याः[6] इव अश्वाः मिश्रयसि, गमनार्थम् अधितिष्ठसि । कदा वा गोधनानि अस्मदाह्वानानि गच्छसि ॥ ३ ॥

स गोमघा जरित्रे अश्वश्चन्द्रा वाजश्रवसो अधि धेहि पृक्षः ।

पीपिहीषः सुदुघामिन्द्र धेनुं भरद्वाजेषु सुरुचो रुरुच्याः ॥ ४ ॥

सः । गोऽमघाः । जरित्रे । अश्वऽचन्द्राः । वाजऽश्रवसः । अधि । धेहि । पृक्षः ।

पीपिहि । इषः । सुऽदुघाम् । इन्द्र । धेनुम् । भरत्ऽवाजेषु । सुऽरुचः । रुरुच्याः ॥ ४ ॥

स्कन्द० "सः त्वं हे इन्द्र"। गोमघाः धनभूताभिः गोभिर्युक्ताः जरित्रे स्तोत्रे अश्वश्चन्द्राः अश्वैश्चन्द्रैः कान्तैर्युक्ताः वाजश्रवसः बलेन च श्रवणीयेनोत्कृष्टेन युक्ताः अधि धेहि 'अधिपरी अनर्थकौ' ( पा १,४,९३ ) इति कर्मप्रवचनीयः पदपूरणः । धेहि पृक्षः अन्नानि । पीपिहि इषः अन्नानि सुदुघाम् 'सुखाय वा[7] दुह्यते साम्[8]' च हे इन्द्र ! धेनुम् दोग्ध्रीं गाम् । भरद्वाजेषु द्वितीयार्थे सप्तम्येषा अस्मांश्च भरद्वाजान् भरद्वाजपुत्रान् सुरुचः सुदीप्तीन् रुरुच्याः अत्यर्थं दीपय । शोभनाभिः सर्वदीप्तिभिर्दीप्तांश्च अस्मान् कुर्वित्यर्थः ॥ ४ ॥

---

1 परणीयैः ऋर्य; परतीयै वि°. २. पूर्वेणुपा° मूको. ३. तस्मिन् मूको. ४. नास्ति मूको. ५. यः मूको. ६. °धि मूको. ७ ७. नास्ति मूको. ८-८. सुखाया मूको ९. तं मूको.

वेङ्कट० सः गोधनाः जरित्रे द्वादकाशाः[1] अयणीयत्वलाः अधि धेहि इषः, तथा पयःप्रभृतिकाः[2] इषः च। सुदुघां धेनुम् इन्द्र। गोपिहि क्षारय भरद्वाजेषु। सुदीप्तिः[3] रुक्त्याः रोचसीति[4] ॥ ४ ॥

तमा नूनं वृजनमन्यथा चिच्छूरो यच्छक्र वि दुरो गृणीषे ।
मा निररं शुक्रदुघस्य धेनोराङ्गिरसान् ब्रह्मणा विप्र जिन्व ॥ ५ ॥

तम् । आ । नूनम् । वृजनम् । अन्यथा । चित् । शूरः । यत् । शक्र । वि । दुरः । गृणीषे ।
मा । निः । अरम् । शुक्रऽदुघस्य । धेनोः । आङ्गिरसान् । ब्रह्मणा । विप्र । जिन्व ॥ ५ ॥

स्कन्द० तमिति कर्मणः आ[5] इति चोपसर्गस्य श्रुतेर्योग्यक्रियाशब्दोऽध्याहार्यः[6]। तम् वयम् आ ह्वयामः। नूनम् इति पदपूरणः। वृजनम् वृजी वर्जने वर्जयितारं प्राणैः। शत्रूणां मारयितारमित्यर्थः। अथवा 'वृजनम्' ( निघ २,९ ) इति बलनाम। सामर्थ्यान्महात्म्यार्थौ मत्वर्थीयः। बलवन्तम्। योऽहम् किम् करोमि। उच्यते— अन्यथा चित् चिच्छब्द एवार्थे। प्रसिद्धात् प्रकारादन्येनैव प्रकारेण शूरः यत् यस्त्वं हे शक्र। दुरः द्वाराणि मेघस्योदकनिर्गमनबिलानि वि गृणीषे विवृतौ गृणातिरिह सामर्थ्याद्वृद्धयर्थः। उद्घाटयसि। किञ्च मा निः अरम् अर्तेर्गत्यर्थस्यैतद् रूपम्। मा निर्गमम् मा बाह्यो भूवमित्यर्थः। कुतः। उच्यते— शुक्रदुघस्य धेनोः। 'शुक्रम्' ( निघ १,१२ ) इति उदकनाम। तस्य वृष्टिलक्षणस्य दोग्धा क्षारयिता। धेनुशब्दो धिनोतेः प्रीणनार्थस्य प्रीणनवचनः। वृष्टिलक्षणस्योदकस्य क्षारयितुः तव प्रीणनात् एवं मा बाह्यो कार्षीः। प्रीणयेत्यर्थः। न च केवलं मामेव। किं तर्हि। सर्वान् आङ्गिरसान् अङ्गिरसः पुत्रो बृहस्पतिः तस्य पुत्रो भरद्वाजः तस्य पुत्रा नरप्रभृतयः इत्येवमेषामङ्गिरसः पौत्रत्वम्। ब्रह्मणा अन्नेन हि विप्र! मेधाविन्! जिन्व प्रीणय ॥ ५ ॥

वेङ्कट० {तम् स्तोतारं वर्तमानं भवति। मायाभिमुखो भवति। सत्योपपन्न इत्यर्थः।}[7] यदा त्वम् अस्य द्वाराणि विविधं देहि[8]। शूरः त्वम् शक्र! मा निःगमः उदकस्य दोग्धुः इव धेनोः मेघात्। अङ्गिरसः[9] कुले जाताम् मेधाविन्! अन्नेन प्रीणय ॥ ५ ॥

[10]इति चतुर्थाष्टके सप्तमाध्याये सप्तमो वर्गः[11] ॥

# [ ३६ ]

[12]नरो भारद्वाज ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[13]।

सत्रा मदासस्तव विश्वजन्याः सत्रा रायोऽध ये पार्थिवासः ।
सत्रा वाजानामभवो विभक्ता यद् देवेषु धारयथा असुर्यम् ॥ १ ॥

सत्रा । मदासः । तव । विश्वऽजन्याः । सत्रा । रायः । अध । ये । पार्थिवासः ।
सत्रा । वाजानाम् । अभवः । विऽभक्ता । यत् । देवेषु । धारयथाः । असुर्यम् ॥ १ ॥

स्कन्द० सत्रा सदा मदासः सोममदाः तव विश्वजन्याः सर्वस्मै स्तोतृजनाय हिताः यदस्तैः सदा

---

1. 'आ मूको. 2. °निक ह. 3. सुदीप्तिः ह प्रस्तावः- 4. रोचयसीति म ह प्रस्तावः. 5. मात मूको. 6. °क्रियाश° ... 7. ... ऽन्नमि मूको. 8. °रस मूको. 9-9. नास्ति मूको.

स्तोतृणामुपकरोषीत्यर्थः । सत्रा राय अप अपशब्दोऽप्यर्थे । धनान्यपि तव सदैव सर्वस्मै स्तोतृजनाय हितानि । यानि कानिचित् । ये पार्थिवास यानि पृथिव्यां भवानि । यावत् पृथिव्यां भव सर्वं तव स्वभूतम्, तच्च त्वं स्तोतृभ्यो ददासीत्यर्थः । सत्रा सदा त्वम् वाजानाम् अभव भवसि विभक्ता । यस्मै[१] यावद्योग्यम् तस्मै तावतो दाता । योऽहं कीदृश । उच्यते— यत् घ देवेषु निर्धारणसप्तम्येषा । देवानां मध्ये धारयथाः आत्मनि धारयसि असुर्यम् बलम् । यो देवानां मध्ये बलवानित्यर्थः ॥ १ ॥

वेङ्कट० सत्यमेव महान्ति तव जितान्यहितानि सत्यमेव तव दिव्यानि राय सन्ति पार्थिवानि च । सत्यमेव अन्नानाम् अभव दाता । यस्मात् देवेषु धारयसि बलम् ॥ १ ॥

अनु॒ प्र ये॑जे॒ जन॒ ओजो॑ अस्य स॒त्रा द॑धिरे॒ अनु॑ वी॒र्या॑य ।
स्यू॒म॒गृभे॑ दु॒धये॒ऽर्व॑ते च॒ क्रतुं॑ वृञ्ज॒न्त्यपि॑ वृत्र॒हत्ये॑ ॥ २ ॥

अनु॑ । प्र । ये॒जे॒ । जनः॑ । ओजः॑ । अ॒स्य॒ । स॒त्रा । द॒धि॒रे॒ । अनु॑ । वी॒र्या॑य ।
स्यू॒म॒ऽगृभे॑ । दु॒धये॑ । अर्व॑ते । च॒ । क्रतु॑म् । वृ॒ञ्ज॒न्ति॒ । अपि॑ । वृ॒त्र॒ऽहत्ये॑ ॥ २ ॥

स्कन्द० अनु प्र येजे जन[२] । आनुपूर्व्येण धारयन्ति स्तुतिभिः वीर्याय वीरकर्मणे । किञ्च स्यूमगृभे सुखं यतो धनं गृह्णाति लभ्यत इत्यर्थः, सुखं वा यो गृह्णाति आत्मीयीक्रियते अवक्लेशेन परिकर्षति[३] इत्यर्थः, सुखं वा यः शत्रून् गृह्णाति तस्मै । दुधये कम्पयित्रे शत्रूणाम् अर्वते च गन्त्रे गत्यादिविशिष्टाय[४] । गन्त्रे च शत्रून् प्रति । क्रतुम् वृञ्जन्ति अपि क्रतुशब्दः कर्मनाम । अपिशब्दश्चाप्यार्थे परो द्रष्टव्य । कर्मापि वृञ्जन्ति । वृजी वर्जने । सामर्थ्यादस्येहान्तर्णीतण्यर्थः । वर्जयन्ति इन्द्रस्यार्थाय स्वकार्यं परित्यजन्ति "इन्द्रस्तुतिपरायणा भवन्तीत्यर्थः"[५] । वृत्रहत्ये वृत्रहननाय । कमिन्द्रस्तुतो वृत्र मघ मनु बाऽन्वाक इन्वादिस्येत्यमर्थमित्यर्थः । अथवैवमन्यथा अस्या ऋचोऽर्थयोजना—अन्विति पश्चादर्थे ओज इत्येतेन च सम्बन्धयितव्य । प्र येजे प्रशब्दः प्रारम्भे । यजतु प्रारभते जन । कदा । उच्यते । अनु ओज[६] अस्य 'ओज'[१] (निघ २,९१) इत्युदकनाम । अस्येन्द्रस्य सम्बन्धि यदुदकं वृष्टिलक्षणं तस्य पश्चात् वृष्ट्युत्तरकालमित्यर्थः । सत्रा दधिरे 'सत्रा' (निघ ३,१०) इति सत्यनाम । सत्यं धारयन्ति । अनु पश्चात् । कस्य[२] । प्रकृतत्वादुदकस्यैव । सुभिक्षे हि यागसम्बन्धात् सत्यधारणं च भवति । सत्यं वृष्टौ सत्याम् । अत एतदुच्यते— [illegible] प्र येजे इत्यादि । किमर्थम् । वीर्याय स्यूमगृभे सुखग्रहणाय सुखप्राप्त्यै दुधये शत्रुकम्पनाय अर्वते च शत्रून् प्रतिगमनाय क्रतुम् कर्म वृञ्जन्ति वृञ्जतिरत्राऽऽदानार्थः[३] । कथमवगम्यते । 'माध राभिमत्रयथा याम प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोके सुकृतमायु प्रजां वृञ्जीय यदि मे द्रुह्ये' (ऐब्रा ८,१५) इति ब्राह्मणप्रयोगदर्शनात् । आददते कुर्वन्ति । वीर्यादिभ्य फलेभ्यो यानि कर्माणि तान्यपि वृष्ट्युत्तरकालमर कुर्वन्तीत्यर्थः । न च वीर्यादिभ्य केवलेभ्य । किं तर्हि । अपि वृत्रहत्ये वृत्रहननायापि ॥ २ ॥

---

१ तस्य मूको २. अत्र मूकाभ्यो तुस इति भाति ३ °कर्षते मूको ४ ४ 'बलायन्ती'
५ अत्र मूको ६. °रसदा° मूको

वेङ्कट० अनुक्रमेण प्रकर्षेण च अस्य ओजः देवजनाः इन्द्रे। तथा महत्त्वे च अनु दधिरे वीर्यकरणाय एनं देवाः। अनुस्यूतान्[1] शत्रून् गृह्णते कम्पयते अभिगच्छते प्रज्ञानम् अपि[2] वजन्ति[3] वृत्रवधाय तेन सहैकमनसो[4] भवन्तीत्यर्थः ॥ २ ॥

तं सध्रीचीरूतयो वृष्ण्यानि पौंस्यानि नियुतः सश्चुरिन्द्रम् ।
समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसं गिर आ विशन्ति ॥ ३ ॥

तम् । सध्रीचीः । ऊतयः । वृष्ण्यानि । पौंस्यानि । निऽयुतः । सश्चुः । इन्द्रम् ।
समुद्रम् । न । सिन्धवः । उक्थऽशुष्माः । उरुऽव्यचसम् । गिरः । आ । विशन्ति ॥ ३ ॥

स्कन्द० य उक्तगुणः तम् सध्रीचीः सहस्यार्थं सध्रिरादेशः। सह युगपत् [5]सर्वप्रकारान् पालयितव्यान् अञ्चन्ति गच्छन्ति यास्ताः सध्रीच्यः[6] ऊतयः पालनानि वृष्ण्यानि वृष्णिशब्दोऽत्रापठितमपि बलनाम। 'ते त्वा मदा अमदन् तानि वृष्ण्या' (ऋ १,५३,६) इति यथा। बलानि सैनालक्षणानि पौंस्यानि शारीराणि च बलानि नियुतः अश्वाश्च सश्चुः। सश्चतीति गतिकर्मा। गताः इन्द्रम्। गमनेन चात्र सद्भावस्थानं लक्ष्यते। पालनादीनि इन्द्रे स्थितानि। यथेन्द्रे न तथान्यत्र क्वचिदित्यर्थः। किञ्च समुद्रम् न यथा समुद्रम् सिन्धवः नद्यः एवम् उक्थशुष्माः उच्यते तदिति उक्थम्, उक्थं शुष्मं यासां ता उक्थशुष्मा बलस्याभिधान्यः उरुव्यचसम् गिरः स्तुतयः आ विशन्ति प्रविशन्ति। यथा समुद्रो बह्वीभिर्नदीभिरापूर्यते एवमिन्द्रो बलस्य वाचिकाभिः स्तुतिभिः[1] स्तूयत इत्यर्थः ॥ ३ ॥

वेङ्कट० तम् सङ्गता मरुतः बलकराणि वीर्याणि अश्वाश्च सङ्गच्छन्ते इन्द्रम्[2] समुद्रम् इव नद्यः पक्तव्यवेगाः बहुव्याप्तिम् स्तुतयश्च आ विशन्ति वृत्रवधोद्युक्तम् ॥ ३ ॥

स रायस्खामुप सृजा गृणानः पुरुश्चन्द्रस्य त्वमिन्द्र वस्वः ।
पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा ॥ ४ ॥

सः । रायः । खाम् । उप । सृज । गृणानः । पुरुऽचन्द्रस्य । त्वम् । इन्द्र । वस्वः ।
पतिः । बभूथ । असमः । जनानाम् । एकः । विश्वस्य । भुवनस्य । राजा ॥ ४ ॥

स्कन्द० सः रायः धनस्य खाम् 'खाः' (निघ १,१३) इति नदीनाम। तया चात्र परिमाणं लक्ष्यते। नदीपूर्णम्। यावता धनेन नदी पूर्यते तावत्[7] अत्यन्तं बह्वित्यर्थः। उप सृज देहस्मभ्यम् गृणानः स्तूयमानः पुरुश्चन्द्रस्य बहुनो धनस्य कान्तस्य त्वम् हे इन्द्र। वस्वः राय इत्यनेन धनस्योक्तत्वाद्वसुशब्दः प्रशस्यवचनः। क्रियाशब्दो [illegible] वस्तुम् स्थिरस्येत्यर्थः। यः[1] पतिः स्वामी पालयिता वा बभूथ भवसि स राय इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः।

१. 'स्यूतं मूको. २. अपि विं वरं ३. प्रम° चिं, वृजन्ति छ शोध०. ४. सहैकतमसो मूको. ५-५. सर्वप्रकाराः पालयितव्याः य अभ्ययन्ति गच्छन्ति ताः सध्रीच्यः मूको. ६. नास्ति मूको. ७. त यावद् मूको.

चरामः अतिशयः। अत्यन्तोत्कृष्ट इत्यर्थः। जनानाम् मनुष्याणाम्। यश्च एकः अन्तर्णीतावधारणार्थमेतत्। एक एव विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी ॥ ४ ॥

वेङ्कट० सः त्वम् इन्द्र![1] वासयितुः[2] बहूनामाह्लादकस्य धनस्य नदीम् उप वर्तय स्तूयमानः। तत् तव युक्तमिति वदति—पतिः इति ॥ ४ ॥

स तु श्रु॑धि॒ श्रुत्या॒ यो दु॑वो॒युर्द्यौर्न भूमा॒भि राय्यो॑ अ॒र्यः।
अ॒सो॒ यथा॑ नः॒ शव॑सा चका॒नो यु॒गेयु॑गे॒ वय॑सा॒ चेकि॑तानः ॥ ५ ॥

सः। तु। श्रु॒धि॒। श्रुत्या॑। यः। दु॒वः॒ऽयुः। द्यौः। न। भूम॑। अ॒भि। राय॑ः। अ॒र्यः।
अस॑ः। यथा॑। नः॒। शव॑सा। च॒का॒नः। यु॒गेऽयु॑गे। वय॑सा। चेकि॑तानः ॥ ५ ॥

स्कन्द० सः त्वम् तु इति पदपूरणः। श्रुधि शृणु स्तुतीः श्रुत्या श्रुतिः श्रवणेन्द्रियं तेन। यः दुवोयुः परिचरणकामः, यश्च द्यौः न द्यौरिव[3] भूम विपुलवचनस्यायं बहोर्भूरादेशः[4]। तृतीयार्थे च प्रथमा। भूम्ना। विस्तीर्णत्वेन[5] नगुदकवत् सर्वव्यापीत्यर्थः। श्रुधि इत्येतेन सम्बन्धयितव्यः। आभिमुख्येन शृणु। यश्च रायः धनस्य अर्यः ईश्वरः स्वामी। कथं पुनः शृणोमि। असः भवसि यथा नः अस्माकम् शवसा। सहयोगलक्षणैषा तृतीया। सेनालक्षणेन बलेन सह। चकानः कमतेः 'कान्तिकर्मणो यङ्लुगन्तस्य' कर्मसाधनोऽयं यम्। अभ्यासस्य च दीर्घाभावश्छान्दसत्वात्[6]। अत्यर्थं कमनीयः प्रार्थनीयः। युगेयुगे कालेकाले[7]। सर्वकालमित्यर्थः। वयसा द्वितीयार्थे तृतीया। वयः अन्नम्। चेकितानः। किम्। 'सामर्थ्याद् भक्तताम्'। तथा शृणु यथाऽस्माकं बलेन सह सर्वदा अन्नम् याच्यो भवसि, ददासीत्यर्थः। यो हि ददाति स याच्यो भवति, नेतरः[10] ॥ ५ ॥

वेङ्कट० सः क्षिप्रम् शृणु श्रोतव्यानि स्तोत्राणि, यः त्वं भवसि परिचर्येच्छुः। अस्मदीयानि धनानि आदित्य इव भूमीः अरीन्[11] अभि तिष्ठन्तु। भवसि अस्माकमेव यथा त्वम् बलेन दीप्यमानः अन्वहं हविषा युज्यमानः, तथा श्रुधि इति ॥ ५ ॥

[12]इति चतुर्थाष्टके सप्तमाध्याये अष्टमो वर्गः[12] ॥

[ ३७ ]

[12]भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[12]।

अ॒र्वाग्रथं॑ वि॒श्ववा॑रं त उ॒ग्रेन्द्र॑ यु॒क्तासो॒ हर॑यो वहन्तु।
की॒रिश्चि॒द्धि त्वा॒ हव॑ते॒ स्व॑र्वानृधी॒महि॑ सध॒माद॑स्ते अ॒द्य ॥ १ ॥

अ॒र्वाक्। रथ॑म्। वि॒श्वऽवा॑रम्। ते॒। उ॒ग्र॒। इन्द्र॑। यु॒क्तासः॑। हर॑यः। व॒ह॒न्तु॒।
की॒रिः। चि॒त्। हि। त्वा॒। हव॑ते। स्वः॑ऽवान्। ऋ॒धी॒महि॑। स॒ध॒ऽमादः॑। ते॒। अ॒द्य ॥ १ ॥

१. नास्ति मूको. २. वासयितः मूको. ३. द्यौरेव मूको. ४. बहवो भूरा° मूको. ५. °र्णत्वं मूको. ६-६. °णो ये बन्ताय मूको. ७. °भावात् छन्द° मूको. ८. काले मूको. ९-९. °र्थ्योदभक° मूको. १०. तेन रः मूको. ११. रिन् वि° लपं, रीन् क. १२-१२. नास्ति मूको.

स्कन्द० अर्वाक् अस्मदभिमुखम् रथम् विश्ववारम् सर्वस्य वरणीयम् ते तव स्वभूतं हे उग्र! अप्रसह्य! शूर![1] वा इन्द्र! युक्तासः हरयः अश्वाः वहन्तु प्रापयन्तु। कस्मात्। उच्यते— कीरिः चित् हि 'कीरिः' ( निघ ३,१६ ) इति स्तोतृनाम। चिदिति पदपूरणः। हिशब्दो यस्मादर्थे। यस्मात् स्तोताऽहं भरद्वाजाख्यः त्वा त्वाम् हवते आह्वयति। आत्मन एव परोक्षरूपेण निर्देशः। यस्माद् अहं भरद्वाजस्त्वाम् आह्वयामीत्यर्थः। स्ववान् स्वःशब्दः[2] सर्वपर्यायः। सर्वप्रकारेण हविषा स्तुतिभिर्वा तद्वान्। तद्वान् स्वयमपि— ऋधीमहि ऋद्धिं प्राप्नुयाम वयम् सधमादः 'मदति' ( निघ ३,१४ ) इत्यर्चतिकर्मा, तृप्त्यर्थो वा। सह स्तोतारस्तर्पयितारो वा तव अद्य अस्मिन्नहनि ॥१॥

वेङ्कट० भरद्वाजः। अभिमुखम् रथम् विश्वैर्वरणीयम् हे उग्र! इन्द्र! युक्ताः अश्वाः वहन्तु। स्तोता हि त्वाम् हवते कल्याणहविष्कः[3]। भवेम अद्य सह माद्यन्तः त्वया वयम् अद्य इति ॥ १ ॥

प्रो द्रोणे हरयः कर्माग्मन् पुनानास ऋज्यन्तो अभूवन्।
इन्द्रो नो अस्य पूर्व्यः पपीयाद् द्युक्षो मदस्य सोम्यस्य राजा ॥ २ ॥

प्रो इति। द्रोणे। हरयः। कर्म। अग्मन्। पुनानासः। ऋज्यन्तः। अभूवन्।
इन्द्रः। नः। अस्य। पूर्व्यः। पपीयात्। द्युक्षः। मदस्य। सोम्यस्य। राजा ॥ २ ॥

स्कन्द० द्रोणे द्रुमकाष्ठमये रथे हरयः इन्द्राश्वाः कर्म नियोजनाख्यम् प्रो अग्मन् प्रगच्छन्ति। प्राप्नुवन्ति रथे नियोज्यतामित्यर्थः[4]। नियुक्ताश्च सन्तः पुनानासः पवतेर्गतिकर्मणो व्यत्ययेनात्मनेपदं श्ना-विकरणः। गच्छन्तः अस्मदर्थं प्रति। ऋज्यन्तः प्रथमासमानाधिकरणोऽयं शत्रादेशः छान्दसत्वात्। ऋजुमार्गगामिनः ऋजुगामिनो वा। अभूवन् भवन्तु। शीघ्रमागच्छन्त्वित्यर्थः। इन्द्रः अपि नः अस्माकम् स्वभूतस्य अस्य पूर्व्यः पुराणः चिरन्तनः [5]पपीयात् पायात्[5] द्युक्षः दीप्तेर्वासभूतः[6] द्युलोकवासी वा[7] मदस्य मदकरस्य सोम्यस्य सोममयस्य राजा ईश्वरः सर्वस्य दीप्तो वा ॥ २ ॥

वेङ्कट० प्रागच्छन् द्रोणकलशे आगामी[8] आप्लवनाख्यम् कर्म हरयः। पुनानाः सोमाः ऋजु गच्छन्तः भवन्तु। इन्द्रः अस्माकम् इमं रसं पिबतु मुख्यः दीप्तः मदकरं सोमम् राजा इति ॥ २ ॥

आससाणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥ ३ ॥

आऽससाणासः। शवसानम्। अच्छ। इन्द्रम्। सुऽचक्रे। रथ्यासः। अश्वाः।
अभि। श्रवः। ऋज्यन्तः। वहेयुः। नु। चित्। नु। वायोः। अमृतम्। वि। दस्येत् ॥३॥

स्कन्द० अच्छ इत्ययम् आससाणासः इत्येतेन सम्बध्यते, अभेरर्थाप्यमर्थे। सासिर्गत्यर्थः। आप्या-गच्छन्तोऽस्मदर्थम्। शवसानम् शवतेर्गतिकर्मणश्छन्दसि। सङ्ग्रामं यान्तम् वा प्रति गन्तारम्।

1. शूरे मूको. 2. स्वःशब्दः मूको. 3. °विष्कः मूको. 4. नियोज्यन्तानि° मूको. 5-5. पाता पर्याप्त् मूको. 6. दीप्तो वा स्वभूतः मूको. 7. वा मूको. 8. भगन्द्रो क.

अथवा शव इति बलनाम। सामर्थ्याच्चान्तर्णीतमत्वर्थम्। यो बलवान् राजा वाऽन्यो वा कश्चित् शव इव आचरति शवस्यते। अथवा शव[1] इच्छति शवस्यति। शवस्यतेः[2] ताच्छील्ये चानशश्छान्दसत्वान्मुगभावः, यलोपश्च। बलवदाचारशीलो बलकामशीलो वा शवसान[3], तं शवसानम्। कम्। इन्द्रम्। सुचक्रे शोभनचक्रे। क्व। सामर्थ्याद् रथे। आधारसप्तमीनिर्देशाच्च स्थितमिति वाक्यशेषः। सुक्ता इति वा शेषः। रथ्यासः रथवोढारः अश्वाः हर्यश्वाः अभि ध्वः अश्वं सोमाख्यं प्रति ऋज्यन्तः ऋजुगामिनः ऋजुमार्गगामिनो वा। अत्यन्तशीघ्रा इत्यर्थः। वहेयुः। अथवा[4] शवसानमिन्द्रमिति द्वितीया आससृग्रास इत्यस्यैव कर्मणि। आससृग्रास इति च लिट् भूते काले। यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या। येऽभ्यागच्छन्नश्वाः शवसानम् इन्द्रम्। किमर्थम्। 'सामर्थ्याद् रथे' नियोगार्थम्। ते सोमलक्षणमन्नं प्रति प्रापयन्तु। कम्[5]। सामर्थ्यात् प्रकरणाच्च इन्द्रम्। किच्च नु चिन्नु नु इति पुराणवचनः। चिच्छब्दोऽपि चार्थे। 'अधा चिन्नु चिन्नु चित्तदपो नदीनाम्' (ऋ ६,३०,३) इति यथा। चार्थश्रुतिसामर्थ्याच्च द्वितीयो नुशब्दो नवचनः। पुराणश्च नवश्च यथा पूर्वमुपकल्पितं यथेदानीमुपकल्प्यस्व इत्यर्थः। वायोः गन्तुरिन्द्रस्य स्वभूतम् अमृतम् अमृतसदृशं मरणवर्जितं सोमाख्यम् अन्नम् वि दस्येत् विशब्दो विनाशे। दस्यतिः क्षयार्थः। विगतक्षयं भवेत्। यावदिन्द्र आगच्छति तावत् क्षयं मा गमदित्यर्थः॥ ३॥

वेङ्कट० आभिमुख्येन सरन्तः बलमाचरन्तम्[6] प्रति इन्द्रम् शोभनचक्रे रथे रथ्याः अश्वाः सोमलक्षणमन्नम् अभि वहेयुः आशु गच्छन्तः क्षिप्रम्। पात्रात् अमृतम् इन्द्रपानेऽपि विदस्तम् भवतु। वायुदेवत्यं पात्रं वायुरक्षतमिति॥ ३॥

वरिष्ठो अस्य दक्षिणामियर्तीन्द्रो मघोनां तुविकूर्मितमः।
यया वज्रिवः परियास्यंहो मघा च धृष्णो दयसे वि सूरीन्॥ ४॥

वरिष्ठः। अस्य। दक्षिणाम्। इयर्ति। इन्द्रः। मघोनाम्। तुविकूर्मिऽतमः।
यया। वज्रिऽवः। परिऽयासि। अंहः। मघा। च। धृष्णो इति। दयसे। वि। सूरीन्॥ ४॥

स्कन्द० वरिष्ठः अतिशयेन वरः श्रेष्ठः अस्य[7] प्रकृतस्यैन्द्रस्यायमन्वादेशः। अस्यैव भवत इन्द्रस्य स्वभूताम् दक्षिणाम् दक्षिणावाऽत्र सद्वान् यागो लक्ष्यते। दक्षिणासम्बद्धं यागम्[8] इयर्ति। 'यया वज्रिवः' इति पुरस्तादामन्त्रणश्रुतेः प्रत्यक्षकृतोऽयं मन्त्रः। प्रथमपुरुषश्चायमतो भवच्छब्दस्याध्याहृत्यैकवाक्यता[9] नेयम्। गच्छति भवान् इन्द्रः मघोनाम् हविर्लक्षणेन धनेन धनवताम् यजमानानाम् तुविकूर्मितमः अतिशयेन बहूनामनुग्रहाणां कर्ता। कीदृशी दक्षिणा। उच्यते। यया हेत्वर्थेयं तृतीया। येन दक्षिणावता यागेन हेतुना हे वज्रिवः! वज्रो यस्मिन् आयुधगणे अस्ति स वज्री तद्वन्! परियासि सर्वतः हंसि। 'वियातः' (निघ २,१९) इति वधकर्मसु पाठाद् यातिर्वधार्थः, न गत्यर्थः। वधार्थे एवेति गम्यते। न हि वियात इत्येतद् यातयते रूपमभिप्रेतम्। यदि हि यातयते रूपमिदं स्यात् नैव भेदेन पठ्येत। 'रनेहयति

1. शवस्य मूको. 2. शवस्यते मूको. 3. नास्ति मूको. 4-4. ॰स्थाने मूको. 5. तम् मूको. 6. बलमाचरं तं मूको. 7. द्विरस्ति मूको. 8. यागं वा॰ मूको. 9. ॰वताम् मूको.

यातयति' ( निघ २,१९ ) इति पठितत्वात्। दृश्यते च मन्त्रान्तरे यातेर्वधार्थस्य प्रयोगः 'अद्रेर्यातारं कमपश्य इन्द्र' ( ऋ १,३२,१४ ) इति। अथवा परीत्येष अपेत्येतस्य स्थाने। यातिर्गत्यर्थ एव। सामर्थ्याद्वान्तर्णीतण्यर्थः। अपयापयसि अपनयसि अंहः पापम् यजमानानाम्। मघा च धनानि च हे धृष्णो! शत्रूणामभिभवितः! वि दयसे विविधं ददासि सूरीन् चतुर्थ्यर्थे द्वितीयैषा। सूरिभ्यः स्तोतृभ्यः ॥ ४ ॥

वेङ्कट० उरुतमो महान् इन्द्रः अस्य[1] सम्बन्धिनीम् दक्षिणाम् आत्मनि प्रेरयति प्रापयत्यात्मानम्। इन्द्रः हविष्मताम् अत्यन्तं वहोः कर्ता। अथ प्रत्यक्षः। यया दक्षिणया स्तोतॄणाम् अवर्तिम् परितो हंसि, यातिर्वधकर्मा, नानाविधानि धनानि[2] च प्रयच्छसि, विशिष्टांश्च धृष्णो![3] अकरोः स्तोतॄनिति ॥ ४ ॥

इन्द्रो वाजस्य स्थविरस्य दातेन्द्रो गीर्भिर्वर्धतां वृद्धमहाः।
इन्द्रो वृत्रं हनिष्ठो अस्तु सत्वा ता सूरिः पृणति तूतुजानः ॥ ५ ॥

इन्द्रः। वाजस्य। स्थविरस्य। दाता। इन्द्रः। गीःऽभिः। वर्धताम्। वृद्धऽमहाः।
इन्द्रः। वृत्रम्। हनिष्ठः। अस्तु। सत्वा। आ। ता। सूरिः। पृणति। तूतुजानः ॥ ५ ॥

स्कन्द० इन्द्रः वाजस्य अन्नस्य स्थविरस्य वृद्धस्य चिरकालावस्थायिनः[1] दाता। इन्द्रः गीर्भिः स्तुतिभिरस्मदीयाभिः वर्धताम् वीर्येण वृद्धमहाः वृद्धमाहात्म्यः[2]। इन्द्रः वृत्रम् षष्ठ्यर्थे द्वितीयैषा। वृत्रस्य हनिष्ठः अतिशयेन हन्ता अस्तु भवतु। सत्वा षणु दाने। दाता धनानाम् अस्मभ्यम्। किञ्च ता द्वितीयैकवचनस्यायमाकारः। तम् इन्द्रम् सूरिः स्तोता सर्वः आ पृणति पृण प्रीणने। प्रीणयति। केन। सामर्थ्यात् स्तुतिभिः। तूतुजानः त्वरमाणः ॥ ५ ॥

वेङ्कट० इन्द्रः वाजस्य महतः दाता। इन्द्रः स्तुतिभिः वर्धताम् वृद्धतेजाः। इन्द्रः वृत्रम् अतिशयेन हतवान् अस्तु सहनशीलः। सोऽयम् आ पूरयति तानि धनानि सूरिः त्वरमाणः ॥ ५ ॥

[4]इति चतुर्थाष्टके सप्तमाध्याये नवमो वर्गः[4] ॥

[ ३८ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[5]।

अपादित उदु नश्चित्रतमो महीं भर्षद् द्युमतीमिन्द्रहूतिम्।
पन्यसीं धीतिं दैव्यस्य यामञ्जनस्य रातिं वनते सुदानुः ॥ १ ॥

अपात्। इतः। उत्। ऊँ इति। नः। चित्रऽतमः। महीम्। भर्षत्। द्युऽमतीम्। इन्द्रऽहूतिम्।
पन्यसीम्। धीतिम्। दैव्यस्य। यामन्। जनस्य। रातिम्। वनते। सुऽदानुः ॥ १ ॥

स्कन्द० अपात् पिबतु सोमम् इतः उत् इत इत्यपादानस्य वदिति चोपसर्गस्य श्रुतेर्योग्यस्य

१. नास्ति मूको. २. नास्ति वि[?] लपं. ३. चिरकाल अस्ति मूको. ४. °हात्म्यः मूको.
५-५. नास्ति मूको.

क्रियापदस्याध्याहारः[१]। इतो वेषा उरिक्षप्य। उ इति पदपूरणः। नः अस्माकं स्वभूतम्। चित्रतमः अतिशयेन विचित्रः पूज्यो वा इन्द्रः महीम् महतीञ्च अर्पत् विमर्तिर्धारणार्थः। शुद्धोऽपि चावपूर्वोऽर्थे द्रष्टव्यः। अवधारयतु। शृणोत्वित्यर्थः। द्युमतीम् स्वदीप्त्या दीप्तिमतीम् इन्द्रहूतिम् इन्द्रो यया हूयते ताम्। इन्द्राह्वानसमर्थामित्यर्थः। पन्यसीम् अतिशयेन स्तोत्रीम् धीतिम् कर्मनामैतत्। स्तुतौ चात्र। कर्मणि वितते[२] यत्र क्वचित् [३]सोमं च[३] पिबतु स्तुतिं च शृणोत्वित्यर्थः। क। उच्यते— दैव्यस्य जनस्य स्वभूते यामन् यान्ति देवता यस्मिन् स यामा[४] यज्ञः तत्र। यस्मिन् यज्ञाख्ये सर्वदेवयाग इत्यर्थः। रातिम् दानं च वनते वनतिरिह दानार्थः। ददात्यस्मभ्यम् सुदानुः शोभनो दाता इन्द्रः ॥ १ ॥

वेङ्कट० उत् रक्षतु अस्मान् इतः अपर्वतः इन्द्रः पूजनीयतमः। महतीम् बिभर्तु दीप्तिमतीम् इन्द्रस्य हूतिम् स्तुतिम्। इन्द्रः शोभनदानः स्तुत्यतमाम् धीतिम्[५] [६]हविषां च[६] दानम् दैव्यस्य जनस्य गमने स्वयं भजते ॥ १ ॥

दूराच्चिदा वसतो अस्य कर्णा घोषादिन्द्रस्य तन्यति ब्रुवाणः ।
एयमेनं देवहूतिर्ववृत्यान्मद्र्य१गिन्द्रमियमृच्यमाना ॥ २ ॥

दूरात् । चित् । आ । वसतः । अस्य । कर्णा । घोषात् । इन्द्रस्य । तन्यति । ब्रुवाणः ।
आ । इयम् । एनम् । देवऽहूतिः । ववृत्यात् । मद्र्यक् । इन्द्रम् । इयम् । ऋच्यमाना ॥ २ ॥

स्कन्द० दूरात् चित् चिच्छब्दोऽप्यर्थे। दूरेऽपि द्युलोके अन्यत्र वा आ वसतः आकारोऽप्यर्थे[७]। व्याख्यातं चेदमनुवादत्वात्। अस्य तन्यतीत्येतेन सहैकवाक्यतामसिद्ध्यर्थं यदा यदा शब्दाध्याहर्तव्यौ। यदा अधिवसतः व्यवतिष्ठेते[८] अस्येन्द्रस्य स्वभूतौ कर्णौ कर्णौ यदा घोषात् तृतीयार्थे पञ्चम्येषा। घोषेण स्तुतिशब्देन तन्यति तनु विस्तारे। विस्तारेण चात्र तत्सम्बन्धिनी व्याप्तिर्लक्ष्यते। व्याप्नोति ब्रुवाणः स्तुतीः। कः। अनिर्देशात् सर्वः स्तोता। दूरेऽपि सन्तम् इन्द्रं सर्व एव स्तोता स्तौतीत्यर्थः। इयम्[९] मदीया स्तुतिः एनम् देवहूतिः देवा आहूयन्त यया सा देवहूतिः। देवाह्वानयोग्येत्यर्थः। आ ववृत्यात् आवर्तयतामावृत्यात् मद्र्यक् मदञ्चि मदभिमुखम् इन्द्रम् इत्येतदाशास्ते। इयम् 'एयमेनम्' इति पूर्वेण इयंशब्देन पौनरुक्त्यात् पञ्चम्यर्थेऽत्र प्रथमा। अस्या अन्यतरपिप्रयुक्ताया स्तुतेः। ऋच्यमाना ऋचिरत्र शुद्धोऽपि सोपसर्गार्थे द्रष्टव्यः। अतिरिच्यमाना। उत्कृष्टा भवतीत्यर्थः ॥ २ ॥

वेङ्कट० इन्द्रस्य कर्णौ दूरात् आगत्य स्तोतृसमीपे वसतः। तथा इन्द्रस्तुतिम् ब्रुवाणः पुरुषः उत्[१०] तन्यति उद्घुष्य ब्रूते। आ ववृत्यात् इयम् देवहेयेन्द्रस्य स्तुतिः एनम् इन्द्रम् मदभिमुखम् मया स्तूयमाना उच्यमाना। पुनः इयम् इति पूरणम् ॥ २ ॥

तं वो धिया परमया पुराजामजरमिन्द्रमभ्यनूष्यर्कैः ।
ब्रह्मा च गिरो दधिरे समस्मिन् महाँश्च स्तोमो अधि वर्धदिन्द्रे ॥ ३ ॥

---

१. °पदाध्याहा° मूको. २. ययती मूको. ३-३. यानि सोमस्य मूको. ४. याम मूको. ५ नास्ति मूको. ६. हविषश्च वि°; हविष रु. ७. °प्यर्थे मूको. ८. °तिष्ठते मूको. ९. मई [] ए° मूको. १०. सोर मूको.

तम् । वः । धिया । परमया । पुराऽजाम् । अजरम् । इन्द्रम् । अभि । अनूषि । अर्कैः ।
ब्रह्म । च । गिरः । दधिरे । सम् । अस्मिन् । महान् । च । स्तोमः । अधि । वर्धत् । इन्द्रे ॥३॥

स्कन्द० तम् वः व्यत्ययेनेदं बहुवचनम् । त्वाम् धिया प्रज्ञया परमया उत्कृष्टया पुराजाम् पूर्वस्मिन् काले जातम् अजरम् 'जरावर्जितम् इन्द्रम् अभि अनूषि' अभिष्टौमि अर्कैः मन्त्रैः । न च केवलोऽहम् । किं तर्हि । अन्येऽपि स्तोतारः । ब्रह्म च अन्नञ्च सोमलक्षणम् गिरः वाचः स्तुतिलक्षणाः सम् दधिरे । सन्धानमविच्छेदः । अविच्छिन्नाः कुर्वन्तीत्यर्थः । अस्मिन् षष्ठ्यर्थ एषा सप्तमी । अस्य तव महान् च स्तोमः अधि वर्धत् अधिकतरो वर्धते । महानपि स प्रतिवर्धत इत्यर्थः । इन्द्रे इयमपि षष्ठ्यर्थ एव सप्तमी । इन्द्रस्य ॥ ३ ॥

वेङ्कट० तम् युष्माकम् बुद्ध्या उत्तमया जातम् प्रवम् अजरम् इन्द्रम् अभि स्तौमि मन्त्रैः । अन्नम् च स्तुतीश्च अस्मिन् सम् दधिरे । महान् स्तोमः च इन्द्रे अभिवर्धते ॥ ३ ॥

वर्धाद् यं यज्ञ उत सोम इन्द्रं वर्धाद् ब्रह्म गिर उक्था च मन्म ।
वर्धाहैनमुषसो यामन्नक्तोर्वर्धान् मासाः शरदो द्याव इन्द्रम् ॥ ४ ॥

वर्धात् । यम् । यज्ञः । उत । सोमः । इन्द्रम् । वर्धात् । ब्रह्म । गिरः । उक्था । च । मन्म ।
वर्ध । अह । एनम् । उषसः । यामन् । अक्तोः । वर्धान् । मासाः । शरदः । द्यावः । इन्द्रम् ॥४॥

स्कन्द० वर्धयेन्द्रस्य किम् । उच्यते—वर्धात् यम् वर्धयति वीर्येण शरीरेण च यम् यज्ञः [illegible] सोमः इन्द्रम् । वर्धात् वर्धयति च ब्रह्म अन्नं पुरोडाशादि गिरः वाचः लौकिक्यः स्तुतिरूपाः उक्था च सर्वाणि शस्त्राणि मन्म मन्यतेरर्चतिकर्मण एतद्रूपम् । मननं मन्म स्तोत्रं उद्गातृकर्तृकं तच । 'वर्धयन्ति च एनम्' वर्ध अह वर्धन्ति एवार्थे लोट् । व्यत्ययेनैकवचनम् । अहशब्दोऽपि चार्थे । 'वर्धयन्ति च एनम्' उषसः यामन् वृत्रम् प्रति गमने वृत्रवधार्थं प्रस्थितमित्यर्थः । अक्तोः 'अक्तुः' ( निघ १,७ ) इति रात्रिनाम । प्रथमार्थे चात्र षष्ठी । रात्रिश्च । वर्धान् वर्धयन्ति च मासाः शरदः संवत्सराश्च । द्यावः द्युलोकाश्च इन्द्रम् । इदि परमैश्वर्ये । अत्यन्तेश्वरम् । यच्छब्दश्रुतेस्तम् त्वाम् 'अभ्यनूष्यर्कैः'[1] ( ऋ ६,३८,३ ) इति पूर्वयैकवाक्यता ॥ ४ ॥

वेङ्कट० वर्धयति यम् यज्ञः अपि च सोमः इन्द्रम् । वर्धयति हविः स्तुतयः शस्त्राणि च मननीयानि । वर्धयन्ति एव एनम् उषसः रात्रेः गमने । वर्धयन्ति[2] मासाः शरदः च दीप्ताः इन्द्रम् ॥ ४ ॥

एवा जज्ञानं सहसे असामि वावृधानं राधसे च श्रुताय ।
महामुग्रमवसे विप्र नूनमा विवासेम वृत्रतूर्येषु ॥ ५ ॥

एव । जज्ञानम् । सहसे । असामि । ववृधानम् । राधसे । च । श्रुताय ।
महाम् । उग्रम् । अवसे । विप्र । नूनम् । आ । विवासेम । वृत्रऽतूर्येषु ॥ ५ ॥

---

१-१. मिलमन्य॰ मूको. २-२. 'वन्ति एवं॰ मूको. ३. ॰ण्यैः मूको. ४. ॰न्तोति वि॰ एवं.

स्कन्द० 'एव एवमुक्तेन[1] प्रकारेण अज्ञानम् जायमानमेव[2] जन्मन एव प्रभृतीत्यर्थः। सहसे बलाय। बलं प्राप्तुमित्यर्थः। असामि[3] वाजयाने सङ्ग्रामे वृद्धिं [4]प्राप्नुवन्तमित्यर्थः। न च केवलम् बलाय। किं तर्हि। राधसे[4] च धनाय च श्रुताय सर्वलोकप्रख्याताय। महाम् महान्तम् उग्रम् अप्रसह्यम् क्रूरम् अवसे पालनाय हे विप्र! मेधाविन्! नूनम् इति पदपूरणः। आ विवासेम [5]परिचरेमेत्याशास्महे। क्व। उच्यते — वृत्रतूर्येषु[5] सङ्ग्रामेषु शत्रुभिः। बलधनपालनानि प्राप्तुं त्वां परिचरेमेत्येतदाशास्मह इत्यर्थः ॥ ५ ॥

वेङ्कट० एवम् जायमानम् बलकरणाय अखण्डितम् वर्धमानम् धनाय च विश्रुताय महान्तम् उद्गूर्णम् रक्षणाय मेधाविन्! इदानीम् परिचरेम सङ्ग्रामेषु त्वामिति ॥ ५ ॥

[6]इति चतुर्थाष्टके सप्तमाध्याये दशमो वर्गः[6] ॥

## [ ३९ ]

[7]भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[7]।

मन्द्रस्य कवेर्दिव्यस्य वह्नेर्विप्रमन्मनो वचनस्य मध्वः।
अपा नस्तस्य सचनस्य देवेषो युवस्व गृणते गोअग्राः ॥ १ ॥

मन्द्रस्य। कवेः। दिव्यस्य। वह्नेः। विप्रऽमन्मनः। वचनस्य। मध्वः।
अपाः। नः। तस्य। सचनस्य। देव। इषः। युवस्व। गृणते। गोऽअग्राः ॥ १ ॥

स्कन्द० मन्द्रस्य मोदनकरस्य कवेः मेधाविनः दिव्यस्य दिव्यशब्दो लोके प्रशस्तवचनः। प्रशस्तस्य वह्नेः वोढुः देवताम् प्रति आत्मनः प्राप्तुरित्यर्थः। बलवतो वा सारवत इत्यर्थः। विप्रमन्मनः 'विप्र.' ( निघ ३,१५ ) इति मेधाविनाम। मन्यत इत्येतदर्चतिकर्म[8], व्यत्ययेन चात्र कर्मणि मनिन्प्रत्ययः। मेधाविनो स्तुत्यस्य वचनस्य तात्स्थ्यात्ताच्छील्येऽयं युच्। इत्यादिदं च यज्ञफलमस्मै यजमानाय दीयतामित्येवं वक्तु शीलं यस्य स वचनः। तस्य मध्वः मधुरस्वादस्य। सर्वत्रात्र द्वितीयार्थे षष्ठी। षष्ठीश्रुतेर्वैकदेशमिति शेषः। मन्द्रादिगुणयुक्तं[9] 'सोमं मन्द्रादिगुणयुक्तस्य'[9] वा सोमस्यैकदेशं स्वांशलक्षणम् अपाः पिब नः अस्माकम् स्वभूतस्य तस्य तच्छब्दश्रुतेरप यो यमार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। योऽस्मभ्युपकल्पितः तस्य सचनस्य सेव्यस्य हे देव! पीत्वा च इषः[10] अन्नानि युवस्व परस्मात् सम्प्रदानश्रुतेर्यौतिरत्र दानार्थः। देहि गृणते स्तुवते मह्यम् गोअग्रा. गाव अग्रे यासां ता गोअग्राः। गाः प्रथमं देहीत्यर्थः ॥ १ ॥

वेङ्कट० मोदनस्य कवे. दिव्यस्य वोढुः मेधाविस्तोतृकस्य अग्नेः देवानाम् वक्तुः सोमम् यद् अपिबः, अस्मदीयस्य हविषो सचनशीलस्य तस्य हे देव! अन्नानि प्रकुरु[11] स्तुवते गोमुखानि ॥ १ ॥

---

१-१. एवमेवमु° मूको. २. जायमा° मूको. ३. असामि न च केवलं मूको. ४-४. °मित्यर्थः। राधसे मूको. ५-५. °त्याशास्महे त्वया अभिलषितधनपालनानि क्रियन्ते। ते वृत्र° मूको. ६-६. नास्ति मूको. ७. °तिकर्मा मूको. ८. °युक्त- मूको. ९-९. सोममिन्द्रा° मूको. १०. उषः मूको. ११. नास्ति एवं; पृथक्कुरु इ प्रशाय°.

अयमुशानः पर्यद्रिमुस्रा ऋतधीतिभिर्ऋतयुग्युजानः ।
रुजदरुग्णं वि वलस्य सानुं पणीँर्वचोभिरभि योधदिन्द्रः ॥ २ ॥

अयम् । उशानः । परि । अद्रिम् । उस्राः । ऋतधीतिऽभिः । ऋतऽयुक् । युजानः ।
रुजत् । अरुग्णम् । वि । वलस्य । सानुम् । पणीन् । वचःऽभिः । अभि । योधत् । इन्द्रः ॥२॥

स्कन्द० अयम् इन्द्रः[1] उशानः कामयमानः । किम् । उच्यते— उस्राः गोनामैतत् अन्यत्र, इह तु उत्स्राविस्वादप्सु[2] वर्तते । उत्स्राविणीः[3] वृष्टिलक्षणा आपः । परि अद्रिम् अद्रिरादरणात् अद्रिविकारत्वाद् वा, यज्ञोऽत्राद्रिरुच्यते । उपसर्गकर्मणोश्च श्रुतेर्योग्यक्रियापदाध्याहारः । परिगृह्य यज्ञम् । ऋतधीतिभिः ऋतमुदकं वृष्टिलक्षणम्, तत्र धीतिः प्रज्ञा प्रार्थनालक्षणा येषां ते ऋतधीतयः वृष्ट्यर्थिनः यष्टारः तैः । ऋतयुक् ऋतो यज्ञः तेन यो युज्यते स ऋतयुक् । युजानः युजिरत्र छान्दसोऽप्यभ्युपसर्गार्थे[4] । अभियुज्यमानोऽभ्यर्थ्यमान इत्यर्थः । रुजत् भनक्ति अरुग्णम् अभग्नपूर्वम्, वि-शब्दो वैविध्ये रुजदित्येतेनास्य सम्बन्धः, विविधं भनक्तीति । वलस्य मेघस्य सानुम् समुच्छ्रितप्रदेशम् । पणीन् पणिनामकस्यासुरान् वचोभिः वचनैः आह्वानलक्षणैः । आहूयाहूयेत्यर्थः । अभि योधत् अभियोधितवान् इन्द्रः ॥ २ ॥

वेङ्कट० गाम् कामयमानः शिलोच्चयम् प्रति स्थिताः पणिभिरपहृता गाः सत्यकर्मभिः सत्ययुक् अङ्गिरोभिर्युज्यमानः वि अरुजत् अन्यैः अरुग्णम् वलासुरस्य समुच्छ्रितं देशम् । पणीन् वचोभिः च अभि अयोधयद् भर्त्सनपरैः इन्द्रः[5] ॥ २ ॥

अयं द्योतयदद्युतो व्यक्तून् दोषा वस्तोः शरद इन्दुरिन्द्र ।
इमं केतुमदधुर्नू चिदह्नां शुचिजन्मन उषसश्चकार ॥ ३ ॥

अयम् । द्योतयत् । अद्युतः । वि । अक्तून् । दोषा । वस्तोः । शरदः । इन्दुः । इन्द्र ।
इमम् । केतुम् । अदधुः । नु । चित् । अह्नाम् । शुचिऽजन्मनः । उषसः । चकार ॥ ३ ॥

स्कन्द० अयम् 'द्योतयत् वि-शब्दस्य' परस्तादुक्तस्यानेनाख्यातेन[6] सम्बन्धः । विविधं स्वदीप्त्या द्योतयति । अद्युतः अदीप्तान् । कान्[7] । उच्यते । अक्तून् अक्तुशब्देनात्रादित्य उच्यते । 'अहरहर्यात्यक्तुरपाम्' (ऋ २,३०, १) इति यथा । द्वादशत्वादादित्यानां बहुवचनेन निर्देशः । आदित्यान् । दोषा रात्री.[8] वस्तोः अहश्च शरदः संवत्सरांश्च इन्दुः सोमः सयाभूतः हे इन्द्र ! । आदित्यानां हि सर्वेषां स्वात्मा दीप्तिर्धर्मायत्ता । धर्मश्च यागलक्षणः सोमायत्तः । अत एतदुच्यते— अयं द्योतयत् इत्यादि । किञ्च इमम् केतुम् कर्तारम् अदधुः निहितवन्तः 'देवान् यजमानाः'[9] । नू चित् नु इति निपातः पुराणवचनः, चित् शब्दश्चार्थे । पुराणानां च । चशब्दश्रुतेर्नवानां चेत्यध्याहार्यम् । ये च पूर्वेषु कालेषु ये चेदानीं तेषां सर्वेषामित्यर्थः । अह्नाम् अहःपरिमितत्वात् ज्योतिष्टोमादयो यागा उच्यन्ते, न दिवसाः । यागानां हि कर्ता सोमो न दिवसानाम् । अयमेव च शुचिजन्मनः उषसः चकार । सर्वस्य हि जगतः दीप्तिर्धर्मायत्ता । धर्मश्च शुद्धजन्मनः दोषरहितजन्मनः

१. अयमिन्द्रः मूको.   २. त्स्व° मूको.   ३. त्सुशोऽप्सुगता° मूको.   ४. नास्ति मूको.   ५-५. योतयि° मूको.   ६. °नास्यातो मूको.   ७. तान मूको.   ८. रात्रिः मूको.   ९-९. देवयजनाः. मूको.

सोमायत्तः। अत एवमुच्यते—उपसश्चकार इति। अत्रमूलसोमस्तुतिद्वारेण चेयमिन्द्रस्यैव स्तुतिरित्यैन्द्रत्वस्याऽविरोधः ॥ ३ ॥

वेङ्कट० अयम् हि अद्योतयत् अव्याहृताः[1] रात्रीः शरदः च, अक्तून् [2]इति नैघण्टुकम्[2], सोमः इन्द्र!। तथा एनं सोमम् अक्षाम् वेनुम् अदधुः पुरा तथा निर्दोषाः यथा[3] उपसः करोतीति हविषः स्तुतिः ॥ ३ ॥

अ॒यं रो॑चयद॒रुचो॑ रुचा॒नो३॒॑ऽयं वा॑सय॒द् व्यृ१॒॑तेन॑ पू॒र्वीः ।
अ॒यमी॑यत ऋत॒युग्भि॒रश्वैः॑ स्व॒र्विदा॒ नाभि॑ना चर्षणि॒प्राः ॥ ४ ॥

अ॒यम् । रो॒च॒य॒त् । अ॒रुचः॑ । रु॒चा॒नः । अ॒यम् । वा॒स॒य॒त् । वि । ऋ॒तेन॑ । पू॒र्वीः ।
अ॒यम् । ई॒य॒ते॒ । ऋ॒त॒युक्ऽभिः॑ । अश्वैः॑ । स्वः॒ऽविदा॑ । नाभि॑ना । च॒र्ष॒णि॒ऽप्राः ॥ ४ ॥

स्कन्द० अयम् रोचयत् स्वदीप्त्या दीप्तान् करोति अरुचः अदीप्तान् "लोकान् आदित्यादीन्" वा पूर्वस्यामपि निर्दिष्टान् रुचानः स्वयम् दीप्यमानः। अयम् एव वासयत् विविधं भासितवान् ऋतेन वृष्टिजलेन उदकेन[4] पूर्वीः पूर्वकालाः। काः। सामर्थ्यात् प्रजाः। अयम् ईयते गच्छति ऋतयुग्भिः यज्ञाय उदकाय वा ये "युज्यन्ते ते ऋतयुजस्तैर्ऋतयुग्भिः[5] अश्वैः। स्वर्विदा स्वरन्तकम् यतो विन्दति लभते येन" स्वर्विदा रथेन। कीदृशेन। नाभिना अश्ववर्णीतमस्यर्थमेवत्। नाभिनया। कीदृशः। चर्षणिप्राः मनुष्याणां भासा पूरयिता। सोमोऽपि[6] देवः तस्य तत्स्थधा रथस्थमुपपद्यमेयत्। अश्वैः स्वर्विदेति[7] सहयोगलक्षणा वैषा तृतीया। इन्द्राश्वैरिन्द्ररथेन च सह गच्छतीन्द्रेण पीतः[8] सन्निति। अत्रमूलसोमस्तुतिद्वारेण चेयमपि पूर्ववदिन्द्रस्य स्तुतिः। अथवा अयमित्यादिनैन्द्र एवोच्यते, न सोमः, तेन साक्षादेवैन्द्रत्वम् ॥ ४ ॥

वेङ्कट० अयम् अरोचयत् अरोच्यमानान् स्वयं रोचमानः। अयम् वि वासयति तेजसा बह्वीः उषसः। अयम् गच्छति सत्येन युक्तैः अश्वैः स्वर्लोकगेन[10] नाभिमता रथेन मनुष्याणां पूरयिता ॥ ४ ॥

नू गृ॑णा॒नो गृ॑ण॒ते प्र॑त्न राज॒न्निषः॑ पिन्व वसु॒देया॑य पू॒र्वीः ।
अ॒प ओष॑धीरवि॒षा वना॑नि॒ गा अर्व॑तो॒ नॄनृ॒चसे॑ रिरीहि ॥ ५ ॥

नु । गृ॒णा॒नः । गृ॒ण॒ते । प्र॒त्न॒ । रा॒ज॒न् । इषः॑ । पि॒न्व॒ । व॒सु॒ऽदेया॑य । पू॒र्वीः ।
अ॒पः । ओष॑धीः । अ॒वि॒षा । वना॑नि । गाः । अर्व॑तः । नॄन् । ऋ॒चसे॑ । रि॒री॒हि॒ ॥ ५ ॥

स्कन्द० नु इति क्षिप्रनाम, पिन्वेत्येतेन च सम्बन्धयितव्यः। गृणानः स्तूयमानो मया गृणते स्तुवते मह्यं हे प्रत्न! पुराण! राजन्! परमेश्वर! इषः अन्नानि पिन्व पिन्वतिरत्र[11] सेचनार्थः, 'पिवि मिवि णिवि सेचने' इति। इह तु सम्प्रदानचतुर्थीश्रुतेर्दानार्थः। तेन च प्रभूतं दानम् लक्ष्यते। प्रभूतान्यन्नानि[12] क्षिप्रम् देहीत्यर्थः। किमर्थम्। वसुदेयाय धनदानार्थम्। कथञ्च यथं

1. अव्याकृता। वि॰ अ, यद्वा ऋषं. २-२. इतनैघण्टुकम् मूको. ३. यदा मूको. ४-४. कान्… धीन् मूको. ५. [illegible] मूको. ६-६. युज्यन्तेत्य ऋतयुग्…श्वैः मूको. ७. नैव मूको. ८. सोपि मूको. ९. सित मूको. १०. °गे मूको. ११. पिन्वति° मूको. १२. °तस्याशा° मूको.

धनवन्तः सन्तो यस्मैयस्मै रोचते तस्मैतस्मै धनं दद्यामेत्येवमर्थमित्यर्थः। कीदृशीरिषः। पूर्वीः पूर्वकालाः। पूर्वमपि त्वा दत्तवानेवासीत्यर्थः। अथवा गृणते इति सम्प्रदानचतुर्थी व्यवहितेन वसुदेयायेत्यनेन सम्बध्यते। अन्नानि सोमलक्षणानि अभिप्रेतानि। पिन्वतिरपि सेचनार्थ एव। स्तुवते मह्यं धनं दातुं सोमलक्षणान्यन्नानि क्षिप्रम् पिन्व[1] स्वोदरे सिञ्चेत्यर्थः[2]। यानि पूर्वमपि पीतवानसि। पीत्वा च अपः पार्थिवान्युदकानि ओषधीः अविषा[3] अवनानि पालनानि वनानि अटवीदेशान्, येषु गावश्चरन्ति। अथवा वनमित्युदकनाम। अविषा इत्येतच्च वनानामेव विशेषणम्। अविषाणि विषवर्जितानि पुष्टिकराणीत्यर्थः। अप इत्येतेन पार्थिवान्युदकान्युपात्तानि, वनशब्देन तु वृष्ट्युदकानीत्यपौनरुक्त्यम्। गाः अर्वतः अश्वान् नृन् मनुष्यांश्च परिचारकान् ऋचसे ऋच स्तुतौ। स्तोतुम् रिरीहि देहि। कथं वयम् गवादिदानेन पोषिताः सन्तः स्तुयामेत्येवमर्थं गवादीनि देहीत्यर्थः ॥ ५ ॥

वेङ्कट० क्षिप्रम् स्तूयमानः स्तुवते मह्यं राजन्! अन्नानि पिन्व वातव्यधनाय बहूनि। अपः ओषधीः[4] रयीणां[5] दाता! वननीयानि धनानि गाः अश्वान् मनुष्यान् स्तुवते[6] मह्यं प्रयच्छ ॥ ५ ॥

[6]इति चतुर्थाष्टके सप्तमाध्याये एकादशो वर्गः[6] ॥

[ ४० ]

[7]भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[7]।

इन्द्र पिब तुभ्यं सुतो मदायाव स्य हरी वि मुचा सखाया ।
उत प्र गाय गण आ निषद्याथा यज्ञाय गृणते वयो धाः ॥ १ ॥

इन्द्र । पिब । तुभ्यम् । सुतः । मदाय । अव । स्य । हरी इति । वि । मुच । सखाया ।
उत । प्र । गाय । गणे । आ । निऽसद्य । अथ । यज्ञाय । गृणते । वयः । धाः ॥ १ ॥

स्कन्द० इन्द्र! पिब सोमम्। तुभ्यम् सुतः तवार्थायाभिषुतः। किमर्थं पिबामि। उच्यते — मदाय मदार्थम्[8]। अव स्य विमुञ्च हरी। कुतः। सामर्थ्यात् स्वस्माद् रथात्। विमुच्य च "वि मुच विमुञ्च"। कुतः। प्रग्रहेभ्यः। सखाया वयस्यभूतावात्मनः। उत च गाय उतशब्दोऽप्यर्थे। प्रगायापि हेतुकर्तृत्वेन स्तुहि अपि। स्तुतिकरणेऽस्मान् प्रयुङ्क्ष्वेत्यर्थः। गणे अस्माकं समूहे आ निषद्य उपविश्य। उपविष्टः सद्भिरस्माभिः स्तूयस्वेत्यर्थः। अथ अनन्तरम् गृणते स्तुवते मह्यम् यज्ञाय पुनरपि वयः अन्नम् धाः देहि ॥ १ ॥

वेङ्कट० इन्द्र! पिब सोमम्। तुभ्यम् मदाय अयम् सुतः सोमः[9]। प्रमिश्व त्रिष्व। अथ सखायौ अश्वौ रथात् वि मुञ्च। अस्मिन् उद्गातृगणे आ निषद्य गायतस्तस्य प्रगाणमुत्पादनं कुरु। ततः यज्ञार्थम् स्तुवते मह्यम् अन्नम् धेहि ॥ १ ॥

---

1. शिश्र मूको. 2. पिन्वेत्यर्थः मूको. 3. हविषा मूको. 4. मध्येना ए मस्तावः. 5. तपते एपे. 6-6. नास्ति मूको. 7. मदनार्थ मूको. 8-8. विमुच्य विमुविमुञ्च मूको. 9. सोमे वि॰ छपं.

अस्य॑ पि॒ब॒ यस्य॑ जज्ञा॒न इ॑न्द्र॒ मदा॑य॒ क्रत्वे॒ अपि॑बो विरप्शिन् ।
तमु॑ ते॒ गावो॒ नर॒ आपो॒ अद्रि॒रिन्दुं॒ सम॑ह्यन् पी॒तये॒ सम॑स्मै ॥ २ ॥

अस्य॑ । पि॒ब॒ । यस्य॑ । ज॒ज्ञा॒नः । इ॒न्द्र॒ । मदा॑य । क्रत्वे॑ । अपि॑बः । वि॒ऽर॒प्शि॒न् ।
तम् । ऊँ॒ इति॑ । ते॒ । गावः॑ । नरः॑ । आपः॑ । अद्रिः॑ । इन्दु॑म् । सम् । अ॒ह्य॒न् । पी॒तये॑ । सम् । अ॒स्मै॒ ॥

स्कन्द० अस्येति षष्ठीश्रुतेरेकदेशमिति शेषः । द्वितीयार्थे वा षष्ठी । अस्य सोमस्यैकदेशं स्वांशलक्षणम् इमं वा सोमम् पिब । यः कीदृशः । उच्यते—यस्य एकदेशं यं वा सोमम् जज्ञानः जायमान एव । 'जन्मन एव प्रभृतीत्यर्थः'[1] । हे इन्द्र! मदाय क्रत्वे क्रतुरिति कर्मनाम । मदार्थं च वृत्रवधादिकर्मार्थं च अथवा वृत्रवधादिकर्मार्थो यो मदः तदर्थम् अपिबः पीतवानसि हे विरप्शिन्! महन्![2] । किञ्च तम् उ ते । उ इति पदपूरणः, एवार्थे वा । तम् एव ते तव स्वभूतम् गावः पयआदिद्रव्यणेन, नरः मनुष्याः ऋत्विगाख्याः अभिषवादिभिः संस्कारैः स्तुतिभिर्वा, आपः वसतीवर्येकधनाख्याः आत्मप्रक्षेपेण, अद्रिः अभिषवग्रावा अभिषवेण इन्दुम् सम् अह्यन् हि गतौ वृद्धौ च । संवर्धितवन्त । किमर्थम् पुनः समह्यन् । उच्यते—पीतये सम् समुपसर्गश्रुतेराख्यातस्याप्यनुषङ्गः । पानार्थं संवर्धितवन्तः । कस्य । अस्मै षष्ठ्यर्थे चतुर्थ्येषा । अस्य प्रकृतस्य सोमस्य तव वा ॥ २ ॥

वेङ्कट० अमुम् पिब । यम् जायमान एव इन्द्र! मदाय प्रज्ञानाय अपिबः हे महन्! तम् एव इन्दुम् गावः चर्मप्रदाः ऊध्वर्यवः वसतीवर्याः ग्रावा च सह अगमयन् अंशोः पीतये अस्मै तुभ्यम् ॥ २ ॥

समि॑द्धे अ॒ग्नौ सु॒त इ॑न्द्र॒ सोम॒ आ त्वा॑ वहन्तु॒ हर॑यो॒ वहि॑ष्ठाः ।
त्वा॒य॒ता मन॑सा जोहवी॒मीन्द्रा या॑हि सुवि॒ताय॑ म॒हे नः॑ ॥ ३ ॥

सम्ऽइ॑द्धे । अ॒ग्नौ । सु॒ते । इ॒न्द्र॒ । सोमे॑ । आ । त्वा॒ । व॒ह॒न्तु॒ । हर॑यः । वहि॑ष्ठाः ।
त्वा॒ऽय॒ता । मन॑सा । जो॒ह॒वी॒मि॒ । इन्द्र॑ । आ । या॒हि॒ । सु॒वि॒ताय॑ । म॒हे । नः॒ ॥ ३ ॥

स्कन्द० समिद्धे अग्नौ आहवनीयाख्ये सुते च हे इन्द्र! सोमे त्वा त्वाम् आ वहन्तु हरयः अश्वाः वहिष्ठाः वोढृतमाः । किं कारणम् । उच्यते—त्वायता त्वत्कामेन मनसा जोहवीमि भृशमाह्वयाम्यहम् । एतत् ज्ञात्वा हे इन्द्र! आ याहि सुविताय महे गत्यर्थकर्मण्येषा चतुर्थी सुवितम् अभ्युदयं सुगतं वा महद् यागाख्यं कर्म नः अस्माकं स्वभूतम् ॥ ३ ॥

वेङ्कट० निगदसिद्धा ॥ ३ ॥

आ या॑हि॒ शश्व॑दुश॒ता य॑या॒थेन्द्र॑ म॒हा मन॑सा सोम॒पेय॑म् ।
उप॒ ब्रह्मा॑णि शृणव इ॒मा नोऽथा॑ ते य॒ज्ञस्त॒न्वे॒३॒॑ वयो॑ धात् ॥ ४ ॥

आ । या॒हि॒ । शश्व॑त् । उ॒श॒ता । य॒या॒थ॒ । इन्द्र॑ । म॒हा । मन॑सा । सो॒म॒ऽपेय॑म् ।
उप॑ । ब्रह्मा॑णि । शृ॒ण॒वः॒ । इ॒मा । नः॒ । अथ॑ । ते॒ । य॒ज्ञः । त॒न्वे॑ । वयः॑ । धा॒त् ॥ ४ ॥

---

1-1. जन्मप्रभृ° मूको. 2. महं मूको. 3. भारित मूको.

स्कन्द० आ याहि शश्वत्। मा निराशः सन्। किन्तर्हि। उशता यद्यपि शुद्धोऽयं याति:[1] प्रकरणादाङ्पूर्वार्थे द्रष्टव्यः। सोमं स्तुतीश्च कामयमानेन आगच्छ हे इन्द्र! महा महता मनसा सोमपेयम् सोमः पीयते यस्मिन्निति तादृशम् अस्मदीयं यज्ञम्। आगत्य च ब्रह्माणि स्तुतिलक्षणानि उप शृणवः 'उपशृणु इमा'[2] इमानि नः अस्माकं स्वभूतानि। अथ अनन्तरम् ते तव स्वभूतः[3] यज्ञः स्वभूतायै तन्वे शरीराय वयः अन्नं सोमलक्षणम् धात् ददातु। यज्ञेऽध्यारोप्यते तच्छरीराय यज्ञो ददात्विति। तुभ्यं यजमानो ददात्वित्यर्थः ॥ ४ ॥

वेङ्कट० अद्य च आ गच्छ, पुरा च त्वम् इन्द्र! शश्वत् कामयमानेन महता मनसा पातव्यं सोमम्[4] प्राप्तोऽसि। आगतश्च उप शृणुहि स्तोत्राणि इमानि अस्माकम्। अथ तव अस्माभिरनुष्ठीयमानः यज्ञः पुत्राय अन्नम् प्रयच्छतु ॥ ४ ॥

यदि॑न्द्र दि॒वि पार्ये॒ यदृध॒ग्यद्वा॒ स्वे सद॑ने॒ यत्र॒ वासि॑।

अतो॑ नो य॒ज्ञमव॑से नि॒युत्वा॑न्त्स॒जोषा॑ः पाहि गिर्वणो म॒रुद्भि॑ः ॥ ५ ॥

यत्। इ॒न्द्र॒। दि॒वि। पार्ये॑। यत्। ऋध॑क्। यत्। वा॒। स्वे। सद॑ने। यत्र॑। वा॒। असि॑।

अतः॑। नः॒। य॒ज्ञम्। अव॑से। नि॒युत्वा॑न्। स॒ऽजोषा॑ः। पा॒हि॒। गि॒र्व॒णः॒। म॒रुत्ऽभि॑ः ॥ ५ ॥

स्कन्द० यच्छब्दो यदिशब्दस्यार्थे। यदि त्वम् हे इन्द्र! दिवि द्युलोके पार्ये पारयितव्ये प्राप्तव्ये पारे वा भवे। उपरिवर्तिनीत्यर्थः। यत् ऋधक् पृथगिति पृथग्भाववचनः। यदि पृथक् द्युलोकादन्यत्र क्वापि, यत् वा यदि वा स्वे आत्मीये सदने स्थाने यत्र क्वापि असि। अतः एतच्छब्दोऽयं यत्रेति यच्छब्देन उद्देशात् यच्छब्दोदितस्य च तच्छब्देन प्रतिनिर्देशात् तच्छब्दस्यार्थे। द्युलोकादौ यत्र क्वाप्यसि तस्मात् नः अस्माकं स्वभूतम्[5] यज्ञम् अवसे तर्पणायात्मनः नियुत्वान् नियुद्भिरश्वैरभिवहनाभिलक्षणात् पाहि। अत इत्यपादानपञ्चमीश्रुतेः पातिरत्र गत्यर्थः, अनेकार्थत्वाद्धातूनाम्, शुद्धोऽपि चाङ्पूर्वार्थे द्रष्टव्यः। आगच्छ। अथवा अत इत्यपादानश्रुतिसामर्थ्यात् तस्मादागमनस्याध्याहारः। पातिस्तु पानार्थ एव। द्युलोकादीनां यत्रासि ततस्तर्पणार्थमागत्य पिब। किम्। सामर्थ्यात् सोमम्। सजोषाः सम्प्रीयमाणः हे गिर्वणः! स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः! मरुद्भिः सहितः ॥ ५ ॥

वेङ्कट० हे इन्द्र! द्युलोके पारमये भवसि, यदि वा अन्यत्र। ऋधक् इति पृथग्भावमाचष्टे। यद् वा स्वे गृहे, यत्र वा असि। अतः अस्माकम् रक्षणाय अश्ववान् मरुद्भिः सहितः यज्ञम् आगत्य पिब सोमम् गीर्भिर्वननीय! ॥ ५ ॥

[6]इति चतुर्थाष्टके सप्तमाध्याये द्वादशो वर्गः[6] ॥

---

१. याति मूको. २-२. उपशृणुमाः मूको. ३. स्वभूता मूको. ४. नास्ति ब्रमं. ५ स्वभूतार मूको. ६-६. नास्ति मूको.

[४१]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

अहेळमान उप याहि यज्ञं तुभ्यं पवन्त इन्दवः सुतासः।
गावो न वज्रिन्त्स्वमोको अच्छेन्द्रा गहि प्रथमो यज्ञियानाम् ॥ १ ॥

अहेळमानः । उप । याहि । यज्ञम् । तुभ्यम् । पवन्ते । इन्दवः । सुतासः ।
गावः । न । वज्रिन् । स्वम् । ओकः । अच्छ । इन्द्र । आ । गहि । प्रथमः । यज्ञियानाम् ॥१॥

स्कन्द० अहेळमानः अक्रुध्यन् उप याहि उपगच्छास्मदीयम् यज्ञम् । कस्मात् । उच्यते— यस्मात् तुभ्यम् तवार्थाय पवन्ते पूयन्ते प्रक्षरन्ति वा इन्दवः सोमाः सुतासः अभिषुताः । कथं पुनरुपयामि । उच्यते— गावः न गाव इव, यथा गावः हे वज्रिन्! स्वम् ओकः आत्मीयं निवासस्थानं गोष्ठाख्यम् अच्छ आप्तुं शीघ्रमागच्छन्ति तद्वत् हे इन्द्र! आ गहि आगच्छ । प्रथमः यज्ञियानाम् पञ्चम्यर्थे षष्ठ्येषा । यज्ञार्हेभ्यो देवेभ्यः प्रथमः । यावदन्ये देवा नागच्छन्ति तावदित्यर्थः । अथवा प्रथमशब्द उत्कृष्टवचनः । यज्ञियानामपि निर्धारणे षष्ठी । यज्ञियानां देवानां मध्ये यस्त्वम् उत्कृष्ट इत्यर्थः ॥ १ ॥

वेङ्कट० अक्रुध्यन् उप गच्छ यज्ञं । तुभ्यम् पवन्ते इन्दवः[2] अभिषुताः । पशवः[3] इव वज्रिन्! स्वम् गृहम् प्रति इन्द्र! आ गच्छ मुख्यः यज्ञार्हाणाम् ॥ १ ॥

या ते काकुत् सुकृता या वरिष्ठा यया शश्वत् पिबसि मध्व ऊर्मिम् ।
तया पाहि प्र ते अध्वर्युरस्थात् सं ते वज्रो वर्ततामिन्द्र गव्युः ॥ २ ॥

या । ते । काकुत् । सुऽकृता । या । वरिष्ठा । यया । शश्वत् । पिबसि । मध्वः । ऊर्मिम् ।
तया । पाहि । प्र । ते । अध्वर्युः । अस्थात् । सम् । ते । वज्रः । वर्तताम् । इन्द्र । गव्युः ॥२॥

स्कन्द० 'या ते काकुत्' काकुच्छब्दोऽत्र सामर्थ्याज्जिह्वावचनः । जिह्वा सुकृता सुष्ठु कृता । केन । सामर्थ्याद् विधात्रा त्वयैव वा । या च वरिष्ठा उरुशब्दस्यायम् वरादेशः । उरुतमा [4]अत्यन्तविस्तीर्णा । यया च शश्वत् नित्यं पिबसि मध्वः मधुस्वादस्य सोमस्य [5]ऊर्मिम् सङ्घातम्, सोमं बहुमित्यर्थः । तया पाहि पिब अस्मदीयमपि सोमम् । ते तवार्थाय अध्वर्युः प्र अस्थात् प्रस्थितः आहवनीयं प्रति । एतत् ज्ञात्वा ते तव स्वभूतः वज्रः सम् वर्तताम् संवर्तनं नाम उपसंहारः । उपसंहृतस्त्वावतिष्ठतु यावत् सोमं पिबसीत्यर्थः । अथवा वर्तते इति गतिकर्मा । सङ्गच्छतामसुरैर्मेधैर्वा सह । असुरान् मेघान् वा[4] हन्त्वित्यर्थः । हे इन्द्र! गव्युः गोकामः तदेषणशीलः[5] ॥ २ ॥

वेङ्कट० या ते जिह्वा काकुत् उरुतरा वरिष्ठा[6] । अवशिष्टं स्पष्टम् ॥ २ ॥

---

१-१. नास्ति मूको. २. इन्द्र ऋ. ३. पा° मूको. ४-४. नास्ति मूको. ५. नास्ति मूको. ६. °ष्ठा ते )त° मूको. ७. विशिष्टा वि°.

एष द्रप्सो वृषभो विश्वरूप इन्द्राय वृष्णे समकारि सोमः ।
एतं पिब हरिवः स्थातरुग्र यस्येशिषे प्रदिवि यस्ते अन्नम् ॥ ३ ॥

एषः । द्रप्सः । वृषभः । विश्वरूपः । इन्द्राय । वृष्णे । सम् । अकारि । सोमः ।
एतम् । पिब । हरिऽवः । स्थातः । उग्र । यस्य । ईशिषे । प्रऽदिवि । यः । ते । अन्नम् ॥३॥

स्कन्द० एषः द्रप्सः रसरूपः सोमः वृषभः वर्षिता वृष्टिहेतुः[1] विश्वरूपः 'विश्वम्' (निघ ३,१) इति बहुनाम । बहुरूपः । अहयमसादिभेदाश्रयणेन भिन्नत्वाद् बहुरूपता । इन्द्राय वृष्णे तवेन्द्रस्य वर्षितुरर्थाय सम् अकारि संस्कृतः सोमः । एतम् पिब हे हरिवः! हरी अश्वौ वहन्![2] स्थातः! सङ्ग्रामे पत्नी वाऽवस्थानशील! हे उग्र! अप्रसह्य![3] क्रूर! वा । यस्य ईशिषे प्रभवसि प्रदिवि पुराणेऽपि काले । नेदानीमेव केवलम्[4] । यः च ते तव अन्नम् अहरहः शरीरस्थितिहेतुः ॥ ३ ॥

वेङ्कट० द्रप्सः द्रवणशीलः । प्रदिवि इति पुराणनामधेयम् (द्र० निघ ३,२७) । प्रजापतेरिन्द्रः सोममात्मनोऽशं वव्रे । शिष्टं स्पष्टम् ॥ ३ ॥

सुतः सोमो असुतादिन्द्र वस्यानयं श्रेयाञ्चिकितुषे रणाय ।
एतं तितिर्व उप याहि यज्ञं तेन विश्वास्तविषीरा पृणस्व ॥ ४ ॥

सुतः । सोमः । असुतात् । इन्द्र । वस्यान् । अयम् । श्रेयान् । चिकितुषे । रणाय ।
एतम् । तितिर्वः । उप । याहि । यज्ञम् । तेन । विश्वाः । तविषीः । आ । पृणस्व ॥ ४ ॥

स्कन्द० सुतः अभिषुतः सोमः असुतात् अनभिषुताद् सोमात् हे इन्द्र! वस्यान् वस आच्छादने इत्यस्य ईयसुनीदं रूपम् । आच्छादयितृतरः । कस्य । सामर्थ्याद् तवोदरस्य । स्वकुक्षिकरण-समर्थतर इत्यर्थः । अयम् योऽस्माभिरभिषुतः स च वस्यान् एव केवलम् । किन्तर्हि । श्रेयान् अतिशयेन प्रशस्यः । चिकितुषे षष्ठ्यर्थे च चतुर्थी । चिकितुषः ज्ञातुस्तव रणाय । सङ्ग्रामं चिकीर्षोः तव सामर्थ्यातिरेककर इत्यर्थः । एतद् ज्ञात्वा एतम् अस्मदीयं हे तितिर्वः! तीर्णवन्![5] । किम् । सामर्थ्यात् सङ्ग्रामान् । बहुषु सङ्ग्रामेष्वसुराणां जेतः! इत्यर्थः । उप याहि उपगच्छ यज्ञम् । उपगम्य च तेन पीतेन सोमेन विश्वाः सर्वाः तविषीः बलानि स्वसेनालक्षणानि आ पृणस्व पृण[6] प्रीणने । आप्रीणय । तर्पय इत्यर्थः ॥ ४ ॥

वेङ्कट० सुतः अयम् सोमः असुतात् निहितात् सोष्यमाणात्[7] वसीयान् भवति, प्रशस्यश्च अयम् प्राज्ञाय तुभ्यम् रक्षणकर्मणे । तम् एतम् सोमम् तरति![8] उपद्रवाणाम् उप गच्छ । तेन सोमेन पीतेन विश्वानि आत्मनो बलानि आ पूरय ॥ ४ ॥

हव्यामसि त्वेन्द्र याह्यर्वाङरं ते सोमस्तन्वे भवाति ।
शतक्रतो मादयस्वा सुतेषु प्रास्माँ अव पृतनासु प्र विक्षु ॥ ५ ॥

---

१. °हेतवः मूको. २. वहन् मूको. ३. अप्रगृह्य मूको. ४. केवले मूको. ५. तीर्णवान् मूको. ६. पिण मूको. ७. सोष्यमाणात् ख; सेष्यमाणान् इत्ये; सोष्य° वि°.

ह्वयामसि । त्वा । आ । इन्द्र । याहि । अर्वाङ् । अरम् । ते । सोमः । तन्वे । भवाति ।
शतक्रतो इति शतऽक्रतो । मादयस्व । सुतेषु । प्र । अस्मान् । अव । पृतनासु । प्र । विक्षु ॥

स्कन्द० ह्वयामसि ह्वयामो वयं त्वाम्। एतद् ज्ञात्वा हे इन्द्र! आ याहि आगच्छ अर्वाङ् अस्मदभिमुखः सन्। अरम् पर्याप्तः ते तव तन्वे शरीरस्यार्थाय[1] सोमः भवाति भवति अस्ति। यावन्तं स्वशरीरेण सोमं पिबसि तावानस्तीत्यर्थः। अत· हे शतक्रतो! बहुकर्मन्! बहुप्रज्ञ! वा मादयस्व मद तृप्तौ। तर्पयात्मानम् सुतेषु तृतीयार्थे सप्तम्येषा। सुतैः सोमैः। अथवा [2]'मादयस्वेति मदतेश्चान्तिकर्मणो[2] रूपम्। स्नावयात्मानमस्माभि· सुतेषु। औपश्लेषिकमिद-मधिकरणम्, गङ्गायां घोष इति यथा। सुतानां सोमानामुपश्लिष्टः। इतश्चोत्तरकालम् अस्मान् प्र अव प्रकर्षेण रक्ष पृतनासु सङ्ग्रामेषु। प्र विक्षु 'विशः' ( निघ २,३ ) इति मनुष्यनाम। पञ्चम्यर्थे च सप्तमी। मनुष्येभ्यश्चोरादिभ्यः प्रकर्षेण रक्षेत्यर्थः ॥ ५ ॥

वेङ्कट० मितदसिदा ॥ ५ ॥

[3]इति चतुर्थाष्टके सप्तमाध्याये त्रयोदशो वर्गः[3] ॥

[ ४२ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रो देवता। अनुष्टुप् छन्दः, चतुर्थी बृहती[1]।

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर। अरंगमाय जग्मयेऽपश्चाद्दध्वने नरे ॥१॥

प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर । अरम्ऽगमाय । जग्मये । अपश्चात्ऽदध्वने । नरे ॥१॥

स्कन्द० प्रति इत्युपसर्गः भर इत्याख्यातेन सम्बन्धयितव्यः। अस्मै इन्द्राय पिपीषते पातुमिच्छते विश्वानि सर्वाणि ग्रहचमसादीनि पात्राणि विदुषे यावज्जीवं सर्वस्य ज्ञात्रे प्रतिहर। प्रतिशब्दो धात्वर्थानुवादी, स्पर्धते प्रतिस्पर्धत इति यथा। भर इत्यस्य 'हृग्रहोर्भश्छन्दसि हस्य' ( पावा ८,२,३२ ) इति भकारः। हर प्रापय। हे अध्वर्यो! होमार्थम् आहवनीयदेशं नयेत्यर्थः। अथवा प्रतिशब्दो लक्षणे कर्मप्रवचनीयः। यच्छब्देश्च सोमपदाध्याहारः। आहवनीयं प्रति। कीदृशा-यास्मै। उच्यते—अरंगमाय पर्याप्तं शत्रून् प्रति गन्त्रे जग्मये गमनशीलाय अपश्चाद्दध्वने 'दध्यति' ( निघ २,१४ ) इति गतिकर्मा। अपश्चाद्गामिने। सङ्ग्रामेष्वग्रगामिन इत्यर्थः। नरे मनुष्याकाराय ॥ १ ॥

वेङ्कट० प्रति भर अस्मै पातुमिच्छते विश्वानि अन्नानि विदुषे धनादीनि पर्याप्तगामिने गमनशीलाय तदानीमेव दध्वने[4] नराय। नेता नरः ॥ १ ॥

एमेनं प्रत्येतन सोमेभिः सोमपातमम्। अमत्रेभिर्ऋजीषिणमिन्द्रं सुतेभिरिन्दुभिः ॥२॥

आ । ईम् । एनम् । प्रतिऽएतन । सोमेभिः । सोमऽपातमम् ।
अमत्रेभिः । ऋजीषिणम् । इन्द्रम् । सुतेभिः । इन्दुऽभिः ॥ २ ॥

---

1. नास्ति मूको. 2-2. "मत्त किमदर्ते" मूको. 3-3. नास्ति मूको. 4. दहने मूको.

स्कन्द० आ इत्युपसर्गः[1] प्रत्येतनेत्यास्यातेन[2] सम्बन्धयितव्यः। ईम् इति पदपूरणः। एनम् पूर्वप्रकृतम् प्रति आ एतन प्रत्यागच्छत यूयम् हे अध्वर्यवः! मत्पुत्रपौत्राः! वा। सोमेभिः सोमैः सह। हविर्धानं गत्वा ततः सोमानादाय इन्द्रं प्रति प्रत्यागच्छतेत्यर्थः। कीदृशमेनम्। सोमपातमम् अतिशयेन सोमानां पातारम्। कीदृशैः सोमैः। अमत्रेभिः अमत्रैरपरिमेयैः बहुभिरित्यर्थः। अथवाऽमत्रशब्दो भाजनवचनः। सोमैश्च तद्भाजनैर्द्रोणकलशादिभिश्चेत्यर्थः। कीदृशमेनम्। उच्यते— ऋजीषिणम् यत् सोमस्य पूयमानस्यातिरिच्यते तदृजीषं, तद्वानृजीषी, तम्। हर्योरस्य स भाग इत्येतत् तद्वत्ताकारणम्। कमेनम्। इन्द्रम्। कीदृशैः सोमैः। सुतेभिः सुतैः कृताभिषवसंस्कारैः इन्दुभिः सोमेभिः इत्यनेन पौनरुक्त्यप्रसङ्गाद् इन्धेरुन्दतेर्वा[3] क्रियाशब्दोऽयं न संविज्ञानपदम्। आत्मदीप्त्या दीप्तैः स्वत्वाद्वा क्लेदकैः इत्यर्थः॥ २॥

वेङ्कट० एनम् इन्द्रम् प्रत्यागच्छत सोमैः सोमपातमम्[4] पात्रैः ऋजीषवन्तम्[5] इन्द्रम्[6] सुतैः सोमैः॥ २॥

यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ। वेदा विश्वस्य मेधिरो धृषत् तंतमिदेषते॥३॥

यदि। सुतेभिः। इन्दुऽभिः। सोमेभिः। प्रतिऽभूषथ।
वेद। विश्वस्य। मेधिरः। धृषत्। तम्ऽतम्। इत्। आ। ईषते॥ ३॥

स्कन्द० यदि सुतेभिः अभिषुतैः इन्दुभिः स्वदीप्त्या दीप्तैः द्रवत्वाद्वा क्लेदकैः, सोमेभिः, सोमैः तृतीयानिर्देशाद् युक्ताः[7] प्रतिभूषथ प्रतिशब्दोऽत्र धात्वर्थानुवादी। भवथ यूयम् हे अध्वर्यवः। यदि सोमान्विता भवथेत्यर्थः। वेद उत्तमपुरुषैकवचनमेतत्। यदीति वचनात्ततः शब्दोऽध्याह्रियते। ततोऽहं तावत् जानामि विश्वस्य सर्वस्य यजमानस्य मेधिरः यज्ञसम्पादीन्द्रः धृषत् 'धृष्टः प्रगल्भः'[8] तम्-तम् युष्मदीयं यज्ञम्। इद् इति पदपूरणः। आ ईषते 'ईषति' (निघ २,१४) इति गतिकर्मा। आगच्छति। अथवा वेदेति प्रथमपुरुषैकवचनमेवेन्द्रविषयम्। यच्छब्दतच्छब्दा-ध्याहारैकवाक्यता योज्या। य इन्द्रो वेद जानाति यत् ज्ञातव्यं स आगच्छतीति॥ ३॥

वेङ्कट० यदि सुतैः दीप्तैः सोमैः इन्द्रम् प्रतिभवथ। 'वेत्ति अभिलषितम्' विश्वम् भावः धृष्टः। तम्-तम् एव प्राप्नोति॥ ३॥

अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम्।
कुवित् समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्परत्॥ ४॥

अस्मैऽअस्मै। इत्। अन्धसः। अध्वर्यो इति। प्र। भर। सुतम्।
कुवित्। समस्य। जेन्यस्य। शर्धतः। अभिऽशस्तेः। अवऽस्परत्॥ ४॥

स्कन्द० अस्मा इति इन्द्रस्य प्रतिनिर्देशः। तादर्थ्ये चतुर्थी। छान्दसं च वीप्सावचनम्[9], वीप्सादीनां द्विर्वचननिमित्तानाम् असम्भवात्[10]। चापले वा द्विर्वचनम्। अहिरहिः बुध्यस्वबुध्यस्वेति यथा।

1. 'सौरम मूको. 2. प्रतीयेनेनाख्या' मूको. 3. 'स्नदेर्वा मूको. 4. 'पानम् मूको. 5. ऋजीषवन्तम् मूको. 6. इन्द्र: मूको. 7. 'युक्त मूको. 8-8. धृष्टप्रगल्भो मूको. 9-9. वेत्तमिः मूको. 10. दीप्तर' मूको. 11. द्वि' मूको.

[1]चापलं नाम[1] शीघ्रप्रतिपादनम् । शीघ्रं प्रतिपद्यस्व अस्येन्द्रस्यार्थाय । इत् इति पदपूरणः । अन्धसः[2] द्वितीयार्थे षष्ठ्येषा । अन्धः सोमलक्षणमन्नम् । हे अध्वर्यो ! प्र भर प्रहर प्रापयाहवनीयम् सुतम् अभिषुतम्[3] । मा चाल्पम् । किं तर्हि । कुवित् बहु । किं कारणम् । उच्यते— यस्मात् समस्य सर्वस्य जेन्यस्य जेतुः । बलवत इत्यर्थः । शर्धतः उत्साहवतः शत्रोः स्वभूतायाः अभिशस्तेः हिंसायाः अवस्परत् स्पृ प्रीतिपालनयोः । पालितवान् यः । कान् । युष्मान् वा सर्वप्राणिनो वा । अथवा कुविदित्येतदवस्परदित्यस्य कर्म । बहुप्राणिजातं पालितवानिति ॥ ४ ॥

वेङ्कट० अस्मा-अस्मै[4] एव सोमाख्यस्य सुतम् अध्वर्यो ! [5]प्र भर[5] । सर्वस्य जेतव्यस्य शत्रोः वेगं कुर्वतः अभिशस्तेः अस्मान् इन्द्रः बहु अवस्परति तारयति ॥ ४ ॥

[6]इति चतुर्थाष्टके सप्तमाध्याये चतुर्दशो वर्गः[6] ॥

[ ४३ ]

[7]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रो देवता । उष्णिक् छन्दः[7] ।

यस्य॒ त्यच्छम्ब॑रं॒ मदे॒ दिवो॑दासाय र॒न्धयः॑ । अ॒यं स सोम॑ इन्द्र ते सु॒तः पिब॑ ॥१॥
यस्य॑ । त्यत् । शम्ब॑रम् । मदे॑ । दिवः॑ऽदासाय । र॒न्धयः॑ । अ॒यम् । सः । सोमः॑ । इ॒न्द्र॒ । ते॒ । सु॒तः । पिब॑ ॥

स्कन्द० यस्येति सोमस्य निर्देशः । मदे इत्यनेन चास्य सम्बन्धः । मदे इति 'यस्य च भावेन भावलक्षणम्' ( पा २,३,३७ ) इति सप्तमी । सप्तमीसामर्थ्यादेव लक्षणभूतक्रियापदाध्याहारः । यस्य सोमस्य सम्बन्धिनि मदे प्राप्ते । येन सोमेन मत्तः सन्नित्यर्थः । त्यत् तम् शम्बरम् नामासुरम् दिवोदासनाम्नो राज्ञोऽर्थाय रन्धयः वशं नीतवानसि । अयम् सः सोमः हे इन्द्र ! तव अर्थाय सुतः अभिषुतः[8] अस्माभिः, पिब इमम् ॥ १ ॥

वेङ्कट० यस्य पीतस्य मदे तत्[9] त्वं पुरा दिवोदासाय शम्बरम् वशम् अनयः । अयम् इति सिद्धम् ॥ १ ॥

यस्य॑ ती॒व्रसु॑तं॒ मदं॒ मध्य॒मन्तं॒ च॒ रक्ष॑से । अ॒यं स सोम॑ इन्द्र ते सु॒तः पिब॑ ॥२॥
यस्य॑ । ती॒व्रऽसु॑तम् । मद॑म् । मध्य॑म् । अन्त॑म् । च॒ । रक्ष॑से । अ॒यम् । सः । सोमः॑ । इ॒न्द्र॒ । ते॒ । सु॒तः । पिब॑ ॥

स्कन्द० यस्य सोमस्यात्मभवम् तीव्रसुतम् तीव्रशब्दः स्फुटवचनः । स्फुटरसो यः सुमते स तीव्रसुतः, सम्पदादित्वात् कर्मणि क्विप् । तं तीव्रसुतम् मदम् मदकरम् मध्यम् अन्तम् च [10]निष्टष्टं रक्षसे[10] अन्याभ्यो रक्षसि । यथाऽन्या देवता न पिबन्ति तथा पिबसि । अन्यतोऽपि[11] स्वयं पिबसि इत्यर्थः । अथवा मदशब्दो भाववचनः । मदं रक्षस इति कर्मक्रियासम्बन्धवैगुण्यात् योग्यक्रियाकर्मान्तराध्याहारः । यस्य सम्बन्धिनम् मदं प्राप्य रक्षसि यजमानमिति । अयम् सः सोमः इन्द्र ! ते सुतः, पिब इमम्[12] ॥ २ ॥

वेङ्कट० यस्य तीक्ष्णसुतम् मदकरम् रसम् वर्जयसि । तथा[13] मध्यमरसम् नीचरसम्[14] च वर्जयसि । सम्यक् सुतमेव पिब ॥ २ ॥

---

१-१. चापलं° मूको. २. अन्धस मूको. ३. अभिष्टुतम् मूको. ४. अस्मै लपं. ५-५. भर लपं. ६-६. नास्ति मूको. ७ अभिष्टुतः मूको. ८. नास्ति वि[1] लपं. ९. °सुत मूको. १०-१०. निष्टर° मूको. ११. ···तोऽपि मूको. १२. नास्ति मूको. १३. मध्यमा लपं. १४. नीगर° वि[1] लपं.

यस्य गा अन्तरश्मनो मदे दृळ्हा अवासृजः । अयं स सोम इन्द्र ते सुतः पिब ॥३॥

यस्य । गाः । अन्तः । अश्मनः । मदे । दृळ्हाः । अवऽअसृजः ।

अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ ३ ॥

स्कन्द० यस्य सोमस्य मदे प्राप्ते गाः मेघसम्बन्धात् गोशब्दोऽत्र अपाम् वाचकः । अन्तः मध्ये [1]अधिकरणश्रुतेः स्थिता इति शेषः । कस्य । अश्मनः[1] मेघस्य । कीदृशीरपः । [2]दृळ्हाः दृढपिधानाः । अवासृजः[2] अधो विसृजसि । पातयसीत्यर्थः । अयम् सः ॥ ३ ॥

वेङ्कट० यस्य मदे शिलोच्चयस्य अन्तः पणिभिरपहृताः दृढाः गाः अवासृजः[3] ॥ ३ ॥

यस्य मन्दानो अन्धसो माघोनं दधिषे शवः ।
अयं स सोम इन्द्र ते सुतः पिब ॥ ४ ॥

यस्य । मन्दानः । अन्धसः । माघोनम् । दधिषे । शवः । अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥४॥

स्कन्द० यस्य अन्धसः षष्ठीयम् तृतीयार्थे । षष्ठीनिर्देशाद् वा अवयवेनेति शेषः । येन सोमेनान्नेन यस्य सोमस्य अवयवेन मन्दानः मन्दतिरर्चतिकर्माऽपि सामर्थ्यात्तृप्त्यर्थः । अथवा यस्यान्धस इति विशेषणषष्ठीश्रुतेः पूर्वमन्त्रस्यस्य मदे इत्येतस्य विशेष्यपदस्यानुषङ्गः । यस्य सोमस्य अन्नरूपस्य सम्बन्धिनि मदे प्राप्ते मन्दानः मन्दतिरर्चतिकर्मैव । स्तूयमानः स्तोतृभिः । माघोनम् मघवति मघवति भवं माघोनम् । भवत इन्द्रस्य योग्यमित्यर्थः । आत्मनि धारयसि शवः बलम् । स्वयोग्येन बलेन बलवान् भवसीत्यर्थः । अयम् सः सोम. इन्द्र । ते सुतः, पिब इमम्[4] ॥ ४ ॥

वेङ्कट० यस्य अन्धसः तृप्यन् मघवतस्तव सम्बन्धि बलम् धारयसि ॥ ४ ॥

"इति चतुर्थाष्टके सप्तमाध्याये पञ्चदशो वर्गः" ॥

[ ४४ ]

"शंयुर्बार्हस्पत्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः, आद्याः षड् अनुष्टुभः,
सप्तम्यष्टमीनवम्यो विराजः, अष्टमी एकैव वा विराट्" ।

यो रयिवो रयिंतमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ १ ॥

यः । रयिऽवः । रयिम्ऽतमः । यः । द्युम्नैः । द्युम्नवत्ऽतमः ।

सोमः । सुतः । सः । इन्द्र । ते । अस्ति । स्वधाऽपते । मदः ॥ १ ॥

स्कन्द० "बार्हस्पत्यस्य[5] 'यो रयिवः' शंयोरातृणपाणिकात्" । बृहस्पतिपुत्रस्य शंयुनाम्नः 'यो रयिव.' इत्याद्यार्षम् आतृणपाणिकात् । यत्राथ तृणपाण्योऽर्भकम[6] इति तृणपाणिसम्बन्धात् तृणपाणिकमुच्यते । आकारो मर्यादायाम्, नाभिविधौ । प्राक् तृणपाणिकादित्यर्थः । सुत एतत् । तृणपाणिकस्य

१-१. श्रुते ... अश्मनः मूको. २-२. दृळ्हा ... अवासृज मूको. ३. नास्ति मूको. ४-४. नास्ति मूको. ५. रयिवः बार्ह मूको. ६ योऽर्भके मूको.

मन्त्रवर्णेनैव भारद्वाजत्वस्य दर्शनात् 'भरद्वाजायाव धुक्षत द्विता' ( ऋ ६,४८,१३ ) इति। यद्येवम् स्वादुष्किलीयम् ( ऋ ६,४७ ) एवावधित्वेनोपादेयम्, न तृणपाणिकम्। 'स्वादुर्गर्गस्तु सूक्तभाक्' इति हि वक्ष्यति। तेन प्राक् 'स्वादुष्किलीयात् शंयो॰, न स्वादुष्किलीयात्[1] परम्' इति [1]स्वादुष्किलीयस्यैवावधित्वेनोपादानस्य न्याय्यत्वम्[2]। नैष दोषः। 'पराण्यृजिश्वा चत्वारि' इत्यत्र तृणपाणिकात् चतुर्णी यथा स्यात् स्वादुष्किलीयान्मा भूदित्येवमर्थम् तृणपाणिकस्यावधित्वेनोपादानम्।

यः हे रयिवः! धनवन्! रयिन्तमः धनवत्तमः[3] सर्वधनिभ्यः[4] प्रकृष्टतमः, यः च द्युम्नैः सवनीयपुरोडाशादिभिरन्नैः यानि वा यागफलभूतानि यजमानेभ्यो ददाति, तैः द्युम्नवत्तमः अन्नवत्तमः सोमः सुतः अभिषुतः, सः हे इन्द्र! ते तवार्थाय अस्ति विद्यते अस्मयज्ञे स्वधापते! अन्नानां स्वामिन्! मदः मदस्य कारणभूतः ॥ १ ॥

वेङ्कट॰ शंयुर्बार्हस्पत्यः। यः धनवन्! धनवत्तमः, यः च अन्नैः अन्नवत्तमः[5] सोमः सुतः, सः[6] इन्द्र! त्वदर्थम्। ततश्च स्वधापते! तव अस्ति मदः ॥ १ ॥

यः शग्मस्तुविशग्म ते रायो दामा मतीनाम्।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ २ ॥

यः। शग्मः। तुविऽशग्म। ते। रायः। दामा। मतीनाम्।
सोमः। सुतः। सः। इन्द्र। ते। अस्ति। स्वधाऽपते। मदः ॥ २ ॥

स्कन्द॰ यः[5] शग्मः सुखकरः। कस्य? । उच्यते—हे तुविशग्म! बहुसुख! ते तव। रायः धनस्य दामा दाता। कस्मै। मतीनाम् मेधाविनाम् ( तु. निघ ३, १५ ) एतत्। मन्यतेरर्चतिकर्मणः। स्तोतृवचनो वा। षष्ठी च चतुर्थ्यर्थे। मेधाविभ्यः स्तोतृभ्यो वा। सोमः सुत इत्याद्युक्तार्थम् ॥ २ ॥

वेङ्कट॰ यः सुखकरः बहुसुख! ते धनम् मतीनाम् स्तोतृविप्राणाम् दाता ॥ २ ॥

येन वृद्धो न शवसा तुरो न स्वाभिरूतिभिः।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ ३ ॥

येन। वृद्धः। न। शवसा। तुरः। न। स्वाभिः। ऊतिऽभिः।
सोमः। सुतः। सः। इन्द्र। ते। अस्ति। स्वधाऽपते। मदः ॥ ३ ॥

स्कन्द॰ वृद्धः न तुरः न इति नशब्दावुपरिष्टादुपचारात्[7] उपमार्थीयौ, उपमार्थीयत्वाच्च 'अस्त्युपमानार्थे सम्प्रत्यर्थे प्रयोगः' ( या ७,३१ ) इति पदपूरणौ। चार्थे वा। येन प्रवृद्धः[8] शवसा बलेन तुरः च हिंसिता शत्रूणाम् स्वाभिः ऊतिभिः इति तृतीयानिर्देशात् अत्र योग्यक्रियापदाध्याहारः। स्वैश्च आत्मयोग्यैः पालनैः पालयिता। कस्य। सामर्थ्याद् यजमानानाम्। सोमः सुत इत्याद्युक्तार्थम् ॥ ३ ॥

---

१-१. °मायतो योग्यं स्वादुष्कलीयं मूको. २-२. °न्यायान्याय्यम् मूको. ३. धनन्तमः मूको. ४. °धनेभ्यः मूको. ५ नास्ति मूको ६. तस्य मूको. ७. °चारात् मूको. ८ °मार्थस्य मूको. ९. °द्धेन मूको.

वेङ्कट० येन वृद्धः[1] न सेनाबलेन शत्रून् तरसि, न च स्वैः मरुद्भिः, अपि त्वामेव[2] तुरः भवसि ॥ ३ ॥

त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
इन्द्रं विश्वासाहं नरं मंहिष्ठं विश्वचर्षणिम् ॥ ४ ॥

त्यम् । ऊँ इति । वः । अप्रऽहनम् । गृणीषे । शवसः । पतिम् ।
इन्द्रम् । विश्वऽसहम् । नरम् । मंहिष्ठम् । विश्वऽचर्षणिम् ॥ ४ ॥

स्कन्द० य उक्तगुणोऽसि त्वम् तम् । उ इति पदपूरणः । वः व्यत्ययेनेदं बहुवचनम् । त्वाम् । अप्रहणम् केनचिदपि प्रहन्तुमशक्यम् । गृणीषे उत्तमपुरुषस्य स्थाने व्यत्ययेनायं मध्यमः । गृणे स्तौमि । शवसस्पतिम् बलस्य स्वामिनम् इन्द्रम् विश्वासाहम् सर्वशत्रूणाम् अभिभवितारम् नरम् नराकारम् मंहिष्ठम् दातृतमम् विश्वचर्षणिम् सर्वस्य द्रष्टारम् ॥ ४ ॥

वेङ्कट० तम् एव युष्माकम् अप्रहन्तारम्[3] स्तुहि स्तोतः! बलस्य पतिम् इन्द्रम् सर्वसहम्[4] नेतारम् दातृतमम् सर्वस्य द्रष्टारम् ॥ ४ ॥

यं वर्धयन्तीद् गिरः पतिं तुरस्य राधसः ।
तमिन्न्वस्य रोदसी देवी शुष्मं सपर्यतः ॥ ५ ॥

यम् । वर्धयन्ति । इत् । गिरः । पतिम् । तुरस्य । राधसः ।
तम् । इत् । नु । अस्य । रोदसी इति । देवी इति । शुष्मम् । सपर्यतः ॥ ५ ॥

स्कन्द० [5]यमिति वक्ष्यमाणस्य[5] शुष्मस्य निर्देशः । यम्[6] शुष्मम् वर्धयन्ति परिवृद्धवीर्यं कुर्वन्ति । इत् इति पदपूरणः । गिरः वाचः स्तुतिलक्षणाः पतिम् स्वामिनम् । कस्य । तुरस्य यस्मिन् सति परिचारका यजमाना वा अत्यादरेण त्वरन्ते[7] तत् तुरम् तस्य तुरस्य राधसः धनस्य । बहुनो देयस्य च धनस्येत्यर्थः । तम् । इत् इति पदपूरणः । [8]नु इति पदपूरणः[8] क्षिप्रनाम वा । तं क्षिप्रम् अस्य इन्द्रस्य स्वभूतम् रोदसी द्यावापृथिव्यौ देवी देव्यौ शुष्मम् सेनालक्षणं बलम् सपर्यतः परिचरतः । देवता अपि परिचरन्ति, न केवला मनुष्या एवेत्यर्थः ॥ ५ ॥

वेङ्कट० यम् वर्धयन्ति एव स्तुतयः पतिम् तारकस्य धनस्य । तम् एव इन्द्रस्य शुष्मम् बलम् देवी[9] द्यावापृथिवी पूजयतः[10] ॥ ५ ॥

"इति चतुर्थाष्टके सप्तमाध्याये षोडशो वर्गः" ॥

तद् वं उक्थस्य बर्हणेन्द्रायोपस्तृणीषणि ।
विपो न यस्योतयो वि यद् रोहन्ति सक्षितः ॥ ६ ॥

---

१. इदे मूको. २. साल' मूको. ३. महन्ता' वि' ख; महत्तारं रूपं. ४. 'सह मूको. ५-५, यमित्य' मूको. ६. यः मूको. ७. त्वरते मूको. ८-८, नास्ति मूको. ९. दिवी वि' कपं; देवी ख. १०. पूजयितः मूको.

च्छया पायुः पालयिता अभवत् भवति। कश्चिद्धि कदाचिद् यदृच्छयाऽपि पालयिता भवत्यत उरुष्येति विशेष्यते। पालयिता भवति न यदृच्छयेति। कस्य। सखिभ्यः षष्ठ्यर्थे चतुर्थ्येषा। सखीनां यजमानानाम् ॥ ७ ॥

वेङ्कट० जानाति प्रवृद्धम्[1] यजमानस्य मित्रभूत इन्द्रः। पुल्लिङ्गश्च[2] मित्रशब्दः छन्दसीत्युक्तम्। अश्ववान् स्तरणशीलाभिरछादनवतरः। सोमं पिबन् इन्द्रः देवेभ्यः अभ्युदयम् चिनोति। अश्ववान् स्तरणशीलाभिश्छादयित्रीभिः धयन्तीभिः ऊतिभिः मरुद्भिः रक्षणेच्छायाम् रक्षकः[3] भवति यजमानेभ्यो देवेभ्यो वेति ॥ ७ ॥

ऋतस्य पथि वेधा अपायि श्रिये मनांसि देवासो अक्रन् ।
दधानो नाम महो वचोभिर्वपुर्दृशये वेन्यो व्यावः ॥ ८ ॥

ऋतस्य । पथि । वेधाः । अपायि । श्रिये । मनांसि । देवासः । अक्रन् ।
दधानः । नाम । महः । वचःऽभिः । वपुः । दृशये । वेन्यः । वि । आवरित्यावः ॥ ८ ॥

स्कन्द० ऋतस्य पथि वेधाः ऋतो यज्ञस्तस्य पन्थाः 'अनुष्ठानदेशो यो यज्ञो वर्तते' तस्मिन् यागफलभूत अवस्थितः मेधावीन्द्रः अपायि पायितः सोमम्। पायितेः[5] च तस्मिन् श्रिये यागफलभूत श्रीरित्युक्तम्। तस्मै मनांसि चित्तानि देवासः सोमदायिनो यजमानाः अक्रन् कृतवन्तः। यागफलप्राप्तिं स्वचित्तेन अवधारितवन्त इत्यर्थः। किञ्च दधानः दधत्। किम्। नाम उदकनामैतत्। वृष्टिलक्षणमुदकम् महः महत् प्रभूतं वचोभिः गर्जितलक्षणैर्वचनैः वपु आत्मीयम् दृशये[6] दर्शनाय वेन्यः कान्यः इन्द्रः वि आवः विवृतम् अकार्षीत्। वर्षगर्जितसम्बद्धमात्मानम् प्रकाशितवानित्यर्थः। अथवा वचोभिरित्येतेन दधानः सम्बध्यते। स्तुतिलक्षणैर्हेतुभूतैः[7] उदकं ददानं[8] प्रकाशितवानिति ॥ ८ ॥

वेङ्कट० सत्यस्य मार्गे यज्ञे सोमः पीयते[9]। तत्र श्रयणाय[10] मनांसि देवाश्च कुर्वन्ति। तस्मिन् यज्ञे स्तुतिभिः नमनम् दधानः महानिन्द्रः स्वं[11] वपुः दर्शनाय कमनीयः वि वृणोति। 'छन्दस्यपि दृश्यते' (पा ६,४,७३) इत्याडागम[12] ॥ ८ ॥

द्युमत्तमं दक्षं धेह्यस्मे सेधा जनानां पूर्वीररातीः ।
वर्षीयो वयः कृणुहि शचीभिर्धनस्य सातावस्माँ अविड्ढि ॥ ९ ॥

द्युमत्ऽतमम् । दक्षम् । धेहि । अस्मे इति । सेध । जनानाम् । पूर्वीः । अरातीः ।
वर्षीयः । वयः । कृणुहि । शचीभिः । धनस्य । सातौ । अस्मान् । अविड्ढि ॥ ९ ॥

स्कन्द० द्युमत्तमम् अतिशयेन दीप्तिमत् अत्यन्तोत्कृष्टम् दक्षम् बलम् धेहि देहि अस्मे अस्मभ्यम्। अथवा सेधतिर्गतिकर्मैव। किञ्च सेध सेधतिर्गतिकर्मा। इह तु सामर्थ्याद्धन्त्यर्थः[13] जहि[14]।

1. वृद्धम् वि' लपं. 2. °श्च छ. 3. रक्षणः वि' लपं. 4-4. °देशः। यज्ञे वर्तन्ते मूको. 5. पवने मूको. 6. दृशे मूको. 7. °क्षणैस्तु भूतैः मूको. 8. ददानानं मूको. 9. पीनेये मूको. 10. वणाय मूको. 11. स्वः मूको. 12. इत्यागम वि' छ; इत्याग लप. 13. °र्थ्यादित्यर्थः मूको. 14. जहिहि ल लपं.

अन्तर्णीतण्यर्थस्तु। सेधय गमय अपकालयेत्यर्थः। किम्। जनानाम् मनुष्याणाम् अस्माकम् पूर्वी.[1] पूर्वकालभवा.[2] बह्वीर्वा अराती.[3] शत्रुभूताः[4]। [5]स्त्रीलिङ्गनिर्देशवशाद् विशः[5]। किञ्च वर्षीयः वृद्धतरम् वयः अन्नम् कृणुहि कुरु देहीत्यर्थः। कर्मभियोगलक्षणैर्हेतुभूतैर्यस्माद् यतामहे तस्मादित्यर्थः। शचीभिः आत्मीयाभिः प्रज्ञाभिः धनस्य साती षणु दाने। सातावित्ति सप्तमीनिर्देशाद्वर्तमान इति शेषः। धनस्य दाने वर्तमानः त्वम् अस्मान् अविड्ढि पालय। धनम् ददत् पालय। धनं च देहि पालय चेत्यर्थः॥ ९॥

वेङ्कट० दीप्ततमम् बलम् अस्मभ्यम् धेहि निषेध च जनानाम् अस्माकम् इमा बह्वीः अरातीः[6]। वृद्धतरम् अन्नं च कुरु। प्रज्ञाभिः[7] धनलाभार्थम् अस्मान् रक्षेति॥ ९॥

इन्द्र तुभ्यमिन्मघवन्नभूम वयं दात्रे हरिवो मा वि वेनः।
नकिरापिर्ददृशे मर्त्यत्रा किमङ्ग रध्रचोदनं त्वाहुः॥ १०॥

इन्द्र। तुभ्यम्। इत्। मघऽवन्। अभूम। वयम्। दात्रे। हरिऽवः। मा। वि। वेनः।
नकिः। आपिः। ददृशे। मर्त्यऽत्रा। किम्। अङ्ग। रध्रऽचोदनम्। त्वा। आहुः॥ १०॥

स्कन्द० हे इन्द्र! तुभ्यम् इत् इत्यवधारणे एवार्थे। तवैवार्थाय हे मघवन्! अभूम जाता उत्पन्ना [8]वयम् दात्रे कामानां दात्रे। अतः कारणात् हे हरिवः! मा वि वेनः मा विगतकामो भूः। नकिः न कश्चित् आपिः बन्धुः त्वत्तोऽन्यः ददृशे दृश्यते मर्त्यत्रा मर्त्येषु। किम् अङ्ग विनोदकभयेन अङ्ग हे इन्द्र! रध्रचोदनम् रध्रस्य राधकस्य समृद्धस्य धनस्य चोदनम्[8] प्रेरयितारं[9] स्तोतॄणामृद्धिकरमित्यर्थः[10]। त्वा[11] आहुः ब्रुवन्ति जनाः। त्वम् स्तोतॄणाम् ऋद्धिकरः। यो अस्मप्रभृति त्वत्स्तुतिपरः तदृद्धिं करोषीत्यर्थः॥ १०॥

वेङ्कट० इन्द्र! तुभ्यम् एव धनवन्![12] अभूम वयम् दात्रे हरिवः!। तथा सति मा विगतकामो भूः। न कश्चिदन्यस्त्वत्तः बन्धुः मर्त्येषु दृश्यते। त्वम् च नागच्छसि कथम्। त्वाम् क्षिप्रम् [13]रध्रस्य अपेक्षिततरम्[13] चोदकम् आहुः॥ १०॥

[14]इति चतुर्थाष्टके सप्तमाध्याये सप्तदशो वर्गः[14]॥

मा जस्वने वृषभ नो ररीथा मा ते रेवतः सख्ये रिषाम।
पूर्वीष्ट इन्द्र निष्षिधो जनेषु जह्यसुष्वीन् प्र वृहापृणतः॥ ११॥

मा। जस्वने। वृषभ। नः। ररीथाः। मा। ते। रेवतः। सख्ये। रिषाम।
पूर्वीः। ते। इन्द्र। निःऽसिधः। जनेषु। जहि। असुस्वीन्। प्र। वृह। अपृणतः॥ ११॥

स्कन्द० जस्वने जसु[15] ताडने। ताडयित्रे ताडनशीलाय क्रूराय हे वृषभ! वर्षितः! नः अस्मान्

1. पूर्वं लि°. 2. पूर्वकाल पू---वि°; °बह्वीः लि°. 3. नास्ति लि°. 4. शत्रुसेनाः लि°; °नाः ताः लि°. 5-5. °रेशवशा° लि°. 6 °तो मूको. 7. °मि ल. 8-8. नास्ति मूको. 9. प्रेरिता रं मूको. 10. °करः इत्यर्थः लि° 11. मत्वा मूको. 12. धनम् मूको. 13-13. रध्रस्यापेक्षि° वि°; रध्रस्यापेक्षि° छर्व; रध्रस्यापेक्षितस्य ट. 14. नास्ति मूको.

मा रीधाः मा दाने[1]। मा दाः। दानेन[2] चात्र तद्वशवर्तिता लक्ष्यते। माऽस्मांस्तादनशीलवशवर्तिनः कार्षीरित्यर्थः। मा च ते तव रेवतः धनवतः सख्ये सप्तमीनिर्देशाद् वर्तमाना इति शेषः। रिषाम हिंसेमहि केनचित्। किञ्च पूर्वीः पूर्वकालप्रवृत्ता एव ते तव निष्विधः निषेधाः निवारणानि। वधार्थो वा सामर्थ्यात् सेधतिः। निहननानि जनेषु[3] मनुष्येष्वयजत्सु। पूर्वमप्ययजतो मनुष्यांस्त्वम् अवधीरित्यर्थः[4]। अतो ब्रवीमि—जहि विनाशय। असुष्वीन् सोमाभिषवस्याऽकर्तॄन् अपृणतः पृण प्रीणने। हविर्भिश्च स्वाम् अप्रीणयतः ॥ ११ ॥

वेङ्कट० मा हिंसिषे वृषभ! अस्मान् दाः। मा ते धनवतः सख्ये वर्तमानाः हिंसां भूम। बहूनि ते इन्द्र! निषेधनानि आयुधानि विद्यन्ते जनेषु। जहि अयजमानान्। प्र वृह अप्रयच्छतः ॥ ११ ॥

उदभ्राणीव स्तनयन्नियर्तीन्द्रो राधांस्यश्व्यानि गव्या ।
त्वमसि प्रदिवः कारुधाया मा त्वादामान आ दभन् मघोनः ॥ १२ ॥

उत् । अभ्राणिऽइव । स्तनयन् । इयर्ति । इन्द्रः । राधांसि । अश्व्यानि । गव्या ।
त्वम् । असि । प्रऽदिवः । कारुऽधायाः । मा । त्वा । अदामानः । आ । दभन् । मघोनः ॥१२॥

स्कन्द० उत् अभ्राणि इव स्तनयन्[5] यथा पर्जन्यः[6] स्तनयित्नुगर्जितलक्षणम्[7] शब्दं कुर्वन् अभ्राणि, उद्गत उत इयर्ति गच्छति। सामर्थ्याद्गमयतीत्यर्थः। ऊर्ध्वं गमयति सर्वस्य लोकस्योपरि करोति। एवम् इन्द्रः। कानि। राधांसि धनानि स्तोतॄणाम्। कामानि। परिपूर्णानि करोतीत्यर्थः। कः। इन्द्रः। कानि। राधांसि धनानि स्तोतॄणाम्। कामानि। अश्व्यानि अश्वसमूहलक्षणानि 'गव्या गव्यानि गोसमूहलक्षणानि' च। स्तोतृभ्यः प्रयच्छतोऽधिकानि ददातीत्यर्थः। ददः प्रत्यक्षकृतोऽर्थः। हे इन्द्र! त्वम् असि प्रदिवः पुराणः चिरन्तनः कारुधायाः स्तोतृभ्यो दाता धनानाम्। तदेवंरूपम् मा त्वा त्वाम् अदामानः अदातारो हविषाम् अयज्वानः आ दभन् दभ्नोतिरपि वधकर्मा। मा त्वाम् असुरा वधिषुरित्यर्थः[8] ॥ १२ ॥

वेङ्कट० उदीरयसि[9] स्तनयति स्तनयन् इव पर्जन्यः मेघान् इन्द्रः धनानि अश्वसमूहान् गोसमूहांश्च। त्वम् असि पुराणः स्तोतॄणां धर्ता। मा त्वा अदातारोऽयजमानाः धनवन्तः आ दभन्। उदपसर्पन्तु[10] ॥ १२ ॥

अध्वर्यो वीर प्र महे सुतानामिन्द्राय भर स ह्यस्य राजा ।
यः पूर्व्याभिरुत नूतनाभिर्गीर्भिर्वावृधे गृणतामृषीणाम् ॥ १२ ॥

अध्वर्यो इति । वीर । प्र । महे । सुतानाम् । इन्द्राय । भर । सः । हि । अस्य । राजा ।
यः । पूर्व्याभिः । उत । नूतनाभिः । गीःऽभिः । ववृधे । गृणताम् । ऋषीणाम् ॥ १३ ॥

---

1. आदाने मूको. 2. आदानेन मूको. 3. जनेषु मूको. 4. 'अवधनम' मूको 5. नास्ति मूको. 6. 'स्तनुलक्ष' मूको 7-7. नास्ति मूको. 8. मवधि° मूको. 9. उदीययति ख; उदिययति लस. 10. उदपस° वि° लपे.

स्कन्द० हे अध्वर्यो ! वीर ! स्वकर्मकरणशूर ! महे महत इन्द्रस्य अर्थाय सुतानाम् षष्ठीनिर्देशादेकदेशमिति शेषः । अभिषुतानां सोमानाम् एकदेशम् इन्द्रार्थमिन्द्रपानलक्षणम् प्र भर प्रापय आहवनीयदेशम् । किं कारणम् । सः हि अस्य स इन्द्रोऽस्य सोमस्य राजा ईश्वरः । यः कीदृशः । उच्यते । यः पूर्व्याभिः उत नूतनाभिः नवाभिः गीर्भिः स्तुतिलक्षणाभिः[1] वाग्भिः ववृधे वर्धते गृणताम् स्तुवताम् ऋषीणाम् स्वभूताभिः । यः पूर्वैर्ऋषिभिः साम्प्रतिकैश्च स्तूयत इत्यर्थः ॥ १३ ॥

वेङ्कट० वीरो वीरयति सोमम् । अध्वर्यो ! वीर ![2] प्र[3] भर महते सोमान् इन्द्राय । सः हि अस्य सुतस्य राजा भवति । यः प्रत्नाभिः अपि च नूतनाभिः गीर्भिः वावृधे[3] स्तुवताम् ऋषीणाम् ॥ १३ ॥

अस्य मदे पुरु वर्पांसि विद्वानिन्द्रो वृत्राण्यप्रती जघान ।
तमु प्र होषि मधुमन्तमस्मै सोमं वीराय शिप्रिणे पिबध्यै ॥ १४ ॥

अस्य । मदे । पुरु । वर्पांसि । विद्वान् । इन्द्रः । वृत्राणि । अप्रति । जघान ।
तम् । ऊँ इति । प्र । होषि । मधुऽमन्तम् । अस्मै । सोमम् । वीराय । शिप्रिणे । पिबध्यै ॥ १४ ॥

स्कन्द० 'तमु प्र होषि' इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । 'मदे इति' 'यस्य च भावेन' (पा २,३,३७) इत्येवं सप्तमी । तच्छ्रुतेश्च योग्यलक्षणक्रियाध्याहारः । यस्य अस्य सम्बन्धिनि मदे प्राप्ते । येनात्मना मत्तः[4] सन्नित्यर्थः । पुरु पुरूणि बहूनि वर्पांसि रूपनामैतत् । सामर्थ्यात्तदन्तर्निहितमत्वर्थम् । रूपवन्त्यसुरकुलानि विद्वान् । किम् । सामर्थ्याद् असुराणाम् पापतमतां[5] स्तोतॄणां वा भक्तताम् । इन्द्रः अप्रति क्रियावाचिनः शब्दस्याप्रयोगात् प्रतिशब्दः सधातुससाधनां क्रियाम् आह । अप्रतिहन्यमानानि जघान हतवान् । तम्[6] । उ इति पदपूरणः । प्र होषि अयं लोडर्थे । पूर्वस्यामृचि प्रकृतत्वस्याध्वर्योरयं प्रैषः । प्रकर्षेण जुहुधि । कीदृशम् मधुमन्तम् स्वादुयुक्तम् सोमम् अस्मै इन्द्राय । कीदृशाय । वीराय शूराय शिप्रिणे शोभनहनुमते । किमर्थम् । पिबध्यै पातुम् । कथं हुतं सोमम् इन्द्रः पिबेदित्येवमर्थमित्यर्थः[5] ॥ १४ ॥

वेङ्कट० सोमस्य मदे बहूनि वारकाणि विद्वान् इन्द्रः वृत्राणि शत्रून् अप्रतिगतोऽन्यैः जघान । तम् एव अस्मै मधुमन्तम् प्र जुहुधि सोमम् वीराय शिप्रिणे पातुम् ॥ १४ ॥

पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रं वज्रेण मन्दसानः ।
गन्ता यज्ञं परावतश्चिदच्छा वसुर्धीनामविता कारुधायाः ॥ १५ ॥

पाता । सुतम् । इन्द्रः । अस्तु । सोमम् । हन्ता । वृत्रम् । वज्रेण । मन्दसानः ।
गन्ता । यज्ञम् । पराऽवतः । चित् । अच्छ । वसुः । धीनाम् । अविता । कारुऽधायाः ॥ १५ ॥

स्कन्द० पातेत्यादि तार्च्छील्ये तृन् । नित्यम् अस्माकं पाता सुतम् अभिषुतम् सोमम् इन्द्रः अस्तु भवत्वित्याशास्महे । हन्ता चास्तु वृत्रम् असाच्छत्रम् वज्रेण मन्दसानः तृप्यन् प्रकृतेन सोमेन

---

१. स्तुतिलक्षणाभि. मूको. २. नास्ति मूको. ३. वावृधे ख. ४-४. मधिति मूको. ५. मतं. मूको. ६. पामरतमतां मूको. ७ नास्ति मूको. ८. प्रकृतस्या° मूको. ९. पिबेदेव° मूको.

स्तूयमानो वा अस्माभिः। गन्ता चास्तु यज्ञम् अस्मदीयम् परावतः चित् दूरादपि अच्छ[1] आप्तुम्। किम्। यज्ञमेव वा सोमं वा। अभेर्वाऽर्थे अच्छशब्दः। अभिगन्ताऽस्तु यज्ञमिति। कीदृशः। वसुः प्रशस्तः वसुमान् वा। धीनाम् कर्मणां प्रज्ञानां वा अविता रक्षिता कारुधायाः स्तोतृभ्यो दाता धनानाम् ॥ १५ ॥

वेङ्कट० ... ... ... ... ... ॥ १५ ॥

[2]इति चतुर्थाष्टके सप्तमाध्याये अष्टादशो वर्गः[2] ॥

इ॒दं त्यत् पात्र॑मिन्द्र॒पान॒मिन्द्र॑स्य प्रि॒यम॒मृत॑मपायि ।
मत्स॒द् यथा॑ सौमन॒साय॑ दे॒वं व्य१॒॑स्मद् द्वेषो॑ यु॒यव॒द् व्यंहः॑ ॥ १६ ॥

इ॒दम् । त्यत् । पात्र॑म् । इ॒न्द्र॒ऽपान॑म् । इन्द्र॑स्य । प्रि॒यम् । अ॒मृत॑म् । अ॒पा॒यि॒ ।
मत्स॑त् । यथा॑ । सौ॒म॒न॒साय॑ । दे॒वम् । वि । अ॒स्मत् । द्वेषः॑ । यु॒यव॑त् । वि । अंहः॑ ॥ १६ ॥

स्कन्द० यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यद् अस्माभिरुपकल्पितम् इदम् त्यत् तत् पानम् महाद्रव्यम् इन्द्रपानम् इन्द्रो येन यस्मिन् वा पिबति तदिन्द्रपानम् इन्द्रस्य प्रियम् इष्टम् अमृतम् सूक्ष्मम् अमरणहेतुकं वा अपायि पीतम्[3]। केन[4]। सामर्थ्याद् इन्द्रेण। पानार्थम् इन्द्राय दत्तमित्यर्थः। कथञ्च पुनरपायि। मत्सत् तर्पयति यथा। किमर्थम्। सौमनसाय सौमनसं चित्तपरितोषः तस्मै। कम्। देवम् इन्द्रम्। इदानीं तृतः अस्मत् अस्मत्तः द्वेषः द्वेष्टॄन् अस्माकम् वि युयवत्। विपूर्वो यौतिः पृथग्भावार्थः। अस्मत्तो पृथक् करोतु[5]। अंहः पापं च पृथक्करोतु ॥ १६ ॥

वेङ्कट० यत् इदम् पानीयम् इन्द्रस्य पानार्हम् इन्द्रस्य प्रियम् सोमात्मकम् अमृतम् इन्द्रेण पीतम् अस्तु। मादयेत् यथा सुमनस्त्वाय देवम्। इन्द्रः पृथक् करोतु[5] च अस्मत्तः द्वेषः अंहः च ॥ १६ ॥

ए॒ना म॑न्दा॒नो ज॒हि शू॑र॒ शत्रू॑ञ्जा॒मिमजा॑मिं मघवन्न॒मित्रा॑न् ।
अ॒भि॒षे॒णाँ अ॒भ्या॒३॒॑देदि॑शाना॒न् परा॑च इन्द्र॒ प्र मृ॑णा ज॒ही च॑ ॥ १७ ॥

ए॒ना । म॒न्दा॒नः । ज॒हि । शू॒र॒ । शत्रू॑न् । जा॒मिम् । अजा॑मिम् । म॒घ॒ऽव॒न् । अ॒मित्रा॑न् ।
अ॒भि॒ऽसे॒नान् । अ॒भि । आ॒ऽदेदि॑शानान् । परा॑चः । इ॒न्द्र॒ । प्र । मृ॒ण॒ । ज॒हि । च॒ ॥ १७ ॥

स्कन्द० एना अनेन प्रकृतेन पात्रेण मन्दानः तृप्यन् जहि मारय हे शूर! शत्रून् शातयितव्यान् जामिम् अजामिम् जामिः समानजातीयः। बहुवचनस्य स्थाने एकवचनम्। समानजातीयान् असमानजातीयांश्च हे मघवन्! धनवन्!। अमित्रान् अभिषेणान् अभिगतसेनान् अभि[6] आदेदिशानान् दिश अतिसर्जने। अभिसृजत[7]। किम्। सामर्थ्याच्छस्त्रं। पराचः परागामिनः पराङ्मुखान् हे इन्द्र! प्र मृण मृण हिंसायाम्। प्रकर्षेण ताडय जहि च अरातीः कीलैः हस्तप्रकारैः वा। अथवा हन्तिर्गत्यर्थः। सामर्थ्याच्चान्तर्णीतण्यर्थः। जहि च गमय च। नाशयेत्यर्थः ॥ १७ ॥

1. अच्छन्दः मूको. 2-2. नास्ति मूको. 3. पपिरम मूको. 4. तेन मूको. 5. करोति मूको 6. नास्ति मूको. 7 अभिसर्जो मूको.

वेङ्कट० सोमेन मादयन् जहि शूर! शत्रून्। तत्र च जामिम् अजामिम् च अमित्रान् मघवन्!। अभिगतसेनान् अस्मान् प्रति आयुधानि आभिमुख्येन अतिसृजतः[1] पराचः इन्द्र! प्र वृणीहि[2] सञ्चूर्णय च जहि[3] च इति ॥ १७ ॥

आसु ष्मा णो मघवन्निन्द्र पृत्स्व१स्मभ्यं महि वरिवः सुगं कः ।
अपां तोकस्य तनयस्य जेष इन्द्र सूरीन् कृणुहि स्मा नो अर्धम् ॥ १८ ॥

आसु । स्म । नः । मघऽवन् । इन्द्र । पृतऽसु । अस्मभ्यम् । महि । वरिवः । सुऽगम् । करिति कः ।
अपाम् । तोकस्य । तनयस्य । जेषे । इन्द्र । सूरीन् । कृणुहि । स्म । नः । अर्धम् ॥ १८ ॥

स्कन्द० आसु एतासु स्म इति पदपूरणः। नः अस्माकम् सम्बन्धिनीषु हे मघवन्! इन्द्र! "पृत्सु सङ्ग्रामेषु अस्मभ्यम् अस्माकमर्थाय" महि महत् वरिवः धनम् सुगम् सुखं यत् गम्यते प्राप्यते तत्[4] कः कुरु[5]। एतस्य अस्मत्सङ्ग्रामस्य निमित्तभूतं यत् महत् धनं तत् सुलभं कुर्वित्यर्थः। किञ्च अपाम् वृष्टिलक्षणानाम् तोकस्य तनयस्य[6] पुत्राणां पौत्राणां च जेषे जयाय प्राप्त्यै हे इन्द्र! सूरीन् स्तोतॄन् कृणुहि कुरु। स्म इति पदपूरणः। नः अस्मान्। तव स्तोतारो वयम् उदकपुत्रपौत्रप्राप्तियोग्या यथा भवेम, तथा कुर्वित्यर्थः। अर्धम् स्थानवचनम् अर्धशब्दं व्याचक्षते। स्थानं चास्मान्[7] कुरु। कस्य। धनानां वा आत्मनो वा। धनं नो देहि येन वयं धनानाम् स्थानतां प्रतिपद्यामहे इत्यर्थः। नः इति षष्ठी वा[8] अर्धमित्येतदपेक्षा। अस्माकम् स्थानं च कुरु उदकपुत्रपौत्रान् गृहं च नो देहीत्यर्थः ॥ १८ ॥

वेङ्कट० एषु अस्मभ्यं सङ्ग्रामेषु मघवन्![9] इन्द्र![9] महि धनम् कुरु, सुखं च कुरु। उदकानाम् पुत्रस्य तत्पुत्रस्य च जयार्थम् इन्द्र! स्तोतॄन् अस्मान् अर्धभूतान् आत्मनः कुरु ॥ १८ ॥

आ त्वा हरयो वृषणो युजाना वृषरथासो वृषरश्मयोऽत्याः ।
अस्मत्राञ्चो वृषणो वज्रवाहो वृष्णे मदाय सुयुजो वहन्तु ॥ १९ ॥

आ । त्वा । हरयः । वृषणः । युजानाः । वृषऽरथासः । वृषऽरश्मयः । अत्याः ।
अस्मत्राञ्चः । वृषणः । वज्रऽवाहः । वृष्णे । मदाय । सुऽयुजः । वहन्तु ॥ १९ ॥

स्कन्द० आ इत्युपसर्गस्य वहन्त्वित्याख्यातेन सम्बन्धः। आ वहन्तु आनयन्तु त्वां[10] हरयः अश्वाः वृषणः वर्षितारः युजानाः स्वात्मीये पार्श्वे यानस्य। रथनियोजनशीलाः। वृषरथासः वर्षिता रथो येषां सम्बन्धी ते वृषरथाः। वृषरश्मयः रश्मयोऽत्र[11] प्रग्रहाः। ते[12] वर्षितारो येषां ते वृषरश्मयः। अश्वरश्मीनाम् अभिवर्षितुः इन्द्रस्य सम्बन्धित्वात् तद्द्वारेणास्ति वर्षितृत्वम्। अत उपपन्नं[13] तेन विशेषणं। अत्याः सततगामिनः अस्मत्राञ्चः अस्मान् प्रति गन्तारः। अस्मदभिमुखाः

1. °जति मूको. 2. °णीयहि मूको. 3. चेहि मूको. 4. सुतनयस्य पुत्राणां पौत्राणां च जेषे जयाय प्राप्त्यै हे इन्द्र पृ[त्सु] सङ्ग्रामेषु अस्मभ्यम् अस्माकमर्थाय वि[°] सुगमा × × × अस्माकमर्थाय वि[°]. 5. नास्ति वि[°]; तत: वि[°]. 6. तुनः मूको 7. चन मूको. 8. वास्माकं मूको 9. नास्ति मूको 10. मा त्वा मूको. 11. रयोत्र मूको 12. के मूको. 13. उपपन्न मूको.

इत्यर्थः। वृषणः रेतस्सेचनसमर्थाः। समर्थाः तरुणा इत्यर्थः। अथवा वृषण इति षष्ठी। वर्षितुः तव स्वभूताः। वज्रवाहः वज्रोद्धारः। किमर्थम् आवहन्तु। वृष्णे मदाय वर्षितुर्मदस्यार्थाय येन मदेन मत्तो 'वर्षेत् तस्यार्थाय'। कीदृशाः। सुयुजः। शोभनयोजनशीलाः ॥ १९ ॥

वेङ्कट० आ वहन्तु त्वा हरयः वर्षितारः युज्यमानाः वृषरथासः[2] वर्षितृरश्मयः अतनशीलाः[1] अस्मदभिमुखाः वृषणः अभिमुखाः वृषण्वो वेगस्य वोढार आयुधानां पार्श्वनिहितानाम् वृष्णे सोमाय पुमांसं "सोमम् आपातुम्" सुयुजः[3] ॥ १९ ॥

आ ते॑ वृषन् वृष॑णो॒ द्रोण॑मस्थुर्घृत॒प्रुषो॒ नोर्मयो॒ मद॑न्तः ।
इन्द्र॒ प्र तुभ्यं॒ वृष॑भिः सु॒ताना॒ं वृष्णे॑ भरन्ति वृष॒भाय॒ सोम॑म् ॥ २० ॥

आ । ते॒ । वृ॒ष॒न् । वृष॑णः । द्रोण॑म् । अ॒स्थुः॒ । घृ॒त॒ऽप्रुषः॑ । न । ऊ॒र्मयः॑ । मद॑न्तः ।
इन्द्र॑ । प्र । तुभ्य॑म् । वृष॑ऽभिः । सु॒ताना॑म् । वृष्णे॑ । भ॒र॒न्ति॒ । वृ॒ष॒भाय॑ । सोम॑म् ॥ २० ॥

स्कन्द० ते तव स्वभूताः[1] हे वृषन्! वर्षित! वृषणः रेतस्सेचनसमर्थाः वर्षितारो वा अश्वाः द्रोणम् द्रुममयं काष्ठमयं रथम् आ अस्थु आङ् अस्यर्थे। अधिष्ठितवन्तः। रथे नियुक्ता इत्यर्थः। नियोगेन चाश्विन्द्राध्यक्षो लक्ष्यते। रथम् आत्मना नियुज्य तत्रस्थे भवन्तम् आनीतवन्त इत्यर्थः। कीदृशाः। घृतप्रुषः घृतम् उदकं प्रस्वेदलक्षणम्। प्रुषिः[7] सेचनार्थः। प्रुष प्लुष स्नेहनसेचनपूरणेष्विति[8]। प्रस्वेदलक्षणम् उदकं ये सिञ्चन्ति ते घृतप्रुषः। न ऊर्मयः पुरस्तादुपचारोऽयं वराश्वः सामर्थ्याद् उपमार्थीय। उदकोर्मय इव। यथा उदकोर्मयः शीकरान् मुञ्चन्ति[9] तद्वत् श्रमात् प्रस्वेदस्य मोक्तार इत्यर्थः। आनीताय च मदन्तः स्तुवन्तः ऋत्विजः हे इन्द्र! तुभ्यम् तवार्थाय वृषभिः रववीभसोमाभिषवद्वारेण वर्षितृभिः अभिषवग्रावभिः अध्वर्युभिर्वा सुतानाम् एकदेशम् प्र भरन्ति होमाय आहवनीयं [10]"प्रति प्रणयन्ति"[10]। कीदृशाय मह्यम्। उच्यते—वृष्णे वर्षित्रे वृषभाय च शीसंभोगसमर्थाय। किं पुनः प्रभरन्ति। उच्यते—सोमम् इन्द्रशीलक्षणम्। अथवैवमस्या ऋचोऽर्थयोजना। वृषन इति सोम उच्यते। द्रोण इत्यपि द्रोणकलशः। तव स्वभूताः सोमाः द्रोणकलशम् अधिष्ठितवन्तः। द्रोणकलशे प्रक्षिप्ता इत्यर्थः। घृतप्रुषः न ऊर्मयः शीकरोदकसेचना[11] इवोर्मयः। यथा शीकरान्त ऊर्मयस्तटाकेऽन्यत्र वा प्रक्षिप्यन्ते तद्वत्स्वभूता इत्यर्थः। तेषां सुतानाम् एकदेशं स्तुवन्त ऋत्विजः तुभ्यं प्रभरन्तीति। [12]"शिष्टपदयोजना तु सदृशी"[12] ॥ २० ॥

वेङ्कट० आ तिष्ठन्तु तव वर्षितः! अश्वाः द्रोणकलशम् उदकबिन्दुस्राविणः [redacted] सिन्धोः ऊर्मयः माद्यन्त.। इन्द्र! प्र भरन्ति तुभ्यम् ग्रावभिः सुतानाम् वृष्णे कामानां वर्षित्रे अभिषुतम् सोमम् नुहितम्[13] ॥ २० ॥

[14]"इति चतुर्थाष्टके सप्तमाध्याये एकोनविंशो वर्गः[14]" ॥

---

१. वर्षितरथार्थाय मूको. २. नास्ति मूको. ३. नशीला मूको. ४-४. सोमपातुम् मूको. ५. 'ज: वहन्तु मूको. ६. स्वस्वभूता: मूको. ७. प्रुषि मूको. ८. धातुपाठे दाहार्थावेतौ. ९. मुञ्चति मूको. १०-१०. प्रतिपादयन्ति मूको. ११. °चन मूको. १२-१२. 'पदयोजनाप्यदृशो वि'. १३. °तम् मूको. १४. गृहीतस्त वि' रूपं. १४-१४. नास्ति मूको.

वृषासि दिवो वृषभः पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम् ।
वृष्णे त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय ॥ २१ ॥

वृषा । असि । दिवः । वृषभः । पृथिव्याः । वृषा । सिन्धूनाम् । वृषभः । स्तियानाम् ।
वृष्णे । ते । इन्दुः । वृषभ । पीपाय । स्वादुः । रसः । मधुऽपेयः । वराय ॥ २१ ॥

स्कन्द० वृषा वर्षिता त्वम् असि दिवः षष्ठीनिर्देशात् अर्थायेति वाक्यशेषः । वृषभः वर्षिता पृथिव्याः अर्थाय । वृषा सिन्धूनाम् 'सिन्धवो नद्यः । नदीनामप्यर्थाय' । द्यावापृथिव्योर्हि नदीनां च स्थितिर्विप्रतिषिद्धा । अत एवम् उच्यते — द्युलोकादीनामर्थाय वर्षितासि । कस्य[2] पुनः वर्षिता । उच्यते — वृषभः स्तियानाम् । स्त्यै शब्दसङ्घातयोरित्यस्य[3] स्तिय आदेशो भवति । स्त्यानानाम् । आपो हि मलं[4] घ्नन्ति । स्वयं च करकादिभावेन[5] संहन्यन्ते । अथवा सिन्धुशब्दः स्यन्दतेर्गतिकर्मणः जङ्गमवचनः । द्यावापृथिव्योर्जङ्गमस्थावराणां चार्थाय वर्षितेत्यर्थः । वृष्णे ते वर्षकेन रूपेण वर्षितुस्तवार्थाय इन्दुः सोमः हे वृषभ ! वर्षितः[6] पीपाय स्फायी[7] ओप्यायी वृद्धौ । 'आप्यायते । वर्धते' इत्यर्थः । कीदृशः । स्वादुः मृष्टः रसः रसरूपः । न च मनाक् स्वादुः । किं तर्हि । मधुपेयः अभिषवे यः पीयते स मधुपेयः । अत्यन्तमृष्ट इत्यर्थः । कीदृशाय तुभ्यम् । वराय श्रेष्ठाय ॥ २१ ॥

वेङ्कट० वर्षिता भवसि द्यावापृथिव्योः सिन्धूनाम् स्यन्दमानानाम्, स्तियानाम्[8] संहतीभूतानाम् स्थावराणाम् । वृष्णे तुभ्यम् इन्दुः वर्धितः[9] प्यायते स्वादुः रसः मधुवत् पेयः वरणीयाय ॥ २१ ॥

अयं देवः सहसा जायमान इन्द्रेण युजा पणिमस्तभायत् ।
अयं स्वस्य पितुरायुधानीन्दुरमुष्णादशिवस्य मायाः ॥ २२ ॥

अयम् । देवः । सहसा । जायमानः । इन्द्रेण । युजा । पणिम् । अस्तभायत् ।
अयम् । स्वस्य । पितुः । आयुधानि । इन्दुः । अमुष्णात् । अशिवस्य । मायाः ॥ २२ ॥

स्कन्द० कतम इन्दुरिति वक्ष्यति । 'अयम् सोमः देवः द्योतमानः[10] सहसा बलेन अभिषोतृणामभिषवकाले रसरूपेण जायमानः इन्द्रेण युजा युज्यत इति युक् सहायः । सहायेन । पणिम् पणिनामानम् असुरम् अस्तभायत् प्रतिबध्नाति अपनयति निरुणद्धि । आपद्भ्योऽस्मान्[11] रक्षतीत्यर्थः । अथवा पणिर्वणिक् भवति । अदानसामान्यादाद्ध्र[12] अत्र पणिरुच्यते । ■ प्रतिबध्नाति । अस्तुभिः निरुणद्धीत्यर्थः[13] । अयम् एव स्वस्य पितुः स्वस्य पिता यजमानः, रसरूपेण जनकत्वात्, तस्य । षष्ठीनिर्देशाद् अर्थायेति वाक्यशेषः । आयुधानि उदकनामैतत् ( तु० निघ १,१२ ) । उदकानि इन्दुः सोमः अमुष्णात् मुष्णाति मेघाद् हरति । वर्षतीत्यर्थः । अशिवस्य मायाः यः कश्चिद् अस्य अशिवः असुरः शत्रुः तस्य[13] च प्रज्ञाः मुष्णाति । शत्रुघातं निष्प्रज्ञं करोतीत्यर्थः ॥ २२ ॥

---

१ १ नास्ति मूको, तु स्कन्दनिरुक्तभाष्यम् ६,१७ २ तस्य मूको ३ 'ष्टन्' शब्द' मूको शब्दसङ्घातयोः इति धातुपाठे ४ मलं मूको ५ करकां' मूको ६ प्यायी मूको ७ ७ वर्धने आप्याय्य मूको ८ स्तियानाम् मूको ९ ९ नास्ति मूको १० 'द्योतो मूको ११ अदानात्' मूको १२ भास्तुभि मूको १३ तस्य मूको

वेङ्कट० अयम् देव इन्दु[1] सहसा[2] जायमान इन्द्रेण त्वया सहायेन पणिम् वलम् असुरम्[3] अस्तभ्नात्[4] । अयम् गोधनस्य पालयितु वरस्य आयुधानि इन्दु अमुष्णात्, अशिवस्य माया च ॥ २२ ॥

अयमकृणोदुषसः सुपत्नीरयं सूर्ये अदधाज्ज्योतिरन्तः ।
अयं त्रिधातु दिवि रोचनेषु त्रितेषु विन्ददमृतं निगूळ्हम् ॥ २३ ॥

अयम् । अकृणोत् । उषसः । सुऽपत्नीः । अयम् । सूर्ये । अदधात् । ज्योतिः । अन्तरिति ।
अयम् । त्रिऽधातु । दिवि । रोचनेषु । त्रितेषु । विन्दत् । अमृतम् । निऽगूळ्हम् ॥ २३ ॥

स्कन्द० अयम् सोम अकृणोत् कृणोति करोति । किम् । उषस । कीदृशी । सुपत्नी शोभना पालयित्रीर्यजमानानाम्[5] । अयम् एव सूर्ये आदित्ये अदधात् निदधाति ज्योति अन्त मध्ये। कस्य । सामर्थ्यात्[6] सूर्यस्यैव । सूर्यमप्ययमेव दीप्तं करोतीत्यर्थः । अथवा सूर्ये इत्येतज्ज्योतिर्विशेषणम् । सम्बध्यते । सूर्ये यज्ज्योति रश्मिलक्षणं तन्निदधाति मध्ये । कस्य । सामर्थ्यात् मनुष्याणाम् । रश्मिभिरपि लोकप्रकाशम् अयमेव करोतीत्यर्थः । [7]अयम् एव सोम त्रिधातु देवमनुष्येभ्यो[8] धोत्यै त्रिभीरसैरपेतम्[8] दिवि द्युलोकेऽवस्थितेषु[9] रोचनेषु दीप्तेषु आदित्यरश्मिषु त्रितेषु[10] लोकत्रयेऽप्यप्रतिहत-गतिष्वित्यर्थः[11] । अमृतम् उदकनामैतत् (निघ १,१२) । निगूळ्हम् विन्दत् इत्यर्थः । रश्मिभिराहृत्य मण्डले स्थापितम् उदकमप्ययमेव वर्षतीत्यर्थः ॥ २३ ॥

वेङ्कट० अयम् इन्दु करोति इन्द्रेण पीत[12] उषस[13] शोभनपतिका । अयम् सूर्ये ज्योति अदधात् अन्त । अयम् दिवि नक्षत्रेषु त्रिगुणम् अदधात्[14] ज्योति । अयम् त्रिस्थानेषु निहितम् अमृतम् अविन्दत् ॥ २३ ॥

अयं द्यावापृथिवी वि ष्कभायदयं रथमयुनक्सप्तरश्मिम् ।
अयं गोषु शच्या पक्वमन्तः सोमो दाधार दशयन्त्रमुत्सम् ॥ २४ ॥

अयम् । द्यावापृथिवी इति । वि । स्कभायत् । अयम् । रथम् । अयुनक् । सप्तऽरश्मिम् ।
अयम् । गोषु । शच्या । पक्वम् । अन्तरिति । सोमः । दाधार । दशऽयन्त्रम् । उत्सम् ॥ २४ ॥

स्कन्द० अयम् एव सोम द्यावापृथिव्यौ वि स्कभायत् दधार[15] स्कभि प्रतिबन्धे । प्रतिबध्नाति । स्वस्मिन् स्वस्मिन् स्थाने धारितवान् धारयति वेत्यर्थः । अयम् एव रथम् सूर्यस्य अयुनक् युक्तवान्[16] युङ्क्ते वा । कीदृशम् । सप्तरश्मिम् रश्मय प्रग्रहा उच्यन्ते । सप्तप्रग्रहम्[17] । प्रग्रहैश्च प्रयुज्यमाना[18] अश्वा लक्ष्यन्ते । सप्ताश्वम् इत्यर्थः । अयम् एव गोषु शच्या स्वेन कर्मणा प्रज्ञया च पक्वम्

१ इन्द्र मूको. २ सहस ल ३ वलसुरम् ल कप ४ अस्तभ्नात् मूको ५ °मानाना मूको ६-६ स्ये सामिथ मूको ७-७ अथवा सूर्य इत्येतद्व° मूको ८-८ °त्रिभिरसै° ति[1], °त्रिभिरसतस्ये ति[1] ९ द्युतो लोके° मूको १० नास्ति मूको ११. °त्रयेऽप्यप्र° मूको १२ पि° ल कप १३ उपसम मूको १४ °धा मूको १५ स्तभि मूको १६ युक्त° मूको १७ सप्ताश्व प्रग्र मूको १८ अप्रयुज्यमाना मूको

पाकेनात्र भोगयोग्यता लक्ष्यते। भोगयोग्यं च पयः अन्तः मध्ये ऊधसि सोमः दाधार धारयति[1] दशयन्त्रम् दशभिश्च यन्त्रैरुपेतम् उत्सम् कूपम्। सत्रे होतत् स्वपन् सुपत्नी इत्यादि धर्मम्। यत् ॥ धर्मं च यागाख्यं सोमः करोति। अतः सोमः एवोपस सुपत्नीरित्यादि करोतीत्युपदिश्यते। कः पुनरयं दशयन्त्र उत्स इति परया खैलिक्यर्चा[2] उच्यते—

[3]चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम्।
द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम्[3] ॥

चक्षुः श्रोत्रम् मनः वाक् इति चत्वारि। प्राणापानौ द्वौ। एतेषां मध्येन प्रेरितो वायुः मुखनासिकाभ्यां निर्गच्छति स 'प्राणः'। यो नापगच्छति[4] सोऽपानः। [5]देहः सप्तमः। दिह[5] उपचये। दोषविरहात् सदोपचित आत्माऽत्र देह उच्यते। इदम् हस्तपादादिपिण्डलक्षणम् शरीरम् अष्टमम्। द्वौ प्रत्यञ्चौ 'द्वावपि तौ' अधोगच्छन्तौ। अधोमुखाविस्यर्थः। अनुलोमौ वशवर्तिनौ। पर्यायेण एतौ पुरुषेण प्रेर्येते तदा तदा स्वकार्ये प्रवर्तेते। तेन तौ वशवर्तिनौ[6]। अथवा प्रत्यञ्चाविति परस्परं प्रत्यञ्चितौ गतौ परस्परसन्निकृष्टावित्यर्थः। अनुलोमावधोमुखौ। विसर्गौ आनन्देन्द्रिय पायुश्च[7]। यः पूर्वस्याम् ऋच्युक्तः एतम् तम् मन्ये आमाख्यम् दशयन्त्रम् चक्षुरादिभिर्यन्त्रैरुपेतम् उत्सम् कूपम् दुरुत्तरत्वसामान्येनास्य कूपशब्दव्यपदेशः। एवमस्या ऋचः पूर्वयैकवाक्यभावात्[8] सौम्यत्वं सोमद्वारेण चैन्द्रत्वमित्युक्तम्। बृहद्देवताकारस्तु शरीरम् अस्या ऋचो देवतेति मन्यते। एवं ह्याह—'शारीरं चक्षुरित्यस्यां स्तुतम्' (बृ. दे. ५,१०८) इति। तत्र नाम्यतिरवैतिकर्मा व्याख्येयः। एतं तं मन्ये स्तौमीत्यर्थः ॥ २१ ॥

वेङ्कट० अयम् द्यावापृथिवी विष्कम्भे[9] अकरोत् अन्तरिक्षेण। अयम् रथम् युयोज आदित्यस्य[10] सप्तदशरश्मिं संवत्सरात्मकम्। अयम् पशुषु अन्तः आमेषु पक्वम् पयः कर्मणा सोमः अकरोत्। अयम् धारयति दशयन्त्रम् [11]'उत्सम् इति[11] शरीरम् आह। तथाऽन्यत्र तैत्तिरी भवत्यृक्—

चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम्।
द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम् ॥ २१ ॥ इति।

[12]इति चतुर्थाष्टके सप्तमाध्याये विंशो वर्गः[12] ॥

## [ ४५ ]

[1]शासुर्बार्हस्पत्य ऋषिः। इन्द्रो देवता, अन्त्यानां तिसृणां बृबुस्तक्षा। गायत्री छन्दः, एकोनत्रिंशी अतिनिचृत्, एकत्रिंशी पादनिचृत्, त्रयस्त्रिंशी अनुष्टुप्[1]।

य आनयत् परावतः सुनीती तुर्वशं यदुम्। इन्द्रः स नो युवा सखा ॥ १ ॥
यः। आ। अनयत्। पराऽवतः। सुऽनीती। तुर्वशम्। यदुम्। इन्द्रः। सः। नः। युवा। सखा ॥१॥

---

१ 'रयति लि.ति. २ खिलिष्वस्तु' मूको ३-३ नास्ति मूको ४-४ मागच्छ नाप' मूको ५-५ देहस्सप्तमादिह मूको ६-६ नास्ति मूको ७ 'श्चौ मूको ८ नास्ति मूको ९ पूर्वस्याम् एवेव' वि' १० 'म्भे भ, विष्कम्भे एवं ११. 'स्य स्त १२-१२ 'मीति मूको

स्कन्द० यः आ अनयत् आत्मसकाशं नीतवान् परावतः[1] दूरात् सुनीती सुनीत्या यथा "नीयमानो न[2] केनचिदभिभूयेत" तथेत्यर्थः। कम्। उच्यते — तुर्वशम् तुर्वशं नाम राजानम्। न च केवलम्। किं तर्हि। यदुम् च। किमर्थं पुनरानयत्। पालनार्थम्। कुत एतत्। 'त्वमाविथ नर्यं तुर्वशं यदुम्' ( ऋ १,५४,६ ), 'उत त्या तुर्वशायदू' ( ऋ ४,३०,१७ ) इत्यादिषु पालनसम्बन्धदर्शनात्। दूराद् आत्मसकाशम् आनीय पालितवानित्यर्थः। इन्द्रः सः युवा सर्वदा तरुणः नः सखा वयस्यः। स्तोतृस्तुत्यपरस्परलक्षणं च ऋषिदेवतयोः[3] सख्यम् ॥ १ ॥

वेङ्कट० यः आनीतवान् दूरात् सुनयनेन तुर्वशम् यदुम् च। सः युवा इन्द्रः अस्माकम् सखा ॥ १ ॥

अ॒वि॒प्रे चि॒द् वयो॒ दध॑दना॒शुना॑ चि॒दर्व॑ता। इन्द्रो॒ जेता॑ हि॒तं धन॑म् ॥ २ ॥

अ॒वि॒प्रे। चि॒त्। वयः॑। दध॑त्। अ॒ना॒शुना॑। चि॒त्। अर्व॑ता। इन्द्रः॑। जेता॑। हि॒तम्। धन॑म् ॥ २ ॥

स्कन्द० अविप्रे[4] विप्राः मेधाविनः ऋत्विजः ते यस्य 'स्तोतुर्न सन्ति' सोऽविप्रः। सप्तमी चात्र चतुर्थ्यर्थे। चिच्छब्दोऽप्यर्थे। निर्धनत्वाद् ऋत्विजोऽपि अयष्टृ। केवलस्तोत्रे इत्यर्थः। वयः अन्नम् दधत् वधार्त्विदानार्थः। हेतौ चात्र शतृप्रत्ययः 'लक्षणहेत्वोः क्रियायाः' ( पा ३,२,१२६ ) इति। प्रयोजनस्य हेतुत्वेन विवक्षा। केवलस्तोत्रेऽपि यद् अन्नदानं तेन हेतुना तद्वर्धनमित्यर्थः। अनाशुना चित् अनाशुः अशीघ्रः। तेनापि "अशीघ्रेणापि किं" पुनः शीघ्रेणेत्यर्थः। अर्वता अश्वेन इन्द्रः जेता जयनशीलः जयनधर्मा साधु जेता 'हितम् उपकारकं' स्तोतुः धनम् शत्रूणां स्वभूतम् ॥ २ ॥

वेङ्कट० विप्रोऽयोऽनर्थेति। निगुर्दे अन्नम् दधानः अनाशुना अश्वरहितेन अपि अश्वेन अन्ने प्रयच्छन् इन्द्रः जेता[5] भवति हितम् धनम्। अपि वा प्रास्तामन्तरहितो(?) विप्रः ॥ २ ॥

म॒हीर॑स्य॒ प्रणी॑तयः पू॒र्वीरु॒त प्रश॑स्तयः। नास्य॑ क्षीयन्त ऊ॒तयः॑ ॥ ३ ॥

म॒हीः। अ॒स्य॒। प्रऽनी॑तयः। पू॒र्वीः। उ॒त। प्रऽश॑स्तयः। न। अ॒स्य॒। क्षी॒य॒न्ते॒। ऊ॒तयः॑ ॥ ३ ॥

स्कन्द० महीः महत्यः अस्य इन्द्रस्य प्रणीतयः प्रणयनानि स्तोत्राणामित्यर्थः। वर्तमानानि। पूर्वीः पूर्वकालप्रसूताः उत प्रशस्तयः उतशब्दोऽप्यर्थे। प्रशस्तयोऽपि। स्तोतृप्रशस्तिकरणान्यपीत्यर्थः। न च पूर्वप्रवृत्त एवायम् महान्ति स्तोतृणाम् इदानीं प्रवर्तयितुं प्रशस्यांश्च स्तोतॄन् कर्तुमित्यर्थः। अस्य क्षीयन्ते ऊतयः पालनानि। अद्यापि स्तोतॄन् पालयति ॥ ३ ॥

वेङ्कट० मंहनीयानि अस्य प्रणयनानि बहूनि, अपि च अस्य प्रशंसनीयानि। न च अस्य क्षीयन्ते रक्षणानि ॥ ३ ॥

सखा॑यो॒ ब्रह्म॑वाहसेऽर्च॑त॒ प्र च॑ गायत। स हि नः॒ प्रम॑तिर्म॒ही ॥ ४ ॥

सखा॑यः। ब्रह्म॑ऽवाहसे। अर्च॑त। प्र। च॒। गा॒य॒त॒। सः। हि। नः॒। प्रऽम॑तिः। म॒ही ॥ ४ ॥

1. आत्मसकाशं परा° मूको. 2. °नीयमानेन मूको. 3. °मूको मूको. 4. °वतायै ति°; °वतये ति°. 5, नास्ति मूको. 6-6. °र्वयन्ति मूको. 7-7. °नापि ति ति°; °नाथीनि मूको. 8-8. पाहि कतुपका° मूको. 9. जना मूको.

स्कन्द० हे सखायः! ऋत्विजः! ब्रह्मवाहसे ब्रह्म स्तुतिलक्षणम् उह्यते प्राप्यते यत्र स्तोतृभिः स[1] ब्रह्मवाहाः[2] तस्यार्थाय अर्चत अर्चतिकर्मत्वाद् अर्चतिः स्तुत्यर्थः। तेनाप्युच्चारणं लक्ष्यते। उच्चारयत स्तुतिशस्त्रलक्षणाः। प्र च गायत प्रकर्षेण च गायत सामानि। कस्मात्। उच्यते—सः हि हिशब्दो यस्मादर्थे। यस्मात् सः नः अस्माकं सर्वेषाम् प्रमतिः प्रकृष्टमतिः अनुग्रहपरचित्त[3] इत्यर्थः। मही मह पूजायामित्यस्य महः पूजा। तद्वांश्च। पूज्यश्चेत्यर्थः ॥ ४ ॥

वेङ्कट० हे सखायः! स्तोत्रवाहाय शंसत, प्र च गायत। सः हि अस्माकम् इन्द्रः प्रमतिः भूमिः। या प्रकृष्टमतिर्भवति सेति ॥ ४ ॥

त्वमेकस्य वृत्रहन्नविता द्वयोरसि। उतेदृशे यथा वयम् ॥ ५ ॥

त्वम्। एकस्य। वृत्रऽहन्। अविता। द्वयोः। असि। उत। ईदृशे। यथा। वयम् ॥ ५ ॥

स्कन्द० त्वम् एकस्य हे वृत्रहन्! वृत्रस्य हन्तः! अविता रक्षिता द्वयोः च असि भवसि। एकस्य द्वयोर्बहूनां वा सर्वेषां त्वमेव रक्षितेत्यर्थः। उत ईदृशे षष्ठ्यर्थे चतुर्थ्येषा। ईदृशस्यापि। कीदृशस्य। यथा वयम् येन प्रकारेण वयम्, तेन स्थितस्येति वाक्यशेषः। यादृशाश्च वयं केवलस्तुतिकारिणः तादृशस्यापीत्यर्थः ॥ ५ ॥

वेङ्कट० वृत्रहन्! त्वम् एकस्य रक्षिता भवसि अपि च द्वयोः। अपि च ईदृशे रक्षिता भवसि पुरुषाय यथा वयम् बहवो भवामः तादृशाय बहुजनायापीति[4] ॥ ५ ॥

[5]इति चतुर्थाष्टके सप्तमाध्याये एकविंशो वर्गः[5] ॥

नयसीद्वति द्विषः कृणोष्युक्थशंसिनः। नृभिः सुवीर उच्यसे ॥ ६ ॥

नयसि। इत्। ऊँ इति। अति। द्विषः। कृणोषि। उक्थऽशंसिनः। नृऽभिः। सुऽवीरः। उच्यसे ॥

स्कन्द० नयसि इद् इति पदपूरणः। अति इत्युपसर्गस्य नयसीत्यनेन सम्बन्धः। अति नयसि द्विषः द्वेष्टॄन् अतिनयनं नाम 'विनाशः उपशमनं' वा। कृणोषि करोषि उक्थशंसिनः उक्थानि स्तोत्राणि तैः शंसितॄन् सर्वस्तोतॄन्। तथा सर्वस्तोतॄणाम् उपकरोषि यथा उक्थैः स्तुवन्तीत्यर्थः। नृभिः सर्वमनुष्यैः त्वम् सुवीरः सुष्ठु विक्रान्तः उच्यसे। सर्वमनुष्येषु च प्रख्यातविक्रमप्रकर्षोऽसीत्यर्थः[6] ॥ ६ ॥

वेङ्कट० अति नयसि शत्रून्[7]। उक्थशंसिनः च अन्नान् करोषि। तथा[8] नृभिः त्वम् सुवीरः कथ्यसे ॥ ६ ॥

ब्रह्माणं ब्रह्मवाहसं गीर्भिः सखायमृग्मियम्। गां न दोहसे हुवे ॥ ७ ॥

ब्रह्माणम्। ब्रह्मऽवाहसम्। गीःऽभिः। सखायम्। ऋग्मियम्। गाम्। न। दोहसे। हुवे ॥ ७ ॥

स्कन्द० ब्रह्माणम् परिवृढम् ब्रह्मवाहसम् ब्रह्माणि स्तुतिलक्षणानि उह्यन्ते प्राप्यन्ते यत्र स्तोतृभिः

१. नास्ति मूको. २. ब्रह्मवाहः मूको. ३. °परचित्त मूको. ४. बहुपरिज° वि°. ५-५. नास्ति मूको. ६-६. 'नाशोत्य° मूको. ७. °त्रवो° मूको. ८. शत्रू मूको. ९. तथा तथा मूको.

स महावाह्यः तं महावाहसम्। गीर्भिः वाग्भिः स्तुतिलक्षणाभिः सखायम् यथास्यम् ऋग्मियम् ऋचः स्तुतयः तद्वन्तम् अर्चनीयं वा। स्तुत्यमित्यर्थः। गाम् न दोहसे हुवे[1] यथा कश्चित् गाम् दोहनाय ह्वयेद् तद्वद् ह्वयामि[1] ॥ ७ ॥

वेङ्कट० बृहन्तम् स्तोत्रवहनम् स्तुतिभिः सखायम्[2] स्तुत्यम् गाम् इवं दोहाय ह्वयामि ॥ ७ ॥

यस्य विश्वानि हस्तयोरूचुर्वसूनि नि द्विता। वीरस्य पृतनाषहः ॥ ८ ॥

यस्य। विश्वानि। हस्तयोः। ऊचुः। वसूनि। नि। द्विता। वीरस्य। पृतनाऽसहः ॥ ८ ॥

स्कन्द० यस्य विश्वानि सर्वाणि हस्तयोः ऊचुः वसूनि नि उच समवाये। [redacted] ऊचुः नियतं समवयन्ति धनानि यस्य हस्तगतानि सर्वधनानि। यः सर्वधनानां स्वामीत्यर्थः। अथवा ऊचुरिति वचेरेव[3] रूपम्। यस्य सर्वाणि धनानि हस्तयोरिति नि ऊचुः नियतं ब्रुवन्ति मनुष्याः। सर्वधनानां स्वामीत्येवं प्रख्यात इत्यर्थः। द्विता द्विशब्दोऽयम् अनेकत्वप्रतिपादनपरः। ता-प्रत्ययश्च धा-प्रत्ययस्य वा आदेशः प्रत्ययान्तरं वा तदर्थम्। द्विधा अनेकधा। नानाप्रकारमित्यर्थः। कीदृशस्य। वीरस्य विक्रान्तस्य पृतनासहः पृतनाः संग्रामाः तेषु शत्रूणाम् अभिभवितुः ॥ ८ ॥

वेङ्कट० यस्य द्विविधानि दिव्यानि पार्थिवानि विश्वानि वसूनि हस्तयोः वसन्तीति नि ऊचुः कवयः वीरस्य सेनायाः सोढुः। उत्तरत्रान्वयः ॥ ८ ॥

वि दृळ्हानि चिदद्रिवो जनानां शचीपते। वृह माया अनानत ॥ ९ ॥

वि। दृळ्हानि। चित्। अद्रिऽवः। जनानाम्। शचीऽपते। वृह। मायाः। अनानत ॥ ९ ॥

स्कन्द० वि दृळ्हानि दृढानि चित् दृढान्यपि दुरुन्मूलान्यपि[4] हे अद्रिवः! अद्रिः वज्रः तद्वन्![5] जनानाम् मनुष्याणां शत्रुभूतानां स्वभूतानि पुराणि हे शचीपते! कर्मणां स्वामिन्! शच्याख्याया वा स्वभार्यायाः भर्तः! वृह वृहू उद्यमने। विविधम् उद्यच्छ। उन्मूलयेत्यर्थः। न च केवलानि पुराणि। किं तर्हि। मायाः प्रज्ञाश्चैषां हे अनानतपूर्वक! ॥ ९ ॥

वेङ्कट० वि वृह दृढानि पुराणि शत्रूणाम् वज्रवन्! प्रज्ञापते!, मायाः [redacted] अप्रह्वीभूत![6] ॥ ९ ॥

तमु त्वा सत्य सोमपा इन्द्र वाजानां पते। अहूमहि श्रवस्यवः ॥ १० ॥

तम्। ऊँ इति। त्वा। सत्य। सोमऽपाः। इन्द्र। वाजानाम्। पते। अहूमहि। श्रवस्यवः ॥ १० ॥

स्कन्द० स य दक्षगुणोऽसि तम्। उ इति पदपूरणः। त्वा त्वां हे सत्य! अविसंवादिन्! सोमपाः! सोमानां पातः![7] इन्द्र! वाजानाम् पते! स्वामिन्! अहूमहि आहूतवन्तः आह्वयामो वा वयम् श्रवस्यवः श्रवः अन्नं धनं कीर्तिर्वा, तत्कामाः ॥ १० ॥

---

1. नास्ति मूको. 2. सखाय [redacted] सर्वं; °खायः वि°. 3. वचेरेवं मूको. 4. °ना···पि वि°.
5. तद्वान् मूको. 6. अद्रिवः वि° सर्वं; °सीधुतः ह; अप्रह्वीभूतः क प्रस्तावः. 7. पाता मूको.

वेङ्कट० तम् एव त्वा सत्य[१२] सोमस्य पात[१] इन्द्र! अस्माकम् पते! ह्वयामः अस्मेच्छव ॥ १० ॥

[१]इति चतुर्थाष्टके सप्तमाध्याये द्वाविंशो वर्गः[१] ॥

तमु॑ त्वा॒ यः पु॒रासि॑थ॒ यो वा॑ नू॒नं हि॒ते धने॑ । ह॒व्यः स श्रु॑धी॒ हव॑म् ॥ ११ ॥

तम् । ऊँ इति॑ । त्वा॒ । यः । पु॒रा । आसि॑थ । यः । वा॒ । नू॒नम् । हि॒ते । धने॑ ।
ह॒व्यः । सः । श्रु॒धि॒ । हव॑म् ॥ ११ ॥

स्कन्द० तम् उ त्वा इति कर्मश्रुते अह्वमहीत्याख्यातम् अनुपक्रष्टव्यम् । त त्वाम् आह्वयाम । यः कीदृशः ? उच्यते—यः पुरा पूर्वस्मिन् काले आसिथ आसीः । यः वा नूनम् वाशब्दो नूनशब्दोऽपि पुरेत्येतस्य प्रतियोगित्वेनोपादानाद् इदानीमित्यस्यार्थे । यश्चेदानीम् हिते धने 'निमित्ते चैषा' सप्तमी । प्रयोजनस्य च निमित्तत्वेन विवक्षा । हिते धने । हितधनप्राप्त्यर्थमित्यर्थः । हव्यः आह्वातव्य हित धन प्राप्तु सर्वदा सर्वमनुष्यैर्यं आह्वातव्य आहूयमानश्च यः सः[२] त्वम् श्रुधि शृणु हवम् आह्वानम् अस्मदीयम् ॥ ११ ॥

वेङ्कट० तम् एव त्वाम् ह्वयाम । यः त्वम् पुरा अभूः । यः वा सम्प्रति भवसि हितम् धनम् प्राप्तु[३] युध्यद्भिश्च[४] ह्वातव्य, स शृणु ह्वानम् ॥ ११ ॥

धी॒भिरर्व॑द्भि॒रर्व॑तो॒ वाजाँ॑ इन्द्र श्र॒वाय्या॑न् । त्वया॑ जेष्म हि॒तं धन॑म् ॥ १२ ॥

धी॒भिः । अर्व॑त्ऽभिः । अर्व॑तः । वाजा॑न् । इ॒न्द्र॒ । श्र॒वाय्या॑न् । त्वया॑ । जे॒ष्म॒ । हि॒तम् । धन॑म् ॥ १२ ॥

स्कन्द० धीभिः अर्वद्भिः धीभिः प्रज्ञाभिः, अर्थैश्चात्र बलं लक्ष्यते । प्रज्ञेन बलेन चेत्यर्थः । अर्वतः अश्वान् वाजान् अन्नानि च हे इन्द्र! श्रवाय्यान् श्रवणीयान् । प्रशस्तानित्यर्थः । त्वया हेतावपीयं तृतीया । त्वया हेतुना । त्वत्प्रसादेनेत्यर्थः[५] । जेष्म जयेम हितम् धनम् ॥ १२ ॥

वेङ्कट० कर्मभिः अश्वैश्च अश्वान् अन्नानि इन्द्र! श्रवणीयानि त्वया जेष्म[६] हितम् धनम् ॥ १२ ॥

अभू॑रु वीर गिर्वणो म॒हाँ इ॑न्द्र॒ धने॑ हि॒ते । भरे॑ वितन्त॒साय्यः॑ ॥ १३ ॥

अभूः॑ । ऊँ इति॑ । वी॒र॒ । गि॒र्व॒णः॒ । म॒हान् । इ॒न्द्र॒ । धने॑ । हि॒ते । भरे॑ । वि॒त॒न्त॒साय्यः॑ ॥ १३ ॥

स्कन्द० अभूः भवसि त्वम् । उ इति पदपूरणः । हे वीर! विक्रान्त[७] गिर्वणः! स्तुतिभिः सम्भजनीय[८] स्तुतीनां वा सम्भक्त[९] । कीदृशो भवसि । उच्यते—महान् हे इन्द्र! । किमर्थम् । धने हिते हितधने । निमित्तभूतहितधनप्राप्त्यर्थमित्यर्थः । महान् भवसि, किमर्थम् अह महान् भवसि । उच्यते—भरे सङ्ग्रामे । को महान् भवसि । उच्यते—वितन्तसाय्यः तनु विस्तारे षो अन्तकर्मणीत्यनयो रूपमेतत् । वितन्त[१०] विस्तीर्णम् । वितन्तम् इन्द्रस्य[११] शरीरं वीर्यं वज्रो वा, येन शत्रूणामन्तकरः स वितन्तसाय्यः । अथवा[१२]'वितन्' इत्येतावत्[१२] तनोतेः रूपम् । शिष्टं स्यतेः[१३] रूपम्

१ अस्य वि°, स्य इ स्य २.२ नास्ति मूको. ३ अनिमित्तैषा मूको. ४ नास्ति मूको ५ अप्रद्भि° मूको, अप्राप्ति प्र रु प्रस्ताव ६ त्वप्रसा मूको ७ जप्य मूको ८. जनम् इ छपं, धनम् वि° ९ सेभक्त: मूको १० वितन्वतं मूको ११ वितन्ततमि° मूको १२-१२ वितमित्ये° मूको १३ स्यते मूको

उपक्षयार्थस्य[1]। विस्तीर्णेन स्थूलशरीरेण वीर्येण वज्रेण वा शत्रूणाम् उपक्षपयितेत्यर्थः[2]। अथवा तसु[3] अभिकाङ्क्षायामित्येतस्य कर्तरि तन्[4]। तसाय्यशब्दोऽपि तस्यतेरेव [5]भावसाधन उपक्षपण-वचनः[5]। अभिकाङ्क्षताम् उपक्षपणं तन्तसाय्यः। स विगतो यस्य स वितन्तसाय्यः। इच्छतामपि शत्रूणाम् अनुपक्षपणीयः। अशक्यः शत्रुभिः उपक्षपयितुमित्यर्थः ॥ १३ ॥

वेङ्कट० शम्भुः वीर। गीर्भिर्वननीय! महान् त्वम् इन्द्र! धने हिते तदर्थम् सङ्ग्रामे विभाव्यः ॥ १३ ॥

या तं ऊतिरमित्रहन् मक्षूजवस्तमासति। तया नो हिनुही रथम् ॥ १४ ॥

या। ते। ऊतिः। अमित्रऽहन्। मक्षुजवःऽतमा। असति। तया। नः। हिनुहि। रथम् ॥१४॥

स्कन्द० या ते तव ऊतिः गतिः हे अमित्रहन्! अमित्राणां हन्तः! मक्षुजवस्तमा[6] 'मक्षु'[7] (निघ २,१५) इति क्षिप्रनाम। जवो वेगः। अतिशयेन क्षिप्रवेगा मक्षुजवस्तमा असति अस्ति विद्यते। तया नः अस्मान् प्रति हिनुहि हि गतौ। हिनु गमय रथम्। तृतीयार्थे द्वितीयैषा। रथेनेत्यर्थः। अथवा रथमिति द्वितीया स्वार्थे एव। अस्मान् प्रति गमय रथमिति। अन्यथा शीघ्रम् अस्मान् प्रति रथेनागच्छेत्यर्थः ॥ १४ ॥

वेङ्कट० या ते रक्षा अमित्रहन्! अतिशयेन दीर्घवेगा भवति, तया सह अस्माकम् रथम् प्रेरय[8] ॥ १४ ॥

स रथेन रथीतमोऽस्माकेनाभियुग्वना। जेषि जिष्णो हितं धनम् ॥ १५ ॥

सः। रथेन। रथिऽतमः। अस्माकेन। अभिऽयुग्वना। जेषि। जिष्णो इति। हितम्। धनम् ॥१५॥

स्कन्द० य उक्तगुणोऽसि सः त्वं स्वेन रथेन रथीतमः अतिशयेन रथी अस्माकेन अस्मदीयेन अभियुग्वना अभियोगेन अस्माभिरभियुक्तः सन्नित्यर्थः। अथवा अस्माकेनाभियुग्वनेति[1] रथस्यैवैते विशेषणे। अस्माकम् सम्बन्धिना अस्मदनुग्राहिणेत्यर्थः। अभियुग्वना अभियोगकारिणा जेषि जयसि हे जिष्णो! जयशील! हितम् धनम्। अस्य हितम्। सामर्थ्यात् स्तोतॄणाम् यल्लभ्यम् तद्दित्यर्थः ॥ १५ ॥

वेङ्कट० सः त्वम् रथीतमः[10] अस्मदीयेन रथेन अभियोक्त्रा जय जयशील! शत्रुषु निहितं प्रियं वा धनम् ॥ १५ ॥

[11]इति चतुर्थाष्टके सप्तमाध्याये त्रयोविंशो वर्गः[11] ॥

य एक इत् तमु ष्टुहि कृष्टीनां विचर्षणिः। पतिर्जज्ञे वृषक्रतुः ॥ १६ ॥

यः। एकः। इत्। तम्। ऊँ इति। स्तुहि। कृष्टीनाम्। विऽचर्षणिः। पतिः। जज्ञे। वृषऽक्रतुः ॥ १६ ॥

स्कन्द० तम् उ स्तुहि इति[12] उकारः[11] पदपूरणः, एवार्थे वा[13]। स्तुहीति व्यवस्थात्मन एवान्तरात्मनः प्रैषः। तम् एव इन्द्रं[14] स्तुहीत्यर्थः। हे अन्तरात्मन्!। यः कीदृशः। उच्यते यः एकः इत् इन्द्रः

---

१. क्षयार्थस मूको. २. °पक्षपिते° मूको. ३. तसुर मूको. ४. तन्तन् मूको. ५-५. °धनधूपक्ष° मूको. ६. मक्षु° मूको. ७. मङ्क्षु मूको. ८. °य: ल लपं. ९. °मित्रने मूको. १०. रथितमः वि; रथितमौ ल लपं. ११-११. नास्ति मूको. १२. °स्तौति मूको. १३. हि: मूको. १४. या मूको. १५. मंगेवेन्द्रं मूको.

एवार्थे। य एक एव कृष्टीनाम् मनुष्याणाम् विचर्षणिः विविधं द्रष्टा विचक्षणशीलो वा पतिः स्वामी[1] जज्ञे पूर्वमेव जातः। उत्पत्तिप्रभृति यो मनुष्याणां स्वामीत्यर्थः। वृषक्रतुः वर्षकर्मा वर्षप्रज्ञो वा ॥ १६ ॥

वेङ्कट० यः एकः एव भवति, तम् एव स्तुहि। मनुष्याणाम् विद्रष्टा पतिः च जायते वृषकर्मा। यः स्वयमेव द्रष्टा पतिश्च, तमेव स्तुहीति ॥ १६ ॥

यो गृ॒ण॒तामिदा॑सि॒थापि॑रू॒ती शि॒वः सखा॑ । स त्वं न॑ इन्द्र मृळय ॥१७॥

यः । गृ॒ण॒ताम् । इत् । आ॒सि॒थ॒ । आ॒पिः । ऊ॒ती । शि॒वः । सखा॑ । सः । त्वम् । नः॒ । इ॒न्द्र॒ । मृ॒ळ॒य॒ ॥

स्कन्द० यः गृणताम् स्तुवताम्। इत इति पदपूरणः। आसिथ असि भवसि। आपिः ज्ञातिः। ज्ञातिकार्यकरत्वात् ज्ञातिव्यपदेशः। ऊती[2] पालयिता शिवः सुखश्च। सुखकर इत्यर्थः। सखा समस्यश्च। सः त्वम् नः अस्मान् हे इन्द्र! मृळय सुखय ॥ १७ ॥

वेङ्कट० यः स्तुवताम् एव असि आपिः[3] रक्षणैः एतैः कल्याणः सखा। सः त्वम् अस्मान् इन्द्र! सुखय ॥१७॥

धि॒ष्व वज्रं॒ गभ॑स्त्यो रक्षो॒हत्या॑य वज्रिवः । सा॒स॒ही॒ष्ठा अ॒भि स्पृधः॑ ॥१८॥

धि॒ष्व । वज्र॑म् । गभ॑स्त्योः । र॒क्षः॒ऽहत्या॑य । व॒ज्रि॒ऽवः॒ । स॒स॒ही॒ष्ठाः । अ॒भि । स्पृधः॑ ॥१८॥

स्कन्द० धिष्व धत्स्व धारय वज्रम् गभस्त्योः बाहुनामैतत्। इह तु बाहुसम्बन्धाद् हस्तयोर्वर्तते। अगृहीतस्य च हस्तयोरुद्धारणासम्भवाद् धारणेनात्र ग्रहणं लक्ष्यते। हस्ताभ्यां वज्रं गृहाणेत्यर्थः। किमर्थम्? रक्षोहत्याय रक्षसां हननाय। हे वज्रिवः! वज्रो यस्मिन् अस्ति स वज्री आयुधसन्नद्धः तद्वन्! गृहीत्वा च सासहीष्ठाः अभि अतिशयेन अभिभव। स्पृधः 'स्पृधः' ( निघ २, १७ ) इति सङ्ग्रामनाम। तं ये कुर्वन्ति ते स्पृधः। 'तत्करोति' ( पावा ३,१,२६ ) इति णिच्। ण्यन्तात् क्विप्। तान् स्पृधः। सङ्ग्रामकारिणो रक्षस इत्यर्थः ॥ १८ ॥

वेङ्कट० धारय वज्रम् बाह्वोः वज्रिन्! । मत्स्वर्थीया वृत्तिरन्यत्रापि दृष्टा। रक्षसां हननाय शत्रून् अभिभव स्पर्धितॄन् ॥ १८ ॥

प्र॒त्नं र॑यी॒णां यु॒जं सखा॑यं कीरि॒चोद॑नम् । ब्रह्म॑वाहस्तमं हुवे ॥ १९ ॥

प्र॒त्नम् । र॒यी॒णाम् । यु॒जम् । सखा॑यम् । की॒रि॒ऽचोद॑नम् । ब्रह्म॑वाहःऽतमम् । हु॒वे॒ ॥१९॥

स्कन्द० प्रत्नम् पुराणम् रयीणाम् धनानाम् युजम् योक्तारम्। चिरन्तनं स्तोतृभ्यो धनानां दातारमित्यर्थः। सखायम् समख्यम् स्तोतॄणाम् कीरिचोदनम् स्तोतॄणां चोदयितारम्। क्व। सामर्थ्यात् स्तुतिकरणे। स्तोतॄणां कामानां साधयितारमित्यर्थः। यो हि कामान् साधयति स स्तोतॄन् स्तुतिकरणे

1. स्वामिः वि॰. 2. ऊतिः वि॰. 3. आसित मूको.

प्रेरयति, नान्यः। महाव्राहस्तमम् महा स्तुतिलक्षणं यत्र वह्यते प्राप्यते स महावाहाः। अतिशयेन महावाहसं महावाहस्तमम्। हुवे आह्वयामि ॥ १९ ॥

वेङ्कट० प्रभुम् धनानाम् योक्तारम्[1] सखायम् स्तोतॄणां दातारम् अतिशयेन स्तोत्रैर्वह्यमानम् ह्वयामि ॥१९॥

स हि विश्वा॑नि॒ पार्थि॑वाँ॒ एको॒ वसू॑नि॒ पत्य॑ते । गिर्व॑णस्तमो॒ अध्रि॑गुः ॥२०॥

सः । हि । विश्वा॑नि । पार्थि॑वा । एकः॑ । वसू॑नि । पत्य॑ते । गिर्व॑णःऽतमः । अध्रि॑ऽगुः ॥२०॥

स्कन्द० कस्मात्। उच्यते। हि-शब्दो यस्मादर्थे। यस्मात् सः विश्वानि पार्थिवा वसूनि—इत्येतेन परस्तादनुपूर्वेन ते "समानाधिकरणे। षष्ठ्यर्थे" चात्र सर्वत्र द्वितीया। सर्वेषां पार्थिवानां धनानाम्। एकः पत्यते 'पत्यते' (निघ २ २१) इत्यैश्वर्यकर्मा। एक एव ईष्टे। कीदृशः। उच्यते—गिर्वणस्तमः अतिशयेन स्तुतिभिः सम्भजनीयः स्तुतीनां वा सम्भक्ता अध्रिगुः अधृतगमनः। सर्वत्राऽप्रतिहतगतिरित्यर्थः ॥ २० ॥

वेङ्कट० सः हि विश्वानि पार्थिवानि धनानि एकः एव पतति गच्छति[2] अतिशयेन गीर्भिर्वननीयः अधृतगमनः[3] ॥ २० ॥

[4]इति चतुर्थाष्टके सप्तमाध्याये चतुर्विंशो वर्गः[4] ॥

स नो॑ नि॒युद्भि॒रा पृ॑ण॒ कामं॒ वाजे॑भिर॒श्विभिः॑ । गोम॑द्भि॒र्गोप॑ते धृ॒षत् ॥२१॥

सः । नः॒ । नि॒युत्ऽभिः॑ । आ । पृ॒ण॒ । काम॑म् । वाजे॑भिः । अ॒श्विऽभिः॑ । गोम॑त्ऽभिः । गो॒ऽप॒ते॒ । धृ॒षत् ॥२१॥

स्कन्द० य एवंगुणोऽसि सः नः अस्माकम् नियुद्भिः वडवाभिः आ पृण 'पृण प्रीणने'। आप्रीणय तर्पय कामम् अभिलाषम्, वाजेभिः अन्नैश्च। कीदृशैः। उच्यते—अश्विभिः अश्वसंयुक्तैः गोमद्भिः गोसंयुक्तैः च। अस्मभ्यम् अभिरूपत्वो वडवा अन्नानि अश्वान् गाश्च देहीत्यर्थः। हे गोपते! गवां स्वामिन्! धृषत् धृष्टम् प्रगल्भम्। सर्वलोकप्रकाशमित्यर्थः ॥ २१ ॥

वेङ्कट० सः अस्माकम् कामम् वडवाभिः[5] अन्नैश्च अश्वयुक्तैः गोयुक्तैश्च धृष्टम् आ पूरय[5] ॥ २१ ॥

तद् वो॑ गाय सु॒ते सचा॑ पुरुहू॒ताय॒ सत्व॑ने । शं यद् गवे॒ न शा॒किने॑ ॥ २२ ॥

तत् । वः॒ । गा॒य॒ । सु॒ते । सचा॑ । पु॒रु॒ऽहू॒ताय॑ । सत्व॑ने । शम् । यत् । गवे॑ । न । शा॒किने॑ ॥

स्कन्द० वः व्यत्ययेनेदं प्रथमैकवचनस्य द्वितीयाबहुवचनम्। त्वम् गाय गायतीत्यर्चतिकर्मत्वात् स्तुत्यर्थः। स्तुत्या चात्र स्वसम्बन्ध्युच्चारणम् लक्ष्यते। अत एव अयम् अन्तरात्मनः प्रैषः। उच्चारय हे अन्तरात्मन्!। सुते अभिषुते सोमे सचा सहान्यैर्ऋत्विग्भिः पुरुहूताय बहुभिराहूताय इन्द्राय सत्वने 'षणु दाने' इत्यस्यैतद्रूपम्। दात्रे स्तोतृभ्यः शम् यत् सुखं तत्। याः स्तुतय उच्चार्यमाणाः [6]तस्मै सुखं कुर्वन्ति 'ता इन्द्रायोच्चारयेत्यर्थः[6]। कस्मा इव। उच्यते—गवे न गौर्वृषभः 'तस्मै सुखं कुर्वन्ति' इव'। कीदृशाय। उच्यते— शाकिने शाक. शक्तिः कर्म वाऽनुष्ठातुं शक्यत्वात् वह्यते। इव'। कीदृशाय। उच्यते— शाकिने

1. °रम् ना मूको. 2-2. °करणयज्ञ° वि°. 3. °ति सामेन क; °ति स्तम्भेन ख प्रस्तावः 4. °गनः वि° कप. 5-5. नास्ति मूको. 6. मना° मूको. 7. °यम् मूको. 8-8. ताः ... मोच्चारयन्ति इत्यर्थः वि° कप. 9-9. करमै इति मूको.

यथा कश्चित् कृषीवलः वृषभाय शक्तिमते महाबलाय कर्मवते बहुकर्मकारिणे स्तुतीः सुखाः उच्चारयेत् तद्वदित्यर्थः ॥ २२ ॥

वेङ्कट० तत् यूयम् गायत सुते सोमे सह पुरुहूताय सदनम् कुर्वते । सुखम् यत् भवति स्तोत्रम् गवे [illegible] सहायाय ॥ २२ ॥

न घा वसुर्नि यमते दानं वाजस्य गोमतः । यत् सीमुप श्रवद् गिरः ॥२३॥

न । घ । वसुः । नि । यमते । दानम् । वाजस्य । गोऽमतः । यत् । सीम् । उप । श्रवत् । गिरः ॥

स्कन्द० न-शब्दो नि यमते इत्यनेन सम्बन्धयितव्यः । घ इति पदपूरणः । वसुः अपठितमपि प्रशस्तिनामैतत्, धननाम वा । अन्तर्णीतमत्वर्थः । प्रशस्यः धनवान् वा इन्द्रः । न नि यमते न नियच्छति न निरुणद्धि । न निराकरोतीत्यर्थः[1] । दानम् वाजस्य अन्नस्य गोमतः गोभिः सह संयुक्तस्य । अन्नं गाश्च ददातीत्यर्थः । कदा । उच्यते—यत् यदा । सीम् इति पदपूरणः । उप श्रवत् उपेत्यस्योपसर्गस्य सम्बन्धिनी योग्यक्रियाऽध्याहार्या । उपगम्य यज्ञम् श्रवत् शृणोति गिरः स्तुतिलक्षणा वाचः[2] ॥ २३ ॥

वेङ्कट० न खलु नि यच्छति वासयिता इन्द्रः गोयुक्तस्य अन्नस्य दानम् । यदि उप शृणोति स्तुतीः । सीम् इति पूरणम् ॥ २३ ॥

कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत् । शचीभिरप नो वरत् ॥२४॥

कुवित्ऽसस्य । प्र । हि । व्रजम् । गोऽमन्तम् । दस्युऽहा । गमत् । शचीभिः । अप । नः । वरत् ॥२४॥

स्कन्द० 'कुवित्' (निघ ३,१) इति बहुनाम । षणु दाने । बहुं सोमं यो ददाति स कुवित्सः । 'अन्येष्वपि दृश्यते' (पा ३,२,१०१) इत्येवं सनोतेरपि छान्दसत्वात् ड-प्रत्ययः । तस्य कुवित्सस्य यजमानस्य स्वभूतम् । प्रशब्दो गमदित्याख्यातेन सम्बन्धयितव्यः । हि-शब्दः पदपूरणः । व्रजम् गोष्ठम् गोमन्तम् गोभिः संयुक्तम् दस्युहा 'दस्यूनां हन्ता इन्द्रः'[3] प्र गमत् गमित्र अन्तर्णीतण्यर्थः । प्रकर्षेण गमयति । किम् । सामर्थ्याद् वृद्धिम्[4] । य पूर्वगुणः [illegible] शचीभिः 'प्रज्ञाभिर्वा कर्मभिर्वा'[5] नः अस्मान् अप वृणोतु उद्घाटयतु । सर्वलोकप्रकाशान् करोत्वित्यर्थः ॥ २४ ॥

वेङ्कट० कुवित्सनाम्नोऽस्मच्छत्रोः[6] गोमन्तम् व्रजम् दस्युहा इन्द्रः प्र अभिगच्छतु[7] । ततः प्रज्ञाभिः अस्माकं व्रजम् अप वृणोतु ॥ २४ ॥

इमा उ त्वा शतक्रतोऽभि प्र णोनुवुर्गिरः । इन्द्र वत्सं न मातरः ॥ २५ ॥

इमाः । ऊँ इति । त्वा । शतक्रतो इति शतऽक्रतो । अभि । प्र । नोनुवुः । गिरः । इन्द्र । वत्सम् । न । मातरः ॥२५॥

---

1. निकरोती' मूको. 2. वाचः हे इन्द्र कथम् मूको. 3-3. दस्यूनाहन्तीति दस्युहा इन्द्रः वि'. 4. विद्धि मूको. 5-5. प्रज्ञाभिर्वोभिर्वा मूको. 6-6. कुवित् नाम्नो समस्यच्छत्रो वि' धर्वं; कुवित्नाम्नो शत्रो' रु. 7. भि गच्छ' ख लपं; वि गच्छ' स प्रस्तावः

स्कन्द० इमाः अस्मदीयाः । उ इति पदपूरणः । त्वा त्वां हे शतक्रतो ! बहुकर्मन् ! बहुप्रज्ञ ! वा अभि प्र नोनुवुः । णु स्तुतौ । प्रकर्षेण अभिष्टुवन्ति । अभिष्टुतवत्यो वा गिरः स्तुतिलक्षणा वाचः हे इन्द्र ! । कथम् । वत्सम् न मातरः । यो मृतवत्सानां[1] गवाम् एको वत्सः वत्सकार्ये नियुज्यते सोऽत्रोपमानम् । यथा वत्समेकं मातरो गावः शृङ्गकण्डूयनजिह्वासम्मार्जनादिव्यापारेणाऽभिष्टुयुः तद्वत् । अथवा सामर्थ्याद् नौतिरत्राह्वानार्थः । यथा गावो वाशितशब्देन वत्सकम् आह्वयेयुः तद्वद् इमाः स्तुतयः त्वाम् आह्वयन्ति, आहूतवत्यो वा इत्यर्थः ॥ २५ ॥

वेङ्कट० इमाः खलु त्वा शतक्रतो ! इन्द्र ! अभिप्रस्तुवन्ति स्तुतयः । यथा वत्सम् दृष्ट्वा गावः अभिहिंकुर्वन्ति[2] ॥ २५ ॥

[3]इति चतुर्थाष्टके सप्तमाध्याये पञ्चविंशो वर्गः[3] ॥

दूणाशं सख्यं तव गौरसि वीर गव्यते । अश्वो अश्वायते भव ॥ २६ ॥

दुःऽनशम् । सख्यम् । तव । गौः । असि । वीर । गव्यते । अश्वः । अश्वऽयते । भव ॥२६॥

स्कन्द० दुःखं नश्यते यद् दूणाशम् सख्यम् सखित्वम् तव इन्द्र ! । स्थिरत्वाद् दुःखेन नश्यतीत्यर्थः । अथवा 'नशत्[4] आनशे' (निघ २,१८) इति व्याप्तिकर्मसु पाठाद् नशिराप्नोतिकर्मा । दुराप दुष्प्रापम् सख्यं तव । कथंचित् प्राप्तसख्याय मह्यम् गौः असि । कोऽर्थोऽयं तद् । देवतैश्वर्याद् त्वमेव गौर्भव । अथवा प्रथमपुरुषस्य[5] स्थाने व्यत्ययेन मध्यमपुरुषः । गौरस्तु[6] । गा देहीत्यर्थः । हे वीर ! गव्यते गामिच्छते । अश्वः च अश्वायते अश्वमिच्छते भव भवतु वा । अश्वं च देहीत्यर्थः ॥२६॥

वेङ्कट० आप्तुमशक्यम् तव सख्यम् । गौः[7] त्वम् भवसि वीर । गामिच्छते । अश्वः च भव मह्यम् अश्वमिच्छते ॥ २६ ॥

स मन्दस्वा ह्यन्धसो राधसे तन्वा महे । न स्तोतारं निदे करः ॥ २७ ॥

सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे । न । स्तोतारम् । निदे । करः ॥२७॥

स्कन्द० य उक्तगुणोऽसि सः मन्दस्व तृप्य । हि इति पदपूरणः । केन[8] । अन्धसः तृतीयार्थे षष्ठ्येषा । षष्ठीश्रुतेर्वैकदेशेनेति शेषः । अन्नेन सोमाख्येन, अन्नस्य वा सोमाख्यस्यैकदेशेन तन्वा शरीरेण । स्वयं स्वांशलक्षणेन । किमर्थम् । राधसे धनाय । धनम् अस्मभ्यं दातुमित्यर्थः । सोमं पिबेत्यर्थः । कीदृशाय राधसे । महे महते प्रभूताय । किञ्च न त्वं कञ्चिदपि स्तोतारम् निदे निन्दनाय करः करोषि कृतवान् वा । सर्वस्य स्तोतुरभिलषितं सम्पादयसि सम्पादितवान्[9] वा, येनासौ लोके निन्द्यतां न प्रतिपद्यत इत्यर्थः ॥ २७ ॥

वेङ्कट० सः मन्दस्व सोमेन धनाय महते शरीरेण । न स्तोतारम्[10] निन्दित्रे मा[11] अकार्षीः[12] ॥ २७ ॥

---

1. महत्सानां मूको. 2. दम्भा कुं ए प्रस्तावः. 3-3. नास्ति मूको. 4. नशत् मूको. 5. पुरुषस्य मूको. 6. गौरस्ति वि°; गौरसि वि°. 7. गोः क लपं. 8. तेन मूको. 9. सम्पादयितवान् मूको. 10. °तार मूको. 11. नास्ति वि°. 12. कार्षी ल लपं; कार्षीः इत्यस्तावः.

इमा उं त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः । वत्सं गावो न धेनवः ॥ २८ ॥

इमाः । ॐ इति । त्वा । सुतेऽसुते । नक्षन्ते । गिर्वणः । गिरः । वत्सम् । गावः । न । धेनवः ॥

स्कन्द० इमाः[1] । उ इति पदपूरणः । त्वा त्वाम् । सुतेसुते अन्यस्मिन्नन्यस्मिंश्चाभिषुते सोमे । नक्षन्ते । 'इन्वति नक्षति' ( निघ २,१८ ) इति व्याप्तिकर्मसु पाठाद् नक्षतिरत्र व्याप्त्यर्थः । व्याप्नुवन्ति । हे गिर्वणः! स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः! गिरः स्तुतिलक्षणा वाचः । कथम् । वत्सम् गावः न धेनवः या मृतवत्सा बह्व्यो गावो धेनव एकेन वत्सेन दुह्यन्ते ता इहोपमानम् । ता यथा तमेकं वत्सं स्वेन पयसा नक्षन्ते तद्वत् ॥ २८ ॥

वेङ्कट० इमाः स्तुतयः सुतेसुते[2] सोमेसोमे[3] त्वाम् व्याप्नुवन्ति गीर्भिर्वननीय![4] वत्सम् इव धेनवः गावः ॥ २८ ॥

पुरूतमं पुरूणां स्तोतॄणां विवाचि । वाजेभिर्वाजयताम् ॥ २९ ॥

पुरुऽतमम् । पुरूणाम् । स्तोतॄणाम् । विऽवाचि । वाजेभिः । वाजऽयताम् ॥ २९ ॥

स्कन्द० कीदृशं त्वाम्[5] । उच्यते । पुरुतमम् इति तमशब्दो नातिशयप्रत्ययः उदात्तत्वात् । किं तु अभिकाङ्क्षायाम् इत्यस्यैतद् रूपम् । बहुभिर्योऽभिकाङ्क्ष्यते प्रार्थ्यते स पुरुतमः, तम् । क्व नक्षन्ते । उच्यते—पुरूणाम् बहूनाम् स्तोतॄणाम् ऋत्विजां सम्बन्धिनि विवाचि[6] विविधा स्तुतिलक्षणा वा वाचो यस्मिन् स विवाग् यज्ञः तस्मिन्[7] । केन नक्षन्ते । वाजेभिः अन्नैः सोमलक्षणैः वाजयताम् अन्नं यज्ञफलमिच्छताम् स्तोतृभिरेव । अस्याः समस्तायाः ऋचः पूर्वयर्च्यैकवाक्यता । अथवा पुरूतममित्येतावतः पूर्वयर्च्यैकवाक्यता, शिष्टस्य परया । कथम् । पुरूणां स्तोतॄणामिति निर्धारणे षष्ठी । वाजेभिरिति इत्थंभूतलक्षणा तृतीया । बहूनां स्तोतॄणां मध्ये यज्ञे अन्नैस्सोमलक्षणैरन्नकामानाम् अस्माकं[8] स्तोतृभिः सह ॥ २९ ॥

वेङ्कट० बहूनां शत्रूणाम् ग्लपयितारम् स्तोतॄणाम् विविधवाचि यज्ञे सति वाजैः[9] त्वां दीपयताम् पूर्वेण सम्बन्धः ॥ २९ ॥

अस्माकमिन्द्र भूतु ते स्तोमो वाहिष्ठो अन्तमः । अस्मान् राये महे हिनु ॥ ३० ॥

अस्माकम् । इन्द्र । भूतु । ते । स्तोमः । वाहिष्ठः । अन्तमः । अस्मान् । राये । महे । हिनु ॥

स्कन्द० अस्माकम् स्वभूतोऽयं हे इन्द्र! भूतु । भूत्वित्येतद् भवतेश्छान्दसे लोटि रूपम् । भवतु ते तव । कः । स्तोमः । कीदृशः । वाहिष्ठः वोढृतमः शीघ्रगामितमः । कीदृशो भवतु । उच्यते—अन्तमः अतिशयेन सन्निकृष्टः । बहूनां स्तोतॄणां मध्ये यज्ञेऽस्माकं स्वभूताः सोमाः स्तुतिश्च तव सन्निकृष्टा भवन्तु । स्वशरीरेणैवास्मभ्युपयातो[8] नान्येषामित्यर्थः । किञ्च अस्मान् राये धनाय महे महते हिनु गच्छ । महद् धनं दातुम् अस्मान् प्रति आगच्छेत्यर्थः ॥ ३० ॥

१. नास्ति मूको. २. नास्ति ठपं. ३. 'मम् मूको. ४. माम् मूको. ५. अस्मिन् मूको. ६. 'मरुं मूको. ७. वाजेभिः वि'. ८. 'रेण यातम्' मूको.

वेङ्कट० अस्माकम् इन्द्र! भवतु ते स्तोमः वोढृतमः अन्तिकतमः। अस्मान् महते धनाय प्रेरय ॥ ३० ॥

अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात्। उरुः कक्षो न गाङ्ग्यः ॥ ३१ ॥

अधि। बृबुः। पणीनाम्। वर्षिष्ठे। मूर्धन्। अस्थात्। उरुः। कक्षः। न। गाङ्ग्यः ॥३१॥

स्कन्द० "बृबुं तु तक्षाणम् ऋचः स्तुवन्ति तिस्रः एताः 'अधि बृबुः पणीनाम्'"। बृबुनामानं तक्षाणम् 'अधि बृबुः पणीनाम्' इत्येताः तिस्रः ऋचः स्तुवन्ति। बृबुनामा तक्षा आसां देवतेत्यर्थः। अत्रेतिहासमाचक्षते—भरद्वाजोऽरण्ये पर्यटन् क्षुधा पिपासया च परीतो महावने तक्षकर्म कुर्वाणं बृबुं ददर्श। 'तम् उवाच अतिथिं माम् उपागतम् अवगच्छेति'[1]। सोऽभ्युत्थाय प्राञ्जलिर्भरद्वाजम् उवाच—अहं तक्षा। तस्माच्च पतितचण्डालादिभ्य इव ब्राह्मणा न प्रतिगृह्णन्ति इति मया श्रुतम्। यदि वो 'धर्मो न विरुध्यते'[2] ततो मम च स्वं भाचक्ष्व[1]। मम स्वं सर्वस्व। भगवन्तः प्रभव इति। तं 'भरद्वाजः प्रत्युवाच'[2]—

'पयो धाना फलं मूलं मधु स्रगनुलेपनम्।
इत्यादीन्यभ्युद्यतानि प्रतिग्राह्याणि सर्वतः ॥'

इत्येतद् विदित्वा धर्मैर्भोगैर्मां सत्कृतम् अर्चय। 'अर्थमस्ति मे'[3] त्वया दीयमानं किञ्चिदपि प्रत्याख्यास्यामीति। तथेति बृबुः प्रतिपद्य 'अतिथिधर्मेण उपचर्य तम् उवाच—अहं'[4] शूद्रो बहुपशुः[4] धर्मेभ्यः। मत्संस्था एता गावो न पितृदेवतातिथीज्यासु[5] उपयुज्यन्ते। भगवत्संस्थास्तूपयोक्ष्यन्ते[5]। भगवता चोक्तम्—न त्वया दीयमानं किञ्चिदपि प्रत्याख्यास्यामीति। तेन माम् आत्मानञ्च[10] गाङ्गेय[11] [12]स्वर्गभाजः कर्तुम् एता गाः प्रतिगृहाणेत्यभिरयुक्त्वा[12] तस्मै गवां धेनूनां सहस्रं ददौ। तद् भरद्वाजः प्रतिजग्राह। प्रतिगृह्य च पुत्रेभ्यो प्राप्य च शंसन् आचचक्षे। अथ बृबुं प्रीततमः। 'अधि बृबुः पणीनाम्' इत्येतेन तृचेन बृबुं तुष्टावेति।

अधि उपरि बृबुः पणीनाम् स्तोतृणाम् वर्षिष्ठे अतिशयेन वृद्धे मूर्धन् मूर्धनि प्रधानभूते स्वर्गैकदेशे अस्थात् तदर्थं तुष्ट्। स्थास्यति। स्तोतृणां यत्स्वर्गे स्थानं तस्योपरि यत् स्थानं तत्[13] वृद्धतरं प्रधानतरं च। तत् बृबुः प्राप्स्यतीत्यर्थः। अथवा अस्थादिति भूतकालप्रत्ययः। सामर्थ्यात् 'अधि बृबुः पणीनाम्' इत्येतद्देवतावस्यैव समाप्यते। उपरि बृबुः स्तोतृणामिति। बृबुर्हि स्तोतृभ्यो ददाति। यश्च यस्मै[14] ददाति[12] स तस्य माहात्म्येनोपरि। अत उच्यते—माहात्म्येन अधि बृबुः पणीनामिति। वर्षिष्ठे मूर्धन् अनेकवाक्यतासिद्ध्यर्थं यच्छब्दोऽध्याहार्यः। यः अतिशयेन वृद्धे प्रधानभूते च अत्यन्तरम्ये [16]अरण्यदेशे अस्थात्[16] स्थितः। उरुः विस्तीर्णः बहुदेशव्यापी। क इव। उच्यते—कक्षः न गाङ्ग्यः। येन पूर्वं नद्युदयती[17] स प्रदेशः कक्ष उच्यते। गङ्गाया अयं गाङ्गः। गाङ्ग एव गाङ्ग्यः। स्वार्थिको य-शब्दः। यथा गङ्गाकक्षो विस्तीर्णः तद्वत्। यो बहुपशुत्वात् गङ्गाकक्षवत् महान्तम् अरण्यप्रदेशं प्राप्य निवसतीत्यर्थः ॥ ३१ ॥

---

१-१. °वाचा भागत चेति मूको. २-२. धर्मोऽनिषि° मूको. ३. नाव्य मूको. ४-४. °द्वान बहुपशु° मूको. ५-५. अर्थ्यासिन् वि°. ६-६. °ऽसे अहं मूको. ७. बहुलपशु° मूको. ८. °यीज्यास्वेतु° मूको. ९. °योक्ष्यन्ते मूको. १०. °त्मानञ्च मूको. ११. गान्चैव मूको. १२-१२. °भाजः प्रति ति°; °भाजः कर्तुमेतद्गाः प्रति° मूको. १३. ते मूको. १४. यस्ते मूको. १५. नास्ति मूको. १६-१६. °देऽरण्यस्थात् मूको. १७. पूर्वमक्ष° मूको.

वेङ्कट० भरद्वाजाय[1] आत्रेय[2] गोसहस्रप्रदातारं बृबुं तृचेन शंयुः स्तौति । मनुः —

'भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने[3] वने ।
बह्वीर्गाः प्रतिजग्राह बृबोस्तक्ष्णो[4] महातपाः[5] ॥' ( मनुस्मृ १०,१०७ ) इति ॥

अधि अस्मात् बृबुः अयम् स्तोतॄणाम् वृद्धतमे मूर्धनि उच्छ्रिते स्तुत्ये पदे । कक्षः कक्षतेः[6] । विस्तीर्णः प्रवाह इव गङ्गायाः । अपि वोपघीकक्ष एवाभिप्रेतः ॥ ३१ ॥

यस्य॑ वा॒योरि॑व द्र॒वद् भ॒द्रा रा॒तिः स॑ह॒स्रिणी॑ । स॒द्यो दा॒नाय॒ मंह॑ते ॥ ३२ ॥

यस्य॑ । वा॒योःऽइ॑व । द्र॒वत् । भ॒द्रा । रा॒तिः । स॒ह॒स्रिणी॑ । स॒द्यः । दा॒नाय॑ । मंह॑ते ॥३२॥

स्कन्द० यस्य वायोः इव यथा देवस्य वायोरुद्रवद् मानुषस्य सतः द्रवत् क्षिप्रम् भद्रा कल्याणी रातिः । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' ( पा ३,३,९६ ) इति कर्मणि च क्तिन् द्रष्टव्यः । रायते[7] दीयते दातृयोग्याय[8] या[9] सा रातिः । काऽसौ[10] । गावः । कुत एतत् । इतिहासे श्रवणात् । कियती रातिः । उच्यते — सहस्रिणी सहस्रसंख्यायुक्ता । सद्यः समानेऽहनि । एकस्मिन्नेवाऽह्नीत्यर्थः । दानाय । 'कृत्यल्युटो बहुलम्' ( ३,३,११३ ) इत्येवमयम् सम्प्रदाने ल्युट् । यस्मै दीयते । यो दानार्ह इत्यर्थः । स दानार्हः भरद्वाजः तस्मै । मंहते 'मंहते' ( निघ ३,२० ) इति दानकर्मा । लट् च 'वर्तमानसामीप्ये वर्तमानवद्वा' ( पा ३,३,१३१ ) इत्येवं भूते द्रष्टव्यः । व्यत्ययेन लाप् कर्मणि । इदानीमेवाऽदायीत्यर्थः । केन । सामर्थ्याद् यस्य तत् स्वभूतं तेन बृबुणा । किञ्च यस्य भद्रा रातिः सहस्रिणी सद्यो दानाय मंहते इत्यत्र[11] यस्येति[10] यच्छ्रुतेः साकाङ्क्षत्वात् परस्यां ऋचि तच्छब्दश्रुतेः परया ऋचा सह अस्याः ऋच एकवाक्यता ॥ ३२ ॥

वेङ्कट० यस्य वायोः इव वेगः द्रवति भजनीयम् देयम् सहस्रसंख्याकम् । तदानीमेव[11] दानार्थम् स्तुवते भरद्वाजाय, पूर्वत्र सम्बन्धः ॥ ३२ ॥

तत् सु नो॒ विश्वे॑ अ॒र्य आ सदा॑ गृणन्ति का॒रवः॑ । बृ॒बुं स॑हस्र॒दात॑मं सू॒रिं स॑हस्र॒सात॑मम् ॥ ३३ ॥

तत् । सु । नः॒ । विश्वे॑ । अ॒र्यः॑ । आ । सदा॑ । गृ॒णन्ति॑ । का॒रवः॑ । बृ॒बुम् । स॒ह॒स्र॒ऽदात॑मम् । सू॒रिम् । स॒ह॒स्र॒ऽसात॑मम् ॥३३॥

स्कन्द० तत् इति व्यत्ययेन नपुंसकता । तम् । सु इत्युपसर्गः गृणन्ति इत्याख्यातेन सम्बन्धयितव्यः । अस्माकं स्वभूताश्च सर्वे पुत्रपौत्रादयः । अर्यः द्वितीयैकवचनस्य स्थाने प्रथमैकवचनम् एतत् । अर्यम् ईश्वरम् सदा आ सु गृणन्ति मर्यादया सुष्ठु स्तुवन्ति कारवः स्तोतारः । क तम् । उच्यते — बृबुम् । कीदृशम् । सहस्रदातमम् अतिशयेन गोसहस्रस्य दातारम् । न च केवलं पृथुमेव । किं तर्हि । सूरिम् स्तोतारम् च । कस्य । प्रकरणात् बृबोरेव । कतमम् । भरद्वाजम् ।

1. भरद्वाज वि॰ ए; भरद्वाज अपं. 2. अत्रे मूको. 3. निर्जने मूको. 4. बृबोस्त॰ मनुस्मृ. 5. °मनाः मूको. 6. कक्षतेः मूको. 7. नास्ति मूको. 8. °योग्या मूको. 9. गावो मूको. 10. नास्ति मूको. 11. तदा॰ वि॰ ए; तदानीमेव अपं.

कीदृशम्। सहस्रसातमम् गोसहस्रस्य पृथुदत्तस्य अतिशयेन सम्भक्तारम्। 'बृबुसम्बद्धया बुद्ध्या भक्त्या च भरद्वाजस्य स्तुतिः उच्यते न स्वातन्त्र्येणेति बृबुदेवताकत्वस्याऽविरोधः। बृहद्देवताकारस्तु पृथगेवास्य पादस्य भरद्वाजं देवतां मन्यते। एवं ह्याह—'पितरं स्तौति अंशुस्तु वचस्यान्ते पदे स्वयम्' (बृदे ५,१०९) इति। ऐतिहासिका अप्येवमेवाहुः—'अनेन च पादेन भरद्वाजम्' इति ॥ ३३ ॥

वेङ्कट० तत् सुप्रख्याभिमुख्येन वदन्ति अस्माकम् निधे शरण्यगाः[2] यदा कारवः। किमित्याह— बृबुम् सहस्रस्य दातारम् प्राज्ञम् सहस्रस्य दातारमिति ॥ ३३ ॥

[1]इति चतुर्थाष्टके सप्तमाध्याये षड्विंशो वर्गः[1] ॥

[ ४६ ]

[3]शंयुर्बार्हस्पत्य ऋषिः। इन्द्रो देवता। प्रगाथः छन्दः (विषमा बृहत्यः, समाः सतोबृहत्यः)[3]।

त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥१॥

त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः ।
त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥ १ ॥

स्कन्द० 'अत ऊर्ध्वमनादिष्टम्' इत्यनादेशाद् ऐन्द्रम् एतत् सूक्तम्। त्वाम् त्वा इत् हि पदपूरणः। हवामहे आह्वयामि। साता। सातिर्लाभः। निमित्ते चात्र सप्तमी। प्रयोजनस्य च निमित्तत्वम्। लाभे निमित्ते। लाभार्थमित्यर्थः। वाजस्य अन्नस्य कारवः स्तोतारो वयम्। किञ्च त्वाम् इति द्वितीयाश्रुतेर्ह्वयतिरत्रानुपकाम्यः। आह्वयन्ति[4]। वृत्रेषु 'यस्य च भावेन' (पा २,३,३७) इत्येवम् एषा सप्तमी। तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः। शत्रुषु हन्तव्येषु। हे इन्द्र! सत्पतिम् सतां पालयितारम् नरः मनुष्याः अन्येऽपि। किञ्च त्वाम् अत्रापि द्वितीयाश्रुतेर्ह्वयतिरनुपकाम्यः। आह्वयन्ति। के। प्रस्तुता नरः। काष्ठासु आपोऽत्र काष्ठा उच्यन्ते वृष्टिलक्षणाः, तासु निमित्तभूतासु, तदर्थमित्यर्थः। अर्वतः अर्वगत्यर्थस्य वनिप्प्रत्ययान्तस्य 'अर्वणस्त्रसावनञः' (पा ६,४,१२७) इति ए-आदेशेनेदं रूपम्। मन्तुर्मेधस्य स्वभूतासु। अथवा अर्वेत्यश्वनाम, सामर्थ्याच्चात्रान्तर्निहितमत्वर्थं प्रथमान्तं च द्रष्टव्यम्। काष्ठास्वित्यपि सेनाः सङ्ग्रामभूमयो वा काष्ठा उच्यन्ते। सप्तमीश्रुतेश्च स्थिता इति वाक्यशेषः। अश्ववन्तोऽपि मनुष्याः सेनासु सङ्ग्रामभूमिषु वा स्थिता आत्मनो अर्थाय त्वाम् आह्वयन्तीत्यर्थः ॥ १ ॥

वेङ्कट० त्वाम् एव हि हवामहे अन्नस्य लाभार्थम् कर्तारः[5] स्तोमानां वयम्। त्वाम् उपद्रवेषु इन्द्र! सत्पतिम् मनुष्या ह्वयन्ते, त्वाम् एव अश्वस्य काष्ठासु सङ्ग्रामेषु[6] ॥ १ ॥

स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः ।
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ २ ॥

---

१-१. °तेमन्त्रः सुरुना च मूको. २. शरण्यमाणः क; शरण्याणः कर्प. ३-३. नास्ति मूको.
४. आह्वयति मूको. ५. °तारं मूको. ६. नास्ति क कर्प.

सः । त्वम् । नः । चित्र । वज्रऽहस्त । धृष्णुऽया । महः । स्तवानः । अद्रिऽवः ।
गाम् । अश्वम् । रथ्यम् । इन्द्र । सम् । किर । सत्रा । वाजम् । न । जिग्युषे ॥ २ ॥

स्कन्द० यः पूर्वस्याम् ऋच्युक्तगुणोऽसि सः त्वम् नः अस्मभ्यम् हे चित्र! विचित्र! पूज्य! वा वज्रहस्त! वज्रो हस्ते यस्य स वज्रहस्तः तस्येदं सम्बोधनम्। धृष्णुया प्रथमैकवचनस्यायं याजादेशः क्रियाविशेषणं चेदम्। धृष्णु धृष्टं प्रगल्भम्। निश्शङ्कमित्यर्थः। महः महत्। सुष्ठु इत्यर्थः। स्तवानः स्तूयमानोऽस्माभिः हे अद्रिवः! आदरणाद् अद्रिविकाराद् वा अद्रिर्वज्रः तद्वन्! गाम् अश्वम् च रथ्यम् रथस्य वोढारम् हे इन्द्र! सम् किर सम्यक् क्षिप। देहीत्यर्थः। 'सत्रा सदा वाजम् न' जिग्युषे अन्नमिव जितवते। कस्मै। सामर्थ्यात् अश्वाय हस्तिने वा। यथा सङ्ग्रामं जितवतेऽश्वाय हस्तिने वा यवसयोग्याशनस्नेहपानादिलक्षणम् अन्नं सदा ददाः तद्वदित्यर्थः ॥ २ ॥

वेङ्कट० सः त्वम् अस्मभ्यम् पूजनीय! वज्रहस्त! धृष्णुः महान्। अद्रिः[1] आदृणाति अमित्रानिति तद्वन्![2] आयुधवन्![3] स्तूयमानः गाम् अश्वम् च रथस्य वोढारम् हे इन्द्र! सह देहि महत् अन्नम् इव सङ्ग्रामं जितवतेऽश्वाय ॥ २ ॥

य॑ः स॒त्राहा विच॑र्षणि॒रिन्द्रं॒ तं हू॑महे व॒यम् ।
स॒ह॑स्रमुष्क॒ तुवि॑नृम्ण॒ सत्प॑ते॒ भवा॑ स॒मत्सु॑ नो वृ॒धे ॥३॥

यः । स॒त्राऽहा । विऽच॑र्षणिः । इन्द्र॑म् । तम् । हू॒म॒हे॒ । व॒यम् ।
सह॑स्रऽमुष्क । तुवि॑ऽनृम्ण । सत्ऽप॑ते । भव॑ । स॒मत्ऽसु॑ । नः॒ । वृ॒धे ॥ ३ ॥

स्कन्द० यः स्वयं सत्राहा 'सत्रा' (निघ ३,१०) इति सत्यनाम सदापर्यायो वा। सत्य सदा वा हन्ता विचर्षणिः विद्रष्टा सर्वस्य, इन्द्रम् तम् त्वाम् हूमहे आह्वयामः वयम्। आहूतश्च स हे सहस्रमुष्क! अत्रेतिहासमाचक्षते शाट्यायना अधीयते—'असुरीन्द्र[5] प्रत्यकमत पर्वतपर्वतम्[6] मुष्कान् कृत्वा तामिन्द्रः[7] प्रतिजिगीषन् 'पर्वतपर्वत् त्रेधास्यकुलेष्ड उ पदच्छेपः[8] सर्वे[9] वा इन्द्रेण विजिगीषिते[10] ता समभवत्' (शाखा २३,४) इति। तदपेक्षम् एतत्सम्बोधनम् सहस्रमुष्केति। 'सहस्रम्' (निघ ३,१) इति बहुनाम। मुष्कशब्दो वृषणवचनः। इह तु तत्सम्बन्धात् प्रजनने वर्तते। बहुप्रजनन! तुविनृम्ण! बहुधन![11] सत्पते! सतां पालयितः! भव समत्सु सङ्ग्रामेषु नः अस्माकम् वृधे वर्धनाय। सङ्ग्रामेऽस्माकम् जयलक्षणां वृद्धिं कुर्वित्यर्थः ॥ ३ ॥

वेङ्कट० यः सहसो हन्ता विचर्षणिः[12], इन्द्रम् तम् हूमहे वयम्। 'इन्द्रः पर्वतपर्वणि शेफान्[13] कृत्वा कांचन स्त्रियं समभवत्' इत्याथर्वणिकम्। हे सहस्रमुष्क! बहुधन! सत्पते![14] भव सङ्ग्रामे अस्माकम् वर्धनाय[15] ॥ ३ ॥

---

१-१. वाजमसी मूको. २. नास्ति लपं, अद्रिः ल. ३. वदान् मूको. ४. °यवान् ल लपं. ५. असुरिन्द्रं मूको. ६. पर्वत् मूको. ७. मामिन्द्र मूको ८-८. पर्वन् त्रेपा° वि'; पर्वतेऽन्वलाय° वि', °ऽसुरेन्द्रो मूको. ९. सर्वे मूको. १०. °षन्ती मूको. ११. बहुल मूको. १२. °र्षिणिः ल, विचर्षिणि लपं. १३. शेवान् मूको १४. °स्पते वि' ल; सपते लपं. १५. वर्धय वर्धनाय वि' लपं, वर्धनाय वर्धनाय ल.

वाधसे जनान् वृषभेव मन्युना घृषौ मीळ्ह ऋचीषम ।
अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ॥४॥

वाधसे । जनान् । वृषभाऽइव । मन्युना । घृषौ । मीळ्हे । ऋचीषम ।
अस्माकम् । बोधि । अविता । महाऽधने । तनूषु । अप्ऽसु । सूर्ये ॥ ४ ॥

स्कन्द० बाधसे त्वम् जनान् शत्रुभूतान् वृषभा इव प्रथमैकवचनस्य अयम् आकारः । वृषभ इव । मन्युना क्रोधेन घृषौ अपठितमपि सङ्ग्रामं एतत् । अथवा घृषिः सङ्घर्षार्थः । 'घृषु सङ्घर्षे' इति । महति सङ्घर्षणयोग्ये वा मीळ्हे सङ्ग्रामनामैतत् ( द्र. निघ २,१७ ) । सङ्ग्रामे । हे ऋचीषम ! ऋचा स्तुत्या 'सम ! । यावन्तो[1] यादृशाश्च स्तुत्या गुणा उच्यन्ते 'तावद्भिस्तादृशैरेव' [2] च युक्त ! इत्यर्थः । य एवंगुणोऽसि सः अस्माकम् बोधि बुध्यस्व । यद् वयं युष्मत्स्तुतिमिच्छाम इत्यर्थः । किं तत् । उच्यते — अविता रक्षिता महाधने इदमपि सङ्ग्रामनामैव ( द्र. निघ २, १७ ) । [3]सङ्ग्रामे तनूषु अप्सु[4] सूर्ये वृद्धः वर्धयिता च सखीनां सखिभूतानाम् अस्माकम् ॥ ४ ॥

वेङ्कट० बाधसे शत्रुजनान् वृषभ इव क्रोधनकर्मणा[1] घर्षणकर्तरि सङ्ग्रामे । स्तुत्या सम । अस्माकम् । बुध्यस्व रक्षिता भवामीति । सङ्ग्रामे भव वर्धकः सखीनाम् ॥ ४ ॥

इन्द्र ज्येष्ठं न आ भरँ ओजिष्ठं पपुरि श्रवः ।
येनेमे चित्र वज्रहस्त रोदसी ओभे सुशिप्र प्राः ॥५॥

इन्द्र । ज्येष्ठम् । नः । आ । भर । ओजिष्ठम् । पपुरि । श्रवः ।
येन । इमे इति । चित्र । वज्रऽहस्त । रोदसी इति । आ । उभे इति । सुऽशिप्र । प्राः ॥ ५ ॥

स्कन्द० हे इन्द्र ! ज्येष्ठम् अतिशयेन प्रशस्यम् वृद्धं वा नः अस्मद्दर्थम् । अस्मभ्यं दातुमित्यर्थः । आ भर आनय । ओजिष्ठम् स्वेनौजसा बलेन तेजसा वा अतिशयेन ओजस्वि । पपुरि पृ पालन-पूरणयोः । यावत् पूरयितव्यम्[7] । सर्वस्य 'पूरयितृ इत्यर्थः'[8] । श्रवः अन्नं धनं वा । येन इमे हे चित्र ! विचित्र ! पूज्य ! वा वज्रहस्त ! वज्रो हस्ते यस्य स वज्रहस्तः तस्य सम्बोधनम् । रोदसी द्यावापृथिव्यौ ते अपि सुशिप्र ![9] शिप्रे हनू नासिके वा शिरःपट्टकौ[10] वा । सुहनो ! सुनस ! सुशिरः-पट्टक ! वा आ प्राः आपूरयसि । यदाभ्यां द्यावापृथिवीभ्याम् उभाभ्यामपि ददासीत्यर्थः । तल्लोकद्वयस्थेभ्यो देवेभ्यो मनुष्येभ्यश्च द्यावापृथिवीभ्यां चात्र तत्स्था देवमनुष्याश्च लक्ष्यन्ते[11] । द्यावापृथिवीभ्यां ददासीत्यर्थः ॥ ५ ॥

वेङ्कट० इन्द्र ! अतिशयेन प्रशस्यम् नः आ भर बलवत्तमम् पूरकम् [12]बलम् अन्नं वा । येन[12] द्यावापृथिव्यौ उभे चित्र ! वज्रहस्त ! आपूरितवानसि हे सुहनो ! ॥ ५ ॥

[13]इति चतुर्थाष्टके सप्तमाध्याये सप्तविंशो वर्गः[13] ॥

1 °शाश्च ता मूको. 2-2. तावद्भिस्तादृशैरेव मूको. 3-3. तावत् ताद्द॰ मूको. 4-4. वचनसुखेरयर्थः मूको. 5-5. सङ्ग्रामेष्वप्सु मूको. 6. °त्यर्थं वि॰ रपं; °त्यर्थ ल. 7 पूरयितव्ये मूको. 8-8. °यितृ- स्वमित्य॰ मूको. 9 लप्सु शिप वि॰. 10. पट्टको मूको. 11. लक्ष्यन्ते मूको. 12-12. °मत्तयेव मः मूको. 13-13. नास्ति मूको.

त्वामुग्रमवसे चर्षणीसहं राजन् देवेषु हूमहे ।
विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान्त्सुषहान् कृधि ॥६॥

त्वाम् । उग्रम् । अवसे । चर्षणिऽसहम् । राजन् । देवेषु । हूमहे ।
विश्वा । सु । नः । विथुरा । पिब्दना । वसो इति । अमित्रान् । सुऽसहान् । कृधि ॥ ६ ॥

स्कन्द० त्वाम् उग्रम् असुराणाम् उपरि क्रूरम् अवसे रक्षणायाऽस्माकः चर्षणीसहम् शत्रुमनुष्याणाम् अभिभवितारम् हे राजन्! दीप्त! ईश्वर! वा देवेषु निर्धारण एषा सप्तमी । देवानां मध्ये हूमहे आह्वयामः । अस्मत्रक्षकत्वात् त्वमेव धारयन्तासमर्थत्वाद् देवानां मध्ये पालनार्थं त्वामेव वयम् आह्वयामो नान्यं कञ्चिदित्यर्थः[1] । एतज्ज्ञात्वा विश्वा सर्वत्राऽत्र द्वितीयाबहुवचनस्याकारः सर्वान् । सु इत्ययं तु कृधीत्येतेन सम्बन्धयितव्यः । नः अस्माकम् विथुरा व्यथितैर्मार्थः । विथुरान् भयदीकान् 'पिब्दना पिब्दतिः' शब्दकर्मा क्षरणकर्मा वेति व्याचक्षते । पीडाहेतुक-क्वणिताविप्रायकारिणः क्षरितान्[3] वा । पीडनावस्थायोऽपि[4] भूलीभूतानित्यर्थः[5] । हे वसो! वसुः प्रशस्तवचनः अस्तीतिहितमात्मयंश्च । धनवन्![6] इत्यर्थः । अमित्रान् वैरिणः सुषहान् स्वभिभवान् सु कृधि सुष्ठु कुरु ॥ ६ ॥

वेङ्कट० त्वाम् उद्गूर्णम् रक्षणाय मनुष्याणां सोढारम् राजन्! देवानां मध्ये ह्वयामहे । विश्वानि सुष्ठु अस्माकम् कम्पयितॄणि पिब्दजानि रक्षांसि, तान्यपि शब्दवन्तः? इति 'उपब्दिः' ( निघ १,११ ) इति वाङ्नामसु दृष्टम्[7], अमित्रान्[8] च सुष्ठु सोढव्यान् कुरु ॥ ६ ॥

यदिन्द्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥ ७ ॥

यत् । इन्द्र । नाहुषीषु । आ । ओजः । नृम्णम् । च । कृष्टिषु ।
यत् । वा । पञ्च । क्षितीनाम् । द्युम्नम् । आ । भर । सत्रा । विश्वानि । पौंस्या ॥ ७ ॥

स्कन्द० हे इन्द्र! नाहुषीषु नहुषा मनुष्यास्तेषाम् अपत्यभूतासु तेषु या 'भवासु यत् आ' इत्युपसर्गात् नाहुषीष्विति चाधिकरणश्रुतेर्योग्यक्रियापदाध्याहारः । आहितम् । किम् । ओजः तेजः नृम्णम् च बलं च कृष्टिषु "मनुष्यजातिषु । यावत्यो" मनुष्यापत्यभूता मनुष्यलोके वा मनुष्यजातपक्षासु सर्वासु यत्तेजो बलं चेत्यर्थः । यत् वा वाशब्दश्चार्थे । यत् पञ्च क्षितीनाम् पञ्चानामपि मनुष्यजातीनां निषादपञ्चमानां वर्णानाम्[11] द्युम्नम् अन्नं धनं वा । यच्छब्दात् तच्छब्दोऽध्याहर्तव्यः । तत्सर्वम् आ भर आहर आनय । देहास्मभ्यमित्यर्थः । सत्रा सदा सत्यं वा विश्वानि पौंस्या सर्वाणि बलानि नाहुषीभ्योऽन्यत्रापि यानीति । अथवा नृम्णं चेत्यत्र सांयोगिकं बलम् अभिप्रेतम् । विश्वानि "पौंस्या इत्यत्र" "शारीरसामर्थ्यलक्षणमित्येवम् अपौनरुक्त्यम्" ॥ ७ ॥

---

१. किञ्चिदि° मूको. २-२. निशान्धनापिब्दनि मूको. ३. क्षरिता ("क्ष त्वि")न् मूको. ४. "नाव-स्थोऽपि मूको. ५. "भूताली" मूको. ६. धनवन्त मूको. ७. द्र. वेप १, १.२४ द्र. ८. 'मित्रान् इ कर्प. ९-९. भवासु ... आ मूको. १०-१०. 'यावि यावत्यो मूको. ११. वर्णानाम् मूको. १२-१२. पौरय मूको. १३-१३. "शरीर" मूको.

वेङ्कट० यत् इन्द्र! मनुष्यजातीयासु प्रजासु ओजः धनम् च भवति, यत् वा पञ्च[1] क्षितीनाम् द्युम्नम् अन्नं भवति[2], तत् सर्वम् अस्मभ्यम् आ भर महान्ति विश्वानि च बलानि ॥ ७ ॥

यद् वा तृक्षौ मघवन् द्रुह्यावा जने यत् पूरौ कच्च वृष्ण्यम् ।
अस्मभ्यं तद् रिरीहि सं नृषाह्येऽमित्रान् पृत्सु तुर्वणे ॥८॥

यत् । वा । तृक्षौ । मघऽवन् । द्रुह्यौ । आ । जने । यत् । पूरौ । कत् । च । वृष्ण्यम् ।
अस्मभ्यम् । तत् । रिरीहि । सम् । नृऽसह्ये । अमित्रान् । पृत्ऽसु । तुर्वणे ॥ ८ ॥

स्कन्द० अयमपि वा-शब्दश्चार्थ एव। यत् च तृक्षौ तृक्षुनाम्नि राजनि हे मघवन्! धनवन्! द्रुह्यौ द्रुह्युनाम्नि राजनि च आ अत्रापि पूर्ववदेव योग्यक्रियाध्याहारः। आहितम्। न च केवलयोस्तृक्षुद्रुह्य्वोरेव। किं तर्हि। जने जननाम्नि च राजनि। अथवा 'सकृच्छ्रुतवद्युते। द्रुह्यावा जने' इति द्रुह्योरेवैते विशेषणे, न राजान्तरप्रतिर्देशः"। जन इति मनुष्यनाम। सम्पूर्णा द्रोग्धरि मनुष्ये तृक्षुनाम्नि राजनीति। यत् पूरौ यच्च पूरुनाम्नि राजनि। कत् च कच्चिति 'किमोऽत्' (पा ५,३,१२) सप्तम्या अद्भावः। सप्तमी चात्र व्यत्ययेन प्रथमार्थे। चशब्दोऽपि चिच्छब्दार्थे। किञ्चिदित्यर्थः। अथवा पूरुशब्दो मनुष्यनाम। सप्तमी स्वार्थे एव। यत्र मनुष्ये कस्मिंश्चिदित्यर्थः। किं तत्। वृष्ण्यम् बलम्। अस्मभ्यम् तत् त्वम् रिरीहि रिणक्। यावान् मनुष्यः सर्वत्र यदित्यर्थः। किं तत्। वृष्ण्यम् बलम्। अस्मभ्यम् तत् त्वम् रिरीहि सम् रा दाने। सं रिरीहि सम्यक् देहि। किमर्थम्। नृषाह्ये शत्रुमनुष्याभिभवनाय। अमित्रान् ये चास्माकं वैरिणः तान् पृत्सु सङ्ग्रामेषु तुर्वणे हिंसितुं। किम्। सं 'रिरीहीत्यनुषङ्गः कर्तव्यः। वैरिणः[5] सङ्ग्रामेषु अस्मद्व्यतिरिक्तेनापि हिंसित्वा[6] हिंसयेत्यर्थः ॥ ८ ॥

वेङ्कट० यत् तृक्षुप्रभृतिषु त्रिषु राजसु बलं भवति, धनम् च, अस्मभ्यम् तत् सम् प्रयच्छ युद्धे अमित्रान् पूतनासु हिंसितुम् ॥ ८ ॥

इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ९ ॥

इन्द्र । त्रिऽधातु । शरणम् । त्रिऽवरूथम् । स्वस्तिऽमत् ।
छर्दिः । यच्छ । मघवत्ऽभ्यः । च । मह्यम् । च । यवय । दिद्युम् । एभ्यः ॥ ९ ॥

स्कन्द० हे इन्द्र! त्रिधातु धातवो रसाः। देवपितृमनुष्योपभोग्यैस्त्रिभी रसैरुपेतम् शरणम् गृहम् त्रिवरूथम् त्रियते व्याप्यते तद् वरूथम्। वर्षाहिमन्तनिदाघेषु त्रिषु यानि त्रिप्रकाराणि 'वासोऽवनादीनि तैस्त्रिभिः अभ्युपेतम्" स्वस्तिमत् विनाशरहितम् छर्दिः क्रियाशब्दोऽयम्, न गृहनाम, शरणमित्यनेन पौनरुक्त्यात्। छर्दिर्दीप्त्यर्थः। उच्छृदिर् दीप्तिदेवनयोरिति। त्वया समृद्धिलक्षणया दीप्त्या दीप्तम्। यच्छ देहि। कस्मै। मघवद्भ्यः च मह्यम् च सोमादिहविर्लक्षणेन धनेन

---

१. ञ्च मूको. २. भव त्व लपं. ३-३. "तेर्योम्येन यत्र मूको. ४. "वेश्रन मूको. ५-५. रिरी-त्यनुषङ्गः ... वैरि" मूको. ६. हिंसिता मूको. ७-७. "दीनि ... त्रिभि" मूको.

धनवन्तो मत्तोऽन्येऽपि तेभ्यश्च मह्यं च केवलस्तुतिकारिणेऽपि । यच्च पृथक् कुरु च । किम् । दिद्युम् दिद्युदिति वज्रनाम (द्र. निघ २,२०) । तस्यायं छान्दसस्तकारलोपः । वज्रम् आत्मीयम् आयुधम् । कुतः । एभ्यः पूर्वोक्तेभ्य एव । गृहं च देहि । वज्रं च एभिः असम्बद्धं कुरु । मा च एनान् वज्रेण हिंसीरित्यर्थः । अथवा द्यो अवखण्डने इत्यस्य दिद्युः । अवखण्डनम् एकदेशविनाशः । तेभ्यः पृथक् कुरु । एकदेशविनाशमप्येषां मा कार्षीरित्यर्थः ॥ ९ ॥

वेङ्कट० इन्द्र । त्रिधातुसन्धानम् गृहम् त्रिकक्ष्यम् अविनाशयुक्तम् दीप्तम् यच्छ हविष्मद्भ्यः पुत्रेभ्यः मह्यम् च । पृथक् कुरु वज्रम्[1] एभ्यः पुत्रेभ्यो मत्तश्च ॥ ९ ॥

ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नन्ति धृष्णुया ।
अध स्मा नो मघवन्निन्द्र गिर्वणस्तनूपा अन्तमो भव ॥ १० ॥

ये । गव्यता । मनसा । शत्रुम् । आऽदभुः । अभिऽप्रघ्नन्ति । धृष्णुऽया ।
अध । स्म । नः । मघऽवन् । इन्द्र । गिर्वणः । तनूऽपाः । अन्तमः । भव ॥ १० ॥

स्कन्द० ये गव्यता "शत्रूणां गा आहर्तुमिच्छता[2] मनसा शत्रुम् वैरिणम् आदभुः हिंसन्ति[3] मारयन्ति अभिप्रघ्नन्ति आभिमुख्येन च प्रघ्नन्ति । कश्चित् मारयन्ति कश्चित् ताडयन्तीत्यर्थः । धृष्णुया प्रथमाबहुवचनस्यायं याच् । धृष्णवः अभिभवनशीलाः । अध स्म इत्यवेतौ पदपूरणौ । यच्छब्दाच्च तच्छब्दोऽध्याहार्यः । अनयोरेव वा अन्यतरस्तच्छब्दार्थे । तेभ्यः नः अस्माकम् हे मघवन्![4] धनवन्! इन्द्र! गिर्वणः! स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः! तनूपाः शरीराणां[5] रक्षिता[6] अन्तमः सन्निकृष्टतमः भव । सर्वदा च सन्निकृष्टो भवेत्यर्थः ॥ १० ॥

वेङ्कट० ये[7] गामिच्छता[8] मनसा शत्रुम् आदभ्नुवन्ति[9] अभिभवन्ति धृष्टाः । तेष्वागतेषु अस्माकम् मघवन्! इन्द्र! गिर्वणः! शारीराणां रक्षकः सन् अन्तिकतमः भव ॥ १० ॥

[10]"इति चतुर्थाष्टके सप्तमाध्याये अष्टाविंशो वर्गः[10] ॥

अध स्मा नो वृधे भवेन्द्र नायमवा युधि ।
यदन्तरिक्षे पतयन्ति पर्णिनो दिद्यवस्तिग्ममूर्धानः ॥ ११ ॥

अध । स्म । नः । वृधे । भव । इन्द्र । नायम् । अव । युधि ।
यत् । अन्तरिक्षे । पतयन्ति । पर्णिनः । दिद्यवः । तिग्मऽमूर्धानः ॥ ११ ॥

स्कन्द० अध स्म इति पदपूरणौ । यदन्तरिक्षे इति यच्छब्दात् तदाशब्दोऽध्याहार्यः । अनयोरेव वाऽन्यतरः तदाशब्दस्यार्थे व्याख्येयः । तदा[11] नः अस्माकम् वृधे अथलक्षणायै वृद्ध्यै भव त्वम् । हे इन्द्र! [12]"तदेव च नायम्[12] नेतारम् । स्तुतीनां स्तोतारं मामित्यर्थः । अव पालय युधि युद्धे । कदा । उच्यते—यत् यदा अन्तरिक्षे पतयन्ति योद्धृभिः परस्परतः[13] क्षिप्यमाणा गच्छन्ति ।

1. वज्रम् मूको. 2-2. "च्छता" वि[1]. 3. निघ्नन्ति वि[1]. 4. नास्ति मूको. 5. शरीरिणाम् वि[1]. 6. रक्षिता वि[1]. 7. येन मूको. 8. गातामि° वि[1] अपं; "मिच्छत अपं. 9. नास्ति अपं. 10-10. नास्ति मूको. 11. यदा मूको. 12-12. देवनाम मूको. 13. °स्परतः ( "क वि[1] ) मूको.

पर्णिनः इषोर्वाजाः पर्णवद्भिर्नोयन्ते तद्वन्तः दिद्यवः 'दिद्युत्' ( निघ २,२० ) इति वज्रनाम । आयुधसामर्थ्याद् इहेषो प्रयुक्तम् । छान्दसत्वाच्च तकारलोपः । इषव इत्यर्थः । अथवा दो अवखण्डने इत्यस्यैतद्रूपम् । अवखण्डयितारः । -व्यद्वार[1] इषव इत्यर्थः । तिग्ममूर्धानः तीक्ष्णाग्राः । 'इषवो हि तोमरकर्णिकायसत्वाद् भवन्ति' तीक्ष्णाग्राः ॥ ११ ॥

वेङ्कट० अथ खलु अस्माकम् वर्धनाय भव इन्द्र! । नेतारम् स्तुतीनाम् रक्ष युद्धे, यदा अन्तरिक्षे गच्छन्ति पत्रयुक्ताः इषवः[1] तिग्मशिरसः ॥ ११ ॥

यत्र॒ शूरा॑सस्त॒न्वो॑ वितन्व॒ते प्रि॒या शर्म॑ पितॄ॒णाम् ।
अध॑ स्मा यच्छ त॒न्वे॒३॒ तने॑ च छ॒र्दिर॒चित्तं॑ या॒वय॒ द्वेषः॑ ॥ १२ ॥

यत्र॑ । शूरा॑सः । त॒न्वः॑ । वि॒ऽत॒न्व॒ते । प्रि॒या । शर्म॑ । पि॒तॄ॒णाम् ।
अध॑ । स्म॒ । य॒च्छ॒ । त॒न्वे॑ । तने॑ । च॒ । छ॒र्दिः । अ॒चित्त॑म् । य॒वय॑ । द्वेषः॑ ॥ १२ ॥

स्कन्द० यत्र इति निमित्त एषा सप्तमी । प्रयोजनस्य च निमित्तत्वम् । यस्मिन्निमित्ते । यदर्थम् शूरासः विक्रान्ताः तन्वः स्वशरीराणि वितन्वते विविधं विस्तारयन्ति । क्षोदनादिना स्थूलानि पुष्टयोग्यानि कुर्वन्ति[2] इत्यर्थः । अथवा शत्रुशरीराणि वितन्वते विगतविस्ताराणि कुर्वन्ति । छिन्दन्तीत्यर्थः । यदर्थमुत्कृष्टं तदेतद् इयं[3] शूराः कुर्वन्ति । तेन चोत्कृष्टत्वं लक्ष्यते । यत्र प्रिया द्वितीयैकवचनस्यायम् आकारः । प्रियम् शर्म गृहम् । कस्य । पितॄणाम् । नित्यं यत्नेऽत्यत इत्यर्थः । यत्र हि नित्यंनित्यं पित्र्यं कर्म क्रियते तत् पितॄणां प्रियं भवति, नान्यत् । अध स्म इत्यनयोरौ पदपूरणौ । यच्छन्दाच्च तच्छब्दोऽध्याहार्यः । अनयोरेव वाऽन्यतरस्तच्छब्दस्यार्थे वर्णयितव्यः । तद् यच्छ देहि । कस्मै । तन्वे मम शरीराय तने च तनयाय च । मह्यं पुत्रेभ्यश्चेत्यर्थः । किं तत् । छर्दिः गृहम् । कर्मैश्वर्येव वा गृहस्य प्रकृतत्वात् क्रियाशब्दोऽयम् । छर्दिर्दीप्त्यर्थः, छृदिर् दीप्तिदेवनयोरिति । तया समृद्धिलक्षणया दीप्त्या दीप्तम् । किञ्च अचित्तम् चित्तरहितं[4] प्रमुषितचित्तं च "यावय । पृथक्" कुरु । दूरं च नयेत्यर्थः । द्वेषः द्वेष्टॄन् अस्माकम् । किं तत् । शत्रुजातं वा रक्षआदि वा ॥ १२ ॥

वेङ्कट० यत्र शूराः शरीराणि वितन्वते प्रियाणाम् आवासस्थानानि जनकानाम् । अथ खलु यच्छ अस्माकम् शरीराय च पुत्राय च दीप्तिं त्रिधातुमिकाम् । "चित्तरहितम् अचिन्तितोपनतं" शत्रुमुपस्थितम् पृथक् कुरु रक्षः ॥ १२ ॥

यदि॑न्द्र॒ सर्गे॒ अर्व॑तश्चो॒दया॑से महाध॒ने ।
अ॒स॒म॒ने अध्व॑नि वृजि॒ने प॒थि श्ये॒नाँ इ॑व श्रवस्य॒तः ॥ १३ ॥

---

1. व्यदवारे मूको. 2-2. यच्चो हिनो ( 'नोऽभिहितो वि'. ) भरकर्णिकायसत्वा ... इवनि हि मूको. 3. इयः मूको. 4. तदेमतद्वं मूको. 5. तस्मै वि'. 6. त्रिधातुरित्ति मूको. 7-7. नास्ति मूको.
8-8. चत्तरहितमचिचिन्तितोपत वि' कर्पः चत्तरहितमचिन्तितोपनतं क.

यत् । इन्द्र । सर्गे । अर्वतः । चोदयासे । महाऽधने ।
असमने । अध्वनि । वृजिने । पथि । श्येनान्ऽइव । श्रवस्यतः ॥ १३ ॥

स्कन्द० यत इति द्वितीयाबहुवचनस्य 'सुपा सुलुक्' ( पा ७,१,३९ ) इति लुक् । यान् हे इन्द्र! सर्गे सर्गशब्दो वेगवचनः । तृतीयार्थे च सप्तमी । सर्गेण वेगेन अर्वतः अश्वान् चोदयासे प्रचोदयसि त्वम् महाधने सङ्ग्रामे । न च केवलं सङ्ग्रामे । किं तर्हि । असमने अध्वनि असमने इति मध्यदेशोनार्थस्येदं रूपम् । असमनेऽसंविज्ञाने चाध्वनि मार्गे । समन्धकारे च मार्ग इत्यर्थः । अथवा 'समनम्'( निघ २,१७ ) इति सङ्ग्रामनाम । असमने असङ्ग्रामयोग्ये अध्वनि अन्तरिक्षे । "'अध्वा' ( निघ १, ३ ) इति" अन्तरिक्षनामसु पठितम् । सङ्ग्रामे च निराधारत्वाच्च असङ्ग्रामयोग्ये अन्तरिक्षे इत्यर्थः । अथवा असमनेऽध्वनीत्येतत् महाधनस्यैव विशेषणम् । निराधारत्वाच्च असङ्ग्रामयोग्ये अन्तरिक्षे यः सङ्ग्रामः तत्रेति । वृजिने पथि कुटिले मार्गे । कथं च पुनश्चोदयसि । श्येनान् इव श्रवस्यतः यथा श्येनान् अन्नोऽन्नमिच्छतः महता वेगेन प्रचोदयेत् । कः । सामर्थ्यात् तेषामेव आत्मा । तद्वत् । यानिति यच्छब्दप्रयोगात् तच्छब्दोऽध्याहार्यः, उत्तरया च ऋचा एकवाक्यता । यान् प्रचोदयसि तान् ॥ १३ ॥

वेङ्कट० यत् इन्द्र! उद्युक्ते प्रवृत्ते सङ्ग्रामे अश्वान् चोदयसि असमाने । 'अध्वा' ( निघ १,३ ) इति अन्तरिक्षनाम । महति अन्तरिक्षे 'मनुष्यैस्तरीतुम् अशक्ये' । पथ्याः पतन्त्यस्मिन्निति । श्येनान् इव यामिषम् इच्छतः पततस्तस्मिन् युद्ध इति ॥ १३ ॥

सिन्धूँरिव प्रवण आशुया यतो यदि क्लोशमनु ष्वणि ।
आ ये वयो न वर्वृतत्यामिषि गृभीता बाह्वोर्गवि १४ ॥

सिन्धून्ऽइव । प्रवणे । आशुऽया । यतः । यदि । क्लोशम् । अनु । स्वनि ।
आ । ये । वयः । न । वर्वृतति । आमिषि । गृभीताः । बाह्वोः । गवि ॥ १४ ॥

स्कन्द० 'सिन्धवः' ( निघ १,१३ ) इति नदीनाम । यथा नद्यः[१] प्रवणे निम्ने अश्वाहृता गच्छेयुस्तद्वत् । आशुया तृतीयैकवचनस्यायं याच् । शीघ्रया गत्या यतः गच्छतः[२] । यदि क्लोशम् । यदीति पदपूरणे वा, तच्छ्रुतिसामर्थ्यादेव वा शक्नोमि तत इत्यनयोरध्याहारः । यदि शक्नोमि ततः क्रोशे पुरा आह्वाने 'ह्रस्वत्वमेतत् रूपम् । कपिलकादित्वाल्लत्वम्' ( द्र० पावा ८,२,१८ ) । क्रोशामि आह्वयामि । अथ द्वितीयेनार्धेन तद्वत इन्द्रस्यैवाह्वानम् उच्यते । कं प्रति आह्वयसि । उच्यते — अनु स्वनि द्वितीयार्थे सप्तम्येषा । अनु स्वनं[३] स्तुतिलक्षणं शब्दं प्रति । आत्मीयाः स्तुतीः प्रतीत्यर्थः । किं ये दुर्बेन्द्रपक्षाः । उच्यते — आ ये वयः न वर्वृतति । आ वर्वृतति 'वर्तते' (निघ २,१४) इति गतिकर्मा । अत्यर्थम् आवर्तन्ते यत्र सङ्ग्रामं वा अत्यर्थम् आगच्छन्ति ये । कथम् । वयो न पक्षिण इव श्येनादयः

---

१. एवं मूको २-२. ऋकति मूको. ३-३. स्तौ° मूको. ४. नद्या. मूको. ५. ग···तः मूको.
६-६. °स्यैतद् ··· स्त्वा° मूको. ७. स्व··· मूको.

आमिषि आमिषे मांसे । गृभीताः गृहीताः । केन । बाह्वोः तृतीयार्थे सप्तम्येषा । बाहुभ्याम् । क । गवि गोशब्दोऽत्राश्वरश्मिवचनः । अश्वरश्मौ प्रग्रहे । अथवा गवि इति इयमपि तृतीयार्थे सप्तमी । गृहीत्वा बाहुभ्याम् अश्वप्रग्रहेणेति ॥ १४ ॥

वेङ्कट० सिन्धून् इव निम्ने शीघ्रम् गच्छतः तवाश्वान् यदि अहम् अनु क्रोशामि । तेषाम् गमननिमित्ते स्वने[1] सति ये अश्वाः पक्षिणः इव आ वर्तन्ते आमिषार्थे शत्रुजयार्थम् गमने बाह्वोः गृहीताः रश्मिभिः, 'ग्रीवायां बद्धो अपिकक्ष आसनि' ( ऋ ४,४०,४ ) इत्युक्तम्, पूर्वत्र सम्बन्धः ॥ १४ ॥

[2]इति चतुर्थाष्टके सप्तमाध्याये एकोनत्रिंशो वर्गः[2] ॥

[ ४७ ]

[3]गर्गो भारद्वाज ऋषिः । इन्द्रो देवता, आद्यानां पञ्चानां सोमः, विंश्या देवभूमिबृहस्पतीन्द्राः, द्वाविंश्यादिपञ्चविंशत्यन्तानां सार्ञ्जयः प्रस्तोकः ( दानस्तुतिः ), षड्विंश्याद्यष्टाविंश्यन्तानां रथः, एकोनत्रिंशीत्रिंश्योर्दुन्दुभिः, एकत्रिंश्या दुन्दुभीन्द्रौ । त्रिष्टुप् छन्दः, एकोनविंशी बृहती, त्रयोविंश्यनुष्टुप्, चतुर्विंशी गायत्री, पञ्चविंशी द्विपदा त्रिष्टुप्, सप्तविंशी जगती[3] ।

स्वादुष्किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायम् ।
उतो न्व१स्य पपिवांसमिन्द्रं न कश्चन सहत आहवेषु ॥ १ ॥

स्वादुः । किल । अयम् । मधुऽमान् । उत । अयम् । तीव्रः । किल । अयम् । रसऽवान् । उत । अयम् । उतो इति । नु । अस्य । पपिऽवांसम् । इन्द्रम् । न । कः । चन । सहते । आऽहवेषु ॥ १ ॥

स्कन्द० 'स्वादुर्गर्गस्तु सूक्तभाक्' । 'स्वादु' इत्येतस्य गर्गः 'सूक्तभाक् सूक्तं भजते'[1] । गार्गस्यैतद् आर्षमित्यर्थः । " 'स्वादुष्किलायम्' इति पञ्च[4] सौम्यः" । स्वादुष्किलायमित्येताः पञ्च ऋचः सोमदेवताः । स्वादुः किल अयम् किलेत्ययं निपातो विद्याप्रकर्षे वर्तते । विद्याप्रकर्षेश्च ज्ञानस्य विप्रकर्षो दूरत्वम् । किं तत् । परोक्षम् आगमिकत्वं । एतदुक्तं भवति — नमैतद् आप्रत्यक्षम् । अन्ये त्वेवं[5] ब्रुवन्ति — स्वादुः मृष्टोऽयं सोम इति । मधुमान् उत अयम् मधु स्वादुविशेषः[6] तद्वान् मधुमान् । उतशब्दोऽप्यर्थे । [7]तिक्तरसोऽपि मधुरोऽप्ययमित्यर्थः । तीव्रः किल अयम् तीव्रशब्दः तिक्तवचनः कटुवचनो वा । तिक्तरसोऽपि वा किलायं कटुकरसो वा[7] । रसवान् उत अयम् भूम्यर्थे मतुप् । बहुरसोऽप्ययम् । उतो नु वा किलायं कटुकरसो वा । रसवान् उत अयम् भूम्यर्थे मतुप् । बहुरसोऽप्ययम् । उतो नु उ-शब्दश्चार्थे । अपि च अस्य द्वितीयार्थे षैषा षष्ठी[8], 'षष्ठीनिर्देशाद् वा एकदेशमिति'[9] शेषः । एवं सोमं सोमस्य एकदेशं वा स्वांशलक्षणम् पपिवांसम् पीतवन्तम् इन्द्रम् न कः चन न कश्चिदपि सहते अभिभवति आहवेषु सङ्ग्रामेषु ॥ १ ॥

वेङ्कट० गर्गो भारद्वाजः । प्रथमा निगदसिद्धा ॥ १ ॥

अयं स्वादुरिह मदिष्ठ आस यस्येन्द्रो वृत्रहत्ये ममाद ।
पुरूणि यश्च्यौत्ना शम्बरस्य वि नवतिं नव च देह्यो३ हन् ॥ २ ॥

1. स्वत्रे मूको. 2-2. नास्ति मूको. 3-3. °भाक् क्ते मूको. 4. पञ्च मूको. 5. °व मूको. 6. स्वादुवि° मूको. 7-7. तीव्ररसोऽपि वा किलायं मूको. 8. नास्ति मूको. 9-9. °देशात्वेनैवशेष° मिति मूको.

अयम् । स्वादुः । इह । मदिष्ठः । आस । यस्य । इन्द्रः । वृत्रऽहत्ये । ममाद ।
पुरूणि । यः । च्यौत्ना । शम्बरस्य । वि । नवतिम् । नव । च । देह्यः । हन् ॥ २ ॥

स्कन्द० अयम् सोमः स्वादुः मृष्टः इह लोके अस्मद्यज्ञे वा मदिष्ठः अतिशयेन मदकरः आस लडर्थेऽपि लिट् । अस्ति विद्यते । यस्य तृतीयार्थे षष्ठ्येषा, षष्ठीनिर्देशाद् वा एकदेशेनेति शेषः । येन सोमेन अस्य वा सोमस्य एकदेशेन स्वांशलक्षणेन इन्द्रः वृत्रहत्ये वृत्रहननाय ममाद माद्यति । यः किं कृतवान् । उच्यते—पुरूणि बहूनि यः च्यौत्ना 'च्यौत्नम्' ( निघ २,९ ) इति बलनाम सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । च्यौत्नवन्ति बलवन्ति स्थानानि । अथवा तृतीयैकवचनस्य अयम् आकारः । च्यौत्नेन बलेन शम्बरस्य शम्बरनाम्नोऽसुरस्य स्वभूतानि । कानि । पुराणि । कुत एतत् । साकाङ्क्षत्वात्, 'अहं पुरो मन्दसानो व्यैरम्' ( ऋ ४,२६,३ ) इत्यादिषु च मन्त्रेषु शम्बरस्य पुरां हननदर्शनात् । कियन्ति पुराणि । नवतिम् नव च एकोनशतम् देह्यः दिह उपचये । सर्वप्रकारेण उपचयेन उपचिताः इन्द्रः वि हन् विहतवान् विनाशितवान् ॥ २ ॥

वेङ्कट० अयम् अद्भुतः इह मदयितृतमः भवति । येन इन्द्रः वृत्रहत्ये ममाद । बहूनि यः बलानि शम्बरस्य वि जघान, नव नवतिम् च उपचिताश्च[1] पुरीः ॥ २ ॥

अयं मे पीत उदियर्ति वाचमयं मनीषामुशतीमजीगः ।
अयं षळुर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे ॥ ३ ॥

अयम् । मे । पीतः । उत् । इयर्ति । वाचम् । अयम् । मनीषाम् । उशतीम् । अजीगरिति ।
अयम् । षट् । उर्वीः । अमिमीत । धीरः । न । याभ्यः । भुवनम् । कत् । चन । आरे ॥३॥

स्कन्द० अयम् सोमः मे मम पीतः सन् उत् इयर्ति । इयर्तिर्गतिकर्मा । सामर्थ्याच्चेहान्तर्णीतण्यर्थः । ऊर्ध्वं गमयति । महतीं स्तुतिकरणसमर्थां करोतीत्यर्थः । काम् । वाचम् । अयम् एव मनीषाम् प्रज्ञाम् उशतीम् स्तुतिकरणं कामयमानाम् अजीगः । जिगर्तिर्गिरतिकर्मा । गिरतीव । महान्तमपि ममूता करोतीत्यर्थः । अथवा मनीषां स्तुतिं स्वफलं कामयमानां निगिरतीव । स्तुतिमपि महतीं करोतीत्यर्थः । अथवा जिगर्तिर्गृह्णातिकर्मा । स्तुतिं कामयमानां गृह्णाति शृणोति । यत् फलं स्तुतिः कामयते तत्साधयतीत्यर्थः । अयम् एव षट् षट्सङ्ख्याकाः उर्वीः विस्तीर्णाः अमिमीत निर्मितवान् धीरः प्रज्ञावान् कर्मवान् वा । कतमाः पुनरेताः षट् उर्व्यः । 'द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च' (आश्रौ ६,२२,१) । कुत एतत् । सामिधेनीनिगदे—'षण्मोर्वीरंहसः पान्तु' ( आश्रौ १,२,१ ) इत्युपक्रम्य एतासां निगमदर्शनात् । कथं पुनः सोमः षडुर्वीर्निर्मितवान् । इत्थमस्य जगतो निर्माणस्य धर्माधर्मापेक्षत्वात्तयोश्च सोमायत्तत्वात्, वृष्टिपारम्पर्येण वा । या कीदृश्य षट् उर्व्यः । उच्यते—न याभ्यः भुवनम् भूतजातम् कत् चन कदिति 'किमोऽत्' ( पा ५,३,१२ ) इति सप्तम्या अदायः । सप्तमी चात्र प्रथमार्थे । आरे दूरे । यासां सर्वगतत्वात् सर्वभूतजातम् अन्तर्गतं न किञ्चिदपि दूर इत्यर्थः ॥ ३ ॥

१. °ताश्च पुरी.

स्कम्भस्य सुखमुच्यते । इह [1]प्राधान्यसामान्याद् अग्रे प्रयोगः[1] । उपसामग्रे । यावदुषसो न प्रवर्तन्ते । प्राग् गर्जितशब्दादित्यर्थः । पूर्वं ह्युदक जायते[2] मेघान्तर्गतम् । पश्चात्पाटनाय स्फोट्यते । स्फोटनवेलायां च गर्जितशब्दा भवन्ति । अत एवमुच्यते—उपसामग्रे इति । सोमहेतुकश्चायम् इन्द्रस्य व्यापारस्तद्धेतुकत्वात् सोमस्यैवापदिश्यते । अयम् एव महान् महत्त्वगुणः महता स्कम्भनेन दृभि स्कभि प्रतिबन्धे । प्रतिबन्धनेन उत् द्याम् अस्तभ्नात् उदस्तभ्नात् । ऊर्ध्वं यस्मिन् स्थाने धारितवानित्यर्थः । कथम् । धर्माधर्मायत्तत्वाद् द्युस्कम्भनस्य । तयोश्च सोमायत्तत्वात् । कीदृशोऽयम् । वृषभः वर्षिता मरुत्वान् देवैरेव मरुद्भिरिन्द्रद्वारेण वा तद्वान् ॥ ५ ॥

वेङ्कट० अयम् स्तम्भयति[3] कर्मणे वा चित्रदर्शनम् उदकम् शुक्लायासस्यामाम्[4] महाम् अनीके । महोऽस्य[5] पर्जन्यो वर्षति । अयम् महान् महता अन्तरिक्षाख्येन स्कम्भनेन[6] उत् अस्तभ्नात् द्युलोकम् पशुप्रवृत्तैरन्तरिक्षमित्युद्धानिति । सौम्य समाप्ताः ॥ ५ ॥

[7]इति चतुर्थाष्टके सप्तमाध्याये त्रिंशो वर्गः.[7] ॥

धृषत् पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम् ।
माध्यंदिने सवन आ वृषस्व रयिस्थानो रयिमस्मासु धेहि ॥ ६ ॥

धृषत् । पिब । कलशे । सोमम् । इन्द्र । वृत्रऽहा । शूर । समऽअरे । वसूनाम् ।
माध्यंदिने । सवने । आ । वृषस्व । रयिऽस्थानः । रयिम् । अस्मासु । धेहि ॥ ६ ॥

स्कन्द० 'अत ऊर्ध्वमनादिष्टम्' इत्यस्मादेशात् परा ऋच ऐन्द्र्यः 'आगव्यूति क्षेत्रम्' इत्यतः (ऋ ६,४७,२०) । धृषत् धृष्टं प्रगल्भं निश्शङ्कम् पिब कलशे । कलशशब्दोऽयं द्रोणकलशे कलशस्थानीये वा ग्रहे वर्तते । पात्रे[8] च कलशस्याधिकरणत्वस्य भावात्[8] एकवाक्यतासिद्ध्यर्थं यत्पदमध्याहार्यम् । द्रोणकलशे कलशस्थानीये वा ग्रहे यत्तमिति । अथवा तृतीयार्थे सप्तमीयम् । द्रोणकलशेन कलशस्थानीयेन वा ग्रहेणेति । किं पिबामि । उच्यते—सोमम् हे इन्द्र! । सोऽहं कीदृशः । उच्यते—वृत्रहा वृत्रस्यासुरस्य शत्रूणां वा हन्ता । हे शूर! समरे सङ्ग्रामे वसूनाम् धनानां लब्धेऽधिपति । धनार्थो य सङ्ग्रामस्तत्रेत्यर्थः । क्व पिबामि । उच्यते—माध्यंदिने सवने माध्यन्दिनसवनाख्ये यज्ञाङ्गे । [9]मा च अहव पा[9] । किं तर्हि । आ वृषस्व आसिञ्चस्व । बहुसोमं पिबेत्यर्थः । आसिच्य च रयिस्थान[10] सर्वधनानां स्थानभूत. त्वम् रयिम् धनम् अस्मासु धेहि स्थापय । धनम् अस्मभ्यम् देहीत्यर्थः ॥ ६ ॥

वेङ्कट० धृष्टम् पिब कलशे स्थितम् सोमम् इन्द्र! । शत्रुहा शूर! सङ्ग्रामे वसूनाम् अर्थाय प्रवृत्ते । माध्यंदिने सवने आ सिञ्चस्व जठरे सोमम् । गवां रयिस्थानभूत त्वम्[10] रयिम् अस्मासु धेहि ॥ ६ ॥

इन्द्र प्र णः पुरएतेव पश्य प्र नो नय प्रतरं वस्यो अच्छ ।
भवा सुपारो अतिपारयो नो भवा सुनीतिरुत वामनीतिः ॥ ७ ॥

१-१. °न्यायमयोग मूको. २. °ते वा मूको. ३ स्तम्° मूको ४. शुक्लशा° वि° हपं ५ स्कन्द° मूको. ६-६. नास्ति मूको. ७-७. नास्ति मूको. ८. °धिकरणत्वात्° मूको. ९-९ च ··· पा: मूको. १०. °स्थानभू° वि° छ, ओमून° हपं.

इन्द्र । प्र । नः । पुरएताऽइव । पश्य । प्र । नः । नय । प्रऽतरम् । वस्यः । अच्छ ।
भव । सुऽपारः । अतिऽपारयः । नः । भव । सुऽनीतिः । उत । वामऽनीतिः ॥ ७ ॥

स्कन्द० हे इन्द्र! नः तादर्थ्ये चतुर्थीयम्। अस्माकमर्थाय पुरएता इव पुरोगामीव प्र पश्य निरीक्षस्व त्वम्। कम्। सामर्थ्यात् पन्थानम्। यथा राज्ञोऽन्यस्य वा कस्यचिद् अग्रगामी तस्यार्थाय गमनयोग्योऽयं न वेति पूर्वं पन्थानं निरीक्षेत तद्वन्निरीक्षस्वेत्यर्थः। किञ्च भव त्वम् सुपारः पॄ पालनपूरणयोः। सुष्ठु पालयिता अतिपारयः शोभनश्च पूरयिता कामैः नः अस्माकम्। किञ्च भव त्वम् अस्माकम् सुनीतिः। नीतिरिति कर्तरि क्तिच् नयम्। शोभनो नेता उपायोपदेशेन प्रवर्तयिता सुनीतिः। उत-शब्दोऽप्यर्थे। वामा वननीया सम्भजनीया नीतिरुपायोपदेशो यस्य सः वामनीतिः। सम्भजनीयोपदेशोऽपि भवेत्यर्थः ॥ ७ ॥

वेङ्कट० इन्द्र! प्र पश्य अस्मान् पुरोगन्तेव। प्र नय च अस्मान् अत्यन्तम् अभ्युदयम् प्रति। भव सुष्ठु पारयिता अस्माकम्, यस्त्वम् अतिपारयः भवसि स्तोतॄणाम्। सोपसर्गोऽपि[1] श. (तु. पा ३, १,१३८) छान्दसः। भव सुनयनः अपि वननीयनयनः[2] ॥ ७ ॥

उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।
ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता ॥ ८ ॥

उरुम् । नः । लोकम् । अनु । नेषि । विद्वान् । स्वःऽवत् । ज्योतिः । अभयम् । स्वस्ति ।
ऋष्वा । ते । इन्द्र । स्थविरस्य । बाहू इति । उप । स्थेयाम । शरणा । बृहन्ता ॥ ८ ॥

स्कन्द० उरुम् विस्तीर्णम् नः अस्मान् लोकम् स्वर्गाख्यम् इन्द्रलोकाख्यं वा अनु नेषि। अन्वित्ययं पश्चादर्थे। नेषीत्यपि लोडर्थे लट्। पश्चान्नय। कस्य पश्चात्। सामर्थ्याद् मरणस्य। मरणोत्तरकाले प्रापे। विस्तीर्णं स्वर्गम् इन्द्रलोकं वाऽस्मान्नयेत्यर्थः। विद्वान् जानन्। किम्। सामर्थ्याद् युष्मत्कृताम् सर्वं अस्माकम्। कीदृशं लोकम्। स्वर्वत् व्यत्ययेनात्र नपुंसकता। स्वर्वन्तम्। यावदभिलष्यते[3] सर्वं यत्रास्तीत्यर्थः। ज्योतिः प्रकाशरूपम् अभयम् भयवर्जितम् स्वस्ति अविनाशं विनाशवर्जितम्। यत्र च प्राप्तानाम् अस्माकम् अभयं स्वस्ति च भवतीति तद्धेतुत्वात् स एवाभयं स्वस्ति चोच्यते। अथवा नैतानि सामानाधिकरण्येन लोकविशेषणानि। किं तर्हि। यत्तच्छब्दा-ध्याहृत्यैकवाक्यतां नेतव्यानि। यत्र स्वर्वत् ज्योतिः। स्वस्तीत्यादिरूप[4] उच्यते। तेन अत्रो तादृग् ज्योतिरभयं चाविनाशश्च तं लोकं नयेति। किञ्च ऋष्वा महन्नामैतत् (तु. निघ ३,३)। ऋष्वौ महान्तौ प्रभावेन ते तव स्वभूतौ हे इन्द्र!। कीदृशस्य। स्थविरस्य स्थूलस्य[5] वृद्धस्य वा। बाहू। उप स्थेयाम। उपशब्दः सामीप्ये। बाह्वोः समीपे तिष्ठेम। नीता अपि स्वर्गम् इन्द्रलोकं वा वयं सन्निकृष्टास्तव भवेमेत्यर्थः। अथवा उपपूर्वस्तिष्ठतिः स्तुत्यर्थः। मरणोत्तरकालं तव स्वर्गम् इन्द्रलोकं वा नय। जीवन्तोऽपि तव बाहू उपस्थेयाम स्तुयामेत्याशास्ते।

---

१. °षोति मूको. २. °नय मूको. ३. °स्तस्थे मूको. ४-४. ज्योतिस्तमः° ति°.
५. नास्ति मूको.

बाहूपस्थानेन चात्र तद्वत इन्द्रस्यैवोपस्थानं लक्ष्यते। कीदृशौ बाहू। शरणा शॄ हिंसायाम्। शत्रूणां हिंसितारौ शरण्यौ वा बृहन्ता महान्तौ परिमाणतः। ऋष्वावित्यनेन प्रभावमहत्त्वमुच्यते। बृहन्तावित्यनेन परिमाणमहत्त्वम्[1]। एवम् अनयोरपौनरुक्त्यम् ॥ ८ ॥

वेङ्कट० उरुम् विस्तीर्णम् स्थानम् अनु नय अस्मान् जानन्[2] अभ्युदययुक्तम्[3] विनाशरहितम्[4] द्योतमानम्। अभयम् च प्रापय। दर्शनीयौ तव इन्द्र! स्थविरस्य बाहू वयम् उप स्थेयाम समाश्रिता भूत्वा हिंसकौ महान्तौ ॥ ८ ॥

वरिष्ठे न इन्द्र वन्धुरे धा वहिष्ठयोः शतावन्नश्वयोरा ।
इषमा वक्षीषां वर्षिष्ठां मा नस्तारीन्मघवन् रायो अर्यः ॥ ९ ॥

वरिष्ठे । नः । इन्द्र । वन्धुरे । धाः । वहिष्ठयोः । शतऽवन् । अश्वयोः । आ ।
इषम् । आ । वक्षि । इषाम् । वर्षिष्ठाम् । मा । नः । तारीत् । मघऽवन् । रायः । अर्यः ॥९॥

स्कन्द० वरिष्ठे उरुतमे विस्तीर्णतमे नः अस्मान् हे इन्द्र! वन्धुरे रथस्थोऽङ्गैर्वन्धुर इष्यते। तत्र धाः 'अश्वयोरा' इत्यस्यार्धर्चस्य आकारस्य [5]अनेनाख्यातेन सह सम्बन्धः[6]। आ धाः स्थापय। स्वर्गम् इन्द्रलोकं वा नेतुं विस्तीर्णतमे स्वरथस्योद्धी मरणोत्तरकालम् अस्मान् स्थापयेत्यर्थः। किं केवले एव। न[7]। किं तर्हि। वहिष्ठयो वोढृतमयोश्च। कयोः। उच्यते— शतवन्! अश्वशतेन रथशतेन धनशतेन वा युक्त![8] अश्वयो आत्मीययोर्हयोरश्वयोः। यथा रथेऽश्वयोश्च सुस्थिता वयं गच्छामइत्था कुर्या इत्यर्थः। किंच जीवतामप्यस्माकम् इषम् अन्नम् आ वक्षि आवह प्रापय। देहीत्यर्थः। अथवा वरिष्ठे न इन्द्र इत्यत्र नः इति तृतीयं सार्थ्यचतुर्थी। अस्माकमपीय स्वरथस्योद्वावहयोश्च रथापय। किम्। सामर्थ्याद् इषम्। अस्मभ्यम् दातुं रथेऽश्वयोश्चेयम् आरोपयेत्यर्थः। आरोप्य चावह आनयैनाम् इषमिति। कीदृशीम्। इषाम् वर्षिष्ठाम् इति। निर्धारणे षष्ठी। अन्नानां मनुष्यसम्बन्धिनां मध्ये वृद्धतमां प्रभूततमाम्। मा च नः अस्मान् तारीत् तारीः हिंसीः त्वं हे मघवन्! धनवन्! मा चास्मानेव केवलान्। किं तर्हि। रायः धनानि चास्माकम्। अथवा मा नस्तारीदिति नः इत्येषा षष्ठ्येव धनविशेषणार्था। माऽस्माकम् धनानि हिंसीरिति। यः कीदृशः। अर्यः ईश्वरो महत्त्वमिति ॥ ९ ॥

वेङ्कट० उरुतमे इन्द्र! अस्मान् रथस्य फलकसङ्घाते धारय। तथा वोढृतमयोः अश्वयोः च। शतधन! शतधनवान्! वा अन्नम् आ वह 'अन्नानाम् वर्षिष्ठम्'। मा अस्माकम् हिंसीः मघवन्! धनानि[9] स्वामी ॥ ९ ॥

इन्द्र मृळ मह्यं जीवातुमिच्छ चोदय धियमयसो न धाराम् ।
यत् किं चाहं त्वायुरिदं वदामि तज्जुषस्व कृधि मा देववन्तम् ॥ १० ॥

1. °महत्त्वम् मूको. 2. ज° मूको. 3. °क मूको. 4. °त मूको. 5-6. °नाख्या सम्बन्धः (°द्धः ति° ) मूको. 6. न ··· ति°. 7. नास्ति मूको. 8-8. °श्वयोर्यम् वि° ख, मन्त्रानन्वयि द्रष्टं. 9. धना° मूको.

इन्द्रं । मृळ । मह्यम् । जीवातुम् । इच्छ । चोदयं । धियम् । अयसः । न । धाराम् ।
यत् । किम् । च । अहम् । त्वाऽयुः । इदम् । वदामि । तत् । जुषस्व । कृधि । मा ।
देवऽवन्तम् ॥ १० ॥

स्कन्द० हे इन्द्र । मृळ सुखय । किम् । सामर्थ्यात् माम् । मम सुखं कुर्वित्यर्थः । मह्यम् तादर्थ्ये एषा चतुर्थी । मदर्थं जीवातुम् जीविकाम् इच्छ इच्छया चात्र तत्पूर्वकत्वात् करणं लक्ष्यते । जीवनोपायं च मम कुर्वित्यर्थः । अथवा जीवितम् एव जीवातुः उच्यते । मदर्थं जीवितं च इच्छ । मां दीर्घायुषं च कुर्वित्यर्थः । चोदय धियम् आत्मीयाम् । कथम् । अयसः न धाराम् अयःशब्देन प्रकृतिशब्देन तद्विकारस्य खड्गकुठारादेरभिधानम् । लोहमयस्य खड्गकुठारादेरिव[1] धाराम् । शीघ्रमेवम् प्रतिपदस्व[2] धम्मयोक्तमित्यर्थः । अथवा चोदय प्रज्ञाम् अस्मदीयाम् अयोमयखड्गकुठारादिधाराम् इवेति । तीक्ष्णमस्मं च मां कुर्वित्यर्थः । किञ्च यत् किम् च चशब्दश्चिच्छब्दार्थे । अन्यदपि यत्किञ्चित् अहम् त्वायुः[3] तव नित्यं कामयिता वदामि तत् जुषस्व सेवस्व । नित्यं कुर्वित्यर्थः । किञ्च कृधि कुरु मा देववन्तम् देवैरिज्यमानैस्तद्वन्तम् । यष्टारमित्यर्थः । अथवा देवशब्दोऽत्र प्रकरणाद् इन्द्रवृत्तिरेव । त्वया देवेन[4] इज्यमानेन अनुग्राहकेण वा तद्वन्तम् । भवतो यष्टारं नित्यानुग्राह्यं चेत्यर्थः ॥ १० ॥

वेङ्कट० इन्द्र । सुखय माम्, मह्यम् जीवनम् इच्छ, चोदय मयि स्वकीयां बुद्धिम् असेः इव धाराम् तीक्ष्णाम् । यत् किम् च अहम् त्वत्कामः इदम् वदामि स्तोत्रम् तत् जुषस्व, कृधि माम् ईश्वरवन्तम् ॥ १० ॥

[5]इति चतुर्थाष्टके सप्तमाध्याये एकत्रिंशो वर्गः[5] ॥

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ ११ ॥

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेऽहवे । सुऽहवम् । शूरम् । इन्द्रम् ।
ह्वयामि । शक्रम् । पुरुऽहूतम् । इन्द्रम् । स्वस्ति । नः । मघऽवा । धातु । इन्द्रः ॥ ११ ॥

स्कन्द० त्रातारम् पालयितारम् । कम् । इन्द्रम् । कीदृशम् । अवितारम् तृप्त्यर्थोऽत्रावतिरन्तर्णीतण्यर्थश्च । तर्पयितारम् इन्द्रम् सुष्ठु ईश्वरम् हवेहवे योद्धा प्रतियोद्धारं यत्राह्वयेत स हवः सङ्ग्रामः, तस्मिन् । हवेहवे सर्वत्र सङ्ग्रामे सुहवम् स्वाह्वानम् शूरम् विक्रान्तम् इन्द्रम् इन्धी दीप्तौ, इत्यस्यैतद्रूपम् । इन्द्रम् इदं दीप्तम् ह्वयामि आह्वयामि । शक्रम् शक्तम् पुरुहूतम् बहुभिराहूतम् । इन्द्रम् [6]'इन्धेरिन्द्र-शब्दस्तु द्रातेः द्रमतेः वा[6] गतिकर्मणः । दीप्तान् आहवनीयादीन् शत्रून् वा प्रति [7]गन्तारम् । अथवा बहुहवः यज्ञे आहवनीयादीन् प्रति बलवद्भिर्वा[7] शत्रुभिः सह सङ्ग्रामेषु गन्तारमित्यर्थः । अथवा बहुहवः [8]'भिन्नान्येवैतानि वाक्यानि[8] । प्रतिवाक्यं च आह्वयामीत्यस्यानुषङ्गः । इन्द्रशब्दश्रुतेः परस्परनिरपेक्षाणि

1. °रादेरिव मूको. 2. प्रतिपद्य मूको. 3. त्वायु· मूको. 4. देवेन वि[2]. 5-5 नास्ति मूको. 6-6. इन्धेरिन्द्रशब्दस्य दीर्घमतेर्वा मूको. 7-7. गन्तारं यज्ञे ··· बलवद्भिर्वा मूको. 8-8. भिन्नानि वाक्यानि भिन्नान्येवैतानि वि[1]; भिन्नानि वाक्यानि भिन्नान्येवैतानि वि[2].

त्रातारम् इन्द्रम् आह्वयामि तर्पयितारम् इन्द्रम् आह्वयामि । इत्येवम् उत्तरयोरपि । पुरुहूतश्च सन् स्वस्ति अविनाशम् नः अस्माकम् मघवा धनवान् धातु दधातु विदधाम् । अथवा नः इति चतुर्थी । दधातिरपि दानार्थः । अस्मभ्यम् अविनाशं ददातु । कः । इन्द्रः ॥ ११ ॥

वेङ्कट० निगदसिद्धा ॥ ११ ॥

इन्द्रः॑ सु॒त्रामा॒ स्ववाँ॒ अवो॑भिः सुमृळी॒को भ॑वतु वि॒श्ववे॑दाः ।
बाध॑तां॒ द्वेषो॒ अभ॑यं कृणोतु सु॒वीर्य॑स्य॒ पत॑यः स्याम ॥ १२ ॥

इन्द्रः॑ । सु॒ऽत्रामा॑ । स्वऽवा॑न् । अवः॑ऽभिः । सु॒ऽमृ॒ळी॒कः । भ॒व॒तु॒ । वि॒श्वऽवे॑दाः ।
बाध॑ताम् । द्वेषः॑ । अभ॑यम् । कृ॒णो॒तु॒ । सु॒ऽवीर्य॑स्य । पत॑यः । स्या॒म॒ ॥ १२ ॥

स्कन्द० इन्द्रः सुत्रामा शोभनः त्राता स्ववान् '[1]स्वशब्दोऽयम् धनवचनः[1] आत्मवचनोऽन्नवचनो[2] वा । धनवान् आत्मवान् अन्नवान् वेत्यर्थः[3] । अवोभिः इत्थम्भूतलक्षणे एषा तृतीया । तर्पणैः पालनैर्वा सम्बद्धः सुमृळीकः सुसुखः भवतु विश्ववेदाः सर्वधनः सर्वज्ञो वा । किञ्च बाधताम् अपनयतु पीडयतु वा द्वेषः अस्माकं द्वेष्टृ द्वेष्यं वा पापं वा रक्षआदि वा । अभयम् च कृणोतु करोतु अस्माकम् । तत्प्रसादाच्च सुवीर्यस्य शोभनवीर्ययुक्तस्य पुत्रस्य धनस्य वा पतयः स्वामिनः स्याम भवेम ॥ १२ ॥

वेङ्कट० निगदसिद्धा ॥ १२ ॥

तस्य॑ व॒यं सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म ।
स सु॒त्रामा॒ स्ववाँ॒ इन्द्रो॑ अ॒स्मे आ॒राच्चि॒द्द्वेषः॑ सनु॒तर्यु॑योतु ॥ १३ ॥

तस्य॑ । व॒यम् । सु॒ऽम॒तौ । य॒ज्ञिय॑स्य । अपि॑ । भ॒द्रे । सौ॒म॒न॒से । स्या॒म॒ ।
सः । सु॒ऽत्रामा॑ । स्वऽवा॑न् । इन्द्रः॑ । अ॒स्मे इति॑ । आ॒रात् । चि॒त् । द्वेषः॑ । स॒नु॒तः । यु॒यो॒तु॒ ॥ १३ ॥

स्कन्द० तस्य प्रकृतस्येन्द्रस्य वयम् सुमतौ शोभनायां मतौ पालनबुद्धौ यज्ञियस्य यज्ञार्हस्य । किम् । स्याम इति यत् परस्तात् क्रियापदं तस्यानुषङ्गः । न च केवलायां सुमतौ । किं तर्हि । अपि भद्रे भजनीये सौमनसे शोभने "[4]मनः सुमनः सुमन एव सौमनसम्[4]" । किं तत् । दानबुद्धिः । तत्रापि वयमेव स्याम । पालनबुद्धिषु वयं पाल्याः दानबुद्धिषु च सम्प्रदानं स्यामेत्यर्थः । सः सुत्रामा शोभनः त्राता स्ववान् धनवान् आत्मवान् वा इन्द्रः अस्मे "[5]पञ्चम्या अर्थे[5]" शे । अस्मत्तः आरात् चित् आराच्छब्दो दूरवचनः । चिच्छब्दोऽप्यर्थे । दूरेऽपि । अपिशब्दात् सन्निकृष्टेऽपि यद् द्वेषः द्वेष्टृ द्वेष्यं वा पापं रक्षआदि वा सनुतः अन्तर्हितम् ( तु. निघ ३,२५ ), तद् युयोतु पृथक्करोतु । अपनयत्वित्यर्थः ॥ १३ ॥

वेङ्कट० निगदसिद्धा ॥ १३ ॥

---

१-१. "ब्दो धन" मूको. २. आत्मवचनो मूको. ३ इत्यर्थः मूको. ४-४. "सुमन सुमन सौमनसः मूको. ५-५. सप्तम्यार्थे मूको.

अव॒ त्वे इ॑न्द्र प्र॒वतो॒ नोर्मिर्गिरो॒ ब्रह्मा॑णि नि॒युतो॑ धवन्ते ।
उ॒रू न राधः॒ सव॑ना पु॒रूण्य॒पो गा व॑ज्रिन् यु॒वसे॒ समिन्दू॑न् ॥ १४ ॥

अव॑ । त्वे इति॑ । इ॒न्द्र॒ । प्र॒ऽवतः॑ । न । ऊ॒र्मिः । गिरः॑ । ब्रह्मा॑णि । नि॒ऽयुतः॑ । ध॒व॒न्ते॒ ।
उ॒रु । न । राधः॑ । सव॑ना । पु॒रूणि॑ । अ॒पः । गाः । व॒ज्रि॒न् । यु॒वसे॑ । सम् । इन्दू॑न् ॥ १४ ॥

स्कन्द० अव इत्युपसर्गो धवन्ते इत्याख्यातेन सम्बन्धयितव्यः । त्वे तव स्वभूता हे इन्द्र! प्रवतः न ऊर्मिः प्रवत इति 'उपसर्गाच्छन्दसि धात्वर्थे' (पा ५,१,११८) इति वतिः । प्रवतं गन्तुं प्रवृत्तम् । किं तत् । उदकम् । तस्य यथोर्मिरोघः अधो गच्छेत् अभ्याहृतम् एवम् गिरः ब्रह्माणि गिरो वाचः ब्रह्माणि अन्नानि कर्मप्रवचनीययोगलक्षणा चैषा द्वितीया । तच्छ्रुतेस्सामर्थ्यादेव चात्र कर्मप्रवचनीयप्रतिशब्दाऽध्याहारः[१] । स्तुतिलक्षणा वाचो हविर्लक्षणान्यन्नानि च प्रति नियुतः वडवाः अव धवन्ते । अवेत्ययम् अधोभावे । धवतिरपि गतिकर्मा 'धयति' धावति' (निघ २,१४) इति । अधो गच्छन्ति[२] । द्युलोकात् पृथिवीं गच्छन्तीत्यर्थः । अथवा त्वे नियुतः इत्यपि द्वे अपि द्वितीयान्ते । गिरो ब्रह्माणि इत्येते तु प्रथमान्ते धवते इत्येतस्या क्रियायाः कर्तृप्रतिनिर्देशार्थे । त्वाम् इन्द्रं त्वदीयाश्च वडवाः च प्रति स्तुतिलक्षणा वाचोऽस्माभिः प्रयुज्यमाना हविर्लक्षणान्यन्नानि च[३] अव धवन्ते गच्छन्ति । अवशब्दस्तु पदपूरणः । उच्छ्रयार्थे[४] वा । ऊर्ध्वं द्युलोकं गच्छन्तीति । अथवा अव-शब्द एवोपसर्गः क्रियावचनशब्दार्थयोगात् सत्साधनां[५] क्रियाम् आह । कतमाम् । अवस्थितानाम् । अधः पृथिव्यां स्थितानाम् अस्माकं स्वभूतानि गिरो ब्रह्माणि चेति । किञ्च उरु "न राधः" नशब्द उपरिष्टादुपचारः । 'उपमार्थीयत्वात् 'अस्त्यु-पमानार्थस्य[६] सम्प्रत्यर्थे प्रयोगः' (या ७,३१) इति पदपूरणः । चार्थे वा । बहु धनमुपचनम् सवना पुरूणि । 'सवनम्' (निघ ३,११) इति यज्ञनाम्[७] । हविर्यज्ञांश्च बहून् अपः उदकानि च मेघोदराप्तगतानि च गाः च असुरैरपहृताः । हे वज्रिन्! युवसे सम्[८] संयुवसे आत्मना सम्मिश्रयसि । आत्मसंस्थानि आत्मायत्तानि करोषीत्यर्थः । न चैतान्येव केवलानि । किं तर्हि । इन्दून् सोमांश्च । अथवा उरू न राधः इति नशब्द उपमायामेव । यथा कश्चित् बहुधने महता घातेन कुर्यात् तद्वत् त्वं हविर्यज्ञादीनि स्वीकरोषीति ॥ १४ ॥

वेङ्कट० अव धवन्ते पतन्ति त्वयि इन्द्र! प्रवणात् इव उदकम् स्तोत्राणि नियुतः इव शीघ्र-वेगाः । बहु च धनम् सवनानि[१०] च बहूनि धवन्ते । स त्वं यजमानैः अभिप्रहूयमानान्[११] इन्दून् उदकानि गाः च सम्मिश्रयसि । यजमानेभ्य इत्यर्थः ॥ १४ ॥

क ई॑ स्तवत् कः पृ॑णा॒त् को य॑जाते॒ यदु॒ग्रमिन्म॒घवा॑ वि॒श्वहावे॑त् ।
पादा॑विव प्र॒हर॑न्न॒न्यम॑न्यं कृ॒णोति॒ पूर्व॒मप॑रं॒ शची॑भिः ॥ १५ ॥

---

१. °शब्दोऽध्या° मूको. २. धवते मूको. ३. गच्छति मूको. ४. नास्ति मूको. ५. उच्छ्र° मूको. ६. साधनां मूको. ७-७. नास्ति मूको. ८-८. °मा युम° मूको. ९. न ... मूको. १०. संसवना° मूको.
११. °मानान् इ° ऋ; °मानाद् अर्थ°.

कः । ईम् । स्तुवत् । कः । पृणात् । कः । युजाते । यत् । उग्रम् । इत् । मघवा । विश्वहा । अवेत् ।
पादौऽइव । प्रऽहरन् । अन्यम्ऽअन्यम् । कृणोति । पूर्वम् । अपरम् । शचीभिः ॥ १५ ॥

स्कन्द० किंशब्द आक्षेपे । ईम्-शब्द एनमित्यस्यार्थे ।[1] कः एनम् इन्द्रम् स्तवत् मत्तोऽन्यः स्तौति । यथाऽहं स्तौमि न तथाऽन्यः कश्चिदित्यर्थः । कः पृणात् पृ पालनपूरणयोः । को वा पूरयति सोमैः । कः वा यजाते पूजयति हविर्यज्ञैर्वा यजते । यः कीदृशः इन्द्रः । उच्यते — यत् यः इन्द्रः उग्रम् क्रूरमपि शत्रुम् मघवा धनवान् विश्वहा सर्वदा अवेत् वेतिर्गतिकर्मा । हननार्थं गच्छति । गत्वा च पादौ इव प्रहरन् यथा आत्मीयौ पादौ गमनवेलायां प्रक्षिपन् पूर्वम् अपरम् करोत्येवम् अन्यश्चान्यं च शत्रुं यावान् कश्चित् शत्रुस्तं सर्वं करोति । पूर्वमपरं प्रकर्षापकर्षावत्र पूर्वापरशब्दाभ्याम् अभिधातुम् अभिप्रेतौ, [1]न तु पौर्वापर्यम् । उत्कृष्टं सन्तं निकृष्टमित्यर्थः । शचीभिः कर्मभिः प्रज्ञाभिर्वा । निकृष्टकर्माणं निकृष्टप्रज्ञं वा करोतीत्यर्थः ॥ १५ ॥

वेङ्कट० कः एनम् स्तोतुं शक्नुयात् । कः दाऽस्मै प्रयच्छति । कः वा यजते । यत् अयम् उग्रगूर्णं लोके कश्चिदपि विद्यमानं शत्रुम् सर्वदा क्षीप्रम् वेत्ति । यं च पादौ इव गमनवेलायां प्रहरन् अन्यमन्यम् करोति । पूर्वम् पादम् अपरम् अपरं च पूर्वम् करोति । कर्मभिः भूयोभूयः आश्चर्याणि कर्माणि करोति । तस्मात् स्तोतुम् अयं शक्य इति ॥ १५ ॥

[2]इति चतुर्थाष्टके सप्तमाध्याये द्वात्रिंशो वर्गः ॥

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥ १६ ॥

शृण्वे । वीरः । उग्रम्ऽउग्रम् । दमऽयन् । अन्यम्ऽअन्यम् । अतिऽनेनीयमानः ।
एधमानऽद्विट् । उभयस्य । राजा । चोष्कूयते । विशः । इन्द्रः । मनुष्यान् ॥ १६ ॥

स्कन्द० शृण्वे इति कर्मणि लिट् । विकरणश्च श्नुः व्यत्ययेन कर्मणि च श्रूयते । प्रख्यात इत्यर्थः । वीरः शूर इन्द्रः । किं [3]कुर्वन् । उग्रमुग्रम् दमायन्[3] यावान् कश्चिदुग्रः क्रूरः शत्रुः तं सर्वं दमयन् दान्तम् कुर्वन्निच्छन् वा । न केवलमेतदेव कुर्वन् । किं तर्हि । अन्यमन्यम् अन्यश्चान्यश्चात्मनः स्तोतारम् अतिनेनीयमानः अतिशब्दः पूजायाम् । शोभने नयन् । किम् । सामर्थ्यात् समृद्धिम् । स्तोतारमात्मनः समृद्धं कुर्वन्नित्यर्थः । एतदुक्तं भवति — शत्रुदमनकरणमशत्रुदमनेच्छायतो वा । सर्वस्तोतृसमृद्धिकरणवशाच्चास्येन्द्रस्य प्रख्यातत्वमिति । किञ्च एधमानद्विट् ऋध्यतां द्वेष्टा । किम् सर्वेषाम् । न, किंतु[4] अयज्वनाम् । कुत एतत् । सामर्थ्यात् । उभयस्य दिव्यस्य पार्थिवस्य च धनस्य राजा ईश्वरः चोष्कूयते च्युदसनार्थेऽत्र स्कुनातिरिति व्याचक्षते । अरमपि च्युदस्यति निराकरोति । कीदृशान् । विशः विश[5] प्रवेशने । सर्वत्राऽप्यनुप्रविष्टान् । कः । इन्द्रः । कान् । मनुष्यान् । एधमानद्विडित्युपादानाद् यान् द्वेष्टि तान् समृद्धान् अयज्वनः[6] ॥ १६ ॥

१-१. नदे पौर्वा० लि०, भरे तापौवी० वि०. २-२. नास्ति मूको. ३. कुर्व ... यन्द० ( यमग्रमन्द० लि० ) मूको. ४. कि मूको. ५. नास्ति मूको. ६. यमानः मूको.

वेङ्कट० श्रूयते वीरः उग्रम्-उग्रम् शत्रुम् दमायन्[1] अन्यम्-अन्यम् च अत्यन्तम् अतिगच्छन्, एधमानानां मनुष्याणां द्वेष्टाऽऽत्मव्यतिरिक्तानाम् असुन्वताम्[2], उभयस्य दिव्यस्य[3] च पार्थिवस्य च धनस्य ईश्वरः अत्यन्तम् आह्वयति विशः इन्द्रः, मनुष्यान् एधमानान् असुन्वतो च्युदस्यति इन्द्रः ( तु. या ६,२२ ) इति ॥ १६ ॥

परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।
अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति ॥ १७ ॥

परा । पूर्वेषाम् । सख्या । वृणक्ति । विऽतर्तुराणः । अपरेभिः । एति ।
अननुऽभूतीः । अवऽधून्वानः । पूर्वीः । इन्द्रः । शरदः । तर्तरीति ॥ १७ ॥

स्कन्द० परा इत्ययमुपसर्गः परीत्यस्य स्थाने । वृणक्ति इत्याख्यातेन सम्बन्धयितव्यः । परि वृणक्ति वृणी वर्जने । परिवर्जयतीन्द्रः । किम् । पूर्वेषाम् सख्या पूर्वेषां यजमानानां सखिभावान् । ये पूर्वम् अपाक्षु, साम्प्रतं न यजन्ते तैः सह सख्यानीत्यर्थः । वितर्तुराणः विविधं त्वरमाणः अपरेभिः अपरकालैः साम्प्रतिकैर्यष्टृभिः सह ये इदानीं यजन्ते तैः सख्यानि एति गच्छति । पूर्वयष्टॄन् जहाति साम्प्रतिकैर्यष्टृभिः सह दीर्घं सख्यं प्रतिपद्यत इत्यर्थः । किमर्थम् । उच्यते—अननुभूतीः स्तुतीनां सोमस्य[4] च अननुभवात् अवधून्वानः अवधूननम् अत्यन्तपरित्यागः[5] । हेतौ चायम् शानच् । प्रयोजनस्य चेयम् हेतुत्वेन विवक्षा । स्तुतिसोमाऽननुभवपरित्यागार्थमित्यर्थः[6] । नहि अयष्टृभिः सख्यम् अजहता यष्टृभिरप्या- प्रतिपद्यमानेन स्तुतिसोमाननुभवः[7] शक्यः कर्तुम् । अथवा द्वे अप्येते इन्द्रस्यैव विशेषणे । तद्वान् अनुभूतीः । अननुभूतीः अन्यिति पदच्छेदाभावे । पश्चाद्भवनम् अनुभूतिः न्यूनता व्ययभावो वा । ईकारो मत्वर्थीयः । ततोऽन्यः अननुभूती । कुतश्चिदप्यन्यूनः अव्ययभूतो वेत्यर्थः । अवधून्वानः धून् कम्पने । ताच्छील्ये चायं चानश् । शत्रूणां कम्पनशीलः । यः किं कृतवान् । उच्यते—पूर्वीः इन्द्रः शरदः । एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽध्याहार्यः । य इन्द्रः पूर्वीः बह्वीः शरदः, 'कालाध्वनो- रत्यन्तसंयोगे' ( पा २,३,५ ) 'इत्येवमियम् द्वितीया । पूर्वेषु संवत्सरेषु सततम् तर्तरीति तृ प्लवनसंतरणयोः । प्लवनम् गमनम् स्तुतेर्गत्यर्थत्वात् । यङ् चायम् अपत्ययेन भूते काले प्रयुक्तः । यजमानानाम् अतिप्रियतमत्वात् सख्यानि वर्जयति यजेऽधरयर्थम् अगमत् । स एव तेषामेव व्यावृत्तभागानाम् अतिप्रियतमत्वात् सख्यानि वर्जयति अन्येषां च प्रतिपद्यते स्तुतिसोमाऽननुभवपरिहारार्थमित्ययं समस्तार्थः[8] ॥ १७ ॥

वेङ्कट० पूर्वेषाम् संस्तुतानामपि सम्प्रति अयजमानानाम् सख्यानि इन्द्रः परिमार्ष्टि । तथा भूयांसि वितरन् अन्यैः अधुना यजमानैः सख्यम् गच्छति । आनुकूल्यम् अगच्छन्तीः प्रजाः अवधून्वानः बह्वीः इन्द्रः शरदः यजमानानाम् अत्यन्तं तरति ॥ १७ ॥

रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥ १८ ॥

---

१. नम° क रुपं. २. असुन्वताम् रुपं. ३. नास्ति रुपं. ४. सोमस्य मूको. ५. °मानतां ( °त ति° ) मूको. ६. °सोम्नु° मूको. ७. स्तुतिसोमाननुभवः. ८-८. इतः पूर्वतमो भागो मूलग्रन्थे लुप्तः । परन्तु मूलकोशे तत्संकेताभावः.

रूपम्ऽरूपम् । प्रतिऽरूपः । बभूव । तत् । अस्य । रूपम् । प्रतिऽचक्षणाय ।
इन्द्रः । मायाभिः । पुरुऽरूपः । ईयते । युक्ताः । हि । अस्य । हरयः । शता । दश ॥ १८ ॥

स्कन्द० रूपम्-रूपम् इति षष्ठ्यर्थे द्वितीया । रूपस्यरूपस्य । प्रतिरूपः प्रतिरूपशब्दः[1] सदृशवचनः । सदृशः[2] बभूव भवति । अथवा भवतिः प्राप्त्यर्थः । रूपंरूपं प्राप्नोति । प्रतिरूपः प्रतिगतो रूपैः इन्द्रः । देवतैश्वर्याद् अन्यच्च रूपम् इन्द्र आतिष्ठतीत्यर्थः । तत् अस्य रूपम् प्रतिचक्षणाय सर्वस्य प्रतिदर्शनाय । सर्वेण द्रष्टव्यमित्यर्थः । किञ्च इन्द्रः मायाभिः प्रज्ञाभिः पुरुरूपः बहुरूपः ईयते गच्छति यज्ञान् शत्रून् वा प्रति । कस्मात् । युक्ताः हि । हि-शब्दो यस्मादर्थे । यस्माद् रथे युक्ता अस्य स्वभूताः हरयः अश्वाः । कियन्तः । शता दश दश शतानि । सहस्रमित्यर्थः । यस्य हि अश्वसहस्रं रथेन युक्तं स कस्मात् न गच्छति ॥ १८ ॥

वेङ्कट० तत्तद्रूपम् इन्द्रः भावयति[3] । प्रतिरूपम् प्रतिपद्यमानं यो रूपम् आदत्ते ॥ तथोक्तः । तत् अस्य रूपम् प्रतिदर्शनाय भवति । तदेवाह—इन्द्रः कर्मभिः बहुरूपः गच्छतीति[4] तदनुरूपम् । अस्य अश्वाः दश शतानि सहस्रम्[5] युक्ताः भवन्तीति । ततः सर्व एव मन्यन्ते—मां प्रति उदगादित्यमेनैतत् समानमिति ॥ १८ ॥

युञ्जानो हरिता रथे भूरि त्वष्टेह राजति ।
को विश्वाहा द्विषतः पक्ष आसत उतासीनेषु सूरिषु ॥ १९ ॥

युञ्जानः । हरिता । रथे । भूरि । त्वष्टा । इह । राजति ।
कः । विश्वाहा । द्विषतः । पक्षः । आसते । उत । आसीनेषु । सूरिषु ॥ १९ ॥

स्कन्द० युञ्जानः नियुञ्जानः हरिता हरितवर्णावश्वौ आत्मीये रथे भूरि प्रभूतम् त्वष्टा तक्षू त्वक्षू तनूकरणे । शत्रूणां तनूकर्ता इन्द्रः इह लोके राजति दीप्यते । सुष्ठु शोभत इत्यर्थः । अथवा युञ्जान इति हेतौ शानच् । भूरीत्यपि षष्ठ्यर्थे प्रथमा । राजतिरत्नैश्वर्यकर्मा । हरित॰-वर्णयोः अश्वयोः रथे नियोगेन हेतुना बहुनो धनस्येष्टे । अश्वयोगेन तत्पूर्वकः सङ्ग्रामो[6] लक्ष्यते । अश्वनियोगोत्तरकालेन सङ्ग्रामेण हेतुनेत्यर्थः । कः विश्वाहा किंशब्दोऽत्र क्षेपे । विश्वाहा सर्वदा द्विषतः द्वेष्टुः पक्षः सहायसमूहः[7] आसते आस्ते । न कश्चिदप्यास्ते । सर्वमिन्द्रो विनाशयतीत्यर्थः । उत आसीनेषु चशब्दोऽप्यर्थे । आसीनेषु तिष्ठत्सु विद्यमानेषु सूरिषु स्तोतृष्वस्मासु अपि[8] । एतदुक्तं भवति—स्वयमेव तावद् इन्द्रोऽपि द्विषत्पक्षविनाशनक्षमः, किं पुनः अस्मासु सत्सु स्तोतृषु । तथैनं स्तुमो यथा प्रवृद्धवीर्यः सर्वं द्विषत्पक्षं विनाशयतीति ॥ १९ ॥

वेङ्कट० युञ्जान. हरिताश्वौ रथे अत्यन्तम् दीप्तः इह राजति । कः इन्द्रव्यतिरिक्तः शत्रोः पक्षे सर्वदा शत्रुमध्ये आस्ते, अपि च आसीनेषु स्तोतृषु ॥ १९ ॥

अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाभूत् ।
बृहस्पते प्र चिकित्सा गविष्टावित्था सते जरित्र इन्द्र पन्थाम् ॥ २० ॥

---

१. प्रतिशब्दः मूको. २. सदृशो मूको. ३. पारयति रूपं. ४. गच्छति वि' रूपं, ५. °हस मूको. ६. सङ्ग्रामो मूको. ७. सहायसमाह वि'. ८. नास्ति मूको.

अगव्यूति । क्षेत्रम् । आ । अगन्म । देवाः । उर्वी । सती । भूमिः । अंहूरणा । अभूत् ।
बृहस्पते । प्र । चिकित्स । गोऽइष्टौ । इत्था । सते । जरित्रे । इन्द्र । पन्थाम् ॥ २० ॥

स्कन्द० 'बृहस्पते प्र चिकित्सोक्तदेवम्' । 'बृहस्पते प्र चिकित्सा' इत्येतेन निगदेनोक्तदेवतम् । एकदेशेन चेदं मध्यमेन समस्ताया ऋच उपलक्षणम् । न पादमात्रस्य प्रतिनिर्देशः । समस्ता ऋग् निगदोक्तदेवता । आद्यः पादो वैश्वदेवत्यः, द्वितीयो भूमिदेवत्यः, तृतीयो बार्हस्पत्यः, चतुर्थ ऐन्द्रः । तथा च बृहद्देवताकार आह—

अगव्यूति स्तौति देवान् पादो भूमिमथोत्तरः ।
बृहस्पतिं [1]तृतीयस्त्विन्द्रमेवोत्तरस्तु यः[1] ॥ (बृ. बृदे ५,१११) इति ।

देवताभेदाच्च भिन्नान्येतानि वाक्यानि । गावश्चरन्ति यत्र सा गव्यूतिः, तद्वर्जितं यत्समस्तं कृष्टं तद् अगव्यूति[2] । सस्यानि यत्र[3] जायन्ते स भूप्रदेशविशेषः क्षेत्रम् । तत् क्षेत्रम् आ अगन्म युष्मत्प्रसादेन आगताः प्राप्ता वयम् । अथवा [4]'आ अगन्मेति लिङर्थे लुङ् । आगच्छेम[4] प्राप्नुयाम हे देवाः! । अथवा क्षेत्रशब्दः सस्योत्पत्तिस्थानवचनोऽन्यत्र[5], 'इह तु स्थानसामान्यात्[6] देवस्थाने प्रयुक्तः । युष्माकम् देवानां गव्यूतिविरहितं क्षेत्रं स्थानं देवलोकाख्यम् तद्वयम् प्राप्ताः प्राप्नुयाम वा । प्राप्ता इति च तद्धेतोर्योगस्य[7] भूतकालत्वाद्धेतुमतोऽप्येवम्[6] भूतकालव्यपदेशः । उर्वी विस्तीर्णा सती या । प्राप्ता इति च ... प्रशस्तवचनोऽयम् सच्छब्दः । प्रशस्ता भूमिः पृथिवी । अंहूरणा अंहस्वती पापवती । उद्वेजनीयेत्यर्थः । अभूत् उत्पत्तितः प्रभृति जाता । आरामनदीपुलिनपर्वतशिखरादिषु [9]'प्रशस्ता ऊषरवद् भूमरुप्रदेशेषु[9] उद्वेजनीया येन विस्तीर्णा भूमिः सा कचित् प्रशस्ता क्वचिद् उद्वेजनीयेति गुणकथनाद् भूमेः स्तुतिमात्रं वाक्यार्थः । हे बृहस्पते! प्र चिकित्स प्रजानीहि गविष्टौ द्वितीयार्थे सप्तम्येषा । [10]'गविष्टि गविषणौ[10] गां प्रति अस्माकमिच्छां प्रजानीहि गां देहीत्यभिप्रायः । अथवा प्र चिकित्सेति । ज्ञानस्य देयापेक्षत्वाद् गविष्टाविति[11] चाधिकरणश्रुतेश्चतुर्थपादस्थं पन्थामित्येतदेवेहाप्यनुषज्यते[12] । इष गतौ । गोगतौ गोप्राप्तौ यः पन्थाः उपायस्तं प्रजानीहीति । इत्था अमुत्र स्वर्गे लोके सते जरित्रे प्रशस्तस्य स्तोतुरर्थाय हे इन्द्र! पन्थाम् । किम् । प्रचिकित्सेत्यनुषङ्गः । स्तोतुः स्वर्गप्राप्त्युपायं जानीहीत्यर्थः ॥ २० ॥

वेङ्कट० गोमार्गरहितम्[13] सुखम् क्षेत्रम् आ गच्छेम देवाः! । विस्तीर्णा सती भूमिः अस्माकम् अभिगन्तव्या भवतु । बृहस्पते! तत् त्वं चास्माकं गवामन्वेषणे प्र जानीहि । त्वं च इन्द्र! सत्यमेव स्तोत्रे महाम् पन्थानं कुरु । शौनकः—

[14]'अगव्यूति स्तौति देवान् पादो[14] भूमिमथोत्तरः[15] ।
बृहस्पतिं तृतीयस्तु [16]इन्द्र एवोत्तरे स्तुतः[16] ॥ (बृ. बृदे ५,१११) इति ॥ २० ॥

[17]इति चतुर्थाष्टके सप्तमाध्याये त्रयस्त्रिंशो वर्गः[17] ॥

---

१-१. °मेवोत्तरं पदम् बृदे. २. गव्यूति मूको. ३. नास्ति मूको. ४-४. लिङर्थे गच्छेति एङ् गच्छेम मूको. ५. °चन मूको. ६-६. वचन इह समान° मूको. ७. तद्धेतोर्योगस्य मूको. ८. देवमत्यारेव मूको. ९-९. प्रशस्ता अपि मूः मरु° कु. १०-१०. गो इष्टि गविषो मूको. ११. गविषि मूको. १२. मतिरिवापि कु. १३. °रहितं मूको. १४-१४. °तिरथ स्तौति देवान् मूको. १५. °मिथोत्तरम् मूको. १६-१६. इन्द्रमेवोत्तरं परम् बृदे. १७-१७. नास्ति मूको.

दिवेदिवे सदृशीरन्यमर्धं कृष्णा असेधदप सद्मनो जाः ।
अहन् दासा वृषभो वस्नयन्तोदव्रजे वर्चिनं शम्बरं च ॥ २१ ॥

दिवेऽदिवे । सऽदृशीः । अन्यम् । अर्धम् । कृष्णाः । असेधत् । अप । सद्मनः । जाः ।
अहन् । दासा । वृषभः । वस्नऽयन्ता । उदऽव्रजे । वर्चिनम् । शम्बरम् । च ॥ २१ ॥

स्कन्द० 'अत ऊर्ध्वम् भनादिष्टमैन्द्रम्' ( ऋअ १,१२,५ ) इत्यनादेशाद् 'दृग्वम् ऋग् ऐन्द्री' । दिवेदिवे अहन्यहनि सदृशी तुल्या धनादिविभूतिरहिता । अन्यम् अर्धम् अपरस्थानम् कृष्णाः कृष्णवर्णा तम आयरूपत्वात् अथवा कृष्णाशब्द क्रियावचन[1] । कृष्णा कृष्टा सर्वतो निकृष्टा असेधत् सेधतिर्गतिकर्मा । अन्तर्णीतण्यर्थश्चात्र द्रष्टव्य । गमयति अप सद्मन अपेत्युपसर्गश्रुत सेधदिति क्रियापदम् अनुषक्तव्यम् । अपगमयति सद्मन । स्वस्मात् स्थानात् नाशयतीत्यर्थ । जा । उत्पन्ना । आ 'आयन्त इति जा[3] । असुरप्रजा अयज्वप्रजा वा । किञ्च । अहन् हतवान् 'दासा दासौ उपक्षपयितारौ' वृषभ वर्षितेन्द्र । वस्नयन्ता मूल्यमिच्छन्तौ[4] 'वस्न इति द्रव्यनाम' । 'द्रव्यविक्रयादिना व्यापारेणोपायेन' धनार्जनपरौ अयज्वानावित्यर्थ । क्व अहन् । उच्यते । उदव्रजे अद्विशेषनामैतत् । उदव्रजाख्ये 'नदे । कौ अहन्' । वर्चिनम् शम्बरम् च वर्चिशम्बरनामानौ असुरौ ॥ २१ ॥

वेङ्कट० दिनेदिने सदृशरूपा 'अन्यम् अर्धम्'[10] यस्मिन्नर्धेऽहानि[11] वर्तन्ते ततोऽन्यम् अर्धम् प्रति रात्री कृष्णवर्णा '[12]अप सेधति[12] स्वस्मात् स्थानात् प्रातर्जायमाना । 'हतवांश्च असुरौ'[13] वसिता आत्मनो धनम् अपहर्तुमिच्छन्तौ उदव्रजाख्ये आवासे वर्चिनम् शम्बरम् च ॥ २१ ॥

प्रस्तोक इन्नु राधसस्त इन्द्र दश कोशयीर्दश वाजिनोऽदात् ।
दिवोदासादतिथिग्वस्य राधः शाम्बरं वसु प्रत्यग्रभीष्म ॥ २२ ॥

प्रऽस्तोकः । इत् । नु । राधसः । ते । इन्द्र । दश । कोशयीः । दश । वाजिनः । अदात् ।
दिवःऽदासात् । अतिथिऽग्वस्य । राधः । शाम्बरम् । वसु । प्रति । अग्रभीष्म ॥ २२ ॥

स्कन्द० 'भारद्वा[15] चतस्र '। चतस्र[15] एता ऋचो भारद्वाजार्षी । तत्र चेतिहासमाचक्षते[16] — सृञ्जयपुत्र प्रस्तोको नाम राजा भरद्वाजम् अभिगम्योपसङ्गृह्य पादौ सन्धाय प्राञ्जलिरुवाच — शारशिखा नाम असुरक्षत्रो '[17]मैर्वैव युद्ध विनिर्जिता । तान् त्वत्पुरोहितो[17] विनिर्जीयत इति । तथेति प्रतिपद्य भारद्वाज तम् अयाजयत् । पौरोहित्य चास्य अकरोत् । अथासौ —

1-1 °दिवस येदी वि° °दिवाभे दी वि° २ क्रियाशब्द मूको ३ ३ आयन्तो वा इति जा मूको ४ ४ दासवुप क्षयितारौ मूको ५ मूल्यमि° मूको ६ ६ स्वाद्रव्याणाम् मूको ७ ७ °विक्रयादिनो व्यापारेण पायन मूको ८ ८ न धनमपहन् मूको ९ °स्याम् मूको १० अर्धम् मूको ११ °न्तर्थे° मूको १२ १२ अपसेधन्ति मूको १३ असुरौ मूको १४ तुवे ५,११० १५ नास्ति मूको १६ द्रष्टे ५,१२४ १४०. १७ १७ वां त्वत्पु° मूको

रथस्य द्यावापृथिव्यौ कारणम् अत उच्योच्यते, द्यावापृथिव्योः सारः समुद्धितो रथाख्य इति। यद्यपि च पार्थिवत्वाद् रथस्य [1]पृथिवीसारसमुद्धितत्वं तथापि[1] द्यावापृथिव्योः [2]परस्परोपकरणात् तदुभयसारसमुद्धितत्वव्यपदेशः[2]। अथवा ओजश्शब्दोऽन्तर्णीतमत्वर्थः। दिवश्च पृथिव्याश्च सम्बन्धि यद् ओजस्वि बलवद् द्रव्यं काष्ठलोहचर्मादि तत्पर्युदृतं पिण्डीकृतं रथात्मना व्यवस्थापितम्। वनस्पतिभ्यः वृक्षेभ्यः परि आभृतम् [3]सर्वतः समाहृतम्[3] तद्धः यच्च सारः। कस्य। सविधेः[4] सामर्थ्याद् वनस्पतीनामेव। यावद्धि यस्य वनस्पतेः सारभूतं तावत्तत आहृत्य रथात्मना व्यवस्थाप्यते। अपाम् ओज्मानम् उजतिः[5] धातुरपठितोऽप्योजश्शब्दादिषु प्रयोगदर्शनाद् अभिभवार्थे[6] द्रष्टव्यः। मेघोदरान्तर्गतानाम् अपाम् ओज्मानम् अभिभवितारम्। [7]यतश्च तास्योऽभिभवति अतो रथ ओज्मेति व्यपदिश्यते[7]। अथवा उब्ज आर्जवे इत्येतस्यायं [8]छान्दसो बकारलोपः[8]। अपाम् उब्जितारं[9] दातारम् अभिमुखीकर्तारमित्यर्थः। अथवा अर्जेरेत्यर्थस्य व्यत्ययेन छान्दसम् आदेरेतदोत्वम्। अपां गमयितारं पातयितारमित्यर्थः[10]। परि सर्वतः गोभिः गोविकारैश्चर्मभिः श्लेष्मणा च आवृतम् व्याप्तं वेष्टितम्। इन्द्रस्य वज्रम् वज्रकार्यकरणाद् अयं वज्रव्यपदेशः। राजा पत्तिगामकः[11] इति यथा। वज्रं वज्रस्थानीयम्। वज्रकार्याणां वृत्रवधादीनां साधयितारमित्यर्थः। कम्[12]। रथम्। हविषा यज आत्मन एव चायम् आततरात्मनः प्रैषः ॥ २७ ॥

वेङ्कट० द्यावापृथिव्योरिदम् उद्धृतम् बलम् पयसः, तथा वनस्पतिभ्यः च आहृतम् सहः, हन्तारम् अपाम् वेगं समुद्रं शीघ्रं गच्छन्तम् परितः गोचर्मभिः आवृतम् इन्द्रस्य वज्रम् हविषा रथम्, यज। 'इन्द्रो वृत्राय वज्रमुदयच्छत्। स त्रेधा व्यभवत्। स्फ्यस्तृतीयं[13] रथस्तृतीयं यूपस्तृतीयम्' (तु. माश १,२,४,१) इति ब्राह्मणम् ॥ २७ ॥

इन्द्र॑स्य॒ वज्रो॑ म॒रुता॒मनी॑कं मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ ।
सेमां नो॑ ह॒व्यदा॑तिं जुषा॒णो देव॑ रथ॒ प्रति॑ ह॒व्या गृ॑भाय ॥ २८ ॥

इन्द्र॑स्य । वज्रः॑ । म॒रुता॑म् । अनी॑कम् । मि॒त्रस्य॑ । गर्भः॑ । वरु॑णस्य । नाभिः॑ ।
सः । इ॒माम् । नः॒ । ह॒व्यऽदा॑तिम् । जु॒षा॒णः । देव॑ । र॒थ॒ । प्रति॑ । ह॒व्या । गृ॒भा॒य॒ ॥ २८ ॥

स्कन्द० सेमामिति तच्छब्दाद् यच्छब्दोऽध्याहार्यः। त्वम् इन्द्रस्य वज्रः वज्रस्थानीयः। मरुताम् अनीकम् अनीकस्थानीयः[14]। अनीकमिति खड्गस्य मुखमुच्यते। अग्रत्वसामान्याद् वदनलक्षणमेव, मुखसमूहो वा। मित्रस्य गर्भः गर्भस्थानीयः। [15]कथम्। पितृस्थानीयेन मित्रेण[15] वृष्टिद्वारेण जन्यमानत्वात्। अथवा [16]"गर्भो भरनेन रक्ष्यते"[16] एवं मित्रेण बलेन रक्ष्यमाणत्वाद्[17] मित्रस्यायं गर्भः। वरुणस्य नाभिः नाभिस्थानीयः। यथा नाभिः अङ्गानां मध्ये। प्रधानभूत इत्यर्थः। सः इमाम् नः

1-1. समुद्धितस्तथापि मूको. 2-2. परस्परोपकरण ······ तदुभयसारसमुद्धितत्व° मूको. 3-3. सर्व ··· हृतम् मूको; सर्वत आहृतम् कु. 4. निधेः मूको; नास्ति कु. 5. उब्जतिः मूको. 6. °भवति मूको. 7-7. यच्च तास्योऽभिभवति इति व्यप° मूको. 8-8. छान्दसोकार° मूको. 9. उब्जितारम् मूको. 10. पातारं मूको. 11. पा २,३,९, ५,१,१२९ इ.; पत्ति गुणः मूको. 12. कथम् मूको. 13. नास्ति वि° लपं. 14. °स्थानीयम् मूको. 15-15. कथं ······न मित्रेण मूको. 16-16. गर्भोऽयलेन रक्ष्यते मूको. 17. लक्ष्य° मूको.

[1]अस्माकं स्वभूताम् हव्यदातिम् हविर्दानक्रियाम् जुषाणः सेवमानः । हविर्दानेन सम्प्रदानतां प्रतिपद्यमान इत्यर्थः । हे देव । दानादिगुण ! रथ ! प्रति हव्या गृभाय प्रतिगृहाण इमानि हवींषि ॥ २८ ॥

वेङ्कट० ... ... ... ... ... ॥ २८ ॥

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद् दवीयो अप सेध शत्रून् ॥ २९ ॥

उप । श्वासय । पृथिवीम् । उत । द्याम् । पुरुऽत्रा । ते । मनुताम् । विऽस्थितम् । जगत् ।
सः । दुन्दुभे । सऽजूः । इन्द्रेण । देवैः । दूरात् । दवीयः । अप । सेध । शत्रून् ॥ २९ ॥

स्कन्द० "परस्तृचो दुन्दुभेर्वेदितव्यः"[1] । परस्य तृचस्य[2] 'अर्धतृतीयानाम् ऋचाम् दुन्दुभिर्देवतेत्यर्थः[3] । "उप श्वासय"[4] उपेत्येष आङः स्थाने । श्वसतिरन्यत्र प्राणार्थ एव[5] श्वस प्राणने इति पदार्थोपधावकः सुपाठः । इह तु सामर्थ्यात् पूरणार्थः । आपूरय । केन । सामर्थ्यात् स्वेन शब्देन । किम् । पृथिवीम् उत द्याम् दिवमपि । अथवा 'श्वसतिर्वधकर्मा । आधातय[6] स्वशब्देन द्यावापृथिवी । तावन्तं शब्दं कुरु यावन्तं सम्प्राप्य उभे द्यावापृथिव्यौ आहन्येते[7] । उभे अपि द्यावापृथिव्यौ इत्यर्थः[8] । एवं च यावन्तं सम्प्राप्य उभे द्यावापृथिव्यौ आहन्येते[7] । उभे अपि द्यावापृथिव्यौ इत्यर्थः । कि तर्हि । पुरुत्रा इति त्रप्रत्ययः । नायं 'बहुधाऽऽद्यत्समानाधिकरणे' भवति तत्र प्रामाण्यवस्याऽभावात्[9] । किं तर्हि । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' ( पा ५,४,५६ ) [10]इति सप्तम्याः त्रा-प्रत्ययः[10] । विष्ठितमित्यनेन चास्य सम्बन्धः । पुरुषु बहुषु प्रदेशेषु विष्ठितम् विविधं स्थितम् । कम् । सामर्थ्यात् शब्दम् । कस्य । ते तव । मनुताम् मनु बोधने । बुध्यताम् । शृणोत्वित्यर्थः । कः । उच्यते । जगत् । सर्वम्[11] जङ्गमं प्राणिजातमित्यर्थः । केचित्तु — विष्ठितशब्दः स्थावरवचनः जगदित्येतेन समुच्चीयते । स्थावरं जङ्गमं च बुध्यताम् इत्येवं व्याचक्षते । तत्[12] । स्थावरस्य[13] शब्द-बोधाऽसम्भवात् । सः दुन्दुभे ! तच्छब्दाद् योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । य एवमुक्तोऽसि स हे दुन्दुभे ! सजूः सम्प्रीयमाण इन्द्रेण देवैः सहयोगलक्षणया तृतीया । इन्द्रेण च देवैश्च सह दूरात् दवीयः दूरतरम् "अप सेध" सेधतिर्गतिकर्मा । सामर्थ्याद्गमयतीत्यर्थः । अपगमय । नाशय अस्मच्छत्रून् । तथा नद यथा शब्दं श्रुत्वाऽस्मच्छत्रवो दूराद् दूरतरं गच्छन्तीत्यर्थः ॥ २९ ॥

वेङ्कट० श्वाससदृशप्रतिशब्दं कारय पृथिवीम् अपि च द्याम् । बहुषु देशेषु स्थाम् जानातु इतस्ततः स्थितम् जगत् । सः त्वम् दुन्दुभे ! सहितः इन्द्रेण देवैः च दूरात् दूरतरम् अप सेध अस्मच्छत्रून् ॥ २९ ॥

आ क्रन्दय बलमोजो न आ धा निः ष्टनिहि दुरिता बाधमानः ।
अप प्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीळयस्व ॥ ३० ॥

---

१-१. परे…दुन्दुभेर्वेदितव्यम् मूको. २. नास्ति मूको. ३-३. दुन्दुभिर्देवतेत्यर्थः अर्धतृतीयानाम् ऋचाम् मूको. ४-४. नास्ति मूको. ५. आ मूको. ६-६. °पर्यायवाचकाय मूको. ७. °न्यते मूको. ८. °स्तीत्यर्थः मूको. ९-९. °नायो … प्रत्यय° मूको. १०-१०. सप्तम्यास्त्राप्रत्ययः मूको. ११. ननु सर्वम् मूको. १२. त मूको. १३. स्तोत्र° मूको.

दर्श । अश्वान् । दर्श । कोशान् । दर्श । वस्त्रा । अधिऽभोजना ।
दशो इति । हिरण्यऽपिण्डान् । दिवःऽदासात् । असानिषम् ॥ २३ ॥

स्कन्द० दश अश्वान् दश कोशान् 'दश वस्त्रान्' दश वस्त्रा वस्त्राणि अधिभोजना अधि[1] उपरि भोजनं येषां तानि अधिभोजनानि । समनन्तरभोजनसहितानीत्यर्थः । दश उ उशब्द एवार्थे । दशैव हिरण्यपिण्डान् सुवर्णपिण्डान् दिवोदासात् असानिषम् सम्भक्तवान् लब्धवान् अहम् । अत्रापि पूर्ववदेव भरद्वाजकर्तृकस्य लाभस्य आत्मनि व्यपदेशः ॥ २३ ॥

वेङ्कट० उपरि भोजनं च येषां भवति तान्यधिभोजनानि इति[1] ॥ २३ ॥

दश रथान् प्रष्टिमतः शतं गा अथर्वभ्यः । अश्वथः पायवेऽदात् ॥ २४ ॥
दर्श । रथान् । प्रष्टिऽमतः । शतम् । गाः । अथर्वऽभ्यः । अश्वथः । पायवे । अदात् ॥ २४ ॥

स्कन्द० दश रथान् । कीदृशान् । प्रष्टिमतः[3] । एकस्यामेव धुरि यो द्वितीयः पार्श्वे युज्यते स प्रष्टिरुच्यते, तद्वतः । धुरि-धुरि त्र्यश्वयुक्तान् । चतुर्भिरश्वैर्युक्तानित्यर्थः[5] । शतम् गाः अथर्वभ्यः आथर्वणकर्मकारिभ्यः[6] । पुरोहितेभ्योऽस्मभ्यमित्यर्थः । अथवा[7] 'थर्वतिश्चरतिकर्मा' ( या ११,१८ ) । तत्प्रतिषेधेन इदमभिधानम् । अथर्वभ्यः अचलेभ्यः । स्थिरभावेभ्योऽस्मभ्यमित्यर्थः । अश्वथः अश्वैः थर्वति चरति गच्छति यः सोऽश्वथः दिवोदासः । पायवे पायुनाम्ने[8] भरद्वाजपुत्रायैव अदात् दत्तवान् । इदमपि भरद्वाजदानमेव आत्मनि पायौ चोच्यते ॥ २४ ॥

वेङ्कट० दश रथान् प्रष्टिभिर्युक्तान् शतम्[9] च गाः अथर्वकुलजातेभ्यः[10], अश्वथः[11] इति यस्य संज्ञा, पाय्वर्थम्[12] प्रायच्छत् ॥ २४ ॥

महि राधो विश्वजन्यं दधानान् भरद्वाजान्त्सार्ञ्जयो अभ्ययष्ट ॥ २५ ॥
महि । राधः । विश्वऽजन्यम् । दधानान् । भरत्ऽवाजान् । सार्ञ्जयः । अभि । अयष्ट ॥ २५ ॥

स्कन्द० महि राधः [13]महि महत्[13] राधो धनम् विश्वजन्यम् सर्वस्मिन् जने साधु भवं [14]प्रयच्छतस्त्वेन दधानान् दत्तं धनं धारयतः[14] भरद्वाजान् सर्वानेव अस्मान् सार्ञ्जयः सृञ्जयपुत्रः प्रस्तोकः अभि अयष्ट यजिरत्र पूजार्थः । अभिपूजितवान् । दत्त्वा धनं गृहीतधनान् [15]सतः उत्तरकालमपि[15] मानसत्कारैः अभिपूजितवानित्यर्थः ॥ २५ ॥

वेङ्कट० महत् धनम् सर्वपुत्रपौत्रजनहितमेतत् दधानान् अस्मान् भरद्वाजान् सृञ्जयपुत्रः[16] [17]अभि अपूजयत्[17] इत्यभिलिख ॥ २५ ॥

[18]इति चतुर्थाष्टके सप्तमाध्याये चतुर्दशो वर्गः[18] ॥

1-1. तान्युत्तरभोजनान् मूको. 2. नास्ति मूको. 3. नास्ति वि[1] रूपं. 4. पष्टिमतः वि[1,2]. 5. चतुर्भिश्चतुरश्वैः मूको. 6. आथर्वण मूको. 7. अथवा वि[1]. 8. पायुनाम्ने कु. 9. जातम् मूको. 10. अथर्वकुला[°] मूको. 11. अश्वथः वि[1] ल; अश्वस्य रूपं. 12. पायनार्थम् वि[1] ल; बान्धवार्थं रूपं. 13-13. महिमत् । वि[2] कु. 14-14. [°]तत्त्वेन दत्तं धनधारयन्तो वि[2]. 15-15. सतोत्तर[°] मूको. 16. सृञ्ज[°] ल रूपं. 17-17. अपू[°] मूको. 18-18. नास्ति मूको.

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥ २६ ॥

वनस्पते । वीळुऽअङ्गः । हि । भूयाः । अस्मत्ऽसखा । प्रऽतरणः । सुऽवीरः ।
गोभिः । सम्ऽनद्धः । असि । वीळयस्व । आऽस्थाता । ते । जयतु । जेत्वानि ॥ २६ ॥

स्कन्द० "वनस्पतिदेवत्यस्तृचः पर."[1] वनस्पतेप्रभृति[1] । रथदेवत्योऽयं परस्तृचो[2] 'वनस्पते' इत्येतस्मात्प्रभृति । पुथक्वादिरित्यर्थः । वनस्पतिशब्दोऽयम् 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या २,५) इत्येवं वनस्पतिविकारे प्रयुक्तः । हे वनस्पते! वनस्पतिविकार! रथ! वीड्वङ्गः हि वीळूनि संस्तब्धानि दृढानि अङ्गान्यवयवा यस्य स वीड्वङ्गः । हि-शब्दस्तु पदपूरणः पुथार्थे वा । एतादृशावयव एव भूयाः 'भव त्वम् अस्मत्सखा' अस्माकं सखिस्थानीयः । सखित्वेन चात्र तद्धर्मं व्यसनेषु अहार्थे लक्ष्यते । यथा सखा सख्युर्व्यसनेष्वहाता[3] तथा त्वम् अस्माकम् सङ्ग्रामनिर्वहणे समर्थ अहाता[3] भवेत्यर्थः । प्रतरणः प्रतीर्यन्ते येन सङ्ग्रामः स प्रतरणः । कस्मात् । इत्यर्थः । सुवीरः शोभनवीरयुक्तः । यस्ते वीरो योद्धा स शोभनः अभीररस्त्वित्यर्थः । उच्यते — गोभि. सन्नद्धः असि गोशब्देनाऽत्र[4] तद्विकारश्चर्माणि श्लेष्मा चोच्यन्ते (तु. या २,५) । एकवाक्यताप्रसिद्ध्यर्थं च यत्तच्छब्दावध्याहार्यौ[5] । यस्माद्गोविकारैश्चर्मभिः श्लेष्मणा च सन्नद्धः गाढ बन्धने । सम्यक् बद्धोऽसि तस्मात् कृतदार्ढ्योपायत्वात् वीळयस्व वीळयतिः संस्तम्भकर्मा । संस्तम्भय दृढीकुरु आत्मानम् । दृढीकुरु वा आत्मानं त्वयि आस्थाता आरोढा ते तव जयतु जेत्वानि इत्यार्थे अयं त्व-प्रत्ययः । 'जेतव्यानि शत्रुसैन्यानि'[6] शत्रुधनानि वा ॥ २६ ॥

वेङ्कट० परौ तृचौ रथदुन्दुभिदेवत्यौ[9], ऐन्द्रोऽन्त्योऽर्धर्चः[10] । वनस्पते! दृढाङ्गो भव अस्मत्सखा प्रतरणः शोभनवीरयुक्तः । गोविकारैः चर्मभिः सन्नद्धः असि । स्तब्धो भव दृढाङ्गः । आस्थाता ते जयतु जेतव्यानि ॥ २६ ॥

दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज ॥ २७ ॥

दिवः । पृथिव्याः । परि । ओजः । उत्ऽभृतम् । वनस्पतिऽभ्यः । परि । आऽभृतम् । सहः ।
अपाम् । ओज्मानम् । परि । गोभिः । आऽवृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज ॥२७॥

स्कन्द० दिवः च पृथिव्याः च ओजः बलं सारः परि उद्भृतम् सर्वत उद्धृतम् । समुच्चित्यसमुच्चित्य पिण्डीकृतम् रथात्मना व्यवस्थापितम् । कारणस्य हि सार. कार्यात्मना व्यवतिष्ठते ।

---

1-1. वनस्पतेरनुवाः परः मूको. 2. रथः परस्तृच मूको. 3-3. अवसरम् मूको. 4. °नैषा दाता कु. 5 आहाता कु. 6. गोशब्देन मूको. 7. यस्माच्छब्दा° मूको. 8-8. जेतव्यानि ...... नानि तत्र मूको. 9. °न्दुभिदेवत्यौ वि° क° °न्दुभिदेवत्यौ छपं. 10. °ऐन्द्रान्त्यो° मूको.

आ । क्रन्दय । बलम् । ओजः । नः । आ । धाः । निः । स्तनिहि । दुःऽइता । बाधमानः ।
अप । प्रोथ । दुन्दुभे । दुच्छुनाः । इतः । इन्द्रस्य । मुष्टिः । असि । वीळयस्व ॥ ३० ॥

स्कन्द० आक्रन्दतिराह्वाने[1] । आ क्रन्दय बलम् शत्रुसेनालक्षणम् । ओजः बलम् नः अस्मभ्यम् पर्याप्तम् । अस्मासु आ धाः आधेहि । बलवतोऽस्मान् कुरु । येन स्वदाहूतशत्रुहननसमर्था[2] भवाम इत्यर्थः । किञ्च निः स्तनिहि स्तनतिः शब्दार्थः । स्वयमपि शब्दं कुरु । दुरिता दुरितानि पापानि अस्माकम् बाधमानः अपनयन् । अथवा 'निःस्तनिः अत्र क्वणनवचन[3]' । लोकेऽपि हि ज्वरादिना 'पीड्यमानो यः क्वणति स उच्यते' निःस्तनतीति । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः[4] । निःस्तनितं क्वणितशब्दं कारय । दुरिता द्वितीयाबहुवचनस्यायम् आकारः । दुरिता दुर्गतान् आपन्नत्वाद् अकल्प्यकृत्स्नान्[5] । लोकेऽपि ह्यापन्नो दुर्गत उच्यते । बाधमानः पीडयन् । तथा अकल्प्यकृत्स्नान् बाधस्व यथा क्वणन्तीत्यर्थः । 'अप प्रोथ प्रोथतिरन्यत्र[6] पर्याप्त्यर्थः.' प्रोथ 'पर्याप्ताविति । इह ॥ सामर्थ्याद्[7] अपनयनार्थः । अपनय[8] । हे दुन्दुभे ! दुच्छुनाः दुर्भिक्षाणि दुच्छुनाः उच्यन्ते । कुतोऽपनयानि । इतः अस्मत्समीपात्[9] । इन्द्रस्य मुष्टिः असि "एकवाक्यतासिद्धयर्थं यस्मात्तस्मात्पदद्वयाध्याहार्यो[11]" । यस्माद् इन्द्रस्य मुष्टिस्थानीयः त्वमसि तस्मात् वीळयस्व संस्तम्भयाऽस्मानस्मान् स्वीकुर्वाणस्मानम् । येन बलात् हननादिसमर्थोऽसीत्यर्थः । ॥ ३० ॥

वेङ्कट० क्रन्दय सेनाम् । बलम् ओजः च अस्मभ्यम् देहि । निः स्तनिहि दुरितानि बाधमानः । अप प्रोथ दुन्दुभे ! राक्षसान् इतः । प्रोथ इत्युच्चारणम् अपप्रोथनम् । इन्द्रस्य मुष्टिः भवसि[12] । संस्तम्भय शत्रुसेनाम् ॥ ३० ॥

आमूरज प्रत्यावर्तयेमाः केतुमद् दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ३१ ॥

आ । अमूः । अज । प्रतिऽआवर्तय । इमाः । केतुऽमत् । दुन्दुभिः । वावदीति ।
सम् । अश्वऽपर्णाः । चरन्ति । नः । नरः । अस्माकम् । इन्द्र । रथिनः । जयन्तु ॥ ३१ ॥

स्कन्द० अत्र आ इत्यर्वागर्थे । अज गतिक्षेपणयोः । हे दुन्दुभे ! "आ अज अर्वाक्[11]" क्षिप । हन्तुम् आत्मानं प्रति प्रेरयेत्यर्थः । किम् । अमूः दूरस्थाः अस्मच्छत्रुसेनाः । प्रत्यावर्तय "इमाः या अपि[13]" येमा अर्थहता नश्यन्ति, ता अपि हन्तुमेव प्रत्यावर्तय । द्वितीयस्तु[14] पादः परोक्षकृतत्वाद् भिन्नं वाक्यम् । वर्तमानापदेशश्च । केतुमत् "केतुः प्रज्ञानं तेन प्राहकेण तद्वत्[15]" केतुमत् । शोभनमित्यर्थः । शोभनं हि सम्यक् प्रज्ञया[17] गृह्यते नेतरत् । अथवा केतुशब्दोऽत्र

1. आक्रन्दस्याह्वानम् मूको. 2. स्वदहितबल° कु. 3-3. निस्तन्नत्राक्वणन° मूको. 4-4. दीप्यमानो यता क्वणः स उच्यते मूको. 5. °चान्तर्हित इत्यर्थ मूको. 6-6. अप प्रोथति° मूको. 7. शाब्दार्थः मूको. 8-8. °पर्याप्ता पीति हेतु सा° मूको. 9. उपनय वि°. 10 °समीपे मूको. 11-11. °वावयता ·· सात्यसा° मूको. 12. वसि मूको. 13-13. नास्ति मूको. 14-14. मा या अपि मूको. 15. यः द्वितीयस्तु मूको. 16-16. केता प्रज्ञानं तेन तद्वत् वि°; केता° वि° अ. 17. प्रज्ञाय मूको.

सामर्थ्यात् कान्तिवचनः। कान्तिमत् शोभनम् दुन्दुभिः वावदीति पुनःपुनः वदति। सर्वदा दुन्दुभिः शोभनं शब्दं करोतीत्यर्थः। 'समश्वपर्णास्तदचोऽर्धमैन्द्रम्। समश्वपर्णाः[1] इत्येवमादि पदस्या ऋचोऽर्धं यदैन्द्रम्। देवताभेदाच्च भिन्नमेवेदं[2] पूर्वस्माद् वाक्यात्। समित्यस्य चरन्तीत्येतेन सम्बन्धः। चरन्तीति च लोडर्थे लट्। सम् चरन्ति सञ्चरन्तु। शत्रून् [3]घ्नन्तः अप्रतिबध्यमानाः[3] [4]सङ्ग्रामे सञ्चरन्त्वित्यर्थः[4]। अश्वपर्णाः अश्वपतनाः अश्वगामिनः[5]। अश्ववारा इत्यर्थः। नः अस्माकम् स्वभूताः नरः मनुष्याः। न च केवला [6]अश्ववारा एव[6]। किं तर्हि। हे इन्द्र! अस्माकम् स्वभूताः रथिनः [7]अपि जयन्तु[7] सङ्ग्रामे ॥ ३१ ॥

इति भरद्वाजसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये [8]एकत्रिंशोऽध्यायः ॥

वेङ्कट० अस्मदीयाः सेनाः आ अज शत्रून् प्रति नय, प्रत्यावर्तय च इमाः शत्रुसेनाः। अथ परोक्षः[9]। प्रज्ञानयुक्तम् दुन्दुभिः अत्यन्तं शब्दं करोति। सम् चरन्ति अस्मदीयाः योद्धारः अश्वपतनाः। अस्माकम् इन्द्र! रथिनः शत्रून् जयन्तु ॥ ३१ ॥

[9]इति चतुर्थाष्टके सप्तमाध्याये पञ्चत्रिंशो वर्गः[9] ॥

इत्थं व्याख्यदेकत्रिंशमध्यायं माधवाह्वयः।
चोळेषु निवसन् ग्रामे गोमत्यार्यैः समादृतः[10] ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके सप्तमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके सप्तमोऽध्यायः ॥



1. न समश्व° मूको. 2. °भेव वेदं ख एपं. 3-3. घ्नन्तः प्रतिबध्यमानाः मूको. 4-4. सङ्ग्रामे° चरन्तीत्यर्थः मूको. 5. अश्वगमना वि°. 6-6. अश्वा एव मूको. 7-7. विजयन्तु मूको. 8. चत्वारिंशः वि° एपं; चत्वारिंशम् ल; अथ प्रत्यक्षः क प्रस्तावः. 9-9. नास्ति मूको. 10. स्वाहतः मूको; स्वाहतः क प्रस्तावः.

## अथ अष्टमोऽध्यायः

वेङ्कट०

'यज्ञायज्ञा वो अग्नये' इत्यादिष्वासति साधवः ।
आवृत्तेषु पदन् साध्यम् ऋगर्धेष्वपदेष्वथ[1] ॥ १ ॥
ऋचोऽर्धर्चा[2] पादाश्च[3] सूक्तान्तेषु पुनःपुनः ।
आवर्तमाना दृश्यन्ते सूक्तमध्येष्वपि क्वचित् ॥ २ ॥
'ये स्तोतृभ्यः'[4], 'नू ष्टुतः'[5] वा (च 'अ)स्मभ्यं तद्वसो दानाय'[6] ।
'अर्वाणरुपेन्द्र स्तुमस्य'[7] यत्तत्सर्वं[8] निदर्शनम्[9] ॥ ३ ॥
अथार्धर्चः 'तन्नो मित्रः'[10] सप्तम्यन्त्येऽपि[11] तादृशाः ।
'प्रातर्मक्षू'[12] इति पादः स्यात् सप्तम्यन्त्येऽपि च[11] तादृशाः ॥ ४ ॥
स्तुत्वाऽन्यमन्यदेवानां यत्तदावासते पुनः ।
ऋषयो यथादिष्ठास्ते तद्वाऽऽस्ते न पूरणाः ॥ ५ ॥
आवर्तयन्ति सूक्तेऽथ यथा (आ 'अ)र्चन्नु स्वराज्यम्[13] ।
आवर्तन्ते विधेयाश्च 'मरुद्भिरग्न आ गहि'[14] ॥ ६ ॥
सदृक्षदर्शितपदात् सम्नायाधीयते पुनः ।
अधीयते पुनः कश्चित् किं नु स्यात् तत्र कारणम् ॥ ७ ॥
'नू मे ब्रह्माण्यग्ने'[15] इति पुनश्चाधीयते पदम् ।
'शुनेनं शुनम्'[16] इति च वत्सामे मण्डले पुनः ॥ ८ ॥
अन्याहुः[18] कारणे वृद्धा तच्छिष्येव पुनः श्रुता ।
'नू मे'[15] इत्युचितं सूक्ते नैवमन्यत्र दृश्यते ॥ ९ ॥
एवंविधाया आवृत्तेरन्वेष्टव्यं प्रयोजनम् ।
इति वक्तुं पदावृत्तिः काकुश्चावृत्तितो भवेत् ॥ १० ॥
'अभ्रेर्न शुभम्'[17] इत्यस्याः '[18]पुत्रमेव च तादृशम्'[19] ।
तादृशं[20] पुरुष प्राह[21] भेदोऽयं ज्ञाप्यते पदात् ॥ ११ ॥

---

१ °धर्म: वि ल; °धर्मा कपं. २. ऋचोर्धेच' वि ल कपं; ऋचोर्धेच° क प्रस्तावः. ३. पादश्च वि ल कपं. ४. ऋ २,१,१६;२,१३. ५. ऋ ४,१६,२१;१७,२१ प्रभृ. ६. ऋ २,१३,१३;१४,१२. ७. ऋ २, ३३,१९;२४,१६. ८. °स्म वि ल कपं. ९. °र्शन वि ल कपं. १०. ऋ १, ५४,१६;५५,११ प्रभृ. ११. °न्ये च वेङ्कट. १२. ऋ १,५८,९;६०,५ प्रभृ. १३. नास्ति कपं. १४. ऋ १,८०,१-१६. १५. ऋ १,१९,१-९. १६. ऋ ७,१,२०-२५. १७. ऋ १,१६४,५०;१०,९०,१६. १८. तत्रा° वेङ्कट. १९. साध्या पुरुमेत्र वि ल कपं. २०. तादृशमेव वि ल कपं. २१. प्राहुः वेङ्कट.

तिलमात्रे भिद्यमाने पुनश्चाधीयते पदम्।
'स सूक्ष्मः[1] शक्यते ज्ञातुं व्याप्तैरिति[2] निर्णयः॥ १२॥

'पुनान इन्दवा भर सोम द्विबर्हसं रयिम्[3]।
पुनरागमसंधौ पुनश्चाधीयते पदम्॥ १३॥

आमेड्य योजना कार्या 'त्वं वसूनि पुष्यसि[3]।
द्विबर्हसं रयिं तस्मात् पुनानोऽस्मभ्यमाभर॥ १४॥

त्रिपुक्षितो यथाऽश्वः[4] स्याद् वक्रो[5] विक्षिप्तमानसः।
सन्निधौ च यथा काकः[6] साकल्योऽवहितस्तथा[7]॥ १५॥

पूरणेष्विति वक्तव्यम् अध्यायादिषु दर्शितम्।
ऋग्रूपार्थं मदुक्तानां चतुर्थेऽस्यामिहाष्टके॥ १६॥ इति॥

[४८]

'शंयुर्बार्हस्पत्यः (तृणपाणिः) ऋषिः। आद्यानां दशानाम् अग्निर्देवता, एकादश्यादि-पञ्चदश्यन्तानां मरुतः, त्रयोदश्यादीनां तिसृणां लिङ्गोक्ता इन्द्रादयो वा, षोडश्यादीनां चतसृणां पूषा, विंश्यादीनां पृश्निः, द्वाविंश्या द्यावाभूमी वा। प्रगाथश्छन्दः (प्रथमा तृतीया च बृहती, द्वितीया चतुर्थी च सतोबृहती, पञ्चमी बृहती, षष्ठी महासतोबृहती, सप्तमी महाबृहती, अष्टमी महासतोबृहती, नवमी बृहती, दशमी सतोबृहती, एकादशी ककुप्, द्वादशी सतोबृहती) चतुर्दश्येकोनविंशीविंश्यो बृहत्यः, त्रयोदश्यष्टादश्यौ पुरउष्णिहौ, पञ्चदशी अतिजगती, षोडशी ककुप्, सप्तदशी सतोबृहती, एकविंशी महाबृहती यवमध्या, द्वाविंशी अनुष्टुप्।

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्॥ १॥

यज्ञाऽयज्ञा। वः। अग्नये। गिराऽगिरा। च। दक्षसे।
प्रऽप्र। वयम्। अमृतम्। जातऽवेदसम्। प्रियम्। मित्रम्। न। शंसिषम्॥ १॥

स्कन्द० एतत्सूक्तमपि च अग्नेर्भरद्वाजस्यार्षम्। 'दशादितोऽग्नेस्तृणपाणिकस्य' (बृदे ५, ११२)।

---

१-१. सप्° विं° ल छपं. २. व्याप्त° वेंकम. ३. ऋ ९,१००,१. ४. °ऽश्वा विं° ल छपं; °न्यः वेंकम. ५. वक्रो ल छपं. ६. काकः ल छपं; काकः विं°. ७. °ऽहत° वेंकम.
८-८. नास्ति मूको.

तृणानि पाणौ कृत्वा इदं सूक्तम् अधीयते तेन तृणपाणिकम् उच्यते। तस्यास्यादौ दश ऋचोऽग्नेः। अग्निदेवत्या इत्यर्थः। यज्ञायज्ञा इति सप्तम्येकवचनस्याऽऽकारः। यज्ञेयज्ञे। अन्यत्र चान्यत्र च यज्ञ इत्यर्थः। वः व्यत्ययेनेदं बहुवचनम्। त्वाम् अग्नये द्वितीयार्थे चतुर्थी। अग्निम् गिरागिरा च अन्यया चान्यया च स्तुत्या। च-शब्दस्तु समुच्चयादेः अर्थस्याऽसम्भवात् पदपूरणः। दक्षसे दक्षतेरुत्साहार्थस्येदं रूपम्। बलनाम वा 'दक्षः' शब्दः अन्तर्णीतमत्वर्थः[1]। अत्रापि च द्वितीयार्थ एव चतुर्थी। दक्षं समुत्साहिनं बलवन्तं वेत्यर्थः। प्रप्र 'प्रसमुपोदः पादपूरणे' (पा ८,१,६) इत्येवम् एतद् द्विर्वचनम्। उपसर्गश्चार्थं प्रशब्दः शंसिषम् इत्येतेनाख्यातेन सम्बन्धयितव्यः। वयम् व्यत्ययेनेदं बहुवचनम्। अहम् अमृतम् अमरणधर्माणम् जातवेदसम् जातप्रज्ञम् जातधनम् जातप्रज्ञानं वा प्रियम् मित्रम् न यथा कश्चित्प्रियम् आत्मनः प्रशंसेद् एवं प्र शंसिषम् स्तुयामित्याशास्महे[1] ॥ १ ॥

वेङ्कट० शंयुः। यज्ञेयज्ञे युष्मभ्यम् अहम् स्तुत्यास्तुत्या प्रवृद्धाय अग्नये शंसनम् कृतवानस्मि। एकदेशोऽयम् — प्राशंसिषम् अहम् अमृतम् जातवेदसम् प्रियम् इव मित्रम् इति ॥ १ ॥

ऊ॒र्जो नपा॑तं॒ स हि॒नायम॑स्म॒युर्दाशे॑म ह॒व्यदा॑तये ।
भुव॒द् वाजे॑ष्ववि॒ता भुव॑द् वृ॒ध उ॒त त्रा॒ता त॒नूना॑म् ॥ २ ॥

ऊ॒र्जः । नपा॑तम् । सः । हि॒न । अ॒यम् । अ॒स्म॒ऽयुः । दाशे॑म । ह॒व्यऽदा॑तये ।
भुव॑त् । वाजे॑षु । अ॒वि॒ता । भुव॑त् । वृ॒धः । उ॒त । त्रा॒ता । त॒नूना॑म् ॥ २ ॥

स्कन्द० "ऊर्जो नपातं सः" इति यच्छब्दश्रुतेर्यच्छब्दोऽयमित्यनेन समानाधिकरणोऽध्याहार्यः। यः अयम् पूर्वप्रकृतोऽग्निः सः हिन एकोवाक्यत्वाद् एकनिपातोऽयम् हिशब्देनसमानार्थः यस्मादर्थे वर्तते। यस्मात् अस्मयुः अस्मत्कामः। अस्मान् हविर्दानाय इच्छतीत्यर्थः। यस्मादिति वचनात् तस्मादित्यध्याहार्यः। तस्मात् ऊर्जो नपातम् ऊर्ग् अन्नं व्रीह्यादिलक्षणम् उदकलक्षणं वा। तस्य नपात् पौत्रोऽग्निः। कथम्। व्रीहिभ्यः अन्नवत्त्र ओषधिवनस्पतयो जायन्ते। ओषधिवनस्पतिभ्य एव जायते। तस्माद् अयम् ऊर्जो नपात्। चतुर्थ्यर्थेऽत्र द्वितीया। ऊर्जो नपाते अस्मै अग्नये दाशेम दद्यामेत्याशास्महे। हव्यदातये द्वितीयार्थे चतुर्थ्येषा। हव्यदातिं हविर्दानम्। दत्ते च हविषि भुवत् भवतु वाजेषु सङ्ग्रामेषु अविता रक्षिता अस्माकम्। भुवत् भवतु च वृधः वर्धयिता उत त्राता च, नित्यमेव न सङ्ग्रामेष्वेव केवलेषु, तनूनाम् शरीराणाम् अस्माकम्[1] ॥ २ ॥

वेङ्कट० 'हिनेति इति निपातो' हिपर्यायः। ऊर्जः पुत्रं प्राशंसिषम्। यः अयम् खलु अस्मत्कामः[2]। तस्मै देवानां हविषां[3] दात्रे हविः दाशेम। स भवतु सङ्ग्रामेषु अस्माकं रक्षिता। भवतु वर्धयिता, अपि च त्राता अङ्गानाम् ॥ २ ॥

---

१-१. दक्षतव्य ... ...र्थः मूको. २. स्तुयामीत्याद्या° मूको. २-२. मूलकोशेषु बहूनां वाक्यानां पूर्वोत्तरभावो दृश्यते। मूलतालपत्राणां क्रमव्यत्ययोऽत्र हेतुः। ४-४. नास्ति ख एवं. ५. अस्मिन् स° मूको. ६. °षो वि°.

वृषा ह्यग्ने अजरो महान् विभास्यर्चिषा ।
अजस्रेण शोचिषा शोशुचच्छुचे सुदीतिभिः सु दीदिहि ॥ ३ ॥

वृषा । हि । अग्ने । अजरः । महान् । विऽभासि । अर्चिषा ।
अजस्रेण । शोचिषा । शोशुचत् । शुचे । सुदीतिऽभिः । सु । दीदिहि ॥ ३ ॥

स्कन्द० वृषा हविर्नयनद्वारेण वर्षिता[1] त्वम् । हि शब्दः पादपूरणः । हे अग्ने ! अजरः जरावर्जितश्च महान् च दीर्घतः[2] परिमाणतो वा विभासि विविधं च दीप्यसे[3] अर्चिषा दीप्त्या । परश्चार्धर्चो[4] भिन्नं वाक्यम् । यच्छब्दो वाध्याहृत्यैकवाक्यता योज्या । यो वृषाऽजरो[5] महान् "विभासि स त्वम्[6] अजस्रेण अविच्छिन्नेन शोचिषा दीप्त्या प्रभालक्षणया शोशुचत् अत्यर्थं दीप्यमान । हे शुचे ! दीप्त ! सुदीतिभिः "दीतिः दीप्तिः । शोभनदीप्तिभिः ज्वालाभि.[7] सु दीदिहि सुष्ठु दीप्यस्व ॥ ३ ॥

वेङ्कट० वर्षिता हि अग्ने ! जरारहित. महान् विभासि तेजसा । आदित्येन तेजसा दीप्यमानः त्वम् शुचे ! शोभनदीप्तिभिः दीप्यस्व शोभनम्[8] ॥ ३ ॥

महो देवान् यजसि यक्ष्यानुषक् तव क्रत्वोत दंसना ।
अर्वाचः सीं कृणुह्यग्नेऽवसे रास्व वाजोत वंस्व ॥ ४ ॥

महः । देवान् । यजसि । यक्षि । आनुषक् । तव । क्रत्वा । उत । दंसना ।
अर्वाचः । सीम् । कृणुहि । अग्ने । अवसे । रास्व । वाजा । उत । वंस्व ॥ ४ ॥

स्कन्द० महः देवान् महान् त्वं महतो वा देवान् यजसि होतर्थेऽत्र लट् । 'यज देवांश्च क्रमेण'[9] यक्षि आनुषक् । आनुषगिति "देवानाम् आनुपूर्व्येण"[10] । यो यदा यथा यष्टव्य. तं तथा तदा च यजेरर्थ.[11] । इष्ट्वा च तव क्रत्वा तवैव या प्रज्ञा तया उत दंसना अपठितमपि कर्मनामैतद् द्रष्टव्यम् । कर्मणा अर्वाचः अस्मदभिमुखान् । अनुग्राहकानित्यर्थ.[12] । सीम् सर्वान् देवान् इत्यादि कुरु हे अग्ने ! अवसे[13] धनादिभिः तर्पणाय पालनाय वा अस्माकम् । स्वयमपि च "त्वम् रास्व देहि"[14] धाजा अन्नानि । "उत वंस्व सम्भजस्वापि"[15] । किम् । अस्मानेव वा हवीरूपाणि सर्वाणि[16] । "अथवा वंस्वेति[17] वनु याच्यायाम् इत्यस्य रूपम् । याचस्व अस्मत्तः अन्नानि हवीरूपाणि ॥ ४ ॥

वेङ्कट० "महतः देवान् त्वम् यक्षि यजमानानाम् । तथा सति यज अस्माकमपि आनुषकम् । तव[18]

1. वर्षिता मूको. 2. दीर्घतः च वि[1]. 3. दीप्यसे मूको. 4. °वाक्यर्थेन्त्र मूको. 5. वृषाऽमृते मूको. 6 विभासि च मूको. 7-7. सुनिर्दीप्तिज्वालाभिः वि[1]. 8. नास्ति वर्ष. 9-9. मान यजेत मूको. 10-10. °नामानुलोम वि[1]. 11. यजेरर्थः मूको. 12. °अनुग्राहका° वि[1]; मानस्य क्रमेण वि[1] अ. 13. सति मूको. 13. अवसे मूको. 14-14. त्वमान् मदेहि मूको. 15-15. उत वंस्वमस्य मूको. 16-16. नास्ति वर्ष. वि[11]; सर्वा अ. 17-17. अथ वंस्वे मूको.

[1]प्रज्ञानेन अपि च कर्मणा अभिमुखान् सर्वान् देवान् कुरु रक्षणाय अग्ने। देहि धनानि। मपि अस्मभ्य त्व च सुम्भवस्व[2] ॥ ४ ॥

यमापो अद्रयो वना गर्भमृतस्य पिप्रति।
सहसा यो मथितो जायते नृभिः पृथिव्या अधि सानवि ॥ ५ ॥

यम्। आपः। अद्रयः। वना। गर्भम्। ऋतस्य। पिप्रति।
सहसा। यः। मथितः। जायते। नृऽभिः। पृथिव्याः। अधि। सानवि ॥ ५ ॥

स्कन्द० [3]'यम् आपः' उदकानि अद्रयः पर्वता वना वनानि च वृक्षसमूहलक्षणानि[3] गर्भम् गर्भस्थानीयम् ऋतस्य पिप्रति[4] स्नेहस्नेनोपकारेण 'पालयन्ति। य च[5] सहसा बलेन 'मथित सन्'[6] जायते। केन मथितः। नृभि[7] मनुष्यै ऋत्विग्भरित्यर्थः। क्व[8]। पृथिव्या अधि उपरि सानवि समुच्छ्रिते प्रदेशे वेद्याख्ये। महिंस्करणाद्विना हि समुच्छ्रिता वेदि। अथवा सानुशब्द समुच्छ्रितपर्वता विमवदनवचन एव। पूर्वानपेक्ष चेद द्वितीयं जन्मस्थानवचनम्। सहसा यो मथितो जायते नृभि। क। सामर्थ्याद् पक्षे वेधाद् वा। यश्च पृथिव्या अधि सानवि समुच्छ्रिते पर्वतादौ प्रदेशे वायुना क्षोभ्यमाणाद् वंशाद्युपात् जायते ॥ ५ ॥

वेङ्कट० 'यम् वसतीवर्य्य ग्रावाण काष्ठानि च यज्ञस्य गर्भम् पूरयन्ति। य च यज्ञे ऋत्विग्भि बलेन मथित जायते पृथिव्या उच्छ्रिते पर्वभूते देवयजने' ॥ ५ ॥

[9]इति चतुर्थाष्टके अष्टमाध्याये प्रथमो वर्ग [9] ॥

आ यः पप्रौ भानुना रोदसी उभे धूमेन धावते दिवि।
तिरस्तमो ददृश ऊर्म्यास्वा श्यावास्वरुषो वृषा श्यावा अरुषो वृषा ॥ ६ ॥

आ। यः। पप्रौ। भानुना। रोदसी इति। उभे इति। धूमेन। धावते। दिवि।
तिरः। तमः। ददृशे। ऊर्म्यासु। आ। श्यावासु। अरुषः। वृषा। आ। श्यावाः। अरुषः। वृषा ॥ ६ ॥

स्कन्द० य च आ पप्रौ आपूरयति व्याप्नोति भानुना दीप्त्या रोदसी द्यावापृथिव्यौ उभे। धूमेन च धावते गच्छति दिवि द्युलोके। धूमेन दिव स्पृशतीत्यर्थः। सर्वेषां यच्छब्दानां निराकाङ्क्षीकरणार्थं तच्छब्दोऽध्याहार्य। [10]'सः तिर तिर इति गते, तम[10] इति कर्मश्रुतेश्च[11] योग्यक्रियाशब्दाध्याहार। तिरस्कृत्य तम ददृशे दृश्यते। यथा घटादीनां तमसा दर्शन प्रतिबध्यते तथाऽस्य न प्रतिबध्यत इत्यर्थः। क्व। उच्यते। ऊर्म्यासु[12] रात्रिषु। आ इति पादपूरणम्। ददृश इत्यनेन वा[13] सर्वागमं सम्बध्यते। आ ददृशे सर्वांग दृश्यत इति। कीदृशीषु ऊर्म्यासु। उच्यते। श्यावासु श्यावर्णासु। तमस्वतीष्वित्यर्थः। कीदृश। उच्यते— अरुष गन्ता। सर्वत्राप्रतिहतगतिरित्यर्थः। वृषा वर्षिता हविर्नयनद्वारेण। आ श्यावा आ इत्युपसर्गात् श्यावा इति च

1-1 नास्ति दर्य 2-2 नास्ति मूको 3. °समूह लक्षणानि मूको 4. ऋतस्य विप्रति मूको। 5-5 पाल्नीतरश्च मूको 6-6 मथितं सत् मूको 7 नास्ति मूको 8 क्व मूको 9-9 नास्ति दर्प † नास्ति ए 10-10. स तिरस्तं गते त मूको 11. कर्मश्रुते मूको 12 ऊर्म्यरि दु वि[1] 13 वया मूको

कर्मश्रुतेर्ददृशे इत्येतत् क्रियापदम् अनुपकल्प्यम्। स्वयमपि आ ददृशे। अर्वाक् तां[१] पश्यति। न केवलं तमः तिरस्कृत्य दृश्यते, पश्यत्यपीत्यर्थः। किम्। श्यावाः श्याववर्णा रात्रीः अरुषः वृषा चाग्निः ॥६॥

वेङ्कट० आ पूरयति यः तेजसा द्यावापृथिव्यौ उभे अपि, धूमेन सोऽन्तरिक्षे धावते। आ दृश्यते स तिरस्कृत्य तमांसि। रात्रिषु[२] दृश्यते श्याववर्णासु आरोचमानः वृषा। तथा सर्वाः एव रात्रीः रोचयन् आ दृश्यते आरोचमानः ॥ ६ ॥

बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा।
भरद्वाजे समिधानो यविष्ठ्य रेवन्नः शुक्र दीदिहि द्युमत् पावक दीदिहि ॥७॥

बृहत्ऽभिः। अग्ने। अर्चिऽभिः। शुक्रेण। देव। शोचिषा।
भरत्ऽवाजे। सम्ऽइधानः। यविष्ठ्य। रेवत्। नः। शुक्र। दीदिहि। द्युऽमत्। पावक। दीदिहि ॥७॥

स्कन्द० बृहद्भिः[३] महद्भिः अग्ने। अर्चिभिः दीप्तिभिः ज्वालाख्याभिः शुक्रेण शुक्लवर्णेन शोचिषा प्रभालक्षणेन भरद्वाजे समिधानः तात्कालिके चायं चामग्। प्रत्यक्षकृतत्वात् मन्त्रस्य व्यतिरिक्त॰ प्रातिपदिकार्थे प्रथमान्तमेतत्। यच्चाध्याहार्यमाहत्यैकवाक्यत्वं नेयम्। यस्त्वं मयि भरद्वाजर्षौ पापं कुर्वति समिन्धनशीलः स हे यविष्ठ्य। युवतम! रेवत् धनसंयुक्तम्। धनं ददादित्यर्थः। नः अस्मभ्यं हे शुक्र! शुक्लवर्ण! दीप्त! वा इदानीमपि दीदिहि दीप्यस्व। न च मन्दम्। किं तर्हि। द्युमत् दीप्तिमत्। हे पावक! शोधयितः! दीदिहि दीप्यस्व ॥ ७ ॥

वेङ्कट० [४]महतीभिः अग्ने! दीप्तिभिः शुक्लया च देव! ज्वालया भरद्वाजे मम भ्रातरि दीप्यमानः युवतम! त्वम् अस्माकम् धनयुक्तं दीप्तियुक्तं[†] च दीप्यस्व[४] दीप्यमान![५] शोधक![६] ॥ ७ ॥

विश्वासां गृहपतिर्विशामसि त्वमग्ने मानुषीणाम्।
शतं पूर्भिर्यविष्ठ पाह्यंहसः समेद्धारं शतं हिमाः स्तोतृभ्यो ये च ददति ॥ ८ ॥

विश्वासाम्। गृहऽपतिः। विशाम्। असि। त्वम्। अग्ने। मानुषीणाम्।
शतम्। पूःऽभिः। यविष्ठ। पाहि। अंहसः। सम्ऽएद्धारम्। शतम्। हिमाः। स्तोतृऽभ्यः। ये। च। ददति ॥

स्कन्द० अर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। यः विश्वासाम् सर्वासाम्[७] गृहपतिः गृहस्य पालयिता स्वामी वा विशाम् मनुष्यजातीनाम् असि त्वम् हे अग्ने! मानुषीणाम् मनुष्येषु भवानाम्[८]। सः शतम् तृतीयार्थे प्रथमैषा। शतेन पूर्भिः पूरिति शरीरम् उच्यते प्रजा वा। शरीरैः[९] प्रजाभिर्वा[१०] हे यविष्ठ! युवतम! पाहि अंहसः पापात्[११] समेद्धारम् दीपयितारं

१. तद मूको. २. रात्रौ वि॰. ३. नास्ति मूको. ४-४. नास्ति स्पं. † नास्ति मूको. ५. °मानः वि॰; शोचमानाः क. ६. शोचक वि॰ स्पं. ७. नास्ति वि॰. ८. स्वनानां गृहपतिरसि वि॰; °नां गृहपतिरसि वि॰ क कु. ९. शरीरेण वि॰. १०. °र्थो। आत्मीये ये द्रष्टव्यः मूको. ११. पापात् मूको.

माम्। यज्ञे मद्दारमित्यर्थः[1]। शतम् हिमाः शतं वर्षाणि। न केवलं समेद्धारमेव। किं तर्हि। स्तोतृभ्यः मत्प्रभृतिभ्यः ये च ददति धनानि[2] राधानोऽन्ये वा[3] तांश्च ॥ ८ ॥[4]

वेङ्कट० त्वम् अग्ने! सर्वासाम् मानुषीणाम् विशाम् गृहपतिः असि। त्वम् शतसहस्राभिः पुरीभिः युवतम! पाहि रक्ष आहन्तुः समेद्धारम्[5] शतम् हिमाः। स्तोतृभ्यः ये च ददति तांश्च पाहीति[6] ॥ ८ ॥

त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ ९ ॥

त्वम्। नः। चित्रः। ऊत्या। वसो इति। राधांसि। चोदय।
अस्य। रायः। त्वम्। अग्ने। रथीः। असि। विदाः। गाधम्। तुचे। तु। नः ॥ ९ ॥

स्कन्द० एवमः प्रत्यक्षकृतोऽयं मन्त्रः। चित्र इत्येतद् नाऽऽमन्त्रितम्[7]। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता। 'यः त्वम् चित्रः विचित्रः सः नः'[8] कर्मप्रवचनीययोगलक्षणैषा द्वितीया। तच्छ्रुतेश्च कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः[9]। अस्मान् प्रति पालनेन सह वसो! प्रशस्त! [10]धनवन् या[10] राधांसि धनानि चोदय प्रेरय। पालय अस्मान्, धनानि च देहीत्यर्थः। किं कारणम्। उच्यते। अस्य रायः[11] यदिदं पृथिव्यां धनम् अस्य सर्वस्य त्वम् हे अग्ने! रथीः[12] सारथिवचनोऽयं प्रेरणासामान्याद् इह प्रयुक्तः। प्रेरयिताऽसि। दाताऽसीत्यर्थः। किञ्च विदाः वेत्स जानीहि। ज्ञानेन चात्र प्रदानमेव लक्ष्यते। देहीत्यर्थः। किम्। गाधम् गाधशब्दोऽयम् अगाधमुदकमित्येवमादिषु उदकमध्ये या भूः पादाश्रिता प्रतिपद्यते तस्या वाचकः। इह तु स्थानसामान्याद् आश्रयस्थाने प्रयुक्तः। आश्रयस्थानम्। कस्मै। तुचे 'तुक्'[13] (निघ २,२) इत्यपत्यनाम। अपत्याय। तु इति पदपूरणः। नः अस्माकम् ॥ ९ ॥

वेङ्कट० त्वम् अस्मभ्यम् चित्रः[14] रक्षणार्थं वासयितः![15] धनानि चोदय। अस्य दृश्यमानस्य धनस्य त्वम् अग्ने! नेता भवसि। तस्य च गाधम् प्रतिष्ठाम् अपत्यार्थम् अस्माकम् शीघ्रम् ॥ ९ ॥

पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेळांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥ १० ॥

पर्षि। तोकम्। तनयम्। पर्तृऽभिः। त्वम्। अदब्धैः। अप्रयुत्वऽभिः।
अग्ने। हेळांसि। दैव्या। युयोधि। नः। अदेवानि। ह्वरांसि। च ॥ १० ॥

---

1. यज्ञे मद्दारम° मूको. 2. दधानि मूको. 3. नास्ति मूको. 4. मूको. यविष्ठ्यादिः ग्रन्थः २१ शमसन्त्यन्ते दृष्टः. 5. °मेधा° क सर्पं. 6. पाही° ख सर्पं. 7. °मन्त्रितः मूको. 8-8. यस्त्वमित्र विचित्रस्त्व मूको. 9. प्रशस्याध्याहारः मूको. 10-10. धनवन्या मूको. 11. राया मूको. 12. रथी मूको. 13. तुकेत मूको. 14. °त्र क सर्पं. 15. °सि° कि ख सर्पं.

स्कन्द० परि[1] लोडर्थेऽत्र लट्। पालय। तोकम् तनयम् पुत्रं च पौत्रं चास्माकम्। पर्तृभिः[2] भावेऽयं तृच्[3] छान्दसत्वात्। पालनैः[4] त्वम् अदब्धैः अहिंसितैः केनचिदपि हिंसितुमशक्यैः। अप्रयुत्वभिः यु मिश्रणे। [5]अप्रमिश्रणम् अप्रयुत्[5], तद्वन्त अप्रयुत्वन्। मत्वर्थे[6] वनिप्। तैः अप्रयुत्वभिः। अन्येनामिश्रितैः। अत्यन्तासाधारणैरित्यर्थः। किञ्च हे अग्ने! हेळांसि क्रोधरूपाणि दैव्या[7] देवानां स्वरूपाणि भूतानि युयोधि पृथक् कुरु नः[8] पञ्चम्यर्थेऽपा षष्ठी। अस्मत्तः। अस्माकमुपरि ये देवानां क्रोधाः तान् अपनयेत्यर्थः। न च तान्येव केवलान्। किं तर्हि। अदेवानि ह्वरांसि च अदेवा रक्षआदयः, तत्कर्तृकाणि यानि, तानि तत्साहचर्याद् अदेवानीत्युच्यन्ते। ह्वरांसि हिंसाकौटिल्यानि च। ह्वृ कौटिल्ये इति। रक्षआदीनां हिंसाकौटिल्यानि 'चाहरय मा अस्माद्[9]' प्रवृत्तयः तांश्चेत्यर्थः ॥ १० ॥[10]

वेङ्कट० पारम्[11] पुत्रम् पौत्रं च पारणोपायैः त्वम् अहिंसितैः अजस्रैः। अग्ने! क्रोधान् देवकृतान्[12] पृथक् कुरु, अस्माकम् रक्षांसि च कुटिलगमनानि ॥ १० ॥

[13]इति चतुर्थाष्टके अष्टमाध्याये द्वितीयो वर्गः[13] ॥

आ सखायः सबर्दुघां धेनुमजध्वमुप नव्यसा वचः। सृजध्वमनपस्फुराम् ॥११॥

आ। सखायः। सबःऽदुघाम्। धेनुम्। अजध्वम्। उप। नव्यसा। वचः। सृजध्वम्। अनपऽस्फुराम् ॥११॥

स्कन्द० 'आदित्यो वा मरुतो वा पृश्नयो वा प्रगाथः', तत्र योऽयमनन्तरः प्रगाथोऽत्र सूक्ते, प्रगाथ इति मत्व आख्याः, स आदित्यदेवतो मरुद्देवतो वा पृश्निदेवतो वा। प्रमाणां येषां विकल्पानां पृश्निदेवतात्वम् ऋगक्षरेभ्याऽऽरूढतमं दृश्यते। पृश्निरिति च मरुतां मातोच्यते। कुत एतत्। 'पृश्निं वोचन्त मातरम्' ( ऋ ५,५२,१६ ) इत्यादौ मन्त्रान्तरे पृश्नेर्मरुतां मातृत्वदर्शनात्। सा च गौः। 'गोमातरो यच्छुभयन्ते अञ्जिभिः' ( ऋ १,८५,३ ) इति दर्शनाद् गोशब्दस्य च सर्वादिमत्त्वात् गवि प्रसिद्धतरत्वात्। द्यौर्वा पृश्निशब्दस्य द्युनामत्वात्।

हे सखायः! ऋत्विजः सबर्दुघाम् सबः अमृतं तत्सदृशं वा पृश्निरूपम् उदकं तद् या दोग्धि पृश्निः दोग्ध्री द्यौर्वा सा सबर्दुघा तां धेनुम् दोग्ध्रीम् आ अजध्वम् आभिगमयतेत्यर्थः। सामर्थ्यादन्तर्णीतण्यर्थः[14]। आगमयत स्वयमेव। आगत्य च नव्यसा नवतरेण अग्ने, स्तोतृभिरदृष्टपूर्वेण वचः[15] तृतीयार्थे एषा प्रथमा। वचसा स्तुतिलक्षणेन उप सृजध्वम् उपेत्येष समित्यस्य स्थाने। संसृजत[16] मिश्रयत। स्तुतेत्यर्थः। कीदृशीम्। उच्यते। अनपस्फुराम् अविचालिनीम् ॥ ११ ॥[17]

वेङ्कट० शौनकः—'आदित्यो वा मरुतः पृश्नयो वा प्रगाथस्त्वत्र' ( बृ. दे ५,११३,११४; ऋअ २, ६,४८ ) इति। अस्मिन् सूक्तेऽयं[18] प्रगाथ आदित्यदेवतो वा मरुद्देवतो वा पृश्निदेवतो वेत्यर्थः। तत्र पृश्नि देवतात्वम् ऋग्वर्णेषु[19] दृश्यते। हे सखायः! अमृतदुघाम् धेनुम् नवतरेण स्तोत्रेण उप आ अजध्वम्, विसृजध्वं[20] च दातुः तां प्रस्फुरन्तीम् ॥ ११ ॥

१. वर्षि मूको. २. पतिभिः वि[1]; पर्तृभिः वि[2]. ३. तृ वि[1]. ४-४. गपालनैः मूको. ५-५. अप्रमिश्रणमप्रयुत्त्वात् मूको. ६-६. 'प्रयुत्वत्सुमत्वर्थे मूको. ७. दैवा मूको. ८. न मूको. ९. चाहृत्योरमाद्ग मूको. १०. मूको. इदं भाष्यम् २१तममन्त्रभाष्यस्य मध्ये पतितम्. ११. पा° मूको. १२. दैव ल रूपं. १३-१३. नास्ति मूको. १४. णागमयार्थो मूको. १५. वच मूको. १६. संसृजत मूको. १७. मूको. इदं भाष्यम् २१तममन्त्रभाष्यानन्तरं प्रमादाल्लिखितम्. १८. सूक्ते° मूको. १९. पृश्नि° ल रूपं २०. विसृजत मूको.

या शर्धा॑य॒ मारु॑ताय॒ स्वभा॑नवे॒ श्रवो॒ऽमृ॑त्यु॒ धुक्ष॑त ।
या मृ॑ळी॒के म॒रुतां॑ तु॒राणां॒ या सु॒म्नैरे॑व॒याव॑री ॥ १२ ॥

या । शर्धा॑य । मारु॑ताय । स्वऽभा॑नवे । श्रवः॑ । अमृ॑त्यु । धुक्ष॑त ।
या । मृ॒ळी॒के । म॒रुता॑म् । तु॒राणा॑म् । या । सु॒म्नैः । ए॒व॒ऽयाव॑री ॥ १२ ॥

स्कन्द० [1]या किं करोति । उच्यते—†या शर्धाय† बलाय मारुताय मरुत्समूहलक्षणाय स्वभानवे स्वयं-दीप्ताय श्रवः अन्नम् अमृतलक्षणं वृष्ट्युदकलक्षणं वा अमृत्यु कार्यशब्दोऽयं कारणे प्रयुक्तो 'मक्षोदकं पादरोगः' इति यथा । अमृत्युकारणभूतम् धुक्षत दोग्धि । या स्वपुत्राणां मरुताम् शर्धाय अमृतं वृष्ट्युदकलक्षणं वा दोग्धीत्यर्थः । या च मृळीके सुखे । सप्तमीनिर्देशाद् वर्तते इति वाक्यशेषः । तेनतेन उपकारेण सुखं करोतीत्यर्थः । केषाम् । मरुताम्[2] । या च तुराणाम्[3] हिंसि-तॄणाम् सुम्नैः सहयोगलक्षणैषा तृतीया । सुम्नैः सह एवयावरी 'एवशब्दः कामवचनः'[3], यातिरपि अन्वर्णीत्यर्थः । कामानां याऽपगमयित्री स्तोतॄन् प्रति । सुम्नानाम् अन्येषां च कामानां स्तोतॄणां प्रापयित्रीत्यर्थः । या श्रवो धुक्षत[4], या च मृळीके मरुतां वर्तते, या च एवयावरी, ताम्[5] सबर्दुघां धेनुम् अजथ्यं संसृजध्वं मन्त्रेण वचसेत्येवं यच्छन्दःश्रुतेस्तच्छब्दम् अध्याहृत्यास्या ऋचः पूर्वयैकवाक्यता योज्या । मारुतपक्षे त्वस्य प्रगाथस्य—या शर्धाय मारुताय श्रवो धुक्षत या च मृळीके मरुताम्, तां सबर्दुघां धेनुम् अजध्वम् संसृजध्वम् च नवतरेण वचसा । [6]सा या काचि-दित्येवं[6] मरुतां प्राधान्याद् देवतात्वं गुणभावश्च धेनोरिति व्याख्येयम् । आदित्यदेवतात्वपक्षे तु—शर्धाय मारुताय स्वभानव इत्येतैरादित्यसमूह उच्यते इति व्याख्येयम् । कथम् । मरुतां सम्बन्धी मारुत आदित्यसमूहः । केन सम्बन्धेन सम्बन्धीत । तदीयरसादानलक्षणेन । अथवा मारुत इति मरुतां[7] नाम । तेषां स्तुत्यतया सम्बन्धी मारुत आदित्यसमूहः । स्वयं च दीप्तत्वात् स्वभानुः । तस्मै स्तुतां[8] दास्यत इत्येवमर्थः । या द्यौः श्रवः वृष्ट्युदकलक्षणमन्नं दोग्धि, या च मृळीके मरुताम् आदित्यसमूहसम्बन्धिनां वर्तते, तां सबर्दुघां धेनुं दिवम् अजध्वम् संसृजध्वम् चेति । पूर्ववदेव चात्रापि सबर्दुघाया धेनोरप्राधान्यम् आदित्यगणस्यैव प्राधान्याद् देव-तात्वमिति ॥ १२ ॥

वेङ्कट० या मारुताय वेगाय स्वभूतदीप्तये श्रवणीयम् अमरणं यदेतु पयः धुक्षत[9] । या ■ मरुताम् गन्तॄणाम् सुखे वर्तते । या च सुम्नैः सदैव गमनशीला । यदा मारुतः प्रगाथः तदा मरुतां मातृद्वारा स्तुतिः । अथ यदाऽऽदित्यः तदा ,तेषां माता । अदितिर्हि पृश्नि-भूत्वा मरुतश्चोत्पादयामास ॥ १२ ॥

भ॒रद्वा॑जा॒याव॑ धुक्षत द्वि॒ता । धे॒नुं च॑ वि॒श्वदो॑हसमि॒षं॑ च वि॒श्वभो॑जसम् ॥ १३ ॥

भ॒रत्ऽवा॑जाय । अव॑ । धु॒क्ष॒त॒ । द्वि॒ता । धे॒नुम् । च॒ । वि॒श्वऽदो॑हसम् । इष॑म् । च॒ । वि॒श्वऽभो॑जसम् ॥ १३ ॥

---

1-1. मूको. इदं भाष्यम् ११तमसन्त्रभाष्यात् परं प्रमादाल्लिखितम्. †-† या अयादपि मूको. 2. नास्ति मूको 3-3. °शब्दानाम वचनः मूको. 4. धुक्ष मूको. 5. नास्ति मूको. 6-6. सा या काचि° वि°; यया विधि° वि°. 7. मरुत मूको. 8. स्तवा मूको. 9. धुक्षत मूको; धुक्षत ■ प्रस्तावः.

वेङ्कट० तम् युष्मदर्थम् इन्द्रम् च सुप्रज्ञानम् वरुणम् च प्रज्ञावन्तम् अर्यमणम् च मादयितारम् गच्छद्वं प्रदातारम् विष्णुम् च स्तौमि[1] धनादेशाय[2] ॥ १४ ॥

त्वेषं शर्धो न मारुतं तुविष्वण्यनर्वाणं पूषणं सं यथा शता ।
सं सहस्रा कारिषच्चर्षणिभ्य आँ आविर्गूळ्हा वसू करत् सुवेदा नो वसू करत् ॥१५॥

त्वेषम् । शर्धः । न । मारुतम् । तुविऽस्वनि । अनर्वाणम् । पूषणम् । सम् । यथा । शता ।
सम् । सहस्रा । कारिषत् । चर्षणिऽभ्यः । आ । आविः । गूळ्हा । वसु । करत् । सुऽवेदा । नः । वसु । करत् ॥

स्कन्द० किम् इन्द्रादीनेव केवलान् । न । किं तर्हि । त्वेषम् न-शब्दः पूर्ववत् पदपूरणः । समुच्चयार्थो वा । त्वेषमित्यर्थश्च वहनसमर्थमेव । त्वेषम् शर्धः दीप्तं च 'बलम् कर्म'[3] तत् मारुतम् मरुत्समूह-लक्षणम् । कीदृशम् । तुविष्वणि तुविशब्दम् । न च मारुतमेव शर्धः केवलम् । अनर्वाणम् पूषणम् अनर्वाणमित्येतत् पुल्लिङ्गत्वादुत्तरस्य पूष्णो विशेषणम्, न पूर्वस्य मारुतस्य शर्धसः[4] । अस्य चान्यं प्रति आश्रितत्वया आनर्वत्वम् । अनर्वाणम् अन्यत्राऽनाश्रितं पूषणम्[5] । सम् यथा शता सम् सहस्रा कारिषत् । समित्युपसर्गस्य शतेषु सहस्रेषु च भेदेन श्रुतेः कारिषदित्या-ख्यातमपि[6] भेदेनैव योजयितव्यम् । यथैषाम् इन्द्रादीनाम् एकैको "वैश्वदेवो गणः" स्तुत्याराधितः सम् कारिषत् सम्यक् करोति शतानि । कस्य । सामर्थ्याद् अभिप्रेतानाम् । सम् सहस्रा कारिषत् सहस्राणि च सम्यक् करोति । चर्षणिभ्यः षष्ठ्यर्थे एषा चतुर्थी । चर्षणीनां मनुष्याणाम् अस्माकम् । अथवा इयं सम्प्रदान एव चतुर्थी । तच्छ्रुतेस्तु 'कारिषत् इति' करोतिः क्रियासामान्यवचन इह दाने वर्तते । यथा शतानि सहस्राणि च सम्यग् ददाति मनुष्येभ्योऽस्मभ्यमित्यर्थः । यथा 'गूळ्हा गूढानि' वसु वसूनि धनानि आविः[7] करत् आविष्करोति । अप्रख्यातानि यानि तानि लोके प्रख्यातानि करोतीत्यर्थः । यथा च सुवेदा विभक्तेर्लोपश्छान्दसः सुवेदं रूपम् । सुलभानि नः "वसु वसूनि करत् करोति" ॥ १५ ॥

वेङ्कट० दीप्तम् शर्धः[8] च मारुतम् बहुस्वनम्[9] तथान्यैरभिभूतम् अप्रत्यूतम् पूषणम् च स्तौमि सह स्तुतिं[10] करोमि । यथा शतानि[11] सहस्राणि च वसूनि करोति मनुष्येभ्यस्तथा स्तौमि । एषा अस्माकम् गूढानि वसूनि आविः करोतु सुधनः । भरद्वाजायेति प्रगाथे[12] मारुतो[13] गणो वा स्तूयते । तत्रोपमार्थीयाः सहस्रान्ते । तस्मिन् पक्षेऽयं मन्त्रः पौष्ण इति । यथा मारुतं शर्धोऽस्तौषम् एवं पूषणमपि स्तौमीति ॥ १५ ॥

आ मा पूषन्नुप द्रव शंसिषं नु ते अपिकर्ण आघृणे । अधा अर्यो अरातयः ॥ १६ ॥

आ । मा । पूषन् । उप । द्रव । शंसिषम् । नु । ते । अपिऽकर्णे । आघृणे । अध । अर्यः । अरातयः ॥ १६ ॥

---

१. स्तौ मूको. २. धनादेशे" ख; धनम् प्रदेशाय" ख्ग; धनानामादे" क प्रस्तावः ३-३. बलकर्म मूको. ४. शर्धसः मूको. ५. इतः परं १४ तमममन्त्रभाष्यं मूलकोशे लिखितमासीत्. ६. कारयति" मको. ७-७. 'देवोऽस्त्रगण मूको. ८-८. शर्धेति मूको. ९-९. गुहा गुहानि मूको. १०. नपि मूको. ११-११. नास्ति मूको. १२. शर्धश्च मूको. १३. बहुधनम् मूको. १४. नास्ति मूको. १५. शतानि मूको. १६. माघे मूको. १७. मारुतो ख लर्ग.

स्कन्द० 'आ मा पूषन्निति पौष्ण्यश्चतस्रः' (तु. बृहदे ५,११४)। 'आ मा पूषन्' इत्येताश्चतस्रोऽपि पूषदेवत्याः[1]। मा मां भरद्वाजनामानम् ऋषिं हे पूषन्! उप आ उपागच्छ। शंसिषम् शंसु स्तुतौ। स्तौमि[2]। नु क्षिप्रम् ते[3] द्वितीयार्थैषा चतुर्थी। त्वाम् अपिकर्णे कर्णशब्दोऽपठितोऽपि कर्मनाम। [4]करणशब्दस्य कर्मनाम्नोऽयम् अकारलोपः[4]। अपिगतं प्राप्तम् अर्थादनुष्ठितं यत्कर्म तद् अपिकर्णम्[5]। तस्मिन्नपिकर्णे प्राप्ते अर्थादनुष्ठिते कर्मणि यागलक्षणे। आघृणे! आगतदीप्ते![6] अथवा घृणिः क्षरिता दधा पूर्णो दृतिः, [7]स कक्षेणैवासक्तो यस्य स आघृणिः[7]। वक्ष्यति हि 'दृतेरिव तेऽवृकमस्तु सख्यम्' (ऋ ६,४८,१८) इति। तस्य सम्बोधनम्। हे आघृणे!। किं पुनः कारणं स्तौषि। उच्यते। अघाः पापाः अर्यः अस्मद्द्वेषिणः अरातयः अदातारो हविषाम्। [8]तानुच्चैः जहि त्वमित्यभिप्रायः[8]।

अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना। मां हे पूषन्! उपागच्छ। उपागताय च शंसिषम्। शंसतिः कथनार्थः। कथयामि। ते तुभ्यम्। अपिकर्णे कर्णशब्दः प्रसिद्धशरीरावयववचनः[9]। एवम् अपिगते प्राप्ते कर्णे सन्निकृष्टीभूताय तुभ्यम् उपांशु कर्णे कथयामि। नु-शब्दो[10] नेत्यर्थः। किं किं कथयसि। उच्यते। हे आघृणे! अघाः सर्वत्रात्र द्वितीयार्थे प्रथमा। पापान् क्रूरकर्मणः अरीन् आत्मीयान् अकृतहविषः[11]। तान् जहीत्यभिप्रायः ॥ १६ ॥

वेङ्कट० हे पूषन्! मा[12] [13]उप आ द्रव[13]। आगतघृणे! क्षिप्रम् अहम् शंसामि तव कर्णसमीपे [14]आहन्यमाना आहन्तारश्च[14] अभिगन्तारः मम शत्रवो भवन्तु, अवश्यं वेत्सि ॥ १६ ॥

[15]इति चतुर्थाष्टके अष्टमाध्याये तृतीयो वर्गः[15] ॥

मा कोकम्बीरमुद्वृहो वनस्पतिमशस्तीर्वि हि नीनशः ।
मोत सूरो अह एवा चन ग्रीवा आदधते वेः ॥ १७ ॥

मा । काकम्बीरम् । उत् । वृहः । वनस्पतिम् । अशस्तीः । वि । हि । नीनशः ।
मा । उत । सूरः । अहः । इति । एव । चन । ग्रीवाः । आऽदधते । वेरिति वेः ॥ १७ ॥

स्कन्द० कक लौल्ये। ककनं काकः [16]लौल्यम्। प्रायो हिंसविषया[16] प्रार्थना। तया यो भ्रियते धार्यते स काकम्बीरः। प्रायोजीवितलक्षणम्। [17]प्रायो हिंसविषयया[17] तृष्णया प्राणिभिर्जीवितं धार्यते। तम् काकम्बीरम् अस्माकम् मा उत् वृहः वृहू उद्यमने। मा उद्यंसीः मा उदार्षीः। कथम्। वनस्पतिम्[18] लुप्तोपममेतत्। वनस्पतिमिव। यथा कश्चिन्महाबलो हस्त्यन्यो[19] वृक्षं समुद्धरत्येवम् अस्माकं जीवितं मोदार्षीः। चिरं जीवयास्मानित्यर्थः[20]। अशस्तीः अशंसितॄन्[21]

1. मायो देवत्याः मूको. 2. स्तौति वि[1]. 3. नास्ति मूको. 4-4. करणशब्द नाम्नो[°] मूको. 5-5. तदर्थिक विकर्णम् मूको. 6. आगदीप्ते मूको. 7-7. स कक्षैवा सक्तो यस्य आघृणे मूको. 8-8. तानुच्चै ··· मित्यभि[°] मूको. 9. [°]शब्दाप्रसिद्धशरीरावयव च नः मूको. 10. ना शब्दो नेत्यर्थः मूको. 11. अकृत् हविषा ना मूको. 12. माम् वि[1]. 13-13. इव सर्पे. 14-14. आहन्यमाना च मूको. 15-15. नास्ति मूको. 16-16. लौल्यपरा तद्विषया वि[1]; लौल्यमपरा तद्विषया वि[2]. 17-17. एषो 18. वनस्पतीन् मूको. 19. हस्त्यन्यो मूको. 20. जीवयस्मानि[°] मूको. 21. मर्द-षितॄन् मूको.

वैरिणोऽस्माकम् वि हि नीनशः विनाशय। हिशब्दस्तु पदपूरणः। मा उत उतशब्दोऽत्र चार्थे। मा च त्वत्प्रसादात् सूरः सूर्यः अहः दिवसम् 'एव चन' एवशब्द एवमित्यस्यार्थे[2]। चनशब्द एवमिति श्रुतेर्यथेत्यस्यार्थे। यथा ग्रीवाः वेः पक्षिणः कश्चिद्धस्तेन सहसा[3] निरुध्य मारणार्थं धारयेद् एवम् आदधते दध धारणे। आधरत्। किं पुनरह्नो मारणम्। उच्यते। उपलब्धिविरोधः। स कथं भवति। यद्यन्धत्वं भवति। अन्धो ह्यह्नोपलभते, अत इदम् अहर्धारणप्रतिषेधद्वारेणाऽनन्धत्वमाशास्यते। मा च त्वत्प्रसादात् सूर्यो धार्षीद् येनाह्नोपलभामह इत्यर्थः। सूर्यप्रभवं हि चक्षुः, अत इदं सूर्याद् अनन्धत्वमाशास्यते ॥ १७ ॥

वेङ्कट० मा काकाम्बीरम्[4] भर्तारं काकैर्वा मिथितम् उद् वृहः वनस्पतिम् इति पुत्रपौत्रपरिवृतस्याऽस्मोऽनुद्धारणमाशास्ते। तदर्थम् अरातीः वि नाशय। मा अपि च सुवीरो योद्धा अद्धि एव पक्षिणो ग्रहणार्थम् ग्रीवाः आधारयतु[5] सुतं कण्ठे गृह्णातिवति अरातिभिः अनभिभवमाशास्ते ॥१७॥

दृतेरिव तेऽवृकमस्तु सख्यम्। अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः ॥१८॥

दृतेःऽइव। ते। अवृकम्। अस्तु। सख्यम्।
अच्छिद्रस्य। दधन्ऽवतः। सुऽपूर्णस्य। दधन्ऽवतः ॥ १८ ॥

स्कन्द० दृतेः इव[6] ते तव त्वभूतस्य त्वया सहैवास्माकम् अवृकम्[7] वृकशब्दोऽयं वृक्ष्णतेः छेदनार्थस्य। अवृकम् अवृश्चनम् अच्छिन्नम्। सममित्यर्थः। अथवा वृकसदृशं वृकं हिंसकम्। अवृकम् अहिंसकम्। अपि वा वृकमिति वृक वृक आदाने इत्यस्य रूपम्। अवृकम् अनादातृ। अभिप्रेतानाम् अनपहारकमित्यर्थः[9]। 'अस्तु भवतु सख्यम्[10]'। कीदृशस्य दृतेः। उच्यते—अच्छिद्रस्य छिद्रवर्जितस्य। रूक्षस्येत्यर्थः। दधन्वतः दधिमतः। न च स्तोकेन दध्ना तद्वतः। किं पुनः। सुपूर्णस्य बहुना दध्ना पूरितस्य। प्रशंसायाम् अयमिदानीं मतुप्। तेनापौनरुक्त्यम्[11]। प्रभास्तेन दध्ना तद्वतः ॥ १८ ॥

वेङ्कट० दृतेः इव ते अहिंसकम् अस्तु सख्यम् अच्छिद्रस्य दधियुक्तस्य अत्यन्तं पूर्णस्य ॥ १८ ॥

परो हि मर्त्यैरसि समो देवैरुत श्रिया।
अभि ख्यः पूषन् पृतनासु नस्त्वमवा नूनं यथा पुरा ॥ १९ ॥

परः। हि। मर्त्यैः। असि। समः। देवैः। उत। श्रिया।
अभि। ख्यः। पूषन्। पृतनासु। नः। त्वम्। अव। नूनम्। यथा। पुरा ॥ १९ ॥

स्कन्द० परो हि मर्त्यैः[12] इति परशब्द उत्कृष्टवचनः। हिशब्दो यस्मादर्थे। यस्माद् उत्कृष्टः। मर्त्यैः पञ्चम्यर्थे एषा तृतीया। मनुष्येभ्यः त्वम् असि[13]। समः च देवैः इन्द्रादिभिः श्रिया च लक्ष्म्या। उत-शब्दस्तु पदपूरणः। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्माद्

---

1-1. एकवचन मूको. 2. इत्यस्यार्थे मूको. 3. वस्या मूको. 4. कानम् मूको. 5. अधा° ह खपं. 6. इति मूको. 7. अवृक् मूको. 8. ना मूको. 9. °नापहा° मूको. 10. स सख्युः मूको. 11. तेन पौन° मूको. 12. म मूको. 13. असि मनुष्येभ्यः मूको.

अभिख्यः अभिपश्य[1] हे पूषन्! पृतनासु सङ्ग्रामेषु नः अस्मान् त्वम्[2] अव पालय नूनम् नूनं-शब्दोऽत्रेदानीमित्यस्यार्थे। इदानीम् यथा पुरा पूर्वस्मिन् काले तद्वत् ॥ १९ ॥

वेङ्कट० मर्त्येभ्यस्त्वम् परः हि भवसि। देवैः च समः भवसि धनेन। 'पूषा वै धनानामशनं पाणिभ्यामुपनिधाता' ( तु. माश १,१,२,१७ ) इति विज्ञायते। अभि पश्य[3] अस्मान् त्वम् पूषन्! सङ्ग्रामेषु। रक्ष इदानीमपि,[4] यथा पुरा 'त्वम् अरक्षः'[5] ॥ १९ ॥

वामी वा॒मस्य॑ धूतयः॒ प्रणी॑तिरस्तु सू॒नृता॑ ।
दे॒वस्य॑ वा मरुतो॒ मर्त्य॑स्य वे॒जा॒नस्य॑ प्रयज्यवः ॥ २० ॥

वा॒मी । वा॒मस्य॑ । धू॒त॒यः॒ । प्रऽनी॑तिः । अ॒स्तु॒ । सू॒नृता॑ ।
दे॒वस्य॑ । वा॒ । म॒रु॒तः॒ । मर्त्य॑स्य । वा॒ । ई॒जा॒नस्य॑ । प्र॒ऽय॒ज्य॒वः॒ ॥ २० ॥

स्कन्द० "तृचः परो मारुतः[6] पृश्निसूक्ते" ( बृदे ५,११२ )। तृचोऽयं पौष्णीभ्यः परः मरुद्देवतः पृश्निसूक्ते। पृश्निसूक्तमिति पृश्निसम्बन्धात् गुणवाणिकस्य "पूर्वाचार्यस्य ... ...। वामी[7] वननीया युष्माकम् वामस्य वननीयस्य हविषः एकदेशभूता यजमानस्य स्वभूता हे धूतयः! कम्पयितारः! शत्रूणाम् प्रणीतिः देवान् प्रति प्रणीयमानत्वात्[8] प्रणीतिशब्देनात्राहुतिरुच्यते[9]। सा अस्तु [10]भवतु, सूनृता वाक्च स्तुतिलक्षणा[10]। आहुतिं स्तुतिं च सम्भजध्वमित्यर्थः। अथवा प्रणीतिर्नामोपदेशेन कार्येषु प्रवर्तना[11] [12]सा युष्मदीया[12] वननीया वननीयस्य यजमानस्य[13], सूनृता वाक् च गर्जितलक्षणा। यूयं सम्भजना-ईस्य[14] यजमानस्य कार्येषूपदेशो गर्जितशब्दं च [15]कुरुतेत्यर्थः[15]। कतमस्य यजमानस्य। उच्यते। देवस्य वा हे मरुतः! मर्त्यस्य वा मनुष्यस्य वा। यावान् कश्चित् सर्वस्येत्यर्थः। ईजानस्य यजतः प्रयज्यवः! प्रकर्षेण यष्टव्याः! ॥ २० ॥

वेङ्कट० तृचः परो मारुतः। वननीया यजमानस्य[16] हे कम्पयितारः! प्रणीतिः अस्तु सत्या, देवस्य वा मरुतः![17] मर्त्यस्य वा यजमानस्य हे प्रकर्षेण यष्टव्याः! ॥ २० ॥

स॒द्यश्चि॒द्यस्य॑ चर्कृ॒तिः परि॒ द्यां दे॒वो नैति॒ सूर्यः॑ ।
त्वे॒षं शवो॑ दधिरे॒ नाम॑ य॒ज्ञियं॑ म॒रुतो॑ वृत्र॒हं शवो॒ ज्येष्ठं॑ वृत्र॒हं शवः॑ ॥ २१ ॥

स॒द्यः । चि॒त् । यस्य॑ । च॒र्कृ॒तिः । परि॑ । द्याम् । दे॒वः । न । एति॑ । सूर्यः॑ ।
त्वे॒षम् । शवः॑ । द॒धि॒रे॒ । नाम॑ । य॒ज्ञिय॑म् । म॒रुतः॑ । वृ॒त्र॒ऽहम् । शवः॑ । ज्येष्ठ॑म् । वृ॒त्र॒ऽहम् । शवः॑ ॥

स्कन्द० यस्य यजमानस्य। किम्। उच्यते—सद्यः चित् चिच्छब्दोऽत्र एवार्थे। सद्य एव यस्य स्वभूता

---

1. °पश्य मूको. 2. त्वमभिपश्य मूको. 3. अपि प० मूको. 4. इदान° मूको. 5-5. त्वेमरक्ष मूको. 6-6. तृचःपरो मारुतः मूको. 7-7. °नार्थ स वामी मूको. 8. प्रीयमयमान° मूको. 9. °शब्दोत्र मूको. 10-10. भवतुश्च स्तुति° मूको. 11. प्रवर्तयानाः मूको. 12-12. याद्युष्म° मूको. 13. °स्यपती° मूको. 14. °नस्या चि° एवं; °नस्यम् इ. यस्य मूको. 15. संभाजनार्हस्य मूको. 15-15. कार्येष्वपदेशा मूको. 16. मरु मूको.

चर्कृतिः पुनःपुनः क्रियायोगाख्या द्याम् दिवः परि एति सर्वतो गच्छति। देवः न सूर्यः यथा देवः[1] सूर्यः। स एकस्मिन्नेवाहनि असकृद् देवान्[2] गच्छ इत्यर्थः। परोऽर्धर्चः पूर्वानपेक्षो भिन्नं वाक्यम्। त्वेषम् दीप्तम् शवः बलम् दधिरे धारयन्ति नाम अज्ञियम् यज्ञार्हम् मरुतः। कतमत् पुनस्तन्नाम। सन्निधेः मरुत इत्येतदेव। वृत्रहम् वृत्रहननसमर्थमपि बलम्। 'वृत्रशरीरहननप्रवृत्तमित्यर्थः'[3]। सर्वेषाम्[4] शवः बलं सेनालक्षणम् ज्येष्ठम् अतिशयेन च प्रशस्यं वृद्धं वा। न च केवलं सेनालक्षणमेव बलम्। किं तर्हि। वृत्रहम् शवः शरीरसामर्थ्यलक्षणमपि बलम्। वृत्रशरीरशातेन प्रशातेन वेत्यर्थः॥ २१॥

वेङ्कट० तदानीम् एव यस्य शवसोऽनुस्यूतम् करणम्[5] अन्तरिक्षम् परि गच्छति द्युलोकम् इव देवः[6] सूर्यः। तद् दीप्तम् तृणादीनां नामकम् शवः दधिरे मरुतः अज्ञियम् शत्रूणां हन्तृ प्रशस्ततरम्॥ २१॥

सकृद्ध द्यौरजायत सकृद् भूमिरजायत।
पृश्न्या दुग्धं सकृत् पयस्तदन्यो नानु जायते॥ २२॥

सकृत्। ह। द्यौः। अजायत। सकृत्। भूमिः। अजायत।
पृश्न्याः। दुग्धम्। सकृत्। पयः। तत्। अन्यः। न। अनु। जायते॥ २२॥

स्कन्द० सकृत्। हशब्दोऽत्र एवार्थे। सकृदेव द्यौः अजायत जाता उत्पन्ना[7]। सकृत् एव भूमिः अपि अजायत। पृश्न्याः अपि मरुतां मातुः दुग्धम् क्षरितम्। सकृत् एव अमृतरूपम् पयः। तत् एतत् त्रयम् अन्यः कश्चित् न अनु जायते। अनिरत्र सामर्थ्याद् करोत्यर्थे। नानुकरोति[8]। अथवा अन्विति पश्चाद्भावे। तदित्येतेन च सम्बध्यते। तदनु तस्य त्रयस्य पश्चादन्यो न जायते न भवति। 'तथान्यो नानुगन्तुं[9] शक्नोतीत्यर्थः[10]'।

'आदित्यो वा मारुतः ''शर्व एव'' वा' (बृ. दे ५,११४)। यो मारुतस्तृच उक्तः, अयम् आदित्यदेवतो वा पृश्निदेवत एव वा। मरुतस्तु 'अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि' (या ७,२) ''इत्येतेन न्यायेन गुणभूता[12]'। कथं पुनरस्या ऋचो मारुतत्वम्, यदीयं मरुत्स्तुत्यर्था। उच्यते। इयमपि मरुत्स्तुत्यर्थैव। कथम्। यत्तावदत्र 'सकृद् द्यौरजायत सकृद् भूमिरजायत' इति द्यावाभूम्योः सकृज्जननसङ्कीर्तनम् तद्[13] यथा ब्राह्मणे कस्मिंश्चित् किञ्चित् प्रतिज्ञाय विसंवदति—'सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति ब्राह्मणाः। सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत्' [14]'इत्यादिवचनैः समानार्थम्[14]'। यथा राजानः सकृज्जल्पन्ति, यथा कन्या सकृत्प्रदीयन्ते, तथा ब्राह्मणा अपि सकृज्जल्पन्तीति। तथा तत्र एवम्[15] इहाप्ययमर्थः यथा द्यौः [15]'सकृज्जाता यथा च[15]' भूमिः, एवं दुग्धं पय इति। पृश्न्या दुग्धं सकृत्पय इत्येतदपि मरुतां स्तुत्यर्थः। कथम्। पृश्निर्हि मरुतां माता। मातुश्च गुणकीर्तनं लोकेऽपि पुत्रस्य

---

१-१. देवा सूर्यं मूको. २. 'अेवाह्न्यसे दं' मूको. ३-३. 'शरीरप्रवृत्ते नप्रशातेन वेत्यर्थः मूको. ४. वैषाम् मूको. ५. रणम् मूको. ६. देव मूको. ७. उत्प ना मूको. ८. नु नानु' मूको. ९-९. तथान्योन्यानुगन्तुम् मूको. १०. मातृतिनात्र स्तुतिलक्षणा मूको ११-११. पार्थ एव मूको. १२-१२. 'न्यायेनोद्भूता मूको. १३. नास्ति मूको. १४-१४. 'वचनादर्थ सम्यगार्थः मूको. १५-१५. जाता या च मूको.

स्तुत्यर्थं दृश्यते । यथा देवदत्ताय कन्या[1] 'प्रदित्सिता भद्रा, तदा[2] देवदत्तस्य माता सुशीला क्षमावती स्नुषावत्सला चेत्यादिगुणकीर्तनम्, एवं मरुत्स्तुत्यर्थत्वाद् अस्या ऋच उपपन्नं मारुतत्वम् । 'आदित्यो वा मारुतः पार्श्न्य एव वा' । योऽयं मारुतस्तृच उक्तः अयम् आदित्यदेवतो[3] वा 'पृश्निदेवत एव' वा । मरुतस्तु 'अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि' ( या ७,२ ) इत्येतेन न्यायेन गुणभूताः ।

तत्रादित्यदेवतात्वे तावदाद्यायाः[4] तावदृच एवमर्थयोजना—वामी वामस्येति । वामो वननीय आदित्यः । तस्य प्रणीतिराहुतिर्वाक्यस्तुतिलक्षणा सम्भजनीयाऽस्तु । 'देवस्य मर्यस्य वा यजतः' इति । द्वितीयायामपि 'प्रथमं यत् । तदर्यम्' इंजानस्य विशेषणार्थः पूर्ववन्माण्येयः । द्वितीयेऽपि स्वेधं शब्दः शवसेरीयर्थस्य (तु. या २,२)। प्राधान्याश्रयणाद् द्वितीयाया अपि आदित्यदेवतात्वं तृचे[5] । तृतीयाया अपि आदित्यस्य प्रसादेन सकृद् द्यौरजायत सकृदेव भूमिः । 'आदित्येनैव[6] सहितायाः पृश्न्याः[7] पृश्निरिति दिवो नाम । पञ्चमी चेयम् । दिवः सकाशाद् दुग्धं क्षरितं पय उदकं वृष्टिलक्षणम् । एकसंवत्सरापेक्षया चायं सकृद्व्यपदेशः । एकस्मिन् संवत्सरे सकृद् वर्षत्येव, नान्यदेत्यर्थः । तदेतत्सर्वमादित्यादन्यो नानुकरोतीत्येवं तृतीयाया ऋचः आदित्यदेवतात्वम् । पृश्निदेवतात्वे त्वस्या ऋच एवं योजना—वामी वामस्येत्यत्र प्रणीतिशब्दः सर्वस्य प्रणेतृत्वात् पृश्नेर्वाचकः[10] । सा तदीया च सूनृता प्रियवाक् सम्भजनीयाऽस्तु । सम्भजनी यस्य देवस्य मर्त्यस्य[11] वा यजत इति । त्वेषम् शव इत्यपि पृश्नेः पुत्रा मरुतः सदसा इति पृश्न्याः प्राधान्याश्रयणाद् देवतात्वम् । यथा च द्यौर्यथा च भूमिः सकृज्जाता एवं पृश्न्याः सकृद् दुग्धं सकृत्पयः । तस्मान्यो नानुकरोति । एवम् अन्त्याया अपि पार्श्नत्वम् । यद्यपि चादित्यत्वपार्श्न्यत्वे चास्य तृचस्य ऋगक्षरेषु नात्यन्तमारूढे, तथापि श्रुतिं कामम्प्यपेक्ष्य शौनकेनोक्ते इति अस्माभिरवगते इति ॥ २२ ॥

वेङ्कट० सकृत् एव द्यौः अजायत । अत्र सवितरा[12] नित्या तिष्ठति । तथैव[13] भूमिः । तथा पृश्न्याः च पयः मरुतां जनकम् सकृत् एव दुग्धम् आत्मवीर्येणास्मिन्[14] ततः अन्यः न अनु जायते ॥ २२ ॥

[15]इति चतुर्थाष्टके अष्टमाध्याये चतुर्थो वर्गः[15] ॥

[ ४९ ]

[15]ऋजिश्वा भारद्वाज ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः, पञ्चदशी शक्वरी[15] ।

स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयन्ता ।
त आ गमन्तु त इह श्रुवन्तु सुक्षत्रासो वरुणो मित्रो अग्निः ॥ १ ॥

---

१. कन्या मूको. २-२. प्रदित्सिता··· मूको. ३. देवदत्तो मूको. ४. 'देवमेव मूको. ५. 'दाद्याया मूको. ६-६. वा मे चास्या मध्ये मूको. ७-७. प्रथमा ततस्य दर्शेषु मूको. ८. तृचा मूको. ९. आदित्येनैव पृश्न्याः मूको. १०. वाचक मूको. ११. सम्भर्मस्य मूको. १२. सवि° वि° अ. १३. तथै मूको. १४. °वे ग° वि°. १५-१५. नास्ति मूको.

स्तुषे । जनम् । सुऽव्रतम् । नव्यसीभिः । गीःऽभिः । मित्रावरुणा । सुम्नऽयन्ता ।
ते । आ । गमन्तु । ते । इह । श्रुवन्तु । सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः ॥ १ ॥

स्कन्द० 'पराण्यृजिश्वा चत्वारि'। तृणपाणिकात् पराण्येतानि[1] चत्वारि सूक्तानि ऋजिश्वा नाम ऋषिरपश्यत्। 'चत्वार्यतो वैश्वदेवानि सन्ति' (तु. बृदे ५,११५)। अत इति पूर्वोक्तसूक्तप्रतिनिर्देशाद् दिग्योगलक्षण-पञ्चमीनिर्देशाच्च[2] पराणीति शेषः। योऽयम् आदित्यो वा मारुतो वा पार्जन्यो वाऽऽर्च उक्तस्तस्मात् पराणि[3] चत्वारि अतोऽप्येतानि सूक्तानि वैश्वदेवानि भवन्ति। अग्निर्मित्रावरुणौ चास्याम् ऋचि स्तूयन्ते।

स्तुषे इति लेडर्थे लट्। आत्मन एव [4]वाचमन्तरात्मनः प्रैषः। स्तुहि[5] हे अन्तरात्मन्!। अथवा स्तुष इति स्वार्थे एव लट्। उत्तमपुरुषस्य[6] स्थाने व्यत्ययेन मध्यमः। स्तौम्यहम्। कम्। जनम् स्वयं जनितारं हविर्वहनादिद्वारेण सर्वस्य वा जनयितारम् अग्निम् सुव्रतम् सुकर्माणम् नव्यसीभिः नवतराभिः अन्यैः स्तोतृभिरकृतपूर्वाभिः गीर्भिः वाग्भिः स्तुतिल-क्षणाभिः। न च केवलं जनम्। किं तर्हि। मित्रावरुणा सुम्नयन्ता सुम्नं सुखं स्तुतिनिमित्तं तदिच्छन्तौ। ते आ गमन्तु आगच्छन्तु। आगत्य च ते अस्मदीये यज्ञे श्रुवन्तु शृण्वन्तु स्तुतीः सुक्षत्रासः सुधनाः सुबला वा। वरुणः मित्रः अग्निः इत्येते त्रयोऽपि ॥ १ ॥

वेङ्कट० ऋजिश्वा भारद्वाजः। चत्वारि वैश्वदेवानि। स्तुहि देव्यम् जनम् सुकर्माणम् नवतराभिः स्तुतिभिः। कं जनमित्याह[7] — मित्रावरुणौ सुखमिच्छन्तौ अग्निं च। ते आ गच्छन्तु। "ते शृण्वन्तु[7] सुबलाः मदीयाः ॥ १ ॥

विशोविश ईड्यमध्वरेष्वदृप्तक्रतुमरतिं युवत्योः ।
दिवः शिशुं सहसः सूनुमग्निं यज्ञस्य केतुमरुषं यजध्यै ॥ २ ॥

विशःऽविशः । ईड्यम् । अध्वरेषु । अदृप्तऽक्रतुम् । अरतिम् । युवत्योः ।
दिवः । शिशुम् । सहसः । सूनुम् । अग्निम् । यज्ञस्य । केतुम् । अरुषम् । यजध्यै ॥ २ ॥

स्कन्द० अग्निरत्र स्तूयते। विशोविशः मनुष्यस्यमनुष्यस्य ईड्यम् स्तुत्यम्। द्वितीयाश्रुतेः साकाङ्क्षत्वात् स्तुषे इत्यस्यार्थे पूर्वस्या ऋचोऽनुषङ्गः। स्तुहि हे अन्तरात्मन्! स्तौमि वा। अध्वरेषु यज्ञेषु[8] अदृप्तक्रतुम्। दृपिर्मोहनार्थः, दृप हर्षणमोहनयोः इति। क्रतुरिति प्रज्ञानाम। अमूढप्रज्ञम्। अरतिम् गन्तारम्। कयोः। उच्यते — युवत्योः इति। परस्परोपकारमिश्रत्वात्[9] सर्वदा वा तरुणत्वात्[10] द्यावापृथिव्यावत्र युवती उच्येते। तयोर्द्वयोरपि द्यावापृथिव्योः अप्रतिहतगतिमित्यर्थः। दिवः द्युलोकस्य शिशुम् पुत्रस्थानीयम् सहसः सूनुम् बलस्य पुत्रम् अग्निम्। बलेन मथ्यमानोऽग्निर्जायत इति बलस्य पुत्र उच्यते। यज्ञस्य[11] केतुम् कर्तारम् अरुषम्[12] गन्तारं च। किमर्थं स्तुषे। उच्यते — यजध्यै यष्टुम्। स्तुतोऽस्मदर्थं देवान् यजत्व[13] इत्ययमर्थः ॥ २ ॥

1. पाणिकपरा° मूको. 2. °निर्देशादियोग्यलक्षणपञ्चमी° वि°; °लक्षणापञ्चमी° वि°. 3. उक्तात्सम-परा° मूको. 4-4. रामना प्रैषात्तर्हि मूको. 5. वत्तमपुरुषस्य मूको. 6. जनि° मूको. 7-7. नास्ति वि° रुपं. 8. यज्ञेषु वा वि°. 9. °रोपकारमित्र वि°. 10. तरुणात् वि°. 11. इत्थ मूको. 12. अनुषम् मूको. 13. यजन्त मूको.

बृहद्रयिम् महाधनम्, विश्ववारम् सर्वस्य वरणीयम्, रथप्राम् प्रातिः सामर्थ्यादिह गत्यर्थः। रथेन गन्तारम्। पूरणार्थ एव वा प्रातिः[1] देवरथानाम् आपूरयितारम्। वाय्वापूरितानि हि देवविमानानि शीघ्रं गच्छन्ति। परस्त्वर्धर्चः प्रत्यक्षकृतः भिन्न वाक्यम्। शुतद्यामा दीप्तरथः नियुतः तृतीयार्थे प्रथमैषा। नियुद्भिः अश्वाभिः[2] पत्यमानः गच्छन् कविः मेधावी कविम् मेधाविनम् यजमानम् इयक्षसि यजतेरिदं रूपम्, न यजेः। अभिनिक्षसि। व्याप्तुमिच्छसीत्यर्थः। हे प्रयज्यो! प्रकर्षेण यष्टव्य! ॥ ४ ॥

वेङ्कट० प्र गच्छति वायुम् प्रति शुशुभ्वः बृहती स्तुतिः महाधनम् सर्वैर्वरणीयम् स्तोतॄणां रथस्य धनेन पूरयितारम् शरीरेण वा महता रथं पूरयन्तम्। दीप्तगमनः नियुतः प्रति गच्छन् कविः कविम् प्रति गच्छसि हे प्रकर्षेण यष्टव्य![3] ॥ ४ ॥

स मे॒ वपु॑श्छदयद॒श्विनो॒र्यो रथो॑ वि॒रुक्मा॒न् मन॑सा युजा॒नः ।
येन॑ नरा नासत्येष॒यध्यै॑ व॒र्तिर्या॒थस्तन॑याय॒ त्मने॑ च ॥ ५ ॥

सः । मे॒ । वपुः॑ । छ॒दय॒त् । अ॒श्विनोः॑ । यः । रथः॑ । वि॒रुक्मा॑न् । मन॑सा । यु॒जा॒नः ।
येन॑ । न॒रा॒ । ना॒स॒त्या॒ । इ॒ष॒यध्यै॑ । व॒र्तिः । या॒थः । तन॑याय । त्मने॑ । च॒ ॥ ५ ॥

स्कन्द० अश्विनावत्र स्तूयेते। सः मे मम वपुः छदयत् रूपं छादयतु[4]। केन। सामर्थ्यात् [5]स्वेन आगमनेन। अनागतश्च[5] छादयितुं न शक्नोति, अतोऽत्राप्यागमनेनागमनं प्रतिपाद्यते। मत्समीपम् आगच्छत्वित्यर्थः। कः[6] सः। उच्यते — युवयोः अश्विनोः स्वभूतः यः रथः विरुक्मान् विविधदीप्तिमान् मनसा युजानः वाय्वादिरूपेऽश्वे यानम्। मनसा योजनशीलः। बुभुक्षितमात्रः[7] स्वयमेव यो युज्यत इत्यर्थः। येन च हे नरा! मनुष्याकारौ! नासत्या! नासत्यनामानौ! यद्यपि चाश्विनोरेको नासत्यनामा दस्रनामाऽपरः, तथापि [8]'साहचर्याद् उभयोर्नासत्यव्यपदेशः[8]'। यद्वा न[9] असत्यौ सत्यावेव। इषयध्यै नेदम् इषेर्धातो रूपम्। किं तर्हि। इषिरन्ननाम तस्मात् तत्करोतीति णिच्, तस्मात् 'तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यै' (पा ३,४,९) इति अध्यैप्रत्ययः। अन्नं कर्तुम्। दातुमित्यर्थः। वर्तिः वर्तन्या प्रसिद्धेन मार्गेण याथः गच्छथः। कस्मै अन्नं दातुम्। उच्यते — तनयाय अपत्याय मह्यं स्तोतुश्च त्मने च आत्मने च ॥ ५ ॥

वेङ्कट० सः मह्यम् रूपम् प्रकाशयति। अश्विनोः स्वभूतः यः रथः विरोचनवान् मनसा युज्यमानः। येन हे नेतारौ![10] नासत्यौ! अन्नं कर्तुम् मार्गम् याथः[11] पुत्राय आत्मने पित्रे च ॥ ५ ॥

[12]इति चतुर्थाष्टके अष्टमाध्याये पञ्चमो वर्गः[12] ॥

प॒र्जन्य॑वाता वृष॒भा पृ॑थि॒व्याः पुरी॑षाणि जिन्वत॒मप्या॑नि ।
सत्य॑श्रुतः कवयो॒ यस्य॑ गी॒र्भिर्जग॑तः स्थात॒र्जग॒दा कृ॑णुध्वम् ॥ ६ ॥

---

१. नास्ति वि°. २. इष नाभिः मूको. ३. °न्वः मूको. ४. छादयन्तु मूको. ५-५. स्वेनागम° मूको. ६. क मूको. ७. योजन्नुतमात्रः मूको. ८-८. "बॉङ्गयो" मूको. ९. नास्ति मूको. १०. °आौ मूको. ११. यथा मूको. १२-१२. नास्ति मूको.

पर्जन्यवाता । वृषभा । पृथिव्याः । पुरीषाणि । जिन्वतम् । अप्यानि ।
सत्यऽश्रुतः । कवयः । यस्य । गीःऽभिः । जगतः । स्थातः । जगत् । आ । कृणुध्वम् ॥ ६ ॥

स्कन्द० पर्जन्यवातावत्र[1] स्तूयेते । पर्जन्यश्च वातश्च पर्जन्यवातौ । छान्दसः पर्जन्यस्य पूर्वनिपातः । तयोः सम्बोधनं हे पर्जन्यवाता ! वृषभा ! वर्षितारौ ! पृथिव्याः पुरीषाणि पुरीषशब्दोऽत्र पूरणसमर्थवचनः, ओदकनाम । "समस्तायाः पृथिव्याः पूरणसमर्थानि"[2] । अत्यन्तबहूनीत्यर्थः । जिन्वतम्, जिन्वतिः प्रीतिकर्माऽन्यत्र । इह तु सामर्थ्यात् क्षारणार्थः । क्षारयतम् । अप्यानि आप एव अप्यानि । स्वार्थिकस्तद्धितः । उदकानीत्यर्थः । अथवा 'आपः' ( निघ १,३ ) इत्यन्तरिक्षनाम । तत्र[3] भवानि अप्यानि । कानि । सामर्थ्याद् उदकानि । अथवा जिन्वतमिति जिन्वतिः प्रीतिकर्मैव । पुरीषाण्यप्यानीति द्वितीया तृतीयार्थे । पृथिव्याः पूरणसमर्थैरप्यैः प्रीणयतम् अस्मान् । परोऽर्धर्चो मारुतः । श्रुत एतद् । सत्यश्रुतः कवय इत्यत्र सत्यश्रुतः कवय इत्येतेन पदद्वयेन मरुताम् अभिधानस्य दृष्टत्वात् । सति च सम्भवे यत्र दृष्टं तस्य तद्विषयतया एव न्याय्यत्वात् । हे सत्यश्रुतः ! सत्यस्य स्तोत्रस्य श्रोतारः ! कवयः ! मेधाविनः ! मरुतः ! यस्य मरुत्स्तुतेः गीर्भिः स्तुतिभिः साकाङ्क्षत्वात् स्तूयध्वे इति वाक्यशेषः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तस्य हे जगतः स्थातः ! विभक्तिरयं सुडोऽप्यधिगमार्थे प्रत्ययः । व्यत्ययेनैकवचनम् । कृत्स्नस्य जगतोऽधिष्ठातारः । इत्यत्र जगत् आ कृणुध्वम् अनोह कुरुत । अनुग्रहाभिमुखं कुरुत इत्यर्थः । अथवा जगतः स्थातरित्येकवचननिर्देशात्, मरुतां गणापेक्षयेदं सम्बोधनम्, मरुतां च । तेनायम् ऐन्द्रमारुतोऽर्धर्चः ॥ ६ ॥

वेङ्कट० हे पर्जन्यवातौ ! वर्षितारौ ! पृथिव्याः उदकानि दुग्धम्[4] अन्तरिक्षस्थानि, अपि च [illegible] सत्यन्धीनि पूरकाणि स्रोतांसि[5] । परोऽर्धर्चो मारुतः[6] । सत्यस्य श्रोतारः ! कवयः ! [illegible] मम स्तुता भवथ, तस्य ममाभ्युदयार्थम् जगत् अलङ्कुरुत ॥ ६ ॥

पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥ ७ ॥

पावीरवी । कन्या । चित्रऽआयुः । सरस्वती । वीरऽपत्नी । धियम् । धात् ।
ग्नाभिः । अच्छिद्रम् । शरणम् । सऽजोषाः । दुःऽआधर्षम् । गृणते । शर्म । [illegible] ॥ ७ ॥

स्कन्द० सरस्वत्यत्र स्तूयते । पावीरवी शोधयित्री । अथवा पविः शब्दः, [illegible] तद्वान् इन्द्रः पवीरवान्, तस्य सम्बन्धिनी । कन्या कमनीया चित्रायुः [illegible] यस्याः सा चित्रायुः । सरस्वती नदी माध्यमिका वा वाक् । [illegible] पतिर्भर्तृस्थानीयः पालयिता वा यस्याः सा वीरपत्नी । धियम् प्रज्ञा [illegible] देवस्त्रीभिः [illegible] ग्ना इति स्त्रीनाम[7] । सजोषा इत्येतेन चास्य सम्बन्धः । [illegible]

---

१. पत्रात मूको. २–२. समस्तायाः ... पूरण° मूको. ३. [illegible] मूको.
४. [illegible] ५. स्रोतानि वि[1] ल; स्रोता लपं; स्रोतांसि ल प्रस्तावः. ६. मत [illegible] न, ल.
७–७. नाभिः नास्ति स्तोत्राय मूको.

न च केवलं धियम्। किं तर्हि। अच्छिद्रम् [1]छिद्रवर्जितम्। सुदृढमित्यर्थः[1]। शरणम् गृहम् दुराधर्षम् केनचिदप्यभिभवितुम् अशक्यम् गृणते स्तुवते मह्यम् शर्म सुखं च यंसत् दधातु ॥ ७ ॥

वेङ्कट० पावीरवी शोधयित्री कमनीया पूजनीयाऽऽत्रा सरस्वती वीरपत्निका कर्म धारयतु, 'छन्दांसि वै [2]ग्नाः'[2] ( माश ६,५,४,७ ) इति[3] ब्राह्मणम्, ताभिः सङ्गता अच्छिद्रम् गृहम् दुराधर्षम् स्तुवते[3] सुखं च प्रयच्छतु ॥ ७ ॥

पुथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळकम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥ ८ ॥

पथःऽपथः । परिऽपतिम् । वचस्या । कामेन । कृतः । अभि । आनट् । अर्कम् ।
सः । नः । रासत् । शुरुधः । चन्द्रऽअग्राः । धियम्ऽधियम् । सीसधाति । प्र । पूषा ॥ ८ ॥

स्कन्द० पूषाऽत्र स्तूयते। स नो रासदिति सच्छब्दाद् यच्छब्दोऽध्याहार्यः। यम् पथस्पथः यावान् [4]कश्चित्पन्थास्तस्य सर्वस्य परिपतिम्[4] परीत्येषोऽधीत्येवमस्य[5] स्थाने। अधिपतिम् स्वामिनम्। पूषा हि महति पथि प्रतिभये वा रक्षां करोति। अतः पथोऽधिपतिरुच्यते। वचस्या तृतीयैकवचनस्यायम् याजादेशः। स्तुतिलक्षणेन [6]'वचसा कामेन कृतः करोति। क्रियासामान्यवचनः[6]। सामर्थ्यादिह प्रेरणे[7] वर्तते। अभिलषितेच्छया[8] प्रेरितः। अभि आनट् अभिव्याप्नोति। स्तौतीत्यर्थः। अर्कम् देवम्। सः नः अस्मभ्यम् रासत् दधातु शुरुधः। अन्यत्र शुरुध आपो भवन्ति शुचं संरुन्धन्तीति। [9]'इह तु सामर्थ्याद् धनानि[9]। तान्यपि हि शुचं मनोदुःखम् उपभोगसाधनाभावकृतं संरुन्धन्तीति। कीदृशीः शुरुधः। उच्यते। चन्द्राग्राः चन्द्रं चन्दतेः[10] कान्तिकर्मणः। कान्तं[11] प्रियम् अग्रं यासां ताश्चन्द्राग्राः। आयत्यामपि हितानुबन्धीनि धनानीत्यर्थः। किञ्च [12]धियंधियम् कर्मकर्म[12] ज्योतिष्टोमादिकम् सीषधाति लोडर्थेऽयं पञ्चमो लकारः। व्यत्ययेन च विकरणः। प्र साधयतु पूषा ॥ ८ ॥

वेङ्कट० सर्वस्य मार्गस्य स्वामिनम् स्तोत्रेच्छया कामेन वशीकृतो जनः व्याप्नोति[13] अर्चनीयं पूषणम्। सः अस्मभ्यम् प्रयच्छतु शुचो रोधयित्रीः हिरण्यमुखाः पुष्टीः। कर्मकर्म च प्र साधयतु पूषा ॥ ८ ॥

प्रथमभार्जं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वम् ।
होता यक्षद् यजतं पुस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥ ९ ॥

प्रथमऽभाजम् । यशसम् । वयःऽधाम् । सुऽपाणिम् । देवम् । सुऽगभस्तिम् । ऋभ्वम् ।
होता । यक्षत् । यजतम् । पस्त्यानाम् । अग्निः । त्वष्टारम् । सुऽहवम् । विऽभावा ॥ ९ ॥

---

1-1. "वर्जित ··· इति" मूको. 2-2. नास्ति मूको. 3. स्तुवके मूको. 4-4. पन्थाः ··· परिपतिम् मूको. 5. "त्येष दधोत्यस वि"; "त्येष दधातीत्यस वि". 6-6. वचसा ··· वचनः मूको. 7. प्रगे मूको. 8. अभिलपनेनेच्छया मूको. 9-9. इह ··· धनानि मूको. 10. चन्दतो मूको. 11. कान्तः मूको. 12-12. धियं धियं ··· मूको. 13. व्याप्नोतीति वि॰ क.

स्कन्द० त्वष्टाऽत्र स्तूयते। उत्कृष्टगुणतया त्वष्टा प्रथमं स्थानं योऽभजत, स्तोतृभिः प्रथमम् सम्भज्यते स प्रथमभाक्। अन्याभ्यो देवताभ्यः पूर्वं स्तूयत इत्यर्थः। तम् प्रथमभाजम्[1] यशसम् अन्तर्णीतमत्वर्थमेतत्। यशस्वन्तं कीर्तिमन्तं वा वयोधाम् अन्नस्य दातारम् सुपाणिम् [2]शोभनहस्तम् देवम्[2] सुगभस्तिम् सुबाहुम् ऋभ्वम् ऋभुशब्दोऽयं सुधन्वन आङ्गिरसस्य प्रथमेण पुत्रेण प्रथमपुत्रे तक्षणि प्रसिद्धः। स इह तक्षत्वसामान्यात् त्वष्टरि प्रयुज्यते। तक्षाणमित्यर्थः। त्वष्टा हि देवानां तक्षा। अथवा ऋभ्व इत्यपठितमपि[3] महन्नाम। महान्तम् होता आह्वाता देवानाम् यक्षत् यजतु यजतम् यष्टव्यम् पस्त्यानाम् 'पस्त्यम्' (निघ ३,४) इति गृहनाम, सामर्थ्याच्चान्तर्णीतमत्वर्थम्। गृहिणाम्। सर्वगृहस्थानामित्यर्थः। अथवा पस्त्याशब्द[4] आहुतिवचनः। तृतीयार्थे च षष्ठी। पस्त्याभिराहुतिभिः यष्टव्यम्। को यजते। उच्यते—अग्निः। कम्। उच्यते—त्वष्टारम् सुहवम् स्वाह्वानम्। विभावा दीप्तिमान्॥ ९ ॥

वेङ्कट० मुख्यम् यशस्विनम् अन्नस्य धातारम् सुपाणिम् देवम् शोभनबाहुम् महान्तम् होता यजतु यजनीयम् गृहाणाम् अग्निः त्वष्टारम् स्वाह्वानम् दीप्तिमान्॥ ९ ॥

भुव॑नस्य पि॒तरं॑ गी॒र्भिरा॒भी रु॒द्रं दिवा॑ व॒र्धया॑ रु॒द्रम॒क्तौ ।
बृ॒हन्त॑मृ॒ष्वम॒जरं॑ सुषु॒म्नमृध॑ग्घुवेम क॒विने॑षि॒तासः॑ ॥ १० ॥

भुव॑नस्य । पि॒तर॑म् । गीः॒ऽभिः । आ॒भिः । रु॒द्रम् । दिवा॑ । व॒र्धय॑ । रु॒द्रम् । अ॒क्तौ ।
बृ॒हन्त॑म् । ऋ॒ष्वम् । अ॒जर॑म् । सु॒ऽसु॒म्नम् । ऋध॑क् । हु॒वे॒म॒ । क॒विना॑ । इ॒षि॒तासः॑ ॥ १० ॥

स्कन्द० रुद्रोऽत्र स्तूयते। भुवनस्य भूतजातस्य सर्वस्य पितरम् पितृस्थानीयम् पालयितारं वा गीर्भिः आभिः एताभिः रुद्रम् दिवा अहनि वर्धय। स्तुहीत्यर्थः। स्तूयमाना हि देवता वीर्येण वर्धन्ते। [5]आत्मन एवात्मन् अन्तरात्मन प्रैष[5]। रुद्रम् एव अक्तौ रात्रौ। सततमित्यर्थः। किञ्च बृहन्तम् ऋष्वम् द्वे अप्येते महन्नामनी (द्र निघ ३,३) शरीरवीर्यसम्बन्धेनानुरक्ती कर्तव्ये। बृहन्तं शरीरेण, ऋष्वं वीर्येण। शारीरेण वीर्येण च महान्तमित्यर्थः। अजरम् जरावर्जितम् सुषुम्नम् सुसुखं सर्वस्य ऋधक् ऋधक् शब्दोऽत्र ऋध्नोत्यर्थे[6]। ऋध्नुवन्त हुवेम नित्य यज्ञेषु आह्वयेमेत्येतदाशास्महे। कविना मेधाविना तेनैव रुद्रेण इषितासः प्रेषिता[7]। अनुज्ञाता सन्त इत्यर्थः॥ १० ॥

वेङ्कट० भुवनस्य पातारम् स्तुतिभिः आभिः अह्नि रात्रौ च रुद्रम् वर्धय। महान्तम्[8] दर्शनीयम् अजरम् सुसुखम् अन्येभ्यो देवेभ्यः पृथक् ह्वयाम कविना रुद्रेण प्रेषिता प्रार्थयमाना॥ १० ॥

[9]इति चतुर्थाष्टके अष्टमाध्याये षष्ठो वर्गः[9]॥

आ यु॑वानः क॒वयो॑ यज्ञियासो॒ मरु॑तो ग॒न्त गृ॑ण॒तो व॑र॒स्याम् ।
अ॒चि॒त्रं चि॒द्धि जिन्व॑था वृ॒धन्त॑ इ॒त्था नक्ष॑न्तो नरो अङ्गिर॒स्वत् ॥ ११ ॥

---

१ प्रभाजम् मूको. २ २ °हस्त एवम वि°. ३ ऋभ्व नामापि मूको ४. पस्त्य° मूको. ५ ५ °रात्मना प्रैषा मूको ६. ऋध्नोत्यर्थे मूको. ७. प्रेषितारः मूको. ८. महद् वि° रूप, महत् ल. ९ ९ नास्ति मूको

आ । युवानः । कवयः । यज्ञियासः । मरुतः । गन्त । गृणतः । वरस्याम् ।
अचित्रम् । चित् । हि । जिन्वथ । वृधन्तः । इत्था । नक्षन्तः । नरः । अङ्गिरस्वत् ॥ ११ ॥

स्कन्द० मरुतोऽत्र ऋग्द्वये स्तूयन्ते । हे युवानः! तरुणाः! कवयः! मेधाविनः! यज्ञियासः! यज्ञार्हाः! मरुतः! 'आ गन्त'[1] आगच्छत गृणतः स्तुवतः[2] स्वभूताम् वरस्याम् वरणीयां स्तुतिम्। किञ्च [3]'अचित्रम् अविचित्रम्'[3]। सर्वथैकरूपमित्यर्थः। सामर्थ्याद् वृष्टिलक्षणम् उदकम्। चित् हि इति पदपूरणौ। जिन्वथ जिन्वतिरत्र तर्पणार्थः। लोडर्थे लट्। तर्पयत[4]। वृधन्तः वर्धमानाः। केन। सामर्थ्याद् वीर्येण। इत्था अमुत्र अन्तरिक्षे नक्षन्तः [5]'गच्छन्तो व्याप्नुवन्तो'[5] वा सैषं हे नरः! मनुष्याकाराः! अङ्गिरस्वत् यथेन्द्रसखा अङ्गिरसो व्याप्नुवन्ति तद्वत् ॥ ११ ॥

वेङ्कट० हे युवानः! कवयः! यज्ञार्हाः! मरुतः! स्तुवतः वरणीयां स्तुतिम् 'आ गन्त'। यूयम् हि पूजारहितम् अपश्यमानम् अपि प्रीणयथ वर्धमानाः अमुष्मान्तरिक्षे व्याप्नुवन्तः हे नेतारः! अङ्गिरस्वत्। अङ्गिरसोऽपि नूनमन्तरिक्षेण गच्छन्ति ॥ ११ ॥

प्र वीराय प्र तवसे तुरायाजा यूथेव पशुरक्षिरस्तम् ।
स पिस्पृशति तन्वि श्रुतस्य स्तृभिर्न नाकं वचनस्य विपः ॥ १२ ॥

प्र । वीराय । प्र । तवसे । तुराय । अज । यूथाऽइव । पशुऽरक्षिः । अस्तम् ।
सः । पिस्पृशति । तन्वि । श्रुतस्य । स्तृभिः । न । नाकम् । वचनस्य । विपः ॥ १२ ॥

स्कन्द० प्र इत्युपसर्गः अज इत्याख्यातेन सम्बध्यते। उपसर्गाभ्यासाद्वाक्यस्याप्यभ्यासः। प्राजप्राजेति[6] अभ्यासाच्च वर्णेमूयस्त्वम्। सुष्ठु प्रक्षिप[6]। प्रेरयेत्यर्थः। किम्। सामर्थ्यात् स्तुतीः[7]। आत्मन एव वाचम् अन्तरात्मनः प्रेषः[8]। वीराय शूराय। तवसे वृद्धाय। अथवा 'तवः' (निघ २,७) इति बलनाम, सामर्थ्याच्चात्र तद्वतोऽमरत्वर्थम्। बलवते तुराय त्वरतेस्तूर्वतेर्वा[11] हिंसार्थस्य रूपम्। त्वरिते हिंसित्रे वा शत्रूणाम्। कस्मै। मरुद्गणाय। कुत एतत्। पूर्वस्यामप्यृचि मरुतां प्रस्तुतत्वात्। 'या मृळीके मरुतां तुराणाम्' (ऋ ६,४८,१२), 'प्र चित्रमर्कं गृणते तुराय मारुताय' (ऋ ६,६६,९) इत्यादिषु च तुरशब्देन मरुतां विशेषणस्य दृष्टत्वात्। ते मरुतः कथं प्राजयितव्याः[12]। उच्यते— यूथा इव पशुरक्षिः अस्तम् पशुरक्षिः पशुपालः। 'अस्तम्' (निघ ३,४) इति गृहनाम। यथा च पशुपालः यूथानि गृहं प्रति प्रेरयेत् तद्वत्। किं कारणम्। उच्यते—सः मरुद्गणः [13]पिस्पृशति स्पर्शनम् अत्र उपलम्भसामान्ये वर्तते[13], स स्पर्शनेन्द्रियेणैवोपलभ्यते। पुनःपुनरुपलभते स्तुतीः तन्वि सप्तमीनिर्देशादत्र प्राप्ता इति वाक्यशेषः। स्वशरीरे प्राप्ताः सतीः श्रुतस्य प्रख्यातस्य[14] [15]स्तोतुः स्तुतीः। कथमिवोपलभते[15]। स्तृभिः न नाकम् स्तृभिरिति नक्षत्रनाम। इवार्थेऽत्रोपलक्षणे चैषा तृतीया। नाकं द्यौः (तु.या २,१४)। यथा [16]'नक्षत्रसम्बन्धाद् दिवम्'[16] [17]'महतादरेणोन्मुखः सर्व उपलभते'[17] तद्वत्।

---

१-१. आगच्छन्ता मूको. २. स्तुवन्तः वि[१]. ३-३. अचिनं अविचितम् मूको. ४. तारयन्त वि[१]. ५-५. म गच्छन्तो व्याप्नुव मूको. ६-६. नास्ति मूको. ७. प्रज प्रजेति मूको. ८. प्रक्षिप मूको. ९. स्तुतिः मूको. १०. देवा मूको. ११. त्वरते त्वरते मूको. ११-१२. तुराय ··· व प्रजतिन मूको. १३-१३. स्पर्शति ··· वर्तते मूको. १४. प्रख्यातस्य मूको. १५-१५. स्तोतुः ··· लभते मूको. १६-१६. 'नक्षत्रसम्बन्धाद्दिव मूको. १७-१७. °न्मुखः स सर्वे उपलभ्यते मूको.

'वचनस्य विपः' वचनस्येति षष्ठ्यीदये सुप्'। 'विप इति वेपतेः कम्पनार्थस्य' रूपम्। 'श्रुतस्येत्येतेन चैते समानाधिकरणविशेषणे'। स्तुतिवचनशीलस्यात्यादरेणोपकम्पितुः स्तोतुः ॥ १२ ॥

वेङ्कट० प्रेरय स्तुतिम् वीराय मरुद्गणाय वृद्धाय क्षिप्राय, यूथानि यथा पशुपालः अस्तम् प्रति प्रेरयति। सः मरुद्गणः स्पर्शं करोति शरीरे विप्रुवस्य स्तोतुः नक्षत्रैः इव द्युलोकम् वचनशीलस्य विप्रस्य। शरीरं स शरीरैः संश्लेषयति' ॥ १२ ॥

यो रजांसि विममे पार्थिवानि त्रिश्चिद् विष्णुर्मनवे बाधिताय ।
तस्य ते शर्मन्नुपदद्यमाने राया मदेम तन्वा तना च ॥ १३ ॥

यः । रजांसि । विऽममे । पार्थिवानि । त्रिः । चित् । विष्णुः । मनवे । बाधिताय ।
तस्य । ते । शर्मन् । उपऽदद्यमाने । राया । मदेम । तन्वा । तना । च ॥ १३ ॥

स्कन्द० विष्णुरत्र स्तूयते। यः भवान् रजांसि ज्योतींषि प्रकाशात्मकानि विममे निर्मिमीते करोति पार्थिवानि पृथिव्यां भवानि'। स्वरश्मिभिः पृथिवीं प्रकाशयतीत्यर्थः। त्रिः त्रिशब्दोऽत्र बहुत्वमात्रप्रदर्शनार्थः। बहुकृत्वः। प्रत्यहमित्यर्थः। चित् शब्दः पदपूरणः। कः। विष्णुः। कस्मै'। मनवे। मनुशब्दोऽत्र लोऽयमित्यभिसम्बन्धात् मनोरपत्यं मनुष्य उच्यते। तादर्थ्ये चतुर्थी। सर्वस्य मनुष्यस्यार्थाय। बाधिताय बाधितस्य शार्वरेण तमसा। अथवा 'त्रिशब्द-रजांसीति रजःशब्दोऽत्र लोकवचनः। सामर्थ्याच्चैव तदेकदेशे निवासस्थाने वर्तते। 'त्रिशब्द-स्तु त्रित्ववचन' एव। मनव इति मनुशब्द एतनाम्नो राज्ञः 'अत्येवां पायक.'। यानि निवास-स्थानानि पार्थिवानि' त्रिर्निर्मितवान् कल्पितवान्, असुरैरपहृतानि सन्ति तानि जित्वा प्रत्यर्पितवानित्यर्थः। मनुनाम्नो राज्ञः नृपेषां असुरैर्बाधितस्य''। तस्य ते तव सम्बन्धिनि'' । त्वया दत्त इत्यर्थः। शर्मन् गृहे उपदद्यमाने उपेत्यैव वा' इत्येतस्य स्थाने। आदानार्थोऽयमत्र''। त्वया दत्त इत्यर्थः। सुष्ठु दीप्यमाने'' राया धनेन इव सामर्थ्यादीत्यर्थः। स्वरूपेण च इत्यन्विकरणः'' । मदेम मदेमहि, तन्वा शरीरेण चारोग्येण तना च अपत्येन च ॥ १३ ॥

वेङ्कट० यः पार्थिवान् लोकान् विममे क्रमणैः त्रिः च असुरैः बाधिताय मनुष्याय'' मनुष्याणाम् अभ्युदयार्थम्। तस्य तव स्वभूते गृहे त्वयोपदीयमाने'' धनेन'' मोदेमहि आत्मना पुत्रेण च सहिताः ॥ १३ ॥

तन्नोऽहिर्बुध्न्यो अद्भिरर्कैस्तत् पर्वतस्तत् सविता चनो धात् ।
तदोषधीभिरभि रातिषाचो भगः पुरंधिर्जिन्वतु प्र राये ॥ १४ ॥

१-१. °नस्यापिना मूको. २. लुच् मूको. ३-३. विप इति वेपते ---पनार्थस्य मूको. ४-४. श्रुतस्ये-तेन चैतेन चैते समानाधिकरणे शेषणे मूको. ५ संशृष" मूको; संश्लेषयति ल प्रस्तावः. ६. मन्यानि मूको. ७. नास्ति मूको. ८-८. इति शब्द स्तुतिलवनम मूको. ९-९. कर्षेयं'चकः मूको. १०. पार्थिवानीति मूको. ११. °धिताय मूको. १२ सेवन्धीनि मूको. १३. आददानेत्यत्र मूको. १४ यत्विकरण° मूको. १५. °मन्तो मूको १६. °प्या मूको. १७. त्वयोपदीयमानेन ल रूपं; °मानेन वि°. १८, नास्ति ल रूपं.

तत् । नः । अहिः । बुध्न्यः । अत्ऽभिः । अर्कैः । तत् । पर्वतः । तत् । सविता । चनः । धात् ।
तत् । ओषधीभिः । अभि । रातिऽसाचः । भगः । पुरम्ऽधिः । जिन्वतु । प्र । राये ॥ १४ ॥

स्कन्द० अहिर्बुध्न्यादयो देवता अत्र ऋग्द्वये[1] स्तूयन्ते । तच्छब्दयोग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यत् प्रार्थयामहे तत् नः अस्मभ्यम् अहिः नाम मध्यमस्थानो देवः बुध्न्यः बुध्नमन्तरिक्षम्[2] तस्मिन् भवः [3]अद्भिः सह[3] अर्कैः अन्यैश्चाग्न्यादिभिर्देवैः सह, तत् एव पर्वतः, तत् एव सविता[4] चनः अन्नम् धात दधातु । तत् एव ददतु ओषधीभिः सह आभिमुख्येन रातिषाचः हविर्दानस्य सेवितारो महान्तो विश्वे देवाः । किञ्च पुरंधिः बहुकर्मा बहुप्रज्ञो वा भगः[5] जिन्वतु प्र प्रकर्षेण प्रीणयत्वस्मान् राये तृतीयार्थे चतुर्थ्येषा । राया[6] ॥ १४ ॥

वेङ्कट० तत् अस्मभ्यम् अहिः बुध्न्यः उदकैः अर्चनीयैर्धनैश्च सह अन्नम् प्रयच्छतु पर्वतः सविता च । तत् अन्नम् नानाविधाभिः ओषधीभिः सह अभि प्रयच्छन्तु दानस्य सेवितारः अहिर्बुध्न्यादयः । भगः पुरंधिः धनस्मात् धनार्थम् प्रीणयतु ॥ १४ ॥

नू नो र॒यिं र॒थ्यं॑ चर्षणि॒प्रां पु॑रु॒वीरं॑ म॒ह ऋ॒तस्य॑ गो॒पाम् ।
क्षयं॑ दाता॒जरं॒ येन॒ जना॒न्त्स्पृधो॒ अदे॑वीर॒भि च॒ क्रमा॑म॒ विश॒ आदे॑वीर॒भ्य१॒॑श्नवा॑म ॥१५॥

नु । नः । र॒यिम् । र॒थ्य॑म् । च॒र्ष॒णि॒ऽप्राम् । पु॒रु॒ऽवीर॑म् । म॒हः । ऋ॒तस्य॑ । गो॒पाम् ।
क्षय॑म् । दा॒त॒ । अ॒जर॑म् । येन॑ । जना॑न् । स्पृधः॑ । अदे॑वीः । अ॒भि । च॒ । क्रमा॑म । विशः॑ ।
आऽदे॑वीः । अ॒भि । अ॒श्नवा॑म ॥ १५ ॥

स्कन्द० नु क्षिप्रम् नः अस्मभ्यम् रयिम् धनम् रथ्यम् रथं वहतीति रथ्य इति [7]"कर्तरि यत् 'प्रतिपदाधत्, तद्वहति रथयुगप्रासङ्गम्' ( पा ४,४,७५;७६ ) इति[7] । इह तु स्वप्रत्ययेन कर्मणि द्रष्टव्यः । रथैर्वोढव्यम् । प्रभूतमित्यर्थः । चर्षणिप्राम् मनुष्याणां पूरकं[8] पोषकम् । हितमित्यर्थः । पुरुवीरम् 'बहुभिः वीरैः[9] पुत्रपौत्रैश्च युक्तम् [10]"महः महतः[10]" ऋतस्य यज्ञस्य गोपाम् गोप्तारम् । यस्मिन् सति महानपि यज्ञो न त्यज्यते, शक्यत एव कर्तुम् । महतामपि यज्ञानां करणसमर्थमित्यर्थः । [11]"क्षयम् निवासस्थानं[11]" च दात दत्त । हे [12]अहिर्बुध्न्यौ ! भवद्भ्यां प्रेरिताः[12] अजरम् जरावर्जितम् अविनश्वरम् येन रयिणा क्षयेण[13] च जनान् मनुष्यान् स्पृधः स्पर्धितॄन् अदेवीः अभि च क्रमाम । चशब्द अदेवीरित्यस्मात्परो द्रष्टव्यः । देवेभ्यः अन्याः[14] अदेव्यः ताश्च[15] अभिक्रामेम । अभिक्रमणमवष्टम्भनं मुधाकरणं स्पर्धितॄणां चेष्यते । येन च विशः मनुष्यजातीः आदेवीः नित्यम् आगता देवा यासां ता आदेव्यः यज्ञपराः ताः अभि अश्नवाम अभिव्याप्नुयाम तदन्तर्गताः भूयास्म । नित्यं यजेमेत्यर्थः १५ ॥

---

१. ऋचयो मूको. २. बुध्नमन्° मूको. ३-३. नद्यः सह: मूको. ४. सवितृ मूको. ५. नास्ति मूको. ६. राये मूको. ७-७. पर्यतियत् प्र···वहति रथ युगप्रासङ्गमिति मूको. ८. पूरणम् मूको. ९. वम्··· मूको. १०-१०. महा महता मूको. ११-११. ···वास° मूको. १२-१२. °बुध्न्याभ्यां प्रेरिता मूको. १३. क्षयेणः मूको. १४. अन्यो मूको. १५. नास्ति मूको.

वेङ्कट० क्षिप्रम् अश्वाभ्याम् रथवाहम् मनुष्याणां पूरकम् बहुभिर्वीरैर्युक्तम् महतः धनस्य रक्षकम् गृहं च प्रयच्छत[1] अरातिरहितम् । येन निवासेन[2] स्पर्धयितॄन् मनुष्यान् अभि [redacted] भवाम । जयार्थं स्पर्धयित्रीरासुरीः विशः अभिक्रमाम, देवसम्बन्धिनीश्च[3] विशः अभि अक्रमाम आभिमुख्येन प्राप्नुयामेति[4] ॥ १५ ॥

[5]इति चतुर्थाष्टके अष्टमाध्याये सप्तमो वर्गः[5] ॥

[ ५० ]

[6]ऋजिश्वा भारद्वाज ऋषिः । विश्वे देवा देवताः । त्रिष्टुप् छन्दः[6] ॥

हुवे वो देवीमदितिं नमोभिर्मृळीकाय वरुणं मित्रमग्निम् ।
अभिक्षदामर्यमणं सुशेवं त्रातॄन् देवान्त्सवितारं भगं च ॥ १ ॥

हुवे । वः । देवीम् । अदितिम् । नमःऽभिः । मृळीकाय । वरुणम् । मित्रम् । अग्निम् ।
अभिऽक्षदाम् । अर्यमणम् । सुऽशेवम् । त्रातॄन् । देवान् । सवितारम् । भगम् । च ॥ १ ॥

स्कन्द० [7]आदित्यादयोऽत्र स्तूयन्ते । हुवे वः इति[8] व्यत्ययेनेह बहुवचनम् । त्वाम् 'देवीम् अदितिम्' नमोभिः स्तुतिभिः मृळीकाय सुखार्थम् । वरुणम् मित्रम् अग्निम् च । न चैतानेव केवलान् । किं तर्हि । अभिक्षदाम् क्षदतिः संस्कारार्थः । तमोऽपनयनेन सर्वस्य संस्कर्तारम् । अथवा विशासितारं हन्तारम् । कस्य । सामर्थ्यात् तमसाम् । अर्यमणम् सुशेवम् सुसुखम् । भ्रातॄन् पालयितॄन् अन्यानपि देवान् सवितारम् भगम् च ॥ १ ॥

वेङ्कट० ह्वयामि युष्मदर्थम् अदितिम् नमस्कारैः हविर्भिः वा वरुणादींश्च, क्षदतिः शकलीभावकर्मा[9], शत्रूणाम् आभिमुख्येन विशासितारम् धनानां वा पृथक्कर्तारम् अर्यमणम् सुसुखम् भ्रातॄन् सर्वान् देवान् सवितारम् भगम् च । 'यः[10] खलु वै ददाति सोऽर्यमा' (तै २,३,४,१) इति ब्राह्मणम् ॥ १ ॥

सुज्योतिषः सूर्य दक्षपितॄननागास्त्वे सुमहो वीहि देवान् ।
द्विजन्मानो य ऋतसापः सत्याः स्वर्वन्तो यजता अग्निजिह्वाः ॥ २ ॥

सुऽज्योतिषः । सूर्य । दक्षऽपितॄन् । अनागाःऽत्वे । सुऽमहः । वीहि । देवान् ।
द्विऽजन्मानः । ये । ऋतऽसापः । सत्याः । स्वःऽवन्तः । यजताः । अग्निऽजिह्वाः ॥ २ ॥

स्कन्द० सूर्योऽत्र स्तूयते । सुज्योतिषः शोभनान्यादित्यवीर्यादीनि ज्योतींषि येषां ते सुज्योतिषः । हे सूर्य ! दक्षपितॄन् [11]दक्षाः पितरो येषां तान् । यज्ञादिकरणं प्रति उत्साहिन[11] इत्यर्थः । अनागास्त्वे सप्तमीनिर्देशात् सतीति वाक्यशेषः । अपापान्[12] सतः इत्यर्थः । हे सुमहः ! सुष्ठु महन् ! पूज्य ! वा वीहि गच्छ कामयस्व वा देवान् दीप्यतेः स्तुत्यर्थे इदं रूपम् ।

---

१. प्रयत मूको. २. निवासम मूको. ३. इत॰ मूको. ४. व्याप्नु॰ वि॰ धर्प. ५-५. नास्ति मूको. ६-६. देवमदर्थं मूको. ७. नास्ति मूको. ८. नास्ति वि॰ धर्प. ९. कलीभा॰ वि॰ द; कलिभा॰ मूको. १०. यो द. ११-११. दक्ष ··· प्रत्युक्ता॰ मूको. १२. अपापात् मूको.

स्तोतॄन् अस्मान्। ये कीदृशाः। उच्यते—द्विजन्मानः। ये द्विजन्मानः मातृतः[1] जन्म प्रथमं द्वितीयं मौञ्जीबन्धनम् इति द्विजन्मानः। ऋतसापः यज्ञे देवानां स्तोतारः। सत्याः अविसंवादिनः स्वर्वन्तः स्वर्येण[2] देवतायोग्येन हविरादिना उद्वन्तः। यजत्राः यष्टारः। अग्निजिह्वाः अग्निराहवनीयः [3]जिह्वास्थानीयो यत्रेत्यग्निजिह्वः यज्ञः, स येषामस्ति[3] ते अग्निजिह्वाः। आहिताग्नय इत्यर्थः॥ २॥

वेङ्कट० शोभनज्योतिष्कान् हे सूर्य! दक्षः पिता येषां देवानाम् तान् अस्माकम् अभ्युदये सुकान् कामयस्व, द्युलोकभूलोकयोर्जायमानाः[4] ये यज्ञस्पृष्टारो भवन्ति सत्यकर्माणः अभ्युदयप्रयुक्ताः महान्तः अग्निजिह्वाः॥ २॥

उत द्यावापृथिवी क्षत्रमुरु बृहद्रोदसी शरणं सुषुम्ने।
महस्करथो वरिवो यथा नोऽस्मे क्षयाय धिषणे अनेहः॥ ३॥

उत। द्यावापृथिवी इति। क्षत्रम्। उरु। बृहत्। रोदसी इति। शरणम्। सुसुम्ने इति सुऽसुम्ने।
महः। करथः। वरिवः। यथा। नः। अस्मे इति। क्षयाय। धिषणे इति। अनेहः॥ ३॥

स्कन्द० [5]हे द्यावापृथिवी! क्षत्रम्[5] अपठितमपि बलनामैतत्। उरु[6] बहु विस्तीर्णं वा उत[7] अपि बृहत् [8]हे रोदसी! रोदस्यौ! सर्वस्य रोधस्यौ![8] शरणम् गृहम् सुसुम्ने! सुसुखे! महः महत् करथः[9] वरिवः यथा 'वरिवः' (निघ २,१०) इति धननाम। महद्धनं यथा कुरुथः, एवं क्षत्रं कुरुतमिति शेषः। कुरु एतत्। अत्र शरणमिति कर्मणोः क्रियाकाङ्क्षत्वाद् यथेति चोपमानस्य साकाङ्क्षत्वाद् यथा महद्धनं दत्थः, एवं बलं गृहं च दत्तमित्यर्थः। नः अस्मभ्यम्। किमर्थम्। उच्यते—अस्मे क्षयाय क्षि[10] निवासगत्योः। अस्माकं निवासाय अस्मान् प्रति गमनाय वा देवानाम्।[10] कथं बलवन्तो वयं गृहे निवसेमेत्येवमर्थम्। अथवा कथं बलवन्तो गृहिणश्चास्मान् यजतो देवान् गच्छेयुरित्येवमर्थमित्यर्थः। हे धिषणे! धि धारणे। धारयित्र्यौ! सर्वस्य अपापं च कुरुतम्। अथवा क्षत्रशरणयोरेवेदं विशेषणम्। अपापं बलं गृहं चैवेति॥ ३॥

वेङ्कट० अपि च द्यावापृथिव्यौ! बहु बलम् कुरुतम् तथा हे रोदसी! सुसुम्ने! महत् गृहं कुरुतम् तथा महत् धनं च कुरुथः यथा अस्माकमपेक्षितम्। किञ्च अस्मै गृहाय हे धारयित्र्यौ! अपापं च कुरुतमिति॥ ३॥

आ नो रुद्रस्य सूनवो नमन्तामद्या हूतासो वसवोऽधृष्टाः।
यदीमर्भे महति वा हितासो बाधे मरुतो अह्वाम देवान्॥ ४॥

आ। नः। रुद्रस्य। सूनवः। नमन्ताम्। अद्य। हूतासः। वसवः। अधृष्टाः।
यत्। ईम्। अर्भे। महति। वा। हितासः। बाधे। मरुतः। अह्वाम। देवान्॥ ४॥

---

1. नास्ति मूको. 2. स्वर्येण मूको. 3-3. °स्थानीयो…स येषामस्ति मूको. 4. °यो जयायमानाः ख°; °योर्जायमाने वि°; °योर्जन्य येषाम् छ. 5-5. नास्ति मूको. 6. उत मूको. 7. नास्ति मूको. 8-8. हे रोदे रोदसी सर्वस्य रोदसः मूको. 9. स्थः मूको. 10. यक्षि मूको.

[1]महत्त्वयन्ति वा, महान्ति[1] बहूनि वेत्यर्थः। कानि। सामर्थ्याच्छत्रुवृन्दानि। रेजन्ते [2]भ्यसते रेजते इति भयवेपनयोः[2] ( या ३,२१ )। अस्मान् हन्तुं मरुत आगच्छन्तीति मन्यमानानि बिभ्यति। अथवा [3]भूमा महान्ति[3] बहूनि वा भवनानि। तानि रेजन्ते कम्पन्ते। पदकारास्तु भूम इति द्वयक्षरत्वात् क्रियाविशेषणम् इदम् एकवचनान्तमिति मन्यन्ते। तत्र स्वार्थिक इमनिच् द्रष्टव्यः। बहु रेजन्त इत्यर्थः। क। धन्वनि 'धन्व' ( निघ १,३ ) इत्यन्तरिक्षनाम। अस्य रेजन्त इत्येतेन वा [4]सम्बन्धः, याथ इत्येतेन[4] वा। अन्तरिक्षे रेजन्ते अन्तरिक्षे वा यदा याथेति। कीदृशि। प्रविक्ते। [5]शुद्धोऽपि विचिरत्र विपूर्वार्थे[5] द्रष्टव्यः। प्रकर्षेण विविक्ते। शुचौ वा विस्तीर्णे वेत्यर्थः ॥ ५ ॥

वेङ्कट० सङ्गच्छते येषु रुद्रस्य पत्नी मरुतां माता क्षिप्रम् देवी। सचते च यान् पूषा[6] अभ्यर्धयज्वा अभ्यर्धयन् यजतीति। श्रुत्वा हवम् मरुतः यदा गच्छथ[7], तदा भूमयः कम्पन्ते मार्गे भवद्भिः प्रविक्ते[8]। मार्गस्य प्रवेको वनस्पतीनां पृथग्भावः[9] ॥ ५ ॥

[10]इति चतुर्थाष्टके सप्तमाध्याये अष्टमो वर्गः[10] ॥

अ॒भि त्वं वी॒रं गिर्व॑णसम॒र्चेन्द्रं॒ ब्रह्म॑णा जरित॒र्नवे॑न ।
श्रव॒दिद्धव॒मुप॑ च॒ स्तवा॑नो॒ रास॒द्वाजाँ॒ उप॑ म॒हो गृ॑णा॒नः ॥ ६ ॥

अ॒भि । त्यम् । वी॒रम् । गिर्व॑णसम् । अ॒र्च॒ । इन्द्र॑म् । ब्रह्म॑णा । ज॒रि॒त॒रिति॑ । नवे॑न ।
श्रव॑त् । इत् । हव॑म् । उप॑ । च॒ । स्तवा॑नः । रास॑त् । वाजा॑न् । उप॑ । म॒हः । गृ॒णा॒नः ॥ ६ ॥

स्कन्द० इन्द्रोऽत्र स्तूयते। त्यम् तम् वीरम् [11]विक्रान्तम् गिर्वणसम् गीर्भिः स्तुतिभिस्संभजनीयं स्तुतीनां वा[11] सम्भक्तारम् इन्द्रम् अभि अर्च अभिष्टुहि। आत्मन एवायमन्तरात्मनः प्रैषः। ब्रह्मणा[12] स्तुतिलक्षणेन हे जरितः! स्तोतः! नवेन अन्यैः स्तोतृभिरकृतपूर्वेण। स किं करोतीति। [13]उच्यते। श्रवदिद्धवमिति[13]। तच्छ्रवणश्रुतेर्यच्छब्दोऽध्याहार्यः। इत् इति पदपूरणः। चशब्दः समुच्चये। रासद् इत्येतदपेक्षश्च [14]समुच्चयः। सः उप श्रवत् शृणोति[14] च हवम् आह्वानम् स्तवानः[15] स्तूयमानः उप रासत् ददाति च वाजान् [16]अन्नानि महः महान्ति गृणानः स्तूयमानः[16] ॥ ६ ॥

वेङ्कट० अभि अर्च तम् वीरम् गीर्भिर्वननीयम् इन्द्रम् ब्रह्मणा हे स्तोतः! नवेन। उप शृणोतु एष[17] ह्वानम् स्तूयमानः। उप प्रयच्छतु महान्ति अन्नानि शस्यमानः ॥ ६ ॥

ओमा॑नमापो मानु॒षीरमृ॑क्तं॒ धात॒ तोका॑य॒ तन॑याय॒ शं योः ।
यू॒यं हि ष्ठा भि॒षजो॑ मा॒तृत॑मा॒ विश्व॑स्य स्था॒तुर्जग॑तो॒ जनि॑त्रीः ॥ ७ ॥

---

१-१. महत्त्वयन्ति त्वाम्° मूको. २-२. भयसह···क्ति मूको. ३-३. 'त्वा···त्येतेन मूको. ४. रेजन्ते व अन्तरिक्षे मूको. ५-५. शुद्धोऽपि विचिरत्रविपूर्वार्थे मूको. ६. पु° मूको ७. °च्छथ ऋ. ८. °ते मूको. ९. पृथग्भा° मूको; पृथग्भा° ऋ प्रभावः. १०-१०. नास्ति मूको. ११-११. विक्रान्तं···स्तुतिभिस्संभ° मूको. १२. वा मूको. १३. ब्रह्मणः मूको. १३-१३. उच्यते···मिति मूको. १५-१५. समुच्चयः···शृणोति मूको. १६. स्तवानां मूको. १७-१७. अन्नानि···मूको. १८. एष मूको.

ओमानम् । आपः । मानुषीः । अमृक्तम् । धात । तोकाय । तनयाय । शम् । योः ।
युयम् । हि । स्थ । भिषजः । मातृऽतमाः । विश्वस्य । स्थातुः । जगतः । जनित्रीः ॥ ७ ॥

स्कन्द० आपोऽत्र[1] स्तूयन्ते। ओमानम् अवनं पालनम् हे आपः! मानुषीः![2] मनुष्येषु भवाः! अमृक्तम् अमृतशब्दस्यायं छान्दसः ककार उपजनः, तस्मादयाव सम्प्रदेशः। अमृतसदृशाम्। अत्यन्तहितमित्यर्थः। अथवा [3]अमृक्तमिति मृजूधातोः शौचार्थकस्य 'व्रश्चभ्रस्जसृज[3]' ( पा ८,२,३६ ) इति परत्वं न छान्दसत्वात्। अमृक्तम् [4]अशुद्धम्। अत्येन[4] धनेन वा सहितमित्यर्थः। धात धत्त तोकाय तनयाय पुत्रेभ्यश्च पौत्रेभ्यश्च अस्माकम्। न च केवलम् ओमानम्। किं तर्हि। शम् उपशमनम्। कस्य। सामर्थ्याद् उत्पन्नानामनिष्टानां [5]रोगाणाम्। योः इति पृथग्भावार्थः[5]। पृथग्भवनं[6] [7]चासत्यन्च इत्यर्थः[7]। केन[8]। सामर्थ्याद् उत्पित्सुभिरनिष्टैः[9]। कस्मात्। उच्यते—यूयम् हि स्थ भिषजः। हि-शब्दो यस्मादित्यर्थे। यस्माद् यूयं भिषजः वैद्यभूताः स्थ। यथा वैद्य उत्पन्नस्य शरीरे दोषस्य हन्तैवं [10]यूयमपि हन्त्र्यः। किञ्च मातृतमाः[10] निर्मात्र्यः मातृभूताः वा सर्वस्य। यस्माच्च विश्वस्य सर्वस्य स्थातुः स्थावरस्य जगतः जङ्गमस्य च जनित्रीः जनयित्र्यः स्थ। यस्मात् स्थितेरुत्पत्तेश्च [11]हेतवः स्थ[11] तस्मात्धत्तेत्यर्थः ॥ ७ ॥

वेङ्कट० 'अन्नं वा ओमा' इति ब्राह्मणम्। हे आपः![12] मनुष्येषु भवाः! शत्रुभिरसृष्टम् प्रयच्छत पुत्राय पौत्राय शम् च योः च। यूयम् हि भवथ भिषजः कल्याण्यो मातरः विश्वस्य स्थावरस्य जङ्गमस्य च जनयित्र्यः ॥ ७ ॥

आ नो॑ दे॒वः स॑वि॒ता त्राय॑माणो॒ हिर॑ण्यपाणिर्यज॒तो ज॑गम्यात् ।
यो द॒त्रवाँ॑ उ॒षसो॒ न प्रती॑कं व्यूर्णु॒ते दा॒शुषे॒ वार्या॑णि ॥ ८ ॥

आ । नः॒ । दे॒वः । स॒वि॒ता । त्राय॑माणः । हिर॑ण्यऽपाणिः । य॒ज॒तः । ज॒ग॒म्या॒त् ।
यः । द॒त्रऽवान् । उ॒षसः॑ । न । प्रती॑कम् । वि॒ऽऊ॒र्णु॒ते । दा॒शुषे॑ । वार्या॑णि ॥ ८ ॥

स्कन्द० सविताऽत्र स्तूयते। नः अस्मान् देवः सविता त्रायमाणः पालयन् हिरण्यपाणिः हिरण्मयहस्तः। अत्र च साङ्ख्यायना इतिहासमाम्नायमधीयते[13]—'अथ [14]यत्र ह तद्देवा[14] यज्ञमतन्वत तत् सवित्रे[15] प्राशित्रं परिजह्रुस्तस्य[16] पाणी प्रचिच्छेद[17]। तस्मै[18] हिरण्मयौ[19] प्रतिदधुस्तस्माद्धिरण्यपाणिरिति स्तुतः' ( शाङ्ख्या ६,१३ ) इति। यजतः यष्टव्यः आ जगम्यात्[20] अत्यर्थमागच्छेदित्याशास्महे। यः किं करोति। उच्यते—यः दत्रवान् भानुमान् उषसः न प्रतीकम्। प्रतीकं दर्शनम्। न-शब्द उपमार्थोऽस्मात्परो द्रष्टव्यः। यथा उषसो दर्शनं प्रकाशयति तद्वत्[21] व्यूर्णुते विशब्दोऽत्र[22] विगमे। ऊर्णुञ् आच्छादने। विगताच्छादनानि करोति। प्रकाशयतीत्यर्थः। दाशुषे यजमानाय वार्याणि वरणीयानि सर्वप्रकाश्यानि ॥ ८ ॥

---

१. ···त्र मूको. २. मानुषः मूको. ३-३. °मिति···भ्रस्ज भ्रस्व° मूको. ४-४. °मनेन मूको. ५-५. रोगा···पृथग्भावा° मूको. ६. °भजन वि°. ७-७. °चासंभवस्त्वेत्यर्थः मूको. ८. तेन न वि°; येन वि°. ९-९. °वुलित्सुभिर° मूको. १०-१०. °मपि···मातृतमाः मूको. ११-११. हेतवस्त्वा मूको. १२. आपः मूको. १३. अधीते मूको. १४-१४. यत्र ते देवाः मूको. १५. सविता मूको. १६. पारिबर्हं तस्य मूको. १७. °चिच्छिदुः मूको. १८. यतो मूको. १९. °मयेन मूको. २०. नास्ति मूको. २१. देव मूको. २२. दिव° मूको.

वेङ्कट० आ गच्छतु अस्मान् देवः सविता पालयन् हिरण्यपाणिः वरेण्यः, यः दानवान् उषसः इव मुखम्[1] तमांसि व्यूर्णुते[2] यजमानाय धनानि ॥ ८ ॥

उत त्वं सूनो सहसो नो अद्या देवाँ अस्मिन्नध्वरे ववृत्याः ।
स्यामहं ते सदमिद् रातौ तव स्यामग्नेऽवसा सुवीरः ॥ ९ ॥

उत । त्वम् । सूनो इति । सहसः । नः । अद्य । आ । देवान् । अस्मिन् । अध्वरे । ववृत्याः ।
स्याम् । अहम् । ते । सदम् । इत् । रातौ । तव । स्याम् । अग्ने । अवसा । सुऽवीरः ॥ ९ ॥

स्कन्द० अग्निरत्र स्तूयते । 'उत इति अप्यर्थे[3] । त्वं-शब्दाच्च परो द्रष्टव्यः । त्वम् अपि हे सूनो! सहसः बलस्य पुत्र! । बलेन मथ्यमानो यज्जायते इति बलस्य पुत्र उच्यते । नः[4] अस्मान् प्रति अद्य देवान् अस्मिन् अध्वरे आ ववृत्याः[5] 'वर्तते' ( निघ २,१४ ) इति गतिकर्मा, सामर्थ्याच्चान्तर्णीतण्यर्थः । गत्यर्थे पुनःपुनर्वा आगमयेत्याशास्महे । किञ्च स्याम् अहम् सम्प्रदानम्[6] ते तव सदम् इत् सदैव रातौ दाने । नित्यं त्वमस्मभ्यं दाता इत्यर्थः । किञ्च तव अवसा पालनेन । त्वया पाल्यमानः सन्नित्यर्थः । स्याम् अहं हे अग्ने । सुवीरः शोभनैर्वीरैः पुत्रैः पौत्रैश्च युक्तः ॥ ९ ॥

वेङ्कट० अपि त्वम् हे सहसः सूनो! अस्माकम् अद्य अस्मिन् यज्ञे देवान् आ वर्तय । स्याम् अहम् ते सदा एव दाने । तव स्याम् अग्ने! रक्षणेन शोभनवीरः ॥ ९ ॥

उत त्या मे हवमा जग्म्यातं नासत्या धीभिर्युवमङ्ग विप्रा ।
अत्रिं न महस्तमसोऽमुमुक्तं तूर्वतं नरा दुरितादभीके ॥ १० ॥

उत । त्या । मे । हवम् । आ । जग्म्यातम् । नासत्या । धीभिः । युवम् । अङ्ग । विप्रा ।
अत्रिम् । न । महः । तमसः । अमुमुक्तम् । तूर्वतम् । नरा । दुःऽइतात् । अभीके ॥ १० ॥

स्कन्द० उत त्या मे इति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यौ[7] धीभिः प्रज्ञाभिः '[8]कर्मभिर्वा युवतौ युवम्[8] युवाम् अङ्ग क्षिप्रं हे विप्रा! मेधाविनौ! 'अत्रिम् न' नशब्दोऽत्रोपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः' ( या ७,३१ ) इति पदपूरणः । अत्रिम् असुरैरग्निकुण्डे प्रक्षिप्तम् '[9]महः महतः तमसः मृत्युलक्षणात् अमुमुक्तम् तमसि प्रशमय्य[9] तत उद्धरणेन मोचितवन्तौ स्थः । तथैतत्कक्षीवताऽप्युक्तम्—'हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ १,११६,८) इति । किञ्च '[10]तूर्वतम् तूर्वतिः[10] हिंसार्थः । हिंस्तं हे नरा! मनुष्याकारौ! दुरितात् द्वितीयार्थे पञ्चम्येषा । दुरितं पापमस्माकम् अभीके[11] । अभीके अभीके इत्यासन्नस्य ( या ३,२० ) नामनी । द्वितीयार्थे चात्र सप्तमी । आसन्नं स्वशरीरमित्यर्थः ॥ १० ॥

1. 'त्व' मूको. 2. °यंते मूको. 3-3. उतोऽप्यर्थे मूको. 4. य मूको. 5. °देऽवरृत्याः मूको. 6. °सम्प्रदाने मूको. 7. य मूको. 8-8. कर्मभिर्वा युवं मूको. 9-9. नास्ति वि[1]. 10-10. महतो मृत्युलक्षणात्...प्रशमय्य मूको. 11-11. तूर्वतं तूर्वतिः मूको. 12. अभीके मूको.

वेङ्कट० अपि च तौ मम हवम् आ गच्छतम् हे नासत्यौ! कर्मभिः युवाम् क्षिप्रम् मेधाविनौ!,
अत्रिम् इव महतः तमसः मोचितवन्तौ वर्धमानम् उपद्रवात् सङ्ग्रामे ॥ १० ॥

[1]इति चतुर्थाष्टके अष्टमाध्याये नवमो वर्गः[1] ॥

ते नो॑ रा॒यो द्यु॒मतो॒ वाज॑वतो दा॒तारो॑ भूत नृ॒वतः॑ पुरु॒क्षोः ।
द॒श॒स्यन्तो॑ दि॒व्याः पार्थि॑वासो॒ गोजा॑ता॒ अप्या॑ मृ॒ळता॑ च देवाः ॥ ११ ॥

ते । नः॒ । रा॒यः । द्यु॒ऽमतः॑ । वाज॑ऽवतः । दा॒तारः॑ । भू॒त । नृ॒ऽवतः॑ । पु॒रु॒ऽक्षोः ।
द॒श॒स्यन्तः॑ । दि॒व्याः । पार्थि॑वासः । गोऽजा॑ताः । अप्याः॑ । मृ॒ळत॑ । च॒ । दे॒वाः॒ ॥ ११ ॥

स्कन्द० देवा अत्र स्तूयन्ते। ते नः अस्माकम् रायः धनस्य द्युमतः स्वदीप्त्या दीप्तिमतः वाजवतः[2] अन्नसंयुक्तस्य दातारः भूत भवत। नृवतः[3] परिचारकमनुष्योपेतस्य। पुरुक्षोः बहुस्थाननिवासिनः। 'द्युमन्तो याभिर्मदेम' (ऋ १,१०,११) प्रसन्नप्रभूतस्येत्यर्थः[4]। अथवा द्युशब्दोऽत्र कीर्तिवचनः। दशस्यन्तः दातुमिच्छन्तः[5]। यदाऽसम्प्र इति यथा। बहुकीर्तेः बहुधा च कीर्त्योपेतस्येत्यर्थः। दिव्याः प्रत्यक्षकृतोऽयं मन्त्रः। दातुमिच्छथ तदा द्युमदादिगुणयुक्तं दत्त, न[6] यत्किञ्चिदित्यर्थः। दिव्याः दिवि न च दिव्या इत्यादीन्यामन्त्रितानि। अतो यत्तच्छब्दाध्याहृत्यैकवाक्यता ज्ञेया। दिव्याः दिवि भवाः। पार्थिवासः [7]पृथिव्यां भवाः[7] गोजाताः सर्वगामित्वाद् गौर्भूतः प्रकृतिरात्मा ततो जाताः। अथवा स्तुतिलक्षणा वाग् गौः तया सह जाताः। जन्मन एव प्रभृति[8] स्तुत्याः इत्यर्थः। अप्याः 'आपः' (निघ १,३) इत्यन्तरिक्षनाम। तस्मिन्न भवाः। लोकत्रयेऽपि ये भवाः ते नो धनस्य दातारो भवतेत्यर्थः। किञ्च मृळत च सुखयत चास्मान् हे देवाः! ॥ ११ ॥

वेङ्कट० ते अस्मभ्यम् धनस्य दीप्तिमतः अन्नवतः दातारः भवत वीरवतः बहुभिः कीर्त्यमानस्य। धनानि प्रयच्छन्तः दिवि भवाः पार्थिवाश्च [9]पृथिव्या अन्तरिक्षनाम्नो[9] जाताः गोर्भूमेः सा जननस्थानं येषां ते गोजाताः। त्रिस्थाना अपि देवा उच्यन्ते। अपि [illegible] मारुतीयम्। गोजाताः पृश्निमातरः अप्सु[10] भवाः सुखयत अस्मान् देवाः! ॥ ११ ॥

ते नो॑ रु॒द्रः सर॑स्वती स॒जोषा॑ मी॒ळ्हुष्म॑न्तो॒ विष्णु॑र्मृळन्तु वा॒युः ।
ऋ॒भु॒क्षा वाजो॒ दैव्यो॑ विधा॒ता प॒र्जन्या॒वाता॑ पिप्यता॒मिषं॑ नः ॥ १२ ॥

ते । नः॒ । रु॒द्रः । सर॑स्वती । स॒ऽजोषाः॑ । मी॒ळ्हुष्म॑न्तः । विष्णुः॑ । मृ॒ळन्तु॑ । वा॒युः ।
ऋ॒भु॒क्षाः । वाजः॑ । दैव्यः॑ । वि॒ऽधा॒ता । प॒र्जन्या॒वाता॑ । पि॒प्य॒ता॒म् । इष॑म् । नः॒ ॥ १२ ॥

स्कन्द० रुद्रादयोऽत्र [11]स्तूयन्ते। यच्छब्दात् सजोषा मीळ्हुष्मन्त[11] इत्येतत्सम्बन्धी यच्छब्दोऽध्याहार्यः। सजोषाः [12]सहप्रीतयश्च ये मीळ्हुष्मन्तः[12] धनवन्तश्च ते नः अस्मान् रुद्रः सरस्वती विष्णुः

1-1. नास्ति मूको. 2. वा अन्नतः मूको. 3. नृपतः मूको. 4. प्रसन्नप्रभू° मूको. 5. यदाऽसु° मूको. 6. नास्ति मूको. 7-7. पार्थिवभवाः मूको. 8. प्रभृति मूको. 9-9. "पृथ्यन्तरि° स्कं; मूको. °व्यान्तरि° स्कं; °व्यान्तरिक्षनामतो वि°. 10. अप्सु मूको. 11-11. यच्छब्दात्सजोषमीळ्हुष्मन्त मूको. 12-12. सहप्रीत्याश्च यः समीळ्हुष° मूको.

इत्येते मृळन्तु सुखयन्तु । वायुः च । 'ऋभुक्षाः' ( निघ ३,३ ) इति महन्नाम । महान्' वाजः च सुधन्वनः पुत्रः[1] दैव्यः विधाता च पर्जन्यावाता च पिप्यताम् इषम् नः स्फायी ओप्यायी वृद्धौ । वर्धयन्तु च अन्नम् अस्माकम् ॥ १२ ॥

वेङ्कट० ते अस्मान् रुद्रः सरस्वती च सजुषाः सेचनवन्तः विष्णुः सुखयन्तु, वायुः च । तथा ऋभुर्विभ्वा च वाजः च "सौधन्वनाः, दैव्यः" विधाता चन्द्रमाः, पर्जन्यवातौ च वर्धयन्तु अस्माकम् अन्नम् ॥ १२ ॥

उत स्य देवः सविता भगो नोऽपां नपादवतु दानु पप्रिः ।
त्वष्टा देवेभिर्जनिभिः सजोषा द्यौर्देवेभिः पृथिवी समुद्रैः ॥ १३ ॥

उत । स्यः । देवः । सविता । भगः । नः । अपाम् । नपात् । अवतु । दानु । पप्रिः ।
त्वष्टा । देवेभिः । जनिऽभिः । सऽजोषाः । द्यौः । देवेभिः । पृथिवी । समुद्रैः ॥ १३ ॥

स्कन्द० सवित्रादयोऽत्र स्तूयन्ते । उत अपि स्यः सः देवः सविता भगः च नः अस्मान् अपाम् नपात् च अवतु पालयतु । अग्निरपां "नपादुच्यते । अद्भ्य ओषधिवनस्पतयो[3] जायन्ते, ओषधिवनस्पतिभ्य एष जायत इति । कीदृशः । उच्यते । दानु दानम् पप्रिः पृ पालन-पूरणयोः । साधु पालयिता अपरित्यक्ता । साधु दानानां सर्वदा दातेत्यर्थः । त्वष्टा च देवेभि। देवैः सह "जनिभिः तत्पत्नीभिश्च सह सजोषाः समीति.", द्यौः च देवैः सह, पृथिवी च समुद्रैः ॥ १३ ॥

वेङ्कट० अपि च देवः सविता भगः च अस्मान् अपाम् नपात् च रक्षतु, दाता पूरयिता त्वष्टा देवैः देवपत्नीभिश्च सङ्गतः, द्यौः च देवैः, पृथिवी च समुद्रैः सहधिभि. ॥ १३ ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः ।
विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥ १४ ॥

उत । नः । अहिः । बुध्न्यः । शृणोतु । अजः । एकऽपात् । पृथिवी । समुद्रः ।
विश्वे । देवाः । ऋतऽवृधः । हुवानाः । स्तुताः । मन्त्राः । कविऽशस्ताः । अवन्तु ॥ १४ ॥

स्कन्द० अहिर्बुध्न्यादयोऽत्र स्तूयन्ते । उत अपि नः अस्माकम् अहिः बुध्न्यः बुध्नम् अन्तरिक्षम्, तस्मिन् भवः शृणोतु । किम् । आह्वानम् । कुत एतत् । हुवानाः इति "परस्माद्वचनाद् आह्वानस्य प्रकृतत्वात्"[4] । न च केवलोऽहिर्बुध्न्यः[5] । किं तर्हि । अजः च एकपात्, एकः पादो यस्य स एकपात् । पृथिवी च समुद्रः च विश्वे देवाः ऋतावृधः सत्यस्य यज्ञस्य वर्धकस्य वा वर्धयितारः हुवानाः आहूयमानाः । श्रुत्वा चाह्वानमागताः सन्तः स्तुताः अस्माभिः

1. पा मूको. २-२. सौदेन्वा वि॰ रूपं; सौदेन्वाः रुः असौ देवः रु प्रस्तावः. ३-३. "ते ··· तयो मूको. ४-४. अ··· मूको. ५-५. वचना ··· त्वात् मूको. ६. "ोऽहिः मूको.

मन्त्राः प्रथमा तृतीयार्थे। मन्त्रैः। कविशस्ताः मन्त्रैरपि मेधाविभिर्नित्यं स्तुताः अवन्तु पालयन्तु ॥१४॥

वेङ्कट० अपि च अस्माकम् स्तुतीः अहिर्बुध्न्यः शृणोतु, तथा 'एकपात्' अजः पृथिवी समुद्रः च। विश्वे च देवाः सत्यस्य वर्धयितारः हूयमानाः स्तुताः मन्त्रैः पूजिताः कविभिः शस्ताः रक्षन्तु ॥ १४ ॥

एवा नपातो मम तस्य धीभिर्भरद्वाजा अभ्यर्चन्त्यर्कैः ।
ग्ना हुतासो वसवोऽधृष्टा विश्वे स्तुतासो भूता यजत्राः ॥ १५ ॥

एव । नपातः । मम । तस्य । धीभिः । भरत्ऽवाजाः । अभि । अर्चन्ति । अर्कैः ।
ग्नाः । हुतासः । वसवः । अधृष्टाः । विश्वे । स्तुतासः । भूत । यजत्राः ॥ १५ ॥

स्कन्द० एवमन्यापि अहिर्बुध्न्यादयः स्तूयन्ते, सर्वे वा देवाः। एव एवमुक्तेन प्रकारेण नपातः पौत्राः मम तस्य तच्छब्दाद् योग्यार्थसम्बन्धो 'यच्छब्दोऽध्याहार्यः। योऽहं युष्मान् अस्ताविषम्'[2] तस्य मम धीभिः स्वाभिः प्रज्ञाभिः भरद्वाजाः भरद्वाजस्याऽपत्यजाताः अभि अर्चन्ति अभिष्टुवन्ति अर्कैः मन्त्रैः। न च केवलाः पौत्रा एव। किं तर्हि। 'ग्नाः स्त्रियोऽपि'[3] मम। सर्वसम्बन्धयुपेतोऽहं 'स्त्रीभिरित्यर्थः'। एतत् ज्ञात्वा हुतासः हूयतेरेतत्[4]। 'सम्प्रसारणस्य ह्रस्वत्वम्। आहूताः सन्तः वसवः। प्रत्यक्षकृतोऽयं मन्त्रः, न च वसव-इत्यादीन्यामन्त्रितानि, -अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेयानि। ये यूयं वसवः प्रशस्याः धनवन्तो वा अधृष्टाः अनभिभूताश्च केनचित् विश्वे सर्वे स्तुतासः भूत सम्यक् स्तुता भवत। अस्मत्स्तुत्या परितुष्यतेत्यर्थः। हे यजत्राः! -यष्टव्याः!। प्रकृते अहिर्बुध्न्यादयः बहुवचननिर्देशाद्वा सर्वे देवाः ॥ १५ ॥

वेङ्कट० एवम् तस्य मम पुत्राः कर्मभिः भरद्वाजकुलजाः मन्त्रैश्च[5] देवान् अभि अर्चन्ति। ग्नाः देवपत्न्यः हुताः वसवः च शत्रुभिरनाधृष्टाः विश्वे च देवाः स्तुताः भवत हे यष्टव्याः! इति ॥ १५ ॥

'इति चतुर्थाष्टके अष्टमाध्याये दशमो वर्गः'[6] ॥

[ ५१ ]

'ऋजिश्वा भारद्वाज ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः, त्रयोदश्याद्यास्तिस्र उष्णिहः, षोडश्यनुष्टुप्'।

उदु त्यच्चक्षुर्महि मित्रयोराँ एति प्रियं वरुणयोरदब्धम् ।
ऋतस्य शुचि दर्शतमनीकं रुक्मो न दिव उदिता व्यद्यौत् ॥ १ ॥

उत् । ऊँ इति । त्यत् । चक्षुः । महि । मित्रयोः । आ । एति । प्रियम् । वरुणयोः । अदब्धम् ।
ऋतस्य । शुचि । दर्शतम् । अनीकम् । रुक्मः । न । दिवः । उत्ऽइता । वि । अद्यौत् ॥ १ ॥

स्कन्द० 'उद् आ एति' ऊर्ध्वम् आगच्छति। उदेतीत्यर्थः। मित्रयोः प्रियम् वरुणयोः असमासेऽपि मित्रावरुणयोः। पारस्परसहयोगापेक्षम् अत्र द्विवचनम्। मित्रस्य प्रियं वरुणस्य चेत्यर्थः। महदर्थं चाथ

१. एकपादात् मूको.   २-२. 'ब्वाहा ... ... युष्मानस्तो युविषम् मूको.   ३-३. ग्नाः स्त्रियोऽपि मूको.
४. हयतेरेतत् मूको.   ५. देवै° इन्वं.   ६-६. नास्ति मूको.

मित्रवरुणग्रहणम्। देवानां मनुष्याणाम् अन्येषां च भूतानां प्रियमित्यर्थः। अदब्धम् अहिंसितं केनचित् ऋतस्य आदित्यस्य। आदित्यस्य प्रभा हि तथा उच्यते। शुचि शुद्धम् दर्शतम् दर्शनीयम् अनीकम् समूहः। कस्य। सामर्थ्याद् ज्योतिषः। ज्योतिःसमूहरूपमित्यर्थः। उद्गच्छ च रुक्मः न दिवः [1]यथा दिवः सम्बन्धी रुक्मः रोचनात् दीप्तः[1] आदित्यः उदिता उदितौ उदयकाले [2]एव वि[2] अधोत् विद्योतत एव। न-सम्बन्धाद् ऋतस्य रुक्ममिति व्यपदेशाद् आदित्यस्य चोपमानत्वेनोपादानाद् इयमृगुपस्ता[3] ॥ १ ॥

वेङ्कट० आभिमुख्येन उत् एति तदिदम् महत् मित्रावरुणयोः[4] चक्षुः उपभाष्यम् प्रियम् अहिंसितम् रक्षोभिः[5] आदित्यस्य शुचि दर्शनीयम् रश्मीनाम् अनीकम्। तदिदम्[6] दिवः रुक्मः इव उदये वि द्योतते ॥ १ ॥

वेद् यस्त्रीणि विदथान्येषां देवानां जन्म सनुतरा च विप्रः ।
ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् ॥ २ ॥

वेद॑ । यः । त्रीणि॑ । विदथा॑नि । एषाम् । देवाना॑म् । जन्म॑ । सनुतः । आ । च । विप्रः॑ ।
ऋजु । मर्ते॑षु । वृजिना । च । पश्य॑न् । अभि । चष्टे । सूरः॑ । अर्यः॑ । एवा॑न् ॥ २ ॥

स्कन्द० सूर्योऽत्र [7]स्तूयते। त्रीणि विदथानि वेद यः। विदथ[7] इति यज्ञनाम। [illegible] च तदवयवभूतेषु सवनेषु वर्तते। यज्ञावयवभूतानि प्रातस्सवनमाध्यन्दिनसवनतृतीयसवनानि। न च केवलानि तानि[8]। किं तर्हि। एषाम् देवानाम् जन्म [9]सनुतः आ च एषामिति चानुदात्तत्वात्[9] सवनानां [10]प्रतीतिः। का इत्येषोऽपीत्येतस्य[10] स्थाने। च-शब्दो देवानामित्यस्मात्परो द्रष्टव्यः। यत्रैषां सवनानां देवानां च जन्म अन्तर्हितमपि वेदेत्यर्थः। विप्रः मेधावी। यच्छब्दात् तच्छब्दोऽध्याहार्यः। ऋजु यत् न्यायपथानपेतम्[11] [12]वैदिकं यद् ऋजु धर्म्यम् मर्तेषु[12] मनुष्येषु वृजिना च वृजिनानि पापानि च पश्यन्। कृताकृतानि मनुष्याणां प्रत्यवेक्षमाण इत्यर्थः। अभि चष्टे अभिपश्यति सूरः सूर्यः अर्यः ईश्वरः एवान् कामान्। कृताकृतानि मनुष्याणां [13]प्रत्यवेक्षमाणः सूर्यः[13] यः स्तोता यदा यदपि कामयते तदपि जानातीत्यर्थः ॥ २ ॥

वेङ्कट० जानाति यः त्रीणि स्थानानि देवानाम् तेषाम् जन्म च अन्तर्हितम् मेधावी, स मनुष्येषु ऋजूनि[14] कुटिलानि[15] च कर्माणि पश्यन् अभि पश्यति ईश्वरः सूर्यः गच्छतो मनुष्यान् ॥ २ ॥

स्तुष उ वो मह ऋतस्य गोपानदितिं मित्रं वरुणं सुजातान् ।
अर्यमणं भगमदब्धधीतीनच्छा वोचे सधन्यः पावकान् ॥ ३ ॥

---

१-१. यथाऽग्निर यथाग्निव सम्बन्धी ⋯ क्मः रोचनादीप्तः मूको. २-२. एवं हि मूको. ३. °गुपस्य मूको. ४. °नः मूको. ५. रक्षोभिः मूको. ६. तदि मूको. ७-७. स्तूयते ⋯ ⋯ विदथ मूको. ८. तानि मूको. ९-९. सनुतरा चैव चानुदात्तत्वात् मूको. १०-१०. प्रतीतिः ⋯ इत्येषापीत्येतस्य मूको. ११. °पथानपेतं मूको. १२-१२. वैदिकं ⋯ यद्धर्म ⋯ मर्त्येषु मूको. १३-१३. °वेक्षमाणः इत्यर्थः सूर्यः मूको. १४. ऋजु° मूको. १५. कुटि° मूको.

स्तुषे। ऊँ इति । वः । मुहः । ऋतस्य । गोपान् । अदितिम् । मित्रम् । वरुणम् । सुऽजातान् ।
अर्यमणम् । भगम् । अदब्धऽधीतीन् । अच्छ । वोचे । सऽधन्यः । पावकान् ॥ ३ ॥

स्कन्द० अदित्यादयोऽत्र[1] स्तूयन्ते । स्तुषे व्यत्ययेनात्र मध्यमः । स्तौमि । उ इति पदपूरणः । वः युष्मान् महः महतः ऋतस्य [2]यज्ञस्य उदकस्य[2] वा गोपान् । कतमान् । अदितिम् मित्रम् वरुणम् च सुजातान् । [3]जननं जातम्[3], शोभनं जातं येषां ते सुजाताः तान् सुजातान् । सुजन्मन इत्यर्थः । न चादित्यादीनेव[4] केवलान् । किं तर्हि । अर्यमणम् च भगम् च अदब्धधीतीन् अनुपहिंसितकर्मणः । स्तुत्वा च अच्छ वोचे अभिब्रवीमि इदमिदं च क्रियतां मम [5]इति । सधन्यः[5] धनं हविर्लक्षणम् अत्राभिप्रेतम् । सह धनेन सधनः [6]सहविः, सधन[6] एव सधन्यः । [7]स्वार्थिको यत् । सहविष्कः[7] सन् । यजमानइत्यर्थः । पावकान् पावकान्[8] पावयितॄन् वा मनुष्याणाम् ॥ ३ ॥

वेङ्कट० स्तौमि[9] एव युष्मान् महतः यज्ञस्य गोपायितॄन् अदित्यादीन् सुजननान्[10] । अहिंसित-कर्मणः अर्यमप्रभृतींश्च अभिष्टौमि सधनान् शोधकान्[11] ॥ ३ ॥

रिशादसः सत्पतीँरदब्धान् महो राज्ञः सुवसनस्य दातॄन् ।
यूनः सुक्षत्रान् क्षयतो दिवो नॄनादित्यान् याम्यदितिं दुवोयु ॥ ४ ॥

रिशादसः । सत्ऽपतीन् । अदब्धान् । महः । राज्ञः । सुऽवसनस्य । दातॄन् ।
यूनः । सुऽक्षत्रान् । क्षयतः । दिवः । नॄन् । आदित्यान् । यामि । अदितिम् । दुवःऽयु ॥ ४ ॥

स्कन्द० आदित्या अदितिश्चात्र स्तूयन्ते । रिशादसः[12] रिशतान् असितॄन् । हिंसता[13] क्षेप्तॄनित्यर्थः । सत्पतीन् सतां पालयितॄन् अदब्धान्[14] अनुपहिंसितान् महः महतः राज्ञः दीप्तान् सुवसनस्य शोभनमुष्यते[15] यस्मिन् गृहे तत्सुवसनं तस्य शोभनस्य वसनस्य वा दातॄन् यूनः तरुणान् सुक्षत्रान् सुधनान् सुयशान्[16] वा क्षयतः गच्छतः दिवः मिश्रयितॄन् वा स्वस्वतेजसा सर्वस्य, [16]सुक्षत्रान् सुधनान् सुयशान्[16] वा क्षयतः गच्छतः दिवः मिश्रयितॄन् वा स्वस्वतेजसा सर्वस्य, यदभिप्रेतम् । न च केवलान् । किं द्युलोकात् नॄन् मनुष्यान् प्रति आदित्यान् यामि याचे यदभिप्रेतम् । न च केवलान् । किं तर्हि । अदितिम् च दुवोयु व्यत्ययेनात्र नपुंसकता । दुवोयुम् परिचर्याकामाम् ॥ ४ ॥

वेङ्कट० रिशतान् असितॄन् सत्पतीन् अहिंसितान्[17] महतः राज्ञः शोभननिवासस्य गृहस्य दातॄन् यूनः सुधनान् सदा गच्छतः द्युलोकस्य नेतॄन् आदित्यान् याचे, अदितिम् च परिचर्यामिच्छन्तीम् ॥ ४ ॥

द्यौ३ष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृळता नः ।
विश्व आदित्या अदिते सजोषा अस्मभ्यं शर्म बहुलं वि यन्त ॥ ५ ॥

---

१. आदित्या मूको. २-२. यज्ञस्य ... दकस्य मूको. ३-३. जननञ्जातं मूको. ४. न चा दीनेव मूको. ५-५. इ सधन्यः मूको. ६-६. सहवः सध मूको. ७-७. स्वार्थिको यत्सविष्णुः मूको. ८. पावकान् मूको. ९. स्तौम् ल दर्भ १०. जेन° मूको. ११. शोर° ल दर्भ, शोम° वि'. १२. नास्ति वि'; नास्ति अ. १३-१३. हिंते सतां क्षेप्तुनित्यर्थः मूको. १४. अरब्धान् मूको. १५. °नमिष्यते मूको. १६-१६. सु ... सुय° मूको. १७. अहिंतान् वि' ल; अहिंसा दर्भ.

द्यौः[१] । पितरिति । पृथिवि । मातः । अध्रुक् । अग्ने । भ्रातः । वसवः । मृळत । नः ।
विश्वे । आदित्याः । अदिते । सऽजोषाः । अस्मभ्यम् । शर्म । बहुलम् । वि । यन्त ॥ ५ ॥

स्कन्द० 'द्यवादयोऽत्र स्तूयन्ते । विवाहकाले[२] 'द्यौरहं पृथिवी त्वम्' (अ १४,२,७१) इति वरे वध्वां च द्युत्वपृथिवीत्वाध्यारोपात् सर्वमनुष्याणां वधूवरमातापितृकत्वात् तद्धर्मेण पितृत्वेन दिवं मातृत्वेन पृथिवीं सम्बोधयति — हे द्यौः ! पितः !' हे पृथिवि मातः ! [३]अध्रुक् ! अद्रोग्धः ! हे अग्ने ! भ्रातः ! हे वसवः ![३] सर्वे [४]'यूयम् मृळत सुखयत' नः[४] अस्मान् । यूयमपि च विश्वे सर्वे हे आदित्याः ! एवम् अपि हे अदिते ! सजोषाः सम्प्रीयमाणाः अस्मभ्यम् शर्म सुखम् बहुलम् बहुलम् । अथवा 'शर्म' (निघ ३,४) इति गृहनाम । [५]'बहुलमिति' विस्तृतं बहुधनयुक्तं वा[५] । बहुलं गृहं बहुभिरभिप्रेतैर्युक्तमित्यर्थः । वि यन्त विविधं दत्त ॥ ५ ॥

वेङ्कट० हे पृषभूतय ![६] सुखयत अस्मान् । सुखं च अस्मभ्यम् बहुलम् विविधम् यच्छत । द्यौः पिता पृथिवी माता । सा न कस्मैचिद्[७] द्रुह्यति ॥ ५ ॥

[८]इति चतुर्थाष्टके अष्टमाध्याये एकादशो वर्गः[८] ॥

मा नो वृकाय वृक्ये समस्मा अघायते रीरधता यजत्राः ।
यूयं हि ष्ठा रथ्यो नस्तनूनां यूयं दक्षस्य वचसो बभूव ॥ ६ ॥

मा । नः । वृकाय । वृक्ये । समस्मै । अघऽयते । रीरधत । यजत्राः ।
यूयम् । हि । स्थ । रथ्यः । नः । तनूनाम् । यूयम् । दक्षस्य । वचसः । बभूव ॥ ६ ॥

स्कन्द० [९]द्वयोरनयोर्नैरपोर्देवताः स्तूयन्ते विश्वे वा देवाः । मा नः अस्मान्[९] वृकाय वृक्यै वृको नाम हिंस्रः प्राणिविशेषः तस्मै तत्स्त्रियै च समस्मै सर्वस्मै अघायते पापमिच्छते । जिघांसते[१०] इत्यर्थः । रीरधत रध्यतिर्वशगमने । वशं नैष्ट हे यजनाः ! यष्टव्याः ! वसवः ! विश्वे वा देवाः ! । [११]कुरु एतत्[११] । परस्पम् ऋध्युपादानात् । यावान् कश्चिद् अस्मान् [१२]जिघांसति तस्य सर्वस्य यथा वशे न भवाम तथा कुरुतेत्यर्थः[१२] । कस्मात् । उच्यते — यूयम् [१३]हि स्थ हि-शब्दो यस्मादर्थे[१३] । यस्माद् यूयं स्थ नित्यं [१४]भवथ रथ्यः[१४] नः तनूनाम् । रथीशब्दः सारथिवचनः । इह तु प्रेरकत्वसामान्यात् प्रणेतरि प्रयुक्तः । प्रणेतारोऽस्माकं [१५]शरीराणां भवथ । स्थिवासेतु[१५] प्रेरकत्वेनास्माकमुपरि सानुग्रहाः स्थेत्यर्थः । यस्माच्च यूयम् दक्षस्य वचसः बभूव । दक्षशब्द उत्साहवचन । दक्षस्य वचस इति कर्मणीयं षष्ठी 'कर्तृकर्मणोः कृति' (पा २,३,६५) इति । तच्छ्रवणसामर्थ्यादेव च योग्यस्य पदस्य श्रोतार इत्येतस्याध्याहारः । बभूवेत्यपि लडर्थे लिट् 'छन्दसि[१६] लुङ्लङ्लिटः'

---

१. तु° वैप १,१५,८४ g. २-२. यास्यो … काले मूको. ३-३. अद्रोग्धी … हे वसवः मूको. ४-४. यूयं … नः मूको. ५-५ बहुलमिति … बहुलं मूको. ६. पृषद्° स्व एर्प.° ७. °च वि° ८-८. नास्ति मूको. ९-९. विश्वे … स्मे अघायते मूको. १०. जिघांसत इत्यर्थः मूको. ११-११. एकत पतत् मूको. १२-१२. जिघांसति सर्वस्य यथा … तेत्यर्थः मूको. १३-१३. नित्य नित्य शब्दो यस्मा° मूको. १४-१४. भव रथ्यो मूको. १५-१५. शरीराणां … …तेषु मूको. १६. छेतस्यन्दसि° मूको.

( पा ३,४,६ ) इति । मध्यमपुरुषबहुवचनम् । न चेदं प्रथमपुरुषैकवचनम् । यस्मादुरसाद्कर-स्यास्मदीयस्य स्तुतिलक्षणस्य वचसः श्रोतारो भवथ, [1]तस्मात् च[1] वयमुरसाह्करेण वचसा युष्मान् स्तुम इत्यर्थः ॥ ६ ॥

वेङ्कट० मा अस्मान् वृकाय वृक्यै[2] च सर्वस्मै च अघमिच्छते वशं समयत[3] हे यष्टव्याः! । यूयम् हि भवथ नेतारः अस्माकम् भद्राणाम् । यूयम्[4] प्रवृद्धस्य वचसः भाजनम् भवथ ॥ ६ ॥

मा व॒ एनो॑ अ॒न्यकृ॑तं भुजेम॒ मा तत् कर्म वसवो॒ यच्चय॑ध्वे ।
विश्व॑स्य॒ हि क्षय॑थ विश्वदेवाः स्व॒यं रि॒पुस्त॒न्वं॑ रीरिषीष्ट ॥ ७ ॥

मा । वः॒ । एनः॑ । अ॒न्यऽकृ॑तम् । भु॒जे॒म॒ । मा । तत् । कर्म॑ । व॒स॒वः॒ । यत् । चय॑ध्वे ।
विश्व॑स्य । हि । क्षय॑थ । वि॒श्व॒ऽदे॒वाः॒ । स्व॒यम् । रि॒पुः । त॒न्व॑म् । रि॒रि॒षी॒ष्ट॒ ॥ ७ ॥

स्कन्द० मा वः इति षष्ठीनिर्देशात् प्रसादेनेति वाक्यशेषः । युष्माकं प्रसादेन एनः पापम् अन्यकृतम् अन्येन कृतम् भुजेम । कथं पुनरन्यकृतं पापमन्यो भजते । त्रिषष्ठस्मरणात् । 'न चैवात्मनि पुत्रेषु न चेत् पुत्रेषु नप्तृषु । पापमाचरितं कर्म त्रिषमं नातिवर्तते' ( द्र० मनुस्मृ ४,१७३ ) । 'अथवा वः इति कर्मप्रवचनीययोगलक्षणा द्वितीया । तत्प्रकृतिसामर्थ्यादेव कर्मप्रवचनीयप्रतिशब्दाध्याहारः । एनः इत्यपि अपराध उच्यते । मा युष्मान् प्रति अन्यकृतमपराधं भजेम । अन्यकृतेनापराधेन यूयं माऽस्मान् परित्यजथेत्यर्थः । । स्वयमपि च वयम् मा तत् कर्म कुर्याम हे वसवः!, 'यत् चयध्वे[5] चयतिरिति तृतीयार्थे द्वितीया । चयतिरपि[6] सामर्थ्यात् त्यागार्थः । येन यूयमस्मान् परित्यजथ । अथवा 'यो वै भागिनं भागान्नुदते । चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं[7] चयते त्वेवैनम्' ( ऐब्रा २,७ ) इति श्रुतेरत्रानुकम्पार्थः । येनास्मान् नानुकम्प्यान् कुरुथ । आपरप्राप्त्या-नुकम्पा इति अनुकम्पयाऽऽप्तापरप्राप्तिः लक्ष्यते[8] । येनाऽऽपदः प्राप्नुयामेत्यर्थः । अथवा 'अय पय मय चय तय णय गतौ' इत्यपगत्यर्थो[9] द्रष्टव्यः । 'यतोऽपगच्छथ अस्मात् न पश्यथेति[9] । विश्वस्य हि क्षयथ क्षयतेरैश्वर्यकर्मणः[10] ( द्र. निघ २,२१ ) इदं रूपम् । यस्मात्सर्वस्य ईशिध्वे । हे विश्वदेवाः! देवशब्दोऽत्र दीव्यतेः स्तुत्यर्थस्य स्तुत्यवचनः । सर्वे स्तुत्याः! । अथवा विश्वे देवाः [11]अत्र देवताः । वसव इति यत् तत्[11] प्रकाशवचनम् धनवाचि यागत्वादिमत्त्वं तेषां विशेषणम् । प्रशस्ता धनवन्तो[12] या विश्वे देवा इति । यस्मादिति वचनात् तस्मादित्यध्याहार्यम् । तस्माद्युष्मत्प्रसादेन[13] स्वयम् रिपुः अस्मच्छत्रुः तन्वम् आत्मीयं शरीरम् रीरिषीष्ट हिंस्यात् ॥ ७ ॥

वेङ्कट० मा युष्माकम् अन्यैः कृतम्[14] पापम् वयमपि बहुल भुजेम अनुपालयेम । तदेवाह— मा तत्[15] कुर्मो वयम् हे वसवः! यत् यूयम् चयध्वे । चयतिर्हिंसाकर्मा । विश्वस्य हि यूयम् ईश्वरा भवथ हे विश्वदेवाः!, तथा सति स्वयम्[16] मदीयः रिपुः शरीरमात्मीयम् विनाशयतु ॥ ७ ॥

१-१. यथा च मूको. २. वृक्ये वि[1] अर्प. ३. नमन क प्रस्तावः. ४. तथा सति यूय वि[1]. ५-५. स चयध्वे मूको. ६. चतिरपि मूको. ७. स्वपुत्रो मूको. ८-८. चयतपवशनपते ... शयधो मूको. ९-९. 'वगच्छथा न पश्यथे' मूको. १०. श्रीकौ[0] मूको. ११-११. देवताः ...... तत् मूको. १२. धावन्तो मूको. १३. तस्मात्स्वंमस्य[0] मूको. १४. नास्ति वि[1] अर्प. १५. वः वि[1]; न स अर्प. १६. सोयम् मूको.

नम॒ इदु॒ग्रं नम॒ आ वि॑वासे॒ नमो॑ दाधार पृथि॒वीमु॒त द्याम् ।
नमो॑ दे॒वेभ्यो॒ नम॑ ईश एषां कृ॒तं चि॒देनो॒ नम॒सा वि॑वासे ॥ ८ ॥

नम॑ः । इत् । उ॒ग्रम् । नम॑ः । आ । वि॒वा॒से॒ । नम॑ः । दा॒धा॒र॒ । पृ॒थि॒वीम् । उ॒त । द्याम् ।
नम॑ः । दे॒वेभ्य॑ः । नम॑ः । ई॒शे॒ । ए॒षाम् । कृ॒तम् । चि॒त् । एन॑ः । नम॑सा । आ । वि॒वा॒से॒ ॥८॥

स्कन्द० अन्नमत्र स्तूयते । 'नमः' ( निघ २,७ ) इत्यन्ननाम । इत् इति पदपूरणः । नमः अन्नम् उग्रम् यो भारयितव्यस्तस्योपरिकृतम् । नमः आ विवासे विवासतीति परिचरणकर्मा ( द्र. निघ ३,५ ) आशंसायां[1] वा । अन्नं परिचारयामि अन्नमाशंसे वा । नमः दाधार पृथिवीम् उत द्याम् । नमः देवेभ्यः तादर्थ्ये एषा चतुर्थी । 'हविर्लक्षणमन्नं यस्मात् देवार्थमेव' । न च तदर्थमेव केवलम् । किं तर्हि । नमः ईशे ईष्टे एषाम् देवानाम् । 'कृतम् चित् एनः[1] कृतमपि पापमात्मनः 'नमसा अन्नेन आ विवासे विवासतिरिह[1] सामर्थ्यान्नाशनार्थः । नाशयामि ॥ ८ ॥

वेङ्कट० अन्नम् एव उद्गूर्णम् । अहं[1] च अन्नमेव परिचरामि । नमः दाधार पृथिवीम् अपि च द्याम्[1] । नमः एव देवेभ्यः दीयते । नमः एव सर्वेषाम् ईष्टे । तेनान्नेन नमसा कृतम् चित् एनः अहं परिचरामि । न निन्दामीति स्तुतिरन्नस्य ॥ ८ ॥

ऋ॒तस्य॑ वो र॒थ्य॑ः पू॒तद॑क्षानृ॒तस्य॑ पस्त्य॒सदो॒ अद॑ब्धान् ।
ताँ आ नमो॑भिरुरु॒चक्ष॑सो॒ नॄन् विश्वा॑न् व॒ आ न॑मे म॒हो य॑जत्राः ॥ ९ ॥

ऋ॒तस्य॑ । वः॒ । र॒थ्य॑ः । पू॒तऽद॑क्षान् । ऋ॒तस्य॑ । प॒स्त्य॒ऽसद॑ः । अद॑ब्धान् ।
तान् । आ । नम॑ःऽभिः । उ॒रु॒ऽचक्ष॑सः । नॄन् । विश्वा॑न् । व॒ः । आ । न॒मे॒ । म॒हः । य॒ज॒त्राः॒ ॥ ९ ॥

स्कन्द० यस्मादयमो द्यावापृथिव्योः[7] स्तूयन्ते । ऋतस्य यज्ञस्य वः युष्माकं स्वभूतस्य रथ्यः । रथीशब्दः[8] सारथिवचन । इह तु 'प्रेरकत्वसामान्यात् प्रेरयितृवचनः । प्रेरकान् । पूतदक्षान्[9] शुद्धबलान् ऋतस्य पस्त्यसदः पस्त्यमिति गृहनाम । यज्ञस्य सम्बन्धिषु गृहेषु सदोहविर्धानादिषु सन्तुन् अदब्धान्[10] अनुपहिंसितान् । तान् इति [11]तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । ये एवंविधास्तान् । आकारस्तु पदपूरणः[11] । नमोभिः नमस्कारैः । उरुचक्षसः विस्तीर्णदर्शनान् बहुदर्शनान् वा नृन् मनुष्याकारान् विश्वान् वः[12] युष्मान् च आ नमे महः महतो हे [13]यजत्राः । यष्टव्याः[13] । अथवाऽऽकारस्योपसर्गस्य द्विश्रुतेरेकामध्यस्य[14] ये युष्मदीयस्य यज्ञस्य[15] प्रणेतारो यजमानाः ये यज्ञगृहसादिनः ऋत्विजः तान् नरान् ॥ ९ ॥

---

१. रोदसावा मूको. २-२. मत्वं ··· दवार्थं मूको. ३-३. अन्यैरेवं मूको. ४-४. नमसा ··· विवासति मूको. ५. अथम् वि° कपं. ६. द्याम् मूको. ७. °योस्तयोः मूको. ८. रश्मिशब्दः मूको. ९-९. °मान्याद् ··· उत दक्षान् मूको. १०. अदब्धान् मूको. ११-११. °च्छेदम् ··· रस्तु पदपू° मूको. १२. वा मूको. १३-१३. यजत्रा ······ भूतो मूको. १४. °श्रुतेरावार° मूको. १५. मत्यंस मूको.

वेङ्कट० यजस्य[1] वः दक्षेतॄन्[2] शुद्धबलान् यजस्य[3] गृहेषु सीदतः अहिंसितान् तान् वः हविर्भिः व्याप्तदर्शनान् नेतॄन् सर्वान् परिचरामि महतः हे मरुत्याः! ॥ ९ ॥

ते हि श्रेष्ठवर्चसस्त उ नस्तिरो विश्वानि दुरिता नयन्ति ।
सुक्षत्रासो वरुणो मित्रो अग्निर्ऋतधीतयो वक्मराजसत्याः ॥ १० ॥

ते । हि । श्रेष्ठऽवर्चसः । ते । ऊँ इति । नः । तिरः । विश्वानि । दुःऽइता । नयन्ति ।
सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः । ऋतऽधीतयः । वक्मराजऽसत्याः ॥ १० ॥

स्कन्द० हि-शब्दः पदपूरणः । ते प्रकृताः श्रेष्ठवर्चसः वर्चोऽन्नं दीप्तिर्वा । प्रशस्यतमान्नाः[4] प्रशस्यतमदीप्तयो वा । ते उ नः उकारोऽत्र एवार्थे । [5]त एव अस्माकम् विश्वानि दुरिता तिरः[5] नयन्ति 'तिर इत्यन्तर्धौ'[6] । अन्तर्धानं नयन्ति । अपनयन्तीत्यर्थः । सुक्षत्रासः सुबलाः सुधनाः वा वरुणः मित्रः अग्निः इत्येते [7]ऋतधीतयः सत्यप्रज्ञाः[7] सत्यकर्माणो वा वक्मराजसत्याः वक्म वचनं [8]स्तुतिः तस्या राजा ईशानः स्तोता स सत्यः[8] अविसंवादी येषां ते वक्मराजसत्याः । स्तोतृभिः सदा स्तुता इत्यर्थः ॥ १० ॥

वेङ्कट० ते खलु श्रेष्ठदीप्तयः ते एव अस्माकम्[9] विश्वानि दुरितानि तिरः नयन्ति सुबलाः वरुणः मित्रः अग्निः सत्यकर्माणः वचनेन[10] ये राजन्ते ते स्तोतारो वक्मराजानस्ते[11] सत्या येषु [12]ते तथोक्ता इति ॥ १० ॥

[13]इति चतुर्थाष्टके अष्टमाध्याये द्वादशो वर्गः[13] ॥

ते नु इन्द्रः पृथिवी क्षाम वर्धन् पूषा भगो अदितिः पञ्च जनाः ।
सुशर्माणः स्ववसः सुनीथा भवन्तु नः सुत्रात्रासः सुगोपाः ॥ ११ ॥

ते । नः । इन्द्रः । पृथिवी । क्षाम । वर्धन् । पूषा । भगः । अदितिः । पञ्च । जनाः ।
सुऽशर्माणः । सुऽअवसः । सुऽनीथाः । भवन्तु । नः । सुऽत्रात्रासः । सुऽगोपाः ॥ ११ ॥

स्कन्द० इन्द्रादयो द्वयोरनयोरत्र स्तूयन्ते । ते नः अस्मान् इन्द्रः पृथिवी अन्तरिक्षमित्येतत् (निघ १,३) । अन्तरिक्षम् क्षाम पृथिवी वर्धन् वर्धयन्तु । पूषा भगः अदितिः पञ्च जनाः । उच्यन्ते— सुशर्माणः चत्वारो वर्णाः पञ्चजना उच्यन्ते । कीदृशाः । उच्यन्ते— सुशर्माणः स्वच्छन्द-निपादपञ्चमाः चत्वारो वर्णाः पञ्चजना उच्यन्ते । कीदृशाः । सुशर्माणः सुसुखाः स्ववसः शोभनवाससः सुनीथाः प्रशस्याः । श्रुतेर्यच्छन्दोऽध्याहर्तव्यः । ये सुशर्माणः सुसुखाः स्ववसः शोभनवाससः सुनीथाः प्रशस्याः । किञ्च भवन्तु नः अस्माकम् सुत्रात्रासः सुष्ठु त्रातारः सुगोपाः सुष्ठु च गोप्तारः गोपायितारः । भयघातो गोपायनम् । [14]एतेन सुत्रात्रास[14] [15]इत्यनेन न पौनरुक्त्यम्[15] ॥ ११ ॥

1. यजस्य मूको. 2. नेतॄन् ख मूरतायाः. 3. यज्ञस्य मूको. 4. प्रशस्यमानाः मूको. 5-5. त्व … तिरो मूको. 6-6. तिर … र्धौ मूको 7-7. °तया सत्यस्य प्रज्ञः मूको 8-8. स्तुतिः … तोता सत्यस्य मूको. 9. अस्मान् मूको. 10. वचनेन ख कर्मं. 11. °जन° मूको. 12-12. नास्ति मूको. 13-13. ते सु° मूको. 14-14. °नेन पौनरुक्त्यम् मूको.

वेङ्कट० ते अस्माकम् इन्द्रः पृथिवी च [1]पूषा भगः अदितिः पञ्च जनाः[1] पृथिवीम् वर्धयन्तु, पश्चार्थं सुसुखाः सुरक्षणाः सुनयनाः । अस्माकम् भवन्तु[2] सुरक्षणाः सुगोपनाः । त्राणगोपनयोरस्त्यल्पो भेदः ॥ ११ ॥

नू स॒द्मानं॑ दि॒व्यं नंशि॑ देवा॒ भार॑द्वाजः सुम॒तिं या॑ति॒ होता॑ ।
आ॒सा॒नेभि॒र्यज॑मानो मि॒येधै॑र्दे॒वानां॒ जन्म॑ वसू॒युर्व॑वन्द ॥ १२ ॥

नु । स॒द्मान॑म् । दि॒व्यम् । नंशि॑ । दे॒वाः॒ । भार॑त्ऽवाजः । सु॒ऽम॒तिम् । या॒ति॒ । होता॑ ।
आ॒सा॒नेभि॑ः । यज॑मानः । मि॒येधै॑ः । दे॒वाना॑म् । जन्म॑ । व॒सु॒ऽयुः । व॒व॒न्द॒ ॥ १२ ॥

वेङ्कट० नु क्षिप्रम् सद्मानम् सदनं स्थानं स्वर्गाख्यम् दिव्यम् दिवि भवं दिव्यम् नंशि नशिराप्नोतिकर्मा । व्याप्तिमत्[3] हे देवाः! इन्द्रादयः! भरद्वाजपुत्र ऋत्विक्षा सुमतिम् प्रज्ञाम् अथवा सुमतिमिति मन्यतेरर्चतिकर्मणो रूपम् । तृतीयार्थे द्वितीया । सुमत्या शोभनस्तुत्या याति 'ईमहे यामि' ( निघ ३,१९ ) इति याच्याकर्मसु पाठाद् यातीति अत्र याच्यार्थः याचते । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । अहम् भारद्वाजः ऋत्विक्षा याचे इत्यर्थः । किञ्च आसानेभिः अपठितमपि मुखनामैतत् अत्र द्रष्टव्यम् । आसनशब्दस्य वा दीर्घत्वमन्तर्णीतमत्वर्थता च । मद्भिर्होत्राद्यास्यवद्भिः यजमानः यजन् वा मियेधैः यज्ञैः देवानाम् जन्म वसूयुः धनकामः ववन्द स्तुतवान्[4] । अत्र[5] जन्मस्तुतिद्वारेण चेयं जन्मवतामेव स्तुतिरुच्यते । समूहवचनो वा सामर्थ्याद् जन्मशब्दः ॥ १२ ॥

वेङ्कट० क्षिप्रम् दिव्यम् स्थानम् व्याप्तिमत् हे देवाः! भारद्वाजः[6] अयम् होता सुमतिम् च याचते[7] । आसनस्य प्रयोजकैः यज्ञभूतैः यजमानः देवानाम् जन्म सर्वं देवजातम् धनकामः[8] स्तौति ॥ १२ ॥

अप॒ त्यं वृ॑जि॒नं रि॒पुं स्ते॒नम॑ग्ने दुरा॒ध्य॑म् । द॒वि॒ष्ठम॑स्य सत्पते कृ॒धी सु॒गम् ॥ १३ ॥

अप॑ । त्यम् । वृ॒जि॒नम् । रि॒पुम् । स्ते॒नम् । अ॒ग्ने॒ । दुः॒ऽआ॒ध्य॑म् ।
द॒वि॒ष्ठम् । अ॒स्य॒ । स॒त्ऽप॒ते॒ । कृ॒धि । सु॒ऽगम् ॥ १३ ॥

स्कन्द० अग्निरत्र स्तूयते । अपेत्युपसर्गस्य लामिति च कर्मणः श्रुतेः योग्यक्रियापदाध्याहारः । अप नय [9]त्यम् इति व्यत्ययेन पुंलिङ्गता[9] । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यद् अस्मासु स्थितं यद् वृजिनम् पापम् रिपुम् शत्रुं त्वम् स्तेनम् चोरं च हे अग्ने! दुराध्यम् पापाभिलाषम् । किञ्च दविष्ठम् दूरतमम् । अत्यन्तदूरस्थमित्यर्थः । अस्य रिपोः स्तेनस्य च हे सत्पते! सतां पालयितः! कृधि कुरु [10]सुगम् अपठितमपि सुखनामैतदिह द्रष्टव्यम् । 'असाम्यमिन्द्र परिवः सुगं कृधि' ( ऋ १,१०२,४ ) इति यथा । सुखम्[10] । अथवा सुगमिति सुगतिरुच्यते । [11]स्वर्गप्राप्त्युपायं कुर्वित्यर्थः[11] ॥ १३ ॥

---

1-1. नास्ति मूको. 2. भवन्तु ख लर्प. 3. व्याप्तिः मूको. 4. °वान् स्तोत्रम् मूको. 5. अप मूको. 6. भ° वि° लर्प. 7. याच मूको. 8. °धनका° मूको. 9-9. त्य ··· पुंलिङ्गता मूको. 10-10. सुगम् ··· सुखं मूको. 11-11 °प्रायं ··· कुरि° मूको.

अपि पन्थामगन्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥१६॥

अपि । पन्थाम् । अगन्महि । स्वस्तिऽगाम् । अनेहसम् ।
येन । विश्वाः । परि । द्विषः । वृणक्ति । विन्दते । वसु ॥ १६ ॥

स्कन्द० अपि पन्थाम् पन्थानमपि अगन्महि स्वस्तिगाम् [1]भवत्प्रसादेन अविनाशगमनम्[1] अनेहसम् अपापम् । सर्वपापवर्जितमित्यर्थः । येन । [2]तृतीयया गच्छन्निति वाक्यशेषः[2] । विश्वा- द्विषः सर्वान् द्विषः परि वृणक्ति परिवर्जयति । भवत्प्रसादेन विन्दते लभते च वसु धनं रम्यम् ॥ १६ ॥

वेङ्कट० पन्थानम् अपि अगन्महि[3] प्राप्तुम स्वस्तेः प्रापयितारम् अनेहसम् । येन पथा विश्वाः[4] द्विषः परि वृणक्ति पथिकः विन्दते च धनम् ॥ १६ ॥

[5]इति चतुर्थाष्टके अष्टमाध्याये त्रयोदशो वर्गः[5] ॥

[ ५२ ]

[6]ऋजिश्वा भारद्वाज ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः, सप्तम्यादिद्वादशयन्ता गायत्र्यः, चतुर्दशी जगती[6] ।

न तद् दिवा न पृथिव्यानु मन्ये न यज्ञेन नोत शमीभिराभिः ।
उब्जन्तु तं सुभ्वः पर्वतासो नि हीयतामतियाजस्य यष्टा ॥ १ ॥

न । तत् । दिवा । न । पृथिव्या । अनु । मन्ये । न । यज्ञेन । न । उत । शमीभिः । आभिः ।
उब्जन्तु । तम् । सुऽभ्वः । पर्वतासः । नि । हीयताम् । अतिऽयाजस्य । यष्टा ॥ १ ॥

स्कन्द० तदिति व्यत्ययेन नपुंसकता । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो 'यच्छब्दोऽध्याहार्यः यमिति'[7] । न तत् दिवा न पृथिव्या । तृतीयाश्रुतेः सम्बन्धमिति वाक्यशेषः । अनु मन्ये अनुजानामि । इच्छामीत्यर्थः । कीदृशः पुनर्दिवा पृथिव्या वा सम्बन्धोऽत्र यो नेष्यते । उच्यते—मृतस्य सतो [8]देवशरीरस्य मनुष्यशरीरस्य[8] वा सम्बन्धः । यस्माच्छरीरे पृथिव्यां स पृथिव्या अतो नेष्यते । मृतं सन्तं देवशरीरं मनुष्यशरीरं वा प्राप्नुयात् । तदेच्छामीत्यर्थः । जीवन्तमपि न यज्ञेन सम्बन्धम् अनुमन्ये, न अपि शमीभिः आभिः ··· ··· ॥ १ ॥

वेङ्कट० न तत् कर्म द्यावापृथिवीभ्याम् 'अहम् अनु' मन्ये । सफलं[9] कुरुतं द्यावापृथिव्यौ तत्कर्मेत्यर्थः । न च यज्ञेन, न अपि[10] शमीभि- आभिः । तम् इमम् अतियाजे महत्त्वयुम् महान्तः पर्वताः उब्जन्तु । उब्जतिर्वधकर्मा[11] । निहीनो भवतु अतियाजस्य[12] यष्टा याज्यर्युः ॥ १ ॥

अति वा यो मरुतो मन्यते नो ब्रह्म वा यः क्रियमाणं निनित्सात् ।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषमभि तं शोचतु द्यौः ॥ २ ॥

---

१-१. भवेत्प्रसादेनापि अग° मूको. २-२ तृतीय ··· वाक्य° मूको. ३. गन्म° छ. ४. विश्वान् दर्प. ५-५. नास्ति मूको. ६-६. यच्छब्दो ··· मि मूको. ७-७. °शरीर ··· वा मूको. ८-८. महत्त्वानु मूको. ९. दर्प मूको. १०. नि दि° दर्प; भरि छ. ११. °कर्मणा मूको. १२. हविषा° छ दर्प.

अति । वा । यः । मरुतः । मन्यते । नः । ब्रह्म । वा । यः । क्रियमाणम् । निनित्सात् ।
तपूंषि । तस्मै । वृजिनानि । सन्तु । ब्रह्मऽद्विषम् । अभि । तम् । शोचतु । द्यौः ॥ २ ॥

स्कन्द० ... ... ... ... ... ॥ २ ॥

वेङ्कट० यः वा अस्मान् हे मरुतः! अति मन्यते, कर्म वा अस्माभिः क्रियमाणम् यः निन्दितुम् इच्छति[1] । तस्मै रक्षांसि छेदकानि भवन्तु कर्मणा ॥ २ ॥

किमङ्ग त्वा ब्रह्मणः सोम गोपां किमङ्ग त्वाहुरभिशस्तिपां नः ।
किमङ्ग नः पश्यसि निद्यमानान् ब्रह्मद्विषे तपुषिं हेतिमस्य ॥ ३ ॥

किम् । अङ्ग । त्वा । ब्रह्मणः । सोम । गोपाम् । किम् । अङ्ग । त्वा । आहुः । अभिशस्तिऽपाम् । नः ।
किम् । अङ्ग । नः । पश्यसि । निद्यमानान् । ब्रह्मऽद्विषे । तपुषिम् । हेतिम् । अस्य ॥ ३ ॥

स्कन्द० ... ... ... ... ... ॥ ३ ॥

वेङ्कट० पीड्यमानान् । कर्मद्विषे तापयितारम् वज्रम् प्रेरय ॥ ३ ॥

अवन्तु मामुषसो जायमाना अवन्तु मा सिन्धवः पिन्वमानाः ।
अवन्तु मा पर्वतासो ध्रुवासोऽवन्तु मा पितरो देवहूतौ ॥ ४ ॥

अवन्तु । माम् । उषसः । जायमानाः । अवन्तु । मा । सिन्धवः । पिन्वमानाः ।
अवन्तु । मा । पर्वतासः । ध्रुवासः । अवन्तु । मा । पितरः । देवऽहूतौ ॥ ४ ॥

स्कन्द० ... ... ... ... ... ॥ ४ ॥

वेङ्कट० रक्षन्तु माम् उषसः प्रादुर्भवन्त्यः । रक्षन्तु माम् नद्यः वहन्त्यः । रक्षन्तु माम् पर्वताः स्थिराः । रक्षन्तु माम् पितरः च यज्ञे ॥ ४ ॥

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरन्तम् ।
तथा करद् वसुपतिर्वसूनां देवाँ ओहानोऽवसागमिष्ठः ॥ ५ ॥

विश्वऽदानीम् । सुऽमनसः । स्याम । पश्येम । नु । सूर्यम् । उत्ऽचरन्तम् ।
तथा । करत् । वसुऽपतिः । वसूनाम् । देवान् । ओहानः । अवसा । आऽगमिष्ठः ॥ ५ ॥

स्कन्द० ... ... ... ... ... ॥ ५ ॥

वेङ्कट० सर्वदा वयम् सुमनसः स्याम, पश्येम च सूर्यम् उद्यन्तम् । तथा करोतु वसुपतिः अग्निः देवान् आवहन् रक्षणार्थम् अतिशयेनाऽऽगन्ता[2] ॥ ५ ॥

[3]इति चतुर्थाष्टके अष्टमाध्याये चतुर्दशो वर्गः[3] ॥

1. नन्द° मूको. 2. °न्ता° वि° स्प°. 3-3. नास्ति मूको.

इन्द्रो नेदिष्ठमवसागमिष्ठः सरस्वती सिन्धुभिः पिन्वमाना ।
पर्जन्यो न ओषधीभिर्मयोभुरग्निः सुशंसः सुहवः पितेव ॥ ६ ॥

इन्द्रः । नेदिष्ठम् । अवसा । आऽगमिष्ठ । सरस्वती । सिन्धुऽभिः । पिन्वमाना ।
पर्जन्यः । नः । ओषधीभिः । मयःऽभुः । अग्निः । सुऽशंसः । सुऽहवः । पिताऽइव ॥ ६ ॥

स्कन्द० ... ... ... ... ... ॥ ६ ॥

वेङ्कट० इन्द्र अस्माकम् रक्षणार्थम् नेदिष्ठम् अतिशयेनाऽऽगन्ता अस्तु । सरस्वती च उदकैः वर्धयन्त्यस्तु[1] । पर्जन्यः च अस्माकम् ओषधीभिः सुखस्य भावयिता अग्निः च शोभनस्तुतिः[2] स्वाह्वानः अस्तु[3] पिता इव ॥ ६ ॥

विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥ ७ ॥

विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् । आ । इदम् । बर्हिः । नि । सीदत ॥ ७ ॥

स्कन्द० ... ... ... ... ... ॥ ७ ॥

वेङ्कट० हे विश्वे देवाः! आ गच्छत, शृणुत च मम इदम् आह्वानम् । इदम् बर्हिः आ नि सीदत ॥ ७ ॥

यो वो देवा घृतस्नुना हव्येन प्रतिभूषति । तं विश्व उप गच्छथ ॥ ८ ॥

यः । वः । देवाः । घृतऽस्नुना । हव्येन । प्रतिऽभूषति । तम् । विश्वे । उप । गच्छथ ॥ ८ ॥

स्कन्द० ... ... ... ... ... ॥ ८ ॥

वेङ्कट० यः युष्मान् हे देवाः! घृतप्रस्राविणा हविषा परिचरति, तम् सर्वे एव उप गच्छथ ॥ ८ ॥

उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये । सुमृळीका भवन्तु नः ॥ ९ ॥

उप । नः । सूनवः । गिरः । शृण्वन्तु । अमृतस्य । ये । सुऽमृळीकाः । भवन्तु । नः ॥ ९ ॥

स्कन्द० ... ... ... ... ... ॥ ९ ॥

वेङ्कट० ते[4] उप शृण्वन्तु अस्माकम् स्तुतीः, अमृतस्य प्रजापतेः ये सूनवः भवन्ति । सुष्ठु सुखयितारश्च अस्माकम् भवन्तु ॥ ९ ॥

विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः ॥ १० ॥

विश्वे । देवाः । ऋतऽवृधः । ऋतुऽभिः । हवनऽश्रुतः । जुषन्ताम् । युज्यम् । पयः ॥ १० ॥

स्कन्द० ... ... ... ... ... ॥ १० ॥

---

१. मह° मूको; महान्वस्तु ख मवमान°. २. °नर्दा क छपे. ३. स्वाह्वानोस्तु मूको.
४. नास्ति मूको.

विश्वे॑ दे॒वा मम॑ शृण्वन्तु य॒ज्ञिया॑ उ॒भे रोद॑सी अ॒पां नपा॑च्च॒ मन्म॑ ।
मा वो॒ वचां॑सि परि॒चक्ष्या॑णि वोचं सु॒म्नेष्विद् वो॒ अन्त॑मा मदेम ॥ १४ ॥

विश्वे॑ । दे॒वाः । मम॑ । शृ॒ण्व॒न्तु॒ । य॒ज्ञियाः॑ । उ॒भे इति॑ । रोद॑सी॒ इति॑ । अ॒पाम् । नपा॑त् । च॒ । मन्म॑ ।
मा । वः॒ । वचां॑सि । प॒रि॒ऽचक्ष्या॑णि । वो॒च॒म् । सु॒म्नेषु॑ । इत् । वः॒ । अन्त॑माः । म॒दे॒म ॥ १४ ॥

स्कन्द० रोदसी अभिधाय स्तूयन्ते। विश्वे देवाः इति रोदस्यादयः प्रतिनिर्दिश्यन्ते। सर्वे देवाः मम स्वभूतम् शृण्वन्तु यज्ञियाः यज्ञार्हाः। कतम एते। उभे रोदसी द्यावापृथिव्यौ अपाम् नपात् च। अथवा विश्वे देवा इति पृथग्देवतापदम्। विश्वे च देवा उभे च रोदसी अपां नपाच्च शृण्वन्त्विति। अपां नपाद् अग्निरुच्यते, अपां पौत्रत्वात्। अद्भ्य 'ओषधिवनस्पतयो जायन्ते', ओषधिवनस्पतिभ्य एष जायते इत्येवमस्यापां पौत्रत्वम्। किं शृण्वन्तु। उच्यते—मन्म मन्यतेरर्चतिकर्मण[1] इदं रूपम्[1]। 'मननम्। स्तुतिमित्यर्थः। परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। मा वः [2]वचांसि युष्माकं[2] वचांसि स्तुतिलक्षणानि परिचक्ष्याणि परिवर्जनीयानि अशोभनत्वात् परिवर्जनार्हाणि वोचम् ब्रूयाम् अहम्[3]। सर्वदैव[4] शोभनाः स्तुतीर्युष्माकं कुर्यामित्यर्थः। किञ्च सुम्नेषु तृतीयार्थे सप्तम्येषा। [5]"सुम्नैः अनेकप्रकारैः"। इत् शब्दः पदपूरणः[6]। वः युष्माकम् अन्तमाः [7]अतिशयेन सन्निकृष्टाः[7] मदेम मोदेमहि वयम् ॥ १४ ॥

वेङ्कट० यज्ञार्हाः विश्वे देवाः उभे द्यावापृथिव्यौ अपाम् नपात् च मम स्तोत्रम् शृण्वन्तु। मा युष्माकम् गर्हाणि वचनानि वोचम् युष्माकम् सन्निकृष्टाः वयम् सुखेषु एव[8] मदेम ॥ १४ ॥

ये के च॒ ज्मा म॒हिनो॒ अहि॑माया दि॒वो ज॑ज्ञि॒रे अ॒पां स॒धस्थे॑ ।
ते अ॒स्मभ्य॑मि॒षये॒ विश्व॒मायुः॒ क्षप॑ उ॒स्रा व॑रिवस्यन्तु दे॒वाः ॥ १५ ॥

ये । के । च॒ । ज्मा । म॒हिनः॑ । अहि॑ऽमायाः । दि॒वः । ज॒ज्ञि॒रे । अ॒पाम् । स॒धऽस्थे॑ ।
ते । अ॒स्मभ्य॑म् । इ॒षये॑ । विश्व॑म् । आयुः॑ । क्षपः॑ । उ॒स्राः । व॒रि॒व॒स्य॒न्तु॒ । दे॒वाः ॥ १५ ॥

स्कन्द० सर्वे देवा अत्र स्तूयन्ते। ये के च च-शब्दश्चिदर्थे। ये केचित् ज्मा 'ज्मा' ( निघ १,१ ) इति पृथिवीनाम। तादर्थ्याच्च ताच्छब्द्यम्। पृथिवीस्थाः महिनः [9]महान्तः अहिमायाः 'माया' ( निघ ३,९ ) इति प्रज्ञानाम। अहीनप्रज्ञाः[9]। अथवा [10]"अहिर्मेघः, तद्विषया[10]" प्रज्ञा येषां ते अहिमायाः। [11]अथवा आहन्तृप्रज्ञाः दिवः जज्ञिरे जाताः। जन्मना चात्र तदुत्तरकालभावि[11] तत्स्थानं लक्ष्यते। ये च द्युस्था इत्यर्थः। ये च केचित् अपाम् सधस्थे सहगते स्थाने अन्तरिक्षे जज्ञिरे। ते सर्वे देवाः अस्मभ्यम् इषये इष्यत इति इषिः पुत्रादिः तस्मै च [12]"विश्वम् आयुः विश्वं सर्वमायु[12]"

1-1. नास्ति वि[1]; "स्तनि ··· यो या" च वि[2]. 2. मन्यतोर्चतिकर्मे मूको. 3. ब्रूयम् मूको. 4-4. ···युष्माक मूको. 5. वोचेयं मूको. 6. सर्वदेव मूको. 7-7. सुखानेकप्रकारो मूको. 8. मः मूको. 9-9. °देव ···ष्टा मूको. 10. प मूको. 11-11. महान्तः ···हीनप्रज्ञा मूको. 12-12. अहिर्मे ···तद्विषयाः मूको. 13-13. अथ ···ताः जन्मना च तदु° मूको. 14-14. इषये ···विश्वं सर्वमायुः मूको.

जीवितम् अन्नं वा क्षपः उस्राः। क्षप इति रात्रिनाम (तु. निघ १,७)। उस्रा इत्यपि रश्मिनाम (तु. निघ १,५)। इह तु [1]तत्सम्बन्धाद् अहः लक्ष्यते[1]। उभयत्र सप्तम्यर्थे विभक्तिः। रात्रावहनि च। सन्ततमित्यर्थः। वरिवस्यन्तु। अस्मभ्यमिति [2]सम्प्रदानचतुर्थीश्रुतेः दानार्थः[2]। ददतु देवाः। अथवा क्षप उस्रा इत्येते देवानां विशेषणे। क्षपयितार उत्सादिनश्च भोगानां देवा इति ॥ १५ ॥

वेङ्कट० ये के च पृथिव्याम्[3] महान्तः अहन्तव्यप्रज्ञाः दिवः जाताः अन्तरिक्षे च। ते अस्मभ्यम् इषिरिच्छा तदर्थम् सर्वम् अन्नम् रात्रीः अहानि च प्रयच्छन्तु देवाः। सर्वदाऽन्नं प्रयच्छन्त्विति ॥ १५ ॥

अग्नीपर्जन्याववतं धियं मेऽस्मिन् हवे सुहवा सुष्टुतिं नः।
इळामन्यो जनयद् गर्भमन्यः प्रजावतीरिष आ धत्तमस्मे ॥ १६ ॥

अग्नीपर्जन्यौ। अवतम्। धियम्। मे। अस्मिन्। हवे। सुऽहवा। सुऽस्तुतिम्। नः।
इळाम्। अन्यः। जनयत्। गर्भम्। अन्यः। प्रजाऽवतीः। इषः। आ। धत्तम्। अस्मे इति ॥ १६ ॥

स्कन्द० [4]अग्नीपर्जन्यावत्र देवते। हे[4] अग्नीपर्जन्यौ! अवतम् गच्छतं पालयतम् वा। धियम् कर्म यागाख्यं[5] मे मम स्वभूतम्। न केवलं कर्म। किं तर्हि। अस्मिन् हवे तृतीयार्थे सप्तम्येषा। अनेनाह्वानेन [6]हे सुहवा! स्वाह्वानौ![6] अनेनाह्वानेन[6] विलम्बाह्वताविल्यर्थः। सुष्टुतिम् शोभनां स्तुतिम् नः अस्माकम् स्वभूताम्। किञ्च इळाम्[7] अन्यः युवयोरेकः पर्जन्यः जनयत् वृष्टिप्रदानेन जनयतु। गर्भम् ओषधीनाम् अन्यः अग्निः। [8]अग्निना हि वनस्पत्यन्तर्गतेन पच्यमाना ओषधयो गर्भं भजन्ते। अत एवमुच्यते—गर्भम् अन्य इति। किञ्च प्रजावतीः प्रजासहिता[8] इषः अन्नानि आ धत्तम् अस्मे अस्मासु। दत्तमस्मभ्यमित्यर्थः ॥ १६ ॥

वेङ्कट० हे अग्नीपर्जन्यौ! रक्षतम् कर्म मे। अस्मिन् हवे स्वाह्वानौ! सुष्टुतिम् च अस्माकम् सेवेताम्। तौ युवां युवयोरेकोऽग्निः इळाम् अजनयत्, अन्यः पर्जन्यश्च[9] ओषधीषु गर्भम् अजनयत्। तौ युवां प्रजावन्ति अन्नानि [10]आ धत्तम्[10] अस्मासु ॥ १६ ॥

स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेन महा नमसा विवासे।
अस्मिन् नो अद्य विदथे यजत्रा विश्वे देवा हविषि मादयध्वम् ॥ १७ ॥

स्तीर्णे। बर्हिषि। सम्ऽइधाने। अग्नौ। सुऽउक्तेन। महा। नमसा। आ। विवासे।
अस्मिन्। नः। अद्य। विदथे। यजत्राः। विश्वे। देवाः। हविषि। मादयध्वम् ॥ १७ ॥

स्कन्द० सर्वे देवा अत्र देवता। [11]वेद्याम् स्तीर्णे बर्हिषि[11] समिधाने अग्नौ दीप्यमाने आहवनीये

---

१-१. सम्बन्धात् ··· मूको. २-२. °चतुर्थी···र्थः मूको. ३. °व्याम महान्तं मूको. ४. ··· पर्जन्यावत्र देवता इह मूको. ५. या···ख्यं मूको. ६-६. स्वा···नौ मूको. ७. आइळाम् मूको. ८-८. अग्निना··· प्रजा° मूको. ९. °न्यः वि°; °न्यस्य इ सर्वे. १०-१०. मध° मूको. ११-११. वर्गा···बर्हिषि मूको.

सूक्तेन, शोभनवचनेन स्तवेन महा महता च नमसा अन्नेन हविर्लक्षणेन आ विवासे परिचरामि अहम्। एतत् ज्ञात्वा अस्मिन् नः अस्माकं [1]स्वभूते अद्य[1] विदथे यज्ञे यजत्राः! विश्वे सर्वे यूयं हे देवाः! हविषि तृतीयार्थे सप्तम्येषा। हविषा मादयध्वम् तर्पयतास्मानम्[2] ॥ १७ ॥

वेङ्कट० निगदसिद्धा इति[3] ॥ १७ ॥

[4]इति चतुर्थाष्टके अष्टमाध्याये षोडशो वर्गः[4] ॥

[ ५३ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः। पूषा देवता। गायत्री छन्दः, अष्टम्यनुष्टुप्[5]।

वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्नयुज्महि ॥ १ ॥

वयम्। ऊँ इति। त्वा। पथः। पते। रथम्। न। वाजऽसातये। धिये। पूषन्। अयुज्महि ॥१॥

स्कन्द० अत ऊर्ध्वम् अमितऋषेर्भरद्वाजस्यैवार्षम्। "पौष्णीरातृतीयात्" षट् पौष्णानि चैतानि सूक्तानि। पूषदेवत्यानि। वयम् उ। उ इति पदपूरणः। त्वा पथः पते! अध्वनः स्वामिन्!। अध्वनि [6]मनुष्याणां गच्छतां पूषा[6] रक्षिता। तेनायं पथस्पतिरुच्यते। रथम् न वाजसातये। यथा कश्चित् सङ्ग्रामेऽन्नस्य वा लाभम् अन्नसम्भजनाय, एवं त्वाम् धिये कर्मणे। आत्मीयस्य यागकर्मणः सम्भजनार्थमित्यर्थः। अथवा धीरिति प्रज्ञानाम। आत्मनः [7]प्रज्ञायै। पूषन्![7] अयुज्महि युजिरत्रान्तर्णीतण्यर्थः। युजोऽपि सोपसर्गार्थे द्रष्टव्यः। उपोऽयामः। प्रेरयाम इत्यर्थः ॥ १ ॥

वेङ्कट० भरद्वाजः। वयम् उ त्वा हे पथः पते! रथम् इव अन्नभजनाय कर्मणे पूषन्! युक्तं कुर्मः ॥ १ ॥

अभि नो नर्यं वसु वीरं प्रयतदक्षिणम्। वामं गृहपतिं नय ॥ २ ॥

अभि। नः। नर्यम्। वसु। वीरम्। प्रयतऽदक्षिणम्। वामम्। गृहऽपतिम्। नय ॥ २ ॥

स्कन्द० अभीत्युपसर्गो नयेत्याख्यातेन सम्बन्धयितव्यः। नः अस्मदर्थमेव वसुवचनम्। [8]भाम् नर्यम् मनुष्येभ्यो हितं धनम्। वीरमित्यादीनि भाम् इत्येतेन[8] समानाधिकरणानि। [9]'वीरयति शत्रूनिति वीरस्तम् वीरम् रणे[9] शूरम् भाम् प्रयतदक्षिणम् दत्तदक्षिणं च वामम् 'वामः' ( निघ ३,८ ) इति प्रशस्यनाम। प्रशस्यं च गृहपतिम् यज्ञगृहस्य स्वामिनम्। अथवा [10]पत्युरित्यर्थः। आत्मनः[10] प्रशस्यम् वा वसु [11]गृहपतिम् अभि नय[11] प्रापय। देहि मह्यमित्यर्थः ॥ २ ॥

वेङ्कट० अभि नय अस्मान् नृहितम् वसु[12] शत्रूणां प्रेरकम्[13] प्रयतदक्षिणम्[14]। अस्माभिर्हि प्रयच्छति पश्यन् भजनीयं पर्याप्तम् ॥ २ ॥

अदित्सन्तं चिदाघृणे पूषन् दानाय चोदय। पणेश्चिद् वि म्रदा मनः ॥३॥

---

1. स्व अद्य मूको. 2. °तास्मान् मूको. 3. नास्ति वि[1] कु. 4-4. नास्ति मूको. 5-5. भरद्वाजो· मूलोयात् मूको. 6-6. मनु··· पूषा मूको. 7-7. प्र ··· पूषन् मूको. 8-8. वसु इ··· इत्येतेन मूको. 9-9. इति ··· रणे मूको. 10-10. पेत्य···आत्मनः मूको. 11-11. गृह···भिनय मूको. 12. एवं वि[1] इप. 13. °कारक कुं. 14. दक्षिणम् मूको.

अदि॑त्सन्तम् । चि॒त् । आ॒घृ॒णे॒ । पूष॑न् । दाना॑य । चो॒द॒य॒ । प॒णेः । चि॒त् । वि । म्र॒द॒ । मनः॑ ॥३॥

स्कन्द० अदित्सन्तम् चित् अदातुमिच्छन्तम् अपि बलात् हे आघृणे! घृणिः क्षरिता दमः पूर्णो दतिः स दक्षे वा रथे वा आसक्तो यस्य [1]स आघृणिः । यथा 'हतेरिव[1] तेऽवृकमस्तु सख्यम्' (ऋ ६,४८,१८) इति । अथवा घृणिर्दीप्तिः, सा आगता उपजाता यस्य स आघृणिः, तस्य सम्बोधनम् हे आघृणे! पूषन्! दानाय अस्मभ्यम् चोदय । पणेः चित् वणिजः अपि वि म्रद विविधं मृदूकुरु । अदानशीलस्य[2] दानाभिमुखं कुर्वित्यर्थः । मनः चित्तम् ॥ ३ ॥

वेङ्कट० अदित्सन्तम् अपि आगतदीप्ते! पूषन्! [3]दानाय अस्मभ्यम्[3] चोदय । पणेः अपि मनः मृदू-कुरु[4] दानाय ॥ ३ ॥

वि प॒थो वाज॑सातये चिनु॒हि वि मृधो॑ जहि । साध॑न्तामुग्र नो॒ धियः॑ ॥ ४ ॥

वि । प॒थः । वाज॑ऽसातये । चि॒नु॒हि । वि । मृधः॑ । ज॒हि॒ । साध॑न्ताम् । उ॒ग्र॒ । नः॒ । धियः॑ ॥४॥

स्कन्द० [5]'वीत्येतस्य चिनुहीत्येतेन[5] सम्बन्धः । [6] चिनुहि पथः मार्गान् । चोरः चोरादिः पथोऽपनेतव्यः तेतम् अपनयेत्यर्थः । किमर्थम् । वाजसातये अन्नसम्भजनार्थम् अस्माकम् । त्वद्विचितेन[7] पथा गत्वा सुखमन्नं भजामह इत्यर्थः । वि मृधः जहि विविधं जहि मृधः सङ्ग्रामकारिणः । अस्मार्थम् गतैरस्माभिः सह ये सङ्ग्रामं चिकीर्षन्ति तानपि विनाशयेत्यर्थः । साधन्ताम् सिध्यन्तु हे उग्र! पणिमुषाम् उपरि क्रूर! अप्रसन्न! वा सर्वस्य नः अस्माकम् धियः प्रज्ञाः । अभिलाषा इत्यर्थः ॥ ४ ॥

वेङ्कट० वि चिनुहि मार्गान् अन्नलाभाय । वि जहि च शत्रून् । साधयन्तु अस्माकम् कर्माणि उद्गूर्ण! सिध्यन्तु चेति ॥ ४ ॥

परि॑ तृन्धि पणी॒नामार॑या हृद॑या कवे । अथे॑म॒स्मभ्यं॑ रन्धय ॥ ५ ॥

परि॑ । तृ॒न्धि॒ । प॒णी॒नाम् । आर॑या । हृद॑या । क॒वे॒ । अथ॑ । ई॒म् । अ॒स्मभ्य॑म् । र॒न्ध॒य॒ ॥ ५ ॥

स्कन्द० परि तृन्धि । तृदिर्हिंसार्थः । सर्वतो हिन्धि[8] । विध्येत्यर्थः । पणीनाम् वणिजाम् [9]'अयज्व-नाम् । केन । आरया[9] तोत्रस्याग्रे तीक्ष्णो लोहकीलक आरेत्युच्यते । तया हृदया हृदयानि । हे कवे! । अथ अनन्तरं स्वम्[8] एनान् अयज्वनां वणिजाम् आरया हृदये विध्येत्यर्थः । अस्मभ्यम् अस्माकम् रन्धय वशं नय ॥ ५ ॥

वेङ्कट० विद्धि पणीनाम्[10] अष्ट्रया हृदयानि कवे! । अथ एनान् अस्मभ्यम् वशीकुरु ॥ ५ ॥

[11]इति चतुर्थाष्टके अष्टमाध्याये सप्तदशो वर्गः[11] ॥

वि पू॑षन्नार॑या तुद प॒णेरि॑च्छ हृ॒दि प्रि॒यम् । अथे॑म॒स्मभ्यं॑ रन्धय ॥ ६ ॥

---

१-१. स···तेऽरि मूको. २. आदान° मूको. ३-३. दानायस्° ह कपं. ४. मद्रु कु° ह कपं; मद् कु° वि°. ५-५. वीत्ये···त्येतेन मूको. ६. त्वद्विचेन (°न वि°) मूको. ७. विति मूको. ८-८. नास्ति मूको. ···रया मूको. ९. क मूको. १०. पणि° वि° कपं. ११-११. नास्ति मूको.

वि । पूषन् । आरया । तुद । पणेः । इच्छ । हृदि । प्रियम् । अर्थ । ईम् । अस्मभ्यम् । रन्धय ॥६॥

स्कन्द० हे पूषन्! आरया वि तुद तुद व्यथने । व्यथय । विध्येत्यर्थः । कम् । पणेः प्रियम् इष्टमात्मानं पुत्रं वा । इच्छ एतत्, मा न पणीः । भवद्व्यथकर्तव्यम् एतदित्यर्थः । क वितुदानि । उच्यते—हृदि हृदये । अनन्तरं चैनमस्माकम् वशं नय ॥ ६ ॥

वेङ्कट० पणेः हृदयम् तव आरया वि तुद । पणेर्हृदयम् यथा प्रीतं भवति, तथा च कुरु । अथ ईम् इति गतम् ॥ ६ ॥

आ रिख किकिरा कृणु पणीनां हृदया कवे । अथेमस्मभ्यं रन्धय ॥ ७ ॥

आ । रिख । किकिरा । कृणु । पणीनाम् । हृदया । कवे । अर्थ । ईम् । अस्मभ्यम् । रन्धय ॥७॥

स्कन्द० आ रिख आलिख । चोदन्याऽऽरया विलिखेत्यर्थः । किकिरा कृणु किकिराणि च कुरु । किकिरशब्दः खर्परस्य[2] वा वाचको जर्जरीभूतस्य वाचको[3] वा । [4]श्लक्ष्णानां वा विदारणवतां[4] यः शब्दः तदनुकरणम् । [5]खर्पराणि जर्जराणि[5] विदारणवन्ति वा कुर्वित्यर्थः । [6]कानि । पणीनाम्[6] हृदयानि हे कवे! । अथैनान् अस्माकम् वशं नय ॥ ७ ॥

वेङ्कट० आ लिख किकिरा च कुरु । किकिरेति शब्दानुकरणम् । अपि विकीर्णानि अदातॄणाम् हृदयानि कवे! ॥ ७ ॥

यां पूषन् ब्रह्मचोदनीमारां बिभर्ष्याघृणे । तया समस्य हृदयमा रिख किकिरा कृणु ॥८॥

याम् । पूषन् । ब्रह्मऽचोदनीम् । आराम् । बिभर्षि । आघृणे ।
तया । समस्य । हृदयम् । आ । रिख । किकिरा । कृणु ॥ ८ ॥

स्कन्द० याम् हे पूषन्! ब्रह्मचोदनीम् ब्रह्मणां [7]प्रतिस्वम् अन्नानां[7] चोदनीम् । अथवाऽभिलषितसम्पादनेन स्वस्तुतिलक्षणस्य ब्रह्मणश्चोदयित्रीम् । आराम् बिभर्षि धारयसि त्वं हे आघृणे! कथं? घृणिः दीप्तिः आगता वा उपगता दीप्तिः यस्य स तस्य सम्बोधनम् । हे आघृणे! । तया समस्य [8]पणेः वणिजः कदर्यवतः हृदयम्[8] आ रिख, किकिरा[8] कृणु[8] किकिरं च कुरु ॥८॥

वेङ्कट० याम् पूषन्! अन्नस्य चोदयित्रीम् आराम् धारयसि हे आगतदीप्ते! तया सर्वस्य हृदयम् [10]आ रिख[10] इति ॥ ८ ॥

या ते अष्ट्रा गोओपशाघृणे पशुसाधनी । तस्यास्ते सुम्नमीमहे ॥ ९ ॥

या । ते । अष्ट्रा । गोऽओपशा । आघृणे । पशुऽसाधनी । तस्याः । ते । सुम्नम् । ईमहे ॥ ९ ॥

स्कन्द० या ते या तव स्वभूता अष्ट्रा अशू व्याप्तौ । व्यापिनी । कासौ । आरा वा प्रकृतत्वात्

1. यथा मूको. 2. खर्परस्य वि°; कर्परस्य वा वि°. 3. वाचका मूको. 4-4. श्लक्ष्णानाम ⋯ वतां मूको. 5-5. खर्पराभिर्जराणि मूको. 6-6. खणिरणीना मूको. 7-7. प्रतिस्वानाम्ना मूको. 8. नास्ति मूको. 9-9. पणेः ⋯ यम् मूको. 10-10. नास्ति° क वर्पं.

रज्जुर्वा कक्ष्यालक्षणा अभीशुलक्षणा वा । गोओपशा गोशब्देनात्र गमनाद् अजाः पूष्णोऽश्वाः उच्यन्ते । ओपशेति[1] छन्दोरूपम् । शीङ्ग्रेऽत्र स्थानमर्थः, आमाशयो पक्वाशयः इत्यत्र यथा । न भिन्नभिन्नम् उपगम्य[2] शयनमिति ······गन्तृन् अजान् उपगम्य या तिष्ठति सा गोओपशा । भारा हि चोदयन्ती रज्जुर्वा कक्ष्यालक्षणा अभीशुलक्षणा वा [3]अजानां शरीरे[3] तिष्ठति । अथवा या [illegible] उपगम्य प्राप्य शेते[4] सा गोओपशा । गवामजानां[5] सुखकरीत्यर्थः । हे आघृणे ! पशुसाधनी पशूनां साधयित्री । स्तोतृभ्यो ददातीत्यर्थः । तस्माः ते तव स्वभूतायाः सकाशात् सुम्नम् सुखम्[6] ईमहे याचामहे ॥ ९ ॥

वेङ्कट० [7]"ओपशशब्दम् उपदेशनमित्याहुः", उपविश्यमाना गावो यस्या विशन्ते सा, या तव आघृणे ! अध्वा पशुसाधनी भवति । तस्याः तव स्वभूतायाः सुखं[8] याचामहे ॥ ९ ॥

उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत् कृणुहि वीतये ॥ १० ॥

उत । नः । गोऽसनिम् । धियम् । अश्वऽसाम् । वाजऽसाम् । उत । नृऽवत् । कृणुहि । वीतये ॥ १० ॥

स्कन्द० उत अपि च नः अस्माकम् गोसनिम् गवां सम्भक्त्रीम् । गोसम्पादयित्रीमित्यर्थः[9] । धियम् प्रज्ञाम् अश्वसाम् अश्वानामपि सम्भक्त्रीम् वाजसाम् उत अन्नस्यापि सम्भक्त्रीम् नृवत् यथाऽन्येषां मनुष्याणां तद्वत् कृणुहि कुरु । देहीत्यर्थः । अथवा नः इति षष्ठीश्रुतेः उपरीति वाक्यशेषः । गोषणिमित्यादीन्यपि पशु दाने इत्यस्य रूपाणि । अस्माकमुपरि धियं प्रज्ञां बुद्धिं गवादीनां दात्रीं कुरु नृवत् यथा राजाऽन्यो वा [10]कश्चित् कस्यचिदुपरि[10] कुर्यात् तद्वत् । अथवा धीरिति कर्मनामेव । अस्माकमिदं यागलक्षणं कर्म गवादीनां दातृ कुरु । गवादिफलं कुर्वित्यर्थः । अन्येषामिव मनुष्याणाम् । किमर्थम् । वीतये भक्षणाय । गवादिजन्योपभोगसम्पत्त्यर्थमित्यर्थः । अथवा वीतय इति कामयर्थः । इदम् अस्माकं यागलक्षणं कर्म [11]दक्षिणादिसम्प्रदानां गवादीनां[11] सम्भक्तृ आत्मनो वीतये कामाय कुरु । कामयस्वेत्यर्थः ॥ १० ॥

वेङ्कट० अपि च अस्माकम् कर्म गवादेः सम्भक्तृ मनुष्यवत् आगत्य कुरु[12] अस्माकम् गमनाय ॥ १० ॥

[13]इति चतुर्थाष्टके अष्टमाध्याये अष्टादशो वर्गः[13] ॥

[ ५४ ]

[14]भरद्वाजो बार्हस्पत्य ऋषिः । पूषा देवता । गायत्री छन्दः[14] ।

सं पूषन् विदुषा नय यो अञ्जसानुशासति । य एवेदमिति ब्रवत् ॥ १ ॥

सम् । पूषन् । विदुषा । नय । यः । अञ्जसा । अनुऽशासति । यः । एव । इदम् । इति । ब्रवत् ॥

1. ओप··· मूको. 2. °मपुषा मूको. 3-3. मजाना या शरीरे मूको. 4. शेपर् मूको. 5. गवा ··· मजाना मूको. 6. सु···मूको. 7-7. ओपशब्द उपदशमि° मूको; "उपशय" इ° प्रस्तावः. 8. सुखा मूको. 9. गोसम्पत्तापि° मूको. 10. कश्चित् ···कस्य° मूको. 11-11. °संबन्धानागवा° म वि°; °सम्बन्धाना गवा° वि°. 12. कुर्वन्ति मूको. 13-13. नास्ति मूको.

स्कन्द० हे पूषन्! विदुषा ज्ञानवता आत्मना अन्येन वा केनचिद् ऋत्विजा सह अस्मान् सम् नय सङ्गमय। यः अञ्जसा ऋजुना अनुशासति अनुशास्ति अस्मान्। ज्ञेयतत्त्वम् अस्मभ्यम् आचष्ट इत्यर्थः। यः च एव इदम् एवमिदम् इति अवधारितम् नष्टम् ब्रवीति। तत्त्वावधारणक्षम इत्यर्थः॥ १॥

वेङ्कट० हे पूषन्! सम् नय अस्मान् विदुषा, यः विद्वान् अस्माकं नष्टं धनम् अञ्जसा अनुशास्ति, य एवम् इदम् इति नष्टं ब्रवीति॥ १॥

समु॑ पू॒ष्णा ग॑मेमहि॒ यो गृ॒हाँ अ॑भि॒शास॑ति। इ॒म ए॒वेति॑ च॒ ब्रव॑त्॥ २॥

सम्। ऊँ॒ इति॑। पू॒ष्णा। ग॒मे॒म॒हि॒। यः। गृ॒हान्। अ॒भि॒ऽशास॑ति। इ॒मे। ए॒व। इति॑। च॒। ब्रव॑त्॥

स्कन्द० उ इति पदपूरणः। पूष्णा सह सम गमेमहि सङ्गच्छेमहि वयम्, यः गृहान् गृहाणि अभिशासति गच्छतेति आचष्ट। गृहगमनमार्गपरिपन्थिनो हि चोरादीन् पूषाऽपनयति। तान् अपनयन्[1] यत एतेऽपनीता, "ततो गच्छत गृहाणित्येवम् आचष्ट"[2] इव। इमे अर्थाः एव एवम् इति च ब्रवत् एव च ब्रवीति। ये च ज्ञेया अर्था उपन्यस्यन्ते तेषां च "तत्त्वावधारणक्षम इत्यर्थः"[3]॥ २॥

वेङ्कट० पूष्णा प्रणीता[4] "वयं तेन"[5] सम् गच्छेमहि, यः नष्टानां गवाम् गृहाणि चोरस्वभूतानि, अभिशास्ति इमे[5] गावः एवं च इदम् इति च ब्रवीति॥ २॥

पू॒ष्णश्च॒क्रं न रि॑ष्यति॒ न कोशोऽव॑ पद्यते। नो अ॑स्य व्यथते प॒विः॥ ३॥

पू॒ष्णः। च॒क्रम्। न। रि॒ष्य॒ति॒। न। कोशः॑। अव॑। प॒द्य॒ते॒। नो इति॑। अ॒स्य॒। व्य॒थ॒ते॒। प॒विः॥

स्कन्द० पूष्णः स्वभूतम् चक्रम् रथस्य न रिष्यति न हिंस्यते। गच्छतो न भज्यत इत्यर्थः। न अपि कोशः दधिदृतिः अव पद्यते "रथाद् अधः"[6]। न अपि अस्य पूष्णः स्वभूता व्यथते पविः रथचक्रधारा। चक्रधाराऽपि न विनश्यतीत्यर्थः॥ ३॥

वेङ्कट० पूष्णः आयुधम् न रिष्यति, न न्यूनं भवति। न चास्य कोशः[8] पतति[9]। नापि धारा अस्य व्यथते॥ ३॥

यो अ॑स्मै ह॒विषाऽवि॑धन्न तं पू॒षापि॑ मृष्यते। प्र॒थ॒मो वि॑न्दते॒ वसु॑॥ ४॥

यः। अ॒स्मै॒। ह॒विषा॑। अवि॑धत्। न। तम्। पू॒षा। अपि॑। मृ॒ष्य॒ते॒। प्र॒थ॒मः। वि॒न्द॒ते॒। वसु॑॥ ४॥

स्कन्द० अस्मै इति चतुर्थी द्वितीयार्थे[10]। यः एनं पूषणं हविषा अविधत् परिचरति, न तम् पूषा अपि मृष्यते। मृष्यतिः क्षमार्थः, मृष तितिक्षायामिति। न क्षमते। नोपेक्षत इत्यर्थः। किं तर्हि। सर्वेषु प्रथमः सः विन्दते लभते वसु धनम्। प्रथमं पूषा तस्मै धनं [11]ददाति[11] इत्यर्थः[11]॥ ४॥

---

1. 'नयन् मूको. २-२ ततो ० 'त्येवेत' मूको. ३-३. तत्त्वा० ०त्यर्थं मूको ४. 'णीता ख एप; महता ह प्रस्ताव. ५-५. पत्ने विं ख्यं. † नास्ति ख. ६. मे मूको ७-७. रथादपि मूको. ८. कोश' मूको ९ पत ख एप. १०. ...तुर्थ्यर्थे मूको. ११-११. ददाति मूको.

वेङ्कट० य पूष्णे हविषा उपचरणं करोति। न तम् पूषा अपि मृष्यति। स्वेन दत्तधनम् आदाय दद्वा स्वयमेवाभ्यसूयति। स सर्वस्मात् प्रागेव लभते धनम् ॥ ४ ॥

पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजं सनोतु नः ॥ ५ ॥

पूषा । गाः । अनु । एतु । नः । पूषा । रक्षतु । अर्वतः । पूषा । वाजम् । सनोतु । नः ॥ ५ ॥

स्कन्द० 'पूषा देवः नः अस्माकम् गाः अनु एतु अनुगच्छतु रक्षणार्थम्। रक्षतु च पूषा अर्वतः अश्वान् नः । पूषा वाजम् अन्नम्' सनोतु। सनोति सम्भजनार्थः । सम्भजतु । रक्षत्वित्यर्थः । अथवा' हविर्लक्षणम् अन्नं भजताम्। भक्षयत्वित्यर्थः । नः अस्माकं स्वभूतम्। अथवा सनोरिति सनिर्दानार्थः । 'अन्नं ददातु नः अस्मभ्यमित्यर्थः' ॥ ५ ॥

वेङ्कट० निगदव्याख्याता ॥ ५ ॥

'इति चतुर्थाष्टके अष्टमाध्याये एकोनविंशो वर्गः' ॥

पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः । अस्माकं स्तुवतामुत ॥ ६ ॥

पूषन् । अनु । प्र । गाः । इहि । यजमानस्य । सुन्वतः । अस्माकम् । स्तुवताम् । उत ॥ ६ ॥

स्कन्द० हे पूषन्! अनु प्र गाः इहि रक्षार्थमनुगच्छ प्र प्रकर्षेण गाः यजमानस्य सुन्वतः सोममभिषुण्वतः स्वभूताः । न च सुन्वतः केवलस्य । किं तर्हि । अस्माकम् अपि स्यात् स्तुवताम् ॥ ६ ॥

वेङ्कट० पूषन्! अनु प्र गच्छ पश्चात् सुन्वतः यजमानस्य रक्षार्थम्, अपि च अस्माकम् स्तुवताम्' ॥ ६ ॥

माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे । अथारिष्टाभिरा गहि ॥ ७ ॥

माकिः । नेशत् । माकीम् । रिषत् । माकीम् । सम् । शारि । केवटे । अथ । अरिष्टाभिः । आ । गहि ॥

स्कन्द० त्वया चानुगम्यमानानां गवां माकिः मा 'कश्चिद् नेशत् नश्यतु। माकीं मा काचित्' रिषद् वृकादिभिः' हिंसि, मा च काचित् सम् शारि। शॄ हिंसायाम्। हिंसि। केवटे 'केवट' (निघ ३,२३) इति कूपनाम। कूपे मा काचित् पतदित्यर्थः । अथ अनन्तरम् अरिष्टाभिः केनचिदपि अहिंसिताभिः गोभिः सह आ गहि आगच्छ गृहाणि प्रति। इत्था 'दिवस तृणानि भक्षितवा' चुरितवतीनां गृहाणि प्रत्यानयेत्यर्थः ॥ ७ ॥

वेङ्कट० मा काचित् नश्यतु' गौः'। मा च काश्चन वृक हिनस्तु । मा च काश्चिद् चोरः 'केवट' (निघ ३,२३) इति कूपनाम' तत्र सङ्कीर्णा करोतु। तथा कृत्वा अरिष्टाभिः ताभिः सायम् आ गच्छ ॥ ७ ॥

---

१-१. नास्ति मूको　२ नास्ति मूको　३-३. तुवत् मूको　४-४. नास्ति मूको　५. स्तुताम् वि' दुप, सुन्वताम् ए　६-६. का चि' काचित् मूको　७. वृकाग्नीनी वि', (°ष्टीनां वि')　८-८. कृत् स　९. क्षिप्ता मूको　९. नत्* मूको　१०. नौः वि' दुप　११. दुप' मूको

शृण्वन्तं॑ पू॒षणं॑ व॒यमिर्य॑मनष्टवेदसम् । ईशा॑नं रा॒य ई॑महे ॥ ८ ॥

शृ॒ण्वन्त॑म् । पू॒षण॑म् । व॒यम् । इर्य॑म् । अन॑ष्टऽवेदसम् । ईशा॑नम् । रा॒य । ई॒म॒हे॒ ॥ ८ ॥

स्कन्द० असमाख्याना शृण्वन्तम् पूषणम् वयम् इर्यम् अपठितमपि ईश्वरनामैतत् । अर्यशब्दस्य 'ईश्वरनाम्नः छान्दसम् रूपं इत्यर्थः[1] । ईश्वरम् अनष्टवेदसम् अनष्टधनम् अनष्टज्ञानं वा ईशानम् स्वामिनम् राय धनस्य ईमहे याचामहे । किम् ? सामर्थ्याद् धनम् ॥ ८ ॥

वेङ्कट० शृण्वन्तम् पूषणम् वयम् प्रेरकम्[2] अनष्टधनम् ईशानम् धनम् याचामहे ॥ ८ ॥

पूष॒न् तव॑ व्र॒ते व॒यं न रि॑ष्येम॒ कदा॑ च॒न । स्तो॒तार॑स्त इ॒ह स्म॑सि ॥ ९ ॥

पूष॑न् । तव॑ । व्र॒ते । व॒यम् । न । रि॒ष्ये॒म॒ । कदा॑ । च॒न । स्तो॒तार॑ । ते॒ । इ॒ह । स्म॒सि॒ ॥ ९ ॥

स्कन्द० हे पूषन् ! तव स्वभूते । 'स्वादेवस्य इत्यर्थः[3] । व्रते कर्मणि यागाख्ये सप्तमीश्रुतेर्वर्तमाना इति वाक्यशेषः । त्वदेवस्य यागमनुतिष्ठन्त इत्यर्थः । वयम् न रिष्येम न केनचिदपि हिंस्येमहीत्याशास्महे कदा चन कदाचिदपि । किं कारणम् । यस्मात् स्तोतार ते इह काले यागे स्मसि नित्यं भवाम । यस्मात् त्वां नित्यं स्तुम इत्यर्थः ॥ ९ ॥

वेङ्कट० पूषन् !, तव कर्मणि वयम् न न्यूनीभूता भवेम कदा चन धनविनाशात्[4] । स्तोतार, तव वयम् इह निवासे सुखम् भवाम[5] ॥ ९ ॥

परि॑ पू॒षा प॒रस्ता॒द्धस्तं॑ दधातु॒ दक्षि॑णम् । पुन॑र्नो न॒ष्टमाज॑तु ॥ १० ॥

परि॑ । पू॒षा । प॒रस्ता॑त् । हस्त॑म् । द॒धा॒तु॒ । दक्षि॑णम् । पुन॑ । नः॒ । न॒ष्टम् । आ । अ॒ज॒तु॒ ॥ १० ॥

स्कन्द० पूषा परस्तात् परस्मिन् देशे । दूर इत्यर्थः । हस्तम् दक्षिणम् परि दधातु गच्छता पशूना निरोधार्थं सर्वत स्थापयतु । अस्मादीयान् गच्छत पशून् दक्षिणेन हस्तेन निरुणद्धिवित्यर्थः । यच्च[6] किंचित् स्तम्भादादिना नष्टम् तत् पुनः न अस्माकम् आ अजतु आक्षिपतु । आ भवत्वित्यर्थः ॥ १० ॥

वेङ्कट० गावः गच्छन्तीनाम्[7] अग्रत. पूषा दक्षिणम् हस्तम् परि दधातु । यथा न तस्कराः हरेयुः । नष्टम् अपि अस्मात् पुन अपि प्रेरयतु ॥ १० ॥

"इति चतुर्थाष्टके अष्टमाध्याये दशमो वर्गः" ॥

[ ५५ ]

"भरद्वाजो बार्हस्पत्य ऋषिः । पूषा देवता । गायत्री छन्दः" ।

एहि॒ वां वि॑मुचो नपा॒दाघृ॑णे॒ सं स॑चावहै । र॒थीर्ऋ॒तस्य॑ नो भव ॥ १ ॥

आ । इ॒हि॒ । वाम् । वि॒ऽमु॒च॒ । न॒पा॒त् । आघृ॑णे । सम् । स॒चा॒व॒है॒ । र॒थी । ऋ॒तस्य॑ । न॒ । भ॒व॒ ॥ १ ॥

---

१-१. नाम्नःछान्दसम्यादेरित्वं मूको. २ प्रेरन् मूको. ३-३. त्वदेव मै मूको. ४ भवे अवि' वि', वि' भ्य. ५. भव्य मूको. ६. 'नीम् मूको. ७-७. नास्ति मूको.

स्कन्द० आ इहि आगच्छ याम् त्वां-शब्दस्यायं छान्दसस्तकारलोपः। त्वां हे विमुचः नपात्! संहारकाले प्रसितरा प्रजाः पुनः [1]सृष्टिकाले विमुञ्चतीति[1] विमुक् प्रजापतिः। तस्य नपात् पौत्रः। कथं पुनः पूषा प्रजापतेः पौत्रः। उपनिषत्सु कृत्स्नस्य जगतोऽग्न्यः, अपां च प्रजापतित उत्पत्तिश्रुतेः। अपत्यनाम वा नपाच्छब्दः। प्रजापतेरपत्यभूत! आघृणे। सम् सचावहै व्यत्ययेनेदमेकवचनस्य स्थाने द्विवचनम्। पत्न्यपेक्षं वा। अहं [2]संसेवे। अथवा आवां पत्नीयजमानौ[2] स्तुतिभिर्हविर्भिश्च संसेवावहै। संसेव्यमानश्च रथीः सारथिवचनोऽयं शब्दः। [3]प्रवर्तनसामान्याद् इह[3] नेतरि प्रयुज्यते। ऋतस्य यज्ञस्य नः अस्माकं [4]स्वभूतस्य। आवयोः स्वभूतस्य भव। अथवा 'अस्मदो द्वयोश्च' (पा १,२,५९) इत्येवमेतद्[4] द्वयोर्बहुवचनम्। पूषयजमानापेक्षं[5] च द्विवचनम्। 'अहं त्वां यामिति आवां शब्दस्य छान्दस आकारलोपः। सेवितुम् [illegible] मामिच्छन् आतस्य स्तुत्या[6] हविषा च संसेवे[7], त्वमपि मां संसेवस्व। मो नेता भवेति ॥ १ ॥

वेङ्कट० एहि त्वम् हे मेघस्य पौत्र! 'अद्भ्यः पृथिव्यजायत' इति ब्राह्मणम्, आगतदीप्ते! याम् आवाम्[8] सम् सचावहै, संसृष्टौ भवाव[9], नेता[10] यज्ञस्य अस्माकम् भव ॥ १ ॥

रथीतमं कपर्दिनमीशानं राधसो महः। रायः सखायमीमहे ॥ २ ॥

रथिऽतमम्। कपर्दिनम्। ईशानम्। राधसः। महः। रायः। सखायम्। ईमहे ॥ २ ॥

स्कन्द० रथीतमम् अतिशयेन[11] रथिनम् कपर्दिनम् शिरसि चूडा कपर्द इत्युच्यते, [12]तद्वन्तम्। ईशानम्[13] राधसः धनस्य महः महतः रायः धनानि सखायम् सखिस्थानीयम् ईमहे याचामहे ॥ २ ॥

वेङ्कट० अतिशयेन रथिनम् कपर्दिनम्[14] चूडा कपर्द उच्यते, तद्वन्तम् ईशानम् धनस्य महतः धनानि सखायम् याचामहे ॥ २ ॥

रायो धारास्याघृणे वसो राशिरजाश्व। धीवतोधीवतः सखा ॥ ३ ॥

रायः। धारा। असि। आघृणे। वसोः। राशिः। अजऽअश्व। धीवतःऽधीवतः। सखा ॥ ३ ॥

स्कन्द० रायः धनस्य धारा त्वम् असि [14]धनधनवतोश्चाभेदोपचारेणायं व्यपदेशः[14]। धनस्य धारा [15]प्रतिपादितेऽस्यपमार्थः[15]। तवेत्यर्थः। धाराशब्दश्चात्र धाराया अल्पत्वात् तत्सम्बन्धित्वेऽस्य प्रतिपादितेऽस्य तवैवेत्यर्थः। न च केवलैव धारा। किं तर्हि। वसोः धनस्य यत् तावदल्पं घनं तत् तवेत्यर्थः। हे आघृणे!। यद्यपि धनं तवैवेत्यर्थः। राशिः अपि त्वम् एव। अत्रापि पूर्ववद् धनधनवतोरभेदव्यपदेशः[16]। तस्य सम्बोधनं हे अजाश्व! हे अजाश्व! अजा अश्वसदृशाः शीघ्रगामिनो यस्य सोऽजाश्वः, तस्य सम्बोधनं हे अजाश्व! धीवतोधीवतः यागकर्मवतः-यागकर्मवतः यावान् कश्चिद् यजते सर्वस्य त्वम् सखा सखिस्थानीयः ॥ ३ ॥

---

१. सृष्टि ··· मुञ्च° मूको. २. संसेवे ··· पत्नी° मूको. ३-३. प्रवर्तनमानसमान्यादि मूको. ४. स्वम् ··· ··· °स्मदो° मूको. ५. पू ··· पक्षे मूको. ६. ··· स्तुत्या मूको. ७ संसेवे मूको. ८. आवाम् वि° रूपं; अवाम् मूको. ९. 'भाव मूको १०. नेत मूको. ११. अति ··· मूको. १२-१३ ··· न्तम् मूको. १३. नास्ति मूको. १४-१४. °व्यपदेशो मूको. १५. प्रति ··· °नार्थः मूको. १६. °भेदो व्यप° मूको.

वेङ्कट० धनस्य दाता त्वम् असि आघृण ! तथा वसो धनस्य राशि च त्वमसि अजाश्व !।
'पूष्णोऽजाश्व' ( तै बृदे ४,१४१ )। पूष्णोऽजा अश्वा भवन्ति। कमवत -कर्मवत सखा ॥ ३ ॥

पूषणं न्व१जाश्वमुप स्तोषाम वाजिनम् । स्वसुर्यो जार उच्यते ॥ ४ ॥

पूषणम् । नु । अजऽअश्वम् । उप । स्तोषाम । वाजिनम् । स्वसुः । यः । जारः । उच्यते ॥ ४ ॥

स्कन्द० पूषणम् नु क्षिप्रम् अजाश्वम् अजैरश्वसदृशैः शीघ्रगामिभिर्युक्तम् उप स्तोषाम उपस्तुमाः
स्यामास्महे। वाजिनम् अन्नवन्तं वेगवन्तं वा। य कीदृशम्। उच्यते—स्वसु । स्वसा भगिनी
पूष्ण उषा । कथम्। सृष्टिकाले 'एकस्मात् प्रजापतेर्जातौ तौ' तेन पूष्ण उषा भगिनी। अथ वा
एवकस्माद् आदित्याख्यात् तेजस्समूहाद् उषस पूष्णश्च जन्म, तदपेक्षम् अस्या भगिनीत्वम्। अथवा
सवयसारित्वाद् उषा स्वसेत्युच्यते। तस्या य जार उच्यते। अन्यस्या वा कस्याश्चित् स्वसु
भ्राता। श्रूयते यथा प्रजापति 'प्रजापतिर्वै स्वा दुहितरम् 'अभ्यध्यायत्' ( ऐब्रा ३,३३ ) इति।
अथवा स्वसु उषस जार जरयिता नाशयिता उच्यते जनै। आदित्यो हि पूषा। स च
स्वोदयेनोषस जरयति ॥ ४ ॥

वेङ्कट० पूषणम् क्षिप्रम् अजाश्वम् उप स्तुम अन्नवन्तम्। स्वसु उषस य जरयिता उच्यते।
अपि सोपपतिरिव जार ॥ ४ ॥

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः । भ्रातेन्द्रस्य सखा मम ॥ ५ ॥

मातुः । दिधिषुम् । अब्रवम् । स्वसुः । जारः । शृणोतु । नः । भ्राता । इन्द्रस्य । सखा । मम ॥ ५ ॥

स्कन्द० मातु दिधिषुम् पूष्णो माता 'रात्रि, सा ह्येनं जनयति'। दिधिषुशब्द यो ज्येष्ठस्य
भ्रातुर्भार्यायाम् अनियुक्त प्रवर्तते "तस्य वा वाचक"। ज्येष्ठाया "वा भगिन्याम् अनूढायां" य
कनीयस्या उद्वाहा तस्य वा वाचक। तद्वदेव दृष्टमपि स मातर प्रति सम्भयति। अतोऽत्र
दिधिषुशब्द एष धारणे इत्येतस्य क्रियाशब्दो विज्ञायते। स्वस्या मातृ रात्र दिधिषु
धारयितारम्। स्वोदयेन निरोद्धारमित्यर्थ। पूषा ह्यादित्य स स्वोदयेन रात्रि निरुणद्धि।
तम् अब्रवम् ब्रवीमि यथा विवक्षितम्। स चोच्यमान "स्वसु जार" शृणोतु न अस्माकम्
भ्राता इन्द्रस्य उभयोरिन्द्रापूष्णोरेकस्मात् प्रजापतेर्जातत्वात्। सखिस्थानीय मम ॥ ५ ॥

वेङ्कट० माता रात्री, तस्या पतिम् स्तौमि। उषस जार शृणोतु अस्मान् इति। इन्द्रस्य भ्राता
मम च सखा इति ॥ ५ ॥

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् । देवं वहन्तु बिभ्रतः ॥ ६ ॥

---

१ °दय मूको २ २ °जाताै मूको ३ ३ च वा मूको ४ स्वयासा°त्वा° मूको
५ ५ तस्याथे मूको ६ भो मोक्त मूको ७ ७ °ध्याय जार° मूको ८ स्वनर विंरूप, स्वने
ह ९ ९ ॥ जनयति मूको १० भ्राता स भ्राता मूको ११ ११ तस्य मूको १२-१२ वा
म भाग्या मूको १३ १३ जार मूको १४ १४ स्तोम् प्र स्तप

स्कन्द० किं कारणं यतोऽसौ न कस्माद् एव केवलम् । किं तर्हि । उत-शब्दोऽप्यर्थे । घ-शब्दः पादपूरणः । अपि सः पूषा रथीतमः [1]अतिशयेन रथी सख्या सह[1] सत्पतिः सतां पालयिता युजा सहायेन योग्येन वा । कतमेन । इन्द्रः तृतीयार्थे प्रथमैषा । इन्द्रेण[2] वृत्राणि शत्रून् असुरान् वा जिघ्नते अत्यर्थं[3] हन्ति ॥ २ ॥

वेङ्कट० अपि च खलु सः अतिशयेन रथी सख्या सतां पतिः सहायेन पूष्णा[4] इन्द्रः असुरान् अत्यन्तं हन्ति ॥ २ ॥

उ॒तादः॑ परु॒षे गवि॒ सूर॑श्च॒क्रं हि॑र॒ण्यय॑म् । न्यै॑रयद् र॒थीत॑मः ॥ ३ ॥

उ॒त । अ॒दः । प॒रु॒षे । गवि॑ । सूरः॑ । च॒क्रम् । हि॒र॒ण्यय॑म् । नि । ऐ॒र॒य॒त् । र॒थिऽत॑मः ॥ ३ ॥

स्कन्द० उत अपि [5]अदः चक्रस्य[5] वाऽयं व्यवहितस्यापि प्रतिनिर्देश इदं चक्रमिति, [6]तमन्यर्थे वा[6] प्रथमा । अमुष्मिन् परुषे[7] परुषशब्दो[8] भासुरवचनः । भासुरे शुक्लवर्णे गवि द्युलोके गौरित्य-पठितमिह[9] द्युनाम । सूरः[10] सतां गन्ता पूषा चक्रम् आदित्यमण्डलाख्यम् हिरण्ययम् हिरण्मय [11]तत्सदृशम् उज्ज्वलतमम्[11] नि ऐरयत् नियतेन मार्गेण प्रेरयति अदृयायाऽस्तमयाय च रथीतमः अतिशयेन [12]रथी । यस्यादित्यमण्डलमत्र[12] गोशब्देनोच्यत इति मन्यते[13] तत्र गवीति सप्तमीगुणेरय-स्थित[14] इति वाक्यशेषः । गवि आदित्यमण्डलेऽवस्थितः पूषा चक्रं प्रेरयति । चक्राकृति ह्येव वाऽऽदित्यमण्डलं रथचक्रं चोच्यते । अथवा उदकं [15]चक्रम् । उदकं[15] कथम् । चक्रशब्दो हि समूहवाची, ब्राह्मणचक्रं यज । चक्रमिति सामर्थ्याद्यात्रोदकसमूहः परिगृह्यते । चक्रतेर्वा[16] गत्यर्थस्य चक्रमुदकम् । [17]तत् पृथिवीं प्रति[17] पृथिवीतो रश्मिभिरात्मानं प्रति[18] प्रेरयतीति शिष्टपदयोजना सदृशी ॥ ३ ॥

वेङ्कट० अपि च एतत् पर्वतति[19], आदित्ये ( तु. या २,६ ) सुवीर्यः पूषा चक्रम् हिरण्मयम्[20] नितराम् ईरयति रथतमः ॥ ३ ॥

यद॒द्य त्वा॑ पुरुष्टुत॒ ब्रवा॑म दस्र मन्तुमः । तत्सु नो॒ मन्म॑ साधय ॥ ४ ॥

यत् । अ॒द्य । त्वा॒ । पु॒रु॒ऽस्तु॒त॒ । ब्रवा॑म । द॒स्र॒ । म॒न्तु॒ऽमः॒ । तत् । सु । नः॒ । मन्म॑ । सा॒ध॒य॒ ॥ ४ ॥

स्कन्द० यत् अद्य त्वां हे पुरुष्टुत ! बहुभिः स्तुत ! पूषन् ! ब्रवाम इदमिदं च अस्माकम् कुर्विति ब्रूमः । हे दस्र ! दर्शनीय ! तमसां वा उपक्षपयितः ! मन्तुमः मन्तु- मननं स्तुतिज्ञानं वा तद्वन् ! तत् सुष्ठु अस्माकम् मन्म ज्ञेयं स्तुत्यम् वा साधय । तत्कुरु इति यावदर्थः ॥ ४ ॥

---

1-1. अत … सह मूको. 2. इन्द्रो मूको. 3. अर्थं मूको. 4. पूषः वि[1] हरं; पूष्णा ह. 5-5. शब्दचक्रस्य अ वि[3]. 6-6. द्विः वि[1]. 7. ऽरुषे मूको. 8. पुरुष[0] मूको. 9. गौ…मिह मूको. 10. एरं मूको. 11-11. सदृशमुज्ज्वल (ज्व अ.) लतम मूको. 12-12. रथीयाऽऽस्त्यादि[0] वि[1] अ; रथीया…त्या[0] वि[3]. 13. मन्यते वि[3] अ. 14. [0]गेरवस्थित[0] वि[3] अ. 15-15. चक्रमुत मूको. 16. वो मूको. 17-17. त… मूको. 18. पृथिवी वि[1]. 19. [0]र्वेति मूको. 20. [0]मयम[0] ह.

वेङ्कट० यत् अद्य त्वा[1] हे बहुभिः स्तुत! अवाम दर्शनीय! ज्ञानवन्!, तत् सुष्ठु साधय अस्माकं स्तोत्रम्, मदीयं वा मनम् ॥ ४ ॥

इमं च नो गवेषणं सातये सीषधो गणम् । आरात् पूषन्नसि श्रुतः ॥ ५ ॥

इमम् । च । नः । गोऽएषणम् । सातये । सीसधः । गणम् । आरात् । पूषन् । असि । श्रुतः ॥५॥

स्कन्द० इमम् च नः अस्माकं सम्बन्धिनम्[2] गवेषणम् गा च इच्छति सः[3] "गवेषणस्तं त्वम्"[4] सातये लाभाय सीषधः साधय गणम् । गण.[5] समूह उच्यते, ऋत्विग्यजमानसमूहः[6] 'पुत्रपौत्रसमूहो वा । यथा चाचारसम्बन्धी[7] ऋत्विग्यजमानसमूहः[8] पुत्रपौत्रसमूहो वा गोकामो[9] 'गा लभेत'[9] तथा कुर्विस्पर्धः । किं कारणम् । उच्यते— आराद् दूरे हे पूषन्! असि श्रुतः[10] । दाता पूषेत्येवमस्माभिः श्रुतोऽसि[11] प्रख्याताद्दातृत्वेनेत्यर्थः[12] ॥ ५ ॥

वेङ्कट० इमम् च अस्माकं गवामेषितारं दानाय सीषधः[13] मनुष्यगणम् । दूरादेव त्वं भवसि पूषन्![13] विश्रुतः ॥ ५ ॥

आ ते स्वस्तिमीमह आरेअघामुपावसुम् । अद्या च सर्वतातये श्वश्च सर्वतातये ॥६॥

आ । ते । स्वस्तिम् । ईमहे । आरेऽअघाम् । उपऽवसुम् ।

अद्य । च । सर्वऽतातये । श्वः । च । सर्वऽतातये ॥ ६ ॥

स्कन्द० ते तव सम्बन्धिनीं त्वत्कर्तृकाम् स्वस्तिम् अविनाशम् आ ईमहे आयाचामहे वयम् आरेअघाम्[14] आरे दूरे अघं पापं यस्याः सा [15]"आरेअघा ताम्[16] । अत्यर्थम्[17] पापप्रणाशनीमित्यर्थः । उपावसुम्[18] उपगतधनाम् अद्य च सर्वतातये 'सर्वदेवात्तातिल्'[19] ( पा ४,४,१४२ ) इति स्वार्थे तातिल्प्रत्ययः[20] । [21]स्व' च चशब्दोऽत्र आगामिकालमात्रोपलक्षणम् । तत्रायमर्थः[21]— अद्य च सर्वस्मै प्रयोजनाय । अथवा तातिशब्दः तनोतेर्विस्तारार्थस्य । अद्य च आगामिनि आगामिनि च काले सर्वस्मै प्रयोजनाय च काले सर्वप्रयोजनविस्तारार्थमित्यर्थः ॥ ६ ॥

वेङ्कट० आ याचामहे[22] स्वस्तिम् त्वदीयाम् दूरेपापाम् सन्निकृष्टधनाम् अद्य च श्वः च सर्वस्य धनस्य[23] विस्ताराय[24] ॥ ६ ॥

[25]इति चतुर्थाष्टके अष्टमाध्याये द्वाविंशो वर्गः[25] ॥

---

१. द्रा स्त स्कं. २. सम्बन्धि वि[१] अ. ३. सा मूको. ४-४. 'त्वस्तं मूको. ५. गण मूको. ६-६. 'मूह···स' मूको. ७. 'समूह वि[१] अ; 'सह वि[१]. ८. गोकामा मूको. ९-९. गाद्याद्' वि[१]; गालभते वि[१]. १०. श्रुत मूको. ११. श्रुतोऽपि वि[१]. १२. प्रत्याख्यातदातृत्व मूको. १३. नास्ति मूको. १४. 'प मूको. १५. 'अघाम मूको. १६-१६. 'अघावता वि'; 'अघानमता वि[१] अ. १७. मत्यर्थम मूको. १८. 'वसुम मूको. १९. सार्वदेवत्तातिल् मूको. २०. तातिप' मूको. २१-२१. स्वस्तस्च शब्दोऽत्र ('च° वि[१] ) गामिकालमत्रोप···र्थः मूको. २२. 'ई ते वि[१] स्कं. २३. नास्ति स्कं. २४. 'स्तारब मूको. २५-२५. नास्ति मूको.

[ ५७ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्रापूषणौ देवता । गायत्री छन्दः[1] ।

इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥ १ ॥

इन्द्रा । नु । पूषणा । वयम् । सख्याय । स्वस्तये । हुवेम । वाजऽसातये ॥ १ ॥

स्कन्द० 'सूक्त इन्द्रोऽपि प्रथमे'। पञ्चमेऽस्मिन् सूक्ते[2] इन्द्रोऽपि देवता, न केवलं पूषैव । इन्द्रा नु पूषणा परस्परापेक्षस्य अत्रैकैकेन शब्देन [3]द्वयोरपीन्द्रापूष्णोरभिधानम् । तेन[3] प्रत्येकं द्विवचनप्रवृत्तिः । नु इति क्षिप्रनाम । क्षिप्रम् इन्द्रापूषणौ वयम् सख्याय सखिभावाय स्वस्तये अविनाशाय च हुवेम आह्वयामः[4], वाजसातये अन्नसम्भजनाय च ॥ १ ॥

वेङ्कट० इन्द्रापूषणौ क्षिप्रम् वयम् सख्याय अविनाशाय ह्वयामहे, अन्नलाभाय च ॥ १ ॥

सोममन्य उपासदत् पातवे चम्वोः सुतम् । करम्भमन्य इच्छति ॥ २ ॥

सोमम् । अन्यः । उप । असदत् । पातवे । चम्वोः । सुतम् । करम्भम् । अन्यः । इच्छति ॥ २ ॥

स्कन्द० सोमम् अन्यः एकः उप असदत् [5]उपसीदति इन्द्रः[5] पातवे पातुम् चम्वोः अधिषवणफलकयोः सुतम् अभिषुतम्[6] । करम्भम् दध्ना घृतेन वा [7]मिश्रिताः सक्तवः[7] करम्भ उच्यते तम् अन्यः इच्छति पूषा ॥ २ ॥

वेङ्कट० सोमम् एकः[8] उप असीदद् इन्द्रः पातुम् अधिषवणफलकयोः अभिषुतम् । करम्भम् पूषा इच्छति ॥ २ ॥

अजा अन्यस्य वह्नयो हरी अन्यस्य संभृता । ताभ्यां वृत्राणि जिघ्नते ॥ ३ ॥

अजाः । अन्यस्य । वह्नयः । हरी इति । अन्यस्य । सम्ऽभृता । ताभ्याम् । वृत्राणि । जिघ्नते ॥ ३ ॥

स्कन्द० अजाः अन्यस्य वह्नयः 'वह्निः' ( निघ १,१४ ) इति अश्वनाम । अश्वाः वोढार इत्यर्थः । कस्य । पूष्णः । हरी अन्यस्य इन्द्रस्य सम्भृता सम्यग्भृतौ सुपुष्टौ[9] । ताभ्याम् इत्यत्रापि तृतीया । तृतीयाश्रुतेर्या गत्येति[10] वाक्यशेषः । ताभ्यां हरिभ्यां हेतुभूताभ्यां गत्वा स इन्द्रः वृत्राणि शत्रून् मेघवृन्दानि वा जिघ्नते पुनःपुनर्हन्ति ॥ ३ ॥

वेङ्कट० अजाः पूष्णः वहन्तः[11] । हरी इन्द्रस्य सम्भृतौ । सः ताभ्याम् शत्रून् हन्ति ॥ ३ ॥

यदिन्द्रो अनयद् रितो महीरपो वृषन्तमः । तत्र पूषाभवत् सचा ॥ ४ ॥

---

1-1. नास्ति मूको. 2. नास्ति वि[1]. 3-3. 'धान...तेन मूको. 4. आह्वयामः मूको. 5-5. 'सीदद मूको. 6. 'भिषुतं मूको. 7-7. 'ता स...वे वि[1] अ; 'ता स्ते वि[1]. 8. पञ्चकम् वि[1] लपं; एकम् ख. 9. सुपुष्टौ मूको. 10. गत्वेति मूको. 11. नास्ति मूको.

यत्। इन्द्रः। अनयत्। रितः। महीः। अपः। वृषन्ऽतमः। तत्र। पूषा। अभवत्। सचा ॥ ४ ॥

स्कन्द० अयम् यत्[1] 'मेघस्थानम् इन्द्रः'[2] रितः[3] गतः प्राप्तः सन्। अथवा यदिति सप्तम्याः लुक्। यस्मिन् काले इन्द्रो मेघं प्रति गतः। अनयत् नयति पृथिव्यां पातयति महीः अपः महान्ति[4] वृष्टिलक्षणान्युदकानि वृषन्तमः अतिशयेन वर्षिता। तत्र तस्मिन् स्थाने काले च पूषा अपि अभवत् भवति सचा सहायः। पूष्णा सहितो वर्षति न केवल इत्यर्थः ॥ ४ ॥

वेङ्कट० यदा इन्द्रः नयति गच्छन्तीः महतीः अपः वर्षितृतमः। तत्र[5] पूषा भवति सहायः ॥ ४ ॥

तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव । इन्द्रस्य चा रभामहे ॥ ५ ॥

ताम्। पूष्णः। सुऽमतिम्। वयम्। वृक्षस्य। प्र। वयाम्ऽइव। इन्द्रस्य। च। आ। रभामहे ॥ ५ ॥

स्कन्द० तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। 'या स्तोत्रनुग्रहात्मिका'[6] ताम् पूष्णः सुमतिम् शोभनां बुद्धिम्[7] वयम् वृक्षस्य 'वयाम् इव'[8]। वयाः[9] शाखाः[10] उच्यन्ते ( नि. या १,४ )। यथा कश्चिद् वृक्षस्य शाखाम्[8] एवम्। न च केवलस्य पूष्णः। किं तर्हि। इन्द्रस्य च प्र आ रभामहे प्रकर्षेणाऽऽश्रयामः[11] ॥ ५ ॥

वेङ्कट० ताम् पूष्णः स्वभूताम् सुमतिम् वयम् वृक्षस्य शाखामिव प्रकर्षेणाऽऽश्रयामः, इन्द्रस्य च ॥ ५ ॥

उत् पूषणं युवामहेऽभीशूँरिव सारथिः । मह्या इन्द्रं स्वस्तये ॥ ६ ॥

उत्। पूषणम्। युवामहे। अभीशून्ऽइव। सारथिः। मह्यै। इन्द्रम्। स्वस्तये ॥ ६ ॥

स्कन्द० उत् युवामहे यु मिश्रणे। ऊर्ध्वं मिश्रयामः[12] उत्क्षिपामः। स्वार्थसाधनार्थम् उत्थापयाम इत्यर्थः। अथवा 'स्तौति यौति रौति' ( निघ ३,१४ ) इत्यर्चतिकर्मसु[13] पाठात् यौतिरत्र स्तुत्यर्थः। उच्छ्रयस्तु[14] धारयन्नुत्पादी। स्तुम इत्यर्थः। कम्। पूषणम्। कथम्। अभीशून् इव सारथिः यथाऽश्वगमनाद्[15] उत्क्षिपति यौति वा सारथिः तद्वत्। किमर्थम्[16]। मह्यै स्वस्तये महते अविनाशाय। न च केवलं पूषणम्। किं तर्हि। इन्द्रम् च ॥ ६ ॥

वेङ्कट० पूषणम् वयम् उत् युवामहे। अभिमुखम् आगमनम् उत्थयः। अभीशून् इव सारथिः महते अविनाशाय, इन्द्रम् च ॥ ६ ॥

[17]इति चतुर्थाष्टके अष्टमाध्याये त्रयोविंशो वर्गः[17] ॥

[५८]

[18]भरद्वाजो बार्हस्पत्य ऋषिः। पूषा देवता। त्रिष्टुप् छन्दः, द्वितीया जगती[18]।

शुक्रं ते अन्यद् यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ १ ॥

---

1. नास्ति मूको. २-२. °मयः वि²; °मभिन्द वि² अ. ३. रितं वि². ४. महान्ति वि². ५. तु मूको. ६-६. यो स्तोत्र° वि². ७. सुबं वि² अ. ८-८. वयमिव वि² अ. ९. वयां मूको. १०. शाखा मूको. ११. °श्रयाम मूको. १२. विश्रयाम वि². १३. °र्चयति° वि². १४. स्च्छ° मूको. १५. °ग्रमहा° वि² अ. १६. त्रुटितम् मूको. १७-१७. नास्ति मूको.

शुक्रम् । ते । अन्यत् । यजतम् । ते । अन्यत् । विषुरूपे इति विषुऽरूपे । अहनी इति । द्यौःऽइव । असि ।
विश्वाः । हि । मायाः । अवसि । स्वधाऽवः । भद्रा । ते । पूषन् । इह । रातिः । अस्तु ॥ १ ॥

स्कन्द० शुक्रम् ते अन्यत् । [1]शुक्रशब्दोऽत्र शुक्लपर्याय । शुक्लं ते तव अन्यत् एकम् । किं पुनस्तत् । सामर्थ्याद् रूपम् । यजतम् ते अन्यत् । यजतशब्दोऽत्र शुक्लप्रतियोगित्वाद् लोहितपर्यायः । लोहितं ते अन्यद् अपरं रूपम्[1] । पूषा आदित्यः तस्य मध्यन्दिने शुक्लं रूपं लोहितम् उदयास्तमययोः । अथवा शुचेर्दीप्त्यर्थस्य [2]शुक्रो मत्वर्थीयः । शुक्रं दीप्तिमद् उच्यते । दीप्तिमद् ते तव एकं रूपं मण्डलाख्यम् । यजतं यष्टव्यम् अन्यत् मण्डलस्याधिष्ठायकम् । ते चैते विषुरूपे परस्परं भिन्नरूपे शुक्ललोहितस्वरूपेण । ते वा अहनी अहोरात्रे एते त्वमसि । तव चैते कर्मणी, यतस्त्वत्कर्तृके, एते अतस्त्वमसि,[1] द्यौः इव च त्वम् असि । यथा[2] द्यौर्व्यापिनी तथा त्वमपीत्यर्थः । विश्वाः हि हि-शब्दोऽत्र चार्थे । [3]सर्वाश्च मायाः प्रज्ञाः[3] अवसि प्रज्ञाहेतुभूतप्रकाशदानद्वारेण त्वं पालयसि । हे स्वधावः ! स्वधेत्युदकनाम ( द्र. निघ १,१२ ), अन्ननाम ( द्र. निघ २,७ ) वा । तस्माद्धविर्लक्षणेन वा तेन तद्वन् ![4] किञ्च भद्रा कल्याणी ते तुभ्यं हे पूषन् ! इह अस्मदीये यज्ञे रातिः हविर्दानम् अस्तु भवतु । अथवा भद्रा ते इति ते-शब्द. 'कर्तृकर्मणोः कृति' ( पा २,३,६५ ) इति कर्तृलक्षणषष्ठ्यन्तः । कल्याणी त्वत्कर्तृका रातिरिहास्तु । कल्याणं दानम् इहास्मभ्यं त्वं देहीत्यर्थः ॥ १ ॥

वेङ्कट० शुक्रम् ते अन्यत् रूपम् । यजतशब्दः[5] सामर्थ्यात् कृष्णवचनः कृष्णम् अन्यत् । स त्वम् नानारूपे अहोरात्रे आदित्य इव च भवसि । यथाऽहोरात्राभ्यां युक्त आदित्यः । तस्य हि पार्श्वयोः अहोरात्रे भवतः । यास्कस्त्वाह—'शुक्रम् ते अन्यत् । लोहितं ते अन्यत् । 'यजतं ते अन्यद्' । यज्ञियं ते अन्यत्'[6] ( या १२,१७ ) इति । सर्वाणि प्रज्ञानानि रक्षसि अन्नवन् ![6] । अन्नवती ते पूषन् ! मयि रातिः अस्तु ॥ १ ॥

अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।
अष्ट्रां पूषा शिथिरामुद्वरीवृजत् संचक्षाणो भुवना देव ईयते ॥ २ ॥

अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियम्ऽजिन्वः । भुवने । विश्वे । अर्पितः ।
अष्ट्राम् । पूषा । शिथिराम् । उत्ऽवरीवृजत् । सम्ऽचक्षाणः । भुवना । देवः । ईयते ॥ २ ॥

स्कन्द० अजाः अश्वाः शीघ्रगमनादिना सादृश्येनाश्वसदृशा यस्य सः अजाश्वः पशुपाः पशूनां पालयिता वाजपस्त्यः वाजम् अन्नम् । पस्त्यं गृहम् । हविर्लक्षणम् अन्नं गृहं यस्य ■ वाजपस्त्यः । यत्रैव हविर्लभ्यते तत्रैव निवसतीत्यर्थः[7] । धियंजिन्वः प्रज्ञया प्रीणयिता[8] विश्वे सर्वस्मिन् अर्पितः । ऋ गतौ इत्यस्य ण्यन्तस्य रूपम् । गमितः । रश्म्यात्मनाऽनुप्रवेशित इत्यर्थः । केन । सामर्थ्याद्

---

1-1. मूको. भाष्यान्तरात् निरुक्तग्रन्थीयं स्कन्दस्वामिभाष्यम् ( १२,१७ ) इहोद्धृत्य पूरितः पाठः. 2. थैयं मूको. 3-3. सर्वाश्चमाया प्रज्ञा मूको. 4. तद्वन् मूको. 5. यजत° 6-6. नास्ति मूको. 7. °न्वत् इति वा मूको. 8. मत्त च भद् मूको. 9. निवसतीत्यर्थः व वि°; निवसेत्यर्थ वि°. 10. °ता मुखेन मगता वै मूको.

पूषा । सुऽबन्धुः । दिवः । आ । पृथिव्याः । इळः । पतिः । मघऽवा । दस्मऽवर्चाः ।
यम् । देवासः । अददुः । सूर्यायै । कामेन । कृतम् । तवसम् । सुऽअञ्चम् ॥ ४ ॥

स्कन्द० यं देवास इति यच्छब्दात् तच्छब्दोऽध्याहर्तव्यः । सः पूषा सुबन्धुः बन्धवो ज्ञातयः, ते [1]शोभनाः श्रीमद्वाः यस्य स[1] सुबन्धुः । दिवः आ आकारोऽत्र सामर्थ्याच्चार्थे । दिवश्चापि पृथिव्याः च इळ. । 'इट्' ( तु॰ निघ २,७ ) इत्यन्ननाम । अन्नस्य च पतिः स्वामी मघवा धनवांश्च दस्मवर्चाः दस्म दर्शनीयं तमःक्षयकरं[2] वा वर्चो दीप्तिर्यस्य स[3] दस्मवर्चाः । स कीदृशः पूषा । उच्यते—यम् देवासः देवाः अददुः दत्तं दत्तवन्तः सूर्यायै सूर्यस्य भार्यायै । यमभ्यर्थ्य सूर्यस्य भार्यया दूतं प्रेषितवन्त इत्यर्थः । कामेन कृतम् स्वेच्छया दूतं कृतम् । अभ्यर्थनया दौत्यम् आपादितमित्यर्थः । तवसम् महान्तम् स्वञ्चम् सुगमनम् ॥ ४ ॥

वेङ्कट० पूषा शोभनो बन्धुः दिवः च पृथिव्याः च अन्नस्य पतिः[4] धनवान् दर्शनीयतेजाः, यम् पूषणम् देवाः दत्तवन्तः[5] सूर्यायै कामेन[6] कृतम् महान्तम् सुगमम् ॥ ४ ॥

[7]इति चतुर्थाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[7] ॥

[ ५९ ]

[8]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्राग्नी देवता । बृहती छन्दः, सप्तम्यादाद्यन्तस्तः अनुष्टुभः[8] ।

प्र नु वोचा सुतेषु वां वीर्या३ यानि चक्रथुः ।
हतासो वां पितरो देवशत्रव इन्द्राग्नी जीवथो युवम् ॥ १ ॥

प्र । नु । वोच । सुतेषु । वाम् । वीर्या । यानि । चक्रथुः ।
हतासः । वाम् । पितरः । देवऽशत्रवः । इन्द्राग्नी इति । जीवथः । युवम् ॥ १ ॥

स्कन्द० 'प्र ऐन्द्राग्ने' । द्वे परे सूक्ते इन्द्राग्निदेवत्ये । नु क्षिप्रम् प्र वोच लिङि उत्तमपुरुषैकवचने 'वच उम्' ( पा ७,४,२० ) इत्युमागमो 'द्विर्वचनाभावश्च छान्दसत्वात्' । प्रब्रवीम्यहम् सुतेषु सोमेषु वाम् युवयोः वीर्या वीरकर्माणि[9] यानि चक्रथुः कृतवन्तौ स्थः । कतमानि तानि । उच्यते—हतासः हता युवाभ्याम् । के । उच्यते—वाम् पितरः युवयोः पितरः । पितरोऽपि युवाभ्यां हताः किमुतान्ये सम्बन्धिन इत्यर्थः । कीदृशाः । उच्यते—देवशत्रवः देवाः शत्रवो येषां ते देवशत्रवः । अयष्टार इत्यर्थः । ये हि न यजन्ते तेषां देवाः शत्रवः । तांश्च हत्वा स्वयं हे इन्द्राग्नी । जीवथः युवम् । देवद्विषः सम्बन्धिनोऽपि हतवतोर्युवयोश्चित्त-पीडाऽपि नास्तीत्यर्थः ॥ १ ॥

---

१-१. शोभ⋯यस्य प्रथमश्रीमद्वा स वि[1]; शोभ⋯यस्य श्रीपदाः स वि[2]. २. °वरो मूको. ३. नास्ति मूको. ४. धर्षितिः वि[1] अर्प; पशनिः ल. ५. दत्तवन्त ल अर्प. ६. °मेन कामेन अर्प. ७-७. नास्ति मूको. ८-८. °वः सप्तम्य° वि[1]; °प सप्तम्य° वि[2]. ९. °कर्माणि वि[1].

वेङ्कट० प्र ब्रवीमि क्षिप्रम् सुतेषु सोमेषु युवयोः वीर्याणि, यानि युवाम् चक्रथुः । हताः युवाभ्याम् पातयितारः पृथिव्याः असुराः । हे इन्द्राग्नी! 'युवां तु असुरैः अहतौ जीवथः'[1] ॥ १ ॥

बळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ॥ २ ॥

बट् । इत्था । महिमा । वाम् । इन्द्राग्नी इति । पनिष्ठः । आ ।
समानः । वाम् । जनिता । भ्रातरा । युवम् । यमौ । इहेहऽमातरा ॥ २ ॥

स्कन्द० बट् इत्था इति द्वयोः सत्यनाम्नोः 'अभ्यासे भूयांसम् अर्थं मन्यन्ते' (नि १०,४२) 'इति अर्थभूयस्त्वेनाभ्यासो भवत्ययम्। सत्यम् महिमा माहात्म्यम् वाम् युवयोः हे इन्द्राग्नी! पनिष्ठः। पण व्यवहारे स्तुतौ च। अतिशयेन स्तुत्य इत्यर्थः। आकारस्तु पदपूरणः, चार्थे वा। परापेक्षया च समुच्चयः। समानः च वाम् युवयोः जनिता[3] जनयिता प्रजापतिः। समानपितृकत्वाच भ्रातरौ युवाम्। न च क्रमवज्जन्मानौ[4]। किं तर्हि। यमौ युगपज्जातौ इहेहमातरा इह इहैषो माता ययोस्तौ इहेहमातरौ। इहेहेति च[5] वीप्सा सन्निहितारोपजगत्प्रदेशप्रतिनिर्देशार्था[6]। प्रदेशे माता ययोस्तौ इहेहमातरौ। इहेहेति च[5] वीप्सा सन्निहिताशेषजगत्प्रदेशप्रतिनिर्देशार्था[6]। सर्वजगत्प्रदेशव्यापिमातृकावित्यर्थः[6]। का पुनरिन्द्राग्न्योः माता। आत्मैव वा सर्वजगत्प्रकृतित्वात्, अदितिर्वा देवमातृत्वात्। तौ चोभावपि सर्वत्र स्तः। आत्मा सर्वगतत्वाद्[7], अदितिः देवमाता माहाभाग्यात्[8] ॥ २ ॥

वेङ्कट० 'सत्यमेव इत्थम् युवयोः महिमा इन्द्राग्नी। अतिशयेन स्तोतव्यः। एक एव युवयोः जनयिता। तत्रश्च भ्रातरौ युवां भवथः। युगपज्जातौ इहेहमातरा इह चेह च मातरौ ययोस्तौ तथोक्तौ। †अत्रेहपि वीर्यमाता† भवति, इन्द्रस्यादितिः'[9] ॥ २ ॥

ओकिवांसा सुते सचाँ अश्वा सप्ती इवादने ।
इन्द्रा न्व१ग्नी अवसेह वज्रिणा वयं देवा हवामहे ॥ ३ ॥

ओकिऽवांसा । सुते । सचा । अश्वा । सप्ती इवेति सप्ती॑ऽइव । आदने ।
इन्द्रा । नु । अग्नी इति । अवसा । इह । वज्रिणा । वयम् । देवा । हवामहे ॥ ३ ॥

स्कन्द० ओकिवांसा उच समवाये इत्यस्यैतद्रूपम्। समवेतौ। संहितावित्यर्थः। सुते सोमे सचा सह सर्वे ऋत्विग्यजमानाः अश्वा सप्ती इव। सप्ती इति सपतेर्गतिकर्मणो[10] रूपम्। यथा कश्चिद् अश्वबन्धः अश्वौ सप्ती स्तुत्यौ अत्यन्तोत्कृष्टौ आदने भक्षणस्थाने आह्वयेत् तद्वत्। इन्द्रा नु

1-1. नास्ति वि[1] लपे. 2-2. इत्यर्थः यस्ते ··· या (यौ वि[1]) नक्रस्या ("क्रया वि[2].) ···वयो हे इन्द्राग्नी ···तारस्तु पदपूरणार्थे वा परापेक्षया च स ···श्च वा युवयो ··· ता (ता वि[1]) मूको. 3. °वज्जन्य (°न्म वि[1]) नो मूको. 4. नास्ति वि[1]. 5. °जगत्प्रति (प्र वि[2]) निर्देशार्थ (र्थः वि[1]) मूको. 6. °तृकोऽदीत्यर्थः मूको. 7. सर्वगतत्वाद् म वि[1]. 8. महाभाग्यात् मूको. 9-9. नास्ति वि[1]. †-† °प्रे परिधा° ल लपे. 10. °सर्वते° मूको.

अग्नी इन्द्रा[1] अग्नी इति परस्परापेक्षमत्र द्विवचनम्। 'नु इत्यपि'[2] क्षिप्रनाम। क्षिप्रम् इन्द्राग्नी अवसा तर्पणेन निमित्तेन। सोमेन तर्पयितुमित्यर्थः। इह यज्ञे वाजिना बलवन्तौ। यद्यपि इन्द्र एवैको[3] वज्री नाग्निः[4], तथापि साहचर्याद् अयमुभयोः वज्रिव्यपदेशः। वयम् देवा देवौ हवामहे ॥ ३ ॥

वेङ्कट० 'सङ्गतौ सुते सोमे सह अश्वौ इव सरणशीलौ घासेऽदनीये इन्द्राग्नी'[5] 'क्षिप्रम् रक्षणार्थम् इह आयुधवन्तौ वयम् देवौ हवामहे'[5] ॥ ३ ॥

य इन्द्राग्नी सुतेषु वां स्तवत् तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥ ४ ॥

यः । इन्द्राग्नी इति । सुतेषु । वाम् । स्तवत् । तेषु । ऋतऽवृधा ।
जोषऽवाकम् । वदतः । पज्रऽहोषिणा । न । देवा । भसथः । चन ॥ ४ ॥

स्कन्द० यः स्तोता हे इन्द्राग्नी! सुतेषु सोमेषु वाम् युवाम् स्तवत् आदरेण स्तौति, तेषु व्यत्ययेन षष्ठ्येकवचनस्य स्थाने सप्तमीबहुवचनमेतत्। तस्य ऋतावृधा सत्यस्य यज्ञस्य वा वर्धयितारौ जोषवाकम् वदतः। जुषी प्रीतिसेवनयोः। प्रीणयितृ सेव्यं वा[6] वचनं जोषवाकः[8]। अत्यन्तोत्कृष्टस्तुतिरित्यर्थः। तां वदतः उच्चारयतः स्वभूते यज्ञे स्वभूतं वा सोमं हे पज्रहोषिणा! पज्रम्[9] अन्नं हविर्लक्षणं बलं वा स्तुतिक्रियाविषयं तद्वन्तः पज्राः[10] अङ्गिरस अन्यत्र ऋत्विजो वा, तेषां यत्स्वभूतं होतव्यं हविः तद्वन्तौ पज्रहोषिणौ! देवा! देवौ! न भसथः चन 'भसथः' ( निघ २,८ ) इत्यत्तिकर्मा, चनेति निपातः[11] पदपूरणो वा कदाचिदपीत्यस्मिन् वाऽर्थे। स्तुतिश्रवणसक्तौ[11] कदाचिदपि न अत्थः[11] न पिबथः सोमम्। उत्कृष्टस्तुतिश्रवणसक्तयोः युवयोः भोजनमपि विस्मृतमिति[13] समस्तार्थः। यास्कस्त्वाह—'जोषवाकमित्यविज्ञातनामधेयम्' ( या५,२१ ) इति। अविज्ञातम् अविस्पष्टं[14] वचनं जोषवाक उच्यते। अत्र पूर्वस्मिन्नर्थे उत्तरस्मादर्थपात् भसथ इति क्रियापदमनुवर्त्यैकवाक्यता योज्या। यः सुतेषु सोमेषु युवां सम्यक्स्तौति, तस्य यज्ञे सोमं भसथः अश्नीथः। पिबथ इत्यर्थः। जोषवाकं त्वविस्पष्टं वदतः असम्यक् स्तुवतः न कदाचिदपि भसथ इति ॥ ४ ॥

वेङ्कट० यः इन्द्राग्नी! सुतेषु सोमेषु वाम् स्तौति, तेषु सोमेषु हे यज्ञस्य वर्धयितारौ!। तस्य सोमम् अश्नीथ इति वाक्यशेषः। अथ योऽयं जोषवाकं वदति। 'जोषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति' इति। जोषवाकम् वदतः समीचीनं वक्तुमशक्तस्य हे प्रार्जितहोषिणौ! न देवौ तस्य सोममश्नीथ इति यास्कः ( ५,२२ ) ॥ ४ ॥

---

1. नास्ति मूको. 2-2. नु ··· त्यपि मूको. 3. 'वैको वि' अ. 4. नाग्नौ मूको. 5-5. नास्ति वि' दपं. 6-6. नास्ति वि'. 7. वां वा वि'. 8. 'वाकं मूको. 9. पज्रम् मूको. 10. पज्रा मूको. 11. निपात मूको. 12. श्रुति' मूको. 13. अर्थ. मूको. 14. विस्मरति मूको. 15. अपि स्पष्टं मूको.

इन्द्रा॑ग्नी॒ को अ॒स्य वां॒ देवौ॒ मर्त॑श्चिकेतति ।
विषू॑चो॒ अश्वा॑न् युयुजा॒न ई॑यत॒ एकः॑ समा॒न आ रथे॑ ॥ ५ ॥

इन्द्रा॑ग्नी॒ इति॑ । कः । अ॒स्य । वा॒म् । देवौ॑ । मर्तः॑ । चि॒के॒त॒ति॒ ।
विषू॑चः । अश्वा॑न् । यु॒यु॒जा॒नः । ई॒य॒ते॒ । एकः॑ । स॒मा॒ने । आ । रथे॑ ॥ ५ ॥

स्कन्द० हे इन्द्राग्नी! कः अस्य द्वितीयार्थे षष्ठ्येषा । इदम् वाम् । षष्ठीनिर्देशाम्माहात्म्यमिति शेषः युवयोर्माहात्म्यं हे देवौ! मर्तः मनुष्यः चिकेतति जानाति । यत् कतमत् । उच्यते—'विषूचः युवयो' 'विषु इति' निपातो नानात्ववाची, अञ्चतिर्गत्यर्थः । नानागामिनः अश्वान् युयुजानः नियुञ्जानः ईयते गच्छति युवयोः एकः न द्वावपि समाने आ रथे आ इत्येषोऽपीत्यस्य स्थाने । युवयोस्तु समानेऽपि रथे । मनुष्ययोर्हि समानरथयोगाद् द्वावपि गच्छतो या न वा, नैकः । युवयोस्तु समानरथयोरपि देवतामाहात्म्याद् ऐन्द्र कर्मणीन्द्र एव गच्छति नाग्निः, आग्नेये चाग्निरेव न इन्द्र इत्यर्थः ॥ ५ ॥

वेङ्कट० इन्द्राग्नी! कः युवयोः पृथक् कर्म जानाति हे देवौ! मनुष्यः । किं तत् कर्मेत्याह— विषूचः अश्वान् समाने रथे युयुजानः एकः इन्द्रः गच्छति । समानो यो रथस्तस्य चतुरः अश्वान् आह । तेषां च विश्वतस्य केचिद् गच्छन्ति केचिदागच्छन्तीति ॥ ५ ॥

"इति चतुर्थाष्टके अष्टमाध्याये एकत्रिंशो वर्गः" ॥

इन्द्रा॑ग्नी॒ अपा॑दि॒यं पूर्वागा॑त् प॒द्वती॑भ्यः ।
हि॒त्वी शिरो॑ जि॒ह्वया॒ वाव॑द॒च्चर॑त् त्रिं॒शत् प॒दा न्य॑क्रमीत् ॥ ६ ॥

इन्द्रा॑ग्नी॒ इति॑ । अ॒पात् । इ॒यम् । पूर्वा॑ । आ । अ॒गा॒त् । प॒त्ऽवती॑भ्यः ।
हि॒त्वी । शिरः॑ । जि॒ह्वया॑ । वाव॑दत् । चर॑त् । त्रिं॒शत् । प॒दा । नि । अ॒क्र॒मी॒त् ॥ ६ ॥

स्कन्द० हे इन्द्राग्नी! अपात् अपादा पादवर्जिताऽपि इयम् उषाः पूर्वा प्रथमा आ अगात् आगता । पद्वतीभ्यः पादवतीभ्यो मनुष्यादिजातिभ्यः । अप्रबुद्धेभ्य एव उदितेत्यर्थः । कुतः पूर्वा । उच्यते—पद्वतीभ्यः पादवतीभ्यो मनुष्यादिजातिभ्यः 'शिर आदित्यो भवति, यदनुशेते सर्वाणि भूतानि' मध्ये चैषां प्राणिषु उषा उदितेत्यर्थः । हित्वी शिरः 'शिर आदित्यो भवति, यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति' (या ४,१३)। प्राधान्याभिप्रायेण वा आदित्यस्य शिरोव्यपदेशः । स हित्वा विनाऽऽदित्येन । 'जिह्वया च वावदत्' । व्यत्ययेनात्र नपुंसकता । आदित्योदयादपि प्रागित्यर्थः । कथं पुनरागात् । 'जिह्वया च वावदत्' । व्यत्ययेनात्र नपुंसकता । यथा उषस उदयकाले पक्षिगणाः वदन्ति तद् वाग्रोपस्युपचर्यते । अत्यर्थं शब्दं कुर्वतीत्यर्थः । गच्छन्ती च आदित्योदयं प्रति त्रिंशत् चरत् । चरितेत्यर्थः । अत्रापि व्यत्ययेनैव नपुंसकता । गच्छन्ती च आदित्योदयं प्रति त्रिंशत् पदा पदानि स्थानानि मुहूर्ताख्यानि नि अक्रमीत् नि "इति आ" इत्येतस्य स्थाने । आक्रान्तवती । 'त्रिंशदिति च' मुहूर्तविषयम् व्यत्ययेन अथवा पदेति पादशब्दस्य तृतीयैकवचनान्तस्य रूपम् ।

१ १ विषूच इति वि[१]  २ मनुष्ययोर्हि मूको  ३ एको मूको  ४ ४ नास्ति मूको.
५ नास्ति वि[१]  ६ ६ जिह्वया चावावदत् मूको  ७ पक्षिगणो मूको.  ८. नास्ति मूको.
९ ९ त्रिंशदित्यपि च वि[१]

च नपुंसकता। त्रिंशतं मुहूर्तान्[1] स्वेन पादेनाक्रान्तवती। त्रिंशन्मुहूर्तकस्य अहोरात्रस्य आदिम् आदित्योदयं[2] प्राप्तेत्यर्थः। आदित्योदयप्राप्त्या चात्र मनुष्याणां व्यापारकालप्राप्तिर्लक्ष्यते। उषा उदिता, सूर्योऽप्युदितः, प्राप्तः सर्वमनुष्याणां व्यापारकाल इत्यर्थः ॥ ६ ॥

वेङ्कट० पादवर्जिता इयम् पद्वतीभ्यः[3] पूर्वा आगच्छति शीघ्रम् उषाः। त्यक्त्वा शिरः। शिरोरहिताऽपीत्यर्थः। मनुष्याणां वचसां च जिह्वया अत्यन्तं शब्दं कुर्वाणा चरन्ती त्रिंशतं[4] मुहूर्तान् एकेनाह्ना अतिक्रामति ॥ ६ ॥

इन्द्रा॑ग्नी॒ आ हि त॑न्व॒ते नरो॒ धन्वा॑नि बा॒ह्वोः।
मा नो॑ अ॒स्मिन् म॑हाध॒ने परा॑ वर्क्तं॒ गवि॑ष्टिषु ॥ ७ ॥

इन्द्रा॑ग्नी॒ इति॑ । आ । हि । त॒न्व॒ते । नरः॑ । धन्वा॑नि । बा॒ह्वोः ।
मा । नः॒ । अ॒स्मिन् । म॒हा॒ऽध॒ने । परा॑ । व॒र्क्त॒म् । गोऽइ॑ष्टिषु ॥ ७ ॥

स्कन्द० किञ्च हे इन्द्राग्नी! आ हि तन्वते हि-शब्दः पादपूरणः। आतन्वते विततज्यानि[5] कुर्वन्ति नरः एतेऽस्माकं शत्रुभूता मनुष्याः धन्वानि धनूंषि बाह्वोः। बाहुसम्बन्धाद् हस्तावत्र बाहू उच्येते। एतेऽस्माभिः सह सङ्ग्रामार्थं[6] हस्ताभ्यां धनूंषि गृह्णन्तीत्यर्थः। एतद् ज्ञात्वा मा[7] नः अस्मान् अस्मिन् महाधने सङ्ग्रामे परा वर्क्तम्। परा इत्येष परीत्येतस्य [8]'स्थाने। वृजिर्वर्जनार्थः[8]। वर्जनं च त्यागः। मा परित्यक्तमित्यर्थः[9]। गविष्टिषु। सङ्ग्रामविशेषणमेतत्। एकवचनस्य स्थाने बहुवचनम्। गावः प्राप्तुमिष्यन्ते[10] येन सङ्ग्रामेण स गविष्टिः, तस्मिन् ॥ ७ ॥

वेङ्कट० इह इन्द्राग्नी! बाह्वोः स्थितानि धनूंषि योद्धारो मनुष्याः आततज्यानि कुर्वन्ति प्रभायाम्। मा अस्मान् अस्मिन् सङ्ग्रामे परित्यजतम् गवामन्वेषणेषु। शत्रुभ्य आजिहीर्षितासु गोष्वित्यर्थः ॥ ७ ॥

इन्द्रा॑ग्नी॒ तप॑न्ति मा॒घा अ॒र्यो अरा॑तयः।
अप॒ द्वेषां॒स्या कृ॑तं युयु॒तं सूर्या॒दधि॑ ॥ ८ ॥

इन्द्रा॑ग्नी॒ इति॑ । तप॑न्ति । मा॒ । अ॒घाः । अ॒र्यः । अरा॑तयः ।
अप॑ । द्वेषां॑सि । आ । कृ॒त॒म् । यु॒यु॒तम् । सूर्या॑त् । अधि॑ ॥ ८ ॥

स्कन्द० हे इन्द्राग्नी! तपन्ति सन्तापयन्ति मा[11] अघाः पापाः अर्यः अरयः अरातयः[12] अदातारः। देवेभ्यो हविषाम् अयष्टार इत्यर्थः। एतत् ज्ञात्वा अप द्वेषांसि आ कृतम्। [13]अपाकृतम् अपनयतं द्वेषांसि द्वेष्याण्यसत्पापानि[13], ये. सम्बन्धात्[14] माम् एते सन्तापयन्ति। अथवा द्वेषांसीति व्यत्ययेन

1. मुहूर्तान् मूको. 2. °होरात्रादि° मूको. 3. नद° मूको. 4. °शत् मूको. 5. °तज्या … नि मूको. 6. सङ्ग्रामार्थं मूको. 7. नास्ति वि°. 8-8. स्था … शि° मूको. 9. परित्यक्त° मूको. 10. °ष्यते मूको. 11. मा वि° अ. 12. … °य मूको. 13-13. °पन … त्या° मूको. 14. सम्बद्ध° वि°.

नपुंसकता। द्वेष्यान् शत्रून् अपनयतमिति। युयुतम् यौति पृथग्भावार्थः। पृथक् कुरुत च सूर्यात् आदित्याद् असच्छत्रून्। यथाऽऽदित्यं न पश्यन्ति तथा 'कुरुतम्। विकलेन्द्रियान्' कुरुतमित्यर्थः। अधि शब्दस्तु[1] 'अधिपरी अनर्थकौ' (पा १,४,९३) इत्येवं कर्मप्रवचनीय पदपूरण ॥ ८ ॥

वेङ्कट० इन्द्राग्नी! तपन्ति[2] मा हन्तार अभिगन्तार शत्रव। तत्र युवाम् आ आ कुरुतम् रक्षांसि। पृथक् कुरुत च तानि सूर्यात् अस्मात्, मारयतमित्यर्थ ॥ ८ ॥

इन्द्राग्नी युवोरपि वसु दिव्यानि पार्थिवा। आ न इह प्र यच्छतं रयिं विश्वायुपोषसम् ॥९॥

इन्द्राग्नी इति। युवो। अपि। वसु। दिव्यानि। पार्थिवा।
आ। न। इह। प्र। यच्छतम्। रयिम्। विश्वायुऽपोषसम् ॥ ९ ॥

स्कन्द० हे इन्द्राग्नी! युवो युवयो अपि च वसु वसूनि धनानि दिव्यानि दिवि भवानि अपि पार्थिवा पृथिव्यां भवानि। लोकद्वयेऽपि युवयोर्धनानि सन्तीत्यर्थ। अत ईश्वरत्वात् न अस्मभ्यम् इह यज्ञे "आ प्र यच्छतम्" आभिमुख्येन दत्तम् रयिम् धनम् विश्वायुपोषसम् [3]"सर्वेषामपि पोषण यस्य स विश्वायुपोषा तम्"[4]। सर्वपुष्टिकरमित्यर्थ ॥ ९ ॥

वेङ्कट० इन्द्राग्नी! युवयो अपि दिव्यानि वसूनि पार्थिवानि च सन्ति। आ प्र यच्छतम् अस्मभ्यम् इह धनम् सर्वेषां मनुष्याणां पोषकम् ॥ ९ ॥

इन्द्राग्नी उक्थवाहसा स्तोमेभिर्हवनश्रुता।
विश्वाभिर्गीर्भिरा गतमस्य सोमस्य पीतये ॥ १० ॥

इन्द्राग्नी इति। उक्थऽवाहसा। स्तोमेभि। हवनऽश्रुता।
विश्वाभि। गीःऽभि। आ। गतम्। अस्य। सोमस्य। पीतये ॥ १० ॥

स्कन्द० हे इन्द्राग्नी! उक्थवाहसा उक्थानि[5] स्तोत्राणि तान्युक्तम्[6] आप्यते यौ प्रति तावुक्थवाहसौ[7]। स्तोमेभि हेतावेव तृतीया, प्रयोजनस्य च हेतुत्वेन विवक्षा। स्तोत्रैरस्माकर्तृ स्तुत्याविरयर्थ। हे हवनश्रुता! आह्वानस्य श्रोतारौ[8]। न च केवलै स्तोत्रै। कैर्हेतुभूतै। स्तोत्रश्रवणार्थमित्यर्थ। होत्रादिकर्तृकाभिरपि स्तुतिभिर्हेतुभूताभि। किं तर्हि। विश्वाभि गीर्भि सर्वाभिश्च स्तोत्रेभ्योऽन्यासामपि सर्वासां स्तुतीनां श्रवणार्थमित्यर्थ। 'आ गतम् आगच्छतम् अस्य'[9] च सोमस्य पीतये पानार्थम् ॥ १० ॥

वेङ्कट० हे इन्द्राग्नी! स्तोत्रवहनौ[10] स्तोमै सह मनुष्याह्वानस्य श्रोतारौ! सर्वाभि स्तुतिभि तुष्टि ताभि आ गच्छतम् अमुम् सोमम् पातुम् ॥ १० ॥

[11]इति चतुर्थाष्टके अष्टमाध्याये षड्विंशो वर्ग[11] ॥

---

१. "तमपि" वि[1] अ, "तम्। अपि" वि[2]　२. भवन्" मूको　३. तदन्ति स रूप　४-४. अपरस्थ (°पो अ)त्यम् मूको.　५-५. आसि मूको.　६. उक्थानि वि[2] अ　७. °युदन्ते मूको　८. तावुभय° मूको　९-९. आगमागच्छ समस्य वि[2].　१०. °वनौ वि[2] अ, °वनेन रूपे.

[ ६० ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्राग्नी देवता । गायत्री छन्दः, आद्यास्तिस्रः त्रयोदशी च त्रिष्टुभः, चतुर्दशी बृहती, पञ्चदश्यनुष्टुप्[1] ।

श्नथद् वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् ।
इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता ॥ १ ॥

श्नथत् । वृत्रम् । उत । सनोति । वाजम् । इन्द्रा । यः । अग्नी इति । सहुरी इति । सपर्यात् ।
इरज्यन्ता । वसव्यस्य । भूरेः । सहःऽतमा । सहसा । वाजऽयन्ता ॥ १ ॥

स्कन्द० श्नथत् श्नथतिर्वधकर्मा ( तु. निघ २,१९ ) । हन्ति वृत्रम् शत्रुम् उत सनोति । षणु दाने । ददा-परिभ्यः वाजम् अन्नम् । अन्नवांश्च भवति इत्यर्थः । यः किं करोति । उच्यते—इन्द्रा यः अग्नी [illegible] मनुष्यः इन्द्राग्नी सहुरी अभिभवनशीलौ सपर्यात् परिचरति । कीदृशौ । इरज्यन्ता 'इरज्यति' (निघ २, २१ ) ऐश्वर्यकर्मा । 'ईशानौ वसव्यस्य' वसोः समूहो वसव्यस्तस्य धनसमूहस्य भूरेः बहोः सहस्तमा सहःशब्दोऽत्रान्तर्णीतमत्वर्थः । बलवत्तमौ सहसा बलेन वाजयन्ता हविर्लक्षणम् अन्नम् इच्छन्तौ ॥ १ ॥

वेङ्कट० हन्ति उपद्रवम्[3] । अपि च लभते अन्नम्[4] । यः[5] इन्द्राग्नी परिचरति समानाह्वानौ ईश्वरौ भवन्तौ बहोः वसुसमूहस्य अतिशयेन बलिनौ बलेन युद्धं कुर्वाणौ ॥ १ ॥

ता योधिष्टमभि गा इन्द्र नूनमपः स्वरुषसो अग्न ऊळ्हाः ।
दिशः स्वरुषस इन्द्र चित्रा अपो गा अग्ने युवसे नियुत्वान् ॥ २ ॥

ता । योधिष्टम् । अभि । गाः । इन्द्र । नूनम् । अपः । स्वः । उषसः । अग्ने । ऊळ्हाः ।
दिशः । स्वः । उषसः । इन्द्र । चित्राः । अपः । गाः । अग्ने । युवसे । नियुत्वान् ॥ २ ॥

स्कन्द० पाशुरागुणो स्वः ता तौ युवाम् योधिष्टम् अयुध्येथाम् अभि गाः 'अभिरभागे' ( पा १, ४,९१ ) इत्येवम् अत्राभिर्लक्षणे 'कर्मप्रवचनीय इति गवां' लक्षणस्येवाभिधानम् । फलभूता गाः प्रति[6] । स्तवः[7] अस्मदर्थं गाः दातुम् । तदर्थं 'भवता युवाम् अयुध्येथाम्' इत्यर्थः । हे इन्द्र । योधिष्टमिति द्विवचननिर्देशाद् उभावपीन्द्राग्नी युद्धे विनियुयुक्षिताविति अन्यतरसम्बोधनं[10] प्रदर्शनार्थं वा आदरातिरेकख्यापनार्थं वा[11], यथा पितापुत्रयोः कस्यांचित्क्रियायां विनियुयुक्षितयोः पितुरेव सम्बोधनं देवदत्त भुञ्जाथां युवां पितापुत्राविति । नूनम् इति तु पादपूरणम् । न च केवला गाः[12] प्रति । किं तर्हि । अपः उदकानि[13] च वृष्टिलक्षणानि प्रति । वृष्ट्यर्थं चेत्यर्थः अथवा योधिष्टमिति[14] परस्मैपदात् 'युध्यति धन्वति' ( निघ २,१४ ) इति च परस्मैपदिनो युध्यतेर्गतिकर्मणः[15] धातोर् युध्यतिरिह गत्यर्थः । अभिशब्दस्य चोपसर्गस्य अनेन सम्बन्धः ।

---

1-1. नास्ति मूको. २-२. °शानोपस° मूको. ३. उपद्रव रू एपं. ४. °अम् च वि°. ५. नास्ति वि°. ६-६. °नीयः⋯गवां मूको. ७. प्रतिष वि° भ; प्रति का वि°. ८. उप मूको. ९-९. तस्मा⋯यु ( च वि°. ) येथा मूको. १०. °सिस्मन्वत° मूको. ११. नास्ति मूको. १२. नास्ति वि° भ. १३. उमानि मूको. १४. योधिष्ठ° मूको. १५. युष्यो° मूको.

गोशब्दोऽपि स्तुतिवचनः। अभिगच्छतम् अस्मदीयां स्तुतिं प्रति वृष्टिलक्षणा आपः प्रतीत्यर्थः। युद्ध्वा चाभिगत्य वा। स्वरुषसः[२] इत्याद्येकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दौ अपां प्रतिनिर्देशावत्राध्याहर्तव्यौ। याः स्वः आदित्यनामैतत् ( तु. या ५,४ )। आदित्यः उपमः च उत्तमस्थानाः प्रति हे अग्ने! ऊळहाः ऊढाः प्रापिता रश्मिभिः। दिशः च प्रति 'स्वः। द्युनामैतत्' दिवश्च प्रति उषसः[३] च मध्यस्थानाः[४] प्रति हे इन्द्र!। यत्र क[४]च युवाभ्यां रश्मिभिर्याः[५] नीता इत्यर्थः। चित्राः विचित्राः ता वृष्टिलक्षणा अपः गाः च हे अग्ने! युवसे युवत्व मिश्रयास्माभिः सह। अस्मभ्यं देहीत्यर्थः। न च केवलस्त्वम्। किं तर्हि। नियुत्वान् नियुतोऽश्वास्तद्वान्। अत्र प्रकरणाद् इन्द्रः, न वायुः। स च युवताम्। इन्द्रश्च ददात्वित्यर्थः। अथवा नियुत्वानित्यग्नेरेव विशेषणम्। यस्त्वं नियुत्वानिति। केवलस्य कर्मग्रहणं प्रदर्शनार्थम् आदरातिरेकख्यापनार्थं वैयुक्तम् ॥ २ ॥

वेङ्कट० तौ युवाम् इन्द्र! सम्प्रति गाः 'अभि बोधिष्टम्'। हे अग्ने! त्वम्, अपः[७] स्वः उदकानि आविरयं च रक्षसि। उषसः च त्वयोढा भवन्ति। हे इन्द्र! त्वं च दिशः आविरयम् उषसः चित्रवर्णाः प्रथरोषस्? गमयसि। उदकानि अग्ने! गन्तृणि त्वं च युवसे नियुत्वान् इति ॥ २ ॥

आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक्।
युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभिः ॥ ३ ॥

आ। वृत्रऽहना। वृत्रहऽभिः। शुष्मैः। इन्द्र। यातम्। नमःऽभिः। अग्ने। अर्वाक्।
युवम्। राधःऽभिः। अकवेभिः। इन्द्र। अग्ने। अस्मे इति। भवतम्। उत्ऽतमेभिः ॥ ३ ॥

स्कन्द० हे वृत्रहणा! वृत्रस्य हन्तारौ! त्वद्भिः वृत्रस्य हन्तृभिः शुष्मैः सेनालक्षणैः बलैः सह हे इन्द्र! अग्ने! च आ यातम् आगच्छतम् नमोभिः अस्मभ्यं यानि देयानि तैरन्नैः सह अर्वाक् अस्मान् प्रति युवम् युवाम्। न च केवलैर्नमोभिः। किं तर्हि। राधोभिः धनैः अकवेभिः कुशब्दस्यायम् "नञ् कोः" ( पा ६,३,१०७ ) इति कवादेशः छान्दसत्वात्, शब्दान्तरं वा तदर्थम्। अकुत्सितैरित्यर्थः[८]। आगत्य च हे इन्द्र! अग्ने! च अस्मे भवतम् अस्मान् प्रति भवतम्। अस्मत्सन्निकृष्टेन भवतमित्यर्थः। उत्तमेभिः व्यवहितमपि राधोभिरित्येतस्य[१०] विशेषणम्। उत्तमैः राधोभिरिति। अकुत्सितं हि[११] मध्यममपि[११] भवति। तन्निवृत्त्यर्थम् उत्तमेभिरिति विशेषणम् ॥ ३ ॥

वेङ्कट० आ यातम् हे शत्रूणां हन्तारौ! शत्रूणां हन्तृभिः बलैः अर्वाञ्च प्रदिष्टस्तवैः सह इतोमुखम्[१३]। इन्द्राग्नी! युवाम् धनैः अकुत्सितैः सह अस्मासु भवतम् उत्तमैः ॥ ३ ॥

ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम्। इन्द्राग्नी न मर्धतः ॥ ४ ॥

ता। हुवे। ययोः। इदम्। पप्ने। विश्वम्। पुरा। कृतम्। इन्द्राग्नी इति। न। मर्धतः ॥ ४ ॥

---

१. स्वरुषस मूको. २-२. स्वद्युनामै° मूको. ३. उर्वमः मूको. ४. मध्यमा मूको. ५-५. प°°°रश्मि° मूको. ६-६. भिदो° ह. ७. अप स रूपं. ८-८. करयोष्य मूको. ९. भाकु° वि°. १०. राध°°°मूको. ११. हरि मूको. १२. गल्यादि मूको. १३. °तेमु° मूको.

स्कन्द० ता तौ हुवे आह्वयामि, ययोः इदम् पप्ने । पनतिः[1] स्तुत्यर्थः ( तु. निघ ३,१४ ) । स्तौति विश्वम् सर्वम्[2] । सर्वमनुष्या इत्यर्थः । किं पप्ने । उच्यते — पुरा पूर्वस्मिन् काले कृतम् कर्म । चिरन्तनानि कर्माणीत्यर्थः । किञ्च इन्द्राग्नी न मर्धतः न हिंस्तः । कम् । सामर्थ्यात् स्तोतारं वात्मानं वा परस्परतः ॥ ४ ॥

वेङ्कट० तौ ह्वयामि, ययोः[3] इदम् स्तुवते विश्वम् पुरा कृतम् कर्म । ताविमौ न कञ्चन हिंस्तः ॥ ४ ॥

उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो मृळात ईदृशे ॥ ५ ॥

उग्रा । विऽघनिना । मृधः । इन्द्राग्नी इति । हवामहे । ता । नः । मृळातः । ईदृशे ॥ ५ ॥

स्कन्द० उग्रा अप्रसह्यौ विघनिना विविधं हन्तारौ । कान् । उच्यते — मृधः 'मृधः' ( निघ २,१७ ) इति सङ्ग्रामनाम । तं करोति मृधयति, मृधयतेः क्विप्, मृत्, तान् मृधः । सङ्ग्रामकारिण इत्यर्थः । इन्द्राग्नी हवामहे आह्वयामो वयम् । ता तौ चाहूतौ सन्तौ नः अस्मान् मृळातः सुखयतः ईदृशे प्रार्थनाविशेषे । सप्तमीश्रुतेः वर्तमानानिति शेषः ॥ ५ ॥

वेङ्कट० उग्रौ विशेषेण शत्रून् हन्तारौ इन्द्राग्नी हवामहे । तौ अस्मान्[4] सुखयताम्[5] ईदृशे सङ्ग्रामे ॥ ५ ॥

[6]इति चतुर्थाष्टके अष्टमाध्याये सप्तविंशो वर्गः[6] ॥

हतो वृत्राण्यार्या हतो दासानि सत्पती । हतो विश्वा अप द्विषः ॥ ६ ॥

हतः । वृत्राणि । आर्या । हतः । दासानि । सत्पती इति सत्ऽपती । हतः । विश्वाः । अप । द्विषः ॥ ६ ॥

स्कन्द० हतः[7] मारयतः इन्द्राग्नी वृत्राणि शत्रुकुलानि आर्या आर्याणि सदाचाराणि । हतः दासानि उपक्षपयितव्यानि अनार्याणि । यावान् कश्चिच्छत्रुः सर्वं हत इत्यर्थः । सत्पती सतां पालयितारौ । हतः विश्वाः अप द्विषः अपेत्युपसर्गस्य 'हत इत्याख्यातेन' सम्बन्धः । अपहतः सर्वा द्वेष्ट्रीः रक्षआदिजाती:[8] ॥ ६ ॥

वेङ्कट० आर्यकृतानि उपद्रवाणि[9] नाशयतः दासकृतानि च सत्पती इन्द्राग्नी । तथा विश्वानेव शत्रून् अप हतम् ॥ ६ ॥

इन्द्राग्नी युवामिमेऽभि स्तोमा अनूषत । पिबतं शंभुवा सुतम् ॥ ७ ॥

इन्द्राग्नी इति । युवाम् । इमे । अभि । स्तोमाः । अनूषत । पिबतम् । शम्ऽभुवा । सुतम् ॥ ७ ॥

स्कन्द० हे इन्द्राग्नी! युवाम् इमे अस्मदीयाः स्तोमाः अभि अनूषत अभिष्टुतवन्तः । एतत् ज्ञात्वा पिबतम् हे शंभुवा! सुखस्य भावयितारौ! सुतम् अभिषुतम्[11] अस्मदीयं सोमम् ॥ ७ ॥

---

१. स्न° मूको. २. सर्वत्र मूको. ३. तयोः मूको. ४. °स्मा मूको. ५. सुखेय° वि' कर्प, सुखेयता° स. ६-६. नास्ति मूको. ७. हत मूको. ८-८. सर्वेत्यस्या° वि°. ९. °जाती मूको. १०. °णान् क प्रस्तावः. ११. अभिषुत° मूको.

पिबतम् हे सुखस्य भावयितारौ! सोमम् ॥ ७ ॥

वेङ्कट० इन्द्राग्नी! युवाम् इमे स्तोमाः अभिष्टुतवन्तः। पिबतम् हे सुखस्य भावयितारौ! सोमम् ॥ ७ ॥

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा। इन्द्राग्नी ताभिरा गतम् ॥८॥

या। वाम्। सन्ति। पुरुऽस्पृहः। निऽयुतः। दाशुषे। नरा। इन्द्राग्नी इति। ताभिः। आ। गतम् ॥८॥

स्कन्द० याः वाम् युवयोः सन्ति पुरुस्पृहः बहूनां स्पृहणीयाः। अत्यन्तोत्कृष्टा इत्यर्थः। [1]नियुतः अश्वाः[1] दाशुषे यजमानस्यार्थाय[2] यजमानानुग्रहार्थम्[3]। तं प्रति गन्तुमित्यर्थः। हे नरा! मनुष्याकारौ! इन्द्राग्नी! ताभिः आ गतम् ॥ ८ ॥

वेङ्कट० याः वाम् विद्यन्ते बहुभिः स्पृहणीयाः अश्वाः यजमानानुग्रहार्थम्, नेतारौ! इन्द्राग्नी! ताभिः आ गच्छतम् ॥ ८ ॥

ताभिरा गच्छतं नरोपेदं सवनं सुतम्। इन्द्राग्नी सोमपीतये ॥ ९ ॥

ताभिः। आ। गच्छतम्। नरा। उप। इदम्। सवनम्। सुतम्। इन्द्राग्नी इति। सोमऽपीतये ॥ ९ ॥

स्कन्द० याः पूर्वोक्ता नियुतः, ताभिः आ गच्छतम्[4] नरा। [5]उप इदम्[5] सवनम् [6]उपशब्दोऽत्र प्रतीत्यस्य स्थाने[6]। 'सवनम्' (निघ ३,१७) इति यज्ञनाम। इमं यज्ञं प्रति सुतम् च सोमं प्रति हे इन्द्राग्नी! सोमपीतये सोमपानार्थम् ॥ ९ ॥

वेङ्कट० [7]निगदसिद्धा ॥ ९ ॥

तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत्। कृष्णा कृणोति जिह्वया ॥१०॥

तम्। ईळिष्व। यः। अर्चिषा। वना। विश्वा। परिऽस्वजत्। कृष्णा। कृणोति। जिह्वया ॥ १० ॥

स्कन्द० विभक्तस्तुतिरियम् अग्नेरेव केवलस्य। तम् ईळिष्व आत्मन एवायमन्तरात्मनः प्रैषः। तं स्तुहि "हे अन्तरात्मन्!", यः अर्चिषा स्वेन ज्योतिषा वना वनानि वृक्षसमूहलक्षणानि विश्वा सर्वाणि परिष्वजत्। व्याप्नोतीत्यर्थः। कृष्णा कृष्णवर्णानि च कृणोति करोति जिह्वया। जिह्वास्थानीयया ज्वालया वनानि ॥ १० ॥

वेङ्कट० तम् स्तुहि, यः तेजसा सर्वाणि अरण्यानि दाहभूतः व्याप्नोति[8], कृष्णानि च कृणोति[9] ज्वालया ॥ १० ॥

[10]इति चतुर्थाष्टके अष्टमाध्याये अष्टाविंशो वर्गः[10] ॥

य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः। द्युम्नाय सुतरा अपः ॥ ११ ॥

यः। इद्धे। आऽविवासति। सुम्नम्। इन्द्रस्य। मर्त्यः। द्युम्नाय। सुऽतराः। अपः ॥ ११ ॥

---

१-१. नियुतोऽश्वा वि°. २. °मानविनि स्वा° मूको. ३. °मानानामनु° मूको. ४. गच्छत मूको. ५-५. उपेदं मूको. ६-६. उपोऽत्र छन्दोऽत्र प्रतीयरहाश्च मूको. ७-७. इन्द्राग्नी वि° अः इन्द्राग्ना: वि°. ८. व्याप्नो° मूको. ९. नौति मूको. १०-१०. नास्ति मूको.

स्कन्द० ता तौ हुवे आह्वयामि, ययोः इदम् पप्ने । पनतिः[1] स्तुत्यर्थः ( द्र० निघ ३,१४ ) । स्तौति विश्वम् सर्वम्[2] । सर्वमनुष्या इत्यर्थः । किं पप्ने । उच्यते — पुरा पूर्वस्मिन् काले कृतम् कर्म । चिरन्तनानि कर्माणीत्यर्थः । किञ्च इन्द्राग्नी न मर्धतः न हिंस्तः । कम् । सामर्थ्यात् स्तोतारं वास्मान् वा परस्परतः ॥ ४ ॥

वेङ्कट० तौ ह्वयामि, ययोः[3] इदम् स्तूयते विश्वम् पुरा कृतम् कर्म । ताविमौ न कञ्चन हिंस्तः ॥ ४ ॥

उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो मृळात ईदृशे ॥ ५ ॥

उग्रा । विऽघनिना । मृधः । इन्द्राग्नी इति । हवामहे । ता । नः । मृळतः । ईदृशे ॥ ५ ॥

स्कन्द० उग्रा उद्गूर्णौ विघनिना विविधं हन्तारौ । कान् । उच्यते — मृधः 'मृधः' ( निघ २,१७) इति सङ्ग्रामनाम । तं करोति मृधयति, मृधयतेः क्विप्, सुप्, तान् मृधः । सङ्ग्रामकारिण इत्यर्थः । इन्द्राग्नी हवामहे आह्वयामो वयम् । ता तौ आहूतौ सन्तौ नः अस्मान् मृळातः सुखयतः ईदृशे प्रार्थनाविशेषे । सप्तमीश्रुतेः वर्तमानमिति शेषः ॥ ५ ॥

वेङ्कट० उग्रौ विशेषेण शत्रून् हन्तारौ इन्द्राग्नी हवामहे । तौ अस्मान्[4] सुखयताम्[5] ईदृशे सङ्ग्रामे ॥ ५ ॥

[6]इति चतुर्थाष्टके अष्टमाध्याये सप्तविंशो वर्गः[6] ॥

हतो वृत्राण्यार्या हतो दासानि सत्पती । हतो विश्वा अप द्विषः ॥ ६ ॥

हतः । वृत्राणि । आर्या । हतः । दासानि । सत्पती इति सत्ऽपती । हतः । विश्वाः । अप । द्विषः ॥ ६ ॥

स्कन्द० हतः[7] मारयतः इन्द्राग्नी वृत्राणि शत्रुकुलानि आर्या आर्याणि सदाचाराणि । हतः दासानि उपक्षपयितव्यानि अनार्याणि । यावान् कश्चिच्छत्रुः सर्वं हत इत्यर्थः । सत्पती सतां पालयितारौ । हतः विश्वाः अप द्विषः अपेत्युपसर्गस्य 'हत इत्याख्यातेन' सम्बन्धः । अपहतः सर्वा द्वेष्ट्रीः रक्षआदिजातीः[8] ॥ ६ ॥

वेङ्कट० आर्यकृतानि उपद्रवाणि[9] नाशयतः दासकृतानि च सतामीश्वरौ । तथा 'विश्वानेव शत्रून् अप हतम् ॥ ६ ॥

इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत । पिबतं शंभुवा सुतम् ॥ ७ ॥

इन्द्राग्नी इति । युवाम् । इमे । अभि । स्तोमाः । अनूषत । पिबतम् । शम्ऽभुवा । सुतम् ॥ ७ ॥

स्कन्द० हे इन्द्राग्नी ! युवाम् इमे अस्मदीयाः स्तोमाः अभि अनूषत अभिष्टुतवन्तः । एतत् ज्ञात्वा पिबतम् हे शंभुवा ! सुखस्य भावयितारौ ! सुतम् अभिषुतम्[11] अस्मदीयं सोमम् ॥ ७ ॥

---

१. पन॰ मूको. २. सर्वेत्र मूको. ३. तयोः मूको. ४. °स्मा मूको. ५. सुखेय॰ वि॰ सर्प; सुखेयता॰ ल. ६-६. नास्ति मूको. ७. हत मूको. ८-८. हतेत्यास्य॰ वि॰. ९. °जती मूको. १०. °वान् ल महत्वात्. ११. अभिष्टुत॰ मूको.

वेङ्कट० इन्द्राग्नी! युवाम् इमे स्तोमाः अभिष्टुतवन्तः। पिबतम् हे सुखस्य भावयितारौ! सोमम् ॥ ७ ॥

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरा गतम् ॥८॥

या। वाम्। सन्ति। पुरुऽस्पृहः। निऽयुतः। दाशुषे। नरा। इन्द्राग्नी इति। ताभिः। आ। गतम् ॥८॥

स्कन्द० याः वाम् युवयोः सन्ति पुरुस्पृहः बहूनां स्पृहणीयाः। अत्यन्तोत्कृष्टा इत्यर्थः। [1]नियुतः अश्वाः[1] दाशुषे यजमानस्यार्थाय[2] यजमानानुग्रहार्थम्[3]। तं प्रति गन्तुमित्यर्थः। हे नरा! मनुष्याकारौ! इन्द्राग्नी। ताभिः आ गतम् ॥ ८ ॥

वेङ्कट० याः वाम् विद्यन्ते बहुभिः स्पृहणीयाः अश्वाः यजमानानुग्रहार्थम्, नेतारौ! इन्द्राग्नी। ताभिः आ गच्छतम् ॥ ८ ॥

ताभिरा गच्छतं नरोपेदं सवनं सुतम् । इन्द्राग्नी सोमपीतये ॥ ९ ॥

ताभिः। आ। गच्छतम्। नरा। उप। इदम्। सवनम्। सुतम्। इन्द्राग्नी इति। सोमऽपीतये ॥ ९ ॥

स्कन्द० याः पूर्वोक्ता नियुतः, ताभिः आ गच्छतम्[4] नरा! [5]उप इदम्[5] सवनम् [6]उपशब्दोऽत्र प्रतीत्यस्य स्थाने[6]। 'सवनम्' ( निघ ३,१७ ) इति यज्ञनाम। इमं यज्ञं प्रति सुतम् च सोमं प्रति हे इन्द्राग्नी! सोमपीतये सोमपानार्थम् ॥ ९ ॥

वेङ्कट० निगदसिद्धा ॥ ९ ॥

तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वया ॥१०॥

तम्। ईळिष्व। यः। अर्चिषा। वना। विश्वा। परिऽस्वजत्। कृष्णा। कृणोति। जिह्वया ॥ १० ॥

स्कन्द० विभक्तस्तुतिरियम् अग्नेरेव केवलस्य। तम् ईळिष्व आत्मन एवायमन्तरात्मनः प्रैषः। तं स्तुहि [7]हे अन्तरात्मन्![7], यः अर्चिषा स्वेन ज्योतिषा वना वनानि वृक्षसमूहलक्षणानि विश्वा सर्वाणि परिष्वजत्। व्याप्नोतीत्यर्थः। कृष्णा कृष्णवर्णानि च कृणोति करोति जिह्वया जिह्वास्थानीयया ज्वालया वनानि ॥ १० ॥

वेङ्कट० तम् स्तुहि, यः तेजसा सर्वाणि अरण्यानि दावभूतः व्याप्नोति[8], कृष्णानि च कृणोति[9] ज्वालया ॥ १० ॥

[10]इति चतुर्थाष्टके अष्टमाध्याये अष्टाविंशो वर्गः[10] ॥

य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः । द्युम्नाय सुतरा अपः ॥ ११ ॥

यः। इद्धे। आऽविवासति। सुम्नम्। इन्द्रस्य। मर्त्यः। द्युम्नाय। सुऽतराः। अपः ॥ ११ ॥

१-१. नियुतोऽश्वा वि°. २. °मानविति स्या° मूको. ३. °मानानानु° मूको. ४. गच्छत मूको. ५-५. मपेदं मूको. ६-६. उपोऽत्र पाण्डोऽत्र प्रतीत्यस्यार्थे मूको. ७-७. हन्तरात्मन् वि° अ; हन्तरात्मनः वि°. ८. व्याप्नो° मूको. ९. णोति मूको. १०-१०. नास्ति मूको.

यष्टृभ्यो दातारौ इषाम् अन्नानाम् रयीणाम् धनानां च। उभौ वाजस्य हविर्लक्षणस्य अन्नस्य 'सातये सम्भजनाय हुवे आह्वयामि वाम् युवाम्' ॥ १३ ॥

वेङ्कट० उभौ वाम् इन्द्राग्नी! घृतेन आहोतुम्² ह्वयामि सोमेन सह मादयितुम्। उभौ हि युवाम् दातारौ अन्नानां धनानां च। तथा सति उभौ वाम् अन्नस्य लाभाय ह्वयामि¹ ॥ १३ ॥

आ नो गव्येभिरश्व्यैर्वसव्यै३रुप गच्छतम् ।
सखायौ देवौ सख्याय शंभुवेन्द्राग्नी ता हवामहे ॥ १४ ॥

आ । नः । गव्येभिः । अश्व्यैः । वसव्यैः । उप । गच्छतम् ।
सखायौ । देवौ । सख्याय । शम्ऽभुवा । इन्द्राग्नी इति । ता । हवामहे ॥ १४ ॥

स्कन्द० ⁴नः अस्मान् गव्येभिः⁴ गोसमूहैः अश्व्यैः अश्वसमूहैः वसव्यैः वसुसमूहैश्च सह उप आ गच्छतम्। ⁵अस्मभ्यं दातुं गवाश्ववसुसमूहान्⁵ गृहीत्वाऽस्मत्समीपम् आगच्छतमित्यर्थः⁶। ⁷परोक्षकृत वस्तरोक्षैः। गच्छतमुक्तेः⁷ यच्छब्दोऽध्याहर्तव्यः। यौ देवौ सखायौ वयस्यौ परस्परस्य संभजमानानां वा शम्भुवा सुखस्य भावयितारौ सख्याय ⁸सखिभावाय। अस्माभिः ऋत्विग्भिः सह सखित्वार्थमित्यर्थः⁸। इन्द्राग्नी ता तौ हवामहे आह्वयामो वयम् ॥ १४ ॥

वेङ्कट० उप आ गच्छतम् अस्मान् गवादिसमूहैः। समानख्यानौ देवौ सख्यसिद्ध्यर्थं सुखस्य भावयितारौ तौ⁹ इन्द्राग्नी ह्वयामहे ॥ १४ ॥

इन्द्राग्नी शृणुतं हवं यजमानस्य सुन्वतः ।
वीतं हव्यान्या गतं पिबतं सोम्यं मधु ॥ १५ ॥

इन्द्राग्नी इति । शृणुतम् । हवम् । यजमानस्य । सुन्वतः ।
वीतम् । हव्यानि । आ । गतम् । पिबतम् । सोम्यम् । मधु ॥ १५ ॥

स्कन्द० हे इन्द्राग्नी! शृणुतम् हवम् आह्वानम् यजमानस्य भरद्वाजाख्यस्य सुन्वतः सोमम् अभिषुण्वतः। ¹⁰श्रुत्वा च वीतम् कामयेथां तदीयानि¹⁰ ¹¹हव्यानि हवींषि सवनीयपुरोडाशादीनि¹¹। कामयित्वा च आ गतम् आगच्छतम्, पिबतम् च सोम्यम् सोममयम् मधु माध्वीक मधुरस्वादीयम् ॥ १५ ॥

वेङ्कट० निगदसिद्धेति ॥ १५ ॥

¹²इति चतुर्थाष्टके अष्टमाध्याये एकोनत्रिंशो वर्गः¹² ॥

---

१-१. सातये – मूको. २. हो° वि² सर्प. ३. आह्व° वि² सर्प. ४-४. ...गव्येभिः वि¹. ५-५. अस्मभ्यं...हान्" मूको. ६. °च्छत मूको. ७-७. परो...च्छ" मूको ८-८. सखित्वा...र्थः मूको. ९. तम् मूको. १०-१०. शृ...मूको. ११-११. ...दीनि वि¹³. १२-१२. नास्ति मूको.

[ ६१ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । सरस्वती देवता । गायत्री छन्दः,
आद्यास्तिस्रः त्रयोदशी च जगत्यः, चतुर्दशी त्रिष्टुप्[1] ।

इयमंददाद् रभुसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचुखादावसं पुणिं ता ते दात्राणि तविषा सरस्वति ॥ १ ॥

इयम् । अददात् । रभसम् । ऋणऽच्युतम् । दिवःऽदासम् । वध्रिऽअश्वाय । दाशुषे ।
या । शश्वन्तम् । आऽचखाद । अवसम् । पणिम् । ता । ते । दात्राणि । तविषा । सरस्वति ॥१॥

स्कन्द० [2]'सूक्तमेकम् सरस्वतीम्'। द्वितीयानिर्देशात् स्तौतीति शेषः[2]। यां पञ्चाक्षरां[3] सहस्रशीर्षी चतुष्पदां भूतभर्त्री सुभगां वेदमातरं वाचम् अनेन प्रतिपादयति । याम्[4] गायत्रीरूपा पञ्चाक्षरैश्चतुर्भिः पादैः । [5]पञ्चाक्षरा चतुष्पदा । सहस्रव्याहृतिरूपैः शीर्षैः[5] सहस्रशीर्षी । सर्वभूतानां च ज्ञानपितृ-लक्षणेनात्मना[6] वृष्टिप्रदानद्वारेण भर्त्री । वृष्ट्युदकलक्षणेनैव धनेन सुभगा । भग इति हि [7]धननाम वा, यथाविधिनिर्भजनैः[7] सुष्ठु सेव्यते तेन सुभगा । वेदानां च मातृभूता उपनीतस्य प्रथमम् अनूच्यमानत्वात् वेदजन्मनि मातृत्वेन [8]स्मरणाद् अतोऽस्या मातृत्वम् इति । अत्रेतिहासमाचक्षते— वध्र्यश्वः किल[8] तीव्रेण तपसा स्वर्गमारुरुक्षन्तम् देवदूता ऊचुः—नापुत्रस्य स्वर्गोऽस्ति । पुत्रम् सृजे! प्रजनयेति । पुत्रार्थं सरस्वतीम् आराधयाञ्चकार[9] । तस्मै सरस्वती पुत्रम् अददात् इति । तदेतदाह—'इयमददात्' इति । ··· ··· । इयम् सरस्वती अददात्[10] दत्तवती रभसम् महान्तम् ऋणच्युतम् च्यावयितृत्रयाणामृणानामित्यर्थः । यैस्त्रिभिर्ऋणैः ऋणवान् जायते । यज्ञेन देवेभ्यः प्रजया [11]'पितृभ्यः ब्रह्मचर्येण ऋषिभ्य इति, तेषां च्यावयितारम् । पातारम् पुत्रिणम्[11] [12]ब्रह्म चरन्तं[12] चेत्यर्थः । दिवोदासम् नाम पुत्रम् वध्र्यश्वाय[13] ऋषये दाशुषे हवींषि दत्तवते । [14]परोऽर्धर्चः प्रत्यक्षकृतत्वात्[14] [15]भिन्नं वाक्यम्[15] ॥ १ ॥

वेङ्कट० इयम् प्रायच्छत् वेगवन्तम् ऋणस्य च्यावयितारम्[16] पुत्रम् दिवोदासम्[17] नाम वध्र्यश्वनाम्ने यजमानाय । या इयं बहुस्वादनीयम् असुरम् आचखाद अन्नाय । प्रत्यक्षस्तुरीयः पादः । तावकानि[18] महान्ति तव दानानि प्रवृद्धानि सरस्वति ! ॥ १ ॥

इयं शुष्मेभिर्बिसखा इवारुजत् सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥ २ ॥

---

१-१. नास्ति मूको. २-२. इदं ६.६०.१५ मन्त्रभाष्ये प्रमादात् पतितम्, तदिदं स्थापयित्वा 'शेषः' इति निवेशितम्. ३. ···तपञ्चाक्षरा मूको. ४. याम्पि भ; यामिप वि[2]; या··· वि[1]. ५-५. पञ्चाक्षरा-श्चतुष्पदा ··· मूको. ६. °सुभलय° मूको. ७-७. °नाम···यथाविधि° मूको. ८-८. °मातृत्वस्य मा···किल मूको. ९. चकार···मूको. १०. अदात् वि[2]. ११-११. पि···पुत्रिणं वि[1] अ; पितृभ्यः···पुत्रिण वि[1]. १२-१२. ब्रह्मचर्येन मूको. १३. वध्र्यश्वाय वि[2]. १४-१४. परोऽर्धर्चं° मूको. १५-१५. भिन्नव··· मूको. १६. च्याव° स; च्यापयि° मूको. १७. °दासं क मूको. १८. °कानि क मूको.

इयम् । शुष्मेभिः । बिसखाःऽइव । अरुजत् । सानु । गिरीणाम् । तविषेभिः । ऊर्मिऽभिः ।
पारावतऽघ्नीम् । अवसे । सुवृक्तिऽभिः । सरस्वतीम् । आ । विवासेम । धीतिऽभिः ॥ २ ॥

स्कन्द० ......... तथा च शाकपूणिना[1] नद्यभिधायिनः सरस्वतीशब्दस्य परिगणने — अथैषा नदी[2] । चत्वार एव तस्या निगमा भवन्ति । 'दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि' ( ऋ ३,२३,४ ) 'चित्र इद्राजा राजका इदन्यके यके सरस्वतीमनु' ( ऋ ८,२१,१८ ) 'इमं मे गङ्गे यमुने सरस्वति' ( ऋ १०,७५,५ ), 'सरस्वती सरयुः सिन्धुरूर्मिभिः' ( ऋ १०,६४,९ )। इति । अत्राय[3] म पञ्चमः परिगणित पञ्चममप्युदाहरति — 'अम्बितमे नदीतमे' ( ऋ २,४१,१६ ) इति ॥ २ ॥[3]

वेङ्कट० इयम् बलैः बिसस्य खनितेव रुजति[4] सानु शिलोच्चयानाम् प्रवृद्धैः ऊर्मिभिः । पारावारघातिनी पारावतघ्नी इति यास्कः ( तु. या २,२४ )। कूलयोरुभयोर्भेत्त्रीमित्यर्थः । ताम् रक्षणाय स्तुतिभिः सरस्वतीम् कर्मभिश्च परिचरेम ॥ २ ॥

सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः ।
उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥ ३ ॥

सरस्वति । देवऽनिदः । नि । बर्हय । प्रऽजाम् । विश्वस्य । बृसयस्य । मायिनः ।
उत । क्षितिऽभ्यः । अवनीः । अविन्दः । विषम् । एभ्यः । अस्रवः । वाजिनीऽवति ॥ ३ ॥

स्कन्द० हे सरस्वति ! देवनिदः देवानां निन्दकान् नि बर्हय 'निबर्हयति' ( निघ २,१९ ) वधकर्मा । जहि, प्रजाम् अपत्यानि च विश्वस्य सर्वस्य बृसयस्य बृसयनाम्नोऽसुरजातिविशेषस्य मायिनः मायावतः । उत क्षितिभ्य क्षितयो मनुष्याः तदर्थम् अवनीः नदीः अविन्दः विन्दतिर्लाभार्थः, सामर्थ्याच्चात्र जनयतीत्यर्थः । किम् । सामर्थ्याद् उदकम् । नदीरप्युदकेनापूरयेत्यर्थः । एभ्यः[5] । किम् । विषम् उदकनामैतत् (तु. निघ १,१२) । उदकं च सस्यनिष्पत्त्यर्थम् एभ्यः पूर्वं मनुष्याणामपीय अस्रवः । अथवा वाजो बलं वेगो वा तद्वती वाजिनी सरस्वत्याः सेना, तद्वती । अथवा वाजो सर्वेत्यर्थः । हे वाजिनीवति ! वाजो बलं वेगो वा तद्वती वाजिनी वागास्तस्याः, तद्वती । अथवा वाजिनीशब्दो हविर्लक्षणमन्नं तदस्यामस्ति सा वाजिनी वागसन्ततिः, वाजशब्दस्य पर्यायः । वाजवती अन्नवती ॥ ३ ॥

वेङ्कट० हे सरस्वति ! देवानां निन्दितॄन् असुरान् नि बर्हय, प्रजाम् च व्याप्तस्य बृसयनाम्नो वृत्रपितुः मायाविनः । अपि च[6] मनुष्येभ्यः क्षेत्राणि अलभथाः । उदकम् एभ्यः अस्रवः अन्नवति ॥ ३ ॥

प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ ४ ॥

प्र । नः । देवी । सरस्वती । वाजेभिः । वाजिनीऽवती । धीनाम् । अवित्री । अवतु ॥ ४ ॥

---

१. शाकपू° वि[1] अ, शाकपू° वि°. २. ना नदी मूको. ३. द्र. निरुक्तस्यटीकं स्कन्दस्वामिभाष्यम् (२,२४). ४. रुज° मूको. ५. ...अव मूको. ६. नास्ति वि[1] भ°.

स्कन्द० प्रेत्युपसर्गोऽवतिरित्यास्यातेन सम्बन्धयितव्यः । नः अस्मान् देवी सरस्वती वाजेभिः वाजिनीवती[1] वाजशब्दोऽत्र बलनाम । सेनालक्षणैर्बलैस्तद्वती । अथवा वाज इत्यन्ननाम[2] । यानि सरस्वती स्तोतृभ्यो ददाति हविर्लक्षणानि, तैरन्नैस्तद्वती । धीनाम् प्रज्ञानां कर्मणां च अवित्री पालयित्री प्र अवतु प्रकर्षेण रक्षतु ॥ ४ ॥

वेङ्कट० प्र अवतु अस्मान् देवी सरस्वती अन्नैः अन्नवती कर्मणाम् अवित्री ॥ ४ ॥

यस्त्वा देवि सरस्वत्युपब्रूते धने हिते । इन्द्रं न वृत्रतूर्ये ॥ ५ ॥

यः । त्वा । देवि । सरस्वति । उपऽब्रूते । धने । हिते । इन्द्रम् । न । वृत्रऽतूर्ये ॥ ५ ॥

स्कन्द० यः स्तोता त्वां हे देवि! सरस्वति! उपब्रूते उपगम्य ब्रवीति । स्तौतीत्यर्थः । धने हिते शब्दोऽप्ययं दधातिनिपूर्वस्य द्रष्टव्यः । हविर्लक्षणे धने '[3]विधा[3]निहिते' । उपकल्पितहविष्क इत्यर्थः । अथवा धने हित इति हितशब्द उपकारकवचन.[4] । 'निमित्तात्कर्मसंयोगे' ( पावा २, ३,३६ ) इत्येवं चैषा सप्तमी, 'चर्मणि द्वीपिनं हन्ति' इति यथा । धनम् उपकारकं तदर्थमित्यर्थः । कथम् । इन्द्रम् न इन्द्रमिव[5] धनार्थं सङ्ग्रामे । तमित्यध्याहृत्यैकवाक्यता[6] योज्या । यः[7] उपब्रूते, तम् [8]रक्षेति शेष.[8] ॥ ५ ॥

वेङ्कट० यः त्वा देवि! सरस्वति! उपस्तौति हितधननिमित्तम् इन्द्रम् इव सङ्ग्रामे, तं रक्षेति ॥ ५ ॥

[8]इति चतुर्थाष्टके अष्टमाध्याये त्रिंशो वर्गः[8] ॥

त्वं देवि सरस्वत्यवा वाजेषु वाजिनि । रदा पूषेव नः सनिम् ॥ ६ ॥

त्वम् । देवि । सरस्वति । अव । वाजेषु । वाजिनि । रद । पूषाऽइव । नः । सनिम् ॥ ६ ॥

स्कन्द० त्वम् हे देवि! सरस्वति! अव पालय वाजेषु वाजिनि! । किञ्च रद रद विलेखनेऽन्यत्र इह तु सामर्थ्याद् दानार्थः । देहि पूषा इव यथा पूषा ददत् नः अस्मभ्यम् सनिम् दानम् । अथवा रदतिर्विलेखनार्थ एव । नः इति तु तादर्थ्ये चतुर्थी । विलिख अस्मदर्थं धनम् । 'धने धने' निधाय मासैक तदस्मभ्यमुत्खनित्यर्थः ॥ ६ ॥

वेङ्कट० त्वम् देवि! सरस्वति! रक्ष सङ्ग्रामेषु । अन्नवति! देहि[10] पूषा इव स्तोतृभ्यः अस्मभ्यम् धनम् ॥ ६ ॥

उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः । वृत्रघ्नी वष्टि सुष्टुतिम् ॥ ७ ॥

उत । स्या । नः । सरस्वती । घोरा । हिरण्यऽवर्तनिः । वृत्रऽघ्नी । वष्टि । सुऽस्तुतिम् ॥ ७ ॥

---

१. °नीवति मूको. २. °त्यन्नाम वि°. ३-३. वेषा नीते त्रि° अ. ४. °कारव° मूको. ५. इन्द्रमव मूको. ६. इत्°°°ध्याह° मूको. ७. नास्ति मूको. ८-८. नास्ति मूको. ९-९. सषेध वि°, धने ध अ, धने ध··· वि° १०. येहि वि° अर्.

स्कन्द० उत-शब्दोऽत्र समुच्चयासम्भवात् पदपूरणः । स्या सा प्रकृता नः अस्माकम् स्वभूता सरस्वती घोरा मेघानाम् असुराणां कृते[1] क्रूरा हिरण्यवर्तनिः [2]हिरण्यदृशी विद्युद् वर्तनिर्गमनमार्गो[2] यस्याः सा हिरण्यवर्तनिः[3] । यतोयतो विद्युत् ततस्ततो गन्त्रीत्यर्थः । [3]अथवा हिरण्यस्य वर्तयित्री स्तोतॄन् प्रति गमयित्री । दात्रीत्यर्थः । वृत्रघ्नी वृत्रस्य हन्त्री वष्टि कामयते सुष्टुतिम् ॥ ७ ॥

वेङ्कट० अपि च एषा नः सरस्वती घोरा हिरण्मयीयमार्गा शत्रूणां हन्त्री कामयते सुष्टुतिम् ॥ ७ ॥

यस्या॑ अन॒न्तो अह्रु॑तस्त्वे॒षश्च॑रि॒ष्णुर॑र्ण॒वः । अम॒श्चर॑ति॒ रोरु॑वत् ॥ ८ ॥

यस्याः॑ । अ॒न॒न्तः । अह्रु॑तः । त्वे॒षः । च॒रि॒ष्णुः । अ॒र्ण॒वः । अमः॑ । चर॑ति । रोरु॑वत् ॥ ८ ॥

स्कन्द० यस्याः सरस्वत्याः स्वभूतः अनन्तः बहुः अह्रुतः अहिंसितः त्वेषः दीप्तः चरिष्णुः गमनशीलः अर्णवः उदकसमूहः अमः [4]रोगः तत्सदृशः[4] । यथा रोगो भयानकः तद्वद् आगच्छति भयानक इत्यर्थः । अथवा अमशब्द आत्मवचनः । यस्याः सरस्वत्याः पूर्वगुणयुक्तः अम आत्मा चरति इतश्चेतश्च गच्छति । रोरुवत् शब्दं कुर्वन् ॥ ८ ॥

वेङ्कट० यस्याः अपर्यन्तः अनभिभूतः दीप्तः चरणशीलः उदकवान् अमः चरति शब्दं कुर्वन् । अमः इति बलनाम ॥ ८ ॥

सा नो॒ विश्वा॒ अति॒ द्विषः॒ स्वसॄ॑र॒न्या ऋ॒ताव॑री । अत॒न्नहे॑व॒ सूर्यः॑ ॥ ९ ॥

सा । नः॒ । विश्वाः॑ । अति॑ । द्विषः॑ । स्वसॄः॑ । अ॒न्याः । ऋ॒तऽव॑री । अत॑न् । अहा॑ऽइव । सूर्यः॑ ॥

स्कन्द० किं तस्याः । उच्यते—सा[5] सरस्वती नः अस्माकम् विश्वाः सर्वाः अति द्विषः अतीत्युपसर्गस्य द्विषः इति च कर्मणः श्रुतेर्योग्यक्रियापदाध्याहारः । अतिक्रमयतु द्विषः द्वेष्टॄन् अपुनरागमनाय । द्विषः द्वेष्टॄन् कापि गमयत्वित्यर्थः । न केवलाम्[6] द्विषः । किं तर्हि । स्वसॄः अन्याः अन्या अपि च याः स्वसॄः स्वयंसारिण्यो राक्षसादिजातयः ता अपि । सा कीदृशी । उच्यते—ऋतावरी उदकवती । कथम् । अतन् अहा इव सूर्यः । अत सातत्यगमने । यथा सततम् गच्छन्नहानि सूर्योऽतिक्रमयति अपुनरागमनाय । अहर्हि यद्गतमेव तन्न पुनरावर्तते । तद्वद् अतिक्रमयतु ।

अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना—सा नः । नः इति द्वितीयान्तम् । [6]साऽस्मान् अतीत्यान्यत्र गमयतु विश्वा द्विषः[6] स्वसॄरन्या भगिनीश्चान्या अन्याश्च अन्तरिक्षनदीः । ता हि सरस्वत्या भगिन्यः । स्वयंसारिणीर्वा राक्षसादिजातीः[7] द्वेष्टॄः[8] स्त्रियो[9] वा । केनचिदन्य-प्रतिबध्यमानेत्यर्थः । अतन् [10]अहेव सूर्यः । तनोतेरिदमाख्यातम्[10] । आयुषा प्रजया धनेन च विस्तारयतु अहानीव नैदाघानि सूर्यः ॥ ९ ॥

वेङ्कट० सा अस्मान् विश्वान् शत्रून् अति नयतु स्वयंसारिणीः[11] अन्याः च प्रजाः उदकवती[12], गच्छन् सन्ततम् अहानि यथा सूर्यः अतिनयति[13] ॥ ९ ॥

---

१. प्रति मूको. २-२. नास्ति वि. †-† "शीविन्" वि[1] अ. ३-३. रोगस्सदृशः मूको. ४. नास्ति मूको. ५. केवला मूको. ६-६. "नतीत्या…द्विषः मूको. ७. "आति मूको. ८. द्वेष्टि मूको. ९. स्त्रियोन मूको. १०-१०. अतनन…"तेरि" मूको. ११. "णीः मूको. १२. "ती: वि[1]. १३. नयति वि[1].

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भूत् ॥ १० ॥

उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा । सुऽजुष्टा । सरस्वती । स्तोम्या । भूत् ॥ १० ॥

स्कन्द० अस्माकम् प्रिया प्रियासु । निर्धारण एषा सप्तमी । याः काश्चन प्रियास्तासां मध्येऽतिशयेन प्रिया सप्तस्वसा सप्त गङ्गाद्या अन्तरिक्षनद्यः वा भगिन्यो यस्याः सा सप्तस्वसा । अथवा सप्त छन्दांसि भगिन्यो यस्या गायत्रीरूपायाः सा सप्तस्वसा सुजुष्टा सुप्रीता सरस्वती स्तोम्या स्तोमार्हा स्तोतव्या भूत् नित्यं यज्ञेषु भूयादित्याशास्महे ॥ १० ॥

वेङ्कट० अपि च अस्माकम् प्रियासु प्रिया अत्यन्तं प्रिया सप्त गङ्गाद्या यस्याः स्वसारः सा[1] सुपर्योक्षा सरस्वती स्तोतव्या भवतु ॥ १० ॥

[2]इति चतुर्थाष्टके अष्टमाध्याये एकत्रिंशो वर्गः[2] ॥

आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम् । सरस्वती निदस्पातु ॥ ११ ॥

आऽपप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् । सरस्वती । निदः । पातु ॥ ११ ॥

स्कन्द० आपप्रुषी[3] प्रा पूरणे । आपूरितवती[4] आपूरयन्ती वा वृद्धपुवकेन लक्षितशब्देन वा पार्थिवानि पृथिव्या अवयवभूतानि स्थानानि "उरु रजः" विस्तीर्णं च लोकम् । कतमम् । उच्यते —अन्तरिक्षम् । सरस्वती निदः निन्दितात्[5] निन्दातो वाऽस्मान् पातु रक्षतु ॥ ११ ॥

वेङ्कट० आपूरयन्ती[4] पार्थिवानि भूतानि विस्तीर्णम् लोकम् स्वर्गम् अन्तरिक्षम् च सरस्वती शत्रोः रक्षतु ॥ ११ ॥

त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्या भूत् ॥ १२ ॥

त्रिऽसधस्था । सप्तऽधातुः । पञ्च । जाता । वर्धयन्ती । वाजेऽवाजे । हव्या । भूत् ॥ १२ ॥

स्कन्द० त्रिषधस्था त्रिषु लोकेषु सहस्थात्री त्रिषधस्था । युगपत् त्रयाणामपि लोकानां व्यापिकेत्यर्थः । सप्तधातुः लोके शरीरादेः कारणे श्लेष्मादौ धातुशब्दः प्रसिद्धः, धातुवैषम्ये देवदत्तस्य श्वासमिति । अतोऽत्र धातुशब्दः[6] कारणवचनः । सप्तानां छन्दसां कारणभूता । गायत्रीरूपा हि सरस्वती सप्तानां छन्दसां कारणभूता । पञ्च जाता पञ्च मनुष्यजातानि[7] निषादपञ्चमान् वर्णान् वृष्टिद्वारेण वर्धयन्ती वाजेवाजे सङ्ग्रामेसङ्ग्रामे अस्माकम् हव्या आह्वानार्हा अनुग्राहिका भूत् भवेदित्याशास्महे । अथवा वाजो हविर्लक्षणमन्नम्, अत्र सर्वेषामाह्वातव्या भवतु । सारस्वतमेव यागं नित्यं कुर्यामेत्याशास्महे इत्यर्थः ॥ १२ ॥

वेङ्कट० त्रिस्थाना सप्तधातुः सप्तभिश्छन्दोभिः सहिता सप्तभिर्वा स्वसृभिः पञ्च जनान् वर्धयन्ती सङ्ग्रामेसङ्ग्रामे ह्वातव्या भवति ॥ १२ ॥

---

१. नास्ति मूको. २-२. नास्ति मूको. ३. आपूरयती मूको. ४-४. वस्त्र मूको. ५. निन्दित मूको. ६. °वनि मूको. ७. मनुष्यजातानि मूको.

प्र या म॑हि॒म्ना म॑हि॒नासु॒ चेकि॑ते द्यु॒म्नेभि॑र॒न्या अ॒पसा॑म॒पस्त॑मा ।
रथ॑इव बृह॒ती वि॒भ्वने॑ कृ॒तोप॒स्तुत्या॑ चिकि॒तुषा॒ सर॑स्वती ॥ १३ ॥

प्र । या । म॒हि॒म्ना । म॒हि॒नासु॑ । चेकि॑ते । द्यु॒म्नेभिः॑ । अ॒न्या । अ॒पसा॑म् । अ॒पःऽत॑मा ।
रथः॑ऽइव । बृ॒ह॒ती । वि॒ऽभ्वने॑ । कृ॒ता । उ॒प॒ऽस्तुत्या॑ । चि॒कि॒तुषा॑ । सर॑स्वती ॥ १३ ॥

स्कन्द० या सरस्वती महिम्ना 'इत्थम्भूतलक्षणे' (पा २,३,२१) इत्येवमेषा तृतीया, अपि भवान् कमण्डलुना छात्रमद्राक्षीदिति यथा । महत्त्वेन सम्बद्धा महिना महता । केन । सामर्थ्याद् उदकेन आसु अन्यनदीनामर्थे प्रतिनिर्देश । अन्वादेशात्यासम्भवात् छान्दसम् अनुदात्तत्वम् । सप्तमीनिर्देशाच्च अवस्थितत्वेति शेष । आसु महतीषु नदीष्ववस्थितेन प्र चेकिते प्रकर्षेण ज्ञायते द्युम्नेभि अन्नैश्च सस्यधान्यैर्निष्पन्नैः क्षेत्रस्थै । महादिकगुणक सस्यनिष्पत्तिं च कार्यम् अवलोक्य यस्या माहात्म्यम् अनुमीयत इत्यर्थ । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्य । सा अन्या अपसाम् । अन्या इति षष्ठ्यर्थे प्रथमा । अपसामित्यपि कर्मणामित्यर्थम् । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेष । अन्यासां कर्मवतीनां सकाशात् अपस्तमा वृष्ट्यादिकर्मभिरतिशयेन कर्मवती रथ इव बृहती यथा रथ सजातीयेभ्योऽन्येभ्यो युद्धोपकरणेभ्यो महांस्तद्वत्सर्वतो महती विभ्वने विभुत्वायैव च कृता निर्मिता प्रजापतिना उपस्तुत्या उपगम्य च स्तोतव्या । केन । उच्यते— चिकितुषा तन्माहात्म्यस्य ज्ञात्रा । का । सरस्वती ॥ १३ ॥

वेङ्कट० या महता महत्त्वेन लोके प्रकर्षेण द्युम्नै ज्ञायते अथै अन्या नदी[1] । सर्वाभ्योऽपि नदीभ्योऽन्न प्रयच्छतीति प्रज्ञानम् । वेगवतीनां नदीनां मध्ये अत्यन्त वेगवती । रथ इव बृहती महत्त्वाय कृता विदुषा सरस्वती इयम् उपस्तोतव्या अन्नानामाहर्त्री[?] ॥ १३ ॥

सर॑स्वत्य॒भि नो॑ नेषि॒ वस्यो॒ माप॑ स्फरीः॒ पय॑सा॒ मा न॒ आ ध॑क् ।
जु॒षस्व॑ नः स॒ख्या वे॒श्या॑ च॒ मा त्वत् क्षेत्रा॒ण्यर॑णानि गन्म ॥ १४ ॥

सर॑स्वति । अ॒भि । नः॒ । ने॒षि॒ । वस्यः॑ । मा । अप॑ । स्फ॒रीः॒ । पय॑सा । मा । नः॒ । आ । ध॒क् ।
जु॒षस्व॑ । नः॒ । स॒ख्या । वे॒श्या॑ । च॒ । मा । त्वत् । क्षेत्रा॑णि । अर॑णानि । ग॒न्म॒ ॥ १४ ॥

स्कन्द० हे सरस्वति ! न अस्मान् अभि नेषि लोडर्थे । अभिनय प्रापय नय वसूनि । धनान्यस्मभ्य देहीत्यर्थ । मा अप स्फरी । स्फुर स्फुर चलने । मा च अतो विघाती । धन्यया धनान्यस्माकं हिंसीरित्यर्थ । पयसा उदकेन च मा न अस्मान् आ धक् आभिमुख्येन दितम् अवदयम् एतत् कर्तव्यमित्यर्थ । क्षारवृष्टिं मा कार्षीरित्यर्थ । जुषस्व सेवस्व च न अस्माकम् पाक्षी । सख्यसम्पादक यर्थ[?] । अतिरेषं सख्य वेश्या च प्रतिवेश्यत्वानि च । यत्रेऽप्यस्माकम् सखिस्थानीयः समीपवासिनो सख्या सखित्वानि वेश्या च प्रतिवेश्यत्वानि च ।

---

१. सन्ततया मूको २. नास्ति मूको. ३. देवाये युद्रके मूको ४. थार्थ मूको ५. °तम दर्थम् वि° क ६. अतिशयानेति वाक्यशेष. ७. °नातह्यो क, °नहरी डर्थ. ८. यर्थम् मूको.

च भवेस्यर्थः। मा च त्वत् त्वत्तः क्षेत्राणि स्थानानि अरणानि त्वद्विरहितत्वादेव अरमणीयानि[1] गन्म गमाम। वयं सर्वदा त्वत्पादमूल एव तिष्ठेमेत्येतदाशास्महे[2] इत्यर्थः ॥ १४ ॥

यत्नभीविनिवास्येताम् ऋगर्थागमसंहतिम्[3]। भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ॥

इति भर्तृध्रुवपुत्रस्य स्कन्दस्वामिनः कृतावृग्वेदभाष्ये द्वात्रिंशोऽध्यायः[4] ॥

वेङ्कट० हे सरस्वति! अभि नय अस्मान् अभ्युदयम्। मा अप स्फरीः उदकेन। सेतौ विभिन्ने अपस्फरणं भवति। मा च अस्मान् धाक्षीः उदकाभावात्। सेवस्व अस्मान् सलिलेन निवेशनेन च। मा त्वत् क्षेत्राणि उदकाभावाद् अरमणीयानि[1] गन्म इति ॥ १४ ॥

[5]इति चतुर्थाष्टके अष्टमाध्याये द्वात्रिंशो वर्गः[5] ॥

ऋगर्थदीपिका सेयं चतुर्थेऽध्यायमष्टके।
कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥ १ ॥

माधवेन कृतं भाष्यं चतुर्थस्याष्टकस्य यत्।
नारायणेन लिखितं तदन्तो वेदशर्मणा ॥ २ ॥

वेदो नाम महत् पदं जनपदो यत्र द्विजानां वसि-
स्तत्रैव वेदमधीत्य भाष्यमखिलं मीमांसितेऽस्य स्फुटम्।
तत्र[6] ग्रामवरे कदाचिद्वसता नाम्ना च नारायणे-
नैतन्माधवभाष्यलेखनवशाद् वैदग्ध्यमापिप्कृतम्[7] ॥ ३ ॥

इति श्रीवेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने चतुर्थाष्टके अष्टमोऽध्यायः ॥

—※—

इति ऋग्वेदे सभाष्ये चतुर्थाष्टके अष्टमोऽध्यायः ॥
चतुर्थाष्टकः समाप्तः ॥



1. अरणीयानि मूको. 2. °मेतत्यन्दा° मूको. 3. °संहतिम् अ. 4. °मः समाप्तः अ.
5-5. नास्ति मूको. 6. अत्र सर्व. 7. °तम्। श्रीगणपतये नमः। गोपाय कृष्णाय नमः। सरस्वत्यै नमः। वेदव्यासाय नमः। गुरवे नमः सर्व॰

अथ पञ्चमोऽष्टकः ।

[ ६२ ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[1] ।

स्तुषे नरा॑ दि॒वो अ॒स्य प्र॒सन्ता॒श्विना॑ हुवे॒ जर॑माणो अ॒र्कैः ।
या स॒द्य उ॒स्रा व्यु॒षि ज्मो अन्ता॒न् युयू॑षतः॒ पर्यु॒रू वरां॑सि ॥ १ ॥

स्तु॒षे । नरा॑ । दि॒वः । अ॒स्य । प्र॒ऽसन्ता॑ । अ॒श्विना॑ । हु॒वे॒ । जर॑माणः । अ॒र्कैः ।
या । स॒द्यः । उ॒स्रा । वि॒ऽउषि॑ । ज्मः । अन्ता॑न् । युयू॑षतः । परि॑ । उ॒रु । वरां॑सि ॥ १ ॥

स्कन्द० "'स्तुषे नरा' आश्विने द्वे"। अश्विदेवत्ये द्वे एते सूक्ते इति। स्तुषे व्यत्ययेन मध्यमपुरुषः। स्तौमि नरा मनुष्याकारौ दिवः द्युलोकस्य अस्य प्रसन्ता। अस्तेर्भवतिना समानार्थस्येदं रूपम्। प्रभवन्तौ। स्वामिनावित्यर्थः[2]। कौ। अश्विना अश्विनौ। न च स्तौम्येव। किं तर्हि। हुवे आह्वयामि च जरमाणः स्तुवन् अर्कैः मन्त्रैः। यौ किं कुरुतः। या यौ सद्यः तस्यामेव वेलायाम् उस्रा। उस्राशब्दो[3] गोनाम ( द्र निघ २,११ )। इह च पुंल्लिङ्गसामर्थ्यात्[4] लुप्तोपम.[5]। गोसदृशौ। व्युषि विभातायाम्[6] उषसि ज्मः पृथिव्याः बलीवर्दाविव अत्यन्तं मनुष्याणाम् उपकारकावित्यर्थः। अन्तान्। पञ्चम्यर्थे द्वितीयैषा। अन्तेभ्यः युयूषतः। यौतिः पृथग्भावार्थः। छान्दसत्वात्[7] स्वार्थिकः सन्प्रत्ययः। पृथक् कुरुतः परि सर्वतः उरु बहूनि। कानि। सामर्थ्यात् तमांसि। वरांसि क्षेत्राणि पृथिव्याम्। तेभ्य. सर्वेभ्यः युगपत् तमोऽपनयत इत्यर्थः ॥ १ ॥

वेङ्कट० पञ्चमोऽष्टकस्त्वस्मिन्नध्यायादिषु वक्ष्यते ।
ऋषिनामार्षगोत्रेषु विशेषमिह वैदिकैः ॥ १ ॥
ऋषिनामार्षगोत्राणां ज्ञानमायुष्यमुच्यते[8] ।
[8]पुत्र्यं पुण्यं यशस्यं[8] च स्वर्ग्यं धन्यमपिग्रहम् ॥ २ ॥
ऋषिनामार्षगोत्रज्ञ[9] एकैकस्य भवत्यृचः ।
शतसहस्रम् अतिथिर्दिव्यमर्चितपूजितः ॥ ३ ॥
ततः परं सुविपुलं[10] स्वाध्यायफलमश्नुते ।
भवति ब्राह्मणं चापि ज्ञानस्यैतत्प्रयोजनम्[11] ॥ ४ ॥
मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद् न यः ।
याजनाध्यापनादेति छन्दसां यातयामताम् ॥ ५ ॥

---

१-१. नास्ति मूको. २. °स्तिन्त मूको. ३. उस्र° मूको. ४. °र्थ्येन मूको. ५ °पमा मूको. ६. विभातम् मूको. ७. °मनु··· वि° अ°. ८-८ °न्तार्थं वि° अ°; पुत्रं ते च यशस्यं हस्त. ९. °शम् वि° अ° हस्त. १०. त विपु° अ. ११. °जनम् हस्त.

स्थाणुं वार्च्छति गर्तं वा पद्यते वा प्रमीयते[१]।
पापीयान्भवतीत्यर्थः[२] एवं ब्राह्मणमाह तम् ॥ ६ ॥

मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतवित् ॥ यः।
याजनाध्यापनाभ्यां स श्रेय एवाधिगच्छति ॥ ७ ॥

एतैः प्रयोजनैः सर्वैः शौनकेन प्रदर्शितैः।
ऋषयो नामगोत्राभ्याम् अस्माभिः सम्प्रदर्शिताः ॥ ८ ॥

यदुच्यते[३] पदज्ञानम् ऋषिज्ञानम्[४] ऋतेऽपि नः।
भवत्येवेह मन्त्रेषु किमृषौ ज्ञानमुच्यते ॥ ९ ॥

ऋषिनामार्षगोत्रेति[५] यदेतच्छौनकोऽब्रवीत्।
तदृदृष्टाथ कथितं न चाप्यपरा वयम् ॥ १० ॥

तदुच्यते स्वसूक्तानाम् आत्मानन्तेऽथ[६] वा पुनः।
ऋषयो नामगोत्राणि स्थापयन्तीह केचित् ॥ ११ ॥

'कृष्णे प्राचीय'[७]—सूक्तादौ गोधसो नाम दृश्यते।
अर्थेनानाङ्क्य[८] सूक्तान्ते 'विप्रेतावचैनार्नसम्'[९] ॥ १२ ॥

'कण्वं इह प्रचेतसः'[१०], 'दिवोदासेभिरिन्द्र'[११] च।
'उतासि मैत्रावरुणः'[१२] इति गोत्रनिदर्शनम् ॥ १३ ॥

ऋषीणां नामगोत्राणि दृष्ट्वा भ्राम्यन्ति लौकिकाः।
जिज्ञासमाना मन्त्रार्थम् अतस्तेषां निदर्शनम् ॥ १४ ॥

नामगोत्राणि मन्त्रेषु न निविष्टानि येषु तु।
तेषु प्रदर्शनं तेषां विस्पष्टप्रतिपत्तये ॥ १५ ॥

यदि ह्याज्ञायमानार्थो दृष्ट्वा भ्राम्यत्यपि कश्चित्।
स्यात्तयोः किमिदं नाम गोत्रं याऽह्रो भवेदिति ॥ १६ ॥

नन्वेवं विनियोगश्च दर्शनीयस्तथाधुना।
वक्तव्यो [१३]वा विशेषोऽत्र[१४] विनोपस्तत्र वक्ष्यते ॥ १७ ॥

---

१. °ते प्रमाद् अ१; °ते भ्रमा ख्म. २. °त्यर्थं क ख्यं; तु. भाष्य १,१. ३. तदु° अ१. ४. प्रतिज्ञा° अ१. ५. °गोत्रा° वि° अ१ ख्म. ६. °न्ते च ख्म. ७. ऋ १,६४,१. ८. °नान्त ख्म. ९. ऋ ५,६४,७. १०. ऋ १,३६,९. ११. ऋ १,१३०,१०. १२. ऋ ७,३३,११. १३-१४. वाविशेषो° ख अ.

वेङ्कट० यौ[1] नवतरस्य स्तुवतः स्तुतिम् उपमवयः रथे नियुज्यमानाभ्यौ उदकं सम्पर्धनीयम्[2] अश्वं रसं [3]च वहन्तौ । होता[4] मक्षत[5] पुराणः द्रोहवर्जितौ युवानौ वावत शुभम् ॥ ४ ॥

ता व॒ल्गू द॒स्रा पु॑रुशाकतमा प्र॒त्ना नव्य॑सा वच॒सा वि॑वासे ।
या शंस॑ते स्तुव॒ते शंभ॑विष्ठा बभू॒वतु॑र्गृण॒ते चि॒त्ररा॑ती ॥ ५ ॥

ता । व॒ल्गू इति॑ । द॒स्रा । पु॒रु॒शाक॑ऽतमा । प्र॒त्ना । नव्य॑सा । वच॑सा । आ । वि॒वा॒से॒ ।
या । शंस॑ते । स्तु॒व॒ते । शम्ऽभ॑विष्ठा । ब॒भू॒वतुः॑ । गृ॒ण॒ते । चि॒त्ररा॑ती॒ इति॑ चि॒त्रऽरा॑ती ॥ ५ ॥

स्कन्द० तौ वल्गू । वल्गूयतेरर्चतिकर्मणः ( तु. निघ ३,१४ ) एतद्रूपम् । प्रियवचनो वा वल्गुशब्दः । स्तुत्यौ प्रियौ वा सर्वस्य । दस्रा दस्रनामानौ । अन्यतरनाम्ना चेदं साहचर्यादुभयोरभिधानम् । अथवा दसि दर्शनदंसनयोः[5] दसु उपक्षये दसु च इत्यनयोरन्यतरक्रियाशब्दो[6] दस्रशब्दः । दर्शनीयौ उपक्षपयितारौ वा शत्रूणाम् पुरुशाकतमा । शाकः शक्तिः । अतिशयेन बहुशक्तिकौ प्रत्ना पुराणौ नव्यसा अतिशयेन स्तोत्रः स्वादेन वा वचसा स्तुतिलक्षणेन वचनेन आ विवासे परिचरामि[7] । स्तौमीत्यर्थः । यौ किं कुरुतः । उच्यते—या यौ शंसते स्तुवते । शंसितृस्तोतृ उभावपि स्तुत्यर्थौ[8] । तयोरेकः शस्त्रविषयः, अपरः स्तोत्रविषयश्च । शस्त्रैः स्तोत्रैश्च स्तुतिं कुर्वते[9] शंभविष्ठा अतिशयेन सुखस्य भावयितारौ बभूवतुः भवतः । गृणते अन्याभिश्च यजुरादिस्तुतिभिः स्तुवते चित्रराती विचित्रदानौ ॥ ५ ॥

वेङ्कट० तौ वल्गनशीलौ धीरौ दर्शनीयौ अतिशयेन बहुसहायौ प्रत्नौ[10] नवतरेण वचसा परिचरामि, यौ शंसते स्तुवते च अतिशयेन सुखस्य भावयितारौ[11] बभूवतुः, गृणते मह्यं च चित्रदानौ ॥ ५ ॥

[12]इति पञ्चमाष्टके प्रथमाध्याये प्रथमो वर्गः[12] ॥

ता भु॒ज्युं विभि॑र॒द्भ्यः स॑मु॒द्रात् तु॒ग्रस्य॑ सू॒नुमू॑हथू॒ रजो॑भिः ।
अ॒रे॒णुभि॒र्योज॑नेभिर्भु॒जन्ता॑ पत॒त्रिभि॒रर्ण॑सो॒ निरु॒पस्था॑त् ॥ ६ ॥

ता । भु॒ज्युम् । विऽभिः॑ । अ॒त्ऽभ्यः । स॒मु॒द्रात् । तु॒ग्रस्य॑ । सू॒नुम् । ऊ॒ह॒थुः॒ । रजः॑ऽभिः ।
अ॒रे॒णुऽभिः॑ । योज॑नेभिः । भु॒जन्ता॑ । प॒त॒त्रिऽभिः॑ । अर्ण॑सः । निः । उ॒पऽस्था॑त् ॥ ६ ॥

स्कन्द० मन्त्रेतिहासमाचक्षते—भुज्युं नाम राजपुत्रं समुद्रे विपन्नार्थं सखायस्तत्यजुरिति । तद्वसिष्ठो वक्ष्यति 'उत त्यं भुज्युमश्विना सखायः' ( ऋ ७,६८,७ ) इति । तमश्विनौ नौभिरश्वैः रथैश्चोत्तारितवन्ताविति । काक्षीवतोक्तम् 'तुग्रो ह भुज्युमश्विनोदमेघे' ( ऋ १,११६,३ ) इत्यादिना । तदेवेहाप्युच्यते—बाहुकशुक्लौ स्थः, तौ युवाम् भुज्युम् नाम राजपुत्रम् अद्भ्यः उदकेभ्यः । न च यतः कुतश्चित् । किं तर्हि । समुद्रात् । तुग्रस्य[13] तुग्रनाम्नो राज्ञः सूनुम्

१. तेन मूको. २. संवर्ध वि[1] छ लश. ३-३. नास्ति वि[1] अ[1]. ४. यवत छ लश; नास्ति वि[1] अ[1]. ५. दंसन ( °स वि[1]. ) दर्शनयं मूको. ६. °दस्रशब्दः कि[1] मूको. ७. परि च···मि मूको. ८. तद्गु° वि[1] अ; तस्तु वि[1]. ९. ···त मूको. १०. प्रत्नो मूको. ११. भावित्रा° मूको. १२-१२. नास्ति मूको. १३. तुमस्य मूको.

पुत्रम् ऊहथुः । वहेरिदं रूपम् । निरुपस्यादिति [1]च निःशब्दः[1] उपसर्गोऽनेन आख्यातेन सम्बन्धयितव्यः । निरूहथुः[2] । उत्तारितवन्तौ स्थ इत्यर्थः । केन । उच्यते—विभिः वेतिर्गत्यर्थः । तन्तुभिरश्वैः रजोभिः ज्योतिरत्र रज उच्यते । सामर्थ्याच्चान्तर्णीतमत्वर्थः । ज्योतिष्मद्भिः[3] । स्वदीप्त्या दीप्तैरित्यर्थः । अरेणुभिः[4] पृथिवीवर्जितैः । अमलिनैरित्यर्थः । योजनेभिः योजनस्वभावकैः पतत्रिभिः पतत्रिणः पक्षिणः तत्सदृशैः अत्यन्तशीघ्रगतिभिः । [5]किं चिकीर्षन्तौ[5] दत्तारितवन्तौ । उच्यते—'भुजन्ता भुजिः सामर्थ्यादत्रान्तर्णीतसनर्थः[6] । पालयितुमिच्छन्तौ । कम् । सामर्थ्यात् तमेव भुज्युम् । कीदृशात्[7] समुद्रात् । उच्यते—अर्णसः उपस्थात् अर्ण 'उदकम् तत्प्रत्रोपगम्य[8] तिष्ठति ॥ तस्योपस्थः तस्मात् । सर्वं[9] हि नद्यादुदकं समुद्रमुपगम्य तिष्ठति ॥ ६ ॥

वेङ्कट० तौ भुज्युम् अश्वैः [10]समुद्रमध्यस्थात्मप्यः अप्नुवः[10] तुग्रस्य पुत्रम् ऊहथुः[11] मार्गैः । [12]सदेवाऽऽह—रेणुवर्जितैः मार्गैः[12] तुग्रसूनुं रक्षन्तौ अश्वैः उदकमध्यात् निरूह्योहथुरिति ॥ ६ ॥

वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः ।
दशस्यन्ता शयवे पिप्यथुर्गामिति च्यवाना सुमतिं भुरण्यू ॥ ७ ॥

वि । जयुषा । रथ्या । यातम् । अद्रिम् । श्रुतम् । हवम् । वृषणा । वध्रिऽमत्याः ।
दशस्यन्ता । शयवे । पिप्यथुः । गाम् । इति । च्यवाना । सुऽमतिम् । भुरण्यू इति ॥ ७ ॥

स्कन्द० जयुषा जेत्रा रथेन हे रथ्या! रथस्य वोढारौ! । दुर्गमेष्वपि देशेषु त्वरयस्य प्रापयितारावित्यर्थः । वि यातम् विविधं गच्छथो युवाम् अद्रिम् गोत्रं प्रति । श्रुतम् श्रुतवन्तौ च स्थः हवम् आह्वानं हे वृषणा! वर्षितारौ! वध्रिमत्याः वध्रिमती नाम योद्ध्री स्त्री तस्याः । सा हि सङ्ग्रामे शत्रुभिः छिन्नहस्ता अश्विनावाहूतवतीत्यस्याः अश्विनावाह्वानं श्रुत्वा हिरण्मयहस्तं बाहुं दत्तवन्तौ । यदेतत् कक्षीवतोक्तम्—'अजोहवीन्नासत्या करा वाम्' ( ऋ १,११६,१३ ) इति । किञ्च दशस्यन्ता दाशतेर्दानकर्मणः अन्तर्णीतसनर्थस्यैतद्रूपम् । दातुमिच्छन्तौ । किम् । सामर्थ्यात् पयः । शयवे शयुनाम्ने राज्ञे ऋषये वा पिप्यथुः आप्यायितवन्तौ । अधेनुं सतीम् धेनुम् कृतवन्तावित्यर्थः । किम् । उच्यते—गाम् । तदेतत् कक्षीवताऽप्युक्तम्—'युवं धेनुं शयवे नाधिताय' ( ऋ १,११८,८ ), 'दस्रा स्तर्यं विषक्ताम्' ( ऋ १,११७,२० ) इति च । इति च्यवाना! । इतिशब्दः पदपूरणः, सामर्थ्याद्धा हे-शब्दस्यार्थे । हे च्यवाना! यज्ञान् यजून् वा प्रति गन्तारौ! । कीदृशीम् गाम् । उच्यते—सुमतिम् शोभना स्तुतिं प्रति अनुग्रहरूपा मतिर्बुद्धिर्यस्याः सा सुमतिः ताम् । हे भुरण्यू! क्षिप्रौ! ॥ ७ ॥

वेङ्कट० जयनशीलौ[13] गोतमस्य कूपमाहरन्तौ[14] शिलोच्चयं[15] मार्गस्य विरोधकं भित्त्वा रथेन आगच्छतम् हे रथ्यौ![16] । तथा[17] शृणुतम् च [18]हे अश्विनौ![18] ॥ ७ ॥

---

1-1. च⋯शब्द मूको. 2. नि⋯ मूको. 3. ᵒष्मतीभिः मूको. 4. त्वरित वि¹; अ⋯भिःᵒ. 7. कीदृश वि¹ [illegible] कीदृशां वि² अ. 5-5. कि⋯र्षिकीᵒ मूको. 6-6. भुज्यन्ता भुजिसाम⋯र्थः ᵒ मूको. 10-10. ᵒस्याम्भोम्यः वि¹ अ². 11. ᵒहुर्दे(? मूको. वि². 8-8. उदकान्तᵒ मूको. 9. यर्व वि¹ अ. 14. कृत्वा ᵒ ह लभ. 15 शिरोच्चय 12-12. ᵒदेर⋯न्तुवᵒ वि¹ अ². 13. ᵒलेन अ² ह लभ. 18-18. भवतो ह लभ; भव्यो वि¹ अ², वि² ह लभ. 16. थ्यौ ह; रथ्येन लभ. 17. यᵒ वि¹ अ².

प्रमाणेष्वपि सन्देहात् विकल्पोक्तिरपि क्वचित् ।
'चन्द्रमा अप्स्व१न्तः'[1] इति सूक्ते कुत्सोऽथवा त्रितः ॥ ३० ॥ इति ॥

भरद्वाजः[२] । स्तौमि नेतारौ दिवः[३] अस्य प्रभवन्तौ, ह्वयामि[४] चाश्विनौ स्तुवन् स्तुतिभिः । [५]यो सद्य[६] एव[७] उत्स्नाविणौ[८] दिवः पर्यन्तात् उषसि व्युष्टायाम् उरूणि तमांसि परि युयूपतः पृथक्कुरुतः । तेजसा प्रकाशयतः सर्वमित्यर्थः ॥ १ ॥

ता यज्ञमा शुचिभिश्चक्रमाणा रथस्य भानुं रुरुचू रजोभिः ।
पुरू वरांस्यमिता मिमानापो धन्वान्यति याथो अज्रान् ॥ २ ॥

ता । यज्ञम् । आ । शुचिऽभिः । चक्रमाणा । रथस्य । भानुम् । रुरुचुः । रजःऽभिः ।
पुरु । वरांसि । अमिता । मिमाना । अपः । धन्वानि । अति । याथः । अज्रान् ॥ २ ॥

स्कन्द० ताश्विनौ, तौ यज्ञम् शुचिभिः दीप्तैः शुद्धैर्वा अश्वैः आ चक्रमाणा । क्रमु पादविक्षेपे । पादविक्षेपो गमनम् । आगच्छन्तौ यज्ञं रथस्य भानुम् दीप्तिम् रुरुचुः व्यत्ययेनेदं बहुवचनम् । रुरुचतुः । दीप्तवती कुरुत इत्यर्थः । रजोभिः । ज्योतिरत्र रज उच्यते । स्वैराभरणादिस्थरत्नादिज्योतिर्भिः । यद्वोऽर्थः प्रकाशकृतो भिन्नं वाक्यम् । पुरु[१] बहूनि वरांसि ववकमत्र वर उच्यते[२] । बुद्बुदकानि अमिता अनिर्मितपूर्वाणि[३] मिमाना उत्पादयन्तौ । वृष्टि प्रयच्छन्तावित्यर्थः । अपः उदकानि धन्वानि मरुदेशान् अति याथः । यात्वित्य सामर्थ्याद्दक्षणीतिमर्थः । अतीत्य यापयथः । अज्रान्[१०] । अज गतिक्षेपणयोः[११] । अपां चेदं विशेषणम् । व्यत्ययेन पुल्लिङ्गता । अज्रा गमनस्वभाविकाः । बहूनि बुद्बुदकानि प्रयच्छन्तौ [१२]गमनस्वभाविकाभिः अद्भिः मरुदेशानपि[१३] पापयथ इत्यर्थः ॥ २ ॥

वेङ्कट० तौ यज्ञम् आ क्रममाणौ शुचिभिः स्तोत्रैः[१३] तेजोभिः स्वरथस्य भानुम् रुरुचतुः । पुरूणि तमसो वारकाणि अमितानि तेजांसि मिमानौ अपः निरुदकांश्च[१४] देशान्[१५] रश्मींश्च अति याथः । यद्वा तमांसि हिंसन्तौ आत्मीयानश्वान् अतिगमयत इति, रश्मींश्च अतियाथः[१६] ॥ २ ॥

ता ह त्यद् वर्तिर्यदरध्रमुग्रेत्था धियं ऊहथुः शश्वदश्वैः ।
मनोजवेभिरिषिरैः शयध्यै परि व्यथिर्दाशुषो मर्त्यस्य ॥ ३ ॥

---

१. ऋ १,१०५,१. २. भार° मूको. ३. दिवो मूको. ४. यथाभि वि[१] अ[१]; यपामि ल का; ह्व(य)ामि ल. ५-७. आसाव वि[१] अ[१]; यो सद्य ल लभ. ६. एवो: मूको. ७. स्रावि° वि[१] अ[१]; उत एावि° ल लभ. ८. अत मूको. ९. अमित° वि[१]. १०. अज्रा मूको. ११. गतिक्षेपणशोषणयोः मूको. १२-१२. °काभिः···शे° ( म वि[१]. ) मूको. १३. रात्रैः मूको. १४. °कारच मूको. १५. दशाद् मूको. १६. ···याथः अ[१]; °तियाथाथः वि[१]; °याथाथः लभ.

ता । ह । त्यत् । वर्तिः । यत् । अरघ्रम् । उग्रा । इत्था । धियः । ऊहथुः । शश्वत् । अश्वैः ।
मनःऽजवेभिः । इषिरैः । शयध्यै । परि । व्यथिः । दाशुषः । मर्त्यस्य ॥ ३ ॥

स्कन्द० द्वौ[१] यावुक्तगुणौ स्थः, तौ । ह इति पदपूरणः । त्यत् तत् प्रति [२]वर्तिः वर्तन्या तस्या गमनमार्गेण[२] । यद्[३] कीदृशम् । उच्यते—यत् अरघ्रम् रध हिंसासंराद्ध्योः । साद्गुण्याद् रक्षोभिरहिंसिते हे उग्रा ! शत्रूणामुपरि क्रूरौ ![४] अप्रसह्यौ ! वा इत्था सत्यनामैतत्[५] । सत्यम् अविसंवादिना धियः । 'धीः' (निघ २,१) इति कर्मनाम । व्यत्ययेन [६]चात्र षष्ठी । कर्मणा ऊहथुः[६] वहित्र सामर्थ्यात् प्राप्त्यर्थः[७] । स्थानप्रापणार्थम् प्राप्नुयः । गच्छथ इत्यर्थः शश्वत् नित्यम्[८] । केन । अश्वैः । कीदृशैः । मनोजवेभिः मनस इव जवो येषां ते मनोजवा अत्यन्तशीघ्रगतय, तैः[९] इषिरैः प्रार्थनीयैः अत्यन्तोत्कृष्टैः । किमर्थम् । शयध्यै । शीङत्र स्थानार्थः, आमाशयो[१०] जलाशय इति यथा । यावदिज्यते तत्रैव[११] च [१२]तावद् व्यवस्थानार्थम्[१२] । किञ्च परि [१३]व्यथिः । परीत्युपसर्गश्रवणाद् योग्यक्रियापदाध्याहारः[१३] । परिवर्ज्यते युवाभ्यां क्रोधः दाशुषः । दाश्वानिति यजमाननाम । यजमानस्योपरि मर्त्यस्य मनुष्यस्य । मनुष्यायापि सते यजमानाय च[१४] [१५]कुप्यथ इत्यर्थः[१५] ॥ ३ ॥

वेङ्कट० तौ खलु यथैव वर्तिः मार्गं रक्षोभिरहिंसितम् आगच्छथः उग्रौ[१६], सदानीं सत्यमेव कर्माणि ऊहथुः[१७] वहथः स्तोतृणां नित्यम् अश्वैः । तथा मनोजवैः गमनशीलैरश्वैः यजमानस्य शत्रुः युवाभ्यां परिशयनाय क्रियते, हन्यत इत्यर्थः ॥ ३ ॥

ता नव्यसो जरमाणस्य मन्मोप भूषतो युयुजानसप्ती ।
शुभं पृक्षमिषमूर्जं वहन्ता होता यक्षत् प्रत्नो अध्रुग् युवाना ॥ ४ ॥

ता । नव्यसः । जरमाणस्य । मन्म । उप । भूषतः । युयुजानसप्ती इति युयुजानऽसप्ती ।
शुभम् । पृक्षम् । इषम् । ऊर्जम् । वहन्ता । होता । यक्षत् । प्रत्नः । अध्रुक् । युवाना ॥४॥

स्कन्द० यावुक्तगुणौ तौ नव्यसः[१८] [१९]णु स्तुतौ । 'सर्वधातुभ्योऽसुन्' (पाउ ४,१८९) इत्यसुनि प्रत्यये वर्णोपजने चैतद्रूपम्[१९], नवशब्दस्य वा । अतिशयेन स्तोतुः नवस्य वा स्तोतुः जरमाणस्य स्तुवतः सम्भूतम् मन्म मननीयं यागकर्म प्रति उप भूषतः समीपे भवतः । उपगच्छत इत्यर्थः । युयुजानसप्ती योजनस्वभाविकाः सप्तयः अश्वा[२०] ययोस्तौ युयुजानसप्ती । कथं च पुनरागच्छतः । शुभम् पृक्षम् पृची सम्पर्के । सम्पर्कार्हम्[२१] । रसरससम्पत्करमित्यर्थः । इषम् अन्नं च ऊर्जम् रसं च वहन्ता प्रापयन्तौ । ददतावित्यर्थः । उपगतौ च सन्तौ [२२]होता यक्षत्[२२] यजते प्रत्नः पुराणः अध्रुक् अद्रोग्धा यजमानस्य देवतानां वा युवाना सर्वदैव तरुणौ[२३] ॥ ४ ॥

१. द्व मूको. २-२. वर्तिरस्या वि°; वर्ति···तस्या° वि° अ. ३. वं मूको. ४. क्रूरौ मूको. ५. सत्य···मै° मूको. ६-६. चात्र° ··· मूको. ७. प्राप्तये मूको. ८. नि मूको. ९. तैः मूको. १०. मामयो मूको. ११. मुखेये मूको. १२-१२. तावम्य वधानार्थो मूको. १३-१३. व्यथि···योगकि° मूको. १४. नास्ति मूको. १५-१५ कुप्येत्यर्थः मूको. १६. उग्रो मूको. १७. °थु मूको. १८. नव्यस मूको. १९-१९. नव्यसो ··· मुनि प्रत्य वर्णो द° मूको. २०. नास्ति वि°. २१. सर्दा मूको. २२-२२. होतर्व° मूको. २३. तरुणौ वि°.

यद् रोदसी प्रदिवो अस्ति भूमा हेळो देवानामुत मर्त्यत्रा ।
तदादित्या वसवो रुद्रियासो रक्षोयुजे तपुरघं दधात ॥ ८ ॥

यत् । रोदसी इति । प्रऽदिवः । अस्ति । भूमा । हेळः । देवानाम् । उत । मर्त्यऽत्रा ।
तत् । आदित्याः । वसवः । रुद्रियासः । रक्षःऽयुजे । तपुः । अघम् । दधात ॥ ८ ॥

स्कन्द० यत् इति व्यत्ययेन नपुंसकता । यः हे रोदसी! द्यावापृथिव्यौ! प्रदिवः अस्ति विद्यते भूम । बहुशब्दपर्यायोऽयं द्रष्टव्यः । अत्यन्तबहुः हेळः 'हेळते'[1] ( निघ २,१२ ) इति क्रुध्यतिकर्मा, तस्येदं रूपम् । हेळनं हेळः क्रोधः । कस्य । उच्यते—'देवानाम् उत मर्त्यत्रा 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' ( पा ५,४,५६ ) इति बाहुलकात् षष्ठ्या अर्थे त्रा-प्रत्ययः । उत मनुष्याणाम् तत् अत्रापि व्यत्ययेनैव नपुंसकता । तं सर्वं हे आदित्याः! हे वसवः! हे रुद्रियासः! रुद्राः! रक्षोयुजे रक्षस्त्वेन युक्ताय । रक्षोरूपाय अस्मच्छत्रव इत्यर्थः । दधात दत्त । न च केवलं हेळम्[2] । किं तर्हि । तपुः तापयितृ च [3]अघम् पापम् । योऽस्माकं 'रक्षोरूपशत्रुः तस्मिन्'[3] सर्वदेवान् सर्वमनुष्यांश्च क्रोधयत[4] । तापकेन चापुण्येनैनं[5] योजयतेत्यर्थः । एवमियमृक् स्वरूपेण रोदस्यादिदेवताका । तस्या [6]अश्विनोः प्रसादेन यूयम् अस्माकम् एतत्कुरुतेत्येवमाश्विनीत्वं[7] व्याख्येयम् ॥ ८ ॥

वेङ्कट० यत् रोदसी![8] पुराणमर्त्येषु पापपरेषु देवानाम् महत् हेडः विद्यते । क्रोधो हेडः । तत् हे आदित्याः! वसवः! रुद्रपुत्राश्च मरुतः! रक्षो भूत्वा युञ्जानाय तपनशीलम् अघम्[8] "कुरुत । 'अघम् आहननात्'[9] आयुधम् । द्यावापृथिव्यावश्विनौ भरतः । सोऽस्य सर्वांश्च देवान् याच इति ॥८॥

य ईं राजानावृतुथा विदधद् रजसो मित्रो वरुणश्चिकेतत् ।
गम्भीराय रक्षसे हेतिमस्य द्रोघाय चिद् वचस आनवाय ॥ ९ ॥

यः । ईम् । राजानौ । ऋतुऽथा । विऽदधत् । रजसः । मित्रः । वरुणः । चिकेतत् ।
गम्भीराय । रक्षसे । हेतिम् । अस्य । द्रोघाय । चित् । वचसे । आनवाय ॥ ९ ॥

स्कन्द० यः मनुष्यः[10] । ईम् इति पादपूरणः । राजानौ ईश्वरौ दीप्तौ वा अश्विनौ ऋतुथा कालेकाले विदधत् । 'विधेम' ( निघ ३,५ ) इत्यस्य परिचरणकर्मण एतद्रूपम् । परिचरति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तस्य रजसः उदकस्य मित्रः वरुणः च चिकेतत् जानाति । तस्मै [11]अश्विनोः[11] प्रसादेन मित्रो वरुणश्च वृष्टिं ददाति, नान्यस्मा इत्यर्थः । न च वृष्टिमेव केवलां ददाति । किं तर्हि । गम्भीराय दुरवगाहाय अत्यन्तभीषणाय अस्य शत्रवे रक्षसे रक्षोरूपाय हेतिम् वज्रम् अस्य क्षेपण अर्थे, व्यत्ययेन च मध्यमः । [12]'अस्यति क्षिपति'[12] । न च रक्षस एव केवलाय । किं

1. हेळत मूको २ नास्ति मूको. ३-३. अपमापामयोऽस्माकं मूको. ४-४. 'श्शत्रु ... मूको. ५. क्रोधय मूको. ६. चापुण्येनैनं वि°. ७. 'मश्वि' मूको. ८. अयम् मूको. ९-९. ...धमाद° वि°; ...दन° अ°; अघ (घ) माहननाद° ट लभ. १०. मनुष्या मूको. ११. अश्विनौ मूको १२-१२. अस्य विधाति वि°.

र्तांई ।[1] द्रोघाय चित् द्रोग्ध्रे वचसे । आन्तर्णीतमत्वर्थमेतत् । वचस्विने । मुधैव वाचालायेत्यर्थः । आनवाय । 'अनवः' ( निघ २,३ ) इति मनुष्यनाम । अनोरपत्यम् आनवः । कोऽसौ । मनुष्यः । मनुष्यस्य मनुष्य एवापत्यम् भवति, नाश्वो गर्दभो वा । योऽश्विनौ परिचरति, तस्मै मित्रो वरुणश्च वृष्टिं ददाति । यश्चास्य शत्रुः राक्षसः मनुष्यो वा तं च वज्रेण हन्तीति समस्तार्थः ॥ ९ ॥

वेंकट० यः इमौ राजानौ रक्षसः अश्विनौ काले[1] परिचरति, यं[2] च पापान्मुक्तं भवतयमिति मित्रावरुणौ जानीतः, स तद्धनाय रक्षसे[3] हेतिम् अस्य विसृजति । अनुरिति मनुष्यनाम, तदीयाय द्रोग्ध्रे[4] वचसे[5] आधर्षणीयो न भवति ॥ ९ ॥

अन्तरैश्चक्रैस्तनयाय वर्तिर्द्युमता यातं नृवता रथेन ।
सनुत्येन त्यजसा मर्त्यस्य वनुष्यतामपि शीर्षा ववृक्तम् ॥ १० ॥

अन्तरैः । चक्रैः । तनयाय । वर्तिः । द्युऽमता । आ । यातम् । नृऽवता । रथेन ।
सनुत्येन । त्यजसा । मर्त्यस्य । वनुष्यताम् । अपि । शीर्षा । ववृक्तम् ॥ १० ॥

स्कन्द० अन्तरैः[6] अन्तरशब्दः सन्निकृष्टवचनः । इत्थंभूतलक्षणे चैषा तृतीया । [7]सन्निकृष्टैः चक्रैः सन्निकृष्टचक्रेण[7] तनयाय अपत्यभूताय ममार्थाय[8] वर्तिः वर्तन्या मार्गेण द्युमता दीप्तिमता आ यातम् आगच्छतम् नृवता योद्धृभिः मनुष्यैरुपेतेन रथेन । आगत्य [10]च सनुत्येन । 'सनुतः' ( निघ ३,२५ ) इत्यन्तर्हितनाम[11] । तस्मात्स्वार्थेऽयं[11] तद्धितः । अन्तर्हितेन अप्रकाशेन त्यजसा । [12]'त्यजः' ( निघ २,१३ ) इति[12] क्रोधनाम । क्रोधेन मर्त्यस्य । बहुवचनस्य स्थाने इदमेकवचनम् । अस्मान् अस्मच्छत्रुभूतानां मनुष्याणां वनुष्यताम्[13] 'वनुष्यतिर्हन्तिकर्मा'[14] ( या ५,२ ) । घ्नताम् [15]अपि शीर्षा[15] शिरांस्यपि, किमुत अन्यान्यङ्गानि । [16]ववृक्तम् 'वृणक्ति' ( निघ २,१९ ) इति वधकर्मा । कस्य[17] वद्दृग्गान्तरयेदं रूपम् । [18]पुनःपुनः छिन्तम्[18] ॥ १० ॥

वेंकट० सन्निकृष्टैः चक्रैः[19] पुत्राय मार्गं दीप्तिमता आ गच्छतम् मनुष्ययुक्तेन रथेन [19]धन दातुम्[19] । अन्तर्हितेन[20] क्रोधेन मर्त्यं हिंसतां राक्षसानाम् [21]शीर्षाणि अपि पृथक्[21] छिन्तम्[22] ॥ १० ॥

आ परमाभिरुत मध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक् ।
दृळ्हस्य चिद्गोमतो वि व्रजस्य दुरो वर्तं गृणते चित्रराती ॥ ११ ॥

आ । परमाभिः । उत । मध्यमाभिः । नियुत्ऽभिः । यातम् । अवमाभिः । अर्वाक् ।
दृळ्हस्य । चित् । गोऽमतः । वि । व्रजस्य । दुरः । वर्तम् । गृणते । चित्रराती इति चित्रऽराती ॥

---

१-१. °लो वि[१]. २. °ष वि[१] अ[१]. ३. रक्षसा मूको. ४. द्रोघे मूको. ५. °से ल सम; °सोप वि[१] अ[१]. ६. नास्ति मूको. ७-७. °ष्टैश्च तै. मूको. ८. °र्थं वि[१]. ९. ममार्थायेव वि[१]. १०-१०. च सनु तर्हि स्वन्तरितेन° मूको. ११. तस्मात्स्वार्थेऽयं मूको. ११-१२. त्यजतिः मूको. १३. मनुष्यनाम् मूको. १४. °हन्ति° मूको. १५-१५. अपि शीर्षा मूको. १६-१६. ववृक्तम्...अस्य मूको. १७. °ः मूको. १८-१८. पुनः... मूको. १९-१९. धनदा वि[१] ल एज. २०. भवि° मूको. २१-२१. °व्यपृथं वि[१], °व्यपिपृथं अ[१], °पाक ए एज. २२. छिन्तम् मूको.

स्कन्द० [1]आ परमाभि[1] इति आ इत्यस्य यातमित्याख्यातेन सम्बन्धः । आ यातम् हे अश्विनौ[1] परमाभि उत्कृष्टाभि उत [2]मध्यमाभि अनुत्कृष्टाभि अवमाभि निकृष्टाभि[2] । या काश्चन युवयोर्वडवा शोभना अशोभनाश्च ताभि सर्वाभिरित्यर्थः । अर्वाक् अस्मदभिमुखम् । किञ्च दृळ्हस्य चित् दृढस्यापि[3] दुरुद्घाटस्य गोमत उदकवत अजस्य मेघस्य दुर द्वाराणि । अथवा गोमान्[4] व्रजो गोष्ठ तस्य द्वाराणि वि वर्तम् वर्तते इत्यस्य गतिकर्मणोऽन्तर्णीतण्यर्थस्येद[5] रूपम् । विवर्तयतम् उद्घाटयतमित्यर्थः । गृणते स्तुवते ममार्थाय । मह्य वृष्टिं वा दातु मेघस्य, [6]गावो[6] दातु स्वगोष्ठस्य द्वाराण्युद्घाटयतमित्यर्थः । हे चित्रराती । विचित्रदानौ[7] ॥ ११ ॥

वेङ्कट० आ यातम् अभिमुख त्रिप्रमाणै अश्वै । दृढस्य अपि पशुमत अजस्य द्वाराणि विवृतानि कुरुतम् स्तुवते हे चित्रदानौ[7] इति ॥ ११ ॥

[8]इति पञ्चमाष्टके अष्टमाध्याये द्वितीयो वर्ग[8] ॥

[ ६२ ]

[9]भरद्वाजो बार्हस्पत्य ऋषि । अश्विनौ देवता । त्रिष्टुप् छन्द , एकादशी एकपदा त्रिष्टुप्[9] ।

क॑ऽइ॒ त्या व॒ल्गू पु॑रुहू॒ताद्य दू॒तो न स्तोमो॑ऽविद॒न्नम॑स्वान् ।
आ यो अ॒र्वाङ्नास॑त्या व॒वर्त॒ प्रेष्ठा॒ ह्यस॑थो अ॒स्य मन्म॑न् ॥ १ ॥

कः । त्या । व॒ल्गू इति॑ । पु॒रु॒ऽहू॒ता । अ॒द्य । दू॒तः । न । स्तोमः॑ । अ॒वि॒द॒त् । नम॑स्वान् ।
आ । यः । अ॒र्वाक् । नास॑त्या । व॒वर्त॑ । प्रेष्ठा॑ । हि । अस॑थः । अ॒स्य । मन्म॑न् ॥ १ ॥

स्कन्द० क स्तोम त्या तौ वल्गू सुरूपौ प्रियौ वा पुरुहूता बहुभिराहूतौ अद्य दूत न दूत इवास्मदीय स्तोम अविदत् विद ज्ञाने । नमस्वान् नमस्वान् हविर्लक्षणेनान्नेन[10] संयुक्त[10] । यथा राज्ञाऽन्येन वा [10]प्रेषित दूत[10] काश्चिनौ पश्येदित्यर्थः । य स्तोम किं कृतवान् । उच्यते—य अर्वाक् अस्मदभिमुखम् नासत्या नासत्यनामानौ[11] न वा असत्यौ[11] सत्यौ एव अश्विनौ आ ववर्त पूर्वेष्वपि कालेष्वावर्तितवान् । [12]एष पाद प्रत्यक्षकृत[12] । प्रेष्ठा हि असथ अतिशयेन प्रियौ युवाम् भवथ स्थ अस्य अस्मदीयस्य स्तोमस्य मन्मन् । मन्यतिरर्चतिकर्मा[13] (द्र निघ ३, ४) । छान्दसत्वाद् अधिकरणेऽयं मनिन् प्रत्यय[14] । मन्यन्ते स्तूयन्ते यत्र देवा[15] स मन्मा यज्ञ तस्मिन्[16] ॥ १ ॥

वेङ्कट० क [16]तौ वल्गनशीलौ[16] बहुभिराहूतौ अद्य[17] राज्ञाहित[18] दूत इव मदीय स्तोमः हविषा संयुक्तो विन्दत् य स्तोमोऽभिमुख नासत्यो आ वर्तयति । तुरीय पाद प्रत्यक्ष । प्रियतमौ हि भवथ[19] अस्य स्तोतु स्तुतौ ॥ १ ॥

---

१ १ नास्ति मूको २ २ मि अनुत्कृष्टाभि अवमाभि नि० मूको ३ °स्यापि मूको ४ नास्ति वि॰ ५ °णो व० मूको ६ ६ गावो मूको ७ ७ नास्ति मूको ८ °नानेन वि॰ ९ संयुक्ता मूको १० १० °तद्दू ता मूको ११ नासत्या° वि॰ नासत्यौ° वि॰ अ १२ अ त्यौ मूको १३ १३ एष पाद प्रत्यक्षता मूको १४ मन्यतोऽर्चतिकर्म मूको १५ मनिप्र° मूको १६ देवता वि॰ १७ नास्ति मूको १८ १८ आ अ द्यु तू अ॰ १९ एव मूको २० °हित मूको २१ भवते मूको

अरं मे गन्तं हवनायास्मै गृणाना यथा पिबाथो अन्धः ।
परि ह त्यद् वर्तिर्याथो रिषो न यत् परो नान्तरस्तुतुर्यात् ॥ २ ॥

अरम् । मे । गन्तम् । हवनाय । अस्मै । गृणाना । यथा । पिबाथः । अन्धः ।
परि । ह । त्यत् । वर्तिः । याथः । रिषः । न । यत् । परः । न । अन्तरः । तुतुर्यात् ॥२॥

स्कन्द० अरम् पर्याप्तम् गन्तम् शुद्धोऽप्ययं गमिराङ्पूर्वार्थे द्रष्टव्यः । आगच्छतम् मे मम स्वभूतम् हवनाय अस्मै । 'गत्यर्थकर्मणि' (पा २,३,१२) इत्येवमपरा द्वितीयार्थे चतुर्थी । आह्वानमिदं प्रति गृणाना स्तूयमानौ । कथं च । यथा पिबाथः अन्धः सोमलक्षणम्[1] अन्नम् । आगत्य च परि याथः परीत्येव उपेरयेतस्य स्थाने । याथः इत्यपि लोडर्थे लट् । उपयातम् वपगच्छतम् । ह इति पदपूरणः । त्यत् तत् तद्यसदीयं यज्ञकर्म वर्तिः वर्तन्या[2] । यो 'हद्रुपग-
• मनार्हः पन्थास्तेनेत्यर्थः[3] । यत् कीदृशम् । उच्यते—रिषः अरिष्टम् हिंसितृशत्र्वादि । न यत् परः
विप्रकृष्टः न अपि अन्तरः सन्निकृष्टः[4] तुतुर्यात् हिंसितुं शक्नोति । अविगुणं यदित्यर्थः ॥ २ ॥

वेङ्कट० अलम् मे गच्छतम् इदं ह्वानं श्रोतुं स्तूयमानौ[5] । यथा पिबथः सोमम्[6], तथा वा गच्छतम् । मार्गं हिंसकात्[7] परिहरन्तौ याथः[8] । न यत् वर्तिः दूरस्थः[9] हिनस्ति । न अपि सन्निकृष्टः ॥ २ ॥

अकारि वामन्धसो वरीमन्नस्तारि बर्हिः सुप्रायणतमम् ।
उत्तानहस्तो युवयुर्ववन्दा वां नक्षन्तो अद्रय आञ्जन् ॥ ३ ॥

अकारि । वाम् । अन्धसः । वरीमन् । अस्तारि । बर्हिः । सुप्रऽअयनतमम् ।
उत्तानऽहस्तः । युवयुः । ववन्द । आ । वाम् । नक्षन्तः । अद्रयः । आञ्जन् ॥ ३ ॥

स्कन्द० अकारि कृतम् वाम् युवयोरर्थाय अन्धसः निर्धारणे एषा षष्ठी । अन्नस्य[10] मध्ये वरीमन् वरणीयं सोमरसलक्षणम् । अस्तारि छान्दसत्वात् कर्मण्ययं मन्निप्रत्ययः[11], इडभावप्रतिषेधः[12] । वरणीयं सोमरसलक्षणम् । अस्तारि स्तीर्णं च वेद्याम् बर्हिः सुप्रायणतमम् अतिशयेन सुप्रगमम् । सुखोपसर्पमित्यर्थः[13] । अयं च उत्तानहस्तः । उत्तानौ हस्तौ यस्य स उत्तानहस्तः । कृताञ्जलिः युवयुः युष्मत्कामः स्तोता ववन्द स्तौति । वाम् युवां युवयोरर्थाय नक्षन्तः व्याप्नुवन्तः अद्रयः अभिषवग्रावाणः आ आञ्जन् अभिव्यञ्जयन्तीत्यर्थः प्रक्षणार्थो वा । आभिमुख्येन व्यञ्जयन्ति प्रक्ष्यन्ते[14] वा । ये सोमस्य
• रसस्तमभिषुण्वन्तो व्यक्तीकुर्वन्ति, प्रक्षयन्ते वा तेनेत्यर्थः ॥ ३ ॥

वेङ्कट० अकारि युवयोः सोमस्य पूर्णं पात्रं वरणीये यज्ञे । स्तीर्णं च बर्हिः[15] शोभनं प्रगमनं धनदानार्थम् उत्तानहस्तः युष्मत्कामः स्तौति । यज्ञं व्याप्नुवन्तो[16] ग्रावाणश्च मत्स्यात्यन्तं भवति । याम्[17] सोमरसैः "आ उन्दन्ति" ॥ ३ ॥

१. साभेल° वि° अ; सोमेल° वि° . २. वर्तन्या वि° . ३-३. उदगमनाहेस्तेन° मूको. ४. °इ:° वि° . ५. °नो मूको. ६. °थः मूको. ७. हिंसका° मूको. ८. °यो वि° अ° . ९. °तः दूरस्थः अ° . १०. अन्यस्य मूको. ११. मनि° मूको. १२. इ…दवा° मूको. १३. °र्पमि° मूको. १४. प्रक्षन्ते मूको. १५. बर्हिः मूको. १६. °न्दोन्तो वि° अ° क, °न्तोन्ता क. १७. याम् मूको. १८-१८. रोदन्ति मूको.

ऊर्ध्वो वा॑म॒ग्निर॑ध्व॒रेष्व॑स्थात् प्र रा॒तिरे॑ति जू॒र्णिनी॑ घृ॒ताची॑ ।
प्र होता॑ गू॒र्तम॑ना उरा॒णोऽयु॑क्त॒ यो नास॑त्या॒ हवी॑मन् ॥ ४ ॥

ऊ॒र्ध्वः । वा॒म् । अ॒ग्निः । अ॒ध्व॒रेषु॑ । अ॒स्था॒त् । प्र । रा॒तिः । ए॒ति॒ । जू॒र्णिनी॑ । घृ॒ताची॑ ।
प्र । होता॑ । गू॒र्तऽम॑नाः । उ॒रा॒णः । अयु॑क्त । यः । नास॑त्या । हवी॑मन् ॥ ४ ॥

स्कन्द० ऊर्ध्वः वाम् युवयोरर्थाय अग्निः अध्वरेषु यज्ञेषु अस्थात् स्थितः । प्रज्वलित इत्यर्थः । प्र एति प्रागच्छति आहवनीयं प्रति रातिः दानम् । कस्य । सामर्थ्याद् हविषः । जूर्णिनी [1]"जूर्णि" ( निघ २,१५ ) इति[1] क्षिप्रनाम । जूर्णिरेव जूर्णिनी, स्वार्थिकः । क्षिप्रा[2] घृताची उपस्तरणाभिघारणघृतेनाभ्यक्ता । न केवला रातिः[3] । किं तर्हि । प्र होता होताऽपि प्रैति होतृसदनं[4] प्रति गूर्तमनाः गुरी उद्यमने । स्तुतिक्रियायाम् उद्यतचित्तः उराणः उरुशब्दात् तत्करोतीतिण्यन्तात् शानचि[5] एतद्रूपम् । बह्वीः स्तुतीः कुर्वन् । यः किं कृतवान् । उच्यते— अयुक्त यः । युजिरत्रान्तर्णीतण्यर्थः, उपपूर्वार्थे[6] च द्रष्टव्यः । यः स्वयज्ञं प्रति[7] गमनाय उद्योजितवान् । कम् । उच्यते— नासत्या नासत्यौ युवाम् । केन । उच्यते— हवीमन् भावेऽयं मनिन्-प्रत्ययः[8], इट् च छान्दसत्वात् । आह्वानेन ॥ ४ ॥

वेङ्कट० ऊर्ध्वः युवयोः होमाय यज्ञेषु अग्निः अस्थात् उदतिष्ठत् । प्र गच्छति च हविषो दात्री क्षिप्रा जुहूः । प्र तिष्ठते च होता उद्गूर्णमनाः उरु स्तोत्रं कुर्वाणः । यः अश्विनौ युक्तौ अकरोद् हवने ॥ ४ ॥

अधि॑ श्रि॒ये दु॑हि॒ता सूर्य॑स्य॒ रथं॑ तस्थौ पुरुभुजा श॒तोति॑म् ।
प्र मा॒याभि॑र्मायिना भू॒तमत्र॒ नरा॑ नृतू॒ जनि॑मन् य॒ज्ञिया॑नाम् ॥ ५ ॥

अधि॑ । श्रि॒ये । दु॒हि॒ता । सूर्य॑स्य । रथ॑म् । त॒स्थौ॒ । पु॒रु॒ऽभु॒जा॒ । श॒तऽऊ॑तिम् ।
प्र । मा॒याभिः॑ । मा॒यि॒ना॒ । भू॒तम् । अत्र॑ । नरा॑ । नृ॒तू॒ इति॑ । जनि॑मन् । य॒ज्ञिया॑नाम् ॥ ५ ॥

स्कन्द० अत्रेतिहासमाचक्षते— सूर्यस्य दुहितरं देवा वरयामासुः । त ऊचुः 'आजिं धावामः । यो नो जेष्यति[9] [9]तस्यैव भविष्यतीति । ताम् अश्विनौ जिग्यतुः । सा जिताऽश्विनोः रथम् आरुरोहेति । तदेतदिहोच्यते— 'अधि श्रिये दुहिता' इति । श्रिये श्रयितुम् दुहिता सूर्यस्य सूर्यपुत्री सूर्या रथम् अधि तस्थौ अध्यतिष्ठत्[10] । आरूढेत्यर्थः । हे पुरुभुजा ! बहूनां हविषाम् अभ्यवहर्तारौ ![11] पालयितारौ ! वा स्तोतॄणाम् । कीदृशं रथम् । उच्यते— शतोतिम् बहुगतिम् । आजिरथेभ्योऽन्येभ्यो रथेभ्यः शीघ्रतरमित्यर्थः । किञ्च मायाभिः अतिशयवतीभिः प्रज्ञाभिः हे मायिना ! प्रज्ञावन्तौ ! प्र भूतम्[12] । [13]लडर्थेऽयं लुङ्[13] । प्रभवथः । ईशाथे इत्यर्थः । हे नरा ![14] मनुष्याकारौ ! [14]नृतू ! नर्तनशीलौ ![14] अत्र जनिमन् । जायन्ते यत्र स्तुतयो [15]हवींषि वा स जनिमा[15] यज्ञ इहाभिप्रेतः । अस्मिन् यज्ञे यज्ञियानाम् यज्ञार्हाणाम् । अस्माकम् यज्ञकारिणामित्यर्थः ॥ ५ ॥

---

1-1. जूर्णि॰ मूको. 2. नास्ति वि॰. 3. रात्रिः मूको. 4. होतृ दानं मूको. 5. ॰नि शानच॰ ॰एः मूको. 6. उप॰ मूको. 7. प … मूको. 8. ॰निन्॰ मूको. 9-9. आजिन्यामयानो जे मूको. 10-10. नास्ति मूको. 11. ॰वामभर्तारौ मूको. 12. भूवतम् मूको. 13-13. लटर्थे य … मत … दीपे … ण मूको. 14-14. नृ (नृ वि॰.)…नशीलौ मूको. 15-15. हवींषि जनिमा मूको.

वेङ्कट० अधि तस्थौ रथम् सूर्यस्य दुहिता युवयोः रथम् , हे बहुभोजनौ! बहुगमनम् । प्र अभवतम् अत्र कर्मभिः सत्कर्मवन्तौ[१] हे नेतारौ! नयनशीलौ! प्रादुर्भावे देवानां स्वयंवरे ॥ ५ ॥

[२]इति पञ्चमाष्टके प्रथमाध्याये तृतीयो वर्गः[२] ॥

युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः ।
प्र वां वयो वपुषेऽनु पप्तन् नक्षद् वाणी सुष्टुता धिष्ण्या वाम् ॥ ६ ॥

युवम् । श्रीभिः । दर्शताभिः । आभिः । शुभे । पुष्टिम् । ऊहथुः । सूर्यायाः ।
प्र । वाम् । वयः । वपुषे । अनु । पप्तन् । नक्षत् । वाणी । सुऽस्तुता । धिष्ण्या । वाम् ॥

स्कन्द० अत्रेतिहासमाचक्षते—सूर्या नाम सवितुर्दुहिता । तामश्विनौ सोमाय[३] राज्ञे वरयामासतुः[४] । तां स ददौ । तदेतत् सूर्या[५] वक्ष्यति—'सोमो [६]वधूयुरभवदश्विनास्तामुभा[६] वरा' ( ऋ १०,८५,९ ) इति । तां लब्धाम् अश्विनौ सर्वाभिः श्रीभिः परमया च शोभया युक्तां चक्रतुरिति । तदेतदिहोच्यते—युवं श्रीभिः इति । सह योगलक्षणात्र [७]'सर्वत्र तृतीया । युवम् युवाम्'[७] श्रीभिः दर्शताभिः आभिः - सर्वलोकप्रसिद्धाभिः सर्वाभिः सह शुभे षष्ठ्यर्थे चतुर्थ्येषा । शोभनायाः[८] पुष्टिम् । समग्रां तां परमां शोभामित्यर्थः । ऊहथुः प्रापितवन्तौ कृतवन्तावित्यर्थः । कस्याः । सूर्यायाः । किञ्च वाम् युवयोः स्वभूताः वयः । वेतिर्गत्यर्थः । गन्तारः अश्वाः वपुषे 'वपुः' ( निघ ३,१२ ) इत्युदकनाम । वृष्टिलक्षणोदकार्थं प्र अनु पप्तन् प्रकर्षेणानुगच्छन्ति । कम् । सामर्थ्याद् मेघम् । नक्षत् व्याप्नोति वाणी स्तुतिलक्षणा वाक् सुष्टुता कर्मण्ययं क्तः प्रत्ययः छान्दसत्वात् । सुष्ठु स्तोत्री हे धिष्ण्या! धिषणा वाक् तस्याः पुत्री! । अपत्ये यः प्रत्ययो द्रष्टव्यः । अथवा धीरिति 'प्रज्ञानाम । स्नाः'[९] । धौ सेवने । धीर्वेदविषयी सर्वार्थग्रहणसमर्था ययोस्तौ धिष्ण्यौ[१०] । धिष्ण्यावेव [११]'धिष्ण्यौ । सर्वज्ञावित्यर्थः[११] । ... व्याप्नोति । उच्यते—वाम् युवाम् । स्तोतृभिश्च युवां स्तूयेथे[१२] इत्यर्थः । अथवा वाणीति गर्जितलक्षणा वागभिप्रेता । सुष्टुतेत्यपि [१३]'कर्मण्ययं क्तः प्रत्ययः[१३] । अश्वा मेघमनुगच्छन्ति, युवामपि सुष्ठु [१४]'स्तोतृभिः स्तुतौ[१४] गर्जितलक्षणा वाक्[१५] व्याप्नोति । युवामपि तैरश्वैर्ह्यमानस्य मेघस्य शब्दं शृणुथ इत्यर्थः ॥ ६ ॥

वेङ्कट० युवम् श्रीभिः दर्शनीयाभिः आभिः शोभार्थं पोषणम्[१६] ऊहथुः सूर्यायाः । प्र अनु पप्तन् अश्वाः[१७] वाम् शोभार्थम् । युवाम् व्याप्नोत् स्तोतृभिः सुष्ठु स्तुता वाणी वाम् हे धिषणार्हौ! स्तुत्यौ[१८] ॥ ६ ॥

---

१. सत्क° वि॰ अ॰ ल, सौक° हल. २-२ नास्ति मूको. ३. स्त्रोमाय वि॰. ४. वारया° अ, वरश्विनौ साद्ध ( °नु वि॰ ) मा ५. सूर्ये वि॰ अ; सूर्यो वि॰. ६-६. वधू···उभ ( °धूम° वि॰; धू( °ऽ° अ ) मूको. ७-७. °म युव तृतीया। युवा मूको. ८. शोभनया वि॰ अ. ९-९. प्रज्ञाय वि॰ अ. १०. धिष्णी मूको. ११-११. धिष्णी···ज्ञा° मूको. १२. स्तुवे मूको. १३-१३. कर्म···त्र: ( °ण्यत्र वि॰ अ. ) य° मूको. १४-१४. °भिस्तत्र मूको. १५. वा मूको. १६. पूष° वि॰ अ॰. १७. दशस्त मूको. १८. °ष्टौ ( °ष्ट्यौ ) वि॰ अ॰.

सं वां शता नासत्या सहस्राश्वानां पुरुपन्थां गिरे दात् ।
भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥ १० ॥

सम् । वाम् । शता । नासत्या । सहस्रा । अश्वानाम् । पुरुऽपन्थाः । गिरे । दात् ।
भरत्ऽवाजाय । वीरा । नु । गिरे । दात् । हता । रक्षांसि । पुरुऽदंससा । स्युरिति स्युः ॥ १० ॥

स्कन्द० वाम् इति षष्ठीनिर्देशात् प्रसादेनेति वाक्यशेषः । युवयोः प्रसादेन हे नासत्यौ ! शतानि च 'सहस्राणि च अश्वानाम्' पुरुपन्थाः नाम राजा गिरे गृणातीति गीः 'स्तोता, तस्मै' सम् दात् सम्यग् दत्तवान् । कस्मै । उच्यते — भरद्वाजाय मह्यम् । हे वीर ! व्यत्ययेनेदमेकवचनम् । वीरौ ! शूरौ ! । न च विलम्बितवान्[1] । किं तर्हि । नु क्षिप्रमेव मह्यम् गिरे अदात् । किञ्च युष्मत्प्रसादेन हता हतानि अस्मच्छत्रुभूतानि रक्षांसि हे पुरुदंससा ! बहुकर्माणौ ! स्युः भवेयुः ॥ १० ॥

वेङ्कट० सम् प्रायच्छत् युवयोः स्तोत्रे अश्वानाम् शतानि सहस्राणि च नासत्यौ ! पुरुपन्थाः नाम राजा भरद्वाजाय क्षिप्रं हे वीरौ ! । द्विवचनं लुप्तम् । हतानि रक्षांसि भवन्तु हे बहुकर्माणौ ! ॥ १० ॥

आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम् ॥ ११ ॥

आ । वाम् । सुम्ने । वरिमन् । सूरिऽभिः । स्याम् ॥ ११ ॥

स्कन्द० 'वाम् युवयोः' प्रसादेन सुम्ने सुखे वरिमन् । कर्मण्यर्थं 'मनिन् प्रत्ययः' । वरणीये प्रार्थनीये उत्कर्षे सूरिभिः स्तोतृभिः पुत्रपौत्रैः ऋत्विग्भिर्वा सह 'आ स्याम्' आभिमुख्येन भवेयम् । सपुत्रपौत्रादिपरिवारः अहं सुखं प्राप्नुयामित्यर्थः ॥ ११ ॥

वेङ्कट० एकपदा । युवयोः सुखे विस्तृते स्तोतृभिः पुत्रादिभिः सह आभिमुख्येन स्याम् ॥ ११ ॥

'इति पञ्चमाष्टके प्रथमाध्याये चतुर्थो वर्गः' ॥

[ ६४ ]

'भरद्वाजो बार्हस्पत्य ऋषिः । उषा देवता । त्रिष्टुप् छन्दः ।'

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः ।
कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥ १ ॥

उत् । ऊँ इति । श्रिये । उषसः । रोचमानाः । अस्थुः । अपाम् । न । ऊर्मयः । रुशन्तः ।
कृणोति । विश्वा । सुऽपथा । सुऽगानि । अभूत् । ऊँ इति । वस्वी । दक्षिणा । मघोनी ॥ १ ॥

---

१-१. शत…दत्तवान् मूको. २-२. स्तोतारो… मूको. ३. वि…तवान् मूको. ४. वां सुम्ने वां युवयोः वि' अ. ५-५. मनिप्र° मूको. ६-६. [illegible] ७. "पौत्रादि" वि' [illegible]

स्कन्द० "'उदु श्रिये' उषस्ये[1] द्वे"। उषोदेवत्ये द्वे एते सूक्ते। उदित्युपसर्गः अरुधुरित्याख्यातेन सम्बन्धयितव्यः। उ इति पदपूरणः। श्रिये प्रकाशलक्षणायै। कृत्स्नस्य जगतः प्रकाशनार्थमित्यर्थः। रोचमानाः उत् अरुधुः उषसः एकस्यामेव[2] पूजार्थं बहुवचनम्, अवयवभेदापेक्षं वा। रोचमानाः उत् अरुधुः उत्थिताः। कथं च पुनरुद्गता। अपाम् न उदकस्येव ऊर्मयः रुशन्तः[3]। यथा नद्यां सरसि वा महीम्[4] उदकोर्मय आप्लाव्य 'कूलं निघ्नन्तः'[5] उद्गच्छेयुः, तद्वत् स्वभासा[6] कृत्स्नं जगदाप्लाव्य तमांसि प्रत्य उद्गता[7] इत्यर्थः। उद्गत्य च कृणोति 'इयम् एकवद्भावेनैव उषसः स्तुतिः'[8]। करोति उषाः विश्वा सर्वाणि सुपथा शोभनाः पन्थानः सुपथानि छान्दसत्वात् नपुंसकता। सुगानि सुगमनानि। [9]'ये केचन'[9] शोभनाः तान् सर्वान् प्रकाशयन्ती सुगमनान् करोतीत्यर्थः। [10]अभूत् भवति[10]। उ[11] इति पदपूरणः। वस्वी। वसुशब्दः प्रशस्तपर्यायः। प्रशस्ता दक्षिणा। दक्षतेरुत्साहकर्मण एतद्रूपम्। उत्साहकरी मनुष्याणाम्। उद्गतायां उषसि मनुष्याः स्वकर्मसूत्साहं कुर्वन्ति, अतः [12]'सैयाम् उत्साहकरी[12] भवतीत्युच्यते। मघोनी धनवती। उषा हि देवतात्वात् [13]हवनैन वा धनेन[13], हविर्लक्षणेन वा, यजमानेन वा तदधिपतित्वात् धनवती ॥ १ ॥

वेङ्कट० उत् तिष्ठन्ति अर्थम् उषसः दीप्यमानाः अपाम् [14]इव ऊर्मयः[14] श्वेतवर्णाः। अथैकवदाह— करोति विश्वानि भुवनानि शोभनमार्गाणि शोभनगमनानि च। प्रादुर्भूतायाम् उषसि भवत्युदारा प्रशस्या धनवती दक्षिणा ॥ १ ॥

भद्रा दंदृक्ष उर्विया वि भास्युत् ते शोचिर्भानवो द्यामपप्तन् ।
आविर्वक्षः कृणुषे शुम्भमानोषो देवि रोचमाना महोभिः ॥ २ ॥

भद्रा । दुदृक्षे । उर्विया । वि । भासि । उत् । ते । शोचिः । भानवः । द्याम् । अपप्तन् ।
आविः । वक्षः । कृणुषे । शुम्भमाना । उषः । देवि । रोचमाना । महःऽभिः ॥ २ ॥

स्कन्द० भद्रा[15] कल्याणी ददृक्षे दृश्यसे त्वम् उर्विया। प्रथमैकवचनस्य इयादेशः। [16]उर्वी च[16] विस्तीर्णा[17] वि भासि दीप्यसे। ते तव शोचिः दीप्तिः भानवः रश्मयश्च द्याम् द्युलोकम् उत् अपप्तन् उत्पतन्ति। गच्छन्तीत्यर्थः। किञ्च आविः प्रकाशम् वक्षः आत्मीयम् उरः[18] कृणुषे करोषि त्वम् शुम्भमाना शोभमाना हे उषः! देवि! रोचमाना दीप्यमाना महोभिः [19]महद्भिः। कैः।[19]। सामर्थ्यात् तेजोभिः ॥ २ ॥

वेङ्कट० भद्रा दृश्यसे[20] त्वम् आमिया[21] च वि भासि। तस्याः ते शोचिः भानवः च [22]'उत् अपप्तन्[22] द्याम् प्रति। त्वम् आविः कृणोषि वक्षः शोभमाना हे उषः! देवि! दीप्यमाना तेजोभिः ॥ २ ॥

---

१. उषस्ये मूको. २. करव मेव मूको. ३. रुशन्तः मूको. ४. महा मूको. ५-५. कूलन्निघ्ना (°नि…दि°.)-नः मूको. ६. नास्ति वि°. ७. उद्ग मूको. ८-८. °मेनभावे° मूको. ९-९. ये… मूको. १०-१०. नभू… मूको. ११. नास्ति मूको. १२-१२. सेषा° मूको. १३-१३. °नैतावभावे° मूको. १४-१४. इमे वति मूको. १५. भद्रा दद वि°. १६-१६. …च मूको. १७-१७. विस्तीर्णान् …मद वि' अ'; इव ऊर्मयः क ल ख. १८. उर मूको. १९-१९. मह…कैः वि'; महद्भिः वि' अ. २०. …से वि' वि' अ; विस्तीर्णान् वि°. २१. भनी मूको. २२-२२. उदपप्त वि°; उदपप्त अ°; उदपप्तन् ल ख.

गमयस्येवेत्यर्थः । [1]हे स्वभानो! स्वभावेनैव दीप्तिर्यस्याः[1] नाभरणसम्बन्धादिनिमित्ता सा स्वभानुः । तस्याः सम्बोधने हे स्वभानो! इति[2] । यैवंरूपासि सा नः [3]अस्मभ्यम् आ वह प्रापय[3] । देहीत्यर्थः । हे पृथुयामन्! पृथुयामिनि! शुभ्रे! महति! रयिम् धनम् । हे दिवः दुहितः! इषयध्यै इषु इच्छायामित्यस्यैतद्रूपम् । एषितुं प्रार्थयितुम् । किम् । सामर्थ्याद् हवींषि । दत्ते धने वयं [4]युष्मभ्यं हवींषि[4] प्रतिदास्याम इत्येवमर्थमित्यर्थः ॥ ४ ॥

वेङ्कट० तव तेजसाऽपि च त्रिलोकेष्वपि क्षेत्राणि सुगमानि सुपथानि च भवन्ति । किञ्च सङ्गमनसाधनशक्तिः निरालम्बने देशे अन्तरिक्षम् (द्र. निघ १,३) तरसि शुभ्रवर्णीहे! । सा अस्माकम् [5]आ वह[5] पृथुगमने! दर्शनीये! रयिम् हे दिवः दुहितः! एषणीयम् ॥ ४ ॥

सा वह योक्षभिरवातोषो वरं वहसि जोषमनु ।
त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना दर्शता भूः ॥ ५ ॥

सा । आ । वह । या । उक्षऽभिः । अवाता । उषः । वरम् । वहसि । जोषम् । अनु ।
त्वम् । दिवः । दुहितः । या । ह । देवी । पूर्वऽहूतौ । मंहना । दर्शता । भूः ॥ ५ ॥

स्कन्द० [6]सा त्वम् आ वह प्रापय मह्यम् । कम् । सामर्थ्याद् धनम् । या त्वम् उक्षभिरश्वैः[6] अवाता अप्रतिगता[7] महद्भिरश्वैरगतापि ह्यगत्यानयैव सती[8] हे उषः! वरम् प्रार्थितं यजमानानाम् वहसि प्रापयसि । ददासीत्यर्थः । [9]कदा । जोषम् अनु[9] । जोषमिति जुषेः कान्तिकर्मणो रूपम् । कान्तिरिच्छेति पर्यायौ । इच्छाम् अनु । इच्छानन्तरमेवेत्यर्थः । त्वम् दिवः दुहितः! या । ह इति पदपूरणः, चार्थे वा । या च त्वं हे दिवो [10]दुहितः! देवी देवनशीला[10] पूर्वहूतौ[11] पूर्वाह्णे पूर्वस्मिन्नपि काले आहूता मंहना दात्री । कीदृशी पुनर्दात्री । दर्शता दर्शनीया । अत्यन्तोत्कृष्टेत्यर्थः । भूः ॥ ५ ॥

वेङ्कट० सा त्वम् आ वह धनम्, या त्वम् उक्षभिः आगता अवाता अपरिहिता सती उषः! वरम्[12] जोषम् वहसि[13] स्तोतॄणाम् इच्छानन्तरम् । या त्वम् हे दिवः दुहितः! देवनशीला भवसि, सा त्वं पूर्वाह्णे[14] प्रातरेव मंहनीया दर्शनीया च भवसि ॥ ५ ॥

उत् ते वयश्चिद् वसतेरपप्तन् नरश्च ये पितुभाजो व्युष्टौ ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥ ६ ॥

उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । विऽउष्टौ ।
अमा । सते । वहसि । भूरि । वामम् । उषः । देवि । दाशुषे । मर्त्याय ॥ ६ ॥

---

१-१. स्वभा…न (न वि°) दीप्त° मूको. २. नास्ति वि°°. ३-३. °°…प मूको. ४-४. यु…पि मूको. ५-५. आ व मूको. ६-६. स मह्नोर्व सम्बर्धादशोः मूको. ७. अगतागि वि°, अगता वि° अ. ८. मति मूको. ९-९. …अनु मूको. १०-१०. दुहि… मूको. ११. पूर्व पूर्व° मूको. १३. भवहरा वि; भवदम अ°; वहसि हस. १४. पूर्वा…र्णे वि अ°; १२. भवर वि° अ°; वरं हस. पूर्वा दाने ल हस.

स्कन्द० उप्ते वयः । इयं प्रथमे[1] ( ऋ १,११४,१२ ) व्याख्यातार्था ॥ ६ ॥

वेङ्कट० गतेति ( द्र. ऋ १,१२४,१२ ) ॥ ६ ॥

[1]इति पञ्चमाष्टके प्रथमाध्याये पञ्चमो वर्गः[2] ॥

[ ६५ ]

[3]भरद्वाजो बार्हस्पत्य ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[3] ।

एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छन्ती मानुषीरजीगः ।
या भानुना रुशता राम्यास्वज्ञायि तिरस्तमसश्चिदक्तून् ॥ १ ॥

एषा । स्या । नः । दुहिता । दिवःऽजाः । क्षितीः । उच्छन्ती । मानुषीः । अजीगरिति ।
या । भानुना । रुशता । राम्यासु । अज्ञायि । तिरः । तमसः । चित् । अक्तून् ॥ १ ॥

स्कन्द० एषा स्या सा नः अस्मान् प्रति दुहिता । कस्य । दिवोजाः दिवः सकाशाज्जाता । दिवो दुहितेत्यर्थः । न च 'केवलान् अस्मान्' । किं तर्हि । क्षितीः मनुष्यजातीश्च मानुषीः मनुष्येषु भवाः । यावत्यः काश्चन मनुष्येषु भवाः ब्राह्मणादिमनुष्यजातयः । अजीगः 'गिरतिर्गिरतिकर्मा'[4] वा, गृणातिकर्मा[5] वाऽयत्र । इह तु सामर्थ्याद् गत्यर्थः । अस्मान् अन्यांश्च सर्वानेव मनुष्यान् प्रति गच्छतीत्यर्थः । या भानुना रश्मिलक्षणेन तेजसा रुशता हिंसता राम्यासु 'राम्या' ( निघ १,७ ) इति रात्रिनाम । रात्रिषु अज्ञायि ज्ञायते । किं कुर्वाणा । उच्यते—तिरः । [6]"तिरः सतः[6] इति प्राप्तस्य"[7] ( या ३,२० ) । नाम्नी । अप्राप्तस्यापि अनुपजातस्यापि । कस्य । तमसः । चित्-शब्दस्तु पदपूरणः । अक्तून् तमसः वा '[8]अभिव्यक्तपदा अपि कुर्वाणेत्यर्थः[8]' । अथवा 'अक्तुः' ( निघ १,७ ) इति रात्रिनाम । अक्तूनिति 'तमस इति' च[9] विपर्ययेण षष्ठ्येकवचनद्वितीयाबहुवचने द्रष्टव्ये । अप्राप्तान्यपि तमांसि रात्रेः[11] सम्बन्धीनि कुर्वाणेत्यर्थः ॥ १ ॥

वेङ्कट० सा एषा नः दिवो जाता दुहिता मानुषीः प्रजाः [illegible] उच्छन्ती उज्जागार । उषसि हि मानुष्यः प्रजाः निर्गच्छन्ति । या भानुना रुशता रात्रिषु ज्ञायते तमः तिरः कुर्वती[12] रक्षांसि चेति ॥ १ ॥

वि तद् ययुररुणयुग्भिरश्वैश्चित्रं भान्त्युषसश्चन्द्ररथाः ।
अग्रं यज्ञस्य बृहतो नयन्तीर्वि ता बाधन्ते तम ऊर्म्यायाः ॥ २ ॥

वि । तत् । ययुः । अरुणयुक्ऽभिः । अश्वैः । चित्रम् । भान्ति । उषसः । चन्द्रऽरथाः ।
अग्रम् । यज्ञस्य । बृहतः । नयन्तीः । वि । ताः । बाधन्ते । तमः । ऊर्म्यायाः ॥ २ ॥

स्कन्द० [13]तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः[13] । यद् अत्यन्तदुर्गमपर्वतशिलादि तत्

1. नवमे मूको. २-२. नास्ति मूको. ३-३. केवला वि[1]. ४. [0]गिरति कर्म मूको. ५. गृणाति कर्म मूको. ६-६. तिरस मूको. ७. प्राप्तस्य मूको. ८-८. [0]भ्यक्त वा अभि[0]... मूको. ९-९. नास्ति मूको. १०. नास्ति वि[1]. ११. रात्रेः मूको. १२. [0]र्वन्ति वि[1] अ[1]; तीर इव[1]लभ; [0]र्न्तो ल. १३-१३. [0]च्छो ...[0]र्त्त[0] मूको.

वि यथु विविधम् उषसो गच्छन्ति । केन । अरुणयुग्भिः अश्वैः । किञ्च चित्रम् भान्ति, वि ता बाधन्ते इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । या विचित्र पूज्नीय ■ दीप्यन्ते उषस चन्द्ररथा । 'चन्द्रश्चन्दते[1] कान्तिकर्मणः' (या ११,५)। कान्तरथा । अपस् अन्त समाप्तिम् यज्ञस्य बृहत । द्वितीयार्थेऽत्र षष्ठी । महान्त यज्ञ ज्योतिष्टोमादिम् नयन्तो प्रापयन्त्य प्रकान्तस्य महत सोमयागस्य समाप्तिम्, ता[2] उत्सर्यां रात्रे 'तम वि बाधन्ते[3]। यस्मान्निर्बाधिते तमसि प्रातरेव प्रकान्त सोमपान सुख समाप्तिं यास्यतीत्येवमर्थं' तमो बाधन्त इत्यर्थः ॥ २ ॥

वेङ्कट० वि गच्छन्ति तदानीमेव यदा रुचन्ति आरुणयुक्तै[2] अश्वैः । चित्रम् च भान्ति[4] उषस कान्तरथा[5] । प्रथितस्य[6] यज्ञस्य अपसम्[7] नयन्त्य वि बाधन्ते ता उषसो रात्रेः तम ॥ १ ॥

श्रवो वाजमिषमूर्जं वहन्तीर्नि दाशुषं उषसो मर्त्याय ।
मघोनीर्वीरवत् पत्यमाना अवो धात विधते रत्नमद्य ॥ ३ ॥

श्रवः । वाजम् । इषम् । ऊर्जम् । वहन्ती । नि । दाशुषे । उषसः । मर्त्याय ।
मघोनी । वीरऽवत् । पत्यमाना । अवः । धात । विधते । रत्नम् । अद्य ॥ ३ ॥

स्कन्द० श्रव कीर्तिम् वाजम् अपठितमप्येतत् सामर्थ्याद् बलनाम । बल च इषम् अन्न च ऊर्जम् रस च वहन्ती प्रापयन्त्य । एदस्य इत्ययं । "कस्मै । नि[10] दाशुषे । नीरयुपसर्ग[11] धातुर्थपादस्थेन धातोरध्याहारेण सम्बन्धयितव्य । हवींषि दत्तवत यजमानाय हे उषस । मर्त्याय मनुष्याय मघोनी धनवत्य वीरवत् पत्यमाना । 'पत्यते' (निघ २,२१) इत्यैश्वर्यकर्मा । यथा वीरो राजा अन्यो[11] वा कश्चित् कस्यचिद् ईशिता[12] तद्वत्सम ईशाना [13]"अव रक्षण नि धात[14] नियमेन धत्त[15] विधते परिचरते रत्नम् धन च अद्य अस्मिन्नहनि ॥ ३ ॥

वेङ्कट० कीर्तिं बलम् अन्नं[15] रस च प्रापयन्त्य नि धत्त दाशुषे मर्त्याय हे उषस । धनवत्य वीरपुत्रवद् गच्छन्त्य रक्षणम् रमणीयम् परिचरते मह्यम् अद्य ॥ ३ ॥

इदा हि वो विधते रत्नमस्तीदा वीराय दाशुषं उषासः ।
इदा विप्राय जरते यदुक्था नि ष्म मावते वहथा पुरा चित् ॥ ४ ॥

इदा । हि । वः । विधते । रत्नम् । अस्ति । इदा । वीराय । दाशुषे । उषसः ।
इदा । विप्राय । जरते । यत् । उक्था । नि । स्म । माऽवते । वहथ । पुरा । चित् ॥ ■ ॥

---

१. चन्द्रश्चन्दते वि[2] अ; चन्द्रे च ते वि[3]. २ ताम्वि मूको ३.३ "नाम्वि मूको ४. धाथा प्रीते ।त्त्र" मूको ५ देव्या" मूको ६ मत्व" वि[2] ७ "था वि[2] अ" ८ तदि तस्य वि[2] अ", प्रतिशिष्य ह्रु हृस ९ नाविं वि[2] १०-१२ च यादि मूको ११ "र्णो मूको १२. नतो मूको १३ "शिन मूको १४-१४ नत न त वि[2] अ; नम धत्त वि[2] मूको. १५ हेत मूको. १६. नई वि[2] अ[1].

स्कन्द० यदिति तृतीयपादस्थो यच्छब्द पूर्वयोरपि पादयोरनुपकृष्य । यत् इदा[1] इदानीम् । हि इति पदपूरण । व युष्माकम् [2]विधते परिचरते परिचरितुरर्थाय[2] रत्नम् धनम् अस्ति । यत् परिचरित्रे दातु स्थापितमित्यर्थ । यच्च इदा इदानी वीराय दाशुष । वीर स्तुतिकर्मणि शूर, दाश्वान् यजमान, तदर्थम् हे उषस ! । यत् च इदा इदानीम् विप्राय जरते मेधाविन स्तोतुरर्थाय । केन जरते । उच्यते— उक्था उक्थै स्तोत्रै[3] । मच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य । तत् नि स्म मावते वहथ स्मेति [4]पदपूरण । नित्यमेव[4] वहथ मापमय मावते । 'वतुप्प्रकरणे[5] युष्मदस्मद्भ्यां छन्दसि सादृश्ये उपसंख्यानम्' (पावा ५,२ ३९) 'इत्येवमय सादृश्ये वतुप् । मत्सदृशाय[6] । अथवा 'माच्छन्द, प्रमाच्छन्द[7] 'प्रतिमाच्छन्द[7] (मा १४,१८) इत्यादिमन्त्रेषु[8] छन्दश्शब्दसामानाधिकरण्येन[8] प्रयोगदर्शनात् माशब्द[9] छन्दोविशेषवचन[10] सद्गृते । छन्दोविशेषे स्तोत्रे मह्यमित्यर्थ । पुरा चित् चिदिदुपमार्थे ( तु या १४ ) । पुरेव[12] । यथैव पूर्वस्मिन् काले[13] तद्वद् इदानीमपीत्यर्थ ॥४॥

वेङ्कट० इदानीमेव व[14] परिचरते रत्नम् अस्ति दातव्य, इदानीम् वीराय दाशुष हे उषस !, इदानीमेव मेधाविन स्तुवते, यदा [15]उक्थानि[15] भवन्ति, इदानीमेवेति । तथा नि वहथ मावते स्तोत्रे धनम् पुरा चित् तदानीमेव[16] ॥ ४ ॥

इदा हि त उषो अद्रिसानो गोत्रा गवामङ्गिरसो गृणन्ति ।
व्य१र्केण बिभिदुर्ब्रह्मणा च सत्या नृणामभवद् देवहूतिः ॥ ५ ॥

इदा । हि । ते । उष । अद्रिसानो इत्यद्रिऽसानो । गोत्रा । गवाम् । अङ्गिरस । गृणन्ति ।
वि । अर्केण । बिभिदु । ब्रह्मणा । च । सत्या । नृणाम् । अभवत् । देवऽहूति ॥ ५ ॥

स्कन्द० [17]इदा इदानीम् । हि शब्द पदपूरण[17] । ते तव स्वभूतान् हे उष ! अद्रिसानो ! अद्रय अभिषवग्रावाण ते सानवस्ते समुच्छ्रिता सोमाभिषवार्थमुत्क्षिप्ता । यस्या[18] साऽद्रिसानु[18] । [19]या त्वम् सोमैरिज्यसे[19] इत्यर्थ । तस्या सम्बोधन हे अद्रिसानो[1] इति । गोत्रा[20] । गोत्राशब्दोऽय यद्यपि [21]खलगोरथात्, इनित्रकट्यचश्च' (पा ४,२,५०,५१) इत्येव समूहविशेषे[21] गवामेव समूहेऽभ्वाख्यायते[22], तथापि यथा मकुहो वीणाया प्रवीण इत्येव प्रकर्षविशेषेऽपि[24] [23]अन्वाख्यायमान प्रकृतपर्यायो भवति, तथाय समूहविशेषेऽन्वाख्यायमान सन्नूहपर्यायो[26] द्रष्टव्य । कुत एतत् । गवामिति शब्दान्तरेण [27]समूहिवाचिना गवाम् उपादानात्[27] । समूहान् गवाम् अङ्गिरस ऋषय गृणन्ति स्तुवन्ति अर्केण अर्चनीयेन महता मन्त्रेण । किञ्च वि विभिदु विभिन्दन्ति । विभेदन

१ यदा वि[1] २-२ विधते अ[c] मूको ३ ३ उक्था मूको ४ ४ [a]ग यमेव वि[1] अ, [a]ग। । यमेव वि[2] ५ वेतुप्प्रक[°] मूको ६ ६ [°]मय मेस[°] मूको ७ नास्ति मूको ८-८ [°]च्छ मन्ते[°] मूको ९ छन्दस[°] मूको १० स्वच्छन्द मूको ११ [°]न्दाति वच[°] मूको १२ पुरेव मूको. १३ नास्ति वि[1] १४ इव मूको १५ यथा वि[1] अ[1] १६ तथापि मूको १७ [°]मेव वि[1] अ[1] १८ १८. इदा पद[°] मूको १९ यस्मात् मूको २० सोऽद्रि[°] मूको २१ २१ या सो मूको. २१ गो मूको २३ २३ खलगोरथा च व्याख्यानेनेव समूहविशेष मूको २४ [°]वे त्वा[°][°]। मूको २५ प्रकरणविशे[°] वि[1]. २६ २६ [°]मान पर्यायो मूको २७ २७. समूहि गवा[°] मूको

नाम दानार्थमेकदेशस्य [1]पृथक्करणम्। दानार्थं[1] तद्गोसमूहस्य एकदेशः पृथक् कृत इत्यर्थः। किञ्च सत्या फलविसंवादरहिता गृणाम् अन्येषामपि मनुष्याणाम् अभवन् आसीत् देवहूतिः तव देव्या आह्वानम् ॥ ५ ॥

वेङ्कट० इदानीम् ते हे उषः! आव्रियमाणसमुच्छ्रितदेहे[2]! गवाम् अश्वभूतानां नामानि स्तोत्रपराः अङ्गिरसः गृणन्ति। वि बिभिदुः च अन्धकारं हविषा स्तोत्रेण च त्वां परिचरन्तः। तथा त्वदनुदितानां सत्यः भवति मनुष्याणाम् यज्ञः ॥ ५ ॥

उच्छा दिवो दुहितः प्रत्नवन्नो भरद्वाजवद् विधते मघोनि ।
सुवीरं रयिं गृणते रिरीह्युरुगायमधि धेहि श्रवो नः ॥ ६ ॥

उच्छ । दिवः । दुहितरिति । प्रत्नऽवत् । नः । भरद्वाजऽवत् । विधते । मघोनि ।
सुऽवीरम् । रयिम् । गृणते । रिरीहि । उरुऽगायम् । अधि । धेहि । श्रवः । नः ॥ ६ ॥

स्कन्द० 'उच्छ विवासय' तमांसि हे दिवः दुहितः! प्रत्नवत् पुराणवत् नः 'अस्मदो द्वयोश्च' ( पा १,२,५९ ) इत्येकम् एवद् एकस्मिन्नेव बहुवचनम्। ममार्थाय। न च पुराणवदेव केवलम्। किं तर्हि। भरद्वाजवत् च। विधते परिचरतोऽर्थाय[3]। यथा पूर्वेषाम् ऋषीणां 'यथा च ममैव'[4] भरद्वाजस्यार्थाय पूर्वं व्युच्छन्त्यासि तद्वद् इदानीमपि 'परिचरतोऽर्थाय व्युच्छेत्येतच्छब्दार्थौ'। हे मघोनि! धनवति!। किञ्च सुवीरम् 'शोभनैर्वीरैः पुत्रैः' पौत्रैरुपेतम् रयिम् धनम् गृणते स्तुवते मह्यम् रिरीहि देहि। उरुगायम् बहुषु पुत्रपौत्रादिषु गन्तृ। पुत्रपौत्राननुगच्छतीत्यर्थः। अथवा बहुषु धर्मादिषु विनियोगं गन्तृ। सर्वधर्मादिविनियोगसमर्थमित्यर्थः। अधि[5] धेहि 'अधिपरी अनर्थकौ' ( पा १,४,९३ ) इत्येवम् अधिशब्दः कर्मप्रवचनीयः पदपूरणः। देहि श्रवः अन्नम् नः अस्मभ्यम् ॥ ६ ॥

वेङ्कट० 'व्युच्छ देवि[9]' हे दिवः दुहितः! उषः![10] अस्मभ्यम् प्रत्नेभ्य[11] इव। यद्वेदाऽऽह— भरद्वाजवत्[11] स्तुवते मह्यं हे धनवति!। तथा पुत्रपौत्रयुक्तं धनं च मह्यं स्तुवते देहि। तथा बहुभिर्गेयम् अन्नम् अस्मभ्यम् अधि धेहि ॥ ६ ॥

[12]इति पञ्चमाष्टके प्रथमाध्याये षष्ठो वर्गः[12] ॥

[ ६६ ]

[13]भरद्वाजो बार्हस्पत्य ऋषिः। मरुतो देवता। त्रिष्टुप् छन्दः[13]।

वपुर्नु तच्चिकितुषे चिदस्तु समानं नाम धेनु पत्यमानम् ।
मर्तेष्वन्यद् दोहसे पीपाय सकृच्छुक्रं दुदुहे पृश्निरूधः ॥ १ ॥

१-१. पृथक्…दा° मूको. २. °माणम्° मूको. ३-३. स्व मूको.° ४. परि…य वि° अ; परि…य… वि°. ५-५. यथैव मम च वि°. ६-६. °र्थाय…च्छ° मूको. ७-७. °र्वीरैः …त्रै मूको ८. ०पि मूको. ९-९. व्युच्छ° ल लभा; व्युच्छ° भ°; उच्छे° वि°, उच्छ दिवि व प्रस्तावः. १०. एका मूको. ११. °न्ये° मूको. १२. दशमाद्द: मूको. १३-१३. नास्ति मूको.

वपुः । नु । तत् । चिकितुषे । चित् । अस्तु । समानम् । नाम । धेनु । पत्यमानम् ।
मर्तेषु । अन्यत् । दोहसे । पीपाय । सकृत् । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १ ॥

स्कन्द० "'वपुर्नु तत्' मारुत सूक्तमुत्तरम्"। मरुद्देवत्यमेतत् पूर्वाभ्यामुपसाम्यामुत्तरम्। वपु 'वपु' ( निघ १,१२ ) इत्युदकनाम। वृष्टिलक्षणमुदकम्। नु क्षिप्रम् तत् चिकितुष ज्ञातुरर्थाय अस्तु भवतु। पततिरित्यर्थः। यत् कीदृशम्। उच्यते—समानम् तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यत् सर्वप्राणिसाधारणम् नाम। 'नाम' ( निघ १,१२ ) इति उदकनाम, [1]सामर्थ्याच्चान्तर्णीतण्यर्थोऽत्र नमि। नमयत्यन्नमाहारार्थम्। उदकमेव[1] पार्थिवेन रजसा संसृष्टमित्यर्थः। धेनु धिन्वते[2] प्रीणनार्थस्येद[3] रूपम्। प्रीणयितृ पत्यमानम् पतत्। कस्य[4] प्रीणयितृ। उच्यते—मर्तेषु। षष्ठ्यर्थे सप्तम्येषा। मनुष्याणाम्। अन्यत् पृथग्भूतम्। सामर्थ्यात् पार्थिवादुदकात्। यच्च दोहसे दोहनार्थम् पीपाय अहभिरंशुभिर्भौमान् रसान् आदायाऽऽदाय आप्याययति। आप्याय्य च सकृत् संवत्सरस्य सकृदेव। वर्षास्वेव, नान्यस्मिन् काल इत्यर्थः। शुक्रम् शुक्लवर्णम् दुदुहे दोग्धि क्षारयति पृश्नि द्यौ ( द्रु या २,१४ ) मरुतां माता ऊधः ऊधस्थानीय मेघम् ॥ १ ॥

वेङ्कट० रूप क्षिप्रं तज्ज्ञातुः[5] प्रादुर्भवतु समानाकारम्, सदृशा हि मरुत, पदार्थाना नामक प्रीणयितृ सदा गच्छत्। किं तदित्याह—मर्त्येषु अन्यत् एकदेशं तस्य रूपस्य मर्त्यानामभिलषि तदोहार्थम् वृद्धि पीपाय[6]। दिवि चान्यदेवेषु[7] सकृत् पृश्नि आत्मीयम् ऊधः शुक्रम् दोहरूपम् दुदुहे इति ॥ १ ॥

ये अग्नयो न शोशुचन्निधाना द्विर्यत् त्रिर्मरुतो वावृधन्त ।
अरेणवो हिरण्ययास एषां साकं नृम्णैः पौंस्येभिश्च भूवन् ॥ २ ॥

ये । अग्नयः । न । शोशुचन् । इधानाः । द्विः । यत् । त्रिः । मरुतः । ववृधन्त ।
अरेणवः । हिरण्ययासः । एषाम् । साकम् । नृम्णैः । पौंस्येभिः । भूवन् ॥ २ ॥

स्कन्द० ये मरुत अग्नय[8] न अग्नय इव शोशुचन् दीप्यन्ते इधाना दीप्यमानाः। न च सकृत्। किं तर्हि। द्वि च त्रि च। पुन पुनरित्यर्थः। यत् ये च मरुत वावृधन्त शरीरेण वीर्येण च परिवृद्धा। यच्छब्दश्रुतेस्तच्छब्द एषामित्यनेन[9] समानाधिकरणोऽध्याहार्यः। तेषाम् एषाम् अरेणव धूलिवर्जिता। [10]अमलिना इत्यर्थः[10]। हिरण्ययास हिरण्मया। क। सामर्थ्याद् रथा। किञ्च एते मरुत साकम् सह नृम्णै सेनालक्षणैर्बलै पौंस्येभि च सामर्थ्यलक्षणैश्च बलै भूवन् उत्पन्ना। उत्पत्तित एव प्रभृति ते [11]एते मरुत सेनाभि[11] सामर्थ्येन चोपेता इत्यर्थः ॥ २ ॥

वेङ्कट० ये अग्नय इव काष्ठै समिध्यमाना दीप्यन्ते मरुद्भूता। ये च प्रादुर्भूता द्वि द्विगुणम्

१ १. °देव पार्थ उदकनामेन मूको २ धिन्वते मूको ३ °पस्यैतद् वि[1] ४. कस्य मूको ५ त रात् मूको ६ पाय मूको ७ °देवेषु वि[1] ८. अग्नय नायो वि[1] ९ °मित्यधि करणेन वि[1] १० १०. अति ( [illegible] वि[1]. ) ना इत्यत मूको ११ ११ एव सेनाभि मूको

नि त्रिगुणं च मरुत[1] वावृधन्त । रेणुवर्जिता हिरण्मया रथा "च एषाम्[2], ते साकम् धनैः बलैश्च[3] प्रादुर्भवन्ति ॥ २ ॥

रुद्रस्य ये मीळ्हुषः सन्ति पुत्रा याँश्चो नु दाधृविर्भरध्यै ।
विदे हि माता महो मही षा सेत् पृश्निः सुभ्वे गर्भमाधात् ॥ ३ ॥

रुद्रस्य । ये । मीळ्हुषः । सन्ति । पुत्राः । यान् । चो इति । नु । दाधृविः । भरध्यै ।
विदे । हि । माता । महः । मही । सा । सा । इत् । पृश्निः । सुऽभ्वे । गर्भम् । आ । अधात् ॥३॥

स्कन्द० रुद्रस्य ये भरुत मीळ्हुष सेक्तु । वर्षितुरित्यर्थः[4] । सन्ति भवन्ति पुत्रा । यान् च । उ नु इति पदपूरणौ । दाधृविः धृञ् धारणे । साधु धारयित्री भरध्यै[5] डुभृञ् धारणपोषणयोः । उदरेण धारयितुम् विदे ज्ञातवती । हि पदपूरणः । माता जनयित्री । कीदृशान् । उच्यते — महः महत । कीदृशी । उच्यते — मही सा । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । या महती सा । विदित्वा च सा इत् । इच्छब्दोऽत्र एवार्थे । सैव पृश्निः सुभ्वे "महदर्थं पतत् तदभ्यन्[6] । महदुदरे गर्भम् गर्भभूतान् आ अधात् दधातिर्धारणार्थे । आभिमुख्येन धृतवती । अस्या ऋच उत्तरयोश्च यच्छब्दश्रुते "तथा 'न इदुमा'[7] इत्यत्र च तच्छब्दश्रुते अनयोरेकवाक्यता ॥ ३ ॥

वेङ्कट० रुद्रस्य सेक्तु[8] ये भवन्ति पुत्राः । यान् च एव धारयन्त्याता हि भरणाय भवति[9] न म्रियते । तेषाम् माता प्रख्याताऽऽसीत् महतोऽपि मही सा पृश्निः । सा[10] एव[11] शोभनभवनाय[12] मरुद्गणाय गर्भम् आहितवती ॥ ३ ॥

न य ईषन्ते जनुषोऽया न्व१न्तः सन्तोऽवद्यानि पुनानाः ।
निर्यद् दुह्रे शुचयोऽनु जोषमनु श्रिया तन्वमुक्षमाणाः ॥ ४ ॥

न । ये । ईषन्ते । जनुषः । अया । नु । अन्तरिति । सन्तः । अवद्यानि । पुनानाः ।
निः । यत् । दुह्रे । शुचयः । अनु । जोषम् । अनु । श्रिया । तन्वम् । उक्षमाणाः ॥ ४ ॥

स्कन्द० न ये मरुत ईषन्ते पारयन्ते अनुषः पञ्चमीश्रुते प्रभृतीति वाक्यशेषः । जन्मन एव प्रभृति अया "एतेरत् छान्दसत्वात्[13] "अत्यय प्रातिपदिकत्वादुदात्तत्वात्[14] । षष्ठीबहुवचनस्य स्यादेशः । गन्तृणा मेघानाम् । नु[15] इति पदपूरणः । अन्तः मध्ये सन्त अवद्यानि यानि तत्र गर्हाण्युदकानि तानि पुनाना शोधयन्त । ये च नि दुह्रे निर्दुहन्ति मेघान् शुचय शुद्धा दीप्ता अनु जोषम् 'जुषत' (निघ २,६) इति कान्तिकर्मा । अनुकामम् । इच्छायत्तरमनेनेत्यर्थः[16] । अनु

1. °त मपक्तो मूको. २ २ भासित मूको ३. दुवेरच मूको. ४. वर्षितु° मूको. ५ भरध्यै मूको ६ ६ महद् उदरं° मूको ७ ७ त उदुमा° मूको ८. °क मूको ९ °न्ति मूको १०. स मूको ११ एव मूको १२. °भवाय° मूको. १३ १३. एतेरत् छन्द° वि° अ, एतेऽस्य छा°द° वि° १४-१४. प्रत्ययः° मूको. १५ अनु मूको. १६. इच्छायत्त° मूको

श्रिया। अनु इत्युपसर्गश्रुतेः श्रियेति च तृतीयाश्रुतेर्योग्यक्रियाशब्दाध्याहारः। अनुगताः श्रिया। शोभमाना इत्यर्थः। तन्वम्[1] शरीरम् आत्मीयम् उक्षमाणाः उदकेन सिञ्चन्तः[2] ॥ ४ ॥

वेङ्कट० न ये गच्छन्ति जातान्[3] मनुष्यान् शीघ्रं गन्तव्यानि स्थानानि शरीरस्य अन्तः सन्तः अवद्यानि पुनानाः। "निः दुहन्ति" दीप्ताः यदा उदकम् इच्छायाम्, तदानीम् अनुगताः श्रिया भवन्ति विस्तृतमुदकं सिञ्चन्तः[4] ॥ ४ ॥

मुक्षू न येषु दोहसे चिदुया आ नाम धृष्णु मारुतं दधानाः।
न ये स्तौना अयासो मह्ना नू चित् सुदानुरव यासदुग्रान् ॥ ५ ॥

मुक्षु। न। येषु। दोहसे। चित्। अयाः। आ। नाम। धृष्णु। मारुतम्। दधानाः।
न। ये। स्तौनाः। अयासः। मह्ना। नु। चित्। सुऽदानुः। अव। यासत्। उग्रान् ॥ ५ ॥

स्कन्द० 'मक्षु क्षिप्रम्। न-शब्दोऽत्रोपरिष्टादुपचार उपमार्थीयत्वाद् 'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः' (या ७,३१) इति पदपूरणः[5]। "येषु प्रथमार्थे" सप्तमीयम्[6]। मं[7] दोहसे दोहनाय मेघस्य। चित्-शब्दः पदपूरणः। अयाः मेघं प्रति गन्तारः नाम उदकम् (द्र० निघ १,१२) धृष्णु अभिभवितृ। प्रभूतमित्यर्थः। मारुतम् मरुतां यद्योग्यं तत् आ दधानाः आभिमुख्येन वहन्तः। ये च न स्तौनाः। स्तुनाः इति महन्नाम, तस्मात् स्वार्थे तद्धितः। न महान्तः न स्थविराः। तरुणा इत्यर्थः। अयासः शत्रून् प्रति गन्तारः मह्ना महत्ता सेनालक्षणेन बलेन। यांश्च नु चित्। नुचिच्छब्दोऽत्र नशब्दस्यार्थे। 'नू चित् सहोजाः' (ऋ १,५८,१) इति यथा। न सुदानुः शोभनोऽपि दाता यजमानः अव यासत्। अवेरपेप वा इत्येतस्य स्थाने। आयासयति क्लेशयति। आगतमात्रेभ्य एव हविर्ददाति, नैनान् प्रतीक्षयतीत्यर्थः। उग्रान् अप्रसह्यान्[10] क्रूरान् वा ॥ ५ ॥

वेङ्कट० ये देवेषु[11] धर्षणशीलम् मारुतम् नाम आ दधानाः उदकवन्तो मनुष्याः शीघ्रम् उदारेषु धनस्य दोहार्थं गन्तारो भवन्ति, यां[12] ये[13] घोराः महत्त्वेन। तान् उद्गूर्णान् क्षिप्रमेव शोभनदानः यजमानः अवेजते क्रोधरहितान् करोति। [14]स्तेनयतिपर्यायः स्तौनपतिः[14] ॥ ५ ॥

[15]इति पञ्चमाष्टके प्रथमाध्याये सप्तमो वर्गः[15] ॥

त इदुग्राः शवसा धृष्णुषेणा उभे युजन्त रोदसी सुमेके।
अध स्मैषु रोदसी स्वशोचिरामवत्सु तस्थौ न रोकः ॥ ६ ॥

१. मनन्ते मूको. २. सिञ्च··· मूको. ३. °ता मूको. ४-४. निर्दे° वि° अ. ५. °त्तम् वि° अ°. ६-६. ···शब्द क कयमर्थ( उपरत° वि° )मीयत्वादस्युपमार्थीयत्वादस्युपमार्थी अस्य( मीयत्वादस्युपमार्थी अस्य वि° अ°. ) सैनत्यर्थे प्रयोग इति पदपूरणः मूको. ७-७. ···प्रथ° मूको. ८. °धीरा मूको. ९. नास्ति वि°. १०. प्रसह्यान् मूको. ११. देवेषु वि° अ°. १२. ये मूको. १३. येषे वि°. १४-१४. तौ नयन्ति स्थौण्यसौ नयन्ति वि° अ; ते नयति पर्योष. सौ नयन्ति अ°; एते नयन्ति पर्याप्तसौ स्थानि अ°; नी सामन्तिपर्यायौ ल प्रस्तावः. १५-१५. नास्ति मूको.

ते । इत् । उग्राः । शवसा । धृष्णुऽसेनाः । उभे इति । युजन्त । रोदसी इति । सुमेके इति सुऽमेके ।
अध । स्म । एषु । रोदसी । स्वऽशोचिः । आ । अमवत्ऽसु । तस्थौ । न । रोकः ॥ ६ ॥

स्कन्द० ये ऋजत्यादयोक्तविशेषणास्ते । इत् इति पदपूरणः । उग्राः अपसहाः शूराः वा शवसा स्वेन बलेन धृष्णुसेनाः अभिभवितृसेनाः उभे अपि युजन्त स्वपरिचर्यायां नियुञ्जते रोदसी द्यावापृथिव्यौ । सुमेके । मेको दर्शनम् । सुदर्शने । अथवा मिह सेचने इत्यस्य मेक इति रूपम् । सुसेक्त्र्यौ । अध स्म एषु । द्वितीयार्थे सप्तम्येषा । इमान् रोदसी रुद्रस्य पत्नी पृश्निर्मरुतां माता स्वशोचिः स्वदीप्तिः । स्वसामर्थ्येनैव दीप्तेत्यर्थः । अमवत्सु अमशब्दः आत्मपर्याय । इयमपि च द्वितीयार्थ एव सप्तमी । आत्मवतः । यत्नकारिण इत्यर्थः । अथवा अम रोगे इत्यस्य धातो अमशब्दो रोगवचनः । रोगभूतान् शत्रूणाम् आ तस्थौ अधितिष्ठति । कार्याणि कुर्वतः प्रत्यवेक्षत इत्यर्थः । रोदसी हि मरुतां माता । माता च पुत्रान् कार्याणि कुर्वतः अवश्यं प्रत्यवेक्षते । रोकः । रोचत इति रोकः । आदित्यः । नशब्दश्च पुरस्तादुपचारोऽपि सामर्थ्याद् उपमार्थीयः । यथादित्यः लोकपालत्वात् सर्वान् प्राणिनः प्रत्यवेक्षते तद्वदित्यर्थः ॥ ६ ॥

वेङ्कट० ते इत् उग्राः शवसा धर्षणशीलसेनाः संयोजयन्ति उभे द्यावापृथिव्यौ मरुतः सम् एकार्थम् । अथ खलु [illegible] मरुत्सु रुद्रस्य पत्नी मरुतां माता स्वभूतदीप्तिः तिष्ठति । न च बलवत्सु मरुत्सु आ तिष्ठति दीप्तिः, भूयोभूयः स्फुरतीत्यर्थः ॥ ६ ॥

अनेनो वो मरुतो यामो अस्त्वनश्वश्चिद् यमजत्यरथीः ।
अनवसो अनभीशू रजस्तूर्वि रोदसी पथ्या याति साधन् ॥ ७ ॥

अनेनः । वः । मरुतः । यामः । अस्तु । अनश्वः । चित् । यम् । अजति । अरथीः ।
अनवसः । अनभीशुः । रजःऽतूः । वि । रोदसी इति । पथ्याः । याति । साधन् ॥ ७ ॥

स्कन्द० अनेनः अपापः वः युष्माकम् स्वभूतो हे मरुतः । यामः रथः अस्तु अस्माकम् उपरि भवत्विदमेतदाशास्महे । यः कीदृशः । उच्यते—अनश्वः चित् अश्वरहितोऽपि यम् प्रथमार्थे द्वितीयैषा । यः अजति गच्छति अरथीः सारथिरहितश्च अनवसः अवसं पथ्यदनम्, तद्रहितश्च अनभीशुः अश्वरश्मिरहितश्च रजस्तूः रजांसि त्रयो लोकाः, तान् प्रति त्वरिता । अथवा रज उदकम् तस्य मेघस्थस्य तूर्विता हिंसिता रोदसी द्यावापृथिव्यौ पथ्या नियमेन पथा हि याति विविधं रिष्यति साधनदुस्साधनानि शत्रुबलानि साधन् साधयन् ॥ ७ ॥

वेङ्कट० हे मरुतः । पापवर्जितम् युष्माकम् गमनम् इह अस्तु । यम् यामम् अश्ववर्जितः अरथी च प्रेरयति

१ सुदर्शनम् मूको २ सुसेक्त्री मूको ३ तृतीयार्थे वि° ४ ४ °म्येषा रो° मूको ५ ५ °र्थे । अमरा अम° मूको ६ कुर्वते मूको ७ अवश्यं मूको ८ तु मासा १,७,२,२६, °यौ मूको ९ चर्क° इ वि° ल टजा: चर्क° म° १० स्यरन्ती° वि° अ°, °न्ती° ए एम ११ अपाः मूको १२ स्वभूता मूको १३ य मूको १४ °माच° °श्मिर° मूको

स्तोता । स्तोत्रैरेवास्माव प्रापयतीत्यर्थः[1] । अन्नवर्जित[2] अभीशुवर्जितश्च रजस प्रेरक मरुतां गण वि गच्छति[3] द्यावापृथिव्यौ मार्गान्[4] स्तोतॄणामभिलषितान् साधयन्[5] । द्यावापृथिव्योर्मध्येन गच्छतीत्यर्थः[6] ॥ ७ ॥

नास्य वर्ता न तरुता न्वस्ति मरुतो यमवथ वाजसातौ ।
तोके वा गोषु तनये यमप्सु स व्रजं दर्ता पार्ये अध द्योः ॥ ८ ॥

न । अस्य । वर्ता । न । तरुता । नु । अस्ति । मरुतः । यम् । अवथ । वाजऽसातौ ।
तोके । वा । गोषु । तनये । यम् । अप्ऽसु । सः । व्रजम् । दर्ता । पार्ये । अध । द्योः ॥८॥

स्कन्द० न अस्य वर्ता वारयिता प्रतिबन्धकः, न अपि तरुता हिंसिता । नु इति पदपूरणः । अस्ति भवति हे मरुतः !, यम् अवथ पालयथ वाजसातौ सङ्ग्रामे तोके वा 'यस्य च भावेन भावलक्षणम्' (पा २,३,३७) इत्येवमिय[7] 'सप्तमी । सप्तमीश्रुतेश्च' लक्षणभूतयोगक्रियापदाध्याहारः । पुत्रेषु वा प्राप्तव्येषु गोषु वा प्राप्तव्यासु तनये पौत्रेषु वा, यम् च अप्सु वृष्टिलक्षणपूर्वकेषु, स एव च व्रजम् गोष्ठम् दर्ता साधु दारयिता । दरण दानार्थमवश्यस्य पृथक् करणम् । तस्य साधुकारी गोष्ठात् गवामेकदेश साधु लभत इत्यर्थः । कस्मिन् काले । उच्यते— पार्ये पृणातीत्यस्य च दानकर्मण एतद्रूपम् । दानकाले । अध इति पादपूरणः । तस्य एवम्भूतम् गोष्ठमुच्यते । द्यो दिव द्युमन्मातु ॥ ८ ॥

वेङ्कट० न अस्य गन्ता अभिगन्ता, न अपि तरिता मनुष्यस्य विद्यते हे मरुतः !, यम् रक्षथ युद्धे, तोकादिनिमित्तम् यम् युद्धे अवथ[9] । शत्रोर्दीप्तस्य गोमतः सङ्ग्रामस्य पार्ये[10] अहनि गवामाहरणाय दर्ता[11] भवति[12] ॥ ८ ॥

प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥ ९ ॥

प्र । चित्रम् । अर्कम् । गृणते । तुराय । मारुताय । स्वऽतवसे । भरध्वम् ।
ये । सहांसि । सहसा । सहन्ते । रेजते । अग्ने । पृथिवी । मखेभ्यः ॥ ९ ॥

स्कन्द० प्र इत्युपसर्गो भरध्वमित्याख्यातेन सम्बन्धयितव्यः । चित्रम् विचित्र पूजनीय वा अर्कम् स्तुतिलक्षण मन्त्रम्[13] गृणते स्वात्मयेनाय कर्मणि कर्तृशब्दः । तादर्थ्ये च चतुर्थी । स्तुत्याय तुराय त्वरमाणाय[14] हिंसित्रे वा सम्पूर्णाद् मारुताय मरुता समूहाय स्वतवस स्वबलाय प्र भरध्वम् प्रहरत प्रापयत । उच्चारयतेत्यर्थः । अथवा 'अर्क' (निघ २,७) इत्यन्ननाम । हविर्लक्षणमन्नम् । स्तुत्यादिगुणस्य मरुत्समूहस्यार्थाय [15]आहवनीय प्रति[15] प्रापयतेत्यर्थः । पुत्रपौत्रम्य धाय प्रैष , ऋत्विजां

1 °मन्ती° मूको. 2 अप्रतिजित° वि[1] अ[1], समिन स लभ. 3-3. °अपि° वि[1] अ[1] 4. °गौ वि[1] अ[1], °गां स लभ. 5. सासर्व वि[1] अ[1] क, साध्यर्व लभ 6 °यान्ती° मूको 7. °त्येवमिवेवरिम वि[1]. 8-8 °गौस्रे° वि[1]; °गौ सुन° वि[1] अ. 9. भवत मूको. 10. ऋ ६,३३,२;६६,१ माध्यम्, पा° मूको 11 दता मूको. 12. °वन्ति इत्यर्थ अ[1]. 13 मन्त्रम वि[1]. 14. त्वरणाय मूको 15-15. इवनीयं दिशति मूको

दीप्तशक्तिकम् रुद्रस्य सूनुम् अपत्यभूतम् हवसा आह्वानेन आ विवासे [1]परिचरामि। आह्वया-मीत्यर्थः[1]। किमर्थम्। उच्यते—दिवः पञ्चमीश्रुतेः आगन्तुमिति शेषः। द्युलोकादागन्तुम् शर्धाय उत्साहाय। द्युलोकादस्मद्यज्ञं प्रति आगन्तुमुत्साहं करिष्यतीत्येवमर्थमित्यर्थः। कस्मात्। उच्यते—[2]यस्मात् शुचयः शुद्धा वा[2] दीप्ता [illegible] मनीषाः स्तुतयः गिरयः न पर्वता इव आपः इव च उग्राः अप्रसह्याः तीव्राः अस्पृध्रन् स्पर्धन्त [illegible]। यस्मादहं शोभनतरा अहं शोभनतरेत्येवं परस्परं स्पर्धायुक्ता इव स्तुतय उपकल्पिता इत्यर्थः ॥ ११ ॥

वेङ्कट० तम् वर्धमानम् मारुतम् दीप्यमानायुधम् रुद्रस्य सूनुम् गणं स्तोत्रेण परिचरामि। दिवः वेगाय[3] शुचीनि स्तोत्राणि मेघा इव व्यासाः उद्गूर्णाः इतरेतरं स्पर्धन्ते ॥ ११ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये अष्टमो वर्गः[4] ॥

[ ६७ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः। मित्रावरुणौ देवता। त्रिष्टुप् छन्दः[5]।

विश्वेषां वः सतां ज्येष्ठतमा गीर्भिर्मित्रावरुणा वावृधध्यै ।
सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ असमा बाहुभिः स्वैः ॥ १ ॥

विश्वेषाम्। वः। सताम्। ज्येष्ठऽतमा। गीःऽभिः। मित्रावरुणा। ववृधध्यै।
सम्। या। रश्माऽइव। यमतुः। यमिष्ठा। द्वा। जनान्। असमा। बाहुऽभिः। स्वैः ॥१॥

स्कन्द० [6]"'विश्वेषां वः' मैत्रावरुणमेकम्"[6]। मित्रावरुणदेवत्यमेतत्[7] सूक्तम्। विश्वेषाम् निर्धारण इयं षष्ठी। सर्वेषाम् वः युष्माकम्, सताम् प्रशस्तानां देवानां मध्ये ज्येष्ठतमा अतिशयेन प्रशस्यौ गीर्भिः मित्रावरुणौ वावृधध्यै अस्मार्थं वर्धयितुम्, आह्वयामीति शेषः। 'या यौ रश्मा इव' रश्मयो रज्जवः ताभिरिव सम् यमतुः संयतवन्तौ। बद्धवन्तावित्यर्थः। यमिष्ठा अतिशयेन यन्तारौ द्वा द्वावपि जनान् शत्रुभूतान् मनुष्यान् असमा असदृशावन्यैर्देवैः। केन संयतवन्तौ। बाहुभिः स्वैः आत्मीयैरेव ॥ १ ॥

वेङ्कट० सर्वेषामेव विद्यमानानां[8] युष्माकम् अतिशयेन प्रशस्यौ स्तुतिभिः मित्रावरुणौ प्रवृत्तोऽहं वर्धयि-तुम्। सम्[9] यमतुः यौ रश्मिनेव[9] अतिशयेन[10] यन्तारौ द्वौ मित्रौ[11] जनान् असदृशौ केनचिदपि[12] बाहुभिः आत्मीयैः ॥ १ ॥

इयं मद् वां प्र स्तृणीते मनीषोप प्रिया नमसा बर्हिरच्छ ।
यन्तं नो मित्रावरुणावधृष्टं छर्दिर्यद् वां वरूथ्यं सुदानू ॥ २ ॥

---

१-१. प…र्थः[1] मूको. २-२. यस्मात्…शुद्धा मूको. ३. वेगाय मूको. ४-४. नास्ति मूको. ५. "त्री देव° वि° अ. ६-६. वा…"रुणे" मूको. ७. वेद° वि°. ८. सर्व मूको. ९. तु. वेप १, २१४६d. १०. दिवा वि° भा°; मर्दनेन ए इत्य. ११. त्रुटितम् मूको. १२. नौभि° वि°.

इयम् । मत् । वाम् । प्र । स्तृणीते । मनीषा । उप । प्रिया । नमसा । बर्हिः । अच्छ ।
यन्तम् । नः । मित्रावरुणौ । अधृष्टम् । छर्दिः । यत् । वाम् । वरूथ्यम् । सुदानू इति सुऽदानू ॥

स्कन्द० 'मत् इति' पञ्चम्याः स्थाने षष्ठी । इयम् मम स्तुतिः वाम् युवाम् प्र स्तृणीते प्रकर्षेणाच्छादयतीव मनीषा स्तुतिः प्रिया इष्टा । किमर्थम् । नमसा हविर्लक्षणेनान्नेन सह बर्हिः वेदिं[1] यत् स्तृतं[1] तत् उप अच्छ अच्छशब्द आप्तुमित्यस्यार्थे (तु या ५,२८)। उपाप्तुम् । हविर्भक्षयितु बर्हिषि च निषत्तुमित्यर्थः[2] । किञ्च यन्तम् दत्तम् न अस्मभ्यं हे मित्रावरुणौ ! अधृष्टम् अनभिभूतं केनचित् छर्दिः गृहम्, यत् वाम् युवयोः वरूथ्यम् । 'वरूथम्' (निघ ३,४) इति गृहनाम । तस्मात् स्वार्थे तद्धितः । वरूथ्यम् । युवयोरेव यत् गृहं युवाभ्यामेव यत्र आगत्याऽऽगत्य निषत्तव्यं भोक्तव्यं[3] चेत्यर्थः । हे सुदानू ! शोभनौ दातारौ ! ॥ २ ॥

वेङ्कट० इयम् स्तुतिः मम. मित्रावरुणौ वाम् आच्छादयति[4], उप गच्छति प्रिया हविषा सह यज्ञं । यच्छतम्[5] अस्मभ्यम् मित्रावरुणौ ! अनभिभूतम् गृहम्, यत् युवयोः वरणीयं विद्यते हे शोभनदानौ ! ॥ २ ॥

आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना ।
सं यावप्नःस्थो अपसेव जनाञ्छ्रुधीयतश्चिद्यतथो महित्वा ॥ ३ ॥

आ । यातम् । मित्रावरुणा । सुऽशस्ति । उप । प्रिया । नमसा । हूयमाना ।
सम् । यौ । अप्नःऽस्थः । अपसाऽइव । जनान् । श्रुधिऽयतः । चित् । यतथः । महिऽत्वा ॥ ३ ॥

स्कन्द० आ यातम् आगच्छतम्[6] हे मित्रावरुणौ[7] सुशस्ति शोभना शस्तिः[8] [9]स्तुतिर्यस्मिन् कर्मणि तद्[10] सुशस्ति आह्वानं तेन । प्रिया प्रियौ आकारस्य [11]सम्बोधनत्वाभावेन नाम प्रथमाद्विवचनस्याकारः[12] । किं तर्हि । तृतीयैकवचनस्य । प्रियेण नमसा नमस्काररूपेण उप हूयमाना आह्वयमानौ । यौ अप्नःस्थः व्यत्ययेनेदमेकवचनम् । कर्मस्थौ । नित्यमेव शततकर्म कुर्वन्तौ तिष्ठथ इत्यर्थः । कौ इव । उच्यते—अपसा इव अप कर्म तद्वन्तौ अपसौ कर्मकरौ कौचित् तादृशौ यौ च जनान् मनुष्यान् प्रति । कीदृशान् । श्रुधीयतः । श्रुधि श्रवण इच्छतामिम्, तां च इच्छन्ति श्रुधीयन्ति । तान् श्रुधीयतः । युवाभ्याम् आत्मीयानां स्तुतीनां श्रवणं कामयमानानित्यर्थः । चित् शब्दः पदपूरणः । सम् यतथः । यतिरत्र गत्यर्थः (तु निघ २, १४) । 'वैश्वानरो यतते सूर्येण' (ऋ १,९८,१), 'स भानुना यतते सूर्येस्य' (ऋ ५,३७,१) इति यथा । सम्यग्गच्छथ महित्वा महत्त्वेन ॥ ३ ॥

वेङ्कट० उप आ गच्छतम् मित्रावरुणौ[1] शोभन शंसन स्तवम् प्रियौ हविषा हूयमानौ । सम् गच्छेथे यौ सर्वदेवौ[13] । यथा कर्मस्थित मनुष्य कर्मणा जनै सङ्गच्छते । तौ युवां महत्त्वेनाऽऽत्मन श्रवणमिच्छत जनान् प्राप्नुथ इति ॥ ३ ॥

---

१-१. तं वर्हि मूको. २. तनया मूको. ३. स्तृति मूको. ४. निषत्तु मूको. ५-५. भवत्य° वेदेये मूको. ६. आच्छादिद वि°, आच्छादिद अ° ल टंक. ७. गच्छ° वि° अ°. ८. आगतम् मूको. ९. शोभनादि मूको. १०-१०. स्तुतिर्य° तद मूको. ११-११. °सन° माद्वि° मूको. १२. °रोने वि° अ°.

अश्वा न या वाजिना पूतबन्धू ऋता यद् गर्भमदितिर्भरध्यै ।
प्र या महि महान्ता जायमाना घोरा मर्ताय रिपवे नि दीधः ॥ ४ ॥

अश्वा । न । या । वाजिना । पूतबन्धू इति पूतऽबन्धू । ऋता । यत् । गर्भम् । अदितिः । भरध्यै ।
प्र । या । महि । महान्ता । जायमाना । घोरा । मर्ताय । रिपवे । नि । दीधरिति दीधः ॥४॥

स्कन्द० अश्वा न अश्वाविव या यौ वाजिना वेगवन्तौ पूतबन्धू 'बन्धु (निघ २,१०) इति धननाम, ज्ञातिपर्यायो वा। शुद्धधनौ शुद्धज्ञाती वा ऋता सत्यौ यत् यौ च गर्भम् गर्भभूतौ अदितिः देवमाता भरध्यै धारयितुम्। शक्तवतीति शेषः । या यौ च महि महद् बलम् महान्ता शरीरेण वीर्येण वा महान्तौ जायमानावेव घोरा अप्रसह्यौ क्रूरौ वा शत्रूणामुपरि मर्ताय मनुष्याय रिपवे शत्रुभूताय। शत्रुभूतं मनुष्यं हन्तुमित्यर्थः । प्र नि दीधः । व्यत्ययेनेदमेकवचनम्। प्रकर्षेण नियमनं च धारितवन्तौ । यच्छब्दश्रुतेः अस्याः ऋचः परस्याश्च 'ता हि क्षत्रम्' इत्यनयैकवाक्यता ॥ ४ ॥

वेङ्कट० अश्वाविव यौ बलिनौ शुद्धबन्धनौ सत्यौ यौ गर्भभूतौ अदितिः भर्तुमैच्छत्। प्रादुर्भावयत यौ महत्त्वम्। महान्तौ जायमानौ तौ घोरौ रिपवे[1] मनुष्याय अदितिः नि दधारेति ॥ ४ ॥

विश्वे यद् वां मंहना मन्दमानाः क्षत्रं देवासो अदधुः सजोषाः ।
परि यद् भूथो रोदसी चिदुर्वी सन्ति स्पशो अदब्धासो अमूराः ॥ ५ ॥

विश्वे । यत् । वाम् । मंहना । मन्दमानाः । क्षत्रम् । देवासः । अदधुः । सऽजोषाः ।
परि । यत् । भूथः । रोदसी इति । चित् । उर्वी इति । सन्ति । स्पशः । अदब्धासः । अमूराः ॥

स्कन्द० विश्वे सर्वे यत् वाम् युवाभ्याम् मंहना महत्त्वेन मन्दमानाः मोदमानाः क्षत्रम् अपरिमितमपि बलमास्यैव। बलं धनं वा देवासः देवाः अदधुः दत्तवन्तः। बलवन्तौ धनवन्तौ वा कृतवन्त इत्यर्थः । सजोषाः सम्प्रीयमाणाः । यत् यौ च परि भूथः परिभवथः न्यक् कुरुथः । सर्वतो व्याप्नुथ इत्यर्थः । रोदसी चित् द्यावापृथिव्यौ उर्वी महत्यौ। ययोश्च लोकपालत्वात् सन्ति स्पशः चारिकाः लोकस्य कृताकृतप्रत्यवेक्षिणः अदब्धासः अहिंसिताः कदाचिद् अमूराः अमूढाः । बलवन्त इत्यर्थः ॥ ५ ॥

वेङ्कट० विश्वे यत् युवां महत्त्वेन मादयन्तः युवयोः देवाः सङ्गताः बलम् अदधुः[2] । 'यत् च[3] विस्तृते द्यावापृथिव्यौ परि भवथः । तदानीं युवयोर्भवन्ति तेजांसि अहिंसितानि अमूढानि ॥ ५ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये नवमो वर्गः[4] ॥

1 शुद्ध नी मूको 2-2 मनुष्यान्नुमि° मूको 3 करे मूको 4 मा° वि° अ°
5-5 पदा मूको 6-6 नास्ति मूको

ता हि क्षत्रं धारयेथे अनु द्यून् दृंहेथे सानुमुपमादिव द्योः ।
दृळ्हो नक्षत्र उत विश्वदेवो भूमिमातान् द्यां धासिनायोः ॥ ६ ॥

ता । हि । क्षत्रम् । धारयेथे इति । अनु । द्यून् । दृंहेथे इति । सानुम् । उपमात्ऽइव । द्योः ।
दृळ्हः । नक्षत्रः । उत । विश्वऽदेवः । भूमिम् । आ । अतान् । द्याम् । धासिना । आयोः ॥ ६ ॥

स्कन्द० ता तौ । हि इति पदपूरणः । क्षत्रम् बलम् धारयेथे अनु द्यून् अनुदिवसम् । दिनेदिने प्रयच्छतमस्मभ्यम् इत्यर्थः । दृंहेथे दृढीकुरुथश्च वृष्ट्यादिद्वारेण 'सानुम् समुच्छ्रितप्रदेशम् उपमात् इव'। 'उपमे' (निघ २,१६) इत्यन्तिकनाम । सन्निकृष्टादिव द्योः द्युलोकात् । 'पञ्चमीनिर्देशाद् अवस्थितमिति शेषः'। किञ्च दृळ्हः स्थिरः नक्षत्रः । नक्ष हिंसायाम् । न क्षत्र इति 'नक्षत्रः मनुष्यस्य' साद्गुण्याद्' 'रक्षोभिर्हिंसितुमशक्यो मेघः उत अपि च विश्वदेवः सूर्यः मित्रावरुणयोः प्रसादेन भूमिम् आ अतान् आतनोति वृष्टिद्वारेण' विस्तारयति द्याम् दिवं च धासिना हविर्लक्षणेन (तु निघ २,७) आयोः 'मनुष्यस्य यजमानस्य । यदा मित्रावरुणयोः सम्बन्धी सोमयागो भवति, तदा अतस्येव' 'मित्रावरुणयोः प्रसादेन वृष्टिरित्यर्थः' ॥ ६ ॥

वेङ्कट० तौ हि बलम् धारयेथे । दिवसेषु दृंहेथे च दिवः समुच्छ्रितमादित्यम् 'वरत्रामिव स्थूणा'। ततश्च दृढः दिवि व्याप्नुवानः विश्वदेवः आदित्यो[10] भवति । सावेमौ भूमिम् दिवं च मनुष्यस्य हविषा प्रीतौ आ तनुतः[11] ॥ ६ ॥

ता विग्रं धैथे जठरं पृणध्या आ यत् सद्म सभृतयः पृणन्ति ।
न मृष्यन्ते युवतयोऽवाता वि यत् पयो विश्वजिन्वा भरन्ते ॥ ७ ॥

ता । विग्रम् । धैथे इति । जठरम् । पृणध्यै । आ । यत् । सद्म । सऽभृतयः । पृणन्ति ।
न । मृष्यन्ते । युवतयः । अवाताः । वि । यत् । पयः । विश्वऽजिन्वा । भरन्ते ॥ ७ ॥

स्कन्द० [12]ता तौ मित्रावरुणौ विग्रम् मेधाविनम्[13] (तु निघ ३,१५) धैथे धारयथः[14] जठरम् उदरम् पृणध्यै । पृण प्रीणने, पूरणार्थो वा सामर्थ्यात् । प्रीणयितुं पूरयितुं वा । यत् यस्मिन् । उच्यते—यत्, सद्म सदनं स्थानं सोमानाम्[15] सभृतयः समाना दक्षिणालक्षणा[16] भृतिर्येषां ते सभृतयः समानदक्षिणा[16] ऋत्विजः आ पृणन्ति आभिमुख्येन प्रीणयन्ति पूरयन्ति[17] वा सोमैः । किञ्च न मृष्यन्ते मृष तितिक्षायाम् अन्यत्र, इह तु विस्तारणार्थो वा 'मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठाः' (ऋ १,७१,१०) इति यथा, विच्छेदार्थो वा । न विस्मर्यन्ते विच्छिद्यन्ते केनचित् युवतयः तरुण्यः स्त्रियः । काः पुनरेताः । मैत्रावरुणप्रदाहुतयः । अथवा तु मिश्रणे इत्यस्य[18] ।

1-1 सानु ° उप° मूको. 2-2 °देशं हि शेष मूको. 3-3 नक्षत्र । सात् या मनु° मूको. 4. गुण्यात् मूको. 5-5. °हितु मित्रावरुणयो···विवृष्टिद्वारेण ( ° वि° म )मूको. 6-6. °यस्य = मित्रा° मूको 7-7 सोमयागो···स्येव मूको 8-8. मित्रावरुणयो ··· मूको. 9-9. वंशानि वरत्रया वि° ल, वंशानि वरत्रया लभ. 10 °त्यो मूको. 11. °नुत मूको 12-12. °वाविमं मूको. 13. नाहित मूको 14 सोमानं मूको. 15. दक्षिणालक्षणा मूको. 16. समाना दक्षिणा मूको. 17. नास्ति वि°,

युवतयो मिश्रिता । केन[1] । पयसा । कुत एतत् । 'मैत्रावरुणं पयसा श्रीणाति' ( तै ६,४,८,२ ) इति विधानात् । सर्वता अगतपूर्वां अन्यदेवता[2] प्रति 'या । ता[3] कीदृश । उच्यते— यत् या पय क्षीर हे दिव्यनिन्दा । सर्वंप्रीणयितारौ[4] वि भरन्ते विविध धारयन्ति । पयसा सम्मिश्रिता इत्यर्थ ॥ ७ ॥

वेङ्कट० तौ मेधाविन यजमान धारयेथे जठरम् आत्मीय सोमेन पूरयितुम् । आ पूरयन्ति यदा यज्ञगृहम् ऋत्विज उपविशन्ति । न अभिभूयन्ते दिक्षु आगच्छन्त्य शत्रुभि । हे विश्वस्य प्रीणयितारौ[1] यदा विविधम् उदक मयज्ञा प्रेरित[2] धारयन्ति ॥ ७ ॥

ता जिह्वया सदमेदं सुमेधा आ यद् वां सत्यो अरतिर्ऋते भूत् ।
तद् वां महित्वं घृतान्नावस्तु युवं दाशुषे वि चयिष्टमंहः ॥ ८ ॥

ता । जिह्वया । सदम् । आ । इदम् । सुऽमेधा । आ । यत् । वाम् । सत्य । अरति । ऋते । भूत् ।
तत् । वाम् । महिऽत्वम् । घृतऽअन्नौ । अस्तु । युवम् । दाशुषे । वि । चयिष्टम् । अंह ॥ ८ ॥

स्कन्द० ता तौ जिह्वया वाचा स्तुतिलक्षणया सदम् सदा आ इदम् जिह्वयेति करणस्य, आ इति चोपसर्गस्य, इदमिति च क्रियाविशेषणस्य श्रुतेर्योग्यक्रियापदाध्याहार । आभिमुख्यमेव स्तौमि । 'सुमेधा । मेधा[3] शोभनग्राहिणी 'प्रज्ञा । तया[4] शोभनया युक्त । अथवा 'मेधा' ( निघ २, १० ) इति धननाम[5] । शोभनेन धनेन हविर्लक्षणेन युक्त । यत् यौ वाम्[6] युवां प्रति सत्य अविसंवादी अरति गन्ता उभयोरपि द्यावापृथिव्यो । क पुनरसौ । हव्यवाडग्नि । स ऋते यज्ञे आ भूत् आभिमुख्येन भवति[7] । यो युवां प्रति यज्ञे हवींषि गृहीत्वाऽभिरभिमुखो[10] भवतीत्यर्थ । किञ्च तत् वाम् युवयो महित्वम् माहात्म्यम् हे घृतान्नौ । आहुतिलक्षणघृतभोजनौ[11] अस्तु अस्माद् मति भवतु । तच्छब्दश्रुतेर्यच्छब्दोऽनाध्याहार्य । यो युवम् युवाम् दाशुषे षष्ठ्यर्थे एषा चतुर्थी । हवींषि दत्तवतो यजमानस्य वि चयिष्टम् विपूर्वश्चिनोतिरपनयने । अपनयथ अह पापम् । स्वेन माहात्म्येनास्माकमपि पापम् अपनयतमित्यर्थ ॥ ८ ॥

वेङ्कट० तौ[11] वाचा सुमेधा सदैव उदकम् आ याचत । 'इदम्' ( निघ १,१२ ) इत्युदकनाम । आभिमुख्येन भवति, यदा वाम् प्रति सत्य हि गन्ता यज्ञ । तदावां हे घृतान्नौ ![12] युवयोर्महत्त्व प्रादुर्भूतम् अस्तु । युवाम् दाशुषे वि नाशयत पापम् ॥ ८ ॥

प्र यद् वां मित्रावरुणा स्पूर्धन् प्रिया धाम युवधिता मिनन्ति ।
न ये देवास ओहसा न मर्ता अयज्ञसाचो अप्यो न पुत्राः ॥ ९ ॥

प्र । यत् । वाम् । मित्रावरुणा । स्पूर्धन् । प्रिया । धाम । युवऽधिता । मिनन्ति ।
न । ये । देवास । ओहसा । न । मर्ता । अयज्ञऽसाच । अप्य । न । पुत्रा ॥ ९ ॥

---

1 क मूको 2. °न्यदे° मूको 3 3 यत मूको 4 पूर्व मूको 5-5. ऐमेणयो मूको 6 6 प्रज्ञायो मूको 7 धनेन मूको 8. युवां मूको 9. भवता मूको 10 °त्वा रिरभिमुख्यो मूको 11 नास्ति वि° भ°. 12. घृतानौ वि° भ°; घृतान्नौ स त्रुप

स्कन्द० यत् ये वाम् युवयोः हे मित्रावरुणा! स्पूर्धन् स्पर्धनेन। युवाभ्यां सह स्पर्धयेत्यर्थः। प्रिया इष्टानि धाम स्थानानि युवधिता युवयोर्हितानि प्र मिनन्ति प्रकर्षेण हिंसन्ति। न च ये देवासः देवाः। असुरा इत्यर्थः। ओहसा न। वहतेरिदं रूपम्। तृतीयानिर्देशाच्च युक्ता इति शेषः[1]। वहनेन हविषां न युक्ताः। देवेभ्यो हवींषि[2] न ददतीत्यर्थः। मर्ताः मनुष्याः अयज्ञसाचः यज्ञानाम् असेवितारः। अकर्तार इत्यर्थः। अप्याः न न च ज्ञातयः युवयोरस्माकं वा, नापि पुत्राः। तान् हतमिति शेषः ॥ ९ ॥

वेङ्कट० प्र मिनन्ति यदा युवयोः हे मित्रावरुणौ! स्पर्धमानाः[2] प्रियाणि स्थानानि युवयोर्हितानि। न ये[3] देवाः[4] युवयोः [5]यज्ञसाधनेन स्तोत्रेण[5] युज्यन्ते, न अपि मनुष्याः यज्ञम् असेवमानाः[6]। ज्ञातयो बन्धवः पुत्राः वा न युज्यन्ते स्तोत्रेण। तान् सर्वान् हथ इति वाक्यशेषः ॥ ९ ॥

वि यद् वाचं कीस्तासो भरन्ते शंसन्ति के चिन्निविदो मनानाः ।
आद् वां ब्रवाम सत्यान्युक्था नकिर्देवेभिर्यतथो महित्वा ॥ १० ॥

वि । यत् । वाचम् । कीस्तासः । भरन्ते । शंसन्ति । के । चित् । निऽविदः । मनानाः ।
आत् । वाम् । ब्रवाम । सत्यानि । उक्था । नकिः । देवेभिः । यतथः । महिऽत्वा ॥ १० ॥

स्कन्द० ययोः वाचम् स्तोत्रलक्षणाम् कीस्तासः मेधाविनामैतत् (तु. निघ ३,१५)। मेधाविनः यज्ञानुष्ठानलक्षणाः स्तोतारः वि भरन्ते विविधं धारयन्ति। कुर्वन्तीत्यर्थः। [7]'शंसन्ति च के चित्' होतृलक्षणाः निविदः "अग्निर्देवेद्धः" (खिल ५,५,१) इत्यादयो मन्त्रा निविदः[8] तान् मनानाः जानन्तः। किम्। सामर्थ्यात् शंसितुं वा 'युष्मान् युष्मन्माहात्म्यं'[9]। अथवा मनानाः इति मन्यतेः कानिजन्तस्य रूपम्। कामयमानाः यज्ञफलम्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तयोः। आत् इति पदपूरणः। वाम् युवयोः ब्रवाम वयमिति ब्रूमः सत्यानि अविसंवादीनि उक्था स्तोत्राणि। किञ्च नकिः न युवाम् देवेभिः देवैरन्यैः सह यतथ युद्धेऽध्यय्य यतासिः सम्पूर्णौ इत्यय:, 'वैश्वानरो यतते सूर्येण' (ऋ १,९८,१) इति यथा। सङ्ग्रामार्थे। युध्या भवथ इत्यर्थः। महिना महत्त्वेन। सर्वेभ्यो युवयोरधिकतरं माहात्म्यमित्यर्थः ॥ १० ॥

वेङ्कट० वि हरन्ते यदा वाचम् मेधाविनः। शंसन्ति च के चित् युवयोः निविदः जानन्तः[10]। तदानीं तदनन्तरमेव[11] युवयोः ब्रूमः सत्यानि उक्थानि। न युवाम् अन्यैर्देवैः सङ्गच्छेथे महत्त्वेन ॥ १० ॥

अवोरित्था वां छर्दिषो अभिष्टौ युवोर्मित्रावरुणावस्कृधोयु ।
अनु यद् गावः स्फुरानृजिप्यं धृष्णुं यद् रणे वृषणं युनजन् ॥ ११ ॥

अवोः । इत्था । वाम् । छर्दिषः । अभिष्टौ । युवोः । मित्रावरुणौ । अस्कृधोयु ।
अनु । यत् । गावः । स्फुरान् । ऋजिप्यम् । धृष्णुम् । यत् । रणे । वृषणम् । युनजन् ॥ ११ ॥

१. हवी मूको. २. °मानौ वि३ अ१. ३. न वि३. ४. देव वि३; देव अ१. ५-५. °यज्ञतो° वि३ अ१. ६. °समासे° अ१. ७-७. शंसन्ति ··· मूको. ८-८. नास्ति वि३ अ. ९-९. युष्मन्माहात्म्य मूको. १०. जानतः ख रूप. ११. °व यथानि मूको.

स्कन्द० अवो पालयितो इत्था अमुत्र स्वर्गे लोके वाम् युवयो स्वभूतस्य छर्दिषः गृहस्य अभिष्टौ इषु इच्छायामित्यस्यैतद्रूपम्। चतुर्थ्यर्थे च सप्तमी। अभीच्छायै प्रार्थनायै। लाभार्थमित्यर्थः। किं कृतम्। उच्यते—युवो युवयो हे मित्रावरुणौ! अस्कृधोयु कृध्विति ह्रस्वनाम। स्वार्थिकप्रत्ययान्तम् कृधुक इति ह्रस्वनामसु पठितम् (तु. निघ ३,२)। न कृधु अस्कृधु दीर्घम्, तदायुर्यस्य तद् अस्कृधोयु। 'दीर्घकालावस्थायि। मम पुत्राः' पौत्राश्च करिष्यन्तीत्यर्थः। अथवा अस्कृधोयुरिति दधातेर्वा दानार्थस्य भेद्द पाने 'इत्यस्य वा एतद्रूपम्'। अकृतधानम्। अन्यैर्यजमानैरदत्तपूर्वं युवाभ्याम् वा अपीतपूर्वमित्यर्थः'। किं पुनस्तत्। सोमलक्षणमन्नम्। अस्माभिरप्रकल्पितमिति वाक्यशेषः। अनु यत् अनु कर्मप्रवचनीय प्रतिना समानार्थः। 'यत् प्रति' गाव वसतीवर्यैकधनालक्षणा' आप स्फुरान् स्फुरन्ति। यत्र मक्षिता आपश्चलन्त्यो दृश्यन्त इत्यर्थः। अथवा 'मित्रावरुणयोरुपयोज्यानि गाव इति गौरिहोच्यते'। स्फुरानित्यपि स्फुरतिगत्यर्थः। तत् प्रति युष्मदीया गावो गच्छन्तीत्यर्थः। 'ऋजिप्यम्। ऋजुभिर्वसतीवर्यैःकधनाख्याभिराप्यायित' इति ऋजिप्यम्। ऋजूनाम्' यजमानानां वा ऋजिप्यम्। यत् च धृष्णु धृष्णु अभिभवितृ बाहुणाम् रणे सङ्ग्रामे वृषणम् वर्षितृ युनजन् अभिषवादिभि संस्कारैर्युञ्जन्त ऋत्विज। संस्कुर्वन्त इत्यर्थः ॥ ११ ॥

वेङ्कट० रक्षकयो इत्थं युवयो सुखस्यान्वेषणे हे मित्रावरुणौ! तत्सुखम् अनवधानमन भवति। 'यदा हि' युवयो स्तवाः' ऋजुगामिनं स्तोतारम् अनु स्फुरन्ति। यदा वा धृष्णुम्'' वृषणम् स्वयजमान सङ्ग्रामे युञ्जन्ति ॥ ११ ॥

''इति पञ्चमाष्टके प्रथमाध्याये दशमो वर्गः'' ॥

[ ६८ ]

''भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रावरुणौ देवता। त्रिष्टुप् छन्दः, नवमीदशम्यौ जगत्यौ''।

श्रुष्टी वां यज्ञ उद्यतः सजोषा मनुष्वद् वृक्तबर्हिषो यजध्यै ।
आ य इन्द्रावरुणाविषे अद्य महे सुम्नाय मह आववर्तत् ॥ १ ॥

श्रुष्टी । वाम् । यज्ञः । उत्ऽयतः । सऽजोषाः । मनुष्वत् । वृक्तऽबर्हिषः । यजध्यै ।
आ । यः । इन्द्रावरुणौ । इषे । अद्य । महे । सुम्नाय । महे । आऽववर्तत् ॥ १ ॥

स्कन्द० 'ऐन्द्रावरुणमुत्तरम्'। इन्द्रावरुणदेवत्यमुत्तरं सूक्तम्। श्रुष्टी सुख क्षिप्रो वा वाम् युवयो यज्ञ उद्यत कर्तुं सङ्कल्पते सजोषा जुषे सेवनार्थस्यैतद् रूपम्। सह युवाभ्यां सेवनीय मनुष्वत् मनुष्यवत् यथा कश्चिन्मनुष्य कस्यचिन्मनुष्यस्य किञ्चित् सङ्कल्पयेत् तद्वत्। वृक्तबर्हिष ऋत्विङ्नामैतत् (तु. निघ ३,१८)। ऋत्विज अध्वर्य्वादय'' यजध्यै यजनाय''।

---

११. यत्न युवो मूको. २ २ इत्यस्यैतद्' मूको ३ अपीतपू मूको ४ ४ य° मूको. ५ वा'' दे° मूको ६ ६ "जना नि यहो" मूको ७ ७. ऋजि तति" मूको ८ ऋजूना वा मूको. ९-९. °दाभि वि° ब° १० अस्मान वि° ए, अस्मारा अ°; असवव छन्न ११. धृष्ण वि° ब°, धृष्ण ए एम. १२ १२. नास्ति मूको. १३ अध्वर्यो मूको १४. यजमानाय मूको

मध्वर्युर्युवां यद्यतीत्येवमर्थमित्यर्थः । स कतमो यज्ञः । उच्यते—स अद्य युवाम् इन्द्रावरुणौ इषे अन्नाय अद्य महे महते । महद् दानं दापयितुमित्यर्थः । न च केवलान्नाय । किं तर्हि । सुम्नाय सुखाय महते च आववर्तत् अस्मान् प्रत्यावर्तयति ॥ १ ॥

वेङ्कट० क्षिप्र[1] सुयष्टो उरुः यज्ञः सम्नोति[2] मनोरिव यजमानस्य यागार्थम् आववर्तत् यः वाम्[3] इन्द्रावरुणौ अन्नार्थम्[4] अद्य महते[5] च सुखाय महति यज्ञे, तस्येति ॥ १ ॥

ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतम् ।
मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना ॥ २ ॥

ता । हि । श्रेष्ठा । देवऽताता । तुजा । शूराणाम् । शविष्ठा । ता । हि । भूतम् ।
मघोनाम् । मंहिष्ठा । तुविऽशुष्मा । ऋतेन । वृत्रऽतुरा । सर्वऽसेना ॥ २ ॥

स्कन्द० 'ताबुक्तगुणौ ता तौ इन्द्रावरुणौ । हि इति[6] पदपूरण । श्रेष्ठा अतिशयेन प्रशस्यौ देवताता 'सर्वदेवात्तातिल्' ( पा ४,४,१४२ ) इत्येवमत्र स्वार्थे तातिल् प्रत्ययः । द्यौ तुजा हिंसितारौ शत्रूणाम् । किञ्च शूराणाम् मध्ये शविष्ठा अतिशयेन बलवन्तौ ता हि हिशब्दः पूर्वार्थे । तावेव भूतम् भवथ युवाम् । मघोनाम् धनवताम् च मध्ये मंहिष्ठा 'मंहते' ( निघ ३,२० ) इति दानकर्मा । अतिशयेन दातारौ । 'तुविशुष्मा बहुबलौ च[7] ऋतेन सत्येन च यज्ञेन वा[8] वृत्रतुरा वृत्रस्य हिंसितारौ सर्वसेना सर्वाभिः सेनाभिरुपेतौ ॥ २ ॥

वेङ्कट० तौ हि श्रेष्ठौ यज्ञे हिंसितारौ शत्रूणाम्, तथा शूराणाम् मध्ये 'अतिशयेन बलिनौ' तौ हि अभूतम्, धनवताम् अतिशयेन दानवन्तौ[9] बहुबलौ[10] सत्येनैव[11] वृत्रस्य हिंसितारौ समग्रसेनौ ॥ २ ॥

ता गृणीहि नमस्येभिः शूषैः सुम्नेभिरिन्द्रावरुणा चकाना ।
वज्रेणान्यः शवसा हन्ति वृत्रं सिषक्त्यन्यो वृजनेषु विप्रः ॥ ३ ॥

ता । गृणीहि । नमस्येभिः । शूषैः । सुम्नेभिः । इन्द्रावरुणा । चकाना ।
वज्रेण । अन्यः । शवसा । हन्ति । वृत्रम् । सिसक्ति । अन्यः । वृजनेषु । विप्रः ॥ ३ ॥

स्कन्द० ता तौ गृणीहि आत्मन एवायमन्तरात्मनः प्रैषः । स्तुहि हे अन्तरात्मन्[12] । न च कस्तौ । किं तर्हि । नमस्येभिः परिचरणीयैः शूषैः तदीयबलाख्यानैः बलैः सह सुम्नेभिः सुखैः । स्तोतृणाम् सुखकरैरित्यर्थः । कौ तौ । उच्यते—इन्द्रावरुणौ चकाना कामयमानौ च स्तुती । परोऽर्धर्चो यच्छब्दमध्याहृत्यैकवाक्यता नेया । ययोर्मध्ये वज्रेण अन्यः एक इन्द्रः शवसा

1. °प्रयो वि॰ अ॰ 2. सुष्ठ॰ वि॰ अ॰ 3 वा ऊ इन्न 4 अ॰र्थम् मूको 5 मह॰ मूको
6 6 °गुणौ हीति मूको 7 7 °शुष्मा न मूको 8 नास्ति वि॰ अ 9 9 °यैनादलि॰ वि॰ ऊ इन्न 10 धन्तौ मूको 11 बहुलौ वि॰ 12. तत्र नैव वि॰, तत्रै नैव अ॰.

य याम् युवाभ्याम् यहणा।[1] हे वरुणैकदेशौ[1] दाशति ददाति हवींषि त्वम् आत्मनैव। किञ्च इषा अन्नेन स द्विषः द्वेष्टॄन् तरेत् सुतोऽप्यत्र तरति। भक्तिपूर्वार्थे द्रष्टव्य। अतितरति अतिगच्छति। द्वेष्टृभ्योऽन्नेन वर्धत इत्यर्थः। दास्वान् दानवान्। किञ्च वनन् भजते। भजत इत्यर्थः। रयिम् धनम् रयिवत च धनवतश्च[2] जनान् मनुष्यान् पुत्रपौत्रादीन्। पुत्रादयोऽस्य धनवन्तो भवन्तीत्यर्थः ॥ ५ ॥

वेङ्कट० स एव शोभनदानः धनवान् यज्ञवांश्च। हे इन्द्रावरुणौ[1] युवाभ्याम् य आत्मनैव प्रयच्छति, स अन्नेन शत्रून् तरति। दानवान् भजते च धनम्, धनवत च दासादीन्[3] ॥ ५ ॥

इति पञ्चमाष्टके प्रथमाध्याये एकादशो वर्गः[4] ॥

यं युवं दाश्वध्वराय देवा रयिं धत्थो वसुमन्तं पुरुक्षुम् ।
अस्मे स इन्द्रावरुणावपि ष्यात् प्र यो भनक्ति वनुषामशस्तीः ॥ ६ ॥

यम्। युवम्। दाशुऽअध्वराय। देवा। रयिम्। धत्थः। वसुऽमन्तम्। पुरुऽक्षुम्।
अस्मे इति। सः। इन्द्रावरुणौ। अपि। स्यात्। प्र। यः। भनक्ति। वनुषाम्। अशस्तीः ॥ ६ ॥

स्कन्द० यम् युवाम् दाश्वध्वराय 'दाशु पूर्वमेव यस्य[5] हविरध्वरे येन स दाश्वध्वरः कृतयज्ञो यजमानः तस्मै हे देवौ[1] रयिम् धनम् धत्थ वसुमन्तम् अविरुक्यादिभिरपयमूतैर्धनैर्युक्तम्, पुरुक्षुम् 'बहुनिवासयोग्यम्। अन्यजातध्यवस्थापनार्हमित्यर्थः'। अस्मे स इन्द्रावरुणौ। अपि अपि भवतु[6] अस्मे 'इत्यनेन सह सम्बन्धः'। अस्माकमपि स हे इन्द्रावरुणौ[1] स्यात् भवेत्। अस्मभ्यमपि तद् दत्तमित्यर्थः। 'स किं करोति। स प्र भनक्ति[7] वनुषाम् वनुष्यतेर्हन्तिकर्मणः। वयां स्वभूता अशस्ता अप्रशस्ता। हन्तारश्च शत्रवो ये अस्माकं [8]'कुत्सा प्रयुज्यते[10] तां यद्वा निवर्तयितुं शक्नोतीत्यर्थः ॥ ६ ॥

वेङ्कट० यम् [11]'युवां दत्तयज्ञाय[11] [12]'हे देवौ[12] रयिम् धनम्[13] धत्थ[14] वासयितृ[15] पुत्रपशुक बहुशब्दम्, हे इन्द्रावरुणौ! स रयिः अस्मासु अपि भवतु, प्रकर्षेण य सहते स्यतात् बाधा ॥ ६ ॥

उत नः सुत्रात्रो देवगोपाः सूरिभ्य इन्द्रावरुणा रयिः ष्यात् ।
येषां शुष्मः पृतनासु साह्वान् प्र सद्यो द्युम्ना तिरते ततुरिः ॥ ७ ॥

उत। नः। सुऽत्रात्रः। देवऽगोपाः। सूरिऽभ्यः। इन्द्रावरुणा। रयिः। स्यात्।
येषाम्। शुष्मः। पृतनासु। सह्वान्। प्र। सद्यः। द्युम्ना। तिरते। ततुरिः ॥ ७ ॥

१ नास्ति मूको. २ नास्ति वि[1]. ३ °स दि वि[1] अ[1]. ४-४ नास्ति मूको. ५-५ [illegible] नास्ति मूको. ६-६ °दाश °वना° मूको. ७ पञ्च° मूको. ८-८ ह स मूको. ९-९ य कि प्रभनक्ति मूको. १०-१० कुत्सा प्रयुज्यते मूको. ११-११ न वि[1] अ[1]. १२-१२ मेद्देवो वि[1] अ[1], १३ नास्ति वि[1] अ लभ. १४ धत्त मूको. १५ °यितृ वि[1] अ[1].

स्कन्द० अपि च नः अस्माकम् सुत्रात्रः [1]'शोभनाः त्रातारो यस्य स सुत्रात्रः। शोभनरक्षणः[1]। देवगोपा देवा गोपायितारो यस्य [illegible] देवगोपाः सूरिभ्यः 'सूरिः' ( निघ ३, १६ ) इति स्तोतृनाम, षष्ठ्यर्थे चात्र चतुर्थी। स्तोतृणां हे इन्द्रावरुणा! रयिः धनम् स्यात् युवयोः प्रसादेन भवेत्। येषाम् अस्माकं [2]युवयोरेव प्रसादेन शुष्मः[2] बलम् पृतनासु सङ्ग्रामेषु साह्वान् अभिबभूवान्। शत्रूनभिभवन्नित्यर्थः। सद्यः एव द्युम्ना यशांसि वा अन्नानि वा धनानि प्र तिरते प्रवर्धयति[3] तत्रुरिः त्वरिता तूर्विता वा शत्रूणाम् ॥ ७ ॥

वेङ्कट० अपि च अस्मभ्यं शोभनपालनः देवा गोप्तारो[4] स यस्य स्तोतृभ्यो हे इन्द्रावरुणौ! रयिः स्यात्[5]। येषाम् अस्माकं बलं सङ्ग्रामेषु शत्रून् अभिभवत् सद्यः एव धनानि प्र वर्धयति तरणशीलम्[6] ॥ ७ ॥

नू न इन्द्रावरुणा गृणाना पृङ्क्तं रयिं सौश्रवसाय देवा ।
इत्था गृणन्तो महिनस्य शर्धोऽपो न नावा दुरिता तरेम ॥ ८ ॥

नु । नः । इन्द्रावरुणा । गृणाना । पृङ्क्तम् । रयिम् । सौश्रवसाय । देवा ।
इत्था । गृणन्तः । महिनस्य । शर्धः । अपः । न । नावा । दुःऽइता । तरेम ॥ ८ ॥

स्कन्द० नु क्षिप्रम् नः अस्माकम् हे इन्द्रावरुणा! गृणाना स्तूयमानौ पृङ्क्तम् पृची सम्पर्के। सम्पर्चयतम्। दत्तमित्यर्थः। रयिम् धनम् सौश्रवसाय शोभनं श्रवो यस्य [illegible] सुश्रवाः, तद्भावः सौश्रवसम्। छान्दसत्वाद् युवादिलक्षणः अण्। तस्मै सौश्रवसाय। सुधनत्वायास्माकमित्यर्थः। हे देवौ!। उत्तरोऽर्धर्चः परा च ऋक् वरुणस्यैव केवलस्य विभक्तस्तुतिः। इत्था सत्यम् गृणन्तः स्तुवन्तो वयम् महिनस्य महतो वरुणस्य स्वभूतम् शर्धः बलम् अप न नावा यथा कश्चिदुदकानि नावा तरेत्, तद्वत् दुरिता पापानि तरेम अतितरेम। अतिक्रामेमेत्यर्थः ॥ ८ ॥

वेङ्कट० क्षिप्रम् अस्मभ्यं हे इन्द्रावरुणौ! स्तूयमानौ सम्पर्चयतम् धनम् अस्माकं शोभनाय यशसे देवौ!। इत्थम् युवयोर्महत्त्वस्य वेगम् स्तुवन्तः वयम् उदकानीव नावा दुरितानि अति तरेम ॥ ८ ॥

[illegible] सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः ।
अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ॥ ९ ॥

प्र । सम्ऽराजे । बृहते । मन्म । नु । प्रियम् । अर्च । देवाय । वरुणाय । सऽप्रथः ।
अयम् । यः । उर्वी इति । महिना । महिऽव्रतः । क्रत्वा । विऽभाति । अजरः । न । शोचिषा ॥९॥

स्कन्द० [7]'सम्राजे सम्यग्दीप्ताय सर्वेषाम् ईश्वराय[7] वा बृहते मन्म मननं स्तुतिम्। नु इति पदपूरणः। प्रियम् हृद्यम् प्र अर्च प्रोच्चारय[8] हे भरद्वाजान्तरात्मन्! देवाय वरुणाय सप्रथः

---

१-१. °त्रातारो° मूको. २-२. °रेव°…शुष्मो वि° अ; °रेव शुष्मो वि°. ३. प्रवर्धयति मूको. ४. °प्तारौ मूको. ५. स्यात वि° अ°. ६. तरण° वि° अ°. ७-७. स… ईश्व° मूको ८. प्रोचाय मूको.

सर्वतः प्रथयितृ गुणानाम् । अयम् यः उर्वी द्यावापृथिवीनामधेयमेतत् ( निघ ३,३० )। द्यावापृथिव्यौ महिना महत्वा महिनत्वः महाकर्मा मत्वा रश्मिप्रक्षेपलक्षणेन कर्मणा विभाति विविधं दीपयति अजरः न इन्धने सति यो न क्षीयते सः 'अजरः अग्निः सः' इव शोचिषा दीप्त्या ॥ ९ ॥

वेङ्कट० प्र उच्चारय सर्वेषां राज्ञे महते स्तुतिम्[२] क्षिप्रं प्रियाम् देवाय वरुणाय सर्वतः पृथुतमाम्, यः अयम् अस्माकं[१] महाकर्मा विस्तीर्णे द्यावापृथिव्यौ महता यज्ञेन भासयति आदित्य इव तेजसा ॥ ९ ॥

इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥ १० ॥

इन्द्रावरुणा । सुतऽपौ । इमम् । सुतम् । सोमम् । पिबतम् । मद्यम् । धृतऽव्रता ।
युवोः । रथः । अध्वरम् । देवऽवीतये । प्रति । स्वसरम् । उप । याति । पीतये ॥ १० ॥

स्कन्द० हे इन्द्रावरुणौ! सुतपौ! सुतानाम् सोमानां पातारौ! इमम् सुतम् सोमम् पिबतम् मद्यम् मदकरम् हे धृतव्रता! धृतकर्माणौ!। स्वकर्मणामपरित्यक्तारावित्यर्थः । किञ्च युवोः युवयोः स्वभूतः रथः अध्वरम् यज्ञम् प्रति देववीतये देवभक्षणाय। युवां देवौ हवींषि भक्षयिष्यथ इत्येवमर्थमित्यर्थः। प्रति स्वसरम् 'स्वसराणि' ( निघ १,९ ) इत्यहर्नाम। प्रत्यहमित्यर्थः[३]। उप [४]याति उपगच्छति पीतये सोमपानाय च[४] ॥ १० ॥

वेङ्कट० हे इन्द्रावरुणौ! सुतस्य[५] पातारौ![५] इमम् सुतम् सोमम् मदहेतुम् पिबतम् धृतकर्माणौ!। युवयोः रथः यज्ञम् देवकामाय अभ्युपगच्छति स्वसरम् सोमपानाय ॥ १० ॥

इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।
इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन्बर्हिषि मादयेथाम् ॥ ११ ॥

इन्द्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ।
इदम् । वाम् । अन्धः । परिऽसिक्तम् । अस्मे इति । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथाम् ॥

स्कन्द० हे इन्द्रावरुणौ! मधुमत्तमस्य अतिशयेन मधुस्वादस्य वृष्णः वर्षितुः सोमस्य षष्ठीनिर्देशाद् एकदेशं स्वांशलक्षणमिति[६] शेषः। द्वितीयार्थे वा षष्ठी। [९]'मधुमत्तमम् अतिशयेन मधुस्वादगुणम् वृषणं वर्षितारं सोमम्'[९]। हे वृषणा! वर्षितारौ! आ [१०]'वृषेथाम् आसिञ्चतम्'[१०] स्व उदरे। किं कारणम्। उच्यते—इदम् वाम् युवयोरर्थाय अन्धः सोमलक्षणम् अन्नम् परिषिक्तम्

१-१. अजरः ··· स मूको. २. महतु मि वि[२] अ[१]; स्तुतिः क लभ. ३. नास्ति क लभ, 'दं दीर्घ वि[२] अ[१]. ४. प्रत्यहमित्यर्थः मूको. ५-५. याति ··· मूको. ६. सुत[?] वि[२]. ७. °आर वि[२] अ[१]. ८. स्वांशल[?] मूको ९-९. मधुत्तमम ··· दितु ··· सोम मूको. १०-१०. °मासि° मूको.

ग्रहादिषु पात्रेषु क्षारितम् अस्मै अस्माभिः । एतज्ज्ञात्वा आसद्य अस्मिन् अस्मदीये बर्हिषि मादयेथाम् तृप्यतम् ॥ ११ ॥

वेङ्कट० हे इन्द्रावरुणौ! मधुमन्तम् वृषाण्णम्[1] सोमम् हे वर्षितारौ! [2]आ सिञ्चतम्[2] । इदम् युवाभ्याम् क्षरम् अस्माभिः परितः सिक्तम् पात्रेषु आसद्य[3] अस्मिन् बर्हिषि तृप्यतम् ॥ ११ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये द्वादशो वर्गः[4] ॥

[ ६९ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः । इन्द्राविष्णू देवता । त्रिष्टुप् छन्दः[5] ।

सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य ।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ १ ॥

सम् । वाम् । कर्मणा । सम् । इषा । हिनोमि । इन्द्राविष्णू इति । अपसः । पारे । अस्य ।
जुषेथाम् । यज्ञम् । द्रविणम् । च । धत्तम् । अरिष्टैः । नः । पथिऽभिः । पारयन्ता ॥ १ ॥

स्कन्द० 'द्यावापृथिव्यात्' प्रथमगैन्द्रावैष्णवमुच्यते[6] । 'घृतवती' ( ऋ ६,७० ) इत्येतद् द्यावापृथिव्यम्, एतस्मात्प्रथमम् एतत् सूक्तम् इन्द्राविष्णुदेवत्यम् । समित्युपसर्गः हिनोमीत्याख्यातेन सम्बध्यते । हिनोतिश्च वृद्ध्यर्थः, हि गतौ वृद्धौ चेति । सम् हिनोमि संवर्धयामि वाम् युवाम् कर्मणा स्तुतिलक्षणेन सम् इषा अन्नेन च सोमलक्षणेन संहिनोमि हे इन्द्राविष्णू! अपसः कर्मणः यागलक्षणस्य पारे अन्ते अस्य । एतत् ज्ञात्वा जुषेथाम् सेवेथाम् यज्ञम् अस्मदीयम्, द्रविणम् [7]च धनं च धत्तम्[7] दत्तम्, अरिष्टैः अहिंसितैः नः अस्मान् प्रति पथिभिः मार्गैः पारयन्ता पूरयन्तावत्र सामर्थ्याद् गत्यर्थः, स्वार्थे च णिच् । गच्छन्तौ ॥ १ ॥

वेङ्कट० सम् गमयामि वाम् स्तोत्रेण अन्नेन च हे इन्द्राविष्णू! अस्य कर्मणः पारे । तृतीयसवने तौ युवाम् जुषेथाम् यज्ञम्, धनम् च धत्तम्[8] अहिंसितैः अस्मान् मार्गैः पारयन्तौ[9] सुखे ॥ १ ॥

या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना ।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ २ ॥

या । विश्वासाम् । जनितारा । मतीनाम् । इन्द्राविष्णू इति । कलशा । सोमऽधाना ।
प्र । वाम् । गिरः । शस्यमानाः । अवन्तु । प्र । स्तोमासः । गीयमानासः । अर्कैः ॥ २ ॥

स्कन्द० या यौ विश्वासाम् सर्वासाम् जनितारा स्तोतृभिरभिलषितार्थसंपादनद्वारेण जनयितारौ मतीनाम् मन्यतेरर्चतिकर्मणः ( तु. निघ ३, १४ ) एतद्रूपम् । स्तुतीनाम् । इन्द्राविष्णू कलशा लुप्तोपममेतत् । कलशाविव सोमधाना सोमस्य निधानभूतौ[10] । भाजनभूतावित्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः ।

---

1. "ष" मूको. २-२. अभि" मूको. ३. आसाद्य मूको. ४-४. नास्ति मूको. ५. द्यावापृथिव्या मूको. ६-६. नास्ति वि". ७. सधन् वि" अ". ८. "धत्तो वि" अ". ९. "रयन्त" अ". १०. निधान" मूको.

तौ वाम् युवाम् गिरः शस्त्रलक्षणा वाचः शस्यमानाः शस्त्रधर्मेणोच्चार्यमाणाः प्र अवन्तु[1]। प्राप्नुवन्त्वित्यर्थः। प्र स्तोमासः प्रावन्तु स्तोमा अपि स्तोत्रलक्षणाः गीयमानासः सामगानधर्मेणोच्चार्यमाणाः अर्कैः अर्कशब्दोऽत्र स्तोतृवचनः, 'अर्को मद्रो मरुतो हविष्मान्' (ऋ १,१६७,६) इति यथा। स्तोतृभिर्होत्रादिलक्षणैः ॥ २ ॥

वेङ्कट० यौ विश्वासाम् स्तुतीनाम् जनयितारौ इन्द्राविष्णू सोमस्य निधानौ कलशावित्यौपमिकम्[2]। प्र गच्छन्तु वाम् तौ[3] शस्यमानाः[4] गिरः अस्माभिः, स्तोमाश्च गीयमानाः स्तोतृभिः ॥ २ ॥

इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना ।
सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः ॥ ३ ॥

इन्द्राविष्णू इति। मदपती इति मदऽपती। मदानाम्। आ। सोमम्। यातम्। द्रविणो इति। दधाना।
सम्। वाम्। अञ्जन्तु। अक्तुऽभिः। मतीनाम्। सम्। स्तोमासः। शस्यमानासः। उक्थैः ॥

स्कन्द० हे मदपती! माद्यन्ति येन तन्मदं मदकरं द्रव्यम् तस्याधिपतिभूतौ! इन्द्राविष्णू! मदानाम् निर्धारण एषा षष्ठी। मदकराणां मध्ये सोमम् वाम सवं प्रति आ यातम् आगच्छतम्। द्रविणो द्रविणा उ द्रविणो। उकारः पदपूरणः। धनानि दधाना दधतौ। आगच्छतम् धनानि धारयन्तावागतौ च सन्तौ याम् युवाम् ताम् अञ्जन्तु अभिगच्छन्त्वित्यर्थः। सञ्गच्छन्ताम्, अक्तुभिः सोमोऽत्र अक्तुरुच्यते, 'होतारमक्तोरतिथिं विभावसुम्' (ऋ १०,९२,१) इति यथा। प्रथमार्थे एषा तृतीया। सोमाः मतीनाम् 'मतयः' (निघ ३,१५) इति मेधाविनाम। मेधाविनां स्तोत्रपठमानानां स्वभूताः। अथवाऽक्तुशब्दोऽभिव्यक्तिवचनः। मतयः स्तुतयः। अभिव्यक्तय स्तोत्रशस्त्रलक्षणानां[5] स्तुतीनाम्। स्तोमासः सम् गच्छन्ताम् स्तोमा अपि शस्त्रलक्षणाः शस्यमानासः शस्त्रधर्मेणोच्चार्यमाणाः उक्थैः उक्थशब्दात् 'तत्करोति' (पावा ३,१,२६) इति णिच्, पचन्तात् पचादिकः अच्। उक्थसंज्ञकशस्त्रप्रयोक्तृभिः[6] होत्रकैः ॥ ३ ॥

वेङ्कट० हे इन्द्राविष्णू! सोमानां पती! आ यातम् इमम् सोमम् धनान्येव दधानौ[7]। सम् अञ्जन्तु वाम् स्तुतीनाम् अक्तुभिः स्तोतारः। सम् अञ्जन्तु 'स्तोमाः शस्यमानाः'[8] शस्त्रैः सह वामिति ॥ ३ ॥

आ वामश्वासो अभिमातिषाह इन्द्राविष्णू सधमादो वहन्तु ।
जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृणुतं गिरो मे ॥ ४ ॥

आ। वाम्। अश्वासः। अभिमातिऽसहः। इन्द्राविष्णू इति। सधऽमादः। वहन्तु।
जुषेथाम्। विश्वा। हवना। मतीनाम्। उप। ब्रह्माणि। शृणुतम्। गिरः। मे ॥ ४ ॥

स्कन्द० वाम् युवाम् अश्वाः अभिमातिषाहः षीञ् हिंसायाम् इत्यस्य अभिमातयः हिंस्राः शत्रुसेनाः

1. अवन्तु मूको. 2. °पमिति वि° भ° ङ; विस्थपेमिति लभ. 3. नास्ति मूको. 4. °मानो वि° अ°. 5. स्तोत्र···क्षणानां मूको. 6. °शक ·· हतय° मूको. 7. मदधानौ वि° अ°. 8-8. स्तोमाश्चस्य° वि° अ°.

वा, तासामभिमवितारः हे इन्द्राविष्णू! सधमादः सह युवाभ्यां माद्यन्तीति सधमादः आ वहन्तु आनयन्तु। युवामपि जुषेथाम् सेवेथाम् विश्वा सर्वाणि हवना आह्वानानि मतीनाम् मेधाविनामस्माकम्[१]। उप ब्रह्माणि 'ब्रह्म' ( निघ २,७ ) इत्यन्ननाम, तस्य च कर्मभूतस्य उपेति चोपसर्गस्य श्रुतेर्योग्यक्रियापदाध्याहारः। उपगच्छतम् अन्नानि सोमलक्षणानि। शृणुतम् च गिरः स्तुतिलक्षणा वाचः मे मम ॥ ४ ॥

वेङ्कट० आ वहन्तु वाम् अश्वाः शत्रूणां सोढारः इन्द्राविष्णू! सह मदन्तः[२]। जुषेथाम् विश्वानि ह्वानानि[३] स्तोतॄणाम्, उप शृणुतम् च शस्त्राणि गिरः च मदीयानि ॥ ४ ॥

इन्द्राविष्णू तत् पनयाय्यं वां सोमस्य मद उरु चक्रमाथे ।
अकृणुतमन्तरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥ ५ ॥

इन्द्राविष्णू इति । तत् । पनयाय्यम् । वाम् । सोमस्य । मदे । उरु । चक्रमाथे इति ।
अकृणुतम् । अन्तरिक्षम् । वरीयः । अप्रथतम् । जीवसे । नः । रजांसि ॥ ५ ॥

स्कन्द० हे इन्द्राविष्णू! तत् पनयाय्यम् स्तोतव्यम् वाम् युवयोः। यत् किम्। उच्यते — सोमस्य मदे सतिसप्तमी। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः[४]। यत् सोमस्य मदे सति[५]। सोमेन मत्तौ सन्ताविसमर्थः। उरु बहु चक्रमाथे क्रामथः[६]। शत्रूनन्वेषमाणौ परिक्रमथ इत्यर्थः। यच्च अकृणुतम् वृष्टिप्रदानद्वारेण कुरुथः अन्तरिक्षम् वरीयः उरुतरम्। अथवा अकृणुतमिति कृणोतेर्हिंसार्थस्य[७] रूपम्। 'धिन्विकृण्व्योर च' ( पा ३, १, ८० ) इत्येवम् उकारः प्रत्ययः अकारश्चान्तादेशः। हिंस्थः अन्तरिक्षम्। अन्तरिक्षस्य च हिंसा तदाश्रितस्य मेघस्य हिंसया। यच्च उरुतरमन्तरिक्षमाश्रितम् मेघं हिंस्थ इत्यर्थः। यच्च अप्रथतम् पृथूनि कुरुथः। दत्थ[८] इत्यर्थः। जीवसे जीवनाय नः अस्माकम् रजांसि उदकानि वृष्टिलक्षणानि ॥ ५ ॥

वेङ्कट० हे[९] इन्द्राविष्णू! तत् स्तोतव्यम् युवयोः। सोममदार्थं[१०] युवाम् उरूणि पदानि विक्रमेथे। तथेदम् अन्तरिक्षम् अकृणुतम् उरुतरम्[११]। तथा सर्वान् लोकान् अस्माकं जीवनाय अप्रथतम् ॥ ५ ॥

इन्द्राविष्णू हविषा वावृधानाग्राद्वाना नमसा रातहव्या ।
घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानः ॥ ६ ॥

इन्द्राविष्णू इति । हविषा । ववृधाना । अग्रऽअद्वाना । नमसा । रातऽहव्या ।
घृतासुती इति घृतऽआसुती । द्रविणम् । धत्तम् । अस्मे इति । समुद्रः । स्थः । कलशः । सोमऽधानः ॥ ६ ॥

---

१. "धाविनोऽस्मा" मूको. २. "न्तौ मूको. ३. स्वनानि वि[१]; रवनानि अ[१]. ४. यच्छब्दश्रुतेस्तच्छब्दो" मूको. ५. नास्ति वि[१]. ६. क्रामथ मूको. ७. कृणोतेर्हिं° अ वि[१]; कृणोर्हिं° वि[१]. ८. दत्त मूको. ९. नास्ति वि[१] अ[१]. १०. सोमे म° ल एव. ११. नास्ति वि[१].

स्कन्द० हे इन्द्राविष्णू! हविषा सोमलक्षणेन वावृधाना वर्धमानौ हे अग्राद्वानौ! अग्राणि श्रेष्ठानि हवींषि, तेषामत्तारौ![1]। न च केवलेन हविषा। किं तर्हि। नमसा नमस्काररूपेण च स्तोत्रेण[2]। हे रातहव्या! अन्यैरपि यजमानैर्दत्तहविष्कौ! घृताहुती। आहुतिशब्दोऽत्र रसवचनः, 'त्वया मर्तासः[3] स्वदन्त[4] आसुतिम्'[4] (ऋ २,१,१४) 'द्रवन्न.[1] सर्पिरासुतिः' (ऋ २,५,६) इति यथा। घृतरसौ। घृतस्य पातारावित्यर्थः। द्रविणम् धनम् धत्तम् दत्तम् अस्मे अस्मभ्यम्। किञ्च समुद्रः स्थः। समुद्रसाम्यादिदं समुद्रशब्देनाभिधानम्, व्यत्ययेनैकवचनम्[7]। गाम्भीर्येण महत्त्वेन च समुद्रसदृशौ स्थः। कलशः कुम्भोपममेतत्। अत्रापि व्यत्ययेनैवैकवचनम्[8]। कलशाविव च सोमधानः सोमस्य निधानभूतौ ॥ ६ ॥

वेङ्कट० हे इन्द्राविष्णू! हविषा वर्धमानौ सोमस्याग्निमुखस्य यज्ञमुखे अत्तारौ! नमस्कारेण सह यजमानैः दत्तहविष्कौ 'घृतमाहूयते हूयते ययोः तौ' द्रविणम् धत्तम् अस्मे[10]। समुद्रवन्ति यस्मात् सोमाः[11] सः[12] समुद्रः[13] कलशः सोमनिधानः स युवां भवथः ॥ ६ ॥

इन्द्रा॑विष्णू॒ पिब॑तं॒ मध्वो॑ अ॒स्य सोम॑स्य दस्रा ज॒ठरं॑ पृणेथाम् ।
आ वा॒मन्धां॑सि मदि॒राण्य॑ग्म॒न्नुप॒ ब्रह्मा॑णि शृणु॒तं॒ हवं॑ मे ॥ ७ ॥

इन्द्रा॑विष्णू॒ इति॑ । पिब॑तम् । मध्वः॑ । अ॒स्य । सोम॑स्य । द॒स्रा॒ । ज॒ठर॑म् । पृ॒णे॒था॒म् ।
आ । वा॒म् । अन्धां॑सि । म॒दि॒राणि॑ । अ॒ग्म॒न् । उप॑ । ब्रह्मा॑णि । शृ॒णु॒तम् । हव॑म् । मे॒ ॥ ७ ॥

स्कन्द० [14]हे इन्द्राविष्णू! युवाम् पिबतम् मध्वः मधुस्वादस्य अस्य सोमस्य। षष्ठीनिर्देशाद् एकदेशं स्वांशलक्षणमिति शेषः[15]। द्वितीयार्थे वा षष्ठी। मधुस्वादम् इमं सोमं हे दस्रा! दर्शनीयौ! उपक्षयितारौ! वा शत्रूणाम्। आ च स्तोकम्[14]। किं तर्हि। [16]जठरम् उदरम् पृणेथाम्[16] प्रीणयतं पूरयतं वा। यावत्तृप्ति[17] पिबतमित्यर्थः। वाम् युवाम् अन्धांसि अन्नानि सोमलक्षणानि मदिराणि मदकराणि आ अग्मन् आगच्छन्ति। पुन पुनः प्रभूतानि दीयन्त इत्यर्थः। एतत् ज्ञात्वा उप गच्छतम् ब्रह्माणि, शृणुतम् च आह्वानम् मे मम ॥ ७ ॥

वेङ्कट० इन्द्राविष्णू! पिबतम् इव मधु सोमस्य। दर्शनीयौ! जठरम् पूरयेथाम्। आ गच्छन्तु वाम् अन्नानि मदकराणि, उप शृणुतम् स्तोत्राणि ह्वानम् च मे ॥ ७ ॥

उ॒भा जि॑ग्यथु॒र्न परा॑ जयेथे॒ न परा॑ जिग्ये कत॒रश्च॒नैनोः॑ ।
इन्द्र॑श्च विष्णो॒ यदप॑स्पृधेथां त्रे॒धा स॒हस्रं॒ वि तदै॑रयेथाम् ॥ ८ ॥

---

1 तेषा मत्तारौ मूको. 2. स्तोत्रे मूको. 3. मर्तास मूको. 4. स च…वि[1]; स च वि[1] अ. 5. आसुती मूको. 6. हविषः मूको. 7. व्यत्य…वन° मूको. 8. °येनैव° मूको. 9-9. मतमाहूयते यो हूयते तौ वि[1] अ[1]. 10. मस्ये वि[1] अ[1]. 11. सोमा वि[1]. 12. नास्ति वि[1] अ[1]. 13. °द्रः वि[1] अ[1]. 14-14. इन्द्राविष्णू…स्तोक° मूको. 15. स्तोत मूको. 16-16. जठर…था मूको. 17-17. यावत्तृप्ति मूको.

उभा । जिग्युः । न । परा । जयेथे इति । न । परा । जिग्ये । कतरः । चन । एनोः ।
इन्द्रः । च । विष्णो इति । यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वि । तत् । ऐरयेथाम् ॥८॥

स्कन्द० उभा उभौ यावत् सम्प्रत्ति जिग्यथुः जयथः । न परा जयेथे पराजीयेथे केनचित् । न अपि परा जिग्ये पराजीयते कतरः चन नेदं किमो[1] रूपम् । किं तर्हि । एकतरशब्दस्य छान्दस एकारलोपः, चनशब्दोऽप्यर्थे[2] । एकतरोऽपि एनोः एनयोर्भवतोरिन्द्राविष्ण्वोः । किञ्च इन्द्रः च च-शब्दात् त्वं च हे विष्णो ! यत् यदा अपस्पृधेथाम् स्पर्धेथे शत्रुभिः सह त्रेधा त्रिशब्दोऽत्र अनेकत्वप्रतिपादनपरः । अनेकधा[3] सहस्रम् अपि शत्रूणाम् तत् तदा वि ऐरयेथाम् विविधमीरयथः । नाशयथ इत्यर्थः ॥ ८ ॥

वेङ्कट० उभौ शत्रून्[4] जिग्यथुः । न च परा जयेथे । न च अनयोः अन्यतरोऽपि परा जिग्ये । विष्णो ! त्वम् इन्द्रः च यदाऽसुरैः अपस्पृधेथाम्, तदानीम् तत् सहस्रम् गवाम् त्रेधा वि ऐरयेथाम् ॥ ८ ॥

[5]इति पञ्चमाष्टके प्रथमाध्याये त्रयोदशो वर्गः[5] ॥

[ ७० ]

[1]भरद्वाजो बार्हस्पत्य ऋषिः । सविता देवता । जगती छन्दः, अन्तिमास्तिस्रः त्रिष्टुभः[2] ।

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ १ ॥

घृतवती इति घृतऽवती । भुवनानाम् । अभिऽश्रिया । उर्वी इति । पृथ्वी इति । मधुदुघे इति मधुऽदुघे । सुऽपेशसा । द्यावापृथिवी इति । वरुणस्य । धर्मणा । विस्कभिते इति विऽस्कभिते । अजरे इति । भूरिऽरेतसा ॥१॥

स्कन्द० द्यावापृथिव्यमेतत् सूक्तम् । घृतवती उदकवत्यौ भुवनानाम् भूतजातानाम् अभिश्रिया आश्रयणीये उर्वी[1] उरुशब्दोऽत्र बहुवचनः[2] अवयवबहुत्वात् बहुत्वव्यपदेशः[3] । बह्वयवे पृथ्वी [4]पृथुशब्दो विस्तीर्णवचनः[5] । विस्तीर्णे मधुदुघे मधु वृष्टिलक्षणमुदकम्, तस्य दोग्ध्र्यौ । द्यौः साक्षात् क्षरित्री, पृथिवी वृष्टिहेतुभूताहुतिसम्पादनद्वारेण । सुपेशसा 'पेशः' (निघ ३,७) इति रूपनाम । सुरूपे द्यावापृथिवी वरुणस्य आदित्यस्य मध्यमस्य वा धर्मणा कर्मणा प्रकाशलक्षणेन विष्कभिते प्रतिष्ठिते । स्वावस्थातः[6] अप्रच्युते इत्यर्थः । [7]अजरे जरारहिते भूरिरेतसा बहुरेतस्के[7] ॥ १ ॥

वेङ्कट० रसवत्यौ भुवनानाम् अभिश्रयणीये[10] [11]उर्वी पृथ्वी[11] उदकस्य क्षारयित्र्यौ सुरूपे[12] द्यावापृथिव्यौ वरुणस्य धारणेन विष्कभिते[13] भवतः जरारहिते बहुरेतस्के ॥ १ ॥

---

१. कमो मूको. २. चन चनशब्दो° मूको. ३. अनेकता मूको. ४. शत्रू वि° भ°. ५-५. नास्ति मूको. ६. नास्ति मूको. ७. बहुवचनविस्तीर्णवचनः मूको. ८. बहुव्यपदेशः मूको. ९. स्वावस्थात मूको. १०. अभिश्र° भ°. ११-११. पृथिव्यौ उर्वी वि° भ°; पृथ्वी वीरुधी क लभ. १२. सुर उभे वि° भ°. १३. विष्कभ्ये वि° भ°; विष्क क लभ.

असंश्चन्ती भूरिधारे पर्यस्वती घृतं दुहाते सुकृते शुचिंव्रते ।
राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम् ॥ २ ॥

असंश्चन्ती इति । भूरिधारे इति भूरिऽधारे । पर्यस्वती इति । घृतम् । दुहाते इति । सुऽकृते । शुचिंव्रते इति शुचिंऽव्रते । राजन्ती इति । अस्य । भुवनस्य । रोदसी इति । अस्मे इति । रेतः । सिञ्चतम् । यत् । मनुःऽहितम् ॥ २ ॥

स्कन्द० 'असश्चन्ती सश्चतिर्गतिकर्मा (तु. निघ २,१४)। शुल्कोऽप्ययं सम्पूर्वार्थे द्रष्टव्यः। असङ्गच्छमाने असज्जमाने परस्परेण असम्मिश्रीभवन्त्यौ अविक्षिपन्त्यौ आश्रितान् वा'। भूरिधारे बहोर्भूतजातस्य ज्योतिषां च धारयित्र्यौ पयस्वती उदकवत्यौ (तु. या ५,२) घृतम् वृष्टिलक्षणमुदकम् दुहाते क्षरतः। वर्षत इत्यर्थः। सुकृते तादर्थ्ये एषा चतुर्थी। शोभनयागादिकर्मकारिणो यजमानस्यार्थाय शुचिव्रते शुद्धकर्माणौ। परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। राजन्ती "'राजति' (निघ २,२१) इत्यैश्वर्यकर्मा"। ईशाने अस्य भुवनस्य भूतजातस्य हे रोदसी! द्यावापृथिव्यौ! अस्मे अस्माकम् रेतः उदकम् सिञ्चतम् क्षारयतम्, यत् मनुर्हितम् मनुष्येभ्यो हितम्। सस्यसम्पत्करमित्यर्थः ॥ २ ॥

वेङ्कट० परस्परमसङ्गते बहुधारे। दिव उदकानि धारा भवन्ति, ओषधयः पृथिव्याः। रसवत्यौ उदकम् दुहाते यजमानाय शोभनकर्माणौ। राजन्ती अस्य भुवनस्य हे द्यावापृथिव्यौ! अस्माकम् उदकम् सिञ्चतम्, यत् मनुष्येभ्यो हितम् ॥ २ ॥

यो वामृजवे क्रमणाय रोदसी मर्तो ददाश धिषणे स साधति ।
प्र प्रजाभिर्जायते धर्मणस्परि युवोः सिक्ता विषुरूपाणि सव्रता ॥ ३ ॥

यः । वाम् । ऋजवे । क्रमणाय । रोदसी इति । मर्तः । ददाश । धिषणे इति । सः । साधति । प्र । प्रऽजाभिः । जायते । धर्मणः । परि । युवोः । सिक्ता । विषुऽरूपाणि । सऽव्रता ॥ ३ ॥

स्कन्द० यः वाम् युवाभ्याम् ऋजवे अकुटिलाय क्रमणाय स्वर्गं प्रति गमनाय हे रोदसी! द्यावापृथिव्यौ! मर्तः मनुष्यः ददाश ददाति हवींषि। हे धिषणे! द्यावापृथिवीनामधेयमेतद् अन्यत्र, इह तु रोदसीत्यनेन पौनरुक्त्यप्रसङ्गाद् धि धारणे इत्यस्य क्रियाशब्दः द्यावापृथिव्योर्विशेषणम्। भूतजातस्य ज्योतिषां च धारयित्र्यौ! सः साधति 'सेधति' (निघ २,१४) इत्यस्य गतिकर्मण एतद्रूपम् (?)। गच्छति स्वर्गम्। प्र प्रजाभिः जायते प्रजाभिश्च प्रजायते धर्मणः परि कर्मणो यागलक्षणस्योपरि। तस्मात् यागादनन्तरमेवेत्यर्थः। किञ्च युवोः युवयोः सिक्ता विविक्तानि उपरि निहितानि। आयत्तानीत्यर्थः। विषुरूपाणि पृथग्रूपाणि भूतजातानि सव्रतानि। कर्माणि येषां युवयोरायत्तानीत्यर्थः ॥ ३ ॥

१-१. अुदितस् मूको; निरुक्तस्कन्दस्वामिभाष्याद् (५,२) इहोद्धृत्य पठितः पाठः
† "सश्च" पा ‡ विक्षिप° मुपा। अम्युरस्नत्यौ मा. २-२. राजन्तीत्यै° मूको. ३. °त्वाद् धि° स्व°. ४. °नित मूको. ५. स्वर्गम् मूको. ६-६. °मना…रि मूको

वेङ्कट० यः युवाभ्यां सरणाय[1] गमनाय सुखं भवत्योर्गन्तुं हे रोदसी! मर्त्यः[2] हवींषि प्रयच्छति, सः घृष्टे![3] अभिलषितं साधयति, प्र जायते च प्रजाभिः भवत्योः कर्मणः[4] अनन्तरम्। युवयोः नानाकृतीनि समानानानस्थमादीनि परिषिक्तानि भूतानि ॥ ३ ॥

घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा ।
उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईळते सुम्नमिष्टये ॥ ४ ॥

घृतेन । द्यावापृथिवी इति । अभिवृते इत्यभिऽवृते । घृतऽश्रिया । घृतऽपृचा । घृतऽवृधा । उर्वी इति । पृथ्वी इति । होतृऽवूर्ये । पुरोहिते इति पुरःऽहिते । ते इति । इत् । विप्राः । ईळते । सुम्नम् । इष्टये ॥ ४ ॥

स्कन्द० "ते इद् विप्राः" इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। ये घृतेन उदकेन द्यावापृथिवी अभीवृते आच्छादिते घृतश्रिया उदकस्याश्रयभूते घृतपृचा उदकेन सम्पृक्ते। अन्तरभिव्याप्ते इत्यर्थः। घृतावृधा उदकस्य वर्धयित्र्यौ उर्वी बह्ववयवे पृथ्वी विस्तीर्णे होतृवूर्ये होतृवूर्यो[5] यज्ञः तस्मिन् पुरोहिते अग्रतः स्थापिते। प्रधानीकृते इत्यर्थः। ते। इत् इति पदपूरणः। विप्राः मेधाविनः यजमानाः ईळते याचन्ति सुम्नम् सुखम् इष्टये यागाय। सुखिनः सन्तः सुखं द्यावापृथिव्यौ यक्ष्यामहे इत्येतमर्थमित्यर्थः ॥ ४ ॥

वेङ्कट० उदकेन द्यावापृथिव्यौ परिवृते घृतस्याऽऽश्रयभूते घृतसम्पृक्ते घृतस्य वर्धयित्र्यौ[6] उर्वी पृथ्वी होतॄणां वरणीये यज्ञे पुरोहिते[7]। ते एव विप्राः स्तुवन्ति सुखं याचितुम् अधुना[8] ॥ ४ ॥

मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते ।
दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यम् ॥ ५ ॥

मधु । नः । द्यावापृथिवी इति । मिमिक्षताम् । मधुऽश्चुता । मधुदुघे इति मधुऽदुघे । मधुव्रते इति मधुऽव्रते । दधाने इति । यज्ञम् । द्रविणम् । च । देवता । महि । श्रवः । वाजम् । अस्मे इति । सुऽवीर्यम् ॥५॥

स्कन्द० मधु[9] इतिलक्षणमुदकम् नः अस्मदर्थम् द्यावापृथिवी[10] मिमिक्षताम् मिह सेचने सिञ्चताम्। मधुश्चुता उदकस्य क्षारयित्र्यौ मधुदुघे मधुशब्दोऽत्र मधुश्चुतेत्यनेन पौनरुक्त्यप्रसङ्गाद् न उदकनाम। किं तर्हि। स्वादविशेषवचनः। समधुस्वादस्याधारस्य उदकस्य दोग्ध्र्यौ मधुव्रते "व्रतमकम् (३. या २, १३) शरीरं यदारभुजे[11] तदिति। मधुस्वादं हविर्भूतं[12] ययोस्ते मधुव्रते। दधाने ददतौ यज्ञम् द्रविणम् च धनं च देवता देवत्वेन। देवतामाहात्म्येनेत्यर्थः। अथवा देवतेति प्रथमाद्विवचनस्य स्थाने एकवचनम्। देवते देवताभूते। न च केवलं यज्ञं द्रविणं च। किं तर्हि। महि महत् श्रवः कीर्तिम् वाजम् अन्नं च अस्मे अस्मभ्यम् सुवीर्यम्[13] ॥ ५ ॥

---

१. भरति ख्ण. २. °र्त्यो वि°. ३. ते सष्टे वि° अ°. ४. °णा मूको. ५-५. ···हविषा मूको. ६. होतृवीर्यो वि° अ. ७. वर्धयित्र्यौ वि° अ°; वर्धयित्र्यौ ख्ण. ८. °हिते वि° अ°. ९. नास्ति ख्ण. १०. ···मधु वि°. ११. द्यावापृथिवीमिति मूको. १२-१२. म···ते मूको. १३. हविर्भूतं मूको. १४. सुवीर्यम्··· वि° अ.

वेङ्कट० [1]उदकम् असम्र्यं[1] द्यावापृथिव्यौ सिञ्चताम् उदकस्य क्षारयित्र्यौ उदकस्य दोग्ध्र्यौ उदकार्थकर्माणौ[2]। धारयन्त्यौ[3] यशः धनम् च देवतानाम् महच्छ्रवणीयम् अन्नम् असाम्यं शोभनवीर्यं[4] प्रयच्छताम् ॥ ५ ॥

ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता विश्वविदा सुदंससा ।
संरराणे रोदसी विश्वशम्भुवा सनिं वाजं रयिमस्मे समिन्वताम् ॥ ६ ॥

ऊर्जम् । नः । द्यौः । च । पृथिवी । च । पिन्वताम् । पिता । माता । विश्वऽविदा । सुऽदंससा । संरराणे इति सम्ऽरराणे । रोदसी इति । विश्वऽशम्भुवा । सनिम् । वाजम् । रयिम् । अस्मे इति । सम् । इन्वताम् ॥ ६ ॥

स्कन्द० ऊर्जम् घृतमुदकलक्षणं रसम् नः अस्मदर्थम् द्यौः च पृथिवी च [5]पिन्वताम् पिवि सेचने[5]। सिञ्चतां क्षारयताम्। पिता माता क्रमेणैते द्वे द्यावापृथिव्योर्विशेषणे। पितृभूता द्यौः मातृभूता च पृथिवी। विवाहकाले 'द्यौरहं पृथिवी त्वम्' ( अ १४,२,७१ ) इति वरे वध्वां च पुंस्त्वपृथिवीत्वारोपेण[6] मनुष्याणां वरपितृकत्वात्[7] वधूमातृकत्वाच्च तद्धर्मेण पितृत्वेन मातृत्वेन चार्थं दिवः पृथिव्याश्च पिता मातेति च व्यपदेशः। विश्वविदा [8]सर्वस्य ज्ञात्र्यौ सुदंससा सुकर्माणौ[8] संरराणे सम्यग्ददत्यौ रोदसी द्यावापृथिव्यौ विश्वशंभुवा सर्वप्राणिनां सुखस्य [9]भावयित्र्यौ सनिम् सम्भजनीयम् वाजम्[9] अन्नम् रयिम् धनं च हिरण्यलक्षणम् अस्मे अस्मभ्यम्[10] सम् इन्वताम् 'इन्वति' ( निघ २, १८ ) इति व्याप्तिकर्मा, सामर्थ्याच्चान्तर्णीतण्यर्थः। व्यापयतां[11] प्रापयताम्। दत्तामित्यर्थः ॥ ६ ॥

वेङ्कट० उदकम् अस्मभ्यम् द्यौः च पृथिवी च क्षरताम्। पिता द्यौः माता पृथिवी सर्वस्य ज्ञानयित्र्यौ सुकर्माणौ सह रममाणे रोदसी परस्परोपकार्योपकारकभावेन सर्वस्य सुखस्य भावयित्र्यौ पशून् अन्नं धनं चास्मभ्यम् [12]सम् प्रापयताम्[12] ॥ ६

[13]इति पञ्चमाष्टके प्रथमाध्याये चतुर्दशो वर्गः[13] ॥

[ ७१ ]

[14]भरद्वाजो बार्हस्पत्य ऋषिः। सविता देवता। जगती छन्दः, अन्त्यास्तिस्रस्त्रिष्टुभः[14]।

उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुः ।
घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणि ॥ १ ॥

१-१. नास्ति वि[२] अ[१]. २. °धार्थ कर्माणि वि[२] अ[१]. ३. °रयन्ती वि[२] अ[१]. ४. °वीर्यः वि[१]. ५-५. °न्वता···सेचने मूको. ६. पुंस्त्वपृथि··· मूको. ७. वरपितृ° मूको. ८-८. सर्वस्य···सुकर्माणौ मूको. ९-९. भावयित्र्यौ···वाज° मूको. १०. अस्माभिः मूको. ११. नास्ति वि[२]. १२-१२. प्रापयताम् वि[१] अ[१]; सम्प्रापयतम् ल रुभ. १३-१३. नास्ति मूको.

उत् । ॐ इति॑ । स्यः । दे॒वः । स॒वि॒ता । हि॒र॒ण्ययो॑ । बा॒हू इति॑ । अयं॑स्त । सव॑नाय । सु॒ऽक्रतुः॑ । घृ॒तेन॑ । पा॒णी इति॑ । अ॒भि । प्रु॒ष्णु॒ते॒ । म॒खः । युवा॑ । सु॒ऽदक्षः॑ । रज॑सः । विऽध॑र्मणि ॥ १ ॥

स्कन्द० "'उदु ष्य देवः' सावित्रम्"। सवितृदेवत्यमेतत्सूक्तम्। उदित्युपसर्गः अयंस्त इत्याख्यातेन सम्बन्धयितव्यः। 'उ इति' पदपूरणः। स्यः सः देवः सविता हिरण्ययौ सुवर्णमयौ बाहू बाहुसम्बन्धाद् हस्तावत्र बाहुभ्यां लक्ष्येते। तथा ह्यैतिहासिकाः प्रतिमासु चित्रकर्मणि च ऊर्ध्वहस्तं सवितारं स्मरन्ति, नोर्ध्वबाहुम्। हस्तौ उत् अयंस्त उद्यच्छति। उद्यच्छन् स्वौ हस्तावुत्क्षिपतीत्यर्थः। सवनाय यज्ञाय सुक्रतुः सुकर्मा सुप्रज्ञो वा। स्य देवः इति तच्छब्द-श्रुतेर्यच्छब्दोऽध्याहार्यः[1]। यः घृतेन उदकेन पाणी स्वौ हस्तौ अभि प्रुष्णुते अभिषिञ्चति। प्रक्षालयतीत्यर्थः। हस्तप्रक्षालनेन चात्र शुचित्वं लक्ष्यते। स्वकर्म कर्तुं शुचिर्भवतीत्यर्थः। मखः मखकारी युवा सर्वदैव तरुणः सुदक्षः सुप्रवृद्धसादी रजसः रश्मिभिराहृतस्योदकस्य लोकस्य वा विधर्मणि विधारणे ॥ १ ॥

वेङ्कट० उत् यच्छति[1] सः देवः सविता हिरण्मयौ बाहू[2] यज्ञाय सुकर्मा। तत उदकेन पाणी अभि प्रक्षालयति पूजयिता[3] अध्वर्युः[4] युवा[5] शोभनबलः लोकस्य विधारणे यज्ञे ॥ १ ॥

दे॒वस्य॑ व॒यं स॑वि॒तुः सवी॑मनि॒ श्रेष्ठे॑ स्याम॒ वसु॑नश्च दा॒वने॑ ।
यो विश्व॑स्य द्वि॒पदो॒ यश्चतु॑ष्पदो नि॒वेश॑ने प्रस॒वे चासि॒ भूम॑नः ॥ २ ॥

दे॒वस्य॑ । व॒यम् । स॒वि॒तुः । सवी॑मनि । श्रेष्ठे॑ । स्या॒म॒ । वसु॑नः । च॒ । दा॒वने॑ ।
यः । विश्व॑स्य । द्वि॒ऽपदः॑ । यः । चतुः॑ऽपदः । नि॒ऽवेश॑ने । प्र॒ऽस॒वे । च॒ । असि॑ । भूम॑नः ॥२॥

स्कन्द० देवस्य वयम् सवितुः तव सवीमनि अभ्यनुज्ञायाम् श्रेष्ठे अत्यन्तं प्रशस्ये स्याम भवेम, वसुनः च धनस्य च दावने दाने। त्वं देवः सविता सर्वकर्मसु नित्यम् अस्मान् अभ्यनुजानीयाः, धनं च तथा इत्येवदाशास्महे इत्यर्थः। योऽहं कीदृशः। उच्यते—यः त्वम् विश्वस्य सर्वस्य द्विपदः मनुष्यादेः यः चतुष्पदः गवादेः निवेशने स्वापाय व्यवस्थापने प्रसवे च अभ्यनुज्ञायां सर्वकर्मसु असि शक्तिर्भवतिना समानार्थः। शब्दोऽपि चात्र अपूर्वार्थे[6] द्रष्टव्यः। प्रभवसि। यः सर्वस्य प्राणिजातस्य सुषुप्तिस्वप्नजागरकर्मसु[7] च ईशिष्यत इत्यर्थः। भूमनः भूम्नः अत्यन्तं महोः ॥ २ ॥

वेङ्कट० देवस्य वयम् सवितुः प्रसवे श्रेष्ठे[10] भवेम धनस्य च दानाय। यः विश्वस्य द्विपदः[11] यः च चतुष्पदः[11] गवादेः रात्रौ निवेशने[13] अह्नि प्रसवे भवसि व्याप्तः[14] महोः ॥ २ ॥

अद॑ब्धेभिः सवितः पा॒युभि॒ष्ट्वं शि॒वेभि॑र॒द्य परि॑ पाहि नो॒ गय॑म् ।
हिर॑ण्यजिह्वः सुवि॒ताय॒ नव्य॑से॒ रक्षा॒ माकि॑र्नो अ॒घशं॑स ईशत ॥ ३ ॥

---

१-१. इदिति मूको. २. °ब्दोऽध्याहार्यः वि°. ३. °यच्छति वि° अ°. ४. °हु वि°. ५. नास्ति वि°. ६. °स्यर्थः मूको. ७. शुभ मूको. ८. पूर्वार्थे मूको. ९. °°°स्वप्नकर्मसु मूको. १०. श्रेष्ठा वि°. ११. °पादो वि°. १२. °ष्पद वि°. १३. °वेशने वि° अ°. १४. व्यापृतो वि°.

अदब्धेभिः । सवितरिति । पायुऽभिः । त्वम् । शिवेभिः । अद्य । परि । पाहि । नः । गयम् । हिरण्यऽजिह्वः । सुवितायं । नव्यसे । रक्ष । माकिः । नः । अघऽशंसः । ईशत ॥ ३ ॥

स्कन्द० अदब्धेभिः यानि केनचिद्धिंसितुं न शक्यन्ते [1]तान्यदब्धानि तैः[1] हे सवितः! पायुभिः पालनैः त्वम् शिवेभिः सुखैश्च अद्य परि पाहि सर्वतो रक्ष नः अस्माकम् गयम् गृहम्। हिरण्यजिह्वः सुवर्णमयजिह्वः त्वम् सुविताय त्वयैवाभ्यनुज्ञातयागादिकर्मणे नव्यसे अतिशयेन नवाय अन्यैर-कृतपूर्वाय रक्ष अस्मान्। माकिः मा कश्चित् त्वत्प्रसादेन नः अस्माकम् अघशंसः स्तेनः पापात्मा ■ शंसिता ईशत ईशिष्ट ॥ ३ ॥

वेङ्कट० अहिंसितैः सवितः! पालनैः त्वम् शिवैः अद्य परितः पाहि अस्माकम् गृहम्। हिरण्मयजिह्वः सुखाय नवतराय[2] रक्ष अस्मान्। मा कश्चित् स्तेनोऽस्माकम् ईशिष्ट[3] ॥ ३ ॥

उदु ष्य देवः सविता दमूना हिरण्यपाणिः प्रतिदोषमस्थात् ।
अयोहनुर्यजतो मन्द्रजिह्व आ दाशुषे सुवति भूरि वामम् ॥ ४ ॥

उत् । ऊँ इति । स्यः । देवः । सविता । दमूनाः । हिरण्यऽपाणिः । प्रतिऽदोषम् । अस्थात् । अयःऽहनुः । यजतः । मन्द्रऽजिह्वः । आ । दाशुषे । सुवति । भूरि । वामम् ॥ ४ ॥

स्कन्द० सः देवः सविता दमूनाः दममना वा "दानमना वा" दान्तमना वा (द्र. या ४,४) हिरण्यपाणिः सुवर्णमयहस्तः [4]प्रतिदोषम् दोषाशब्देनात्राहरुक्तम्[4]। प्रत्यहम् उत् अस्थात् उत्तिष्ठति। उद्गच्छतीत्यर्थः। किञ्च अयोहनुः यजतः यष्टव्यः मन्द्रजिह्वः मादनजिह्वो[5] मोदनजिह्वो वा दाशुषे यजमानाय आ सुवति "अभ्यनुजानाति भूरि प्रभूतम् वामम् प्रशस्यं वननीयं वा धनम्" ॥ ■ ॥

वेङ्कट० उत् अस्थात् सः देवः सविता दमूनाः[6] हिरण्यपाणिः प्रतिरात्रं हिरण्मयहनुः यष्टव्यः मादनजिह्वः। सः आ प्रसौति यजमानाय बहु धनम् ॥ ४ ॥

उदू अयाँ उपवक्तेव बाहू हिरण्यया सविता सुप्रतीका ।
दिवो रोहांस्यरुहत् पृथिव्या अरीरमत् पतयत् कच्चिदभ्वम् ॥ ५ ॥

उत् । ऊँ इति । अयान् । उपवक्ताऽइव । बाहू इति । हिरण्यया । सविता । सुऽप्रतीका । दिवः । रोहांसि । अरुहत् । पृथिव्याः । अरीरमत् । पतयत् । कत् । चित् । अभ्वम् ॥ ५ ॥

स्कन्द० [7]उत् अयान् उद्यच्छति उपवक्ता इव यथाध्वर्युरुपवक्ता[7] आक्रन्दकरः । स इव बाहू हवौ हस्तौ हिरण्यया सुवर्णमयौ। कः। सविता। कीदृशौ। सुप्रतीका सुदर्शनौ। उद्यम्य च

---

१-१. °दब्धानैः मूको. २. नवतराय वि° अ°, नवत° ल हस्त. ३. आशिषः वि° अ°; ईशिषः ल हस्त. ४-४. द···न्ता या मूको. ५-५. °दोषं···त्र( अ वि° )हविलं° मूको. ६. नास्ति मूको. ७-७. अभ्यनुज्ञा( आ वि° )ता··· मूको. ८. दममनाः लः; दमं मनाः अ° हस्त. ९-९. ···क्षीनी° मूको.

दिवः द्युलोकस्य रोहांसि आरोहणस्थानानि अरुहत् आरोहति [१]पृथिव्याः सकाशात् । उद्यन्[१] आदित्यः पृथिवीमिव निर्भिद्योद्गच्छन् दृश्यते, अत[२] एवम् उच्यते—पृथिव्या इति। आरोहंश्च अरीरमत् उपरमयति च किञ्चित् यद्वान्निचरम्, पतयत् च किञ्चित् [३]यद्दिवाचरम् अभ्रम् महद् मृगजातम्[३] ॥ ५ ॥

वेङ्कट० उत् अयच्छद् आक्रन्दितेव बाहू[४] हिरण्मयौ सविता शोभनावयवौ[५] । दिवः उच्छ्रितानि स्थानान्यधिरोहति[६] । पृथिव्याः पर्यन्ता दिशो रमयति । जगत्[७] पातयति च तस्मिन्महत् सुखमिति ॥ ५ ॥

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ ६ ॥

वामम् । अद्य । सवितः । वामम् । ऊँ इति । श्वः । दिवेऽदिवे । वामम् । अस्मभ्यम् । सावीः ।
वामस्य । हि । क्षयस्य । देव । भूरेः । अया । धिया । वामऽभाजः । स्याम ॥ ६ ॥

स्कन्द० वामम् प्रशस्यं [८]वननीयं वा[८] धनम् अद्य हे सवितः! वामम् उ उकार एवार्थे[९] । वाममेव श्वः । न चाद्यैव श्व एव च केवलम्[१०] । किं तर्हि । उत्तरकालमपि दिवेदिवे अहन्यहनि वामम् धनम् अस्मभ्यम् सावीः अनुजानीयाः । दद्या इत्यर्थः । किञ्च वामस्य हि प्रशस्यस्यैव[११] वननीयस्य वा क्षयस्य निवासस्थानस्य हे देव! भूरेः बहुनः अया धिया अनेन यागलक्षणेन स्तुतिलक्षणेन वा कर्मणा । साकाङ्क्षत्वात् स्वामेरयस्यानुषङ्गः । स्वामिन इति च वाक्यशेषः । युष्मत्प्रसादेन वयं स्वामिन स्याम । अथवा[१२] वामस्येत्यादौ द्वितीयार्थे षष्ठी । सावीरित्येतच्च[१३] पुरस्तान्निर्दिष्टमनुषक्तव्यम् । वामं क्षयं च दद्या इत्यर्थः । वामभाजः स्याम अन्येषां च प्रशस्यानां वननीयानां वार्याणां सम्भक्तारो[१४] वयं स्याम ॥ ६ ॥

वेङ्कट० धनम् अद्य श्वः दिवेदिवे सवितः अस्मभ्यम् प्रयच्छ, वामम् एव सावीः । वामस्य हि वासयितु[१५] हे[१६] देव[१५] । षष्ठी. वयं सम्भक्तारः स्याम । तदेवाऽऽह—अनेन कर्मणा वयम् वामभाजः स्याम ॥ ६ ॥

[१७]इति प्रथमाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[१७] ॥

[ ७२ ]

[१०]भरद्वाजो बार्हस्पत्य ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छन्दः[१०] ।

इन्द्रासोमा महि तद् वां महित्वं युवं महानि प्रथमानि चक्रथुः ।
युवं सूर्यं विविदथुर्युवं स्व१र्विश्वा तमांस्यहतं निदश्च ॥ १ ॥

---

१-१ पृथिव्याः – उद्यन् मूको. २. अत मूको. ३-३. °चरम् ··· वनजातम् वि°; °चरम् ··· जातम् ब वि°. ४. बाहु वि° ल, बाहुं ल्म. ५. °वयो वि° अ°. ६. °हति मूको. ७. °गत ल्म. ८-८. वननीय मूको. ९. एवकारार्थे ब वि°. १०. केवल. मूको. ११. प्रशस्यैव मूको. १२. अथ मूको. १३. °त्येतद् व वि°. °तच मूको. १४. सं···भक्तारो मूको. १५ गे मूको. १६. दे वि° अ°, दव ल ल्म. १७-१७. नास्ति मूको.

इन्द्रासोमा । महि । तत् । वाम् । महिऽत्वम् । युवम् । महानि । प्रथमानि । चक्रथुः ।
युवम् । सूर्यम् । विविदथुः । युवम् । स्वः । विश्वा । तमांसि । अहतम् । निदः । च ॥ १ ॥

स्कन्द० 'ऐन्द्रासोम' च'। इन्द्रासोमदेवत्यमेतत् सूक्तम्। हे इन्द्रासोमौ! महि महत् वाम् युवयोः तत्[1] महित्वम् माहात्म्यम्। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। येन युवाम् महानि महान्ति वृत्रवधादिकर्माणि प्रथमानि अन्यैरकृतपूर्वाणि चक्रथुः कृतवन्तौ स्थः। किञ्च युवम् सूर्यम् आदित्यमपि विविदथुः आनीय, युवामेव स्वः उदकम् मेघस्थम्। किञ्च विश्वा सर्वाणि दुर्भिक्षनिमित्तानि सर्वमनुष्याणाम् मनोमोहलक्षणानि तमांसि अहतम् वृष्टिप्रदानेन हतवन्तौ[2] स्थः, [3]निदः च निन्दाश्चापि कर्माकरणनिमित्ताः[3] ॥ १ ॥

वेङ्कट० हे इन्द्रासोमौ! महत् तत् वाम् महत्त्वम्। युवां महान्ति प्रथमानि प्रज्ञानि चक्रथुः। युवाम् सूर्यम् लम्भयथः, युवाम् उदकम्। विश्वानि तमांसि अहतम् निन्दितॄंश्च ॥ १ ॥

इन्द्रासोमा वासयथ उषासमुत् सूर्यं नयथो ज्योतिषा सह ।
उप द्यां स्कम्भथुः स्कम्भनेनाप्रथतं पृथिवीं मातरं वि ॥ २ ॥

इन्द्रासोमा । वासयथः । उषसम् । उत् । सूर्यम् । नयथः । ज्योतिषा । सह ।
उप । द्याम् । स्कम्भथुः । स्कम्भनेन । अप्रथतम् । पृथिवीम् । मातरम् । वि ॥ २ ॥

स्कन्द० इन्द्रासोमा। हे इन्द्रासोमौ! वासयथः सर्वजगत्स्थितिहेतुभूतवृष्टिप्रदानादिव्यापारेण[4] स्वस्मिन् स्थाने निवासयथः युवाम्[5] उषसम्। सूर्यम् च उत् नयथः ऊर्ध्वं गमयथः रश्मिलक्षणेन ज्योतिषा सह। द्याम् द्युलोकं च उप स्कम्भथुः। [6]'ष्टभु स्कभु स्कम्भु प्रतिबन्धे'[6]। उपस्तम्भनम्[7] स्कम्भनम् [8]लुप्तोपममेतत्। स्कम्भनेनेव[8] स्कम्भादिना। अप्रथतम्। वि इति अन्त्य उपसर्गः एतेन सम्बन्धयितव्यः। विविधं च प्रथयतं पृथिवीम् मातरम् मातृभूतां सर्वप्राणिनाम् ॥ २ ॥

वेङ्कट० इन्द्रासोमौ! उषसम् वासयथः स्वे स्थाने, सूर्यम् च उत् नयथः ज्योतिषा[9] सह, द्युलोकं[10] च उप स्कम्भथुः[11] अन्तरिक्षेण, [12]वि अप्रथयतम्[12] च पृथिवीम् मातरम् ॥ २ ॥

इन्द्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।
प्रार्णांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥ ३ ॥

इन्द्रासोमौ । अहिम् । अपः । परिऽस्थाम् । हथः । वृत्रम् । अनु । वाम् । द्यौः । अमन्यत ।
प्र । अर्णांसि । ऐरयतम् । नदीनाम् । आ । समुद्राणि । पप्रथुः । पुरूणि ॥ ३ ॥

---

१. माहित मूको २. हतवन्तौ च वि° ३-३. °हत्याविकमा° मूको ४. °नादिद्वारेण वि°. ५. युवा मूको ६-६. स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु इत्येते सौत्रा धातवः उपलभ्यन्ते ७. उपस्तुम मूको ८-८. °मभे नतेव मूको ९. ज्योति मूको १०. द्विलो° मूको ११. उपस्तम्भ° मूको. १२-१२. प्रथयं वि° वर्° ल; प्रथये रुक्ष

स्कन्द० इन्द्रासोमौ! अहिम् मेघम् अपः उदकस्य परिष्ठाम् सर्वतः स्थातारम् हथः हतवन्तौ युवाम्। वृत्रम् चासुरं घ्नन्तौ च वाम् युवाम् द्यौः अनु अमन्यत अनुमतवती। हत्वा च अर्णांसि उदकानि प्र ऐरयतम् प्रेरितवन्तौ स्थः नदीनाम् गङ्गाद्यानां सम्बन्धीनि। गङ्गाद्यासु नदीषु यानीत्यर्थः। तैश्च समुद्राणि समुद्रान् आ पप्रथुः आपूरितवन्तौ स्थः पुरूणि बहून्। चतुरोऽपीत्यर्थः। अथवा समुद्राणीति नपुंसकनिर्देशात् समुद्रशब्देनात्रोदकमुच्यते[1]। तेनान्तः[2] पूरितवन्ताविति ॥ ३ ॥

वेङ्कट० इन्द्रासोमौ! उदकानि परिवृत्य तस्थिवांसम् आहन्तारम् वृत्रम् हथः[3]। तदानीम् वाम् द्यौः अनु अमन्यत। प्र ऐरयतम् च युवाम् उदकानि नदीनाम् तैश्चोदकैः समुद्रान् बहून् आपूरितवन्तौ। लिङ्गभेदश्छान्दसः। यद्वा ...... कालापुरस्तादिति (?) ॥ ३ ॥

इन्द्रासोमा पक्वमामास्वन्तर्नि गवामिद् दधथुर्वक्षणासु ।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः ॥ ४ ॥

इन्द्रासोमा। पक्वम्। आमासु। अन्तः। नि। गवाम्। इत्। दधथुः। वक्षणासु।
जगृभथुः। अनपिऽनद्धम्। आसु। रुशत्। चित्रासु। जगतीषु। अन्तरिति ॥ ४ ॥

स्कन्द० इन्द्रासोमा। हे इन्द्रासोमौ! पक्वम् भोगयोग्यम् क्षीरम् आमासु गवामित्येतेन सामानाधिकरण्यात् षष्ठ्यर्थे एषा सप्तमी। आमानाम् अपक्वानाम्। स्वयमभोगयोग्यानामित्यर्थः। अन्तः मध्ये गवाम्। इत् इति पदपूरणः। नि दधथुः[4] हेतुभूतवृष्टिप्रदानादिना निधायेत्[5] वक्षणासु। वक्षणाशब्देनात्र नदीतीरस्थानत्वेकदेशवर्तित्वात्[6] ऊधांस्युच्यन्ते। ऊधस्सु। निधाय जगृभथुः। गृहीतवन्तावित्यर्थः। गाहयथः। मनुष्यैर्दोहयथ इत्यर्थः। अनपिनद्धम् अवद्धभूतम्[7] आसु गोषु सप्तमीनिर्देशात् व्यवस्थितमिति शेषः। कीदृशम्। उच्यते—रुशत् 'रुशदिति वर्णनाम' (या ६,१३)। शुक्लवर्णम्। चित्रासु विचित्रासु कृष्णधूम्ररक्तादिवर्णासु जगतीषु 'जगती' (निघ २,११) इति गोनाम। गोषु। कृष्णादिवर्णास्वपि गोषु शुक्लमेव, न कृष्णादिवर्णमित्यर्थः। अन्तः मध्ये। सप्तमीनिर्देशाद् उत्पन्नम्। स्थितमिति वाक्यशेषः ॥ ४ ॥

वेङ्कट० हे इन्द्रासोमौ! गवाम्[8] आमासु[9] वक्षणासु[10] ऊधःसु अन्तः[11] [12]नि दधथुः[12] पक्वम् पयः[13]। जगृभथुः[14] च आसु वक्षणासु अनपिनद्धम् पयः, यथा पृथिव्यां न पतति, श्वेतं[15] चित्रवर्णासु गोषु अन्तः[16] ॥ ४ ॥

इन्द्रासोमा युवमङ्ग तरुत्रमपत्यसाचं श्रुत्यं रराथे ।
युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥ ५ ॥

1. शब्देनात्रोच्यते मूको. 2. नान्तः मूको. 3. हतः मूको. 4. निदधुः मूको. 5. निधाये मूको. 6. रौ ... देश° मूको. 7. अबध्नूतम् मूको. 8. नवाम् मूको. 9. मासु वि° अ¹; °सु य सु स हस. 10. पद° मूको. 11. मन्तं मूको. 12-12. निदधु वि° अ¹. 13. वया वि° अ¹; पया अ¹. 14. जिघः वि° अ¹; ... भीथः स हस. 15. श्वेन मूको. 16. अन्ता वि°; अन्ता अ¹; अन्तः स; अन्ता हस.

इन्द्रासोमा । युवम् । अङ्ग । तरुत्रम् । अपत्यऽसाचम् । श्रुत्यम् । रराथे इति ।
युवम् । शुष्मम् । नर्यम् । चर्षणिऽभ्यः । सम् । बिभृथुः । पृतनाऽसहम् । उग्रा ॥ ५ ॥

स्कन्द० इन्द्रासोमा! हे इन्द्रासोमौ! युवम् अह क्षिप्रम् तरुत्रम् तुर्वितारं[1] शत्रूणाम् अपत्यसाचम् अपत्यानां सेवितारम्। स्वपुत्रपौत्रादिभाजमित्यर्थः। श्रुत्यम् श्रुतं विख्यातं पुत्रम्[2] रराथे दत्थः[3]। न केवलं पुत्रम्। किं तर्हि। युवम् शुष्मम् बलमपि नर्यम् नृभ्यो हितम् चर्षणिभ्यः मनुष्येभ्यः सम् बिभृथुः। सम्प्रदानचतुर्थीश्रुतेः बिभर्तिरत्र दानार्थः। सन्दत्थः[4] पृतनाषाहम् सङ्ग्रामेष्वभिभवितृ हे उग्रा! अप्रसह्यौ! क्रूरौ! वा शत्रूणामुपरि ॥ ५ ॥

वेङ्कट० इन्द्रासोमौ! युवाम् अह तारकं धनं पुत्रपौत्रभाजं श्रवणीयं[5] प्रयच्छथः। युवां बलं नृहितं मनुष्येभ्यः सम् बिभृथुः पृतनासहम् उद्गूर्णौ![6] ॥ ५ ॥

[7]इति पञ्चमाष्टके प्रथमाध्याये षोडशो वर्गः[7] ॥

[ ७३ ]

[8]भरद्वाजो बार्हस्पत्य ऋषिः। बृहस्पतिर्देवता। त्रिष्टुप् छन्दः[8]।

यो अद्रिभित् प्रथमजा ऋतावा बृहस्पतिराङ्गिरसो हविष्मान् ।
द्विबर्हज्मा प्राघर्मसत् पिता न आ रोदसी वृषभो रोरवीति ॥ १ ॥

यः । अद्रिऽभित् । प्रथमऽजाः । ऋतऽवा । बृहस्पतिः । आङ्गिरसः । हविष्मान् ।
द्विबर्हऽज्मा । प्राघर्मऽसत् । पिता । नः । आ । रोदसी इति । वृषभः । रोरवीति ॥ १ ॥

स्कन्द० 'बार्हस्पत्यं ततः परम्'। तत ऐन्द्रासोमात् परम् एतत् सूक्तं बृहस्पतिदेवत्यम्। यः अद्रिभित् मेघानां भेत्ता प्रथमजाः पूर्वजाः ऋतावा सत्यवान् यज्ञवान् वा बृहस्पतिः आङ्गिरसः अङ्गिरसः[9] पुत्रः। प्रजापतेर्हि पुत्रोऽङ्गिरास्तस्य पुत्रो बृहस्पतिः। एवं हि बृहद्देवताकारादयः[9] स्मरन्ति —

[10]त्रिसांवत्सरिकं सत्रं[10] प्रजाकामः प्रजापतिः[11]।
आहरत् [11]सहितः साध्यैर्विश्वैर्देवैः सहेति च ॥
तत्र वाग् दीक्षणीयायामाजगाम[11] शरीरिणी।
तां दृष्ट्वा [12]युगपत् तत्र कस्याथ वरुणस्य च ॥
शुक्रं चस्कन्द तद्वायुरग्नौ[12] प्रास्यद् यदृच्छया।
ततोऽर्चिभ्यो[13] भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥

---

१. तु···कारः मूको. २. नास्ति मूको. ३. दत्थः मूको. ४. सन्दत्थः मूको. ५. श्रवणी° वि° अ°. ६. गौ वि° अ°. ७-७. नास्ति मूको. ८-८. ···मादयः मूको. ९. गर्भे मूको. १०-१०. प्रकाम: ···प्र मूको. ११-११. सहि तत्सत्र्यैर्विश्वैर्देवैश्च ···णीयाया° मूको. १२-१२. युगपद् ··· स्कन्दयुरग्नौ मूको. १३. °र्चिषि मूको.

योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ।
'बृहस्पतेर्भरद्वाजो विदथीति' य उच्यते'॥ (बृदे ५,९७-९९,१०३) इति ।

हविष्मान् उदकेन भक्षाद्यामृतेन वा हविषा' तद्वान् द्विबर्हज्मा बर्हयतेर्वधकर्मणः' (तु. निघ २,१९) बृहेर्वा वृद्ध्यर्थस्य भजेर्वा इदं रूपम् । सांयोगिकेन शारीरेण' च द्वाभ्यामपि बलाभ्यां यच्छत्रून् हन्ति परिवृद्धं वा 'तद् द्विबर्हम्' 'वज्रम् तेन' शत्रून् मेघान् वा प्रति भजति गच्छतीति' द्विबर्हज्मा । प्राघर्मसत् प्रकृष्टस्य घर्मस्य कर्ता प्राघर्मो ग्रीष्मः । 'तस्येदम्' ( पा ४,३,१२० ) इत्यण् । तस्मिन् वृष्ट्या सीदतीति प्राघर्मसत् । ग्रीष्मान्ते वर्षितेत्यर्थः । पिता नः 'अस्मदो द्वयोश्च' ( पा १,२,५९ ) इत्येवम् एतद् एकस्मिन्नेव बहुवचनम् । मम भरद्वाजस्य । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः रोदसी द्यावापृथिव्यौ वृषभः वर्षिता आ रोरवीति शब्दयति । गर्जितशब्देनापूरयतीत्यर्थः ॥ १ ॥

वेङ्कट० "यः शिलोच्चयभित्" पूर्वजः यज्ञवान् बृहस्पतिः आङ्गिरसः हविष्मान्, स द्विगुणगमनः शीघ्रगन्ता प्रकृष्टे घर्मे सीदन् पालयिता अस्माकम् द्यावापृथिव्यौ वृषभः आ रोरवीति ॥ १ ॥

जनाय चिद् य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार ।
घ्नन् वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान् पृत्सु साहन् ॥ २ ॥

जनाय । चित् । यः । ईवते । ऊँ इति । लोकम् । बृहस्पतिः । देवऽहूतौ । चकार ।
घ्नन् । वृत्राणि । वि । पुरः । दर्दरीति । जयन् । शत्रून् । अमित्रान् । पृत्ऽसु । सहन् ॥ २ ॥

स्कन्द० जनाय चित् जनो मनुष्यलोकः तस्मै । चिदिति पदपूरणः । यः ईवते एतदः' 'इदंकिमोरीश्की' ( पा ६,३,९० ) इति ईशादेशः छान्दसत्वात् । एतावते । अत्यन्तबहव इत्यर्थः । 'उ इति' पदपूरणः । लोकम् स्थानम् बृहस्पतिः देवहूतौ देवा हूयन्ते यस्मिन् स देवहूतिर्यज्ञः तस्मिन् चकार करोति । सर्वमनुष्यान् यो यज्ञे भजतीत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः घ्नन् मारयन् वृत्राणि शत्रून् पुरः नगराणि तेषाम् वि दर्दरीति । विविधं दारयति जयन् जयन् शत्रून् जयन् अमित्रान् पृत्सु संग्रामेषु सहन् अभिभवन् । जयोऽभिभूय वशीकरणम् । अभिभवो न्यक्कारमात्रम् । तेनानयोर्न पौनरुक्त्यम् ॥ २ ॥

वेङ्कट० जनाय चित् यः आत्मानं प्रति गच्छते लोकम् बृहस्पतिः यज्ञे चकार[10] । शत्रून्[11] घ्नन्[12] शत्रुपुराणि वि दारयति जयन्[13] शत्रून्[14] अमित्रान् पृतनासु अभिभवन्[15] ॥ २ ॥

बृहस्पतिः समजयद् वसूनि महो व्रजान् गोमतो देव एषः ।
अपः सिषासन्त्स्व१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ३ ॥

---

1-1. "योऽपि दधीति मूको. २. हविषा मूको. ३. निबर्ह" मूको. ४. शरीरेण मूको ५-५. तद्बर्हिन् मूको. ६-६. त्व …तेन मूको. ७-७. नास्ति भ° वि°. ८. एतत् मूको. ९-९. दरिति मूको. १०. चकार मूको. ११. °तु वि° अ°. १२. घ्न वि° अ°. १३. जय जानश्रुन् मूको. १४. नास्ति वि° अ°. १५. °वन् वि° अ°; °भवि अ°.

बृहस्पतिः । सम् । अजयत् । वसूनि । महः । व्रजान् । गोऽमतः । देवः । एषः ।
अपः । सिसासन् । स्वः । अप्रतिऽइतः । बृहस्पतिः । हन्ति । अमित्रम् । अर्कैः ॥ ३ ॥

स्कन्द० बृहस्पतिः सम् अजयत् सञ्जयति वसूनि धनानि महः महतश्च व्रजान् गोष्ठान् गोमतः गवां पूर्णान् देवः एषः । किञ्च अपः वृष्टिलक्षणान्युदकानि सिषासन् सम्भक्तुमिच्छन् । दर्शयितुमिच्छन्नित्यर्थः । स्वः सर्वम् अप्रतीतः अप्रतिगतः केनचित् बृहस्पतिः हन्ति अमित्रम् शत्रुम् अर्कैः । अपठितमपि सामर्थ्याद् इहैवद् वज्रनाम । वज्रैः । अथवा अर्कैः देवैर्मरुदादिभिः सह । अथवा अर्कैर्मन्त्रैः । तृतीयानिर्देशाच्च स्तुतस्सन्निति वाक्यशेषः ॥ ३ ॥

वेङ्कट० बृहस्पतिः सम् जयति धनानि महतः व्रजान् पशुमतश्च देवः एषः । उदकानि सम्भक्तुमिच्छन् स्वर्लोकस्थितानि शत्रुभिरप्रतिहतः बृहस्पतिः हन्ति च अमित्रम् मन्त्रैः ॥ ३ ॥

इति पञ्चमाष्टके प्रथमाध्याये सप्तदशो वर्गः ॥

[ ७४ ]

भरद्वाजो बार्हस्पत्य ऋषिः । सोमारुद्रौ देवता । त्रिष्टुप् छन्दः ।

सोमारुद्रा धारयेथामसुर्यं१ प्र वामिष्टयोऽरमश्नुवन्तु ।
दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥ १ ॥

सोमारुद्रा । धारयेथाम् । असुर्यम् । प्र । वाम् । इष्टयः । अरम् । अश्नुवन्तु ।
दमेऽदमे । सप्त । रत्ना । दधाना । शम् । नः । भूतम् । द्विऽपदे । शम् । चतुःऽपदे ॥ १ ॥

स्कन्द० "सोमारुद्रावनुपान्त्यं तु, भरद्वाजस्य शंसति" । अपान्त्यमनन्त्यसमीप इत्यर्थः । यदेतदनुपान्त्यं मण्डलस्य सूक्तं भरद्वाजस्यार्षम् एतत् । सोमारुद्रदेवत्यमित्येव शंसति आचष्टे । कः । सामर्थ्याद् आचार्यो मम । हे सोमारुद्रौ ! धारयेथाम् नियामयेथाम् असुर्यम् असुरसम्बन्धि बलम् । तस्मिन् कृते वाम् युवाम् इष्टयः यागाः अस्मदीयाः अरम् पर्याप्तम् । सुतृप्तिरित्यर्थः । प्र अश्नुवन्तु । दमेदमे यज्ञगृहेयज्ञगृहे अस्मदीये व्याप्तौ च सत्यौ सप्त सप्तसङ्ख्याकानि । बहूनीत्यर्थः । रत्ना धनानि दधाना ददतावस्मभ्यम् शम् सुखवन्तौ नः अस्माकम् भूतम् भवतम् द्विपदे मनुष्यादिकाय शम् एव चतुष्पदे गवादिकाय ॥ १ ॥

वेङ्कट० हे सोमारुद्रौ ! धारयेथाम् असुराणां हन्तृ बलम् । तथा सति वाम् पर्याप्तम् प्र अश्नुवन्तु यज्ञाः । गृहे-गृहे सप्त रत्नानि प्रयच्छन्तौ शङ्करौ नः भवतम् द्विपदे चतुष्पदे च ॥ १ ॥

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि सन्तु ॥ २ ॥

---

१-१. समजय…द मूको. २. के मूको. ३. सं वि° अ° ल° तयन्त्र हस्त. ४. एव वि°. ५-५. नास्ति मूको. ६-६. निया…तस्मिन् वा मूको. ७-७. सुखौ क मूको. ८-८. °दिकाय…मेव वि°. ९-९. मानुष्य ? मूको. १०. नौ मूको. ११. °भवत मूको.

सोमा॑रुद्रा । वि । वृ॒हत॒म् । विषू॑चीम् । अमी॑वा । या । नः॒ । गय॑म् । आ॒ऽवि॒वेश॑ ।
आ॒रे । बा॒धे॒था॒म् । निःऽऋ॑तिम् । प॒रा॒चैः । अ॒स्मे इति॑ । भ॒द्रा । सौ॒श्र॒व॒सानि॑ । स॒न्तु॒ ॥ २ ॥

स्कन्द० सोमारुद्रा ! हे सोमारुद्रौ ! वि वृहतम् वृहू उद्यमने । उद्यमनमुत्खननम् । विविधमुत्खनतम्[1] विषूचीम् । विषुशब्दो नानेत्यस्य पर्यायः, अञ्चतिर्गत्यर्थः । नानारूपगामिनीम् । अनेकप्रकाराभिरित्यर्थः । काम् । उच्यते—अमीवा रोगजातिः[2] या नः अस्माकम्[3] गयम् गृहम् आविवेश प्रविष्टा । रोगा अस्माकं गृहे प्रवृत्ता इत्यर्थः । ताम् । किञ्च आरे दूरे एव सती बाधेथाम् अस्मत्तोऽपनयतम् निर्ऋतिम् मृत्युदेवताम् पराचैः पराङ्मुखैर्गमनैः । किञ्च अस्मे अस्माकम् भद्रा कल्याणानि सौश्रवसानि शोभनं श्रवः अन्नं कीर्तिर्धनं वा येषां ते सुश्रवसः । तेषां सम्बन्धीनि सौश्रवसानि । शोभनेन कीर्त्यादिना युक्तानां सतामित्यर्थः । सन्तु भवन्तु ॥ २ ॥

वेङ्कट० हे सोमारुद्रौ ! वि वृहतम् विष्वग्गमनाम् ताम्[4], अमीवा या अस्माकं गृहम् आविवेश । आरे बाधेथाम् निर्ऋतिम् पराचीनम् । अस्मासु भद्राणि स्वन्ननिमित्तानि सन्तु ॥ २ ॥

सोमा॑रुद्रा यु॒वमे॒तान्य॒स्मे विश्वा॑ त॒नूषु॑ भेष॒जानि॑ धत्तम् ।
अव॑ स्यतं मु॒ञ्चतं॒ यन्नो॒ अस्ति॑ त॒नूषु॑ ब॒द्धं कृ॒तमेनो॑ अ॒स्मत् ॥ ३ ॥

सोमा॑रुद्रा । यु॒वम् । ए॒तानि॑ । अ॒स्मे इति॑ । विश्वा॑ । त॒नूषु॑ । भे॒ष॒जानि॑ । ध॒त्त॒म् ।
अव॑ । स्य॒त॒म् । मु॒ञ्चत॑म् । यत् । नः॒ । अस्ति॑ । त॒नूषु॑ । ब॒द्धम् । कृ॒तम् । एनः॑ । अ॒स्मत् ॥३॥

स्कन्द० [5]सोमारुद्रा ! हे सोमारुद्रौ ! युवम् युवाम् एतानि[5] अस्मे अस्माकम् विश्वा सर्वाणि तनूषु शरीरेषु भेषजानि रोगोपशमनान्यौषधानि धत्तम् स्थापयतम् । अरोगशरीरानस्मान् कुरुतम् इत्यर्थः । [6]किञ्च अव स्यतम् स्यतिरुपसृष्टोऽपनयने[6] । अपनयतमित्यर्थः । अपनीय च दूरं नीत्वा [7]मुञ्चतम् । किम् । उच्यते—यत् नः[7] अस्ति तनूषु बद्धम् व्यवस्थितम् कृतम्[8] एनः पापम् अस्मत् तृतीयार्थे पञ्चम्येषा । अस्माभिः ॥ ३ ॥

वेङ्कट० हे सोमारुद्रौ ! युवाम् एतानि अस्माकं विश्वानि भेषजानि अङ्गेषु धत्तम् । यत् पापम् अस्माकम् अस्ति तत् बद्धम् 'अव स्यतम्' मुञ्चतम् च । तदेवाऽऽह—तनूषु बद्धम् कृतम् पापम् अस्माकम् अस्मत्[9] अवस्यतं मुञ्चतमिति ॥ ३ ॥

ति॒ग्माऽयु॑धौ ति॒ग्मऽहे॑ती सु॒शेवौ॒ सोमा॑रुद्रावि॒ह सु मृ॑ळतं नः ।
प्र नो॑ मुञ्चतं॒ वरु॑णस्य॒ पाशा॑द् गोपा॒यतं॑ नः सुमन॒स्यमा॑ना ॥ ४ ॥

ति॒ग्मऽआ॑युधौ । ति॒ग्महे॑ती॒ इति॑ ति॒ग्मऽहे॑ती । सु॒ऽशेवौ॑ । सोमा॑रुद्रौ । इ॒ह । सु । मृ॒ळ॒त॒म् । नः॒ ।
प्र । नः॒ । मु॒ञ्चत॒म् । वरु॑णस्य । पाशा॑त् । गो॒पा॒यत॑म् । नः॒ । सु॒ऽम॒न॒स्यमा॑ना ॥ ४ ॥

---

१. °त्खनतम् मूको. २. जाति म वि°; जाती वि°. ३. अस्माकं च मूको. ४. नास्ति मूको.
५-५. सोमारुद्रा…युवमेतानि मूको. ६-६. … °स्यतो … ने मूको. ७-७. मुञ्चत … यन्नो मूको.
८-८. मरस्त° वि°; विभक्त् अ°. ९. अस्मत् स.

स्कन्द० प्रत्यक्षकृतत्वान्मन्त्रस्य तिग्मायुधावित्यादीनां [1]पदानाम् अनामन्त्रितत्वाद् यत्तच्छब्दावध्याहृत्यैकवाक्यता[1] योज्या। यौ युवाम् तिग्मायुधौ तीक्ष्णखड्गादिशस्त्रौ तिग्महेती तीक्ष्णवज्रौ च सुशेवौ सुसुखौ स्तोतृणां ■ तौ हे सोमारुद्रौ! इह जन्मनि स्थाने वा सु मृळतम् सुष्ठु सुखयतम् नः अस्मान्। किञ्च प्र मुञ्चतम् नः वरुणस्य पाशात्। यथा वरुणपाशेन न गृह्यामहे[2] तथा कुरुतमित्यर्थः। गोपायतम् रक्षतम् च नः सुमनस्यमाना सम्प्रीयमाणौ ॥ ४ ॥

वेङ्कट० तिग्मधनुष्कौ तिग्महेती सुसुखौ सोमारुद्रौ! युवाम् इह अस्मान् सुष्ठु सुखयतम्। प्र मुञ्चतम् च अस्मान्[3] वरुणस्य पाशात्। रक्षतम् अस्मान्[3] सौमनसमिच्छन्तौ ॥ ४ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये अष्टादशो वर्गः[4] ॥

[ ७५ ]

[5]पायुर्भारद्वाज ऋषिः। (संग्रामाशिषः) आद्यस्या वर्म देवता, द्वितीयस्या धनुः, तृतीयस्या ज्या, चतुर्थ्या आर्त्नी, पञ्चम्या इषुधिः, षष्ठ्याः पूर्वार्धस्य सारथिः, षष्ठ्या उत्तरार्धस्य रश्मयः, सप्तम्या अश्वाः, अष्टम्या रथः, नवम्या रथगोपाः, दशम्या ब्राह्मण-पितृ-सोम-द्यावापृथिवी-पूषणः, एकादशीद्वादशी-पञ्चदशीषोडशीनामिषवः, त्रयोदश्याः प्रतोदः[6], चतुर्दश्या हस्तघ्नः, सप्तदश्या युद्धभूमि-कवच-ब्रह्मणस्पत्यादयः[6], अष्टादश्या वर्म-सोम-वरुणाः, एकोनविंश्या देवब्रह्माणि। त्रिष्टुप् छन्दः, षष्ठीदशम्यौ जगत्यौ, द्वादशीत्रयोदशी-पञ्चदशीषोडश्येकोनविंश्योऽनुष्टुभः, सप्तदशी पङ्क्तिः[5]।

जी॒मूत॑स्येव भवति॒ प्रती॑कं॒ यद् व॒र्मी याति॑ स॒मदा॑मु॒पस्थे॑ ।
अना॑विद्धया त॒न्वा॑ जय॒ त्वं स त्वा॒ वर्म॑णो महि॒मा पि॑पर्तु ॥ १ ॥

जी॒मूत॑स्यऽइव । भ॒व॒ति॒ । प्रती॑कम् । यत् । व॒र्मी । याति॑ । स॒ऽमदा॑म् । उ॒पऽस्थे॑ ।
अना॑विद्धया । त॒न्वा॑ । ज॒य॒ । त्वम् । सः । त्वा॒ । वर्म॑णः । म॒हि॒मा । पि॒प॒र्तु॒ ॥ १ ॥

स्कन्द० 'जीमूतीयन्तु यत्पायुर्भारद्वाज' ऋषिः स्मृतः'। जीमूतशब्दो यस्मिन् सूक्तेऽस्ति तज्जीमूतीयमेतत् सूक्तम्। 'यत् पायुर्नाम' भरद्वाजपुत्रोऽपश्यत्। अत्र चेतिहासं बृहद्देवताकार आचष्टे—

'अभ्यावर्ती[7] चायमानः प्रस्तोकश्चैव सार्ञ्जयः[8]।
आजग्मतुर्भरद्वाजं[9] जितौ[10] वारशिखैर्युधि[11] ॥

---

१-१. पदानाम् अनामन्त्रितत्वाद्यच्छब्दा° मूको. २. गृह्यामहे मूको. ३. स्याव मूको. ४-४. नास्ति मूको. ५. यन्मायुर्भर° मूको. ६-६ तन्मासु° मूको. ७. अभ्यावर्ती मूको. ८. सञ्जीव मूको. ९. अभिज° मूको. १०. जिशिनी मूको. ११. वाशिखैर्युधिम् मूको.

मत्पुरोहितावास्तां[1] क्षत्रबन्धू अथेच्छतम्[2] ।
क्षत्रं [3]तदपि विज्ञेयं[3] ब्रह्म यत् पाति शाश्वतम्[4] ॥
ऋषिस्तु तौ तथेत्युक्त्वा [5]पार्थं पुनरभाषत[5] ।
अथर्वणीयौ शत्रूणां कुरुष्वैतौ[6] नृपाविति ॥
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ।
जीमूतस्येति[7] सूक्तेन पृथक्त्वेनान्वमन्त्रयत् । ( बृहद्दे ५,१२४-१२८ ) ॥

जीमूतस्येव प्रतीकमस्य भवति यद्वर्मी याति समदाम् उपस्थे । अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥ वर्मणा अयोमयेन, यदा[8] वर्मी याति समदाम् 'सेनानाम् उपस्थे समीपे योद्धुकामः। अनाविद्धेन शत्रुभिः शरीरेण सपत्नान् जय त्वम् सः । 'स वर्मणः' महिमा त्वा पारयतु[10] । शौनकः—'प्रथमा[11] त्वस्य सूक्तस्य योद्धारं स्तौति वर्मिणम्', ( बृहद्दे ५,१२९ ) इति ॥ १ ॥

धन्व॑ना॒ गा धन्व॑ना॒जिं ज॑येम॒ धन्व॑ना ती॒व्राः स॒मदो॑ जयेम ।
ध॒नुः शत्रो॑रपका॒मं कृ॑णोति॒ धन्व॑ना॒ सर्वाः॑ प्र॒दिशो॑ जयेम ॥ २ ॥

धन्व॑ना । गाः । धन्व॑ना । आ॒जिम् । ज॒ये॒म॒ । धन्व॑ना । ती॒व्राः । स॒ऽमदः॑ । ज॒ये॒म॒ ।
ध॒नुः । शत्रोः॑ । अ॒प॒ऽका॒मम् । कृ॒णो॒ति॒ । धन्व॑ना । सर्वाः॑ । प्र॒ऽदिशः॑ । ज॒ये॒म॒ ॥ २ ॥

स्कन्द० 'धन्वना[12] गा धनुर्ज्याली[13] इषुधिः सर्वमृक्स्तुतम्'[14] । धनुर्ज्या आर्त्नी इषुधिरित्येतत्सर्वं धनुष्प्रायमपि ऋचो चापहाभिधायिभिः ऋग्भिः स्तुतम् । तत्रास्यां धनुःस्तुतम् । धन्वना गाः धनुषा गाः शत्रूणां स्वभूता धन्वना एव आजिम् अत्र स्पर्धयैव केवलया लक्ष्यवेधा-र्थमिषवः क्षिप्यन्ते, न[15] परस्परवधक्रिया[15] साऽत्र आजिरभिप्रेता तया च तत्कारिणो लक्ष्यन्ते । तान् जयेम । धन्वना एव च तीव्राः अप्रसह्याः समदः सङ्ग्रामकारिणीः सेनाः जयेम । धनुः एव शत्रोः सङ्ग्रामस्य अपकामम् अपगतं कामम् [16]कृणोति । करम्[16] छान्दसं । करोतु । धन्वना एव च वयम् सर्वा प्रदिशः [17]प्रगता दिग्भि[17] प्रदिश उच्यन्ते ता.[18] जयेम । अवान्तरदिशो च ऊर्ध्वो दिग्द्वयमन्तरीया अ स्वस्वतीरभावतो[19] गृहीतो दिग्व्रयः । अथवा प्रकृष्टा दिशः प्रदिश इति महादिशो दिश उच्यन्ते । ता[20] जयेमेति ॥ २ ॥

वेङ्कट० धनुषा पशून् शत्रूणाम् जयेम, धनुषा सङ्ग्रामम् । धनुषा[21] तीव्रान्[22] कलहान्[23] जयेम । धनुः शत्रोः [24]अपगतं कामं[25] करोति । धन्वना सर्वाः प्रकृष्टा दिशः जयेम ॥ २ ॥

१. °स्तितौ वा° लभ. २. °बन्धू मजेवहि मूको. ३-३. यदपि जेय लभ; यच्चमपि जेयं वि[1] अ[1] ल. ४. शाश्वतं वि[1] ल लभ. ५-५. वाग्युत मूको. ६. °ध्वैतौ वि[1] ल; °ध्वेवो लभ. ७. जीमूतोपेन मूको. ८. यदा मूको. ९-९. सर्वे यदो वि[1]. १०. पारयितु लभ; पालयतु लपस्तावा. ११. पुथा वि[1] ल लभ; प्रमा अ[1]. १२. नास्ति मूको. १३. °ज्योति मूको. १४. °सृक् सा मूको. १५. °रवभित्या वि[1] अ; °रवेधक्रिया वि[1]. १६-१६. °ति···मत्र ल वि[1]; °ति मत्र वि[1]. १७-१७. प्रगतादिभिः मूको. १८. तान् मूको. १९. °त्यों: मूको. २०. तान् न वि[1], तानि वि[1]. २१. नास्ति वि[1]. २२. °न्यान वि[1] अ[1]. २३. °हात् वि[1] अ[1]. २४-२५. °मच° वि[1].

वृक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥ ३ ॥

वृक्ष्यन्तीऽइव । इत् । आ । गनीगन्ति । कर्णम् । प्रियम् । सखायम् । परिऽसस्वजाना ।
योषाऽइव । शिङ्क्ते । विऽतता । अधि । धन्वन् । ज्या । इयम् । समने । पारयन्ती ॥ ३ ॥

स्कन्द० अनया ज्या स्तुता । वक्ष्यन्ती इव यथा 'किंचिद् वक्ष्यन्ती । इत् इति पदपूरणः । काचित् स्त्री कश्चित् पुरुषम् अनुगच्छेत् तद्वत् आ गनीगन्ति[1] पुनःपुनः[2] आगच्छति[3] आकृष्यमाणा कर्णम् प्रति । प्रियम् । लुप्तोपममेतत् । प्रियमिव सखायम् । यथा "काचित् प्रियं सखायम् परिषस्वजाना परिष्वजमाना, तद्वत् । किम् । सामर्थ्याद् इषुं क्षिप्स्यामीत्यर्थः । योषा इव शिङ्क्ते । यथा रतिकाले[4] काचिद्योषा[5] पुंसः सुखकरमव्यक्तं[6] शब्दं कुर्यात्, तद्वदव्यक्तं[7] शब्दं करोति वितता विस्तारिता अधि धन्वन् उपरि धनुषः 'ज्या इयम्' समने । सङ्ग्रामनामैतत्[8] । सङ्ग्रामे पारयन्ती । पृ पालनपूरणयोः । पालयन्ती योद्धारम् । अथवा पृणातिरत्र सामर्थ्याद् गत्यर्थः, 'अरिष्टैर्नः पथिभिः पारयन्ता' ( ऋ ६,६९,१ ) इति यथा । गमयन्ती इषून् ॥ ३ ॥

वेङ्कट० वक्ष्यन्ती इव आ गच्छति कर्णम् प्रियम् सखायम् योद्धारम् परिष्वजमाना । योषा इव शब्दं करोति वितता अधि धनुषि ज्या इयम् सङ्ग्रामे पारयन्ती[10] ॥ ३ ॥

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥ ४ ॥

ते इति । आऽचरन्ती इत्याऽचरन्ती । समनाऽइव । योषा । माताऽइव । पुत्रम् । बिभृताम् । उपऽस्थे ।
अप । शत्रून् । विध्यताम् । संविदाने इति सम्ऽविदाने । आर्त्नी इति । इमे इति । विस्फुरन्ती इति विऽस्फुरन्ती । अमित्रान् ॥ ४ ॥

स्कन्द० अनया आर्त्नी स्तुते । ते आचरन्ती धनुष्कोटी इत्यर्थः । [11]ज्यया आकृष्यमाणे[11] योद्धारं प्रत्यागच्छन्त्यौ समना इव योषा भर्त्रा सह समानं मनो यस्याः सा समना । भर्तुश्चित्तानुवर्तिनी । एकवचनस्य आदेशः । योषेत्येकवचनान्तेन[12] समानाधिकरणात् । यास्कस्तूपमेयद्वित्वादुपमानमपि[13] योषेत्येतद् द्विवचनान्तं मन्यते ( द्र० या ९,४० ) । तदयुक्तम्, 'मातेव पुत्रम्' इत्येकवचनान्तस्याप्युपमानस्य दर्शनात् । यथा भर्तुश्चित्तानुवर्तिनी योषा भर्तारं प्रति आगच्छेत् तद्वदागच्छन्त्यौ माता इव पुत्रम् बिभृताम् उपस्थे । उपस्थोऽङ्कः । यथा माताऽङ्के पुत्रं बिभृयात् तद्वत् बिभृताम् । शत्रून् च अप विध्यताम्

---

१-१. कश्चिद्दव( °ढ वि°. )···यावि···मनु···गनीगन्ति मूको. २. नास्ति मूको. ३. आगच्छन्ति मूको. ४-४. स···तिकाले मूको. ५. काचिद्यो मूको. ६. मव्य··· मूको. ७. °दव्यक्तं मूको. ८-८. स्या··· मूको. ९. °मना··· मूको. १०. पारयन्ति मूको. ११-११. ज्याया आकृष्यमाणे मूको. १२. °वचनेन वि°. १३. °मपद्विषा···इत्यथा° मूको.

रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्रऽयत्र । कामयते । सुऽसारथिः ।
अभीशूनाम् । महिमानम् । पनायत । मनः । पश्चात् । अनु । यच्छन्ति । रश्मयः ॥ ६ ॥[1]

स्कन्द० 'अभीशूनामुत वाऽपि सारथिम्' । अभीशूनां सारथेश्च इयम् ऋक्स्तुतिः । अस्योत्तरार्धर्चेन 'अभीशून् पूर्वार्धर्चेन च सारथिं स्तौति'[2] । रथे तिष्ठन् । तिष्ठतिरत्र सत्तायां नोर्ध्वतायाम्, सङ्ग्रामे[3] तिष्ठतीति यथा । रथे एव सन् नयति वाजिनः अश्वान् पुरः अग्रतः, यत्रयत्र कामयते सुसारथिः । अभीशूनाम् महिमानम् पनायत । पनतेः स्तुतिकर्मणः । पनायत स्तुत हे स्तोतारः! । यच्च मनः अश्वानाम् पश्चात् सन्तः अनु यच्छन्ति अनुबध्नन्ति सारथिमनसम् ( ? °मसः ) । सारथीच्छावशेन गमनविरतमश्वानां कुर्वन्तीत्यर्थः । रश्मयः अश्वानाम् ॥ ६ ॥

वेङ्कट० शौनकः—'अर्धेन[4] सारथिः पश्चा[5] रश्मयोऽर्धेन संस्तुताः' ( बृदे ५,१३० ) इति । रथे तिष्ठन् नयति वाजिनः पुरस्तात्, यत्रयत्र[6] कामयते कल्याणः सारथिः । अभीशूनाम् महिमानम् पूजयत[7] । अश्वानां नियच्छताम् मनः[7] पश्चात् अनु यच्छन्ति रश्मयः ॥ ६ ॥

तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूँरनपव्ययन्तः ॥ ७ ॥

तीव्रान् । घोषान् । कृण्वते । वृषऽपाणयः । अश्वाः । रथेभिः । सह । वाजयन्तः ।
अवऽक्रामन्तः । प्रऽपदैः । अमित्रान् । क्षिणन्ति । शत्रून् । अनपऽव्ययन्तः ॥ ७ ॥

वेङ्कट० 'अश्वानृक्[8] सप्तमी स्तौति आयुधागारमष्टमी' ( बृदे ५,१३१ ) । तीव्रान् शब्दान् कुर्वन्ति वर्षितृपाणयः पांसूनुद्धमन्तः पाणिभिः अश्वाः रथैः सह वेगं कुर्वन्तः । अवक्रामन्तः पादाग्रैः अमित्रान् हिंसन्ति शत्रून् अनपगच्छन्तः[9] ॥ ७ ॥

रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः ॥ ८ ॥

रथऽवाहनम् । हविः । अस्य । नाम । यत्र । आयुधम् । निऽहितम् । अस्य । वर्म ।
तत्र । रथम् । उप । शग्मम् । सदेम । विश्वाहा । वयम् । सुऽमनस्यमानाः ॥ ८ ॥

वेङ्कट० अभितरदाशाऽऽयुधागारस्य यत्तुभ्यो रथेनोह्यमानं धनम् हविः[10] नाम भवति अस्य इति राज्ञः पारमार्थिकरूपत्व(?) स रथवाहनेनायुधागारं तर्पयति । यत्र आयुधागारे अस्य राज्ञः आयुधम्[11]

1. ऋग्विधे या (२,१६) व्याख्याता. २-२. °र्धेन:°° मूको. ३. युद्धेन मूको. ४. °ध्यो मूको. ५. °श्च वि°. ६. °यत्र वि°. ७-७. °वमनः मूको. ८. अश्वांस्तु बृदे. ९. भवग° वि°; भय्वग° अ° इ दश. १०. घृतिः मूको. ११. नायु° मूको.

वर्म च निहितम् भवति, तस्मिन्नायुधागारे सुखकरम् रथम्[१] वयम् युद्धान्ते उप सदेम[२] अविशीर्णं सर्वदा सुमनस्यमानाः ॥ ८ ॥

स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥ ९ ॥

स्वादुऽसंसदः । पितरः । वयःऽधाः । कृच्छ्रेऽश्रितः । शक्तिऽवन्तः । गभीराः ।
चित्रऽसेनाः । इषुऽबलाः । अमृध्राः । सतःऽवीराः । उरवः । व्रातऽसहाः ॥ ९ ॥

वेङ्कट० 'नवमी रथगोपास्तु[३] दशमी रणदेवताः' (बृदे ५.१२१)। स्वादूनामन्ने संसीदन्तः पालयितारः[४] अन्नस्य दातारः कृच्छ्रे सङ्ग्रामाग्रे अधितारः बलवन्तः दुरवगाहाः विचित्रसेनाः इषुबलाः[५] इषवो बलं येषां ते हिंसितुमशक्याः विद्यमानप्रेरकाः गुरुभाराः शत्रुसमूहस्य सोढार इम इति ॥ ९ ॥

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥ १० ॥

ब्राह्मणासः । पितरः । सोम्यासः । शिवे इति । नः । द्यावापृथिवी इति । अनेहसा ।
पूषा । नः । पातु । दुःऽइतात् । ऋतऽवृधः । रक्ष । माकिः । नः । अघऽशंसः । ईशत ॥१०॥

वेङ्कट० हे ब्राह्मणाद्याः! यज्ञस्य वर्धयितारः! अस्माकम् शिवे द्यावापृथिव्यौ अनागस्के[६] भवेताम्। पूषा च नः पातु दुरितात्। रक्षत[७] पूषाऽस्मान्। मा कश्चित् स्तेनः अस्माकम् ईशिष्ट ॥ १० ॥

'इति पञ्चमाष्टके प्रथमाध्याये विंशो वर्गः' ॥

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ ११ ॥

सुऽपर्णम् । वस्ते । मृगः । अस्याः । दन्तः । गोभिः । सम्ऽनद्धा । पतति । प्रऽसूता ।
यत्र । नरः । सम् । च । वि । च । द्रवन्ति । तत्र । अस्मभ्यम् । इषवः । शर्म । यंसन् ॥११॥

वेङ्कट० सुपर्णम् 'वस्ते इषुः' वाजालभिप्रेत्य[१०]। मृगमयः अस्याः दन्तः रुरुशीर्षः। गोविकारैः तावद् अभिसंनद्धा[११] पतति प्रसूता (तु. या २,५), यत्र नरः[१२] सम्[१३] द्रवन्ति च वि द्रवन्ति च तत्र अस्मभ्यम् इषवः शर्म यच्छन्तु (तु. या ९,१९) इति[१४] ॥ ११ ॥

---

१. नास्ति वि° अ°. २. सदेव मूको. ३. °गोपास्तु वि° अ°; °गोप्तास्तु क स्कम; गोप्तारस्तु क प्रस्तावः. ४. पलाद्य° वि° अ°. ५. नास्ति मूको. ६. अनपराधे मूको. ७. रक्ष छ वि°. ८-८. नास्ति मूको. ९-९. सहा क स्कम; परिसाति अ°. १०. °जनादिभ्रे° वि°; °जानदिभ्रे°(भ° स्कम.) ■ स्कम. ११. नाभिः स° वि° अ°. १२. नराः वि°. १३. स मूको. ■. यच्छ° वि°.

ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः।
सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥ १२ ॥

ऋजीते । परि । वृङ्धि । नः । अश्मा । भवतु । नः । तनूः ।
सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म । यच्छतु ॥ १२ ॥

वेङ्कट० ऋजीते![1] ऋजीतिः[2] इषुः ऋजुगमना, इषो![3] अस्मान्[4] वर्जय। अश्मा भवतु अस्माकम् शरीरं कवचेन सन्नद्धम्। सोमः चास्मान् सन्नद्धान् अधि ब्रवीतु। अदितिः च शर्म यच्छतु ॥ १२ ॥

आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥ १३ ॥[5]

आ । जङ्घन्ति । सानु । एषाम् । जघनान् । उप । जिघ्नते ।
अश्वऽअजनि । प्रऽचेतसः । अश्वान् । समत्ऽसु । चोदय ॥ १३ ॥

वेङ्कट० आ घ्नन्ति सानूनि[6] एषाम्[7] अश्वानाम्, सक्थीनि[8] सानूनि, जघनानि च उप घ्नन्ति त्वया। कशे![9] प्रकृष्टज्ञानान् अश्वान् त्वं सङ्ग्रामेषु चोदय (द्र. या ९,२०) ॥ १३ ॥

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः।
हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ॥ १४ ॥[5]

अहिःऽइव । भोगैः । परि । एति । बाहुम् । ज्यायाः । हेतिम् । परिऽबाधमानः ।
हस्तऽघ्नः । विश्वा । वयुनानि । विद्वान् । पुमान् । पुमांसम् । परि । पातु । विश्वतः ॥ १४ ॥

वेङ्कट० अहिः इव भोगैः परि वेष्टयति[10] बाहुम् ज्यायाः हननं परिबाधमानः। हस्तघ्नः हस्तत्राणम्[11] सर्वाणि प्रज्ञानानि जानन्[12] पुमान् पुमांसम् च परि रक्षतु सर्वतः ॥ १४ ॥

आलाक्ता या रुरुशीर्ष्ण्यथो यस्या अयो मुखम्।
इदं पर्जन्यरेतस इष्वै देव्यै बृहन्नमः ॥ १५ ॥

आऽलक्ता । या । रुरुऽशीर्ष्णी । अथो इति । यस्याः । अयः । मुखम् ।
इदम् । पर्जन्यऽरेतसे । इष्वै । देव्यै । बृहत् । नमः ॥ १५ ॥

वेङ्कट० विषाक्ता[13] या रुरुशीर्ष्णी रुरुशृङ्गशिरस्का, [14]अपि च[15] यस्याः अयः मुखम् भवति।

---

१. नास्ति मूको. २. ऋजि॰ अ' ख., ऋषि॰ ख. ३. इषो वि'. ४. अस्मात् मूको. ५. १३-१४ऋचौ यास्केन (९,१९-,१४) यथाक्रमं व्याख्याते. ६. सा वि' अ'. ७. अन्येषाम् अ'. ८. सक्थिनी मूको. ९. नेग मूको. १०. ॰ष्टयतु अ'. ११. हस्तत्रायमाणम् मूको; हस्तं त्रायमाण. ख. प्रस्तावः. १२. जानन् वि'. १३. नास्ति वि' अ'. १४-१५. अपि न वि'; अपि च अ' ख.; अपि ह,

अयोमुखा[1] काचित् अजमुखा काचिदिति । तस्यै[2] नमस्कारः [3]अयं महान्[3] [4]पर्जन्योत्पादितोदकरेतसे[4] [5]इष्वै देव्यै इति[5] ॥ १५ ॥

[6]इति पञ्चमाष्टके प्रथमाध्याये एकत्रिंशो वर्गः[6] ॥

अव॑सृष्टा॒ परा॑ पत॒ शर॑व्ये॒ ब्रह्म॑संशिते ।
गच्छा॒मित्रा॒न् प्र प॑द्यस्व॒ मामीषां॒ कं च॒नोच्छि॑षः ॥ १६ ॥

अव॑ऽसृष्टा । परा॑ । प॒त॒ । शर॑व्ये । ब्रह्म॑ऽसंशिते ।
गच्छ॑ । अ॒मित्रा॑न् । प्र । प॒द्य॒स्व॒ । मा । अ॒मीषा॑म् । कम् । च॒न । उत् । शि॒षः॒ ॥ १६ ॥

वेङ्कट० क्षिप्ता सती परा गच्छ हे शरणकुशले! मन्त्रेण तीक्ष्णीकृते!। गच्छ, अमित्रान् प्र पद्यस्व[7] । मा शत्रूणाम् अमित्राणाम् कम् चिद् अपि उत् शिषः ॥ १६ ॥

यत्र॑ बा॒णाः स॒म्पत॑न्ति कुमा॒रा वि॑शि॒खा इ॑व ।
तत्रा॑ नो॒ ब्रह्म॑ण॒स्पति॒रदि॑तिः॒ शर्म॑ यच्छतु वि॒श्वाहा॒ शर्म॑ यच्छतु ॥ १७ ॥

यत्र॑ । बा॒णाः । स॒म्ऽपत॑न्ति । कु॒मा॒राः । वि॒शि॒खाःऽइ॑व ।
तत्र॑ । नः॒ । ब्रह्म॑णः । पतिः॑ । अदि॑तिः । शर्म॑ । य॒च्छ॒तु॒ । वि॒श्वाहा॑ । शर्म॑ । य॒च्छ॒तु॒ ॥ १७ ॥

वेङ्कट० युद्धदेशः स्तूयते । निगदसिद्धेति ॥ १७ ॥

मर्मा॑णि ते॒ वर्म॑णा छादयामि॒ सोम॑स्त्वा॒ राजा॒मृते॒नानु॑ वस्ताम् ।
उ॒रोर्वरी॑यो॒ वरु॑णस्ते कृणोतु॒ जय॑न्तं॒ त्वानु॑ दे॒वा म॑दन्तु ॥ १८ ॥

मर्मा॑णि । ते॒ । वर्म॑णा । छा॒द॒या॒मि॒ । सोमः॑ । त्वा॒ । राजा॑ । अ॒मृते॑न । अनु॑ । व॒स्ता॒म् ।
उ॒रोः । वरी॑यः । वरु॑णः । ते॒ । कृ॒णो॒तु॒ । जय॑न्तम् । त्वा॒ । अनु॑ । दे॒वाः । म॒द॒न्तु॒ ॥ १८ ॥

वेङ्कट० मर्माणि तव कवचेन आच्छादयामि । सोमः च त्वा राजा अमृतेन 'अनु छादयतु'[8] । वरुणः ते[9] उरोः उरुतरं धनम् कृणोतु । जयन्तम्[10] शत्रून् त्वाम् देवाः अनु मदन्तु ॥ १८ ॥

यो नः॒ स्वो अर॑णो॒ यश्च॒ निष्ट्यो॒ जिघां॑सति ।
दे॒वास्तं सर्वे॑ धूर्व॑न्तु॒ ब्रह्म॒ वर्म॒ ममान्त॑रम् ॥ १९ ॥

---

१. अयोमुखा वि॰ अ॰; अयोमुखा छ. २. तस्यै वि॰ अ॰. ३-३. अयमाहानुपा मूको. ४. पर्जन्यो-त्पादितोदकरेतस( °न स सम. )सा मूको. ५-५. °°°नि मूको. ६-६. नास्ति मूको. ७. °पद्य मूको. ८. अनि° मूको. ९. ९. आच्छा°-वि°. १०. तु वि॰ अ॰. ११. जयं वि°.

